॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥



श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

परिमळाद्युपेता

संपुटम् २ जिज्ञासाधिकरणम्

प्रकाशनम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः



।। श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।।

श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

परिमळाद्युपेता

संपुटम् – २

## जिज्ञासाधिकरणम्

(ओङ्काराथशब्दयोः वाक्यार्थान्वितत्वविषयतः
बन्धमिथ्यात्वपूर्वपक्षनिराकरणविषयपर्यन्तम्)

पुटसंख्या ४८१ तः ९७२

प्रकाशनम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः

| | |
|---|---|
| **श्रीमन्न्यायसुधा** | **Śrīman-Nyāyasudhā** |
| परिमळाद्युपेता | Parimaḷādyupetā |
| **संपुटम् – २** | **Volume - 2** |
| प्रथमं मुद्रणम् - ई.सन् २००३ | First Edition -2003 A.D. |

स्वभानु संवत्सर, शके १९२५, ज्येष्ठ कृष्ण त्रयोदशी, शुक्रवासरः

**श्रीविजयीन्द्रतीर्थश्रीपादानाम् आराधनामहोत्सवः**

*Published by :*

**Śrī Gurusārvabhauma Saṁskṛt Vidyāpīṭham**

**Śrī Rāghavendra Swāmy Mutt**

Mantrālayam - 518 345

India.

✻ मुद्रकः ✻

**वरखेडकरोपाह्वप्रद्युम्ननरसिंहयोः ।**
**पौत्रो धनंजयो न्यायसुधां मुद्रापयत्यसौ ॥**

**सुधा मुद्रणम्**
शंकरपुरम्, बेंगळूर - ५६० ००४
दूरवाणी– ६६७ ६९४२

**SUDHA MUDRANA**
Shankarpuram, Bangalore - 560 004
Phone : 667 6942



# समर्पणपत्रिका

श्रीमत्परमहंसपरिव्राजकाचार्यत्वाद्यमन्दबिरुदवृन्दविभूषित-
सर्वतन्त्रस्वतन्त्र-श्रीमद्वैष्णवसिद्धान्तस्थापनाचार्य-
षड्दर्शनाचार्यवर्य-नास्तिकदर्शननिराकरणधुरन्धर-
आस्तिकदर्शनमहाचार्य-

**श्रीमन्मध्वाचार्यसमलंकृत-**

श्रीमद्द्वैतसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वराणां
परमपूज्यानां कामधेनुकल्पवृक्षसदृशानां

**श्रीश्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमानां**

हृत्कमलनिवासि-

**श्रीरामकृष्णवेदव्यासाभिन्न-**

**श्रीमूलरघुपतिपादकमलयोः**

समर्पितोऽयं ग्रन्थः ॥

सुजयीन्द्रकृपापूर्णसुशमीन्द्रयतीश्वरैः ।
श्रीमन्न्यायसुधाग्रन्थ अर्पितोऽयं मुदा हरेः ॥





॥ श्रीमन्मूलरामो विजयते ॥

श्रीमद्धंसनामकपरमात्मसमारब्धपरम्परागत-श्रीमत्परमहंसेत्यादिबिरुदभूषित-
श्रीमदानन्दतीर्थभगवत्पादाचार्य-मूलमहासंस्थानाधीश्वर-
**श्रीमद्राघवेन्द्रगुरुसार्वभौम-**
वेदान्तसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वर-
**श्रीमत्सुयमीन्द्रतीर्थश्रीपादकरकमलसञ्जात-**
**श्रीमत्सुजयीन्द्रतीर्थश्रीपादवरकुमारक-**
**श्री श्रीमत्सुशमीन्द्रतीर्थश्रीपादानाम्**

# अनुग्रहवचनम्

अस्मत्प्रियशिष्यान् तथैव अस्मन्मठीयान् नैकान् आस्थानविद्वज्जनान् वयं अस्मद्गुरुवराणां श्रीमत्सुजयीन्द्रतीर्थश्रीमच्चरणानामाज्ञामनुरुद्ध्य परिमलादि-बहुटिप्पणीभिर्युक्तां श्रीमन्न्यायसुधां संशोध्य प्रकाशयितुमादिष्टवन्तः स्मः।

अस्मदादेशमनुरुध्य ग्रन्थमिमं संशोध्य मुद्रणप्रतिमपि संशोधितवद्भ्यः प्रधानसंपादकेभ्यः वैकुण्ठवासिभ्यः श्री साणूरु भीमभट्टेभ्यः तथा ग्रन्थमिमं प्रकाशितवद्भ्यः श्रीगुरुसार्वभौमसंस्कृत-विद्यापीठीयेभ्यः एवं ग्रन्थसंशोधने तथा मुद्रणप्रतिसंशोधने सहायमाचरितवद्भ्यः अस्मद्विद्यापीठाध्यापकेभ्यः, तथाऽन्येभ्यो विद्वद्भ्यः, एवमल्पकाले सुष्ठु मुद्रणं कृतवद्भ्यः 'सुधा मुद्रण'नेतृभ्यः श्री धनंजयाचार्येभ्यः तथा सर्वेभ्यः एतद्ग्रन्थाध्ययन-अध्यापनादिकर्तृभ्यः अस्मदुपास्यः श्री श्रीमद्राघवेन्द्र-तीर्थगुर्वन्तर्गत-श्रीभारतीरमण-मुख्यप्राणान्तर्गतः श्रीसीतापतिः श्रीमूलरामचन्द्रदेवः इतोऽप्यतिशयितायुरारोग्यैश्वर्यादीनि, ज्ञानभक्तिवैराग्यादीनि च दत्वा अनुगृह्णातु इत्याशास्महे।

*इति नारायणस्मृतिः।*

मन्त्रालयक्षेत्रम्,
स्वभानु संवत्सर
ज्येष्ठ कृष्ण त्रयोदशी



श्रीराघवेन्द्रस्वामिमठाधीशानां श्री श्री सुशमीन्द्रतीर्थश्रीपादानां वरकुमारकाणां

## श्री श्री सुविद्येन्द्रतीर्थश्रीपादानां

परमानुग्रहपूर्वक मार्गदर्शने संपादितोऽयं ग्रन्थः ।

***

श्री श्रीपादानां आज्ञानुसारेण ग्रन्थस्यास्य संशोधनादिकार्यं
तत्कालीन श्रीगुरुसार्वभौमसंस्कृतविद्यापीठाध्यक्षैः
श्री राजा एस्. गिरिआचार्यैः तथा तत्पुत्रैः श्री राजा एस्. पवमानाचार्यैः
कृतमिति विशेषरूपेण स्मर्यते ।

***

# संपादकविद्वन्मंडली

**प्रधानसंपादकाः**

### श्री आचार्य साणूरु भीमभट्टाः

आस्थानविद्वांसः, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः

**संपादकाः**

विद्वान् श्री कु. सुशीलेन्द्राचार्याः, *प्रांशुपालाः श्री गु.सं.वि., मन्त्रालयः*

विद्वान् श्री कडपा राघवेन्द्राचार्याः

विद्वान् श्री पुराणिक सुब्रह्मण्याचार्याः

विद्वान् श्री एन्. वादिराजाचार्याः

विद्वान् श्री वरखेडकर भीमसेनाचार्याः

विद्वान् श्री डॉ. पुरोहित नरसिंहाचार्याः

**निर्वाहकाः**

### श्रीपादपुत्राः राजा एस्. राजगोपालाचार्याः

श्री श्री सुशमीन्द्रतीर्थश्रीपादानां आप्तकार्यदर्शिनः, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः

# श्रीमन्न्यायसुधा

## परिमळाद्युपेता

### टिप्पणीनां क्रमः तथा संक्षिप्तनामानि

| क्र.सं. | कर्तृनाम | टिप्पणीनाम | संक्षिप्तनाम |
|---|---|---|---|
| १ | श्री विजयीन्द्रतीर्थाः | न्यायसुधाबिन्दुः | बिन्दुः— |
| २ | श्री राघवेन्द्रतीर्थाः | परिमळः | परि०— |
| ३ | श्री श्रीपादराजतीर्थाः | वाग्वज्रः | वाग्वज्रः— |
| ४ | श्री वादिराजतीर्थाः | गुर्वर्थदीपिका | गु०दी०— |
| ५ | श्री यदुपत्याचार्याः | टिप्पणी | यादु०— |
| ६ | श्री वंशपल्ली श्रीनिवासाचार्याः | वाक्यार्थविवृतिः | वं०प०— |
| ७ | श्री गलगली नरसिंहाचार्याः | आनन्दः | आनन्दः— |
| ८ | श्री कंबालूरु रामचन्द्रतीर्थाः | विवृतिः | कं०रा०— |
| ९ | श्री श्रीनिधितीर्थाः | टिप्पणी | श्रीनिधि०— |
| १० | श्री विद्याधीशतीर्थाः | वाक्यार्थचन्द्रिका | वा०चं०— |
| ११ | श्री पाण्डुरङ्गि केशवाचार्याः | शेषवाक्यार्थचन्द्रिका | शे०चं०— |
| १२ | श्री पाण्डुरङ्गि नरसिंहाचार्याः | वाक्यार्थरत्नमाला | वा०र०— |
| १३ | श्री सत्यव्रततीर्थाः | सुधाविवृतिः | स०व्र०— |
| १४ | श्री कुण्डलगिरिआचार्याः | रसकूलङ्कषः | कुण्डल०— |
| १५ | श्री सत्यनाथतीर्थाः | दुर्घटवाक्यार्थविचारः | स०ना०— |
| १६ | श्री विठ्ठलभट्टाः | टिप्पणी | विठ्ठ०— |
| १७ | श्री विष्णुतीर्थाः | रसरञ्जनी | रस०— |
| १८ | श्री अडवी कृष्णाचार्याः | लघुरसरञ्जनी | ल०र०— |
| १९ | श्री मन्नारी कृष्णाचार्याः | चषकः | चषकः— |
| २० | श्री एरी बाळाचार्याः | उपस्पर्शः | ए०बा०— |
| २१ | श्री काशी आचार्याः | काशी टिप्पणी | काशी०— |
| २२ | श्री गूढकर्तृकाचार्याः | गूढकर्तृका | गूढ०— |
| २३ | श्री प्रदीपकाराः | प्रदीपः | प्रदीपः— |
| २४ | श्री पांघ्री श्रीनिवासाचार्याः | टिप्पणी | पांघ्री०— |
| २५ | श्री कल्लापूर सत्याधिराजाचार्याः | हुग्गि | हुग्गि०— |



# श्रीमन्न्यायसुधा परिमळाद्युपेता

## संपुटम् – २

## विषयानुक्रमणिका





॥ ओङ्काराथशब्दयोः वाक्यार्थान्वितत्वम् ॥

**९४ सु०—** नन्वेतदनुपपन्नम् । तथा सत्येतयोर्विघ्नविघातादिहेतुत्वेन समस्तशास्त्राङ्गतया प्रथमसूत्रावयवत्वाभावप्रसङ्गात् । तथात्वे च प्रथमसूत्रं न्यूनमापद्येत । अधिकार्यादिप्रतिपादकस्य अन्यस्याभावात् । तत्प्रतिपादनस्य चावश्यकत्वात् । अन्यथा अधिकारिविषयवैधुर्येण शास्त्रस्य अनारम्भणीयत्वशङ्का न निराकृता स्यात् इत्यनर्थकं सूत्रमापद्येतेत्यत आह **तत्रेति** ।

**अनु०— तत्र ताराथमूलत्वं सर्वशास्त्रस्य चेष्यते ।**

'तरन्ति अनेन अनिष्टनिचयम्' इत्योङ्कारः **तारः** । तारश्चाथश्च तयोः **मूलत्वं** क्रमेण आदित्वम् । आदौ प्रयुक्तौ ओङ्काराथशब्दाविति यावत् । तत्र प्रथमसूत्रे अवयवतया, सर्वशास्त्रस्य चाङ्गतया **चेष्यते** अङ्गीक्रियते, सूत्रकृतेति शेषः ।

परि०— **अधिकार्यादिप्रतिपादकस्यान्यस्य** इत्यत्रादिपदेन विचारशास्त्रानुग्राह्यविषयबोधकवेदरूपप्रमाणप्रतिपादकस्य अन्यस्याभावादिति ग्राह्यम् । ॐकारस्य तदर्पकत्वेनाग्रे व्याख्यानात्तस्य विषयार्पकपदत्वेऽपीह न तदर्थग्रहणम् । तथात्वे ब्रह्मपदस्यापि विषयार्पकस्यात्र भावेनान्यस्य अभावादित्ययोगात् । अधिकारिविषयेत्युत्तरवाक्यस्थविषयपदेन विषयसमर्पकवेदरूपप्रमाणं ग्राह्यम् । ॐकारप्रयोगलब्धस्य व्याहृतिगायत्रीपुरुषसूक्तद्वारा तद्व्याख्यानभूतसकलवेदरूपप्रमाणस्याभावे ब्रह्मपदमात्रस्याविचार्यत्वेनानुग्राह्यप्रमाणाभावाभिप्रायेण विषयवैधुर्येणेत्येवोक्तम् । ब्रह्मपदेन विषयलाभेऽप्युपर्योङ्कारस्य विषयार्पकत्वेनापि व्याख्यानं तु चन्द्रिकोक्तदिशा अत्रापि 'नारायणपदोदित' इत्यत्र वक्ष्यमाणदिशा च युक्त्यन्तरसूचनायेति ध्येयम् ॥ **तरन्त्यनेनेति** । तॄ प्लवनतरणयोरिति धातोः 'अकर्तरि च कारके संज्ञायाम्, इति करणे घञ्प्रत्यये 'अचो ञ्णिति' इति वृद्धौ रूपम् । यद्यपि तॄ प्लवनतरणयोरित्यस्य धातोर्दीर्घऋवर्णान्तत्वेन 'ॠदोरबि'ति सूत्रेणाप्प्रत्यये तर इत्येव भाव्यम् । अप्प्रत्ययस्य घञपवादत्वात् । तथापि तॄ प्लवनतरणयोरिति ह्रस्वऋवर्णान्ताद्धात्वन्तराद्घञ्प्रत्यये तार इति रूपं ध्येयम् । अन्यथा सांपराये तर्तव्याभावादिति प्रयोगोऽसाधुः स्यादिति भावः । यद्वा तॄ प्लवनतरणयोरित्यस्यैव 'ॠदोरबिति' अप्प्रत्यये तर इति रूपम् । तस्य 'प्रज्ञादिभ्यश्चे'ति स्वार्थिकेऽणप्रत्यये तार इति सिद्ध्यति । अथवा तॄ धातोर्ण्यन्तस्य 'एरजि'त्यच्प्रत्यये सति तार इति रूपम् । तारयति पुरुषाननिष्टनिचयमिति व्युत्पत्तिदर्शने कार्ये





स्पष्टार्थत्वाय करणत्वव्यक्तीकरणेन तरन्त्यनेनेत्यर्थकथनमात्रमेतदिति ज्ञेयम् । अत एव 'आसमन्तात् गमयति धर्माधर्मौ परं पदम्' इत्युपासनापादीयानुव्याख्यानसुधादौ करणे कर्तृत्वोपचारेण गमयतीत्युक्तिः। गमेः करणार्थ एवाप्रत्ययविधानादित्यादिना तत्र तत्र व्युत्पत्तिप्रकारापेक्षया अन्यथाप्यर्थकथनं दृश्यते। तथा चाथर्वशिरसि श्रुतिः 'अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव गर्भजन्मव्याधिजरामरणसंसार-महाभयात्तारयति' इत्यादि। तत्रेत्यनुवादः प्रथमसूत्रे इति व्याख्या ॥ **अवयवतयेति** । अन्वयप्रतियोगि-समर्पकतयेत्यर्थः । ब्रह्मपदार्थस्य विशेषणीभूतं यद्गुणपूर्णत्वरूपमोतत्वं तदर्थकत्वात्तस्येति भावः । यद्वा जिज्ञासायां कर्मकारकार्पकतयेति भावः । **अङ्गतयेति** । अविघ्नपरिसमाप्तिप्रचयकारकत्वेनेत्यर्थः ।

**यादु०**— **अधिकार्यादिप्रतिपादकस्येति** । यद्यपि ब्रह्मशब्दो विषयप्रतिपादकोऽन्योऽस्ति तथाऽपि ओङ्कारस्य मीमांसानुग्राह्यप्रमाणप्रतिपादनाय वेदस्येश्वरविषयकत्वसमर्थनार्थत्वस्य वक्ष्यमाणत्वेन, तदर्थक-स्यान्यस्याभावादित्यभिप्रायात् ॥ **विषयवैधुर्येणेति** । उक्तरीत्या वेदस्येश्वरविषयकत्वसमर्थकवैधुर्येणेत्यर्थः ॥ 'अनारम्भणीयत्वशङ्के'त्युपलक्षणम् । मीमांसानुग्राह्यप्रमाणाभावशङ्का चेत्यपि द्रष्टव्यम् ॥

**आनन्दः**— माङ्गलिकत्वेऽनुपपत्तिं शङ्कते **नन्विति** । शास्त्राङ्गतयेत्यत्र हेतुः **विघ्नेत्यादि** । एवं हि अनयोरुपकारकत्वं भवति । यद्धि यस्योपकारकं तत्तदङ्गमिति न्यायेनोपकारकत्वादङ्गत्वमिति भावः । तथा किमित्यत आह **तथात्वे चेति** । विषयादिप्रतिपादकाभावादिति भावः । ननु पदान्तरेण तत्प्रतिपादनसंभवान्न न्यूनतेत्यत आह **अधिकार्यादीति** । तर्हि तत्प्रतिपादनमेव मास्त्वित्यत आह **तत्प्रतिपादनस्य चेति** । **अन्यथेति** । तत्प्रतिपादनस्यानावश्यकत्व इत्यर्थः । नन्वोङ्काराथशब्दयोर्माङ्गलिकत्वे प्रथमसूत्रावयवत्वं न स्यादिति शङ्किते ताराथशब्दयोर्मूलत्वकथनमयुक्तं प्रश्नासङ्गतत्वादित्यत आह **तरन्तीति** । उभयोरप्यादित्वासंभवादाह **क्रमेणेति** । ननु तत्र ताराथमूलत्वमित्यत्र तत्रेत्यनेन कस्य परामर्शः । न च प्रथमसूत्रस्येति वाच्यम् । तर्हि प्रथमसूत्रे सर्वशास्त्रे च ताराथमूलत्वस्य साम्यापातात् । तथा च पुनरधिकार्याद्यभाव इत्यतोऽध्याहारेण योजयति **तत्रेति** । दूषणार्थमपि इच्छायाः सत्त्वादाह **इष्यतेऽङ्गीक्रियत इति** । कर्तृपदाभावादध्याहारेण व्याचष्टे **सूत्रेति** ।

**श्रीनिधि०**— ननु ताराथसंबन्धे मूलत्वस्य प्रथमसूत्रावयवत्त्वात् सर्वशास्त्राङ्गत्वेनाङ्गीक्रियते तत्कथमित्यत आह **आदौ प्रयुक्ताविति** । प्रथमसूत्रावयवतयेति सर्वशास्त्रस्य चेष्यत इति अत्रत्यचशब्दार्थः ।

**वा०चं०**— एवं 'तत्र ताराथे'ति वाक्ये 'सर्वशास्त्रस्ये'त्यंशप्रतिपादनीयसर्वशास्त्राङ्गत्वप्रयोजकं ताराथयोः माङ्गलिकत्वेन निवेशनमुपपाद्य तयोः सर्वशास्त्राङ्गत्वेऽनुपपत्तिस्तत्रैव वाक्ये 'तत्र चे'त्यंशेनैव परिह्रियत इत्यभिप्रायेण तामनुपपत्तिमाशङ्कते **नन्विति** । 'अधिकार्यादी'ति 'आदि'शब्देन विषयग्रहणम् ॥ **अन्यस्य अभावादिति** । यद्यप्योङ्कारस्य समग्रशास्त्राङ्गत्वेऽपि ब्रह्मशब्दस्य विषयप्रतिपादकस्य सत्त्वान्नान्यस्याभावः, तथाऽपि, 'न केवलं जिज्ञास्ये' 'तद्विजिज्ञासस्व तद्ब्रह्मे'त्यादौ ब्रह्मपदश्रवणात् तस्य च जीवाद्भिन्नत्वेन जिज्ञास्यता, किन्तु,





'ओमित्येतदक्षरमुद्गीथमुपासीते'त्यादौ जीवेष्वसंभावितगुणपूर्तिवाचकोङ्कारादिश्रवणादपीति युक्त्यन्तरसूचकत्वेन ब्रह्मशब्दसमकक्षतयोङ्कारस्य विषयोपपादकतया कथयिष्यमाणत्वात्; 'प्रत्यक्षादेरसंभवाद्वेदस्य चेश्वरविषयत्वाभावादनुग्राह्यप्रमाणाभाव' इत्याशङ्कापरिहारकविषयशास्त्रसंबन्धोपपादनस्य ओङ्कारमात्रसाध्यतया वक्ष्यमाणत्वाच्च; तथोक्तमिति ध्येयम् ॥ 'अथ'शब्दप्रायपठित'तार'शब्दस्य 'तार'शब्दार्थकत्वे, तस्य च सूत्रादावप्यभाव इत्यतो योग्यताबलात्तारशब्देन योगेन तत्पर्यायोङ्कारग्रहणमित्यभिप्रेत्य प्रकृतोपयोगितया तद्योगं दर्शयति **तरन्तीति** । (तॄ प्लवनतरणयोरित्यस्मात् 'अकर्तरि च कारके संज्ञायामि'ति करणे घञि, 'अचो ञ्णिती'ति ऋकारस्याकाररूपवृद्धौ, तस्य 'उरण्रपर' इति रपरत्वे च, तारशब्दो निष्पन्नः) । उभयोः आदित्वस्यैकत्रासंभवादाह **क्रमेणेति** । यद्वा मूलत्वं नात्रादित्वमात्रमपि तु क्रमेणादित्वं विवक्षितं विवक्षाप्रयोजनं चोत्तरत्र प्रदर्शयिष्याम इत्यभिप्रेत्याह **क्रमेणेति** । **अत्रादित्वम्** आदौ प्रयुक्तत्वम् । तस्य चावयवत्वाङ्गत्वाभ्यां प्रथमसूत्रशास्त्राभ्यां नान्वयः संभवतीत्यतस्तात्पर्यमाह **आदाविति** । ताराथयोः सूत्रशास्त्राभ्यामेकप्रकारेण संबन्धभ्रान्तिं निवारयितुं विवक्षितशेषाध्याहारेण वाक्यार्थमाह **तत्रेति** । सूत्रकृद्विवक्षां दर्शयितुं तथैव शेषं पूरयति **सूत्रेति** ।

**वा०र०— अंशप्रतिपादनीयेति** । सर्वशास्त्रस्य ताराथमूलत्वमित्युक्तेः माङ्गलिकौ ओङ्काराथशब्दौ आदितः प्रयुक्तौ सर्वशास्त्रस्यानन्तरायपरिसमाप्त्यादिकं कुर्वति इत्यर्थप्राप्त्या सर्वशास्त्राङ्गता तयोर्माङ्गलिकत्वेन निवेशात् सिद्ध्यतीति भावः । प्रतिपादनीयं यत्सर्वशास्त्राङ्गत्वं तत्प्रयोजको यस्ताराथयोः माङ्गलिकत्वेन निवेशः तदुपपाद्येति योजना । उपपादनं च यथोक्तमित्यादिनेति ज्ञेयम् । **सर्वशास्त्राङ्गत्वेति** । सर्वशास्त्राङ्गत्वाङ्गीकारे याऽनुपपत्तिः आदिसूत्रावयवत्वायोगरूपा सा तत्र ताराथेति वाक्ये एव विद्यमानेन तत्र चेत्यंशेनेति योज्यम् । यद्यपि उत्तरमूले सर्वशास्त्रस्य चेति शब्दसंबन्धे यथाश्रुतमेवाङ्गीकृत्य योजना करिष्यते । तथापि पूर्वं सर्वशास्त्रस्येत्यंशस्य योजिततया तत् उत्तरत्र चेत्युर्वरितं योजयितुं शङ्केति प्राप्तं भवतीति भावेन तत्रत्यानुवाद इत्यदोषः । अधिकार्यादीत्युक्तदूषणेऽधिकारिप्रतिपादकाभावस्य वक्तुमुचितत्वेऽपि विषये प्रतिपादकस्याभावो वक्तुं न युक्त इति शङ्कते **यद्यपीति** । शास्त्राङ्गत्वेऽपि शास्त्राङ्गतया विषयसमर्पकत्वाभावेऽपि । **नान्यस्येति** । विषयप्रतिपादकतयेति वर्तते । विषयप्रतिपादकस्यान्यस्याभावो नेत्यर्थः । ब्रह्मपदश्रवणात् । ब्रह्मपदस्य चाथ कस्मादिति श्रुत्यनुसारेण गुणपूर्णवाचितया ब्रह्मशब्दाभिहितस्य वस्तुनो गुणपूर्णत्वप्रतिपादनेन अल्पगुणजीवात् भिन्नत्वसिद्धौ विषयत्वोपपत्त्या जिज्ञास्यता संभवतीत्येवेत्यर्थः । **इत्यादावित्यादि** । प्रथमादिपदेन 'नारायणं महाज्ञेयं, आत्मानमेव लोकमुपासीते'त्यादिवाक्यपरिग्रहः । द्वितीयादिपदेन नारायणात्मानन्तादिशब्दानां ग्रहणम् । ओङ्कारमात्रस्य प्रकृतत्वेऽपि आदिपदोपादानां नारायणपदोदितः इत्यनेन भाष्यमूले वक्ष्यमाणोपलक्षणताज्ञापनाय । कथयिष्यमाणत्वात् इत्यत्रापि नारायणपदोदित इत्युत्तरभाष्यसंबन्धी मूले इति पूरणीयम् । **ओङ्कारस्येति** । प्रकृतानुसारेण । ओङ्कारादेः इत्यर्थः । एवं उदाहृतमूलानुसारेण एकं समाधिमभिधाय तत्पक्षे आत्मानन्तशब्दादिषु कस्यचित् प्रयोगमकृत्वा ओङ्कारस्यैव प्रयोगे निमित्तविशेषाभावः इति शङ्कां निराकर्तुं ओङ्कारासाधारणमपि निमित्तमाह **प्रत्यक्षादेरिति** । एतच्च व्याहृतीनां च इत्येतद्व्यावर्त्यपूर्वपक्षे तदनुवादेन तद्भाष्यावतारे च स्पष्टम् । प्रत्यक्षादेरित्यादेरित्यादिपदेनानुमानवेदान्यवाक्ययोः ग्रहणम् । उपलक्षणं चेदम् । आगमस्य कार्यनिष्ठत्वात् इत्यादिकमप्यूह्यम् । ततश्च ब्रह्मशब्दापेक्षयाऽप्योङ्कारस्य





आवश्यकत्वोक्त्या विषयसमर्पकब्रह्मपदे विद्यमानेऽपि ओङ्काराभावे ब्रह्मपदोक्तविषयस्य शास्त्रसंबन्धालाभेन विषयत्वानिर्वाहात् विषयत्वनिर्वाहकोङ्कारोऽपि विषयसमर्पकतया पर्यवसन्न इति भावेन तदभावे विषयसमर्पकाभाव इति मध्ये उक्तमिति न दोष इति भावः। **वक्ष्यमाणत्वादिति**। **व्याहृतीनां चेति**। भाष्यविवरणमूले इति शेषः। ॐब्रह्मशब्दयोरपि गुणपूर्तिवाचित्वेऽपि तयोर्मध्ये एकस्य विशेष्यसमर्पकत्वमपरस्य विशेषणसमर्पकत्वमित्याश्रयणेन चन्द्रिकाटीकोक्तरीत्याऽन्वयस्याप्युपपत्तिः। 'परियत् इन्द्रे'ति ऋचि पूर्वोत्तरार्धयोः चतुर्थाष्टकस्य पञ्चमाध्यायस्थभरद्वाजेन 'वतपा इन्द्रसूरीन् दिवि चस्मधिश्चार्येन इन्द्रेत्ये'कस्मिन् एव अर्थे च विद्यमानस्येन्द्रशब्दद्वयस्य विशेष्यविशेषणसमर्पकत्वाभ्यां संबन्धस्य दर्शनात्। 'विश्वरूपो वै त्वाष्ट्रः (वायुः)' इत्यादि यजुर्वेदद्वितीयाष्टकदशमाध्याये 'सावित्र्यादिज्योतिषेति चराह्नसमध्ये अन्तो मुञ्चे विवेचयन्मानिन इन्द्रेन्द्रक्षत्रमिन्द्रियाणि शतक्रतो उत्तेदार्या'त्यत्रेदंशब्दप्रयोगदर्शनाच्चेति ज्ञेयम्। **अथशब्दप्रायेति**। अयमर्थः। 'ओङ्काराथशब्दौ हि माङ्गलिकत्वपक्षे प्रथमसूत्रावयवौ न संभवतः' इत्याद्यनुसारेणोङ्काराथमूलत्वमित्येव भाष्ये प्रयोक्तव्यम्। न च शब्देनोङ्कारग्रहणात् अदोष इति वाच्यम्। अथशब्दस्यैवात्र अथेत्यनेन ग्रहणात् तत्प्रायपठिततारूपशब्दस्य तारशब्दार्थकत्वस्यैव व्याप्यत्वेन ओङ्कारस्य तेन ग्रहणायोगात्। तारशब्दस्य सत्त्वादित्वाभावाच्चेति। **योग्यताबलादित्यादि**। तारशब्दस्यान्यत्र तारशब्दार्थकत्वेऽपि सूत्रादौ तदभावादेव प्रकृते तारशब्देन योग्यताबलात् योगेन तत्पर्यायस्योङ्कारस्य ग्रहणमभिप्रेतमित्यर्थः। **मूलेऽथश्चेति**। आनन्तर्यार्थकाथशब्दस्याव्ययत्वेऽपि प्रकृतेऽथशब्दार्थकत्वेन द्रव्यवाचित्वेनानव्ययत्वात् अथशब्दात् स्वाद्युत्पत्तावथश्चेति युक्तमिति गुरवः। उक्तं च। चादयोऽसत्त्वेत्येतत् सूत्रीयशेष्याम्। अथ कथं च 'प्रोपाभ्यां युजेरयज्ञपात्रेषु' इत्यादौ न निपातता। उच्यते। असत्त्वे इति प्रतिषेधात्। वैयाकरणानां हि शब्दो द्रव्यमेव। इदं तदिति व्यपदेशयोग्यं द्रव्यम्। तदुक्तम्। 'वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते। द्रव्यमित्युच्यते सोऽर्थः वेद्यत्वे च विवक्षित' इति यस्मिन् शब्दे यद्विशेष्यं तत्र तद्द्रव्यमित्यर्थः। गौरित्यत्र गौः। जातिरित्यत्र सामान्यम्। शुक्लगुणः इति गुणः। पाक इत्यत्र क्रिया च, 'प्रोपाभ्यां युजेः' इत्यादौ शब्दस्य स्वरूपं विशेष्यत्वात् द्रव्यमित्यर्थ इति। एवं अपरिभिव्याप्ताविति आद्यपद्यव्याख्यानावसरे उक्तिश्चास्मात् इत्यर्थः। इत्यादिरूपस्थलान्तरोक्तिश्चोपपाद्या। **आहेति**। 'तस्मात् प्राथमिकौ क्रमात्' इति प्रमाणानुसारेण क्रमाश्रयणेन तत्संभवमाहेत्यर्थः। एवं मूलत्वं नामादित्वमित्यर्थं स्वीकृत्य तस्य एकत्रासंभवशङ्कावारणाय क्रमेण तद्विवक्षितमित्युक्तम्। इदानीं मूलशब्दार्थान्तर्गतमेव क्रमेणेत्येतत् इति विवक्षितम्। अतो नैकत्रादित्वमुभयोः संभवतीति न शङ्कनीयमिति। प्रकारान्तरमाह **यद्वेति**। **उत्तरत्रेति**। 'यत् क्रमान्तरं विहाय आदावेव उपादानं तेन जानीमः' इत्यादिना उत्तरत्रेत्यर्थः। क्रमेण सत्त्वेऽपि आदित्वपदोक्तमादौ प्रयुक्तत्वं तु तदितरापेक्षया। अत एव 'तृतीयोऽत उदाहृतः' इति सूत्रभाष्ये प्राथमिकतयेति तत् टीकाकृता पूरणं कृतम्। तथा च ओमथातःशब्दानां त्रितयान्यशब्देभ्यः प्राथमिकत्वम्। तच्च क्रमेण अव्याकृतं ब्राह्मभाष्ये 'तेजोऽभिमानवान् ब्रह्मे'त्यादिकमुक्त्वा 'विष्णोर्जाताः क्रमेणैव' इत्यनेकेषां क्रमेण विष्णुजातत्वोक्तेः। एवमन्यत्रापीति ज्ञेयम्। **तस्य चेति**। आदौ प्रयुक्तत्वरूपधर्मस्येत्यर्थः। सर्वशास्त्रस्य चेत्यनेन सूत्रशास्त्राभ्यां तथान्वयोक्तेरिति भावः। **सूत्रकृदिति**। इष्यते इत्युक्त्यङ्गीकारे कर्तृत्वेन विवक्षितः। सूत्रकार एवेति दर्शयितुमित्यर्थः।





**स०व्र०— अधिकारिविषयवैधुर्येति** । 'तद्विजिज्ञासस्व तद्ब्रह्म' इति जिज्ञासाविधायकवाक्ये जिज्ञास्यजीवाभिन्नत्वेनाविषयत्वप्रयुक्तानारम्भणीयत्वशङ्कायाः, जिज्ञास्यस्यानन्तगुणवत्त्वेन जीवभेदप्रतिपादकेन ब्रह्मशब्देन परिहारेऽपि, तस्यैव विषयवाचकत्वाभावात्, 'ओमित्येतदक्षरमुद्गीथमुपासीत' 'आत्मानमेव लोकमुपासीत' इत्यादि जिज्ञासाविधायकवाक्येषु 'जिज्ञास्यस्य जीवाभिन्नत्वेनाविषयत्वशङ्का'निवारकस्य अन्यस्याभावेन, ॐशब्देनैव गुणपूर्णत्वाभिधायिना परिहार्यत्वात्, ॐशब्दस्य मङ्गलार्थत्वे तदनुपपत्त्या अनारम्भणीयत्वं स्यादेवेति भावः ॥ **अथश्चेति** । आनन्तर्यरूपार्थविवक्षायामेवाथेत्यस्याव्ययत्वेन अथशब्दार्थत्वेन आनन्तर्यस्यानभिधानात् अथश्चेत्युपपन्नमिति भावः । **प्रथमसूत्र इति** । मीमांसानुग्राह्यप्रमाणप्रतिपादनद्वारा ओङ्कारस्य विषयदार्ढ्यार्थत्वात् 'अधिकार्यादिप्रतिपादनायोपात्तावोङ्काराथशब्दावि'त्युक्तम् ॥ **यत्पर्यायान्तरमिति** । यद्योङ्काराथशब्दयोर्मङ्गलमेव प्रयोजनं स्यात्तर्हि विशिष्टार्थमङ्गलशब्दमेव प्रयुञ्जीत, यदि च आनन्तर्यमेवार्थस्तदा तथैव शब्दान्तरं प्रयुञ्जीत; असाधारणशब्दप्रयोगेणेदं ज्ञायते कारकत्वेन शास्त्रोपयोगित्वं, ज्ञापकतया (च) **प्रथमसूत्रावयवत्वमिति** ।

**कुण्डल०— तरन्त्यनेनेति** । तॄ प्लवनतरणयोरित्यस्माद्धातोरकर्तरि च कारके संज्ञायां इति करणे घञि अचो ञ्णितीति ऋकारस्याकाररूपवृद्धावाकारस्योरण्रपर इति रपरत्वे च तारशब्दो निष्पन्न इति भावः । ओङ्काराथशब्दयोः सूत्राद्यवयवत्वाभावेऽपि तयोर्मूलत्वं कथं सूत्रावयवादिकं भवतीत्यत आह **आदाविति** । **अवयवतयेति** । अन्वय-प्रतियोग्युपस्थापकतयेत्यर्थः । **अङ्गतयेति** । कारकतयेत्यर्थः ।

**स०ना०— तत्र ताराथमूलत्वमित्यनुव्याख्यानसुधायाम्** । **अधिकार्यादिप्रतिपादकस्येति** । एतच्च अथातो ब्रह्मजिज्ञासेति पाठपक्षे बोध्यम् ।

**विठ्ठ०— समस्तशास्त्राङ्गतयेति** । **समस्तशास्त्रेति** । कर्तव्यतामात्ररूपतया प्रथमसूत्रे अन्वयाभावेन तदनवयवत्वप्रसङ्गादित्यर्थः । अधिकार्यादीत्यादिपदेन विषयग्रहणं ओङ्कारस्य विषयोपपादकतायाः कथयिष्य-माणत्वात् । यद्यपि ब्रह्मशब्दोऽपि विषयोपपादकः तथापि न केवलं तद्विजिज्ञासस्व तद्ब्रह्मेति जिज्ञास्ये गुणपूर्तिवाचकब्रह्मशब्दश्रवणात् जीवभिन्नतया हरेर्जिज्ञासाविषयता किन्तु ओमित्येतदक्षरमुद्गीथमुपासीतेत्यादौ च जिज्ञास्ये गुणपूर्णतावाचकोङ्कारश्रवणादपीति युक्त्यन्तरसूचकत्वेन ब्रह्मशब्दसमकक्ष्यतया विषयसमर्पकत्वात् तथा वेदस्य चेश्वरविषयत्वाभावात् अनुग्राह्यप्रमाणाभाव इत्याशङ्कापरिहारकस्य विषयवेदादिशास्त्रयोः संबन्धोपपादन-स्योङ्कारमात्रसाध्यतायाः वक्ष्यमाणत्वाच्चोङ्कारविषयपरतासूचनार्थं चादिपदेन विषयग्रहणमिति ज्ञेयम् ।

**चषकः— एतयोः** 'ताराथ'शब्दयोः ॥ अधिकार्यादीत्यत्र 'आदि'शब्दो विषयपरिग्राहकः । यद्यपि ब्रह्मशब्दो विषयप्रत्यायकोऽस्ति तथापि ब्रह्मशब्दतुल्यकक्ष्यापन्नतयोङ्कारस्य विषयप्रत्यायकताया, अनुग्राह्यप्रमाणा-भावशङ्काव्युदसनाय श्रुतीनामीश्वरविषयकतासमर्थकतायाश्चाभिधास्यमानतया तथोक्तिरिति मन्तव्यम् ॥ **विषय-**

**वैधुर्येण** उक्तदिशा श्रुतीनामीश्वरविषयतासमर्थकराहित्येन ॥ 'अनारम्भणीयत्वशङ्का'पदस्य अनुग्राह्यप्रमाण-राहित्यशङ्कोपलक्षकताऽवसेया । करणसाधनघञन्तताममभिप्रेत्य व्याचष्टे **तरन्तीति** ॥

**काशी०— एतदिति** । ओङ्काराथशब्दयोर्माङ्गलिकत्वमित्यर्थः । **विघ्नेति** । निर्विघ्नपरिसमाप्त्यादिप्रयोजक-त्वेनेत्यर्थः । **शास्त्राङ्गत्वं** शास्त्रपरिसमाप्त्युद्देश्यकत्वम् । **प्रथमेति** । प्रथमसूत्रार्थघटकार्थबोधकत्वाभावप्रसङ्गादित्यर्थः । अन्योद्देशेन प्रयुक्तयोः स्वार्थबोधपरत्वाभावादिति भावः । अत्रेष्टापत्तिं परिहरति **तथात्व इति** । **अधिकारी**त्यादिना विषयपरिग्रहः । **प्रतिपादक**पदेन ज्ञापकमात्रं विवक्षितम् । अधिकारानन्तर्यार्थेनाथशब्देनाधिकारिणो ज्ञापनात् । अथ विषयप्रतिपादकस्य ब्रह्मशब्दस्य भावात्कथमन्यस्याभावः । न चाधिकारिविषयोभयप्रतिपादकस्यान्यस्याभावो विवक्षित इति युक्तम् । अधिकारिविषयवैधुर्येणेत्युत्तरग्रन्थासङ्गतेः । विषयवैधुर्यप्रयुक्तानारम्भणीयत्वशङ्काया ब्रह्मशब्देन निराकरणादिति चेन्न । ब्रह्मशब्देन विषयमात्रोक्तावपि तस्य वक्ष्यमाणन्यायेनोङ्कारेण सकलवेदवेद्यत्वोपपादनं विना शास्त्रानुग्राह्यसकलवेदवेद्यत्वरूपविचारशास्त्रविषयत्वासिद्ध्या विशिष्टविषयालाभात् । अत एवाथशब्दाभावे सर्वथैवाधिकारालाभः । ओङ्काराभावे तु न सर्वथा विषयस्यालाभः । किन्तु विशिष्टविषयस्येत्याशयेनाधिकारस्य मुखतो ग्रहणम् । अन्यथोङ्कारस्यादौ निर्दिष्टत्वाद्विषयादीत्यवक्ष्यत् । मा भूदधिकार्यादिप्रतिपादनमत आह **तत्प्रतीति** । **अन्यथा** तदप्रतिपादने । **विषयवैधुर्येणेति** । उक्तरीत्या विशिष्टविषयवैधुर्येण । **शास्त्रस्य** सकलवेदविचारशास्त्रस्य । **अनर्थकमिति** । शास्त्रारंभसिद्धिरूपफलशून्यमित्यर्थः । सकलवेदवेद्यवस्त्वभावे सकलवेदविचारशास्त्रारम्भासंभवादिति भावः । तथा चोङ्काराथशब्दयोः प्रथमसूत्रावयवत्वान्न मङ्गलार्थत्वमिति शङ्काशयः । अथशब्दवत्तारशब्दस्यापि स्वपरत्वभ्रान्तिभङ्गाय योगरूढ्योङ्कारपरताममभिप्रेत्याह **तरन्तीति** । अथ कस्मादुच्यते **तारमिति** । यस्मादुच्चार्यमाण एव गर्भजन्ममरणसंसारमहद्भयात्तारयन्तीत्यादितापनीयश्रुत्युक्तैवात्र व्युत्पत्तिः । तत्र करणे कर्तृत्वोपचारज्ञापनाय तरन्त्यनेनेत्युक्तम् । अन्यथा तॄ प्लवनतरणयोरित्यस्मात् ऋदोरबिति करणेऽप्प्रत्यये तर इत्येवं स्यात् । उक्त-सूत्रस्य घञ्बाधकतया तदप्राप्तौ वृद्ध्यनुपपत्तेरिति ध्येयम् । अथशब्दवत्तारशब्दस्यापि स्वपरत्वभ्रान्तिभङ्गाय योगरूढ्योङ्कारपरताममभिप्रेत्याह **तरन्तीति** । तारस्याथशब्दमूलत्वमित्यादिभ्रान्तिनिरासाय द्वन्द्वमाह **तारश्चेति** । तयोर्व्याख्येयत्वादिरूपमूलत्वासंभवादाह **आदित्वमिति** । एकत्र द्वयोरेकविधादित्वानुपपत्तेः क्रमेणेत्युक्तम् । शब्दानामनादित्वात्कथमेकस्यान्यं प्रत्यादित्वमत आह **आदाविति** । तत्रेत्यादेरन्वयमर्थं चाह **तत्रेति** । **अवयवतया** घटकतयेति सप्तम्यर्थोक्तिः । **अङ्गतया** विघ्ननिवर्तकत्वादिनेति षष्ठ्यर्थसंबन्धोक्तिः । ततश्चोङ्काराथशब्दयो-रवयवत्वमङ्गत्वं चाविरुद्धमिति भावः ।

**गूढ०—** माङ्गलिकत्वानुपपत्तिं शङ्कते **नन्विति** । **शास्त्राङ्गतयेति** अत्र हेतुः । **विघ्नेत्यादि** । एवं ह्यनयोः उपकारकत्वं भवति । यद्धि यस्योपकारकं तत्तदङ्गमिति न्यायेनोपकारकत्वादङ्गत्वमिति भावः । ततः किमित्यत आह **तथात्वे चेति** । विषयादिप्रतिपादकाभावादिति भावः । ननु पदान्तरेण तत्प्रतिपादनसंभवान्न न्यूनतेत्यत आह **अधिकार्यादीति** । तर्हि तत्प्रतिपादनमेव मास्त्वित्यत आह **तत्प्रतिपादनस्य चेति** । **अन्यथेति** ।





तत्प्रतिपादनस्यानावश्यकत्व इत्यर्थः । नन्वोङ्काराथशब्दयोर्माङ्गलिकत्वे प्रथमसूत्रावयवत्वं न स्यादिति शङ्किते ताराथशब्दयोर्मूलत्वकथनमयुक्तं प्रश्नासङ्गतत्वादित्यत आह **तरन्तीति** । उभयोरप्यादित्वासंभवादाह **क्रमेणेति** । ननु तत्र ताराथशब्दयोर्मूलत्वमित्यत्र तत्रेत्यनेन कस्य परामर्शः । न च प्रथमसूत्रस्येति वाच्यम् । तर्हि प्रथमसूत्रे सर्वशास्त्रे च ताराथमूलत्वस्य साम्यापातात् । तथाच पुनरधिकार्याद्यभाव इत्यतोऽध्याहारेण योजयति **तत्रेति** । दूषणार्थमपीच्छायाः सत्त्वादाह **इष्यतेऽङ्गीक्रियत इति** । कर्तृपदाभावादध्याहारेण व्याचष्टे **सूत्रेति** ।

**९५ सु०— एतदुक्तं भवति । प्रथमसूत्रे अधिकार्यादिप्रतिपादनायोपात्तौ ॐकाराथशब्दौ, शङ्खवीणावेणुध्वनिवत् श्रुतितो माङ्गलिकत्वात् कृत्स्नशास्त्रस्यानन्तरायपरिसमाप्त्यादिकं कुर्वाते । अन्यार्थानीयमानपूर्णकलशदर्शनवदिति । 'ताराथावि'त्येतावता पूर्णे यत् 'मूलत्वम्' इत्याह तत्सूत्रकाराङ्गीकारलिङ्गसूचनम् । यत्पर्यायान्तरं विहाय, अनयोरेव क्रमान्तरं विहाय, आदावेव उपादानं तेन जानीमो, ज्ञापकतया आदिसूत्रस्य, कारकतया समस्तशास्त्रस्य च, उपयोगित्वेन एतौ सूत्रकृता विवक्षितौ इति । न चैतद्याद‍ृच्छिकम् । सकलसूत्रकारैरेवमेव प्रयुक्तत्वात् । न चानेकेषां प्रेक्षावतां यद‍ृच्छयैकविधा प्रवृत्तिरुपलब्धेति ॥ अनेन 'अथशब्दो मङ्गलार्थ' इत्यादिभाष्यं विवृतं भवति ।**

**परि०—** तावता नन्वेतदनुपपन्नमिति कृतचोद्यस्य किमुत्तरमित्यत आह **एतदुक्तमिति** ॥ **ज्ञापकतयेति** । अधिकार्यादिबोधकतयाऽऽद्यसूत्रस्योपयोगित्वेन निरन्तरायपरिसमाप्त्यादिजनकतया शास्त्रस्योपयोगित्वेन इत्यर्थः । अन्यथासिद्धिं निराह **न चैतदिति** । ताराथमूलत्वमित्यर्थः ॥ **सकलेति** । 'अथातो धर्मजिज्ञासा' । 'अथातो दैवीमीमांसा' । 'अथातो दर्शपूर्णमासौ व्याख्यास्याम' इत्यादि कर्मतन्त्रदेवतन्त्रकल्पसूत्रकारादिभिरित्यर्थः । न च तत्रोङ्कारो न श्रूयते इति वाच्यम् । 'स्रवत्यनोङ्कृतं ब्रह्म' इति वक्ष्यमाणदिशा तत्रापि तस्यावर्जनीयतया प्राप्तत्वात् । तद्भाष्यकारादिभिस्तस्याव्याख्यानं त्वनुपयोगादज्ञानाद्वा । अथ शब्दमूलत्वस्य सर्वत्र प्रत्यक्षत्वेन तदभिप्रायाद्वा सकलेत्युक्तिः । एतेन सर्वशास्त्रस्य इत्येतत् सर्वेषां शास्त्रं सर्वशास्त्रं तस्येति प्रकारान्तरेण व्याख्यातं ध्येयम् ॥ **अनेनेति** । तत्र तारेत्यर्धेन इत्यर्थः ।

**गु०दी०— यत्पर्यायान्तरं विहाय** इत्यत्र "ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ" इत्याद्यागमोक्तयोरोङ्काराथशब्दयोः पर्यायभूततारानन्तरादिशब्दौ विहाय, अथोमिति क्रमान्तरं च विहाय, अतो ब्रह्मजिज्ञासोमथ कर्तव्येति स्थानान्तरं च विहाय आदावेव प्रयोगादागमोक्तक्रमेणैव सूत्रस्यादौ ताभ्यां शब्दाभ्यामेव प्रयोगान्माङ्गलिकतयोक्तौ तावेवोङ्काराथशब्दौ सूत्रकृताऽपि

प्रयुक्ताविति ज्ञायते । ओङ्काराथशब्दौ च तयोरेव शृङ्गग्राहकतया प्रदर्शनार्थं प्रयुक्तत्वान्न सूत्रान्तर्गतौ । अतो न तौ सूत्रकृता गृहीतौ । अतोऽनयोर्मङ्गलार्थत्वेनापि प्रयोगः सूत्रकृतोऽभिमतः । विलक्षणविषयाधिकारादिबोधकत्वेन सूत्रावयवताऽप्यावश्यकी । तेनादिसूत्रे अर्थविशेषज्ञापकत्वेन सकलशास्त्रे विघ्नविघातद्वारा समाप्तिं प्रति कारणत्वेनोपयोगिता ज्ञायत इति भावः । भाष्यकारस्तु सूत्रकाराभिमतविघ्नाद्यनिष्टनिवर्तकमङ्गलत्वमनुभावयितुं तरन्त्यनेनानिष्टमिति व्युत्पत्त्या ओङ्कारवाचकतारशब्दं प्रायुङ्क्तेति विवेकोऽनुसन्धेयः ।

**यादु०— यन्मूलत्वमित्याहेति** । क्रमेणादित्वमित्याहेत्यर्थः ॥ कथमेवमुक्तेः सूत्रकाराङ्गीकारलिङ्गसूचकत्वमित्यतस्तद्दर्शयति **यत्पर्यायान्तरमिति** । मङ्गलवाचिशब्दान्तरमित्यर्थः । **क्रमान्तरम्** अन्ते निवेशनम् । अयं भावः । यदि कारकतया समग्रशास्त्राङ्गत्वमेवैतयोः सूत्रकारस्य विवक्षितं स्यात्तदा स्पष्टं मङ्गलवाचि 'मङ्गलमि'त्यादि शब्दान्तरमेव वक्तव्यं, किमनयोर्मङ्गलप्रयोजनकयोर्वचनेन; पर्यायान्तरं विहाय चानयोरेव यदोपादानं करोति तेन जानीमो 'मङ्गलप्रयोजनादन्यदप्यनयोरस्ति प्रयोजनं तज्ज्ञापकतया आदिसूत्राङ्गत्वमेवे'ति विवक्षितं सूत्रकारस्येति ॥ एवं यदि ज्ञापकतया आदिसूत्राङ्गत्वमेव विवक्षितं स्यात्तदाऽन्ते निवेशनं किमर्थं न कृतं, तद्विहायादावेव निवेशनं करोति, तेन जानीमः 'कारकतया समस्तशास्त्राङ्गत्वमप्यभिमतं तस्येती'ति ॥ यद्वा ज्ञापकतयाऽऽदिसूत्रोपयोगित्वं पूर्वपक्षिणाऽङ्गीकृतमेवेति न तत्र सूत्रकाराङ्गीकारलिङ्गं सूचनीयं, किन्तु कारकतया समस्तशास्त्रोपयोगित्वमेव । ततश्च 'पर्यायान्तरं विहाय' इत्यस्य 'अधिकार्यादिप्रतिपादकशब्दान्तरं विहाये'त्यर्थः । 'क्रमान्तरमि'त्यस्य च 'अन्ते निवेशनमि'त्यर्थः । तेन " 'पर्यायान्तरपरित्यागोऽन्ते विहाय आदावेव निवेशनं चै'तद्वयं मिलितं सत् कारकतया समस्तशास्त्राङ्गत्वं सूत्रकारेणाङ्गीकृतमि"त्यस्यैव सूचकं, न तु ज्ञापकतया आदिसूत्राङ्गत्वस्यापि सूत्रकाराङ्गीकृतत्वस्य । 'ज्ञापकतया सूत्रस्ये'त्युक्तिस्तु दृष्टान्तकथनायानुवाद एवेति ज्ञातव्यम् ॥ **सकलसूत्रकारैरेवमेवेति** । अनेन 'सर्वशास्त्रस्य' इत्येतत्प्रकारान्तरेण योजितमिति द्रष्टव्यम् ॥

**वं०प०— ज्ञापकतयेति** । प्रथमसूत्रवाक्यार्थोपयुक्तार्थप्रतिपादकतयेत्यर्थः ॥ **कारकतयेति** । निर्विघ्नपरिसमाप्त्यादिजनकतयेत्यर्थः ॥

**आनन्दः—** ननु ओङ्काराथशब्दयोरेवावयवत्वाङ्गत्वकथनमयुक्तम् । अवयवत्वे हि एकवाक्यत्वं वक्तव्यम् । अङ्गत्वे च तदभावः । तयोश्च परस्परविरुद्धत्वादित्यत आह **एतदुक्तं भवतीति** । शङ्खध्वन्यादेः श्रुतितो माङ्गलिकत्ववदनयोरपि श्रुतित उच्चारणेन माङ्गलिकत्वमित्यर्थः । मूलत्वग्रहणस्य प्रयोजनमाह **ताराथावितीति** । तत्र किं लिङ्गं सूत्रसूचितमत आह **यदिति** । **ज्ञापकतया** । तदर्थान्वितार्थप्रतिपादकतया । **कारकतया** । तत्प्रतिबन्धकविघ्ननिरासकतया । **न चैतदिति** । आदौ प्रयोगकरणमित्यर्थः । तथाच मूलत्वमित्यनेन सूत्रकाराङ्गीकारलिङ्गसूचनमयुक्तमिति भावः । नन्वनेकेषामुन्मत्तानामिव एषामपि प्रवृत्तिः किं न स्यादित्यत आह **न चेति** । तेषां चाप्रेक्षावत्त्वादिति भावः । नन्वथशब्दोऽयं मङ्गलार्थ इति भाष्ये अथशब्दस्य मङ्गलप्रतिपादकत्वमुक्तं तत्फलकत्वे च भाष्यविरोध इत्यत आह **अनेनेति** । श्रुतित इति वचनेनेत्यर्थः ।

**कं०रा०— ज्ञापकतया** अन्वयप्रतियोग्यधिकारिविषयोपस्थापकतया।

**श्रीनिधि०— यत्पर्यायान्तरमिति**। ओङ्काराथशब्दापेक्षया पर्यायभूतमथोत्तरेति शब्दं विना ओङ्काराथ-शब्दयोरुपादानेन समस्तशास्त्रस्य कारकत्वम्। अतो ब्रह्मजिज्ञासा ॐ अथ इति क्रमान्तरेण पाठं विहाय अन्वयक्रमेणादित एव ओङ्काराथशब्दयोश्च पठनेन प्रथमसूत्रावयत्वं च ज्ञायते इत्यर्थः। अथवा माङ्गलिक-शब्दान्तरं विहायानयोरेवोपादानेनावयवत्वमन्विताभिधायित्वात्। आदितस्तदुपादाने मङ्गलार्थत्वं च ज्ञायत इत्यर्थः। **ज्ञापकतयेति**। प्रथमसूत्रसंबन्धिसंसर्गनिरूपकज्ञापकतयेत्यर्थः।

**वा०चं०—** ननु यदि विघ्नविघातादिहेतुत्वेन शास्त्राङ्गत्वं, तर्ह्यस्य तदुपयुक्तार्थप्रतिपादकत्वेनाधिकार्यादि-प्रतिपादकत्वाभावान्न प्रथमसूत्रावयवता। यदि च किञ्चिदर्थप्रतिपादकत्वेन नास्य शास्त्राङ्गता, किन्तु श्रवणमात्रेण विघ्नविघातादिसंपादकतया, तथा चाधिकार्यादिप्रतिपादकत्वाद्युक्ताऽवयवतेति मतं; तर्हि श्रवणमात्रस्य तद्धेतुताया अदर्शनात् अन्यार्थप्रयुक्तस्य प्रयोजनान्तरार्थताया अदर्शनाच्च शास्त्राङ्गत्वं परित्यक्तं स्यादित्यतोऽभिप्राय-माह **एतदुक्तं भवतीति**। यद्वा। ननु कथमनेनोक्तशङ्कापरिहार इत्यतो, 'विघ्नविघातादिहेतुत्वोक्त्या न प्रथम-सूत्रावयवत्वत्यागोऽपि त्वधिकार्यादिप्रतिपादकत्वेन प्रथमसूत्रोपात्ताभ्यामेव ताभ्यां प्रयोजनान्तरस्यापि सिद्धिः इत्येवाभिप्रेतमि'त्येतत् सहेतुकं दृष्टान्तपूर्वं विवृणोति **एतदुक्तं भवतीति**॥ अधिकार्यादिप्रतिपादकत्वेनानयोः सूत्रावयवत्वे सिद्धेऽपि एतत्पर्यायाभ्यामनयोरपि क्रमान्तरेणोपादानेन ब्रह्मशब्दवन्मध्ये ग्रहणेनाप्यधिकार्यादिलाभात् अनयोरेव अनेन क्रमेणैवादावेवोपादानं समस्तशास्त्राङ्गत्वस्य ज्ञापकमित्याह **यदिति**॥ 'ज्ञापकतयाऽऽदिसूत्रस्ये'ति दृष्टान्ततयोपात्तम्। **यद्वा** स्पष्टज्ञापकतया आदिसूत्राङ्गत्वस्य पूर्ववादिनाऽप्यङ्गीकार्यत्वात् तत्र सूत्रकाराङ्गीकार-लिङ्गसूचनस्याकर्तव्यत्वादिति भावः। मङ्गलवाचक'मङ्गल'पदं विहायेत्यप्यत्र द्रष्टव्यम्। यत्पर्यायान्तरं विहायेत्येतदेव वा स्पष्टमङ्गलवाचकशब्दं विहाय तत्प्रयोजकयोरनयोरुपादानमिति व्याख्येयम्। अत्र च पक्षद्वये 'ज्ञापकतया आदिसूत्रस्ये'त्युपपादनीयतयैवोपात्तमिति द्रष्टव्यम्॥ कयोश्चिच्छब्दयोः केनचित्क्रमेण क्वचिदुपादानं कर्तव्यमिति क्रियते, तथा चान्यथासिद्धिरित्याशङ्क्ते **न चेति॥ अनेनेति**। मङ्गलार्थत्वव्याख्यानेन, मङ्गलार्थत्वे प्रथमसूत्रा-वयवत्वानुपपत्तिपरिहारेण चेत्यर्थः। (मङ्गलानन्तरारम्भप्रश्नकात्स्न्येष्वथो अथेत्यमरः)।

**वा०र०— यदीति**। अस्येति वक्ष्यमाणमत्रापि संबध्यते। **अस्येति**। ओङ्काराथशब्दरूपद्वयस्येत्यर्थः। आदौ प्रयुक्ताविति वाक्ये द्वित्वावच्छिन्नत्वेन तयोः प्रकृततया शब्दद्वयस्येति परामर्शोपपत्तेरिति ज्ञेयम्। **तदुपयुक्तेति**। विघ्नविघातादिहेतुत्वोपयुक्तार्थप्रतिपादकत्वेनेति शास्त्राङ्गत्वोपयुक्तार्थप्रतिपादकत्वेनेति वाऽर्थः। **किञ्चिदर्थेति**। शास्त्राङ्गता अस्य शब्दद्वयस्य तदुपयुक्तकिञ्चिदर्थप्रतिपादकत्वेन न भवतीति योज्यम्। अस्येत्युक्ता-र्थम्। यदीत्यस्येति मतमिति उत्तरेण संबन्धः। **तद्धेतुतायाः** विघ्नविघातादिहेतुतायाः। **शास्त्राङ्गत्वमेवेति**। शास्त्राङ्गत्वमङ्गीकृत्याधिकार्यादिप्रतिपादकत्वमप्यस्तीति न युक्तम्। तत्त्वस्यादर्शनात्। तस्मात् विषयादि-प्रतिपादकत्वमङ्गीकृत्य शास्त्राङ्गत्वमेव वक्तव्यं स्यादित्यर्थः। अस्मिन् पक्षे। विघ्नविघातादिहेतुत्वेन शास्त्राङ्गत्वपक्षे

किञ्चिदर्थप्रतिपादकत्वमप्रसक्तमेवारोप्य दूषणीयं भवतीत्यपरितोषात् वस्तुस्थितिकथनपरतयोक्तमूलं योजयति **यद्वेति** । **सहेतुकमित्यादि** । श्रुतितो माङ्गलिकत्वादित्यादिना हेतुदृष्टान्तयोः प्रतिपादनादिति भावः । मूले **श्रुतित इति** । श्रुत्येति श्रुतितः इति इत्थंभूतलक्षणे तृतीयान्तात् आद्यादिभ्यः उपसंख्यानात्तसिः । अनेन पुत्रेण पुत्रवान् इत्यादाविव श्रुत्येति तृतीयान्तात्तसिः । श्रवणलक्षणं यन्मङ्गलं तत् प्रयोजकत्वादिति फलितम् । मृदङ्गध्वन्यादिश्रवणरूपमङ्गलस्य मृदङ्गध्वन्यादिकार्यत्वेन मृदङ्गध्वन्यादेः माङ्गलिकत्ववत् अथशब्दादिश्रवणरूपमङ्गलस्याथशब्दादिकार्यत्वात् तन्निष्पादकत्वेनाथशब्दादेः माङ्गलिकत्वमिति भावः । क्रमान्तरं विहायादावेवेत्यत्रापेक्षितशेषपूरणेन न्यूनतां परिहरन् यदिति उत्तरवाक्यार्थं वदन् तद्वाक्यमवतारयति **अधिकार्यादीति** । पर्यायान्तरं विहायेत्याद्युक्तहेतोः कारकतया समस्तशास्त्रोपयुक्तत्वसाधकत्वेऽपि आदिसूत्रज्ञापकत्वसाधकत्वाभावात् । ज्ञापकतया आदिसूत्रस्येत्येतत् असङ्गतमित्यत आह **ज्ञापकतयेति** । अस्मिन् पक्षे ज्ञापकतयेत्यादिकं दृष्टान्ततया उपात्तमिति कल्पनीयं भवतीति अपरितोषात् कारकत्ववत् ज्ञापकत्वमपि उपपादनीयतयैव उपात्तम् । न च तत्र हेत्वनुक्तिः । हेतूपस्कारोपपत्तेः इत्याह **यद्वेति** । विहायेत्यस्याध्याहृतस्यानयोरेवोपादानमित्यनेन संबन्धः । अत्र पक्षे अध्याहारः कल्पनीयः इत्यरुच्या पक्षान्तरमाह **यत्पर्यायान्तरमित्यादि** । अनेनैवमुक्तं भवति । यदि कारकतया समस्तशास्त्राङ्गत्वमेव तयोः सूत्रकारस्य विवक्षितं स्यात् तदा स्पष्टमङ्गलवाचिशब्दान्तरमेव प्रयोक्तव्यं किमनयोः मङ्गलप्रयोजनयोः वचनेन । पर्यायान्तरं विहायानयोरेव यदुपादानं करोति सूत्रकारः तेन जानीमोऽस्त्यत्रान्यदपि अनयोः प्रयोजनम् । तच्च ज्ञापकतया सूत्राङ्गत्वमेवेति विवक्षितं सूत्रकारस्येति । एवं यदि ज्ञापकतया आदिसूत्राङ्गत्वमेव विवक्षितं स्यात् तदा मध्ये अन्ते वा निवेशनं क्रियेत तद्विहाय यदादावेव निवेशनं करोति तेन जानीमः । कारकतया समस्तशास्त्राङ्गत्वमपि अभिमतं तस्येतीति । ज्ञापकतया तदर्थान्वितार्थप्रतिपादकतया तत्प्रतिबन्धकविघ्ननिरासकतया तत्प्रयोजकयोरित्यत्र श्रुत्येति पूरणीयम् । यद्वेत्याद्युक्तपक्षद्वयस्य दृष्टान्ततयेति प्रथमोक्तिपक्षात् भेदं स्पष्टयति **अत्र च पक्षद्वय इति** । **अन्यथासिद्धिरिति** । पर्यायान्तरं विहायेत्याद्युक्तहेतोः सर्वशास्त्रकारकत्वं विनापि सिद्धिघटनेत्यर्थः । **सकलसूत्रकारैरिति** मूलम् । ननु अथातो धर्मजिज्ञासा, अथातो दैवीमीमांसा, अथ शब्दानुशासनं, अथ योगानुशासनं, अथातो दर्शपूर्णमासौ व्याख्यास्यामः इत्यादि सूत्रकारैः तत्सूत्रेषु अथातःशब्दमात्रोच्चारणेऽपि ओङ्कारो नोच्चार्यते । वृद्धिरादैच् इत्यादि सूत्रेषु नाथशब्दोऽपि । तत्कथं सकलेत्युक्तमिति चेत् । अत्र ब्रूमः । कथमेतदवगतम् । पूर्वमीमांसादिस्थले ओङ्कारो नोच्चारितः इति इदानींतनपुरुषैः उच्चारणाभावादिति चेत् तेषां तदनुच्चारणस्य ओङ्कारस्यासंहिततया निर्दिश्यमानत्वस्यात्रेव प्राप्तत्वात् तन्निमित्तकतदभिप्रायस्य चावगत्यभावेन नवानवयवत्वबोध्योङ्कारं परित्यज्यैवाध्ययनकरणात् अध्येतृपरम्परयाऽनुच्चारणप्राप्त्या तट्टीकाकारैः व्याख्यानसमये वेदार्थविचाररूपशास्त्रस्य ब्रह्मविद्यात्वेनाद्यन्तयोः ओङ्कारपाठः आवश्यकः इत्यादेः प्रमेयस्य ब्रह्मसूत्रव्याख्यातृभिरिव प्रतिपादनाभावेन चोङ्कारपाठाभावस्यान्यथासिद्धत्वमतेन तत्सूत्रेषु ओङ्कारो नोच्चारित इति निश्चयानुपपत्तेः । अत एव ब्रह्मसूत्रे प्रथमतः ओङ्कारोच्चारणमङ्गीकृत्य तस्यावयवत्वमेव विचार्यते । अत एव च पठ्यमानोऽप्योङ्कारो वेदाध्ययनादौ पठ्यमानोङ्कारवत् । वाक्यभेदेनैव कैश्चित् पठ्यते । ग्रन्थे निवेश्यते च । श्रौतार्थवादबलेन प्राप्तस्य परित्यागायोगात् । तथोङ्कारोच्चारणं सर्वत्रादृष्टार्थम् । प्रथमसूत्रे च दृष्टार्थं च भवतीति किल सूत्रारम्भे उच्चार्यमाण-





स्योङ्कारस्य स्थितिः । तत्र दृष्टार्थत्वेनापि आवश्यकत्वस्थले तद्विचारस्यावर्जनीयतया प्राप्तिवत् तदभावस्थले तद्विचारस्याप्रवृत्त्या वा पाठाभावप्रतीत्युपपत्तिः । मङ्गलाचरणस्यावश्यकत्वमभ्युपेत्य तत्परतया ओङ्कार-व्याख्यानाभावोऽपि अथशब्दांशेऽपि समानः । अत एव परभाष्ये भामत्यादौ च अथशब्दस्य महता प्रबन्धेन विचारकरणेऽपि पूर्वमीमांसाभाष्यादौ तथा विचाराभावः । न हि एतावता अथशब्दो मङ्गलप्रयोजनकतया पूर्वमीमांसादिषु नोच्चारित इति शक्यते वक्तुम् । सर्वटीकाकाराणां समानप्रवृत्तेरभावस्य तत्र तत्र स्थितत्वात् । अत एव वृद्धिरादैच् इति सूत्रभाष्ये वृद्धीति संज्ञाशब्दस्य अदेङ्गुणः इत्यादाविव पश्चात् प्रयोगे कर्तव्ये व्यत्यस्त-योगः इत्याशङ्कावारणाय तदेकं आचार्यस्य मङ्गलार्थं अन्विष्यताम् । माङ्गलिक आचार्यः इत्यादिना संज्ञाशब्दस्य प्रथमोच्चारणं मङ्गलाचरणसिद्ध्यर्थं इत्यादि प्रतिपादितम् । शास्त्रदीपिकाटीकायामपि लक्ष्मीकौस्तुभवक्षसं इत्येतत् आद्यपद्यगतलक्ष्मीत्यस्य प्रथमनिर्देशोपपादनावसरे लक्ष्मीशब्दोच्चारणं माङ्गलिकत्वेनेत्युक्तम् । ब्रह्ममीमांसापरभाष्य-भामत्यां ओङ्कारश्चाथशब्दश्चेत्यादि प्रमाणविरोधो मङ्गलार्थत्वानङ्गीकारेऽथशब्दस्य उद्भावितः यद्यपि च सूत्रभाष्ये उदाहृताथातःशब्दपूर्वाणि सूत्राणि; इत्यादिगरुडपुराणे अथातःशब्दयोरेव पुरस्कारेण प्रश्नः । अथातःशब्दयोरेवं वीर्यमाज्ञाय इत्युपसंहारश्च तत्पुरस्कारेणैव तथापि मध्ये सिसृक्षोः परमात् विष्णोः प्रथमं द्वौ विनिःसृतौ इत्यादाविव ओङ्कारस्याथशब्दापेक्षया प्रथमत्वेनोक्तत्वात् अतश्च पूर्वमुच्चार्याः सर्व एते सतां मताः इत्यनेनोङ्काराथातःशब्दानां त्रयाणामपि क्रमेण प्रयुज्यमानानां प्रथमप्रयोगस्य सर्वसत्संमतत्वोक्तेश्चोङ्कारे प्रथमोच्चारणविषये सन्देहरहितस्य अथातःशब्दपुरस्कार इति गम्यते । अत एव तत्प्रमाणानुसारादेव पूर्वमीमांसादावपि ओङ्कारः प्रथमोच्चार्यतया प्राप्त इति तदनुच्चारणं पूर्वोक्तरीत्या संहिततया पाठादिकं निमित्तमेव कल्पनीयम् । सतां मताः इत्युक्त्यैव सर्वत्रोङ्कारप्राप्तेः । एतावांस्तु विशेषः । यत्र दृष्टं प्रयोजनमप्यस्ति तत्र तदुच्चारणमस्ति इति सर्वजनसिद्धम् । यथा वृद्धिपदस्य यत्र दृष्टार्थत्वाभावः तत्र दृष्टार्थत्वश्रौतार्थवादप्राप्तमपि टीकाकृद्भिः अनुसन्धीयमानत्वाभावात् न व्याख्यायत इति ओङ्कारस्य सत्त्वासत्त्वौदासीन्येनैव प्रवृत्तिः क्रियते । अत एव दृष्टान्तदूषणपरतया सर्वत्रानुगतत्वेनेति भाष्ययोजनास्थले सर्ववेदेषु प्रथमतः ओङ्कार उच्चार्यते स चासंहिततयोच्चारणात् अधिकृतत्वेनोच्चारितः इत्यादि प्रमेयं वक्ष्यते । तस्मात् अथातो धर्मजिज्ञासेत्यादिसूत्रेष्वपि आदौ ओङ्कारः उच्चार्यते इति सिद्धत्वात् सकलसूत्रकारैः इत्युक्तमिति सूरयो विदांकुर्वन्तु । प्रमाणतममिष्यते इत्यन्तानुव्याख्यानस्य भाष्यस्थाद्यपद्यादिव्याख्यानादित्वं प्रागुक्तम् । तत्र ताराथेति अनुव्याख्यानव्याख्येयं भाष्यं किमिति जिज्ञासानिवृत्त्यर्थं तत् व्याख्येयं दर्शयितुं प्रवृत्ते; **अनेन अथ शब्द इति** मूले अनेनेत्यस्य तत्र ताराथेत्यनेन इत्येवार्थप्रतीत्या व्याख्यानत्वप्रकाराद्यप्रतीतेः तत्प्रकारसमर्पकत्वेनानेनेत्येतत् व्याचष्टे **मङ्गलार्थत्वेति** । भाष्योक्तमङ्गलार्थत्वस्य मङ्गलं अर्थ्यत इति व्युत्पत्त्याऽर्थः प्रयोजनं यस्येति मङ्गलार्थः इति मङ्गलप्रयोजनकत्वेन व्याख्यानेनेत्यर्थः । तेनार्थ्यते इति व्युत्पत्त्या मङ्गलं अर्थः प्रतिपाद्यं यस्येत्यर्थानङ्गीकार-सूचनादिति भावः । **मङ्गलार्थत्वे** मङ्गलप्रयोजनकत्वे ।

**स०व्र०**— आदावेवोपादानमपि 'कारकत्वेन शास्त्रोपयोगित्व'ज्ञापने हेतुः । क्रमाव्यत्यासेन चेदमवगम्यते अथशब्दस्य सूत्रासन्निकर्षात्तत्रस्थस्यैव ज्ञापकत्वेन शास्त्रोपयोगित्वं, ओङ्कारस्य प्रतिसूत्रमुच्चरितस्य च कारकत्वेनेति । क्रमाव्यत्यासेनेत्यस्य कृत्यमाह **आदावुपादानमिति** । न च विवक्षिताविवितीति योज्यम् ।





**कुण्डल०**— ननु सूत्रावयवतया सकृदुपात्तयोरोङ्काराथशब्दयोः शास्त्राङ्गत्वमपि कथमित्यतस्तदुपपादयति **एतदुक्तं भवतीति** । **अधिकार्यादीति** । आदिपदेन विषयपरिग्रहः यथायोग्यमन्वयः । न तु यथाक्रमम् । **अङ्गीकारलिङ्गेति** । अङ्गीकारलक्षणज्ञापिकेत्यर्थः । **पर्यायान्तरमिति** । मङ्गलप्रयोजनकतद्वाचकपदलक्षणपर्यायान्तरमित्यर्थः । **क्रमान्तरमिति** । अथोमिति क्रमान्तरं विहायेत्यर्थः । **तेनेति** । माङ्गलिकशब्दान्तरं विहायोमथशब्दयोरुपादानेन च शास्त्रस्य निर्विघ्नेन परिसमाप्तिलक्षणं प्रयोजनमभिधाय सूत्रकारेणोमथशब्दावादौ प्रयुक्ताविति जानीम इत्यर्थः । **सकलसूत्रेति** । अनेन न केवलं ब्रह्मसूत्राणामेवोमथशब्दमूलत्वं किन्तु प्रायेण सर्वसूत्राणामप्योमथशब्दमूलत्वमित्यर्थपरतयाऽपि सर्वशास्त्रस्येति व्याख्यातं भवति ।

**विठ्ठ०**— कथमनेन न्यूनताशङ्कापरिहार इत्यत आह **इदमुक्तं भवतीति** । दर्शनवदित्यतःपरं समस्तशास्त्राङ्गत्वं प्रथमसूत्रावयवत्वं चोपपद्यत इति शेषः । मूलत्वमित्युक्तेः कथं सूत्रकाराङ्गीकारलिङ्गसूचकत्वमित्यत आह **यत्पर्यायान्तरं विहायेति** । मङ्गलवाचितया स्पष्टं मङ्गलशुभादिशब्दान्तरं विहाय यदनयोरेवोपादानं करोति तेन जानीमो मङ्गलप्रयोजनादन्यदप्यस्त्यनयोः प्रयोजनं तत्त्वविषयादिज्ञापकतयादिसूत्राङ्गत्वमेव विवक्षितं **सूत्रकारस्येति** । एवं क्रमान्तरं विहाय यदनयोरादावेवोपादानं तेन जानीमो विषयादिज्ञापनादन्यत्समस्तशास्त्रस्य परिसमाप्तिकारकतया अङ्गत्वमभिमतं सूत्रकारस्येत्यर्थः । **सकलसूत्रकारैरेवमेव प्रयुक्तत्वादिति** । कर्मदेवमीमांसासूत्रकारादिभिः ओमथशब्दपूर्वकत्वेनैव प्रयुक्तत्वादित्यर्थः । यद्यप्यन्यसूत्रेषु ओङ्कारस्य न वाक्यार्थेऽन्वयः तथापि स्रवत्यनोङ्कृतं ब्रह्मेत्याद्युक्तश्रवणादिनिरासकतयैव मङ्गलार्थतयैवोपयोग इति ज्ञातव्यम् । आदिभाष्यं सूत्रव्याख्याने प्रथमभाष्यम् । समन्वयाभावादित्यतःपरं नाथशब्दस्य मङ्गलार्थकत्वमिति शेषः ।

**चषकः**— **यन्मूलत्वमिति** । आदित्वमित्यर्थः ॥ **पर्यायान्तरम्** ताराथशब्दसमानार्थकशब्दान्तरम् ॥ **क्रमान्तरम्** 'अतः'शब्दाद्युत्तरविन्यासम् ॥ **ज्ञापकतया आदिसूत्रस्येति** । आदिसूत्रघटकपदार्थान्वितार्थप्रत्यायकतयेत्यर्थः ॥ **कारकतयेति** । कृत्स्नशास्त्रसमापनौपयिकान्तरायध्वंसप्रयोजकतयेत्यर्थः ॥ यदि सूत्रकारः कारकतया कृत्स्नशास्त्राङ्गतामेवानयोरभिप्रेयात् तदा तादृशमङ्गलादिपदान्तरमेव प्रयुञ्जीत, तथा तु न प्रायुङ्क्त; तेन जानीमोऽर्थप्रत्यायनरूपफलान्तरमप्यस्तीति । यदि चार्थप्रतीतिमेव फलमनुसन्दध्यात् तदा अतःशब्दाद्युत्तरं निर्दिशेत्, तथा तु न निरदिक्षत्; ततो जानीमहे अर्थप्रतीतितोऽतिरिच्यमानमन्तरायध्वंसनिर्वर्तनादिरूपं फलमस्तीति भावः ।

**काशी०**— नन्वेतावता कथमुक्तशङ्कापरिहार इत्यत आह **एतदुक्तं भवतीति** । यद्यप्यत्र प्रथमनिर्दिष्टोङ्कारस्य विषयप्रतिपादकत्वाद्विषयादीत्येव वक्तुमुचितम् । तथाऽप्योङ्कारेण विषयभूतस्य ब्रह्मणः कृत्स्नवेदार्थत्वे सूचिते कृत्स्नवेदाध्ययनरूपाधिकारानन्तर्यपरत्वमथशब्दस्य ज्ञायत इत्यधिकारस्याप्योङ्कारलभ्यत्वादधिकार्यादीत्युक्तम् । **माङ्गलिकत्वात्** शुभसूचकत्वात् । तच्च शङ्खादिध्वनेर्व्याप्तिमात्रेण ओङ्कारादेस्तु देवतास्मृतिरूपमङ्गलप्रयोजकत्वेनेति ज्ञेयम् । अन्योद्देश्यकस्याप्यन्यफलत्वे स्पष्टं दृष्टान्तमाह **अन्यार्थमिति** । पूर्णकलशदर्शनं यथा द्रष्टुर्भाविशुभज्ञानं करोति तथेत्यर्थः । **पूर्ण इति** । ओङ्काराथशब्दयोस्तत्रेति सप्तम्या प्रथमसूत्रघटकत्वस्य शास्त्रस्येति षष्ठ्या शास्त्राङ्गत्वस्य च लाभादिति भावः । **मूलत्वमित्याहेति** । ताराथमूलत्वमित्याहेत्यर्थः । **यदिति** । क्रियाविशेषणं





तद्वचनं इष्यत इत्युक्ताङ्गीकारस्य यल्लिङ्गं ज्ञापकं तत्सूचकमित्यर्थः । तदेवोपपादयति **यत्पर्यायेति** । यदोङ्कारपर्यायं विष्ण्वादिशब्दमकारपर्यायं पूर्णादिशब्दं शकारपर्यायं स्थितादिशब्दं च परित्यज्योङ्काराथशब्दयोरेवोपादानम् । तेन जानीमोऽधिकार्यादिप्रतिपादकतयाऽऽदिसूत्रस्योपयोगित्वेन तदर्थबोधौपयिकत्वेनैतौ विवक्षिनाविति । यच्चाथात ॐ ब्रह्मजिज्ञास्येत्यादिक्रमान्तरं परित्यज्यादित एवानयोरुपादानं तेन जानीमो विघ्ननिवर्तकत्वादिना समस्तशास्त्रस्योपयोगित्वेन तत्स्वरूपनिष्पत्त्यादिप्रयोजकत्वेनैतौ सूत्रकृतावङ्गीकृताविती‌त्यर्थः । यद्वा । पर्यायान्तरमुक्तविष्ण्वादिशब्दं विहायानयोरेवोपादानेन क्रमान्तरमतःशब्देनासंहिततया निर्देशादिक्रमं विहायाव्यवहितपूर्वमुपादानेन च ज्ञापकतया एवमथशब्दपर्यायततःशब्दादिकं विहायानयोरेव ॐ ब्रह्मेत्याद्युक्तक्रमान्तरं विहायादावेवोपादानेन कारकतया चोपयोगित्वेन विवक्षिताविति जानीम इत्यर्थः । यद्वा । ज्ञापकतयाऽऽदिसूत्रोपयोगित्वं सिद्धवत्कृत्य तदनुवादेन कारकतयाऽङ्गीकृतत्वमेवोपपद्यते । तथा हि । ज्ञापकतयाऽऽदिसूत्रोपयोगित्वेन विवक्षितावेतावथशब्दपर्यायान्तरं विहायानयोरेव ॐ ब्रह्मेत्याद्युक्तक्रमान्तरं च विहायादावेवोपादानेन कारकतया समस्तशास्त्रोपयोगित्वेनाङ्गीकृताविति जानीम इत्यर्थः । पर्यायान्तरत्यागेऽपि क्रमान्तरानुसरणे क्रमान्तरत्यागेऽपि पर्यायान्तरानुसरणे वा मङ्गलार्थत्वाङ्गीकारसिद्धिः । आदावुपात्तशब्दान्तरस्य मध्ये उपात्तोङ्कारादेर्मङ्गलार्थत्वव्यभिचारादतो विशिष्टानुसरणम् । एतेन पर्यायान्तरपरित्यागेनोङ्काराथशब्दोपादानस्यापि मङ्गलार्थत्वाङ्गीकारलिङ्गतया यन्मूलत्वमित्याहेत्याद्युपपन्नमित्यपास्तम् । तावन्मात्रस्य तल्लिङ्गत्वाभावात् । ननु पर्यायान्तरसत्त्वेऽप्योङ्काराथशब्दयोरेवोपस्थितत्वादुपादानमस्त्वित्याशङ्कां निराह **न चेति** । एतत् अनयोरेवादावेवोपादानम् । यादृच्छिकं मङ्गलादिप्रयोजनविशेषोद्देशविधुरम् । सकलसूत्रकारैः जैमिन्यादिभिः । एवमेव ओङ्काराथशब्दयोरादित्वेनैव । **प्रयुक्तत्वादिति** । ॐकारश्चाथशब्दश्च तस्मात्प्राथमिकौ क्रमादित्युक्तेरिति भावः । एतेन सर्वशास्त्रस्य कर्ममीमांसादेरपि ताराथमूलत्वं तत्तत्सूत्रकृतेष्यत इत्यपि मूलं योजितं भवति । एवं चैतद्विरुद्धसूत्राणामुक्तसूत्रत्वाभावादेव न तत्र व्यभिचार इति ध्येयम् । ननु सर्वेषामपि तदुपादानं यादृच्छिकमेवास्त्वित्यत आह **न चेति** । नियमस्य नियामकाधीनत्वादिति भावः । एकेन यदृच्छया प्रयुक्तेऽन्यस्याकुशलस्य तथा प्रयोगः प्रयोजनविशेषसद्भावसंभावनया संभवत्यतः प्रेक्षावतामित्युक्तम् । अनेकेषां तेषामेकविधप्रवृत्त्यसंभवे सुतरामेव सर्वेषां तदसंभव इति भावः । अथोङ्कारेण सर्ववेदवेद्यत्वसिद्धावेव सर्ववेदाध्ययनानन्तर्यपरत्वमथशब्दस्य गृह्यते । एवमथशब्देनाधिकारघटकतया मुमुक्षुत्वावगम एव प्रक्रान्तमोक्षहेतुत्वमतःशब्देन प्रतिपादयितुं शक्यते । एवमधिकार्यादिमत्त्वे ज्ञात एव जिज्ञासायाः कर्तव्यता ज्ञायत इति हेतुहेतुमद्भावस्योङ्कारादिक्रमनियामकत्वान्नोक्तप्रवृत्तेर्यादृच्छिकत्वमिति चेन्न । अथशब्दस्य मुमुक्षाद्यानन्तर्यपरत्ववत्सर्ववेदाध्ययनानन्तर्यपरत्वस्यापि वाक्यान्तरेण ग्रहणोपपत्तेः । ॐकारार्थस्य ब्रह्मण्यन्वयाय तस्य तदव्यवधानौचित्यात् । आनन्तर्यमात्रवाचिनोऽथशब्दस्य योग्यताबलेनैव तत्तदानन्तर्यपरताया ग्राह्यत्वात् । योग्यतायाश्चोत्तरविमर्शेनाप्यवगमात् । साध्यनिर्देशानन्तरमपि हेतूक्तेर्बहुलमुपलम्भेन जिज्ञासापदस्यैवादौ प्रयोगसंभवाच्च । न चैवमप्योङ्कारस्यैव मङ्गलार्थत्वमस्तु तावतैतत्करणनिबन्धनयोः सिद्धेरिति वाच्यम् । विघ्नप्राचुर्यशङ्काया प्रचुरमङ्गलस्यैव कर्तव्यत्वात् । न चैवमतःशब्दादेरपि देवतास्मारकत्वेन मङ्गलार्थत्वापत्तिरिति वाच्यम् । सूत्रकृतः स्वतो निर्विघ्नत्वात् । शिष्यशिक्षायाश्च द्वयोरेव मङ्गलार्थत्वेनापि संभवात् । न चैवं भारतादेरपि

ओङ्काराथशब्दपूर्वकत्वापत्तिः। सूत्रेऽल्पाक्षरत्वेन सङ्क्षेपतस्तत्सूचनेऽप्यन्यत्र वैशद्येनैव तदाचरणोपपत्तेः। **अनेनेति**। तत्र तारेत्यादिमूलेनेत्यर्थः। **विवृतमिति**। अथशब्दस्योङ्कारोपलक्षणतायाः प्रथमार्थशब्दस्य प्रयोजनपरताया द्वितीयार्थशब्दस्याभिधेयपरतायाश्च सूचनेन भावोक्तेरिति भावः।

**गूढ०**— ननु ओङ्काराथशब्दयोरवयवत्वाङ्गत्वकथनमयुक्तम्। अवयवत्वे हि एकवाक्यत्वं वक्तव्यम्। अङ्गत्वे च तदभावः। तयोश्च परस्परयोर्विरुद्धत्वादित्यत आह **एतदुक्तं भवतीति**। शङ्खध्वन्यादेरिव माङ्गलिकत्ववदनयोरपि श्रुतित उच्चारणेन माङ्गलिकत्वमित्यर्थः। मूलत्वग्रहणस्य प्रयोजनमाह **ताराथावितीति**। तत्र किं लिङ्गं सूत्रसूचितमत आह **यदिति**। **ज्ञापकतया** तदर्थान्वितार्थप्रतिपादकतया। **कारकतया** तत्प्रतिबन्धकविघ्ननिरासकतया। **न चैतदिति**। आदौ प्रयोगकरणमित्यर्थः। तथाच मूलत्वमित्यनेन सूत्रकाराङ्गीकारलिङ्गसूचनमयुक्तमिति भावः। नन्वनेकेषामुन्मत्तानामिवैषामपि प्रवृत्तिः किं न स्यादत आह **न चेति**। तेषां चाप्रेक्षावत्त्वादिति भावः। नन्वथशब्दो मङ्गलार्थ इति भाष्ये अथशब्दस्य मङ्गलप्रतिपादकत्वमुक्तम्। तत्फलकत्वे च भाष्यविरोध इत्यत आह **अनेनेति**। श्रुतित इति वचनेनेत्यर्थः।

**प्रदीपः**— **प्रथमसूत्र इति**। मीमांसानुग्राह्यप्रमाणप्रतिपादनद्वारा ओङ्कारस्य विषयदार्ढ्यार्थत्वादधिकार्यादिप्रतिपादनायोपात्तावोङ्काराथशब्दावित्युक्तम् **यत्पर्यायान्तरमिति**। यद्योङ्काराथशब्दयोः मङ्गलमेव प्रयोजनं स्यात् विस्पष्टार्थं मङ्गलशब्दमेव प्रयुञ्जीत। यदि चानन्तर्यमेवार्थः स्यात् तदा तथैव शब्दान्तरं प्रयुञ्जीत। साधारणशब्दप्रयोगेणेदं ज्ञायते। कारकत्वेन प्रथमसूत्रावयवत्वं माङ्गल्यद्योतकतया शास्त्रोपयोगित्वमिति क्रमव्यत्यासेन चेदमवगम्यते। अथशब्दस्य सूत्रसन्निकर्षात्तत्रास्यैव ज्ञापकत्वेन शास्त्रोपयोगित्वमोङ्कारस्य प्रतिसूत्रमुच्चारितस्य कारकत्वेनेति आदावुपादाने च विवक्षितत्वमिति योज्यम्।

**९६ सु०— अत्र यत्परेषां दूषणं 'मङ्गलस्य वाक्यार्थे समन्वयाभावादि'ति। तथा हि। पदार्थ एव हि वाक्यार्थे समन्वीयते। स च वाच्यो वा लक्ष्यो वा। न चेह मङ्गलम् अथशब्दस्य वाच्यं लक्ष्यं वा। किन्तु मृदङ्गध्वनिवद् अथशब्दस्य कार्यम्। न च कार्यज्ञाप्ययोर्वाक्यार्थे समन्वयः शाब्दे व्यवहारे दृष्टः। अस्तु वा मङ्गलस्य पदार्थत्वम्। तथाऽपि न वाक्यार्थे समन्वयः। तथा हि। न तावत् मङ्गलं ब्रह्मजिज्ञासायाः कर्तृकर्मकरणभावेन वाक्यार्थे अन्वेति। कर्त्राद्यन्यतमभावे प्रमाणाभावात्। कारकान्तराणां विद्यमानत्वाच्च। नापि सामानाधिकरण्येन अन्वयः, जिज्ञासा मङ्गलमिति प्रशंसापरतया अर्थवादत्वप्रसङ्गात् इति॥ तदेतेनापास्तं भवति। अस्माभिरपि आनन्तर्याभिधेयः अथशब्दः श्रुत्या मङ्गलप्रयोजन(क) इत्यङ्गीकारात्।**





**परि०— अत्रेति** । अथपदस्य मङ्गलार्थत्व इत्यर्थः । **परेषां** मायिनाम् । परभाष्यवाक्यमाह **मङ्गलस्येति** । कथं समन्वयाभाव इत्यतो वाचस्पत्युक्तव्याख्यानप्रकारमाह **पदार्थ एवेति** ॥ **मृदङ्गध्वनिवदिति** । मृदङ्गध्वनेः यथा मङ्गलं फलं तथाऽथशब्दस्य फलमित्यर्थः ॥ **कार्यज्ञाप्ययो-रिति** । कार्यं फलम् । ज्ञाप्यं द्योत्यमुच्यते । परभाष्यवाक्यस्य विवरणोक्तमर्थमाह **अस्तु वेति** ॥ **कारकान्तराणामिति** । मुमुक्षुरूपकर्तृकारकस्य । ब्रह्मरूपकर्मकारकस्य । न्यायादिरूपकरणकारकस्य च भावादित्यर्थः । इति यत्परेषां दूषणमिति पूर्वेणान्वयः ॥ **तदेतेनेति** । यद्वाचस्पतिना मङ्गलस्याथ-पदार्थत्वं नेत्युपेत्य वाक्यार्थेऽनन्वयव्युत्पादनम् । यच्च विवरणकृता पदार्थत्वमुपेत्य वैयधिकरण्येन वा सामानाधिकरण्येन वाऽनन्वयव्युत्पादनं कृतं तदुभयं ताराथमूलत्वमिति कथनेन निरस्तमित्यर्थः । तद्व्यनक्ति **अस्माभिरिति** । अथशब्देन मङ्गलस्याप्रतीतेरानन्तर्यमुखेनाधिकार्याद्यसूचनापातात् । तस्मा-न्माङ्गलिकावुभाविति स्मृतेश्च मङ्गलप्रयोजनकत्वमेव न वाचकत्वमिति भावः । **श्रुत्या** श्रवणेनेत्यर्थः ।

**यादु०— अत्रेति** । यथाश्रुतभाष्य इत्यर्थः ॥ **वाच्यं लक्ष्यं वेति** । वाक्यार्थेऽसमन्वयादिति भावः ॥ **न च कार्यज्ञाप्ययोरिति** । 'ज्ञाप्यम्' इह 'अर्थात् ज्ञाप्यमे'व विवक्षितम् । एवं च यथा अर्थज्ञाप्यस्य न वाक्यार्थे समन्वयः, तथा कार्यस्याऽपीति दृष्टान्तार्थं ज्ञाप्यग्रहणमिति द्रष्टव्यम् ॥ ननु 'मङ्गलमथशब्दार्थो न भवती'त्यत्र 'वाक्यार्थे समन्वयाभावो' हेतुतयोपात्तः । तत्र च 'पदार्थ एव हि वाक्यार्थे समन्वीयत' इत्यादिना अथशब्दार्थत्वाभावस्यैव हेतुतयोक्तत्वादन्योन्याश्रय इत्यरुचेराह **अस्तु वेति** । मङ्गलं जिज्ञासायां, किं कर्त्रादिभावेन वैयधिकरण्येनान्वेत्युत, 'जिज्ञासा मङ्गलमि'ति सामानाधिकरण्येनेति विकल्पं मनसि निधायाद्यं तावद् दूषयति **न तावन्मङ्गलमिति** ॥ **कर्त्राद्यन्यतमेति** । मङ्गलस्येति शेषः ॥ **कारकान्तराणामिति** । मङ्गलापेक्षयाऽन्येषामेव कर्तृकर्मकरणरूपानां कारकान्तराणां जिज्ञासायां सत्त्वादित्यर्थः । अधिकारिजीवस्यैव कर्तृत्वात् साक्षाद्वेदानामुद्देश्यफलसंबन्धितया च ब्रह्मणः कर्मत्वात्, युक्तीनामेव करणत्वात् इति भावः ॥ **अस्माभिरपीति** । तथाच कार्यस्य वाक्यार्थे समन्वया-भावोपपादनम् अस्माकमिष्टमेवेति भावः ।

**वं०प०— मङ्गलस्येति** । 'अथशब्दस्य मङ्गलवाचकत्वे' इति शेषः ॥ **वाच्य इति** । 'गङ्गायां मत्स्य' इत्यादावित्यर्थः ॥ **लक्ष्यो वेति** । 'गङ्गायां घोष' इत्यादावित्यर्थः ॥ **कार्यज्ञाप्ययोरिति** । 'घटमानये'त्यादौ घटकार्यस्य जलाहरणादेः 'दिवाऽभुञ्जानः पीन' इत्यादावर्थाज्ज्ञाप्यस्य रात्रिभोजनादेः वाक्यार्थे समन्वयो न दृष्ट इत्यर्थः ॥ **कारकान्तराणामिति** । ब्रह्मजिज्ञासायामधिकारिणः कर्तृत्वात् वेदानां करणत्वात् ब्रह्मणः कर्मत्वादित्यर्थः ॥ **अर्थवादत्वेति** । विधिवाक्ये सति तद्बोध्यार्थे प्रशंसापरत्वेनार्थवादानां सार्थक्यस्य 'वायव्यं श्वेतमालभेत', 'वायुर्वै क्षेपिष्ठा देवता' इत्यादौ दर्शनात् प्रकृते च 'जिज्ञासा कर्तव्ये'ति विधेरभावेन, केवलार्थवादस्यानुपयुक्तत्वेनादौ तत्कथनस्यासङ्गतत्वादिति भावः ॥ **श्रुतेति** । श्रवणमात्र इत्यर्थः ॥

**आनन्दः**— अथशब्दस्य श्रुत्या माङ्गलिकत्वोक्त्या परेषां दूषणमपि निराकृतमित्याशयेन **परेषां दूषणमाह अत्रेति । न चेति** । तथाच संसर्गरूपवाक्यार्थे कार्यज्ञाप्ययोर्नान्वयः किन्तु ज्ञाप्यस्यैवेति भावः । एवं हि वैयधिकरण्येन वाऽन्वयः सामानाधिकरण्येन वा । नाद्य इत्याह **न तावदिति** । अन्यथाऽनुपपत्त्या कर्त्रादित्वमेवाश्रीयत इत्यत आह **कारकान्तराणामिति** । द्वितीयं प्रत्याह **नापीति** ।

**श्रीनिधि०— कार्यज्ञाप्ययोरिति** । ज्ञाप्येति दृष्टान्तार्थम् । ज्ञाप्यम् अनुमितं ध्वनितं वा ।

**वा०चं०**— 'मङ्गलस्ये'ति परभाष्यस्य भामत्यभिप्रेतमर्थमाह **पदार्थ एव हीति** । विवरणाभिप्रेतमर्थमाह **अस्तु वेति** । 'किमथशब्दस्य वैयधिकरण्येनान्वय उत सामानाधिकरण्येने'ति विकल्पं मनसि निधायाद्यं निराचष्टे **न तावदिति** । 'देवदत्तादिपदार्थानां कर्त्रादिभावेनान्वयव'त्तस्यान्वयवत्त्वे प्रमाणाभावादित्यर्थः । आकाङ्क्षाभावाच्च न कर्त्रादिरूपेणान्वय इत्याह **कारकान्तराणामिति** । कारकशब्देन मुमुक्षुतर्कादयः सङ्गृह्यन्ते ।। द्वितीयं दूषयति **नापीति** । न चार्थवादत्वमास्थेयं, सूत्रस्य वाक्यार्थनिर्णयापेक्षितन्यायसूचकत्वादित्यर्थः । **तदनेनेति** । यद्यप्यत्र 'अपदार्थत्वहेतौ समन्वयाभावे अपदार्थत्वस्य हेतुत्वेऽन्योन्याश्रय' इति भामतीमतदूषणं, '' 'सधूमो गिरिः साग्निक' इतिवत् 'ईक्षतेर्नाशब्दमि'त्यत्र त्वत्पक्षे 'अशब्दमि'तिवच्च 'मङ्गलत्वात्कर्तव्ये'त्यन्वयोपपत्तेर्नान्वयदोष'' इति विवरणमतदूषणं चन्द्रिकोक्तरीत्या संभवति । तथाऽपि यथाश्रुतभाष्यस्योपरि प्रसक्तदूषणस्य 'तत्र तारे'ति विवरणेन स्वाभिप्रेतमङ्गलार्थत्वे दूषणप्रसक्तेरभावलाभेन, तावतैव दूषणासङ्गतिसिद्धौ किं तत्साधुत्वासाधुत्वचिन्तयेति मूलमेव परभाष्यदूषणे व्यापारयतो भावोऽनुसन्धेयः ।

**वा०र०**— विवरणस्य यथा प्रतीतभाष्यार्थेऽनुपपत्तिसापेक्षत्वात् तज्जिज्ञासायां परभाष्योक्तानुपपत्तिरेवात्र मूलमित्याह **अत्र यत्परेषां दूषणमिति** मूलम् । यद्यपि नेदं भाष्योपरि प्रवृत्तम् । तथापि मङ्गलानन्तरेत्यभिधानानुसारेण प्राप्तमङ्गलार्थत्वस्य स्वग्रन्थे परेणैव निराकरणात् तन्निराकरणस्य च समानन्यायतया भाष्योपर्यपि प्रसङ्गः इत्याशयेनात्र यत् इत्युक्तम् । भाष्यापातप्रतिपन्नेऽर्थे इत्यर्थः । परशब्दः सङ्करपरः । **न चेह मङ्गलमिति** मूलम् । संसर्गरूपवाक्यार्थे कार्यज्ञाप्ययोर्न निरूपकतयाऽन्वयः । किन्तु ज्ञाप्ययोरेव तथाऽन्वय इत्यर्थः । **विवरणाभिप्रेतमिति** । परभाष्येति वर्तते । भाष्यविवरणाभिप्रेतार्थयोः संबन्धस्तु भाष्यव्याख्यानरूपमङ्गलस्य चार्थे समन्वयाभावात् इत्यादि पञ्चपादिकाद्वारको द्रष्टव्यः । **देवदत्तादीति** । देवदत्तः चक्षुषा घटं पश्यतीत्यत्र दर्शनरूपक्रियायां देवदत्तचक्षुर्घटानां कर्तृकरणकर्मत्वेनान्वयवदित्यर्थः । **अन्यतमभाव इति** मूलस्यान्यतमकारकत्वेत्यर्थः । **आकाङ्क्षाभावाच्चेति** । इदमत्राभिप्रेतम् । जिज्ञासायाः क्रियारूपत्वेन कर्त्रादिसापेक्षत्वात् कर्त्राद्यन्तरस्य चाभावात् जिज्ञासायाः किं कर्त्रादीत्याकाङ्क्षानिवृत्त्यन्यथानुपपत्त्या मङ्गलस्य कर्त्राद्यन्यतमत्वसिद्धेः कथं कर्त्रादिभावे प्रमाणाभाव इत्यपि न वाच्यम् । उक्ताकाङ्क्षायाः कर्त्राद्यन्तरैरेव निवृत्तत्वेन तदन्यथानुपपत्तेरेवाभावात् इति । कारकान्तराणां प्रतीतिः । प्रतीकोपादानपाठः । **कारकशब्देनेति** । कारकान्तरशब्दो हि । अन्यत् कारकं कारकान्तरमिति मङ्गलान्यकारकमाह । तथा च कारकान्तराणामित्यस्य मङ्गलातिरिक्तकारणमिति पर्यवसानात् ।





तत्रत्यकारकपदेन मुमुक्षुतर्कादयो गृह्यन्ते । एतेन कारकपदेन मुमुक्षुतर्कादिग्रहणे कारकान्तराणामित्यस्य मुमुक्षुतर्कान्तराणामित्यर्थापत्तिरिति निरस्तम् । आदिपदेन न्यायग्रन्थनात्मकशास्त्रपरिग्रहः । तत्र मुमुक्षुकर्तृत्वेन तर्कशब्दोदितपदार्थनिर्णायकन्यायस्तु तदनुसन्धानरूपजिज्ञासां प्रति कर्मत्वेन तदनुसन्धानकारणीभूतं न्यायग्रथनात्मकं शास्त्रं च कारणत्वेन सङ्गृह्यतेत्यर्थः । तत्त्वदीपने जीवः कर्त्रान्वितैकाग्र्यसहकृतं वेदान्तवाक्यं करणमित्यादीनि कारकान्तराणीत्युक्तम् । इष्टापत्तिमाशङ्क्य निराकरोति **न चेति** । **आस्थेयम्** आस्थातुं युक्तमित्यर्थः । सूचकत्वादिति भावः । इति पाठः । सूचकत्वादित्यनन्तरं तदनुपपत्तेरिति पूरणीयम् । **अन्योन्याश्रय इति** । भाष्ये हि मङ्गलस्य अपदार्थत्वहेतुत्वेन वाक्यार्थे समन्वयाभावोऽभिहितः । भामत्यां तु अपदार्थत्वहेतुत्वेनोपन्यस्तसमन्वयाभावे पदार्थ एव हीत्यादिनाऽपदार्थत्वं हेतुत्वेनोपन्यस्तम् । तथा चापदार्थत्वसिद्धौ वाक्यार्थे समन्वयाभावसिद्धिः तत्सिद्धौ च तेनापदार्थत्वसिद्धिः इत्यन्योन्याश्रय इत्यर्थः । अत्र किञ्चित् अधिकं चन्द्रिकाटीकायां द्रष्टव्यम् । **सधूम इति** । सधूमत्वादित्यर्थः । अत्र सर्वसंमतत्वादित्यर्थः । एवं सत्यपि सामानाधिकरण्ये एकस्यापरं प्रति हेतुतयाऽन्वयसद्भावे सर्वसंप्रतिपन्नं दृष्टान्तमभिधाय परमात्रसंप्रतिपन्नं दृष्टान्तमप्याह **त्वत्पक्षे इति** । प्रधानं न जगत्कारणं अशब्दं हि तत् सामानाधिकरण्येनान्वयमभ्युपेत्याशब्दत्वादिति हेतुतया अन्वयस्य परेणाभ्युपगमादिति भावः । **अन्वयोपपत्तेरिति** । अथशब्दार्थमङ्गलस्य जिज्ञासाकर्तव्यत्वेनान्वयोपपत्तेरित्यर्थः । तथा च वाक्यार्थे समन्वयाभावरूपस्यापदार्थत्वरूपहेतोः भाष्योक्तस्यासिद्धिरित्युक्तं भवति । **यथाश्रुतेति** । अथशब्दो मङ्गलार्थ इति भाष्यस्येत्यर्थः । भाष्यस्योपरीति षष्ठी तु तदुपर्यपि बादरायणः इत्यत्रोक्तटीकाप्रकारेणोपपाद्या । भाष्योपरीत्येव मूलकोशः, दूषणस्येत्यस्य विवरणेनाभावलाभेनेति संबन्धः । कथं लाभः इत्यत उक्तं स्वाभिप्रेते मङ्गलार्थत्वे दूषणाप्रसक्तेरिति । मङ्गलप्रयोजनकत्वरूपमङ्गलार्थत्वस्य भाष्याभिप्रेततया तत्रोक्तदूषणस्य प्रसक्तेरेव भावसूचनादित्यर्थः । अत्र **दूषणाप्रसक्तेरिति** नञ्युक्तः पाठः । **विवरणेनेति** । श्रुत्या मङ्गलप्रयोजकाविति विवरणेनेत्यर्थः । ताराथमूलत्वमित्यन्तेन कृतत्वादित्याशयः । **स्वाभिप्रेते** मङ्गलार्थत्वे । भाष्योक्तमङ्गलार्थत्वे मङ्गलप्रयोजनकत्वरूपेण स्थिते सति तत्र दूषणेति योज्यम् । **किं तत्साधुत्वेति** । **इति** इत्यस्य भाव इत्यन्तेनान्वयः । एतेन चन्द्रिकायां उक्तव्याख्यानद्वयदूषणं सत्यपि अनुव्याख्यानोक्तपरिहारेऽभ्युच्चयेन कृतमिति सूचितम् । अनेनापास्तमित्युक्तमेव विशदयति मूले **अस्माभिरपीत्यादि** ।

**कुण्डल०**— विवरणेन ज्ञापितं प्रयोजनमाह **अत्रेति** । अथशब्दो मङ्गलार्थ इति भाष्यविषय इत्यर्थः । **कार्यज्ञाप्ययोरिति** । शब्दकार्यस्यार्थादज्ञाप्यस्य चेत्यर्थः । **कर्त्रादीति** । कर्त्राद्यन्यतम इत्यर्थः ।

**विठ्ठ०**— **न च कार्यज्ञाप्ययोरिति** । अत्रापथ्याचरणं कुर्वाणं पुत्रं प्रत्युदितस्य म्रियस्वेति वचनस्यार्थात् ज्ञाप्यं अपथ्याचरणस्य अकर्तव्यत्वं तादृशमेवात्र ज्ञाप्यपदेन विवक्षितं तथा चार्थिकार्थस्य ज्ञाप्यस्य यथा न वाक्यार्थे समन्वयः तथा मृदङ्गध्वन्यादिश्रवणमात्रेण जन्यस्य मङ्गलस्य न वाक्यार्थेऽन्वय इति । दृष्टान्तार्थं ज्ञाप्यग्रहणमिति द्रष्टव्यम् । देवदत्त गामानयेत्यादौ यथा देवदत्त गवादिकं कर्तृत्वेन कर्मत्वेन करणत्वादिना चान्वेति तथा मङ्गलं





कर्त्रादिभावे नान्वेति सामानाधिकरण्ये न वेति विकल्पं मनसि निधायाद्यं दूषयति **न तावदिति** । अन्यतमभावे अन्यतमसत्त्वे मङ्गलस्येति शेषः । **कारकान्तराणामिति** । मङ्गलापेक्षया अन्येषां जीवेश्वरयुक्तिरूपकर्तृकर्मकरणरूप-कारकान्तराणां जिज्ञासायाः विद्यमानत्वादित्यर्थः । द्वितीयं दूषयति **नापीति** । जिज्ञासा मङ्गलमिति सामानाधि-करण्येन सूत्रवाक्यार्थे मङ्गलमन्वेतीत्यर्थः । न चार्थवादत्वमुपपन्नं तथा सति सूत्रस्यान्यसूत्रवत् सूत्रत्वाभावप्रसङ्गात् । **अस्माभिरपीति** । अथशब्दाभिधेयस्यानन्तर्यस्यैव वाक्यार्थे समन्वयो न तु तत्कार्यस्य मङ्गलस्य अतस्तस्य वाक्यार्थे समन्वयाभावोपपादनं युक्तमिति भावः ।

**चषकः**— परभाष्यं दुदूषयिषुरनुवदति **अत्रेति** ॥ भामतीदिशा तत्तात्पर्यं व्यनक्ति **पदार्थ एव हीति** । पदजनितोपस्थितिविषय इत्यर्थः । अत्र पक्षीकृतमङ्गले, संसृष्टसंसर्गान्यतरलक्षणवाक्यार्थानुयोगिकभेदाभेदान्यतर-संसर्गलक्षणसमन्वयाभावेन हेतुना, अथपदनिरूपितशक्तिलक्षणान्यतररूपवृत्तिविषयत्वात्मकाथपदार्थत्वाभावसाधने, हेतोः स्वरूपासिद्धिशङ्कानिरसनाय, तादृशपदार्थत्वाभावेन तादृशसमन्वयाभावस्य साधनीयतापत्त्या अन्योन्याश्रय इत्यरुचिं प्रतिसन्दधान आह **अस्तु वेति** । जिज्ञासायां मङ्गलं स्वनिष्ठकर्तृत्वकर्मत्वकरणत्वान्यतम-निरूपकतालक्षणभेदसंसर्गेण, अभेदसंसर्गेण वान्वेतीति कल्पद्वयीं प्रतिसन्दधान आद्यं प्रतिविधत्ते **न तावदिति** ॥ निराकरिष्यमाणकल्पान्तरावधिकप्राथम्यद्योतनार्थः तावच्छब्दः ॥ मङ्गलस्येति पूरणीयम् ॥ **कारकान्तराणामिति** । जिज्ञासायाः विशिष्टाधिकारिकर्तृकतया, ब्रह्मकर्मकतया, न्यायकरणकतया च मङ्गले तन्निरूपिततदन्यतमा-भावादित्यर्थः ॥ **अस्माभिरपीति** । 'अथशब्दो मङ्गलार्थ' इत्यादिभाष्याक्षरतात्पर्यमप्रतिसन्दधानानामेवेयमाशङ्का । आद्यार्थपदस्य फलतात्पर्यकत्वादुत्तरस्य च प्रतिपाद्यतात्पर्यकत्वात् कार्यज्ञाप्ययोरन्वयस्यास्माकमनभिधित्सित-त्वेनैव तदीयदूषणासङ्गत्यमसैत्सीदिति तत्साधुत्वासाधुत्वे नाचिचिन्तत् । चन्द्रिकाकृतस्तु तदुक्तिमप्यसहमाना भामतीमते अन्योन्याश्रयरूपं, विवरणमते च हेतुमद्भावेनान्वयलक्षणं दूषणं व्यवीभवन् ॥

**काशी०**— **अत्रेति** । अथशब्दो मङ्गलार्थ इति भाष्येऽर्थशब्दस्याभिधेयार्थत्वं मत्वा मायिनां मङ्गलस्य च वाक्यार्थे समन्वयाभावादिति परभाष्येण यद्दूषणं तदनेनापास्तमित्यन्वयः । वाक्यार्थे समन्वयाभावरूपहेत्वसिद्धि-परिहाराय भामत्युक्तं तद्भाष्याभिप्रायमनुवदति **तथा हीति** । पदार्थः शक्तिलक्षणान्यतरवृत्त्या पदोपस्थाप्यः । **वाक्यार्थे** वाक्यबोध्यार्थे । **समन्वीयते** घटको भवति । पदार्थत्वं वाक्यार्थघटकत्वव्यापकमिति यावत् । मङ्गले च व्याप्याभावसिद्ध्यर्थं व्यापकाभावमुपपादयति **स चेति** । पदार्थश्च वाच्यलक्ष्यभेदेन द्विविध एवेत्यर्थः । **न चेति** । तथा च मङ्गले विशेषाभावकूटेन पदार्थत्वसामान्याभावसिद्धिरिति भावः । ननु मङ्गलस्याथशब्दार्थत्वाभावे तेन तत्प्रतीतिर्न स्यादत आह **किन्त्विति** । **कार्यमिति** । तत्कार्यत्वादेव ततः प्रतीतिरिति भावः । कार्यस्यापि पदार्थत्वे बाधकसूचनाय मृदङ्गध्वनिवदित्युक्तम् । तथात्वे मृदङ्गध्वनेरपि स्वकार्यशुभार्थज्ञानरूपमङ्गलवाचकत्वादिप्रसङ्ग इति भावः । नन्वपदार्थस्यापि कार्यस्य वाक्यार्थघटकत्वे बाधकाभावादपदार्थत्वहेतुरप्रयोजक इत्यत आह **न चेति** । **ज्ञाप्येति** ।





कार्यातिरिक्तज्ञाप्यमात्रेत्यर्थः । यथा वाक्योच्चारणकारणकण्ठताल्वादेर्वाक्यस्मारितस्यापि न वाक्यार्थघटकत्वं तथा तत्कार्यस्यापीत्यनुभवसिद्धमतः पदार्थस्यैव वाक्यार्थघटकत्वे प्रयोजकत्वान्नोक्तहेतोरप्रयोजकत्वमिति भावः । नन्वपदार्थत्वमसिद्धम् । मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथेत्यादिकोशेन मङ्गलस्याथशब्दशक्यत्वसिद्धिः । यदि च शुभसामान्ये शक्तेः कोशसिद्धत्वेऽपि देवतास्मृतित्वादिरूपविशेषधर्मेण न तच्छक्यतेत्युच्यते । तथाऽपि लक्षणया तस्य तच्छब्दार्थत्वं दुर्वारमित्याशङ्क्य विवरणोक्तं तद्भाष्याभिप्रायमनुवदति **अस्तु वेति** । यादुपते तु मङ्गलस्य वाक्यार्थे समन्वयाभावोऽपदार्थत्वे हेतुरुक्तः । तत्र समन्वयाभावेऽपदार्थत्वस्यैव हेतुत्वेऽन्योन्याश्रय इति चन्द्रिकोक्तदोषेण कल्पान्तरमवतारितम् । तत्र यद्यप्यस्तु वा मङ्गलस्य पदार्थत्वमित्यपदार्थत्वहेत्वसिद्ध्यभ्युपगमोऽसङ्गतः । तस्या अनाशङ्कितत्वादिति न शङ्कनीयम् । अन्योन्याश्रयेणोभयोरप्यसिद्धिशङ्कायां तत्रापदार्थत्वासिद्धिमभ्युपेत्यासमन्वये हेत्वन्तराभिधानमिति तदाशयात् । नन्वेतत्कल्पे वाक्यार्थे समन्वयाभावादित्यस्य साध्यालाभः । पदार्थत्वस्याभ्युपगतत्वेन तदभावस्य साध्यत्वायोगादिति चेन्न । अथशब्दविवक्षितार्थत्वाभावस्यैव साध्यत्वात् । मङ्गलस्याथशब्दवाच्यत्वेऽप्यारम्भादेरिवाविवक्षितत्वसंभवात् । अन्यथाऽऽरम्भादौ व्यभिचारप्रसङ्गात् । न चैवं पूर्वकल्पेऽप्यपदार्थत्वेन समन्वयाभावस्य तेन च विवक्षितार्थत्वाभावस्य साधनेऽन्योन्याश्रयाभावाच्चन्द्रिकाद्यसङ्गतिरिति वाच्यम् । मङ्गलस्यापदार्थत्वे तत एवाविवक्षितार्थत्वसिद्धेर्हेत्वन्तरोक्त्यनौचित्याऽपदार्थत्वमेव समन्वयाभावेन साधनीयम् । तथा चान्योन्याश्रय इत्याशयात् । वाक्यार्थे समन्वयसामान्याभावसिद्ध्यर्थं तद्विशेषाभावकूटमुपपादयति । **तथा हीति** । **तत्र** समन्वयमध्ये । **प्रमाणाभावादिति** । शान्तो दान्त इत्यादौ मङ्गलस्यानिर्देशादिति भावः । अन्येषां कर्तृत्वाद्यसंभवान्मङ्गलस्यैव तत्कल्प्यत इत्याशङ्कां निराह **कारकान्तराणामिति** । मङ्गलान्यस्य कर्तुर्मुमुक्षोः कर्मणो ब्रह्मणः करणानां च न्यायानां प्रमितत्वादित्यर्थः । **सामानाधिकरण्येनेति** । अभेदेनेत्यर्थः । **प्रशंसापरतया** प्राशस्त्यबोधपरतया । **अर्थवादत्वप्रसङ्गात्** सिद्धार्थत्वप्रसङ्गात् । तथा चार्थवादस्य विधेयार्थप्राशस्त्यबोधनेनैवार्थवत्त्वात् । प्रकृते च विध्यभावात्सूत्रानर्थक्यम् । न च सूत्रे कर्तव्यपदाध्याहारान्नार्थवादत्वादिप्रसङ्ग इति वाच्यम् । तथा सत्यव्यावर्तकत्वेन मङ्गलत्वरूपजिज्ञासाविशेषणवैयर्थ्यादिति भावः । **तदिति** । अथशब्दो मङ्गलार्थ इति भाष्ये यद्दूषणं तदित्यर्थः । अनेन तत्र ताराथमूलत्वमित्यनुव्याख्यानेन । **अपास्तं** भाष्यार्थपरिज्ञानमूलकत्वेनालग्नकतां प्रापितम् । तदेव स्पष्टयति **अस्माभिरपीति** । मङ्गलार्थ इत्यत्रार्थशब्दस्य प्रयोजनार्थत्वादिति भावः । इत्यङ्गीकृतत्वादित्यनेनैतावदेव परानुमतमुपेयते न तु वाक्यार्थे समन्वयासंभवादियुक्तिरयुक्तत्वादिति सूचितम् । तच्च चन्द्रिकातद्व्याख्ययोर्व्यक्तम् ।

**गूढ०**— अथशब्दस्य श्रुत्या माङ्गलिकत्वोक्त्या परेषां दूषणमपि निराकृतमित्याशयेन परेषां दूषणमाह **अत्रेति** । **न चेति** । तथाच संसर्गरूपवाक्यार्थे कार्यज्ञाप्ययोर्नान्वयः । किन्तु ज्ञाप्यस्यैवेति भावः । एवं हि वैयधिकरण्येनान्वयः समानाधिकरण्येन वा । नाद्य इत्याह **न तावदिति** । अन्यथानुपपत्त्या कर्त्रादित्वमेवाश्रीयत इत्यत आह **कारकान्तराणामिति** । द्वितीयं प्रत्याह **नापीति** ।

॥ ओङ्कारस्य असंहिततया निर्देशो निमित्तम् ॥

९७ **सु०—** ननु अत्र सूत्रादावोङ्कार एव न विद्यते। तत्कथमुच्यते 'ताराथमूलत्वम्' इति। यद्यपि शिष्टैरध्येतृभिः उच्चार्यमाणः अध्यक्षसिद्धः तथाऽपि नायं सूत्रावयवः। लक्षणान्तराभावे सत्यसंहिततया संपाठे अखिलैः पठ्यमानत्वात्। वेदाध्ययनोपक्रमे अध्येतृभिरुच्चार्यमाणोङ्कारवत्। अन्यथा अथशब्दवत् संहिततया निर्दिश्येत॥ न च दृष्टान्तः साध्यविकलः। अध्ययनोपक्रमविरतिवैचित्र्येण तत्तत्स्थानपरित्यागेन अन्यान्यस्थाने अखिलैः पठ्यमानस्य वेदवाक्यानवयवतायाः सुप्रसिद्धत्वात्। अन्यथा अध्ययनोपक्रमविरतिवैचित्र्येऽपि 'ओमिति ब्रह्म' इत्यादिवन्नियतस्थानतया पाठप्रसङ्गात्। पक्षसपक्षयोरादावुच्चारणं तु प्राङ्मुखत्वादिवत् अध्ययननियमान्तर्गतमध्येतृभिरनुष्ठीयत इत्यस्तु॥ एवं च 'अयमोङ्कारः सूत्रकृता मङ्गलार्थतया सूत्रादावुपनिबद्ध' इत्यनुपपन्नमित्यत आह **सर्वत्र इति**।

## अनु०— सर्वत्रानुगतत्वेन पृथगोंक्रियतेऽखिलैः॥

**अखिलैः** सूत्रपाठकैः यत् **पृथग्** असंहिततया **ॐक्रियते** तत् **सर्वत्र** सूत्रेषु **अनुगतत्वेन** अभिलषितेन निमित्तेन उपपद्यते।

**परि०—** उत्तरार्धमवतारयति **नन्वित्यादिना**॥ **अध्येतृभिरिति**। ब्रह्मसूत्राणामिति योज्यम्॥ **सूत्रावयव इति**। सूत्रेऽन्वयप्रतियोगिसमर्पको नेति साध्यार्थः। **संपाठ इति**। संहिताध्ययन इत्यर्थः। अथादिपदे व्यभिचारवारणायोक्तम् **असंहिततयेति**। असंश्लिष्टतयेत्यर्थः। 'परः सन्निकर्षस्संहिता' इति पाणिन्युक्तेः। 'हरी इहोपवक्षतः'। 'इन्द्रवायू इमे सुताः'। 'उभे अहनी सुदिने विवस्वतः'। 'अः इति ब्रह्म'। 'तमेवैकं जानथ आत्मानमि'त्यादौ हरी इहेत्यादिशब्देषु सामान्यतः प्रवृत्तव्याप्तेरव्यभिचाराय सत्यन्तम्। 'ईदूदेद् द्विवचनं प्रगृह्यम्'। विवृतावविसर्गः स्यात्। विश्लिष्टार्थे च विशिष्टमित्यादिलक्षणान्तराभावे सतीत्यर्थः। पदाध्ययनेऽसंहिततया पठ्यमानपदेष्वव्यभिचाराय **संपाठ इति**। य एवमुक्तहेतुयुक्तः स तदवयवो नेति सामान्यव्याप्तिमुपेत्याह **वेदेति**। विपक्षे हेतूच्छित्तिरूपबाधकतर्कमाह **अन्यथेति**। **अन्यान्यस्थान इति**। एतेन विमत ॐकारो न वेदवाक्यावयवः अन्यान्यस्थाने पठ्यमानत्वात् साम्नि स्तोभाक्षरवत्। व्यतिरेकेण वेदगतपदवदिति सूचितम्। विपक्षे बाधकमाह **अन्यथेति**। **ॐ इति ब्रह्मेतीति**। 'ॐ इति ब्रह्म, ॐ इतीदꣳसर्वं, ॐ इत्येतदनुकृति ह स्म





वा' इत्यादितैत्तिरीयोपनिषदीव ऋगादिशाखादावपि तत्र तत्रोङ्कारपाठप्रसङ्गादित्यर्थः । नन्वयमोङ्कारः सूत्रवेदयोरवयवो भवितुमर्हति । तदादावध्येतृभिर्नियमेन पठ्यमानत्वादथादिपदवदित्यवयवत्वेऽप्यस्ति मानमित्यतोऽस्य हेतोरन्यथोपपत्तिं सदृष्टान्तमाह **पक्षसपक्षयोरिति**। 'अथ स्वाध्यायविधिः प्राग्वोदग्वा ग्रामान्निष्क्रम्य अप आप्लुत्य शुचौ देशे यज्ञोपवीत्याचम्याक्लिन्नवाससा दर्भाणां महदुपस्तीर्य प्राक्कूलानां तेषु प्राङ्मुख उपविश्ये'त्याद्युक्त्वा 'अधीयेते'त्याम्नाता आश्वलायनसूत्रे । **ब्रह्मयज्ञेन** यक्ष्यमाण इत्यादिना तैत्तिरीयादौ चोक्तदिशा पूर्वाभिमुखत्वशुचिदेशस्थत्वशुचित्वादिर्यथा अध्ययनाङ्गत्वेनोच्यते तथोङ्कारो-ऽप्यस्तु न तु सूत्रावयवत्वेनेत्यर्थः । **मङ्गलार्थतया** मङ्गलप्रयोजनकत्वेनेत्यर्थः ॥ अभिलषितेनेति शेषोक्तिः । अभिमतेन इत्यर्थः । अनुगतत्वेनेति हेतौ तृतीयेत्युपेत्य **तदर्थमाह निमित्तेनेति** ॥

**यादु०— यद्यपि शिष्टैरध्येतृभिरिति**। अनेन 'ओङ्कारः सूत्रावयवः शिष्टैरध्येतृभिः तदादावुच्चार्यमाणत्वा-दथशब्दवदि'ति स्थापनानुमानमाशङ्क्य 'तथाऽपी'त्यादिना तस्य सत्प्रतिपक्षतोच्यत इति द्रष्टव्यम्। 'अध्यक्षसिद्ध' इति हेतुसिद्ध्यर्थमुक्तम् ॥ **लक्षणान्तराभावे सतीति**। असंहिताप्रापकसूत्रान्तराभावे सतीत्यर्थः ॥ 'सुध्युपास्य' इत्यादिवाक्यावयवे 'सुधी'त्यादिपदेऽखिलैः पठ्यमाने व्यभिचारवारणाय 'असंहिततये'त्युक्तम् ॥ 'कृष्ण एही'ति वाक्यावयवे 'कृष्णे'ति पदे व्यभिचारवारणाय 'लक्षणान्तराभावे' सति इति । तत्र हि 'प्लुतप्रगृह्या अची'ति सूत्रमेवासंहिताप्रापकमस्तीति भावः ॥ पदपाठकालेऽखिलैरसंहिततया पठ्यमानेषु पदेषु व्यभिचारवारणाय 'संपाठ' इति । संहितापाठकाल इत्यर्थः । संहितापाठकालेऽपि प्रामादिकेषु असंहिततया पठ्यमानपदेषु व्यभिचारवारणाय 'अखिलैरि'त्युक्तम् ॥ स्थापनानुमानस्यान्यथासिद्धिमपि आह **पक्षसपक्षयोरिति**।

**वं०प०— असंहिततयेति**। **संहिता** सन्निकर्षः, वर्णानामत्यन्तं सन्निधिः। यथोक्तम्— 'परः सन्निकर्षः संहिता' इति। तथाच ॐ अथात इति निर्देशः स्यादित्यर्थः॥

**आनन्दः**— ननु सर्वत्रेत्यत्र ओङ्कारस्यासंहिततया निर्देशे प्रयोजनमुच्यते । तदयुक्तम् । सूत्राक्षर-व्याख्यानानुपयोगादित्यतः तन्निवर्त्यां शङ्कां दर्शयति **नन्वत्रेति** । उन्मत्तैस्तदुच्चारणस्याक्रियमाणत्वादुक्तं **शिष्टै-रिति**। अध्येतृभिरित्युपलक्षणम्। अध्यापकैरित्यपि द्रष्टव्यम्। **नायं सूत्रावयव इति**। न समस्तशास्त्राङ्गमित्यपि द्रष्टव्यम् । अत्रावयवत्वं नाम तदेकवाक्यतयोच्चार्यमाणत्वम् । एकवाक्यत्वं हि वाक्यान्तःपातित्वम् । तच्च चतुर्थात्तदर्थपेक्षितार्थसमर्पकत्वेन वा हुंफडित्यादिवद्वीत्यादिपूरकत्वे संसमिद्युवसे इत्यादिवत्पादपूरकत्वेन वार्थ-वत्त्वेन वेति। तथाच तदभाव एव साध्य इति भावः। **लक्षणान्तराभावे सतीति**। अखिलैः पठ्यमानत्वादित्येवोक्ते अग्निमीळेपुरोहितमित्यादीनामखिलैः पठ्यमानत्वेऽप्यनवयवत्वाभावाद्व्यभिचार इत्यत उक्तम् **असंहिततयेति** । एवमपि पदकालेऽसंहिततया पाठे कर्तव्य इत्यर्थः। संहिततया पाठे कर्तव्येऽसंहिततया पठ्यमानत्वस्य तत्राभावान्न व्यभिचारः । तथापि 'सूर्यो अजायते'त्यादौ उक्तहेत्वसत्त्वेऽप्यनवयवत्वाभावादाह **लक्षणान्तराभावे सतीति** ।





तत्र तथा पाठः कर्तव्य इत्यत्र प्रकृत्यान्तःपादमव्यपर इत्यादि पाणिनिसूत्रादिरूपलक्षणान्तरस्यैव सत्त्वादित्यर्थः । ननूक्तहेतुसत्त्वेऽपि मास्त्वनवयवत्वमित्यप्रयोजको हेतुरित्यत आह **अन्यथेति** । नन्वध्ययनोपक्रमादावुच्चार्यमाणस्यास्त्येव तदवयवयत्वमित्याशङ्क्य निषेधति **न चेति** । **अन्यथेति** । अखिलैरन्योन्यस्थाने पठ्यमानत्वात् । अथशब्दवदस्यापि तदवयवत्व इत्यर्थः । ननु ओङ्कारः सूत्रावयवः उपक्रमे नियततया पठ्यमानत्वात् अथशब्दवदिति सत्प्रतिपक्ष इत्यत आह **पक्षसपक्षयोरिति** । आदिशब्देन समित्पाणित्वादिग्रहणम् । अनवयवत्वोपपादनफलमाह **एवं चेति** । नन्वखिलैरित्यस्य सर्वजनपरत्वं प्रतीयते तदयुक्तम् । पामरैस्तत्पठनस्याक्रियमाणत्वात् । पृथगित्यप्ययुक्तम् । भिन्नत्वमात्ररूपस्य तस्याक्षरमात्रे सत्त्वेन चोङ्कारे विशेषाभावात् । अनुगतत्वेनेत्यत्र करणे तृतीयेति प्रतीयते तदपि न युक्तम् । अखिलैः पृथगोङ्कारेणानुगतत्वस्य करणत्वाभावादित्यतो व्याचष्टे **अखिलैरिति** ।

**कं०रा०— लक्षणान्तराभावे सतीति** । एतच्च विशेषणं यो यत्रासंहिततया संपाठेऽखिलैः पठ्यमानो नासौ तदवयव इति सामान्यव्याप्तौ प्लुतप्रगृह्या अचीति लक्षणान्तरवशादसंहिततया पठ्यमानयोः प्लुतप्रगृह्ययोर्व्यभिचारवारणाय ऊह इत्यध्याहार इत्यर्थः । अध्याहारस्तर्क ऊह इति निघण्टुप्रसिद्धेरूहनमूह इति भावव्युत्पत्त्याश्रयणात् । तेन सौर्ये चरौ चोदकप्राप्तेऽग्नये जुष्टं निर्वपामीति मन्त्रे सूर्यायेत्यूह्यं प्रत्यग्नय इति पदस्येव प्रकृते स्थानिनोऽभावादूहशब्दानुपपत्तिरिति चोद्यं निरस्तम् । ऊहशब्दस्याध्याहारपरत्वेन नवमाध्यायव्युत्पादितोहपरत्वाभावात् । वाक्यात्पृथगिति वाक्यानवयव इत्यर्थः ।

**श्रीनिधि०— नन्वत्र सूत्रादाविति** । अत्र भाष्ये कथमुच्यत इत्यन्वयः । **असंहिततया पठ्यमानत्वं** हरी एतौ विष्णू इमौ गङ्गे अमू इत्यत्रास्ति अनवयवत्वरूपं साध्यं नास्तीति व्यभिचार इत्यत उक्तं **लक्षणान्तराभावे सतीति** । तत्र च ईदूदेद् द्विवचनं प्रगृह्यमिति प्रगृह्यसंज्ञायाम् प्लुतप्रगृह्या अचि नित्यम् इति सन्धिनिषेधकसूत्रमस्तीति भावः । तथापि दधि आनय इत्यत्र लक्षणान्तराभावे सति असंहिततया अखिलैः पठ्यमानत्वमस्ति साध्यम्, नास्ति इति व्यभिचार इत्यत उक्तम् **संपाठ इति** । परः सन्निकर्षः संहितेत्युक्तम् । संहितायामित्यर्थः । 'संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षत' इति वचनात् । एवं च दधि आनय इत्यत्र सन्धिविवक्षाभावेन विशिष्टाभावान्न व्यभिचारः । पक्षेऽपि सन्धिविवक्षाभावेन विशिष्टहेतोरसिद्धिरित्यतः सर्वैरित्युक्तम् । विवक्षाभावेऽपि येषां केषांचिदेव न तु सर्वेषामिति भावः । एवं च संपाठे लक्षणान्तराभावे सतीत्यस्य सन्धिविवक्षायां तन्निषेधसूत्रविशेषाभावे सतीत्यर्थः । अखिलैः पठ्यमानत्वादित्युक्ते संश्लिष्टतयोच्चार्यमाणे व्यभिचारः । अत्र असंहिततयेति श्लिष्टोच्चारणं विनेत्यर्थः । **विरतिः** विरामः । **उपक्रमवैचित्र्येण** विरतिवैचित्र्येणेति प्रत्येकं संबन्धः । **ॐ इति ब्रह्मेत्यादिवदिति** । आदिपदेन ॐ इत्येतदक्षरमुद्गीथमुपासीतेत्यादिर्गृह्यते । 'स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यत' इत्यत्र ब्रह्मपदेन वेदादिर्गृह्यते ।

**वा०चं०—** ननु 'तत्र ताराथमूलत्वमि'ति ताराथयोः प्रथमसूत्रावयवत्वे सर्वशास्त्राङ्गत्वे चोक्ते ओङ्कारस्यासंहिततया निर्देशगतिकथनपरोत्तरवाक्यसङ्गतिर्न प्रतीयत, इत्यतस्तत्सङ्गमयितुमुक्तेऽनुपपत्तिं शङ्कते





**नन्विति** । सूत्रानुपात्तस्य न तदेकदेशत्वमित्यर्थः ॥ ननु 'ओङ्कारः प्रथमसूत्रैकदेशः, सूत्रोच्चारणदशायां शिष्टैरध्येतृभिरुच्चार्यमाणत्वादथशब्दवत् । न चासिद्धो हेतुः । प्रथमसूत्रोच्चारणदशायां आदौ शिष्टानामोङ्कारोच्चारणस्य सर्वाध्यक्षसिद्धत्वादि'त्यनुमानमोङ्कारस्य सूत्रैकदेशत्वे प्रमाणमाशङ्कते **यद्यपीति** । अनुमानबाधेनैतन्निराकरोति **तथाऽपीति** । सामान्यव्याप्त्यभिप्राये यथास्थितसाध्यहेतौ वा संहितानिर्दिष्टस्यापि भ्रान्त्या केनचिदसंहिततया पठ्यमाने तद्वाक्यावयवे पदे व्यभिचारवारणायाविगानसूचकम् 'अखिलैरि'ति । पददशायां तथा पठ्यमाने तद्वारणाय 'संपाठ' इति । अथशब्दादौ तद्वारणाय 'असंहिततये'ति । 'सुकृतदुष्कृते एवे'त्यादौ तद्वारणाय 'लक्षणान्तराभावे सती'ति ॥ सामान्यव्याप्तेरेव संभवात्तत्र दृष्टान्तमाह **वेदेति** ॥ विपक्षे बाधकमाह **अन्यथेति** ॥ वेदाध्ययनोपक्रमेऽध्येतृभिरुच्चार्यमाणत्वादेवोङ्कारस्य तदवयवत्वमपीति दृष्टान्तः साध्यविकल इत्याशङ्कते **न चेति** ॥ 'अध्ययने'त्यारभ्य 'पठ्यमानस्ये'त्यन्तं हेतुगर्भं विशेषणम् । तथा च पठ्यमानतया वाक्यानवयवतायाः सुप्रसिद्धत्वादित्यर्थः ॥ पूर्ववद्विपक्षे हेतूच्छित्तिं बाधकमाह **अन्यथेति** ॥ स्वानुमानस्य सत्प्रतिपक्षवत्तां निराकर्तुमवयवत्वसाधकहेतोरन्यथासिद्धिमाह **पक्षसपक्षयोरिति** । प्राङ्मुखत्वादेरनवयवत्वेन निश्चितस्याप्यध्ययननियमान्तर्गततया आवश्यकत्ववदस्याप्यध्ययननियमान्तर्गततया अनुष्ठानोपपत्तेरन्यथासिद्धिरित्यर्थः ॥ लौकिकवाक्यप्रयोक्तृभिर्नैवोङ्क्रियत इत्यखिलैरित्यनुपपन्नमित्यत उक्तं 'सूत्रे'ति । 'अनुगतत्वेन' इति 'असंहिततया पाठे' निमित्तप्रदर्शनमित्यभिप्रेत्याह **निमित्तेनेति** ।

**वा०र०— मूलत्वमितीति** । इति पूर्ववाक्येनेत्यर्थः । **कथनपरेति** । कथनस्यासङ्गतत्वात् । तत्परं वाक्यं असङ्गतमित्यर्थः । तत्कथनव्यावृत्त्यशङ्कायाः उत्थाने बीजाभावेन तदनुत्थानादिति भावः । तत्सङ्गमयितुमित्यत्र तत्पदेनोत्तरवाक्यं परामृश्यते बुद्ध्या विवेकाश्रयणस्य बहुलमुपलम्भात् । अत्रादावित्यारभ्येतीत्यन्तस्य फलितार्थमाह **सूत्रानुपात्तस्येति** । सूत्रानुपात्तत्वात् इत्येवं हेतुगर्भमिदं विशेषणम् । शिष्टैरित्यत्र सूत्रोच्चारणदशायामिति पूरणेन हेतुप्रयोजकत्वमुपपादनीयमित्याशयेन स्वयं विशिष्टं हेतुमाह **सूत्रोच्चारणेति** । उच्चार्यमाणत्वोक्त्यैव पूर्तौ अध्यक्षसिद्धत्वमधिकं किमर्थमुक्तमित्यतः तत्प्रयोजनं शङ्कासमाधानाभ्यां दर्शयति **न चासिद्धो हेतुरित्यादिना** । सर्वाध्यक्षेत्यत्र यत्किञ्चिदध्यक्षसिद्धत्वस्य भ्रान्त्याऽप्युपपन्नत्वेनाप्रयोजकत्वमिति शङ्कावारणाय **सर्वेति** । अविगानसूचनम् । न सूत्रावयव इत्यादेः उत्तरवाक्यस्योक्तानुमाने प्रतिपक्षकथनपरत्वप्रतीतिनिरासाय तत्तात्पर्यमाह **अनुमानबाधेनेति** । मूले **न सूत्रावयवः** इत्यत्रायमित्येतत्समभिव्याहारेणैतत्सूत्रेति लाभात् नाथातः इति सूत्रावयव इति फलति । तेन यत्किञ्चित्सूत्रानवयवत्वसिद्ध्या **सिद्धसाधनतेति** निरस्तम् । व्याप्तिं तु टीकाकृदेव निरूपयिष्यतीति ज्ञेयम् । पूर्वहिताविव विशेषव्याप्तिस्तत्र विवक्षिता । किन्तु सामान्यव्याप्तिरेव तद्व्याप्तौ च व्यभिचारपरिहाराय विशेषणानामुपादानं युक्तम् । अथवा दृष्टान्ताभावेन विशेषव्याप्त्यभावेऽपि रूपादिषु पञ्चसु मध्येत्यादावेव एवकारादिप्रयोजनतया यथाश्रुतसाध्यसाधनमात्राश्रयणेन व्यभिचारादिप्रतिपादनवत् प्रकृतेऽपि विशेषव्याप्त्यभावेऽपि यथाश्रुतसाध्यसाधनमात्राश्रयणेन व्यभिचारादिप्रतिपादनं युक्तमित्याशयेन द्वेधापि विशेषणकृत्यकथनोपपत्तिं वदंश्च तत् कृत्यमाह **सामान्यव्याप्तीति** । **संहितानिर्दिष्टस्यापि इति** । अत्रापि सामान्य-





व्याप्तिपक्षे अग्निमीळे इत्यादिवाक्यावयवाग्निमित्यादिपदमिति योज्यम् । यथास्थितसाध्यसाधनपक्षे तु वृद्धिरादैच् इत्यादिसूत्रावयवे वृद्धिरित्यादिपद इति योज्यम् । एतत्सूत्रे फलिते तु अथशब्दाविति वक्ष्यमाणत्वात् अथशब्दादि-रुपपद इति योज्यम् । तद्वाक्येत्यस्य च तत्सूत्रेत्यप्यर्थः । सूत्रान्तराद्युपादायापि कृत्यं दर्शनीयमित्याशयेन पूर्व-स्थलद्वये तद्वाक्यावयव इत्येवोक्तं अथशब्दादावित्येवंजातीयकं च नोक्तम् । एवमुत्तरत्रापि अथशब्दादौ इत्यादिपदेन अग्निं, वृद्धिः इत्यादिपदानामपि ग्रहणम् । संहितानिर्दिष्टस्यापि भ्रान्त्येत्यस्यायमर्थः । निर्दिष्टस्यापि पदस्य विषयत्वं षष्ठ्यर्थः । **असंहितत्वभ्रान्त्येति** । साध्याभावप्रतिपादनाय तत् वाक्यावयव इत्युक्तम् । अखिलैरित्यनेन कथं परिहार इत्यत उक्तम् **अविगानेति** । अविरोधेत्यर्थः । भ्रान्तिस्थले च बाधकप्रत्ययविरोधस्यैव सत्त्वेनाविरोधसहितहेतोरभावः इति भावः । **तथा पठ्यमान इति** । असंहिततया पठ्यमान इत्यर्थः । **संपाठ इतीति** । संहिततया पाठकालेत्यर्थः । **सुकृतदुष्कृत एवेत्यादिपदे**नानारब्धकार्ये एवेत्यादेरिव चक्षोः सूर्यो अजायत इत्याद्यवयवसूर्य इत्यादेः न धातुलोपः आर्धधातुकः इत्यादिसूत्रावयवधातुलोपः इत्यादेश्च ग्रहणम् । इदं च सामान्यव्याप्तिपक्ष एव कृत्यकथनम् । **लक्षणान्तरेति** । असंहितताप्रापकसूत्रान्तराभावे सति इत्यर्थः । सुकृतदुष्कृतेत्यत्रानारब्धकार्ये एवेत्यत्र च ईदूदेद् द्विवचनं प्रगृह्यमित्यनेन एदन्तस्य प्रगृह्य भावप्रतिपादनात् सन्ध्यभावो लाक्षणिकः । तथा चक्षोः सूर्य इत्यादौ प्रकृत्यान्तःपादमव्यपरे इति सूत्रेण पादमध्ये प्रकृतिभावविधानात् सन्ध्यभावो लाक्षणिकः । एवमन्यत्रापि आकरोक्तं द्रष्टव्यम् । सामान्यव्याप्तौ दृष्टान्ताभिधाननिमित्तं वदन् उत्तरवाक्यमवतारयति **सामान्यव्याप्तेरेवेति** । सूत्रावयव-त्वाभाववति वेदवाक्यावयवपदे लक्षणान्तरे इत्युक्तहेत्वभावेन सति पक्षे तत्राप्रवेशरूपासाधारण्यापातात् तत्परिहाराय सूत्रपाठकाले प्रयुज्यमानत्वे सति इति विशेषणस्यावश्यकत्वात् विशिष्टसाध्यस्यापि अभावेन दृष्टान्तत्वायोगः इति ज्ञेयम् । **विपक्ष इति** । लक्षणान्तरे इत्येतत् हेतोरप्रयोजकत्वशङ्कानिरासायेति शेषः । साध्यवैकल्यशङ्कायाः निर्मूलत्वशङ्कावारणाय **वेदाध्ययनोपक्रम** इत्यादि मूलोक्तं मूलत्वेन व्यापारयन् अवतारयति **वेदाध्ययनेति** । **पूर्ववदिति** । पक्षीकृते ओङ्कारे सूत्रानवयवत्वसाधकलक्षणान्तरेति हेतोरप्रयोजकशङ्कावारणाय तद्धेतूच्छित्तिरूप-बाधकवत् दृष्टान्तीकृते ओङ्कारेऽपि सामान्यव्याप्त्याश्रयणेन प्राप्तस्य वेदवाक्यानवयवत्वरूपसाध्यस्य साधकतयोक्ता-ध्ययनोपक्रमेत्यादि पठ्यमानत्वादित्यन्तहेतोरपि अप्रयोजकत्वमिति शङ्कावारणाय तत् हेतूच्छित्तिरूपबाधमाहेत्यर्थः। **स्वानुमानस्येति** । सूत्रादावुच्चार्यमाणोङ्कारपक्षकानुमानस्य वेदाध्ययनोपक्रमे उच्चार्यमाणोङ्कारपक्षकानुमानस्य च इत्येवंविधस्वानुमानस्येत्यर्थः । **सत्प्रतिपक्षवत्तामिति** । विमतः ओङ्कारः सूत्रावयवः तदादौ उच्चार्यमाणत्वात् इति विमतोङ्कारः वेदवाक्यावयवः । तदध्ययनस्यादौ उच्चार्यमाणत्वात् इति च यथाक्रमं प्रतिपक्षौ ज्ञेयौ । **अन्यथासिद्ध-मिति** । अन्यथासिद्धिश्च व्याप्यत्वासिद्धिवत् अप्रयोजकत्वप्रभेदरूपा । अन्यथा प्रकारान्तरेण सिद्धिरिति विग्रहः । अन्यथासिद्धिस्तु युक्तिपादे अन्यथासिद्धेः प्रकारान्तरेण दोषतायाः वक्ष्यमाणत्वात् इत्युक्ता व्यर्थविशेषणत्वादिरूपा वैयर्थ्यमेकासिद्धौ चेत्यादि भक्तिपादीयानुव्याख्या मूलोक्ता भिन्नैव द्रष्टव्या । इयमपि असिद्धिप्रभेदभूतैव प्रकारान्तरेण संभवरूपाद्याऽन्यथासिद्धिस्तु सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकालाहेत्वाभासा इति प्रथमाध्यायसूत्र-संबन्धिवार्तिकवाचस्पत्यादौ सविस्तरमन्यथासिद्धिप्रभेदविचारानुसारेणान्यतररूपविकललिङ्गनिर्देशो हेत्वाभास इति । न हि अप्रयोजको हेत्वाभासेऽन्तर्भवतीत्याद्याशङ्क्यात्रोच्यते अप्रयोजकस्तावत् असिद्धभेद एव । व्याप्ततया हि





पक्षप्रतीतिः सिद्धिरित्युच्यते । तदभावोऽसिद्धिः । सा च व्याप्तिपक्षधर्मरूपाणां अन्यतमाप्रतीत्यापि संभवति अन्यथासिद्धिः आश्रयासिद्धिस्वरूपासिद्धिः इत्याख्यायते । अन्यथासिद्धोऽप्रयोजकश्चेति पर्यायाविति पञ्चमाध्याय-निबन्ध्योक्त्यनुसारेण यस्यानुकूलतर्कोऽस्तीत्येतत् तार्किकरक्षावरदराजीयाद्युक्तरीत्या चाप्रयोजकत्वपर्यवसन्ना ज्ञातव्या । 'वैषम्यं निर्घृणत्वं च ते न स्यातां परस्य च' इति ज्ञानपादीयानुव्याख्यानमूले अन्यथासिद्धिशङ्कानिरासार्थं विपक्षे बाधकमाहेति तट्टीकायां चाप्रयोजकशङ्केति चोक्तेश्च । 'एवमतोनुमा । कथं धर्मं । कृच्छ्रेण साधनादेव । न मुक्तवत् । द्रव्यमेव ततोऽनन्त' इत्याद्यनुव्याख्यानमूलटीकादावपि निःस्वेदत्वादिकम् औषधादिनापि संभवत् अन्यथासिद्धं चेत्यादेः उक्तेश्च । अधिकमेवं चाप्रयोजकोऽन्यथासिद्धो व्याप्यत्वासिद्धो वा वाक्यत्वादिहेतुरस्तीति तत्त्वनिर्णयटीकास्थवाक्ययोजनावसरे अस्माभिरुपपादितमस्ति । तत एव प्रतिपत्तव्यम् । एवमुत्तरत्रापि अन्यथा-सिद्धेः । प्रसङ्गो यत्र यत्र मूले वा टीकायां वास्ति तत्र तस्यादूषणत्वमुपपादनीयम् । पूर्वमपि तत्र तत्र किञ्चित् उपपा-दितमस्ति । यत्तु साङ्ख्याधिकरणमूले अन्यथासिद्धत्वात् अप्रयोजकत्वाच्चेति पृथक्वचनं तदनुमानदोषभूतान्यथा-सिद्धिव्याप्यत्वासिद्धिरूपा । प्रमाणमात्रदोषभूता च साधारणेति विशेषोऽप्यस्तीति सूचनायेति न दोष इति ज्ञेयम् । **प्राङ्मुखत्वादेः** इत्यादिपदेन समित्पाणित्वादि ग्रहणम् । अन्यथासिद्धिरित्यर्थ इति ततश्चावयवत्वसाधकानुमानस्य अन्यथासिद्धत्वात् अनवयवत्वानुमानेनासमबलतया न तत् प्रतिपक्षरूपत्वमिति भावः । तदनेनेत्यनेन एतत् अनुव्याख्यानस्यान्यथासिद्धिकथनपरतया योजनाया वक्ष्यमाणत्वात् एतत् अनुव्याख्यानं असंहिततया पठ्यमान-त्वहेतोः अन्यथासिद्धिकथनपरं यथासंभवे तथोद्देश्यविधेयभावप्रदर्शनेन योजयति **पृथगित्यादि** मूले ।

**स०व्र०— लक्षणान्तरेति** । अविगानं दर्शयितुम् 'अखिलै'रित्युक्तम् । 'गामानये'त्यादिवाक्यस्थ-'गो'शब्दस्य अखिलैः पठ्यमानत्वात् व्यभिचारपरिहाराय 'असंहिततये'त्युक्तम् । अतिशयितसन्निध्यभावेनेत्यर्थः । विलम्बेन शब्दोच्चारणे प्रसङ्गो मा भूदिति 'संपाठ' इत्युक्तम् । समाम्नाये सहोच्चारण इति यावत् । दूराद्धूतेत्यादौ व्यभिचारनिवृत्त्यर्थं लक्षणेत्याद्युक्तम् । 'दूराद्धूतेचे'त्यादिप्रकृतिभावविधायकसूत्राभाव इत्यर्थः ॥ **अध्ययनेति** ॥ उपक्रमोपसंहारवैचित्र्येणोङ्कारस्य वेदानवयवत्वं गम्यते । यदा यद्वाक्यमुपक्रान्तं तस्यैवान्यदा मध्योच्चारित-स्योङ्कारपूर्वकत्वाभावात् । न हि सर्वदा तस्यैव वाक्यस्यादावेवोच्चारणं तत्पूर्ववाक्य एव पर्यवसानं संभवतीति भावः ॥ ॐ इति ब्रह्मेत्यादिवन्नियतस्थानोच्चारणाभावेऽपि नियमेनोच्चारणादेव अवयवत्वं भवेदत आह **पक्षेति** । ब्रह्मसूत्राध्ययनवेदाध्ययनयोरादावुच्चारणं नियमार्थम् । अध्ययनस्याक्षरग्रहणद्वारा अदृष्टार्थत्वेऽपि ओङ्कारादिनियम-पूर्वस्यादृष्टजनकत्वान्नैतावता अवयवत्वमिति भावः ॥

**कुण्डल०—** ननु ताराथमूलत्वमित्यनेनैवोम्शब्दस्याथशब्दस्य च सूत्रशास्त्रपरिसमाप्ती प्रति ज्ञापकत्वाङ्गत्वयोः प्रतिपादिततया सर्वत्रानुगतत्वेनेत्यादिकमसङ्गतमतस्तस्योपयोगं वक्तुं तद्व्यावर्त्यं शङ्कते **नन्वत्र सूत्र इति । लक्षणान्तराभावे सतीति** । प्रकृतिभावरूपसन्ध्यभावप्रतिपादकस्य प्लुतप्रगृह्या अचीत्यादिरूपस्य तथाऽवग्रहनियामकस्य च लक्षणान्तरस्याभावे सति असंहिततया अतिशयितं सन्निधानं विना पार्थक्येन संपाठे

संहितापाठे अखिलैः पठ्यमानत्वादित्यर्थः । अत्र पदपाठे अखिलैरसंहिततया पठ्यमाने पदे व्यभिचारवारणाय **समिति** । तावन्मात्रस्य संहितापाठे पठ्यमानपदे व्यभिचारवारणाय **असंहिततयेति** । तावतश्च 'दक्षं संदधाते अप इन्द्राग्नी इदं हविरजुषेताम्' इत्यादौ तद्वारणाय लक्षणान्तराभावे सतीत्युक्तम् । तत्र च ईदूदेद् द्विवचनं प्रगृह्यमिति प्रगृह्यसंज्ञायां प्लुतप्रगृह्या अचीत्यनेन प्रकृतिभावविधानात्सन्धिनिषेधः । प्रमादालस्यादिना केनचिदोङ्कारस्य संहिततया संपाठे पठ्यमानत्वसंभवेन हेतोरसिद्धिवारणाय **अखिलैः** इत्युक्तम् । प्रमादादिरहितैरखिलैः शिष्टैरित्यर्थः । हेतोरप्रयोजकत्वमुद्धरति **अन्यथेति** । ओङ्कारस्य सूत्रावयवत्वे इत्यर्थः । **अन्यथाध्ययनेति** । वेदाध्ययनोपक्रमेऽध्येतृभिरुच्चार्यमाणोङ्कारस्य वेदवाक्यावयवत्व इत्यर्थः । नन्विदमनुपपन्नम् । ओङ्कारः सूत्रावयवः । अखिलैः सूत्रादौ पठ्यमानत्वादथशब्दवदिति प्रतिपक्षग्रस्तत्वादित्यत आह **पक्षसपक्षयोरिति** । **प्राङ्मुखत्वादीति** । 'प्राङ्मुखोन्नानि भुञ्जीयाद्यशस्वी दक्षिणामुखः ।' इत्यादिस्मृतिबोधितप्राङ्मुखत्वादिवदित्यर्थः । तथाच प्रतिपक्षहेतोरप्रयोजकत्वमिति ।

**स०ना०— नन्वत्र सूत्रादावोङ्कार एव न विद्यत इति** । अदर्शनादिति भावः । असिद्धिमाशङ्क्य निषेधति **यद्यपीति** । **शिष्टैः** आचार्यानुशिष्टैः । आचार्योपदेशपरम्पराप्राप्तस्याध्यक्षसिद्धत्वात् । ओङ्कारादर्शनमिति भावः । **तथापीति** । यः अध्यक्षसिद्धः नासौ अवयवः । यश्चावयवत्वेन भवदङ्गीकृतः नासावध्यक्षसिद्ध इति नादर्शन-मसिद्धमिति भावः । **अखिलैः पठ्यमानत्वादिति** । अध्यक्षसिद्धेन इदानींतनासंहिततया पाठे नैतन्मूलभूताचार्य-पाठोऽप्यसंहिततयैवेति निश्चय इति भावः । ओङ्कारः सूत्रावयवः नियमेन सूत्रादौ पठ्यमानत्वादित्यनेन न तत्प्रतिपक्षतेत्यत आह **पक्षसपक्षयोरिति** । सपक्षग्रहणं दृष्टान्तार्थम् । यथा वेदे प्राङ्मुखत्वादिकं नियमान्तर्गतं एवमिहापीति भावः । **अभिलषितेनेति** । आचार्याभिलषितेनेत्यर्थः । आचार्यस्तावत् ओङ्कारस्य सर्वत्रानुगतत्वार्थम् ओङ्कारं पृथगुच्चारितवान् । तदुपदिष्टाः सूत्रपाठकाः तथैवोच्चारयन्तीति भावः ।

**विट्ठ०— लक्षणान्तराभावे सतीति** । पठ्यमानत्वादित्युक्ते पदपाठकाले पठ्यमाने पदे व्यभिचारः तन्निवृत्त्यर्थं संपाठे इत्युक्तम् । संहितापाठकाले इत्यर्थः । सुध्युपास्य इत्यादौ व्यभिचारवारणायोक्तम् **असंहिततयेति** । कृष्ण एहि गङ्गे अमू इत्यादौ वारणाय लक्षणान्तराभावे सतीत्युक्तम् । विशिष्टतयोच्चारणप्रापकप्लुतप्रगृह्या अचि इत्यादिसूत्रान्तराभावे सतीत्यर्थः । संहितापाठकालेऽपि प्रमादादिना संहिततया पठ्यमानपदेषु व्यभिचारनिरासाय **अखिलैः** इत्युक्तमिति । ओङ्कारस्यावयवत्वाभावे पक्षीकृते सूत्रे सपक्षे वेदे चादावुच्चारणं न स्यादित्यत आह **पक्षेति** । प्राङ्मुखो धीयीतेत्याद्युक्तेर्यथा प्राङ्मुखत्वादेरध्ययननियमरूपतया आवश्यकत्वं तथा आदावोङ्कारोच्चारणस्यापि नियमान्तर्गततयाऽनुष्ठीयमानत्वमेव नावयवत्वमनेन सिद्ध्यतीति भावः ।

**चषकः—** सूत्रानिर्दिष्टस्य तद्घटकत्वायोगमाशङ्कते **नन्विति** । 'ओङ्कारः प्रथमसूत्रघटकः शिष्टभूता-ध्येतृकर्तृकप्रथमसूत्रोच्चारणकालीनोच्चारणविषयत्वात् अथशब्दवदि'त्यनुमानमेवोङ्कारस्य तदवयवत्वे प्रमाणमाशङ्कते **यद्यपीति** ॥ अनुमानबाधेनैतत्प्रतिविधत्ते **तथाऽपीति** ॥ **लक्षणान्तराभावे सतीति** । सन्धिकार्याप्रवृत्तिज्ञापक-





सूत्रान्तराभावे सतीत्यर्थः ॥ **असंहिततयेति** । वर्णानामतिशयितसन्निधिरूपसंहिताभावेनेत्यर्थः ॥ **संपाठ इति** । संहितापाठकाल इत्यर्थः ॥ **अखिलैरिति** । निरूपकतया कर्मसाधनप्रत्ययप्रकृत्युपस्थाप्यान्वयिकर्तृत्वार्थिका तृतीया। प्रकृतिभावस्थलेऽनैकान्त्यव्युदसनाय सत्यन्तम्। सन्धिकार्यप्रवृत्तिस्थले तद्विधूननाय **असंहिततयेति** । पदपाठकाले तदपहस्तयितुं **संपाठ इति** । संहितास्थलेऽपि प्रमादेनासंहितायां कतिपयपठ्यमानपदेषु तन्निरसनाय **अखिलैरिति** ॥ स्थापनायामप्रयोजकतामप्यभिधत्ते **पक्षेति** ।

**काशी०**— उत्तरमूलमवतारयितुं शङ्कते **नन्विति** । **सूत्रादौ** अथात इत्यादेः पूर्वम् । **न विद्यते** न सूत्रकारप्रयुक्तः । **तत्** तस्मात् । अयं भावः । ताराथमूलत्वमित्यत्र यदभिप्रेतमोङ्काराथशब्दौ प्रथमसूत्रावयवौ तत्र ज्ञापकतया सूत्रकृदुच्चरितत्वात्। माङ्गलिकौ च कारकतया सूत्रकृदुच्चरितत्वादित्यनुमानद्वयम्। तदयुक्तम्। ओङ्कारस्य सूत्रकृदुच्चरितत्वे मानाभावात् । न चैवं ब्रह्मणः सर्ववेदवेद्यत्वाद्यलाभः । बन्धसत्यत्वादेरिव तस्याप्यतःशब्देनैव लाभसंभवादिति । ओङ्कारस्य सूत्रादौ सूत्रकृदुच्चरितत्वे मानमाशङ्कते **यद्यपीति** । तथा च शिष्टैरध्येतृभिर्नियमेन सूत्रादावुच्चार्यमाणत्वमेव तत्र मानमिति भावः । सौत्रशब्दान्तरे सूत्रादौ क्वचित्प्रयुक्तहर्यादिशब्दे च व्यभिचार-वारणाय सूत्रादौ नियमेनेति । अशिष्टैरनध्येतृभिश्चानुच्चार्यमाणत्वादसिद्धिरतः **शिष्टैरध्येतृभिरिति** । विशिष्टहेतो-रसिद्धिपरिहारार्थमध्यक्षसिद्ध इत्युक्तम्। तथाऽपि शिष्टाध्येतृप्रयुक्तत्वेन सूत्रकारप्रयुक्तत्वसिद्धावपि । **नायं सूत्रा-वयव इति** । न सूत्रेण सहान्वयबोधादिरूपैककार्यकारीत्यर्थः। तथा चोक्तावयवत्वसाधकानुमाने बाधोऽसिद्धिश्चेति भावः। यादुपते तु यद्यपीत्यादिनोङ्कारः सूत्रावयवः शिष्टैरध्येतृभिस्तदादावुच्चार्यमाणत्वादथशब्दवदित्यनुमानमाशङ्क्य तथाऽपीत्यादिना तस्य सत्प्रतिपक्षतोच्यत इत्युक्तम् । वाक्यार्थचन्द्रिकायां तु तत्रैव बाध इति । तत्रानुमानयोः प्राबल्याद्यविवेके सत्प्रतिपक्षता द्वितीयस्य वक्ष्यमाणरीत्या प्राबल्याभिमाने बाध इति बोध्यम्। **लक्षणान्तरेति** । पठ्यमानत्वमात्रस्याथशब्दादौ सूत्रावयवेऽपि सत्त्वाद्व्यभिचारवारणाय **असंहिततयेति** । वर्णानामव्यवधानं संहिता, परः सन्निकर्षः संहितेति सूत्रात्। तच्च यावत्कालमध्ये पूर्वोत्तरवर्णयोरुच्चारणे सति संहिताव्यवहारस्तावत्कालवृत्तित्वं (मध्योच्चरितत्वं) तद्राहित्येनेत्यर्थः। न चोङ्कारेऽपि स्वघटकवर्णाव्यवधानसत्त्वादसिद्धिः। अथेत्यादिसूत्रानवयवत्वे साध्ये तदसंहिततया पठ्यमानत्वस्यैव हेतुत्वात्। यदसंहिततया यत्पठ्यते'तत्तदनवयव इति व्याप्तेरभिप्रेतत्वात्। न चाथशब्दासंहिततया पठ्यमाने ब्रह्मजिज्ञासाशब्दे व्यभिचारः । तेन सहैककार्यकारित्वरूपतदवयवत्वस्यैव तत्र सत्त्वादिति वाच्यम् । अविरलपठ्यमानेष्वसंहिताया असंमतेः । आकाङ्क्षादिमत्पदान्तरस्यापि लक्षणान्तरत्वेन सत्यन्ताभावाच्च। पदपाठकालेऽथशब्दादेरप्यसंहिततया पठ्यमानत्वात्तद्दोषवारणाय संपाठ इति संहितापाठ इत्यर्थः। यद्यपि स्वस्य संपाठकाले स्वस्यैवासंहिततया पठ्यमानत्वं व्याहतम् । स्वेतरपदानां संपाठकाले तु स्वस्य पाठ एवानुपपन्नः । युगपत्पदद्वयोच्चारणायोगादित्यसंहिततया संपाठे पठ्यमानत्वमसिद्धम् । न च संपठ्यमानतत्तद्वर्ण-समुदायासंहिततया पठ्यमानत्वस्य तदनवयवत्वसाधकतया विवक्षितत्वान्न दोष इति वाच्यम्। पदपाठस्थलेऽपि संपठ्यमानवर्णसमुदायात्मकब्रह्मजिज्ञासादिपदेनासंहिततया पठ्यमानेऽतःशब्दादौ व्यभिचारात् । तथाऽपि संपाठ इत्यनेन पदविभागज्ञापनार्थत्वाभावस्य विवक्षितत्वान्न दोषः। पदपाठस्य पदविभागज्ञापनार्थत्वात्। भ्रमप्रमादादि-





वशादसंहिततया पठ्यमानेऽथशब्दादौ व्यभिचारवारणाय **अखिलैरिति**। यद्योङ्कारस्य कैश्चिदपाठादखिलैः पठ्यमानत्वमसिद्धम् । न चाखिलैः शिष्टैरिति विवक्षितम् । शिष्टानामपि कदाचित्संहिततयोङ्कारपाठसंभवात् । तथाऽपि अखिलैरित्यनेन भ्रमप्रमादादिवैधुर्यं विवक्षितम् । सूत्राणां तत्तदानुपूर्व्यवच्छिन्नतया सूत्रकारोच्चरितत्वज्ञानपूर्वको हि परेषां सूत्रपाठः । अन्यथा परैः पठ्यमानसूत्राणां परप्रणीतत्वापत्तेः । तथा चोङ्कारस्य संहिततया सूत्रकारोच्चरितत्वभ्रमादिनैव संहिततया पाठः संभवतीत्युक्तदोषानवकाशः । छंदसि पूर्वोत्तरार्थयोरग्नाविष्णू इत्यादावग्रहे च समस्यमानपूर्वोत्तरपदयोरसंहिततया पठ्यमानयोर्व्यभिचारवारणाय **लक्षणान्तराभावे सतीति** । अनवयवत्वाद्यतिरिक्तासंहिताप्रापकनिमित्ताभावे सतीत्यर्थः । उक्तस्थले चासंहितायाश्छन्दोऽवग्रहलक्षणप्राप्तत्वान्न दोषः । यद्वा । यादुपतोक्ते कृष्ण ३ एहीत्यादौ प्लुतस्थले वाक्यार्थचन्द्रिकोक्ते सुकृतदुष्कृते एवेत्यादौ प्रगृह्यस्थले च कृष्णादिपदे व्यभिचारवारणाय सत्यन्तम् । उक्तस्थले च प्लुतप्रगृह्या अचि नित्यमित्यादिसूत्रस्यैवासंहिताप्रापकत्वान्नोक्तदोषः । यद्यप्युक्तसूत्रेण प्लुतप्रगृह्ययोः संहितायामेव सन्धिकार्यप्रतिषेधाय प्रकृतिभावविधानात् पूर्वोत्तरवर्णयोरव्यवधानरूपसंहिताऽस्त्येव । न च कृष्ण एहीत्यप्लुतप्रयोगापेक्षया प्लुते कालाधिक्यमनुभूयत एवेति कथमव्यवधानमिति वाच्यम् । प्लुताकारस्यैव तावत्कालवृत्तित्वेन वर्णयोरव्यवधानात् । न चासंहिताशब्देन सन्धिकार्याभावस्य विवक्षितत्वादुपपत्तिरिति वाच्यम् । अथशब्देऽप्यकारथकारयोः सन्धिकार्याभावसत्त्वेन व्यभिचारात् । तथाऽपि प्लुतत्वादिकं ध्वनिधर्मो वर्णस्तु क्षणिक एवेति मते प्लुतादिस्थले पूर्वोत्तरवर्णयोर्व्यवधानमस्त्येवेत्याशयेनेदम् । असंहितापदेन सन्धिकार्ययोग्यत्वस्य विवक्षितत्वान्नोक्तदोषः । न चैवमोङ्कारे हेतोरसिद्धिः । असन्धिसन्धिकार्ययोग्यतान्यतरस्य विवक्षितत्वादित्यप्याहुः । यत्तु कृष्ण एहीत्यादौ प्लुतो न भवति । दूराद्धूते चेति सूत्रे तस्य टेः प्लुत इत्यधिकारादिति । तन्न । सुस्रोता ३ अत्र स्राहीत्यादिभाष्यप्रयोगानुरोधेन वाक्यस्येत्यस्य तत्रानुवृत्तेः । प्राचीनैरनङ्गीकारात् । दूराद्धूते चेत्यत्र वाक्यस्य टेरिति न संबध्यत इति व्यासोक्तेः । यद्वा । स्राहि कृष्ण ३ एहीत्यादिवाक्यद्वयघटकस्य कृष्ण ३ एहीत्यंशस्य प्रकृतोपयुक्तत्वेन ग्रहणान्न दोषः । न च एहीत्यस्य वाक्यान्तरत्वे तदनवयवत्वस्य पूर्ववाक्ये सत्त्वान्न व्यभिचारप्रसक्तिरिति वाच्यम् । अवान्तरवाक्यभेदेऽपि महावाक्यस्य न्यायवाक्यवदेकवाक्यत्वसंभवेन तदवयवत्वेन व्यभिचारप्रसक्तेः । यदपि अइउणित्यादिसूत्रेषु असंहिततया पठ्यमानस्याप्यकारादेस्तदवयत्वाद्व्यभिचारः । न च यो यद्वाक्यघटकशब्दासंहिततया पठ्यते स तदनवयव इति व्याप्तिरत्र विवक्षिता । अइउणित्यादिसूत्राणां च अणादिसंज्ञामात्रार्थतयाऽन्वयबोधकत्वरूपवाक्यत्वाभावान्नोक्तदोष इति वाच्यम् । तथाऽपि भोभगोअघोअपूर्वस्य योऽशीति सूत्रे भगो इत्यादौ व्यभिचारादिति । तदपि न । तत्रापि पूर्वोत्तरवर्णयोरव्यवधानरूपसंहितासत्त्वेन हेत्वभावात् । एवं भोस् भगोसित्यादेरेतत्सूत्रविहितसकारादेशभूतयकारलोपे सति भोभगो इत्यादिरूपम् । तत्र चासंहितायाः पूर्वत्रासिद्धमिति यलोपशास्त्रस्यासिद्धताप्रापकलक्षणप्राप्तत्वेन सत्यन्ताभावान्नोक्तव्यभिचारः । उक्तं च मनोरमायाम् । यदि भोस् भगोस् अघोसिति सान्तं रान्तं वाऽनुकृत्य भो इत्यादीनां त्रयाणामलोन्त्यस्य यः स्यादपूर्वस्य रोश्चेति वाक्यभेदेन व्याख्यायते । तर्ह्यसन्धिर्न्याय्य एवेति । वस्तुतस्त्वेतदनुमाने दृष्टान्ते साध्यवैकल्यस्य वक्ष्यमाणतया व्यभिचारस्येष्टत्वान्न तद्वारणमावश्यकमिति । एवं चायमोङ्कारोऽथेत्यादिसूत्रानवयवः । तदनवयवतातिरिक्ततदसंहिताप्रापकशून्यत्वे सति तदसंहिततया पठ्यमानत्वा-





दित्यनुमानं फलितम्। अत्र विपक्षे बाधकमाह **अन्यथेति**। यद्यपि 'संहितैकपदे नित्या नित्या धातूपसर्गयोः। नित्या समासे वाक्ये तु सा विवक्षामपेक्षते' इत्युक्तेरोङ्कारस्य सन्ध्यविवक्षामात्रेणासंहिततया पाठ उपपद्यते। तथाऽपि सन्ध्यविवक्षाया एव बीजाभावादनुपपत्तिरिति पूर्वपक्षाभिप्रायः। सिद्धान्ते त्वनुगतेरेव तद्बीजत्वसंभवादन्यथासिद्धि-रित्यभिप्रेतम्। **साध्यविकल इति**। अन्ततो वेदेन सहादृष्टरूपैककारित्वसंभवादिति भावः। **अध्ययनेति**। यत्र विरतिः क्रियते ततस्तदुत्तरवाक्यमुपक्रम्यत इति विरतिवैचित्र्यस्योपक्रमवैचित्र्यप्रयोजकत्वेन यथा विरतौ तथोपक्रमेऽपीति दृष्टान्तत्वेन वा विरतिग्रहणम्। **तत्तत्स्थानेति**। यदा यत्रोपक्रमविरती तदा तत्रोङ्कारोच्चारणम्। अन्यदा तत्र तदभावे तत्स्थानत्यागेनोपक्रमादिस्थानान्तरे तदुच्चारणमित्यनियतस्थानतयाऽखिलैः पठ्यमानस्येत्यर्थः। **सुप्रसिद्धत्वादिति**। विमतः ॐकारो वेदवाक्यानवयवः तत्तद्वेदवाक्यासन्नतया नियमेन पठ्यमानत्वाभावात्संमतवदित्यनुमानसिद्धत्वा-दित्यर्थः। तत्तद्वाक्यानवयवसाधकस्य सामान्यतो वेदवाक्यानवयवत्वसाधकतायाः प्रमितत्वादिति भावः। अत्रापि विपक्षे बाधकमाह **अन्यथेति**। वेदवाक्यावयवत्वे यत्किञ्चिद्वेदवाक्यासन्नतया नियमेन पाठप्रसङ्गादित्यर्थः। एवमनवयवत्वसाधकानुमानस्य प्राबल्यमुपपाद्य सत्प्रतिपक्षतानिरासार्थमवयवत्वसाधकानुमानस्यान्यथासिद्ध्या दौर्बल्यमाह **पक्षसपक्षयोरिति**। सूत्रादौ वेदाध्ययनोपक्रमे च पठ्यमानोङ्कारयोरित्यर्थः। आदावित्यस्य सूत्रवेदाध्ययनयोरित्यादिः। अथ स्वाध्यायविधिः प्राग्वोदग्वा ग्रामान्निष्क्रम्याप्लुत्य शुचौ देशे यज्ञोपवीत्याचम्या-क्लिन्नवासा दर्भाणां महदुपस्तीर्य प्राक्कूलानां तेषु प्राङ्मुख उपविश्येत्यादिना गृह्यसूत्रोक्तप्राङ्मुखत्वादिवदोङ्कारा-नवयवत्वेऽप्युपपत्त्या हेतोरन्यथासिद्धिरिति भावः। न चैवमोङ्कारस्य वेदादिना सदादृष्टरूपैककार्यकारित्वं दुर्वारमिति शङ्क्यम्। अध्ययननियमस्यानियमप्राप्यप्रत्यवायपरिहारादिमात्रार्थत्वात्। एवमोङ्कारोच्चारणस्यान्यथासिद्धौ सत्यामस्य मङ्गलार्थत्वमप्यनुपपन्नमित्युक्त्वा पूर्वपक्षमुपसंहरति **एवं चेति**। **सूत्रादाविति**। सूत्राद्यवयवत्वेनोच्चारित इत्यर्थः। तेन सूत्रानवयवत्वेन शङ्कामुपक्रम्य मङ्गलार्थत्वाभावेनोपसंहारोऽसङ्गत इत्यपास्तम्। अपाठकव्यावृत्त्यर्थमाह **सूत्रपाठकैरिति**। सूत्रपाठकशिक्षकैरित्यर्थः। तेनोङ्कारसंपुटितसूत्रपाठकानामनुगत्यर्थोच्चारणाभावेऽपि नासङ्गतिः। न च तेषामादावसंहिततयोच्चारणस्य निर्निमित्तत्वापत्तिः। अदृष्टार्थत्वात्। सांप्रदायिकोच्चारणस्यैवादृष्टहेतुत्वात्। लौकिकवाक्यव्यावृत्तये **सूत्रेष्विति**। उत्तरसूत्रेषूच्चारणरूपानुगतत्वस्यादावसंहितोच्चारणे स्वरूपेण निमित्तत्वा-योगादाह **अभिलषितेनेति**। **निमित्तेनेति** तृतीयार्थोक्तिः। तथा च सर्वसूत्रेष्वनुगतत्वेच्छया पृथगोङ्करणं विवक्षित-मिति भावः।

**गूढ०**— ननु सर्वत्रेत्यत्र ओङ्कारस्यासंहिततया निर्देशे प्रयोजनमुच्यते। तदयुक्तम्। सूत्राक्षरव्याख्याना-नुपयोगादित्यतस्तन्निवर्त्यां शङ्कां दर्शयति **नन्वत्रेति**। उन्मत्तैस्तदुच्चारणस्याक्रियमाणत्वादुक्तम्। **शिष्टैरिति**। तर्ह्यध्ययनोपक्रमविरतिवैचित्र्येऽप्योमिति ब्रह्मेतिवन्नियतस्थानतया पाठः स्यादित्युक्तमित्यत आह **अखिलैरिति**। **उक्तन्यायेनेति**। ब्रह्मविद्यात्वेनोङ्कारस्योह आवश्यकः ऊह्यमानं त्ववयवेत्युक्तन्यायेनेत्यर्थः। **लक्षणान्तराभावे सतीति**। अखिलैः पठ्यमानत्वादित्येवोक्ते अग्निमीळे पुरोहितम् इत्यादीनामखिलैः पठ्यमानत्वेऽप्यनव-यवत्वाभावाद्व्यभिचार इत्यत उक्तम् **असंहिततयेति**। एवमपि पदकालेऽसंहिततया पाठे कर्तव्य इत्यर्थः।

संहिततया पाठे कर्तव्येऽसंहिततया पठ्यमानत्वस्य तत्राभावान्न व्यभिचारः । तथापि सूर्यो अजायतेत्यादावुक्त-हेत्वसत्त्वेऽप्यनवयवत्वाभावादाह **लक्षणान्तराभावे सतीति** । तत्र तथा पाठः कर्तव्य इत्यत्र प्रकृत्यान्तःपादमव्य-पर इत्यादि पाणिनिसूत्रादिरूपलक्षणान्तरस्यैव सत्त्वादित्यर्थः । ननूक्तहेतुसत्त्वेऽपि मास्त्वनवयवत्वमित्यप्रयोजको हेतुरित्यत आह **अन्यथेति** । नन्वध्ययनोपक्रमादावुच्चार्यमाणस्यास्त्येव तदवयवत्वमित्याशङ्क्य निषेधति **न चेति** । **अन्यथेति** । अखिलैरन्योन्यस्थाने पठ्यमानस्यापि तदवयवत्व इत्यर्थः । नन्वोङ्कारः सूत्रावयवः उपक्रमे नियततया पठ्यमानत्वादथशब्दादिवत् इति सत्प्रतिपक्ष इत्यत आह **पक्षसपक्षयोरिति** । आदिशब्देन समित्पाणित्वादि-ग्रहणम् । अनवयवत्वोपपादनफलमाह **एवं चेति** । नन्वत्राखिलैरित्यस्य सर्वजनपरत्वं प्रतीयते । तदयुक्तम् । पामरैस्तत्पठनस्याक्रियमाणत्वात् । पृथगित्यप्ययुक्तम् । भिन्नत्वमात्ररूपस्य तस्याक्षरमात्रे सत्त्वेन ओङ्कारे विशेषा-भावात् । अनुगतत्वेनेत्यत्र करणे तृतीयेति प्रतीयते । तदपि न युक्तम् । अखिलैः पृथगोङ्कारेण अनुगतत्वस्य करणत्वाभावादित्यतो व्याचष्टे **अखिलैरिति** ।

**प्रदीपः**— **लक्षणान्तरेति** । अविगानं दर्शयितुं 'अखिलैः' इत्युक्तम् । गामानयेत्यादिवाक्यावयवस्य गोशब्दस्याखिलैः पठ्यमानत्वाद्व्यभिचारपरिहारायासंहिततयेत्युक्तम् । विलम्बेन शब्दोच्चारणे प्रसङ्गो मा भूदिति संपाठ इत्युक्तं समाम्नाये सहोच्चार इति यावत् । दूराद्धूतादौ व्यभिचारव्यावृत्त्यर्थं लक्षणेत्युक्तम् **अध्ययनेति** । उपक्रमोपसंहारवैचित्र्येणोङ्कारस्य वेदानवयवत्वं गम्यते । यदा यद्वाक्यमुपक्रान्तं तस्यैवान्यदा मध्योच्चारितस्योङ्कार-पूर्वत्वाभावात् । न हि सर्वदा तस्यैव वाक्यस्यादावेवोच्चारणं तत्पूर्ववाक्य एव पर्यवसानं संभवतीति । ओमिति ब्रह्मेत्यादिवन्नियतस्थानोच्चारणाभावेऽपि नियमेनोच्चारणादवयवत्वं भवेदत आह **पक्षेति** । ब्रह्मसूत्राध्ययनवेदा-ध्ययनयोरादावुच्चारणं नियमार्थं अध्ययनस्याक्षरग्रहणद्वारा दृष्टार्थविबोधार्थत्वेऽपि ओङ्कारादिनियमपूर्वकस्यापूर्व-जनकत्वान्नैतावतावयवत्वमिति नैतावता स्रवतीत्यादि ऊहशब्दे तत्स्थानापत्त्याभिप्रायेऽपि । यद्यपि अमन्त्रा-वयवत्वप्रसङ्गादित्यसङ्गतम् । अवयवस्य मन्त्रत्वेऽपि समुदायस्यामन्त्रत्वादमन्त्रस्यापि मन्त्रावयवत्वं संभवति मन्त्रकार्यकरत्वान्न तावता मन्त्रत्वं रथघोषादिषु व्यभिचारात् मन्त्रैकवाक्यत्वेऽपि अभियुक्तप्रसिद्ध्यैव मन्त्रत्वमवगम्यते नानार्थप्रत्यायनलक्षणाभिधानमात्रेण । यथोक्तम्— 'स्वाध्याये पठ्यमानेषु येषु मन्त्रपदं स्मृतम् । ते मन्त्रा नाभिधानं हि मन्त्राणां लक्षणं स्मृतम् ॥' अवयवस्यामन्त्रत्वेऽपि समुदायस्य मन्त्रत्वं न हीयत इत्युक्तम् । 'आकृतीनामभिव्यक्तिः या कथञ्चिन्निरूपिता । नासाववयवाधिक्यविनाशेषु विनश्यति ।' तस्मात्कार्यकारित्वा-भावे मन्त्रावयवत्वं न स्यादिति युक्तम् । अत एव नेष्टोपादानं तथापि न स्थानापत्तिः संभवति । इह यस्मिन्याग इति कर्तृतो व्यपदिष्टयागान्तरेणोपजीव्यते सा प्रकृतिर्येनोपजीव्यते सा विकृतिस्तत्र दर्शपूर्णमासप्रकरणपठितयोः 'अग्नये जुष्टं निर्वपामि' 'व्रीहीणां मेध सुमनस्यमान' इति मन्त्रयोः प्रकृतिवद्विकृतिः कर्तव्येत्यतिदेशतः सूर्यं नैवारे विकृति-प्राप्तयोः दृष्टार्थत्वात्स्वप्राकाश्यद्रव्यदेवतालाभेनानर्थक्ये प्राप्ते तत्परिहारयोग्यमानसमवेतार्थस्मारके सूर्यनीवारके पदे प्रति यथाग्निव्रीहिपदयोः स्थानित्वं तथात्र स्थानिनोऽभावात्तस्मादूहशब्देनाध्याहार उच्यते यथा इषेत्वेत्यादीनां छेदनादिप्रकाशनासामर्थ्याद्विनियोगबलेन प्राप्तस्य छिनद्मीत्यादिपदस्य मन्त्रावयवत्वमर्थप्रकाशकत्वेन कारकत्वा-त्तथोङ्कारस्यापि अर्थवादसामर्थ्यात्प्राप्तस्य सूत्रावयवत्वम् अन्यथा तदपि न स्यादित्येव वक्तव्यम्.।





**९८ सु०— एतदुक्तं भवति। सर्वाणि हि सूत्राणि प्रत्येकमनेकवेदवाक्यविचारपरत्वात् अवान्तरब्रह्मविद्याः। 'स्रवत्यनोंकृतं ब्रह्म परस्ताच्च विशीर्यत' इति श्रौतार्थवादसामर्थ्यात् सर्वास्वपि ब्रह्मविद्यासु आद्यन्तयोरोङ्कारस्योहः कर्तव्य इति गम्यते।**

**बिन्दुः— स्रवत्यनोंकृतं ब्रह्मेति**। यद्यपि अयमर्थवादोऽवयवत्वानवयवत्वयोरुदासीनः। अध्ययनोपक्रमविरतिवैचित्र्येण वेदादौ पठ्यमानोङ्कारसाधारणत्वात्। तथापि ''ओङ्कारश्चाथ शब्दश्च तस्मात्प्राथमिकौ क्रमात्। अतश्च पूर्वमुच्चार्याः सर्व एते सतां मताः'' इति भाष्योदाहृतप्रमाणेषु अथातः-शब्दतुल्ययोगक्षेमत्वेनोक्तत्वादवयवत्वमिति ध्येयम्। **ओङ्कारस्योह इति**। यद्यप्यत्र ''प्राकृतस्थान-पतितपदार्थान्तरकार्यतः। ऊहः प्रयोगो विकृत ऊह्यमानतयोदित'' इति मीमांसकाभिप्रेतलक्षणविशिष्टः सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम इति वैकृतसूर्ययागे एकदैवत्यसामान्याच्चोदकप्राप्ताग्नेययागविध्यन्तान्तर्गते अग्नये जुष्टं निर्वपामीति निर्वापमन्त्रे अग्निपदस्थाने चतुर्थ्यन्तसूर्यपदोहवदकवतीषु रथन्तरं गायतीति गीत्यूहादिवच्च स्थानापत्तिलक्षणेनोहस्तथाऽप्यत्र ऊहशब्देनाध्याहारोऽनुषङ्गो वाऽभिप्रेत इति बोध्यम्।

**परि०**— ननु सूत्रादावोङ्कार एव नेति वदन्तं प्रति पृथगुच्चारणस्य गत्युक्तिरयुक्ता। अध्येतृ-परम्परयोच्चार्यमाणत्वस्यापि निर्मूलत्वेनान्धपरम्परात्वानिवारणाच्चेत्यत आह **एतदुक्तमिति**। सप्तदश-गीतातात्पर्योक्तश्रुतिमाह **स्रवतीति**। **ब्रह्मेति** मन्त्र उच्यते॥ **अनोङ्कृतं** आदावोङ्कारशून्यतयोच्चारितं चेदामघटजलवत्स्रवति सुकृतजनकं नेत्यर्थः। परस्तादनोङ्कृतं चेत् **विशीर्यते** हिंस्यते फलजनकं नेत्यर्थः॥ **श्रौतेति**। श्रुत्युक्तनिन्दारूपार्थवादबलेन मन्त्रस्य स्रवणविशरणाभावकामः आद्यन्तयोरोङ्कुर्यादिति कल्पितविधिवाक्येन सर्वास्वपि सूत्रादिरूपब्रह्मविद्यास्वाद्यन्तयोरोङ्कारस्योहोऽध्याहारः कार्य इत्यर्थः। 'अध्याहारस्तर्क ऊह' इत्यमरोक्तेः। न तु मीमांसकाभिमत ऊहः। तथैव चन्द्रिकोक्तेः॥ ननु यद्यध्याहार एवोहशब्दार्थः तर्हि यदयमोङ्काराथशब्दावादितः कृतवानित्यादिपूर्वतनसुधावाक्यविरोधः। प्रयुज्यमानस्य अध्याह्रियमाणत्वायोगात्। अन्यथाऽथादिपदस्याध्याहार इति स्यादिति चेत्। अत्राहुः। आदितः कृतवानित्यादिपूर्वतनसुधावाक्यानामादितः द्वयोरपि सत्त्वादित्यर्थः। अथशब्दस्यादौ कृतत्वमस्तीति वा श्रुतिप्राप्तत्वेन सूत्रकृदभिमततया कृतप्रायत्वाद्वा तदभिप्रायेण कृतवानित्यादिकृतनिवेशितादिशब्दप्रयोगः। एवमग्रे प्रयुक्तत्वादितिशब्दप्रयोगोऽपि ध्येयः। सूत्रकृताऽथातो ब्रह्मजिज्ञासेत्येवोक्तावपि स्रवतीत्यादि-निन्दार्थवादबलेन आद्यन्तयोरोङ्कारमध्याहृत्य अग्निमीळ इत्यादाविव अध्येतारो अधीयते तदभिप्रायेणैव ताराथमूलत्वमिति पूर्वार्धं प्रवृत्तम्। न तु सूत्रकृताऽथादिपदसमानतयाऽप्योङ्कारस्य कृतत्वाभिप्रायेण। अत





एव श्रीमद्भाष्येऽपि अथादिपदादेरेवार्थोक्तिः। 'अथातः शब्दपूर्वाणि सूत्राणि निखिलान्यपि' इति 'तावेवादौ प्रयुञ्जत' इति चोपक्रमोपसंहारोपेतप्रमाणोदाहरणं चेति । यद्वा चन्द्रिकोक्तदिशाऽथादिपदतुल्यतया 'ॐकारश्चाथशब्दश्च तस्मात्प्राथमिकौ क्रमात्' इति स्मृतिसिद्धोङ्कारपरोऽयं ग्रन्थः । न तु स्रवतीति श्रुतिप्राप्तसाधारणोङ्कारपरः। स्रवतीति श्रुत्युक्तिस्तूपलक्षणं ध्येयमिति। केचित्तु सूत्रकृतोङ्कारोऽप्यादौ कृत एव। ऊह इत्युक्तिस्तु निन्दार्थवादरूपश्रुतिमूलत्वाभिप्राया। वस्तुतस्तूच्चारितोऽपि सूत्रकृताथादिशब्दवन्न सूत्रोपनिबद्ध इति। यत्तु 'ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा। स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यत' इति शिक्षाग्रन्थे पूर्वार्धे विधेरप्युक्तेरर्थवादसामर्थ्यादिति सुधोक्तिरयुक्ता। कुमारसंभवे द्वितीयसर्गे 'उद्घतः प्रणवो यासामि'ति श्लोके 'ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदे'त्यादि शिक्षावचनमित्युक्तत्वाच्चेति तन्न। तत्र शिक्षावचनस्य स्रवतीति निन्दार्थवादमूलत्वेन स्पष्टार्थतया सावधिकतया शिक्षाग्रन्थकर्तृकृतत्वेनोपपत्तेः।

**गु०दी०— सर्वास्वपि ब्रह्मविद्यासु आद्यन्तयोरोङ्कारस्योहः कर्तव्य** इत्यत्र स्वसंगृहीतश्रुतिप्रकरणस्थबहुतरगुणैर्ब्रह्मणः पूर्णत्वप्रसाधने प्रत्येकं युक्तिरूपाणि हि ब्रह्मसूत्राणि । साधनफलाध्याययोरपि वैराग्याद्यलौकिकसाधनज्ञेयत्व-मुक्तप्राप्यत्व-मुक्तनियामकत्वादिगुणपूर्तेः प्रतिपाद्यत्वेन तद्गतसूत्राण्यपि गुणपूर्णत्वे युक्तिरूपाणि । युक्तौ च प्रतिज्ञानिगमनयोरावश्यकत्वेन आद्य ओङ्कारः गुणपूर्णत्वप्रतिज्ञारूपः । अन्तिमस्तु तस्मात्पूर्णगुण इति निगमनरूपः । अतः सूत्रावयवताऽप्यनयोरवश्यमङ्गीकार्येति भावः ।

**यादु०— अर्थवादो** निन्दारूपः॥ **ऊहः कर्तव्य इति**। यद्यप्यत्र मन्त्रसामसंस्कारोह इत्यादाविवोहशब्दो न कर्मव्युत्पत्त्योह्यमानपरः सूर्ययेत्याद्यूहं प्रति अग्नय इत्यादेरिव प्रकृते स्थानिनोऽभावेन 'प्राकृतस्थानपतितपदार्थान्तरकार्यतः। ऊहः प्रयोगो विकृत ऊह्यमानतयोदित' इति तदूहलक्षणाभावात्। तथाऽप्यध्याहारस्तर्क ऊह इति प्रसिद्धेर्भावव्युत्पत्त्याऽध्याहारपरो विवक्षितः। न चेषेत्वेत्यादाविव वस्त्वाकाङ्क्षाभावादध्याहारो व्यर्थ इति वाच्यम्। दृष्टार्थाभावेऽप्युदाहृतश्रुत्या स्रवणविशरणाभावरूपादृष्टार्थसंपादकतया सार्थकत्वात्।

**आनन्दः**— नन्वनुगत्यर्थम् असंहिततया निर्देश इत्युक्तम्। तद्धि तदा स्यात्। यद्युत्तरत्र ओङ्कारस्य नियमतः पाठः स्यात्। न चैवम्। तथा पाठे प्रयोजनाभावात्। तद्धि भवद्दृष्टमदृष्टं वा स्यात्। नाद्यः अनुपलब्धेः। न द्वितीयः अदृष्टप्रयोजनसद्भावे प्रमाणाभावात्। तथा च अनुगत्यर्थम् असंहिततया निर्देश इत्ययुक्तमित्यत आह **एतदुक्तं भवतीति**। ननु वेदानामेव ब्रह्मविद्यात्वात्सूत्राणां कथं तदित्यत उक्तं **प्रत्येकमनेकेति**। तथा च वेदाख्यब्रह्मविद्याविचारपरत्वेन एषामपि ब्रह्मविद्यात्वमिति भावः। नैषां सूत्राणां पृथक् पृथक् ब्रह्मविद्यात्वं तथा सति जैमिनिपाणिन्यादिसूत्राणामिव एकशास्त्रत्वं न स्यादित्याशयेनोक्तं **अवान्तरेति**। अस्तु ब्रह्मविद्यात्वं ततः किं प्रकृत इत्यत आह **स्रवतीति**। अत्रोहशब्देनाध्याहारः। अध्याहारस्तर्क ऊह इति प्रसिद्धेः।





**श्रीनिधि०— अर्थवादसामर्थ्यादिति**। निन्दारूपार्थवादसामर्थ्यादित्यर्थः। **ऊह** अध्याहारः। अध्याहारस्तर्क ऊह इत्यभिधानात्।

**वा०चं०**— ननु सर्वसूत्रेष्वोङ्कारानुगतिरेव कुतो येनासंहिततया निर्देशं प्रति सा निमित्तं स्यात्। अस्तु वा सा तथाऽपि निमित्तान्तरेणासंहिततया निर्देशोपपत्तौ न तस्या निमित्तत्वमित्यत आह **एतदुक्तं भवतीति**। अवयवत्वोपपादकोहसाधकवाक्ये ब्रह्मपदप्रयोगादस्तु वेदविद्यायामाद्यन्तयोरूहात् ओङ्कारस्य तदवयवत्वम्। सूत्रेषु किमायातम्। तथात्वे वा सर्वसूत्राणां भिन्नविद्यात्वे वाक्यभेदापत्त्यैकविद्यात्वात्किं सर्वसूत्रानुगमेनेत्याशङ्कां परिहर्तुमनेकवेदवाक्यविचाररूपत्वात्सूत्राणामपि प्रत्येकं ब्रह्मविद्यात्वं उपोद्घातेनाह **सर्वाणि हीति**। अत्राद्यन्तयोरूह इति स्थानिरहिताद्यन्तप्रदेश ऊहोक्त्या नात्रोहशब्दः कर्मव्युत्पत्त्या प्राकृतस्थानपतितेत्याद्युक्तविकृतप्रयोगपरोऽपि तु भावव्युत्पत्त्याध्याहारपर इति सूचनेन सूर्यायेत्यूहं प्रत्यग्नय इत्यादेरिव प्रकृते स्थानिनोऽभावान्नोहः संभवतीत्याशङ्का गर्भस्रावेणैव निरस्ता भवति। ( प्राकृतस्थानपतितपदार्थान्तरकार्यतः। ऊहः प्रयोगो विकृत ऊह्यमानतयोदितः। ) श्रौतार्थवादेत्येतदूहस्यार्थवादप्रमाणकत्वोक्त्या सप्रमाणकत्वमेवोहे नियामकं न तु लौकिकाकाङ्क्षेवेत्यर्थसूचनात् संयज्ञपतिराशिषा इषेत्वेत्यादाविव साकाङ्क्षत्वाभावान्नाध्याहारोऽप्यूहशब्दार्थ इत्यपि शङ्काऽसङ्गतेति द्रष्टव्यम्। अर्थवादे ब्रह्मविद्यास्वाद्यन्तयोरोङ्कारानुच्चारणेऽनिष्टकथनेऽप्यूहः कर्तव्य इत्यर्थस्य ततः शाब्दमर्यादयाऽभावात् सामर्थ्यादित्युक्तम्। अत्र स्रवत्यनोङ्कृतमित्यर्थवादस्वरूपविशेषोपादानेन स्रवणविशरणपरिहाररूपादृष्टफलार्थत्वबोधनादर्थप्रतीतेरादावेव प्रयोगेन चरितार्थत्वादन्ते प्रयोगवैयर्थ्यमनुषक्तस्योत्तरसूत्रानन्वयदोषश्चेति दोषद्वयमसङ्गतमिति द्रष्टव्यम्।

**वा०र०— सर्वसूत्रेष्विति**। उत्तरसूत्रेष्वित्यर्थः। **अवयवत्वोपपादकेति**। न च ऊह्यमानमित्युत्तरमूलटीकायां स्पष्टमिदम्। **अस्तु वेदेति**। वेदानां ब्रह्मशब्दवाच्यत्वस्य ब्रह्मवेदस्तप इत्यादि प्रमाणसिद्धत्वादिति भावः। **सूत्रेष्विति**। सूत्रेषु त्विति योज्यम्। तेषां ब्रह्मशब्दवाच्यत्वे प्रमाणस्यादर्शनादिति भावः। वेदाख्यब्रह्मविचारपरतया एतेषामपि ब्रह्मविद्यात्वं भविष्यतीत्यत आह **तथात्वे वेति**। **ब्रह्मविद्यात्वमिति**। ब्रह्मविद्यात्वमुपेति योज्यम्। स्रवतीत्यादिवाक्येनोहप्रतिपादनस्य ब्रह्मविद्यात्वसिद्धिसापेक्षत्वात्। तत्प्रतिपादनायात्र ब्रह्मविद्यात्वकथनात् अस्योपोद्घातत्वमित्यवधेयम्। **प्रत्येकमनेकेति** मूलम्। बहुशाखानिर्णायकत्वस्यैव सूत्रलक्षणत्वादिति भावः। ब्रह्मसूत्राणां प्रत्येकविद्यात्वे वाक्यभेदापत्तिः इत्याशङ्कापरिहाराय **अवान्तरा** इति मूले उक्तम्। महावाक्यभेदो नास्त्येव। अवान्तरवाक्यभेदस्तु न दोष इति तदाशयः। तदर्थम् उपोद्घातेन ब्रह्मसूत्राणां प्रत्येकं ब्रह्मविद्यात्वमुक्तं तदिदानीमाह **स्रवतीत्यादि** मूलम्। चन्द्रिकायाम्। नन्वत्रानुव्याख्यान इत्यादिना ओङ्कारस्यादिसूत्रावयवत्वादिकं सुधोक्तमनूद्यम्। तत्कथम्। सूर्याय इति ऊहं प्रति इत्यादिना तदाक्षिप्योच्यते। नात्रोहशब्दः कर्मव्युत्पत्त्येत्यादिना तत्समाधानं च कृतम्। ते एते आक्षेपसमाधाने नोत्सुधे। अपि तु सुधास्थोहः कर्तव्यः इत्येवंजातीयकोक्तिव्यावर्त्यशङ्कारूप आक्षेपः। तदुक्तिसूचितं च समाधानमितीमं विशेषं सूचयन् चन्द्रिकानुसारेणैवोहः कर्तव्य इत्यादि मूलाभिप्रायकथनपूर्वकं तेन मूलोपरि प्राप्तशङ्कानिरासससिद्धिरित्याह **आद्यन्तयोरूह इतीत्यादिना**। स्थानिरहितौ





स्थान्युक्तिरहितौ यौ आद्यन्तौ तद्रूपप्रदेशयोरिति योज्यम्। **कर्मव्युत्पत्त्येति**। ऊह्यते इति ऊहः इति कर्मव्युत्पत्त्येत्यर्थः। मन्त्रसामसंस्कारोह इत्यादिमीमांसकव्यवहारे मन्त्राणां अग्नये जुष्टं इत्यादीनां सूर्याय जुष्टं इत्यादावाकृष्य प्रयोगः मन्त्रोहः। 'एवं साम्नां योनिभूतासु ऋक्षु आम्नातानां यद्योन्यां तदुत्तरयोर्गायति' इत्यादिना उत्तरादिषु ऋक्षु तत्तदानुगुण्येनान्यथागानं सामोहः। व्रीहिषु श्रुतानां अवहननादीनां वैकृतेषु नीवारादिषु औचित्येनानुष्ठानं संस्कारोहः। इत्येवं ऊहशब्दो विकृतप्रयोगपरः यथा तथा विकृतिप्रयोगपरो नेत्यभिप्रायः। **प्राकृतस्थानपतितेत्यादीति**। आदिपदेन 'पदार्थान्तरकार्यतः।' 'ऊहः प्रयोगो विकृत ऊह्यमानतयोदित' इति शेषस्य परिग्रहः। प्राकृतेति कारिकार्थस्तु प्राकृतः प्रकृतियागे श्रुतो यः पदार्थः व्रीह्यग्निलक्षणद्रव्यदेवतारूपः तस्य स्थाने पतितं यत् पदार्थान्तरं विकृतियागसंबन्धिनी वास्तवलक्षणं द्रव्यदेवतारूपं तद्विषयकं होमादिरूपं यत् कार्यं तेन रूपेण योऽयं विकृतः प्रयोगः मन्त्रस्य सूर्ययेत्यादिरूपः सः ऊहः उच्यते। कुत इत्यत उक्तम् **ऊह्यमानतयेति**। ऊहविषयत्वादित्यर्थ इति गुरुराजीयचन्द्रिकाटीकोक्तो ज्ञेयः। स्थानिविरहेऽपि ऊहाङ्गीकारे ऊहलक्षणविरोधापत्तिरित्याशयेन तल्लक्षणकारिकोक्तेति विकृतप्रयोगविशेषणमिति ध्येयम्। **भावव्युत्पत्त्येति**। ऊहनं ऊह इति भावव्युत्पत्तिः। 'अध्याहारस्तर्क ऊह' इति प्रसिद्धेः विकृतप्रयोगस्यैव स्थानिसापेक्षतयाऽध्याहारस्य स्थान्यनपेक्षत्वेन च तदभावेऽप्यध्याहारोपपत्तिरिति भावः। इति सूचनेन इत्यनेन सूर्ययेत्यादि वक्ष्यमाणशङ्कानिरासः। स्थानिरहितप्रदेशे ऊहोक्त्या लब्ध इति न तन्निरासार्थं पृथक् यत्नापेक्षा चन्द्रिकाकाराणामपि लब्धार्थप्रदर्शन एव तात्पर्यम्। न तु स्वातन्त्र्येणाशङ्कापरिहारकरणे इत्युक्तं भवति। एवं उत्तरत्रापि ज्ञेयम्। **इत्यूहमिति**। इत्याद्यूहमित्यर्थः। अत एवाग्नयेत्यादेरिति वक्ष्यति। चन्द्रिकानुसारीय यथाश्रुतानुवाद इत्यदोषः। ऊह लक्षणे प्रकृतौ यथोत्पत्तिवचनं अर्थनामिति तृतीयपादीयाद्याधिकरणे दर्शपूर्णमासयोः श्रुतौ 'अग्नये जुष्टं निर्वपामि' 'व्रीहीणां मेध सुमनस्यमान' इति मन्त्रैः 'सौर्यं चरुं निर्वपेत् बार्हस्पत्यो नैवारश्चरुरि'ति विहितविकृतियागे किं सूर्यनीवारादिपदप्रक्षेपेणाग्निव्रीहिपदस्थाने ऊहितव्यौ उत नेति संशये यथास्थितयोरेव मन्त्रयोः चोदकप्राप्तत्वात् अग्निव्रीहिपदाभ्यां ऐन्द्र्या गार्हपत्यमुपतिष्ठते इति विधानबलात् कदाचन 'स्तरीरसि' इति ऐन्द्र्या ऋचा गार्हपत्यप्रकाशनवत् गुणवृत्त्या सूर्यनीवारप्रकाशोपपत्तेः नोह इति पूर्वपक्षे च प्राप्ते प्रकृतावग्निव्रीहिशब्दौ न स्वरूपविवक्षयाऽऽम्नातौ अदृष्टार्थत्वापातात्। किन्तु कर्मसमवेतद्रव्यप्रकाशत्वेन दृष्टार्थत्वलाभात् तदर्थविव। अतः तेनैव रूपेण। विकृतौ चोदकेन प्रापणात् अग्निव्रीहिपदयोः वैकृतदेवतापदत्वाभावात्। तदुद्धारेण सूर्यनीवारादिपदप्रक्षेपेण 'अग्नये'त्यादिकौ पूर्वोक्तौ मन्त्रौ ऊहितव्यावेव। ऐन्द्री तु स्वरूपेणैव गार्हपत्ये विनियुक्तेति न तत्रोह इति सिद्धान्तितम्। अधिकं च चन्द्रिकाटीकातोऽवगन्तव्यम्। एवं यथा सौर्यादियागे चोदकप्राप्तं सूर्ययेत्यादि मन्त्रगतं अग्नयेत्यादिपदस्थानि रूपं विद्यते तथा प्रतिसूत्रं ओङ्कारस्य स्थानिनोऽभावादित्यर्थः। **एतदूहस्येति**। ओङ्कारस्याद्यन्तयोरूहस्येत्यर्थः। **अर्थवादप्रमाणकत्वेति**। स्रवतीत्यर्थवादस्य निन्दारूपार्थवादतया तथाविधार्थवादप्रमाणकत्वेत्यर्थः। अर्थवादप्रमाणकत्वं च निन्दारूपार्थवादश्रवणान्यथानुपपत्त्या परिकल्पितविधिप्रमाणकत्वमिति मूलस्थसामर्थ्यादप्रयोजनकथनपर उत्तरटीकातोगतं भविष्यति इति ज्ञेयम्। **लौकिकाकाङ्क्षैवेति**। अत्र एवकारस्य पूर्वपक्ष्युक्तानुवादतया प्रयोगात् लौकिकाकाङ्क्षैव प्रयोजिकेति। यत् तत् नेत्यर्थलाभेनापि पदापेक्षाभावात् न तु लौकिकाकाङ्क्षापीति वक्तव्यमिति शङ्कानवकाश इति ध्येयम्। **इषेत्वेत्यादाविवेति**। आदिपदेनेत्यादेः परिग्रहः। अयं





च व्यतिरेकदृष्टान्तः। इत्यादौ यथा साकाङ्क्षत्वमस्ति तथा **साकाङ्क्षत्वाभावादिति**। भेदलक्षणे अव्ययान्नानुषज्यते-त्याद्यपादीयान्तिमाधिकरणे चिन्तितम्। 'स ते वायुर्वा तेन गच्छतां संयजत्रैः अङ्गानि संयज्ञपतिः आशिषे'ति मन्त्रेषु अग्नीषोमीये पशौ श्रुतेषु 'संयज्ञपतिराशिषे'ति तृतीयमन्त्रे समिति उपसर्गश्रवणात् तस्य च क्रियासापेक्षत्वात् क्रियापदमावश्यकम्। तच्च प्रथममन्त्रे श्रुतं गच्छतामित्येतदनुषज्यते। वा उत यथोचितमन्यदेवाध्याहार्यमिति सन्देहे द्वितीयमन्त्रे गच्छतामित्येकवचनान्तस्य यजत्रैरङ्गानीति बहुवचनान्तेन वचनभेदान्वयायोग्यत्वेनान्वयेऽपि तृतीयमन्त्रे एकवचनान्तत्वेनान्वययोग्यत्वात् बुद्धौ परिवर्तमानस्य प्रथममन्त्रेषु श्रुतस्य गच्छतामित्यस्यानुषङ्ग एवेति पूर्वपक्षे प्राप्ते संयजत्रैरङ्गानीत्यत्र गच्छतामित्यस्य संबन्धेन बुद्धिपरिवृत्तिभङ्गानुषङ्गासंभवात् साकाङ्क्षत्वेन चाध्याहारेण तत् पूरणमिति सिद्धान्तितमिति। तथा तदध्यायएवाद्यपादसमेषु वाक्यभेदः स्यात् इति षोडशाधिकरणे चिन्तितम्। 'इषेत्वोर्जेत्वे'त्यादिषु किमेकमन्त्रत्वमुत मन्त्रभेद इति संशये अनुष्ठेयार्थप्रकाशनात् अदृष्टार्थत्वे चानेकादृष्टकल्पना-पत्तेः मन्त्रैक्यमिति पूर्वपक्षे प्राप्तेऽदृष्टार्थत्वेऽपि स्वरूपतः परस्परं नैराकांक्ष्यावधारणात् अन्यानादरेण नैव प्रयोजनापेक्ष-त्वात् समिदादिवत् अनेकादृष्टकल्पनस्य न्यायत्वात् नैकमन्त्रत्वम्। वस्तुतस्तु इषेत्वेति छिनत्ति ऊर्जेति अनुमार्ष्टि इत्यादिना शाखाछेदनादिषु करणत्वेन विनियोगात् अर्थप्रकाशनरूपक्रियानिर्वर्तनेनैव करणत्वस्य निर्वाह्यत्वेन छेदना-दिकं प्रति साकाङ्क्षत्वात् छिनत्तीत्याद्यध्याहारेण वाक्यं पूरणीयमिति मन्त्रभेद इति सिद्धान्त इति 'संयज्ञपतिराशिषे'त्यत्र 'सन्ते वायुरि'ति प्रथममन्त्रे श्रुतस्य एकवचनान्तस्य गच्छतामित्यस्य संयजत्रैः इति मध्यवाक्ये वचनभेदेनान्वया-योगात् अनुषङ्गो न संभवतीति श्रुताध्याहारः। इषेत्वेत्यादौ छेदनादावस्य मन्त्रस्य विनियोगात् अश्रुतस्यैव छिनत्ति इत्यादेः अध्याहारः इति श्रुताध्याहारः। तत्र प्रथमदृष्टान्तोऽध्याहारमात्रे। इषेत्वेत्यादिः द्वितीयस्तु प्रस्तुतेऽश्रुताध्याहार इति चन्द्रिकाटीकोक्तमत्रावधेयम्। तथा चोभयविधाध्याहारस्थलेऽपि क्रियायां साकाङ्क्षत्ववत् सूत्रेषु आकाङ्क्षाविरहात् नाध्याहारो युक्त इत्याशयः। अध्याहारोऽपीत्यपिशब्दः पूर्वनिराकृतविकृतप्रयोगसमुच्चये। असङ्गतेत्यत्र निरस्तेत्यर्थः। **ऊहः कर्तव्य इति**। आद्यन्तयोरिति वर्तते। **ततः** अर्थवादात्। **सामर्थ्यादित्युक्तमिति**। अनेन निन्दारूपार्थवाद-त्वात् अनेनार्थवादेन विधिपरिकल्पनोपपत्तेः तद्विधेश्चाद्यन्तयोः ऊहः कार्य इत्याकारतया शब्दमर्यादयैवोहः कर्तव्य इत्यर्थस्य भानोपपत्तिरित्याशयः। एतदनुसारेणैव प्रागुक्तमर्थवादप्रमाणकत्वमपि अर्थवादोन्नीतविधिप्रमाणकत्वं व्याख्येयमिति प्रागेवोक्तम्। **स्वरूपविशेषोपपादनेनेति**। दोषद्वयमसङ्गतमित्यनेन संबन्धः। कथं तदुपपादनेन तन्निरास इत्यत उक्तं **स्रवणविशरणेत्यादि**। अर्थवादेनेति शेषः। ततश्चार्थवादस्यादृष्टफलार्थबोधकत्वेन तद्बलात् अदृष्टफलार्थत्वं ओङ्कारस्य यद्यपि लब्धं तथापि दृष्टफलार्थत्वं न लभ्यते। तथाचार्थप्रतीतिरूपदृष्टफलार्थत्वा-नङ्गीकारात्। ओङ्कारस्य अर्थप्रतीत्यर्थत्वाङ्गीकारपक्षे यत् प्राप्तम् अर्थप्रतीतेरादावेव प्रयोगेणेति योजना। असङ्गतमित्यस्य निरस्तमित्यर्थः। **चरितार्थत्वादिति**। ओतं ब्रह्मेत्यन्वयबोधस्य प्रथमोपात्तोङ्काकारादेव सिद्धेः अन्ते तत्प्रयोगवैयर्थ्यमित्यर्थः। **अनुषक्तस्येति**। अनुषङ्गोऽनुवृत्तिः। प्रथमसूत्रात् अनुवृत्तस्योङ्कारस्य जन्मादि-सूत्रेषु अन्वयो न संभवति तदर्थस्योतत्वस्य जन्मादिपदार्थविशेषणत्वायोगात्। यच्चानुषक्तं प्रातिपदिकादित्यादिकं तस्य स्वौजसमौट् इत्यादिसूत्रेषु अर्थानुगमो दृश्यते। तथा द्वितीयाद्यपादीयसर्वशेषत इत्युपान्त्याधिकरणोक्तरीत्या 'अच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरि'ति वाक्यस्य 'देवस्त्वा सविता पुनातु' इति मन्त्रशेषभूतस्यापि 'चित्





पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु' इति मन्त्रद्वयशेषताऽपि अनुषङ्गमाश्रित्य स्वीकृतास्ति । तत्र च तयोर्मन्त्रयोः तच्छेषभूतवाक्यार्थान्वयो दृश्यते । तथोक्तपदीयानुषङ्गो वाक्यसमाप्तिः । सर्वेषु तुल्ययोगित्वात् इति सप्तदशाधिकरणोक्तरीत्या 'याते अग्ने या शपातनूः' 'वर्षिष्ठाणं ह्वरेष्टोग्रं वचोऽपावधी त्वेष वचोऽपावधी स्वाहा' 'याते अग्नेऽशयारजाशयाहराशये'ति मन्त्रत्रये ज्योतिष्टोमे उपसद्धोमेष्वाम्नाते पूर्वमन्त्रशेषभूततनुर्वर्षिष्ठ इत्यादेः अग्नेरजाशय इत्यादि मन्त्रद्वयेऽनुषक्तस्य तत्रार्थान्वयो दृश्यते इति चन्द्रिकोक्तरीत्याऽभिप्रायो द्रष्टव्यः । आद्यन्तयोः उच्चार्यमाणोङ्कारस्यार्थप्रतीत्यर्थत्वाभ्युपगमे जन्मादिसूत्रेष्वपि तदन्वयस्यावश्यकत्वप्राप्तावपि अदृष्टफलार्थत्वस्याभ्युपगमे जन्मादिसूत्रेष्वपि अदृष्टफलसंभवेन तदर्थोङ्कारस्यान्वयोपपत्तेः इत्यनुषङ्गपक्षे प्राप्तदूषणपरिहारोऽपि स्वरूपविशेषोपादानेन इत्यादिनैव सिद्धो ज्ञेयः ।

**स०व्र०—** **स्रवतीति** । आदावनोङ्कृतं ब्रह्म वेदादिकं स्रवति परस्तादनोङ्कृतं तु विशीर्यते इत्यर्थः ।। **अर्थवादसामर्थ्यादिति** । निन्दारूपार्थवादसामर्थ्यादित्यर्थः ।। **ऊह इति** अध्याहार इत्यर्थः । तेन अन्यभाव ऊह इति निरस्तम् । अध्याहारस्यान्यानपेक्षत्वात् । न चाकाङ्क्षाविरहान्नाध्याहारोऽपीति वाच्यम् । ओङ्काराभावे प्रतिपाद्यार्थस्थैर्याभावेन तत्स्थैर्यस्योङ्कारसाकाङ्क्षत्वेनाध्याहारसंभवात् ।।

**कुण्डल०—** ननु ओङ्कारस्य सर्वसूत्रेष्वनुगतिः प्रमाणसिद्धा चेत्तदर्थमोङ्कारस्य पृथगुच्चारणं सेत्स्यति तदेव कुत इत्यतस्तदुपपादयति **एतदुक्तं भवतीति** । **ऊह इति** । ऊहनमूह इति व्युत्पत्त्या अध्याहार इत्यर्थः । अध्याहारस्तर्क ऊह इत्यभिधानात् । ननूह्यत इति कर्मव्युत्पत्त्या मन्त्रोह इत्यादाविव नवमाध्यायोक्तरीत्या 'वितेन सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम' इति वाक्यविहिते सूर्यदेवताकयागे प्रकृतितश्चोदकप्राप्ते 'अग्नये जुष्टं निर्वपामी'ति मन्त्रे सूर्यायेत्यूह्यं चतुर्थ्यन्तसूर्यपदं प्रति अग्नय इति पदस्येव प्रकृते स्थानिनः । अभावादूहशब्दानुपपत्तिरिति कस्यचित् चोद्यं निरस्तम् । अस्माभिरत्रोहशब्दस्य नवमाध्यायोक्तरीत्या मन्त्रादेरन्यथात्वलक्षणोहपरत्वानङ्गीकारात् ।

**स०ना०—** ओङ्कारार्थस्य सर्वसूत्रेष्वनन्वयात् सर्वत्रानुगतिर्व्यर्थेति तदर्थं पृथक्प्रयोगोऽपि व्यर्थ इत्यत आह **एतदुक्तं भवतीति** । **ऊहः कर्तव्य इतीति** । दृष्टार्थत्वाभावेऽपि अदृष्टार्थप्रवेश आवश्यक इति भावः । नन्वेवं सति उत्तरत्रानुवर्तमानत्वादेव नायं सूत्रावयवः उत्तरार्थगृहीतस्य पूर्वसूत्रानवयवत्वात् । प्रत्ययस्य लुक् श्लु लुप इत्यत्र प्रत्ययग्रहणस्योत्तरार्थं गृहीतस्यैतत्सूत्रे अन्वयाभावेन तदनवयवत्वदर्शनात् । तदुक्तं महाभाष्ये । उत्तरार्थं तर्हि प्रत्ययग्रहणमिति ।

**विठ्ठ०—** ओङ्कारस्य सर्वत्रानुगतेरावश्यकत्वे तज्ज्ञापकतया असंहिततया निर्देशस्य अन्यथासिद्ध्या सूत्रावयवत्वं युक्तं स्यात् सूत्रेषु ओङ्कारानुगतिरेव कुत इत्यत आह **एतदुक्तं भवतीति** । अत्रोहशब्दः 'अध्याहारस्तर्क ऊह' इत्युक्तेः भावव्युत्पत्त्या अध्याहारपरः न तु कर्मव्युत्पत्त्या ऊह्यमानपर इति ध्येयम् ।

**चषकः—** 'आद्यन्तयोरोङ्कारस्योहः कर्तव्यः' इति । सूर्यायेत्याद्यूहं प्रति अग्नय इत्यादेरिव प्रकृते स्थानिनोऽभावेन 'प्राकृतस्थानपतितपदार्थान्तरकार्यतः । ऊहः प्रयोगो विकृत ऊह्यमानतयोदित' इति लक्षण-





लक्षितत्वाभावेन मन्त्रसामसंस्कारोह इत्यादाविवोहशब्दस्य कर्मव्युत्पत्त्योह्यमानपरत्वाभावादध्याहारस्तर्क ऊह इत्यभिधानादूहवितर्क इत्यस्माद्भावसाधनघञा निष्पन्नऊहशब्दोऽध्याहारवाचकः । न च 'संयज्ञपतिराशिषा' 'इषेत्वे'त्यादाविवासाकाङ्क्षत्वादध्याहारो व्यर्थ इति वाच्यम् । साकाङ्क्षताराहित्येऽपि श्रौतार्थवादरूपप्रमाण-प्रत्यापितस्रवणविशरणपरिहतिरूपादृष्टार्थान्तरसत्त्वेन तादृशप्रमाणसाहित्यस्यैव तन्त्रत्वात् । प्राथमिकोङ्कारस्याभि-धास्यमानदिशा साकाङ्क्षत्वापादितदृष्टार्थत्वस्यापि सत्त्वाच्च ।

**काशी०**— ननु सर्वसूत्रेष्वोङ्कारस्यानुगतिरेव कुतः । किमर्थं चेत्यत आह **एतदुक्तं भवतीति**। स्रवती-त्यादिश्रुतेर्वेदमात्रविषयत्वे ततः सूत्रादौ नोङ्कारस्य सिद्धिः । ब्रह्मविद्याविषयत्वेऽपि न सर्वसूत्रेष्वनुगतिसिद्धिरतस्त-त्सिद्ध्यर्थमाह **सर्वाणीति**। सर्वसूत्राणां प्रत्येकं ब्रह्मविद्यात्वे एकशास्त्रत्वानुपपत्तिरित्याशङ्कावारणार्थम् **अवान्तरेति**। सर्वसूत्राणामखिलवेदमुख्यार्थनिर्णायकत्वेन एकशास्त्रत्वेऽपि प्रत्येकं तत्तद्वेदार्थनिर्णायकत्वेन प्रत्येकमपि ब्रह्मविद्या-त्वमिति भावः । हि यत एवमतः सर्वास्वपीति संबन्धः । **स्रवतीति**। आदावोङ्काररहितं ब्रह्म ब्रह्मविद्या स्रवति फलं न जनयति परस्तादन्तेऽनोङ्कृतं तु विशीर्यते विशीर्णफलं भवति । उत्पन्नमप्यदृष्टं नश्यतीति यावत् । अस्य च निन्दार्थवाद-रूपत्वादाद्यन्तयोरोङ्कारोच्चारणविध्युन्नयनद्वारा तत्साधकत्वसूचनाय सामर्थ्यादित्युक्तम् । अत्र 'ब्रह्मणः प्रणवं कुर्यादा-दावन्ते च सर्वदे'ति विधिरूपपूर्वार्धस्य शिक्षावचनत्वेनान्यत्रोदाहृतत्वेऽपि तस्य स्मृतित्वेन श्रौतविध्युन्नायकत्वमेवेति परिमळे व्यक्तम् । **ऊह इति**। अध्याहार इत्यर्थः । 'अध्याहारस्तर्क ऊह' इत्यभिधानात् । एतेन 'प्राकृतस्थानपतित-पदार्थान्तरकार्यतः । ऊहः प्रयोगो विकृत ऊह्यमानतयोदित' इति मीमांसकोक्तस्योह्यत इति कर्मव्युत्पत्तिलभ्यस्य प्रकृतियागसंबन्ध्यग्निदेवतादिस्थानप्राप्तसूर्यदेवतादिरूपपदार्थान्तरकार्यविकृतिसंबन्धिहोमाद्यर्थविकृतप्रयोगत्वरूप-लक्षणस्य सूर्यायेत्याद्यूहं प्रत्यग्नय इत्यादेरिव प्रकृते स्थानिनोऽभावादनुपपत्तिरिति निरस्तम् । सुधायामेव आद्यन्तयो-रिति स्थानमात्रोक्त्या भावव्युत्पत्तिलभ्याध्याहारार्थतायाः सूचितत्वात् । न चाध्याहारस्य प्रकृतवाक्यावयवतया वाक्यान्तरस्थशब्दानुसन्धानरूपत्वादाद्यन्तयोरुच्चारणालाभः । उच्चारणविध्यनुरोधेन ततश्चेत्युत्तरवाक्यानुरोधेन चोच्चार्यत्वेनानुसन्धानस्यैव विवक्षितत्वेन तल्लाभात् । यद्वा । प्रकृतेऽप्यूहशब्दः कर्मव्युत्पत्त्या तर्क्यत्वेनोच्चारणपर एव । उच्चारणपदपरित्यागेनोहपदोपादानं तूच्चारणस्य तर्कितविधिप्राप्तत्वविवक्षयेति ध्येयम् । एतेन सर्वास्वपीत्ययु-क्तम् । प्रथमसूत्रे साक्षादुक्तत्वेनोङ्कारस्याध्याहाराभावादित्यपास्तम् । उच्चारणस्य तत्राप्यक्षतेः । प्रथमसूत्रेऽप्योङ्कारः सूत्रकृदनुच्चरित एव । शिष्टैरध्याहृत्योच्चार्यत इति तु न सत् । यदयमोङ्काराथशब्दावादितः कृतवानोङ्कारः सूत्रकृता मङ्गलार्थतयोपनिबद्ध इत्यादिग्रन्थविरोधात् । ननु तथाऽपि ब्रह्मविद्याऽस्त्वित्ययुक्तं 'स्रवत्यनोङ्कृतं ब्रह्मे'ति श्रुतौ ब्रह्मशब्दस्य ब्रह्मसूत्रपरत्वे प्रमाणाभावात्तस्य ब्रह्म तत्त्वं तपो वेद इत्यभिधानादिना वेदादिमात्रवाचकत्वात् । न च बृहजातिजीवकमलासनशब्दराशिष्विति स्मृत्या ब्रह्मशब्दस्य शब्दराशिवाचकत्वाद्ब्रह्मसूत्रपरत्वसिद्धिरिति वाच्यम् । तथा सति लौकिकशब्दराशिपरत्वस्याप्यापातादिति चेत् । उच्यते । तस्मादोमित्युदाहृत्य 'यज्ञदानतपःक्रियाः । प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनामि'ति गीतायां यज्ञादीनां तावदोङ्कारोच्चारणपूर्वकत्वमुक्तम् । ब्रह्मविद्या च ज्ञानयज्ञस्तथात्वं च ब्रह्मसूत्राणां सिद्धमेव । एवं ज्ञानदानत्वमपि ज्ञानजनकत्वेनोच्चार्यमाणशब्दस्यैव ज्ञानदान-





पदार्थत्वात् । एवं तपोरूपत्वमपि स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः तद्धि तपस्तद्धि तप इति तैत्तिरीयश्रुतौ श्रुतिव्याख्यानरूपप्रवचनस्य तपस्त्वोक्तेः । प्रवचनं व्याख्यानमिति भाष्यात् । ब्रह्मसूत्राणां च श्रुतिव्याख्यानत्वात् । तत्र च विधानोक्ता इत्यनेनोङ्कारपूर्वकत्वं विधिसिद्धमिति ज्ञायते । विध्यर्थवादयोश्चैकवाक्यत्वानुरोधेन स्रवतीत्यर्थवादे ब्रह्मशब्दस्य ब्रह्मविद्यापरत्वम् । विधेश्च तदाद्यन्तयोरोङ्कारोच्चारणविधायकत्वमावश्यकम् । न च कर्मयज्ञाद्यनुरोधेन सामान्यतो यज्ञादावोङ्कारोच्चारणविधायकश्रुत्यन्तरस्यैवोपगमात्तत एव ज्ञानयज्ञादावपि तत्सिद्धेः । स्रवत्यनोङ्कृतं ब्रह्मेति वेदमात्रपरमस्त्विति वाच्यम् । गीतातात्पर्ये सप्तदशेऽध्याये सदसत्कर्मविवेकविषये स्रवतीत्यादिश्रुतेरुदाहृतत्वा-दनोङ्कृतमासुरं कर्मेति वाक्यशेषाच्च । तत्र ब्रह्मशब्दस्य ब्रह्मविषयविद्याकर्मादिसामान्यपरत्वनिश्चयात् । एवं ओमिति ब्राह्मणः प्रवक्ष्यन्नाहेति तैत्तिरीयश्रुतिरप्युक्तार्थे प्रमाणम् । ब्रह्मसूत्राणां प्रवचनरूपत्वस्योक्तत्वात् । एतेन 'यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठित' इत्यादिश्रुत्यनुरोधादुक्तब्रह्मशब्दो वेदमात्रपरः । न च स्वरशब्दस्योङ्कारार्थत्वमसिद्धम् । ते नु वित्त्वोर्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन्यदा वा ऋचमाप्नोत्योमित्येवातिस्वरत्येवं सामैवं यजुरिति छन्दोगश्रुत्यादिसिद्धत्वादित्यपि निरस्तम् । उक्तश्रुतिस्मृत्यनुरोधेन वेदशब्दस्यापि ब्रह्मविषयसामान्यपरत्वौचित्यात् । अन्यथोक्तछन्दोगश्रुतावृगादीनामोङ्कारपूर्वकत्वे हेतुत्वं न विवक्षितस्योङ्कारव्याख्यानत्वस्य ब्रह्मसूत्रे व्यभिचारापत्तेः । न चैवं वेदव्याख्यानभूते सूत्रे वेदोच्चारणपूर्वकत्वाभावाद्व्यभिचारो दुर्वार इति वाच्यम् । तदनुसन्धानरूपमानसो-च्चारणपूर्वकत्वसत्त्वात् । तदभावे तदर्थप्रत्यायकत्वरूपतद्व्याख्यानत्वस्याप्ययोगात् । अत एव छन्दोवत्सूत्राणि भवन्तीति छन्दोधर्माणां सूत्रेष्वतिदेशः । अन्यथा भाष्यादावुपनिषन्नियतशान्त्यादिपाठनियमस्याप्यनुपपत्तेः । यत्तूक्तश्रुत्यादिबलात्सूत्रसन्दर्भात्मकशास्त्रस्याद्यन्तयोरोङ्कारोच्चारणसिद्धावपि प्रतिसूत्रं तदुच्चारणे मानाभावः । अन्यथा वेदेऽपि प्रत्यृचमोङ्कारोच्चारणप्रसङ्ग इति । तन्न । अवान्तरब्रह्मविद्यात्वरूपमानस्योक्तत्वात् । वेदेऽपि प्रकरणादि-भेदेनाद्यन्तयोरोङ्कारोच्चारणस्यैव विधेयत्वात् । अन्यथा वेदस्याद्यन्तशून्यत्वेन तद्विधिवैयर्थ्यापत्तेः । न चैवं प्रत्यधिकरणमाद्यन्तयोरोङ्कारोच्चारणमस्तु न तु प्रतिसूत्रं, गुणसूत्रेषु प्रकरणभेदाभावादिति वाच्यम् । तत्रापि प्रकरणान्तरस्थश्रुत्यन्तरग्रहणादिना अवान्तरप्रकरणभेदसत्त्वात् । यथा गौणश्चेन्नात्मशब्दादित्यादावात्मशब्दघटित-श्रुत्यन्तरोपादानादिना तद्भेदः । वेदेऽप्येवमवान्तरभेदविवक्षायां पृथगोङ्कारोच्चारणमिष्टमेव । एतेन भारतादावप्योङ्कारो-च्चारणं व्याख्यातं वेदितव्यम् । ननु ब्रह्मसूत्रपाठस्य पुण्यजनकत्वे स्रवतीत्यादिश्रुत्युक्तस्रवणविशरणपरिहारार्थत्वेन तदाद्यन्तयोरोङ्कारोच्चारणं सिद्ध्येत् । तत्रैव किं मानमिति चेत् । आर्थवादिकस्रवणविशरणान्यथानुपपत्तिरेव तावन्मानम् । स्मर्यते च वाराहे । 'मीमांसा द्विविधा प्रोक्ता कर्मणो ब्रह्मणस्तथा । वेदार्थज्ञानतुल्याद्या द्वितीयायाः फलं श्रुणु । प्रत्यक्षरं तु लभते गायत्रीशतजं फलमि'ति । एवमर्थावबोधरूपदृष्टार्थस्यापीश्वरप्रसादाद्यर्थत्वेन सूत्रपाठस्यान्ततोऽपि अदृष्टार्थ-त्वावश्यंभावात् तच्छ्रवणविशरणवारणार्थत्वेनाप्योङ्कारोच्चारणमावश्यकमिति ।

**गूढ०**— नन्वनुगत्यर्थमसंहिततया निर्देश इत्युक्तम् । तद्धि तदा स्यात् । यद्युत्तरत्र ओङ्कारस्य नियमतः पाठः स्यात् । न चैवम् । तथा पाठे प्रयोजनाभावात् । तद्धि भवद्दृष्टमदृष्टं वा स्यात् । नाद्यः । अनुपलब्धेः । न द्वितीयः । अदृष्टप्रयोजनसद्भावे प्रमाणाभावात् । तथा चानुगत्यर्थमसंहिततया निर्देश इत्ययुक्तमित्यत आह **एतदुक्तं भवतीति** ।





ननु वेदानामेव ब्रह्मविद्यात्वात् सूत्राणां कथं तदित्यत उक्तं **प्रत्येकमनेकेति** । तथाच वेदाख्यब्रह्मविद्याविचार-परत्वेनैषामपि ब्रह्मविद्यात्वमिति भावः । नैषां सूत्राणां पृथक् पृथक् ब्रह्मविद्यात्वम् । तथा सति जैमिनिपाणिन्यादि-सूत्राणामिव एकशास्त्रत्वं न स्यादित्यशयेनोक्तम् **अवान्तरेति** । अस्तु ब्रह्मविद्यात्वं ततः किं प्रकृत इत्यत आह **स्रवतीति** । अत्रोहशब्देनाध्याहारः । अध्याहारस्तर्क ऊह इति प्रसिद्धेः ।

**९९ सु०— न चोह्यमानं वाक्यात्पृथगिति शक्यते वक्तुम् । मन्त्रेष्वप्यूह्यमानस्यामन्त्रा-वयवत्वप्रसङ्गात् ।**

**बिन्दुः— न चोह्यमानं वाक्यात्पृथगिति** । यद्यपि अनाम्नातेष्वमन्त्रत्वमिति मन्त्रादा-वूह्यमानस्य तदनवयवत्वमिष्टमेव । अत एव 'सूर्याय जुष्टं निर्वपामी'त्यूहिते सूर्यपदे 'इषेत्वे'त्यादावध्याहृते 'छिनद्मी'त्यादिपदे च वर्णस्वरलोपे मन्त्रभ्रेषप्रयुक्तं प्रायश्चित्तं नास्ति किन्त्वपशब्दाद्युच्चारणप्रयुक्तमेव । तथाप्यत्र अवयवशब्देन संभूयैकार्थकारित्वमभिप्रेतं तच्च प्रकृते मन्त्रादिस्थेऽध्याहारे चाक्षतमिति मन्तव्यम् । मन्त्रादावूह्यमानस्याध्याह्रियमाणस्य वा संभूयैकार्थप्रतिपत्तिरूपकार्यकारित्वात् । प्रकृते चाद्यसूत्रे ओङ्कारस्य वाक्यार्थान्वयित्वेन संभूयार्थप्रतिपादकत्वेऽपि द्वितीयादिसूत्रेषु स्रवणविशरण-परिहारमात्रत्वेन केवलादृष्टार्थस्य वाक्यार्थप्रतीतिस्थिरीकरणहेतुत्वेन तदेककार्यकारित्वात् । प्रथमसूत्रं तु स्विष्टकृदुत्तमप्रयाजवद् दृष्टादृष्टोभयार्थमिति बोध्यम् । अनुषङ्गपक्षे तु न कोऽपि शङ्काशूकः । 'या ते अग्ने हराशये'त्यादौ तनुर्वर्षिष्ठेत्यादेरनुषज्यमानस्य मन्त्रावयवतायाः सिद्धान्तितत्वात् । सर्वं चैतदनुपदमेव सूत्रवाक्यार्थनिरूपणावसरे सपरिकरं प्रपञ्चयिष्यामः ।

**परि०**— नन्वस्त्वोङ्कारस्य सूत्रादौ वेदाध्ययनोपक्रमसाधारण्येन सत्त्वं निन्दार्थवादसिद्धम् । तावता कथमवयवत्वमित्यत आह **न चेति** । ऊह्यमानमध्याह्रियमाणम् ॥ **पृथगिति** । वाक्यार्थतया अन्वयप्रतियोग्यसमर्पकं इत्यर्थः ॥ **अमन्त्रावयवत्वेति** । मन्त्रावयवत्वाभावप्रसङ्गादित्यर्थः । क्वचिन्मन्त्रानवयवत्वेति पाठः । 'संयज्ञपतिराशिषे'त्यत्र गच्छतामित्यस्य 'इषेत्वे'त्यादौ छिनत्तीत्यादे-रध्याहृतस्यान्वयप्रतियोगिसमर्पकत्वरूपावयवत्वाभावप्रसङ्गात् । तथात्वे 'व्यवायान्नानुषज्यत' इत्यादि-जैमिनिसूत्रकृतः 'व्यतिहारो विशिंषन्ति हि' इति ब्रह्मसूत्रकृतश्च तत्र तत्राध्याहारोक्तिरयुक्ता स्यात् इति भावः ।

**गु०दी०— मन्त्रेष्वप्यूह्यमानस्य** इत्यस्य 'स्वाहा न ममे'त्यादिपदस्येत्यर्थः ।





**यादु०— अमन्त्रावयवत्वप्रसङ्गादिति** । अत्रापाद्यमानं मन्त्रानवयवत्वं मन्त्रेण सहैककार्यकारित्वाभावरूपं विवक्षितम् । तेनोह्यप्रवरनामधेयानाममन्त्रत्वस्य द्वितीये सिद्धान्तितत्वादिष्टापादनमेतदिति दूषणानवकाश इति ध्येयम् ।

**आनन्दः— मन्त्रेष्वपीति** । मन्त्रेष्वध्याह्रियमाणस्य तदनवयवत्वे 'या ते अग्ने हराशया या ते अग्नेरजाशये'त्यादावध्याह्रियमाणस्य तनूर्वर्षिष्ठेत्यादेरवयवत्वं न स्यादित्यर्थः ।

**कं०रा०— मन्त्रेष्विति** । अग्नये जुष्टं निर्वपामीत्यादिमन्त्रेषूह्यमानस्य सूर्यायेत्यादिपदस्य मन्त्रेण सहैककार्यकारित्वाभावरूपमन्त्रानवयवत्वप्रसङ्गादित्यर्थः । तेनोह्यप्रवरनामधेयानाममन्त्रत्वस्य पूर्वतन्त्रे द्वितीये सिद्धान्तितत्वादिष्टापादनमेतदिति चोद्यं निरस्तम् । ऊह्यमानस्य सूर्यायेत्यादिपदस्य मन्त्रेण सहार्थप्रकाशनलक्षणैककार्यकारित्वेन तदभावरूपमन्त्रानवयवत्वापादने इष्टापत्त्ययोगात् ।

**श्रीनिधि०— न चोह्यमानमिति** । अत्र पार्थक्यं नाम एककार्यकारित्वाभाव इति ज्ञेयम् । **अनवयत्वमिति** । एककार्यकारित्वाभाव एवार्थः । नत्वेकार्थप्रतिपादकत्वाभावः । अदृष्टार्थं ब्रह्मविद्यासूह्यमाने ओङ्कारे तत्सत्त्वेनेष्टापत्तिप्रसङ्गात् । आद्यन्तयोरोङ्कारस्योहः कर्तव्य इत्यत्र स्वसङ्गृहीतश्रुतिप्रकरणस्थबहुगुणैः ब्रह्मणः पूर्णत्वप्रसाधने प्रत्येकं युक्तिरूपाणि साधनफलाध्याययोरपि वैराग्यलौकिकसाधनज्ञेयत्वमुक्तप्रामाण्यत्वमुक्तनियामकत्वमित्यादि गुणपूर्तेः प्रतिपाद्यत्वेन तद्गतसूत्राण्यपि गुणपूर्णत्वे युक्तिरूपाणि । युक्तौ च प्रतिज्ञानिगमनयोरावश्यकत्वात् । ओङ्कारे आद्यः गुणपूर्णत्वप्रतिज्ञारूपः, अन्तिमस्तु तस्मात् पूर्णगुणैः निगमनरूपः । अतः सूत्रावयवतापि अनयोरावश्यकी मन्त्रेष्वप्यूह्यमानस्य स्वाहा न मम इत्यादिपदस्येत्यर्थ इति वादिराजस्वामिनः ।

**वा०चं०**— अत्रोह्यमानस्य वाक्याद्बहिर्भूतत्वे श्रौतार्थवादसामर्थ्यात्प्रतिसूत्रमाद्यन्तयोरूहसिद्धावपि तस्य तदनवयवत्वेन संहिततया निर्देशप्रसक्तेरेवाभावेनासंहिततया निर्देशस्य नाधिकारज्ञापकत्वमिति न स्वाभिमतान्यथासिद्धिसंभव इत्यत ऊह्यमानत्वस्यावयवत्वाविनाभावं उपपादयति **न चेति** । यद्वा श्रौतार्थवादसामर्थ्येनाद्यन्तयोरोङ्कारोहसिद्धावपि तस्याध्ययननियमादिवत् बहिर्भूतस्य सकृदध्याहृतस्यैव सर्वसूत्रोपकारित्वसंभवेन प्रतिसूत्रमुच्चारणासिद्ध्या न प्रकृतसिद्धिरित्यतो अध्याहृतस्य वाक्यावयवत्वेनाध्ययननियमादिवैषम्यादर्थवादबलेन प्रतिसूत्रमध्याहारे सिद्धे तद्बलादेव अवयवत्वसिद्धाववयवानां च प्रतिसूत्रमुच्चारणस्यापि नियतत्वात्प्रकृतसिद्धिरित्याशयेनाह **न चेति** । अत्रावयवत्वस्य प्रसङ्गेऽप्यमन्त्रत्वप्रसङ्गादिति वा मन्त्रानन्तर्गतत्वप्रसङ्गादिति चोक्त्या मन्त्रानवयवत्वलाभे अपि तथाऽनुक्त्या मन्त्रानवयवत्वप्रसङ्गादित्युक्त्या च यद्यप्यनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यादित्युक्तरीत्या मन्त्र इत्यभियुक्तप्रयोगविषयस्यैव मन्त्रत्वान्मन्त्रेषूह्यमानस्य न मन्त्रत्वम् । 'आम्नायमानं ह्यनुषज्यमानमन्तर्गतं मन्त्रविचारणायामि'त्युक्तरीत्या न वा मन्त्रान्तर्भूतत्वं न वा मन्त्रवाक्येन सहैककार्यकारित्वेन मन्त्रवाक्यावयवत्वम् । रथघोषादेरपि महेन्द्रस्तोत्रावयवत्वप्रसङ्गात् । तथाऽप्यवदानादिविधौ द्रवादिपदवद्विश्वजिदादौ फलपदवदूहादेरपि श्रुतार्थापत्त्यादिकल्प्यस्यार्थाद्वा कल्पनैकदेशत्वादिति वेदैकदेशत्वोक्तेर्वेदत्वाभ्युपगम इति तदभियुक्तैरुक्तत्वेनोह्य-





मानस्यापि वेदत्वस्वीकाराद्वेदत्वे सति मन्त्रवाक्येन सहैककार्यकारित्वं वा वाक्यत्वे सति मन्त्रेण सहैककार्यकारित्वं वा मन्त्रावयवत्वं तेषामपीष्टमेव । प्रकृते च वाक्यत्वे सति ब्रह्मविद्ययैककार्यकारित्वरूपमेव तदवयवत्वं विवक्षितम् । तावतैवोङ्कारस्य मङ्गलार्थतया सूत्रादावुपनिबन्धनरूपस्वप्रयोजनसिद्धेरित्यर्थसूचनेन ऊहप्रवरनामधेयानाममन्त्रत्वस्य द्वितीये सिद्धान्तितत्वान्मन्त्रेष्वप्यूह्यमानस्य तदनवयवत्वापादनमिष्टमेवेति शङ्काऽसङ्गतेति ज्ञेयम् ।

**वा०र०**— आद्यन्तयोरोङ्कारस्योहं प्रतिपाद्य न चोह्यमानं वाक्यात् पृथक् इति मूले ऊह्यमानसामान्यस्य वाक्यात् पृथक् भावाभाववर्णनमसङ्गतमित्याशङ्कापरिहाराय तद्वाक्यव्यावर्त्यशङ्कां दर्शयन् तत्तात्पर्यमाह **अत्रोह्यमानस्येत्यादिना** । अत्रेत्यस्योहस्थलसामान्ये इत्यर्थः । बहिर्भूतत्व इत्यस्य तदनवयवत्वेनेत्यनेन संबन्धः । न च श्रौतार्थवादादेवावयवत्वसिद्धिः स्यादित्यत उक्तम् । **श्रौतार्थेत्यादि सिद्धावपीत्यन्तम्** । तत्सामर्थ्यस्य तावत्येव समर्थत्वादिति भावः । तस्येत्यस्योह्यमानोङ्कारस्येत्यर्थः । **तदवयवत्वेन** सूत्रवाक्यानवयवत्वेन इत्यर्थः । अवयवभूतार्थशब्दादेरेव संहिततया निर्देशविषयत्वादिति भावः । **नाधिकारेति** । संहिततया निर्देशविषये योऽसंहिततया निर्देशः कृतः तस्योत्तरसूत्रानुगतिरूपाधिकारत्वज्ञापकत्वमिति वक्तुं शक्यते । ओङ्कारस्य संहिततया निर्देशविषयो नेति तदसंहिततया निर्देशो नाधिकारकज्ञापक इति । **स्वाभिमतेति** । तदनेनेत्युत्तरमूले सर्वत्रेति भाष्याभिप्रेतान्यथासिद्धेर्वक्ष्यमाणायाः स्वाभिमतत्वम् । **ऊह्यमानत्वस्येति** । यत्र यत्र यत् ऊह्यमानं तत् तत् अवयवः इत्यविनाभाव इत्यर्थः । मन्त्रत्वमन्त्रान्तर्गतत्वमन्त्रावयवत्वानां भेदादापाद्यमान-ममन्त्रत्वं वा मन्त्रानन्तर्भूतत्वं वा न भवति । किन्तु मन्त्रावयवत्वाभाव एव सोऽपि विवक्षितः न तु साधारण इति युक्तम् । तदापादनमिति वक्तुं मन्त्रानवयवत्वप्रसङ्गात् इति अवयवत्वाभावपर्यन्तधावनमित्याह **अत्रावयवत्वेति** । न सूत्रावयवः वेदवाक्यानवयवताया इति प्रागुक्तेरिति भावः । इत्युक्त्या चेत्यस्य इति सूचनेनेति शङ्काऽसङ्गमित इति संबन्धः । कुतोऽमन्त्रत्वादेः आपादनायोग इत्यतः तमुपपादयति **यद्यपीत्यादिना** । एतच्च द्वितीयाद्यपादे दशमाधिकरणमित्युक्तरीत्या न मन्त्रत्वमिति संबन्धः । तत्र हि ऊहप्रवरनामधेयानां मन्त्रत्वमस्ति न वेति सन्देहमन्त्रैकवाक्यत्वमन्त्रमध्ये निवेशमन्त्रकार्यकरत्वरूपहेतुत्रयेण मन्त्रत्वे प्राप्ते अनुष्ठेयार्थप्रकाशनरूपमन्त्रकार्यकरत्वस्य मन्त्रैकवाक्यत्वरूपत्वेन तस्य चेष्टतेत्यत्र छिनत्ति इत्यस्याध्याहारसत्त्वेन मन्त्रत्वव्यभिचारितया तत्त्वरूपस्यानुष्ठेयार्थेत्युक्तस्यापि व्यभिचारापातेन मन्त्रैकवाक्यताभेदसिद्ध्यर्थं मन्त्रकार्यनियमात् अनुष्ठानानुविद्धमनुष्ठेयप्रकाशनमत्र विवक्षितत्वात् कारित्वविवक्षायां च दशमे महाव्रते रथघोषेण माहेन्द्रस्य स्तोत्रमपाकरोतीति स्तोत्रोपाकरणस्मारकरथघोषस्य स्तोत्रोपाकरणसाधनार्थकप्राकृतोपावर्तध्वम् इति मन्त्रस्य तादृशदर्भयोश्च बाधक इति वक्ष्यमाणतया तादृशरथघोषादेः नियमादृष्टानुविद्धानुष्ठेयप्रकाशनरूपमन्त्रकार्यकरतासत्त्वेन व्यभिचारापत्त्या मन्त्रमध्यनिवेशस्य च ऐरं कृत्वा उद्गेयमिति विहितस्य इरापदस्य मन्त्रे संपाठाभावेऽपि विधौ पाठात् तद्धेतुकमन्त्रत्वोपपत्तावपि प्रकृतेऽन्यत्र पाठाभावेनाप्रयोजकत्वात् । न मन्त्रत्वं हेतुत्वं किन्तु मन्त्र इत्यभियुक्तप्रयोगविषय एव मन्त्राख्येति ऊहादीनां अभियुक्तप्रयोगविषयत्वात् । न मन्त्रत्वप्राप्तिरिति प्रतिपादितत्वेन तदनुसारेण मन्त्रत्वसाधकस्याभियुक्तप्रयोगस्याभावात् ऊह्यमानस्य मन्त्रमध्ये प्रवेशस्यापि आम्नायमानं ह्यनुषज्यमानमन्तर्गतं मन्त्रविचारणायामितिरीत्या

विशेषरूपत्वाभावेन विशेषरूपस्य मध्ये प्रवेशस्योहेऽभावेन मन्त्रवाक्येन सह एककार्यकारित्वेन मन्त्रवाक्यावयवत्वे साधकत्वे तस्य ऊहसत्त्वेऽपि रथघोषादौ व्यभिचारेण हेतुत्वायोगादित्यर्थः । एवं मन्त्रत्वाभावादेः आपादनानुपपत्तिं प्रतिपाद्य अनवयवत्वप्रसङ्गात् इत्युक्तसूचितार्थाभिधानेन मन्त्रावयवत्व एव कश्चित् विशेषोऽस्ति । यो रथघोषादि-व्यावृत्तः तेन च मन्त्रत्वसाधनं नाभिप्रेतं किन्तु मन्त्रावयवत्वमात्रमेवाङ्गीक्रियतेऽभियुक्तप्रयोगविषयत्वेन एव मन्त्रतायाः सिद्धत्वेन प्रकृते तदभावात् इत्यभिप्रेत्य रथघोषादिव्यावृत्तः कोऽसौ विशेषः किं चात्र ज्ञापकं कथं च तस्योहसद्भावेन तदभावापादनोपपत्तावपि तन्न्यायेन प्राप्तं प्रकृते ओङ्कारस्य सूत्रत्वेऽपि सूत्रावयवत्वमित्येतदङ्गी-कर्तव्यमित्यतो मीमांसकसाधकादिकमाह **तथापि इत्यादिना । ऊहप्रवरेति** । सौर्यादियागे अतिदेशप्राप्तानां अग्नये जुष्टं इत्यादिमन्त्राणामर्थसमन्वयसिद्ध्यर्थमग्न्यादिपदस्थाने सूर्यादिपदप्रक्षेपः । ऊहः । यजमानस्य वाशिष्ठमैत्रावरुण-कौण्डिन्य इत्यार्षेयसंकीर्तनं प्रवरः । अदीक्षिष्टायं ब्राह्मण इति मन्त्रप्रयोगकाले नारायणशर्मा नारायणशर्मणः पुत्रो नारायणशर्मणः पौत्रः भास्करशर्मणो नप्तेत्यादि यजमानपित्रादि नामसङ्कीर्तनं नामधेयम् । एतेषामित्यर्थः । यद्यपि ऊहादेः मन्त्र इत्यभियुक्तप्रयोगविषयत्वाभावेन मन्त्रत्वाभावे मन्त्रनियतस्यानुष्ठानप्रकाशने विनियोगस्याभावेन विनियोगैकप्रमाणस्य नियमात् दृष्टानुविद्धमन्त्रकार्यकरत्वस्याभावात् वेदत्वादिविशिष्टमपि मन्त्रकार्यकरत्वं न मन्त्रा-वयवत्वसाधकं संभवति । तथापि अर्थद्वारकल्पनैकदेशत्वात् इत्युक्तं न्यायेन सिद्धान्ते वेदत्वस्याभ्युपगमात् । अनुष्ठानप्रकाशने विनियोगादेः मन्त्रनियतत्वाद्यङ्गीकारेण मन्त्रत्वाभावे तदभावाङ्गीकारस्य वेदत्वाभावाङ्गीकार एव पर्यवसानापत्त्या सिद्धान्तविरोधः स्यात् । तत्सिद्धान्तसंरक्षणाय अनुष्ठेयप्रकाशने विनियोगादेः मन्त्र इव ऊहादावपि अङ्गीकर्तव्यत्वात् युक्तं मन्त्रकार्यकरत्वम् । अत एव रथघोषादौ मन्त्रकार्यकरत्वस्य संभवात् तत्र व्यभिचाराभिधानं शास्त्रदीपिकादौ युक्तम् । अन्यथोक्तरीत्या तत्र मन्त्रकार्यकरत्वाभावेन तदभिधानानुपपत्तिप्रसङ्गात् । अत एव वेदत्वे सति इत्यादिविवक्षया रथघोषादौ व्यभिचारपरिहारशङ्कनं तट्टीकायां युक्तम् । तदेतदभिप्रेत्योक्तं तेषां अपीष्टमेवेतीति ज्ञेयम् । असङ्गमित इति पाठः स्वरसः । असङ्गतेति पाठेऽपि अयमेवार्थः । न चोङ्कारस्य उत्तरसूत्रेषु अनुगतिरूहः । देवस्यत्वेत्यादिमन्त्रेषु सूर्यादिशब्दोहेऽग्निशब्दादेरिव कस्यचित् स्थानिनः शब्दस्याभावात् इति अप्पय्यभट्टोजिभ्यां उक्तम् । तदूहशब्दस्य विकृतप्रयोगपरत्वानङ्गीकारेणापहस्तितम् । यदपि भट्टोजीकेनानुषङ्गस्य ऊहात् भेदेन व्यवहाराच्च । यथाहुः । आम्नायमानं हि अनुषज्यमानमन्तर्गतं मन्त्रनिरूपणायामिति अनाम्नातेषु मन्त्रत्वमाम्नातेषु हि विभागे ऊहः स्यात् इति चेति ।

**स०व्र०— मन्त्रेष्वपीति** । न चेष्टापत्तिः ऊहप्रवरनामधेयामन्त्रत्वस्य द्वितीये सिद्धान्तितत्वादिति वाच्यम् । मन्त्रेण सहैककार्यकारित्वं न स्यादित्यापादनात् ।

**कुण्डल०— वाक्यात् पृथगिति** । वाक्यानवयव इत्यर्थः । **मन्त्रेष्विति** । अग्नये जुष्टं निर्वपामीत्यादि-मन्त्रेषूह्यमानस्य सूर्यायेत्यादिपदस्य मन्त्रेण सहैककार्यकारित्वाभावरूपमन्त्रानवयवत्वप्रसङ्गादित्यर्थः । तेनोहप्रवर-नामधेयानाममन्त्रत्वस्य पूर्वतन्त्रे द्वितीये सिद्धान्तितत्वादिष्टापादनमेतदिति चोद्यं निरस्तम् । ऊह्यमानस्य सूर्याये-त्यादिपदस्य मन्त्रेण सहार्थप्रकाशनलक्षणैककार्यकारित्वेन तदभावरूपमन्त्रानवयवत्वापादने त्विष्टापत्त्ययोगात् ।

**स०ना०**— एवं चोङ्कारस्य प्रथमसूत्रानवयवत्वं सुस्थमेवेत्यत आह **न चोह्यमानमिति । मन्त्रेष्वपीति ।** मन्त्रेषु वेदवाक्येषु राजन्तमध्वराणामित्यस्यां ऋचि अनुवर्तमानस्य उपेमसीत्यस्य उपत्वाग्ने दिवे दिव इति वा मन्त्रानवयवत्वप्रसङ्गादित्यर्थः । नन्वेवं तर्हि प्रत्ययस्य लुक् श्लु लुप इति सूत्रे प्रत्ययग्रहणमपि तत्सूत्रावयवमापद्येतेति चेत् न । वैषम्यात् । प्रत्ययशब्दार्थस्य सूत्रे अन्वयाभावेन तदनवयवत्वात् इह च समन्वयसद्भावेन अवयवत्वस्य प्रामाणिकत्वात्तदभावोऽनिष्ट एवेति ।

**विठ्ठ०— मन्त्रेष्वप्यूह्यमानस्येति ।** मन्त्रेषूह्यमानस्योङ्कारस्य मन्त्रावयवतायाः 'मन्त्रेष्वेतेषु सर्वेषु वाच्यस्तारेण केशव' इत्युक्त्या मन्त्रशास्त्रप्रसिद्धत्वादिति भावः ।

**चषकः— मन्त्रानवयवत्वप्रसङ्गादिति ।** मन्त्रनिर्वाह्यकार्यनिर्वाहकत्वाभावरूपमेवात्रापाद्यमानममन्त्रत्वम् । तेनोह्यप्रवरनामधेयानां आम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यादित्युक्तदिशा मन्त्र इति अभियुक्तप्रयोगविषयत्वरूपमन्त्रत्वमन्त्रत्वाभावरूपामन्त्रत्वस्य द्वितीये सिद्धान्तिततयेष्टापादनमेवैतदिति शङ्कानवकाशः ॥

**काशी०**— नन्वस्तु प्रतिसूत्रमोङ्कारस्योहः । तावता कथमवयवत्वसिद्धिरत आह **न चेति ।** ऊह्यमानं उच्चार्यत्वेनानुसन्धीयमानमुच्चार्यमाणं वा । **वाक्यात्पृथगिति ।** वाक्यानन्तर्गतमित्यर्थः । वाक्यानवयव इति यावत् । ननु पूर्वमोङ्कारस्य सकलसूत्रावयवताया अनुक्तत्वात्तद्व्यवस्थापनमसङ्गतमयुक्तं च । सर्वत्रोङ्कारार्थस्यानन्वयात् । किं च तत्तत्सूत्राद्यन्तयोरूह्यमानोङ्कारस्य तत्तत्सूत्रान्तर्गतत्वे तद्घटितसमुदाय एव सूत्रव्यवहारापत्तिः । तथात्वे च तुल्यन्यायेन जपादिकाले मन्त्राद्यन्तयोरुच्चार्यमाणोङ्कारस्यापि तदन्तर्गतत्वापत्त्या प्रतिनियताष्टाक्षरत्वादिव्यवहारानुपपत्तिः । अत एव मन्त्रेष्वपीत्युक्तातिप्रसङ्गोऽपीष्टापत्त्यैवापोढो निर्णीतश्च । द्वितीये ऊह्यप्रवरनामधेयानाममन्त्रत्वमिति । मैवम् । सूत्रेण सहैककार्यकारित्वरूपं हि सूत्रावयवत्वं प्राग्विवक्षितम् । तच्चोङ्कारस्य दृष्टार्थमादाय प्रथमसूत्रं प्रतीवादृष्टार्थमादाय समस्तशास्त्रं प्रत्येव स्रवतीत्यादिश्रुतिसिद्धत्वादभिप्रेतमतो नासङ्गतिः । यत्तु तदेकदेश एव तदवयवत्वव्यवहारो न तु तत्कार्यकारिण्यप्यतिप्रसङ्गात् । न चोङ्कारः सूत्रैकदेश इति न तत्र तदवयवत्वव्यवहारो युक्त इति । तन्न । एककार्यकारिशब्दसमुदायरूपसूत्रैकदेशत्वस्य विवक्षितत्वात् । यथा प्रतिज्ञाहेत्वादीनां भिन्नवाक्यत्वेऽपि परार्थानुमितिरूपैककार्यकारिशब्दसमुदायात्मकन्यायावयवत्वम् । तथोङ्कारस्यादृष्टरूपैककार्यकारिशब्दसमुदायरूपसूत्रावयवत्वमक्षतमेव । न चैवमोङ्कारस्य सर्वसूत्रावयवत्वात्प्रथमसूत्रेऽवयवतयेति ग्रन्थासङ्गतिरिति वाच्यम् । यतः सूत्रत्वघटकसारवत्त्वं विशिष्टार्थबोधकत्वरूपं विशिष्टार्थसाधकत्वरूपं चेति द्विविधम् । तत्राद्यकल्पापेक्षया प्रथमसूत्रावयवत्वं द्वितीयकल्पापेक्षया तु सर्वत्रावयवत्वमुक्तम् । अदृष्टरूपविशिष्टार्थसाधकत्वस्योङ्कारघटितसमुदाय एव संभवादित्यविरोधः । एतदभिप्रायेणैव सर्वास्वपि ब्रह्मविद्यास्विति घटकत्वार्थकसप्तमीप्रयोगः । अन्यथा सर्वासां ब्रह्मविद्यानामित्यवक्ष्यत् । एतेनोङ्कारार्थस्य सर्वत्रानन्वयादित्यपास्तम् । अनन्वयेऽप्येककार्यकारित्वेनावयवत्वस्योक्तत्वात् । अत एव किं चेत्यादिकमप्यपास्तम् । अर्थविशेषबोधकत्वघटितसूत्रत्वादेरोङ्कारव्यावृत्तत्वेन तद्घटितसमुदाये तादृशसूत्रत्वादिव्यवहारापत्त्यभावात् । अर्थविशेषसाधकत्वघटितसूत्रत्वादिव्यवहारस्येष्टत्वात् ।





अत एवेत्युक्तं अत एव प्रत्युक्तम् । उक्तद्वितीयकल्पे इष्टापत्त्ययोगात् । उक्तं च चन्द्रिकायाम् । अध्याह्रियमाणस्यापादितममन्त्रावयवत्वं मन्त्रेण सहैककार्यकारित्वाभाव इति नेष्टापत्तिरिति । ऊहप्रवरनामधेयानां पुनरन्वयसमर्पकत्वादिना मन्त्रावयवानामेव सतामपौरुषेयत्वादिघटितमन्त्रत्वाभाव एव द्वितीये सिद्धान्तित इति न तद्विरोधः । न चैवमपि अथातो ब्रह्मजिज्ञासा कर्तव्येत्यादिसमुदायस्यापि सूत्रत्वापत्तिरुक्तसूत्रलक्षणाक्रान्तत्वादिति वाच्यम् । यतो विशिष्टार्थबोधपरत्वरूपमेव विशिष्टार्थत्वमित्युक्तम् । तच्च तादृशबोधेच्छया सूत्रकृदुच्चरितत्वम् । कर्तव्यादिपदं च न तथेति न दोषः । न चैवं तुल्यन्यायेन मौनिश्लोकादेः श्लोकत्वानुपपत्तिर्मौन्यनुच्चरितत्वादिति वाच्यम् । आनुपूर्वीविशेषावच्छिन्नस्य मनसोच्चार्यमाणत्वात् । कर्तव्यादिपदे तदभावात् । तदर्थकपदान्तराध्याहारेणापि विवक्षितार्थसिद्धेः । यद्यप्यत्रैककार्यकारित्वरूपावयवत्वस्य विवक्षितत्वे श्रौतार्थबलेनोङ्कारस्योहो वा बहिर्भूतस्योच्चारणं वेत्यग्रिमशङ्कया असङ्गतिः । अदृष्टार्थत्वेनाध्याहारस्य तत्रोहशब्देन ग्राह्यतया तद्बहिर्भूतत्वपक्षस्य श्रौतार्थवादविरुद्धस्याप्रसक्त्या विकल्पानुपपत्तेः । तथाऽपि यथा नानुपपत्तिस्तथा तद्ग्रन्थस्य व्याख्यास्यमानत्वान्न दोषः । **मन्त्रेष्विति** । इषेत्वोर्जेत्वेत्यादिमन्त्रेष्वध्याह्रियमाणस्य छिनत्त्यादेर्मन्त्रेण सहान्वयबोधादिरूपैककार्यकारित्वाभावप्रसङ्गादित्यर्थः ।

**गूढ०— मन्त्रेष्वपीति** । मन्त्रेष्वध्याह्रियमाणस्य तदनवयवत्वे 'या ते अग्ने हराशया या ते अग्ने रजाशये'त्यादावध्याह्रियमाणस्य तत्र 'तनूर्वर्षिष्ठे'त्यादेस्तदवयवत्वं न स्यादित्यर्थः ।

**१०० सु०— ततश्च प्रतिसूत्रमाद्यन्तयोरुच्चारणे गौरवं स्यादित्यादावेव ओङ्कारः अधिकृतत्वेनोच्चार्यते ।**

**परि०—** अनवयवत्वसाधकप्रागुक्तहेतोः का गतिरित्यतोऽन्यथोपपत्तिमाह **ततश्चेति** । **प्रथम**सूत्रावयवत्वे सतीत्यर्थः । यद्वा प्रतिसूत्रमाद्यन्तयोरोङ्कर्तव्यत्वस्यावश्यकत्वे सतीत्यर्थः ॥ **प्रतिसूत्रम्** । द्वितीयादिसर्वसूत्रेष्वित्यर्थः । **आदावेवेति** । प्रथमसूत्र एवेत्यर्थः । ॐकार इत्येकवचनेन **प्रथमसूत्रे**ऽपि आदावेवोच्चार्यमाणः न त्वन्तेऽप्युच्चार्यमाण इति गम्यते । अन्तिमस्य सूत्रानवयवत्वेनादृष्टमात्रार्थतया पृथक्करणाभावेऽपि एतत्सूत्रमात्रसंबन्धत्वशङ्कानुदयेनादिमोङ्कारस्यैव तथात्वे शङ्कोदयात् । यद्वोङ्कार इत्याद्यन्तयोरप्युच्चार्यमाणो गृह्यते । केचित्तु प्रथमसूत्रेऽप्येक एवोङ्कार आदावुच्चार्यमाणः । अन्तिमस्तु सर्वसूत्रपारायणानन्तरमनावृत्तिःशब्दादिति सूत्रसमाप्त्यनन्तरमुच्चार्यमाण एव वेदाध्ययनवदेवेत्याहुः । **अधिकृतत्वेनेति** । द्वितीयादिसूत्रेऽप्यनुवर्तमानत्वेनेत्यर्थः । इदं सर्वत्र द्वितीयादावप्यनुवर्त्यतामिति बुद्ध्योच्चार्यत इति यावत् ।





**यादु०— अधिकृतत्वेनेति**। 'ङ्याप् प्रातिपदिकात्' इत्यादाविव उत्तरत्रानुषङ्गार्थत्वेनेत्यर्थः। न चैवमोङ्कारस्य तद्वदेवोत्तरसूत्रेष्वप्यन्वयप्रसङ्गः। अनन्वयेऽप्यदृष्टार्थमेवानुषङ्गस्योक्तश्रुतिसिद्धत्वात्।

**वं०प०— अधिकृतत्वेनेति**। सर्वत्रानुगत्यर्थत्वेनेत्यर्थः।

**आनन्दः**— अस्त्वेवमवयवत्वं तथापि प्रतिसूत्रं कुतो नोच्चार्यत इत्यत आह **ततश्चेति**। **अधिकृतत्वेनेति**। यथा प्रत्ययः परश्चेत्येतदधिकृतत्वादुत्तरत्रानुवर्तते। एवमधिकृतत्वेनास्याप्युत्तरत्रानुवृत्तिर्ज्ञातव्येति भावः।

**श्रीनिधि०— अधिकृतत्वेनेति**। अधिकृतत्वेनाधिलक्षितत्वेन निमित्तेनेति इत्थंभूतलक्षणे तृतीया। अधिकार इति अनुवृत्तिरित्यर्थः।

**वा०चं०**— नन्वेवमध्याहारस्यावश्यकत्वेऽध्याहृतस्य छिनद्मीत्यादेः प्रयोगदशायामुच्चारणनियमवत् प्रतिसूत्रमोङ्कारस्य नियतोच्चारणापत्त्योत्तरत्राधिकाराभावेनासंहिततया निर्देशस्य तत्सूचकत्वं न सिद्ध्येदिति नान्यथासिद्धिरुक्ता स्यादित्यत आह **ततश्चेति**। अत्र ततश्च गौरवं स्यादित्यधिकृतत्वेनोच्चार्यत इति लाघवतर्कसहकृतोहस्यानुषङ्गरूपाधिकृतत्वेनोच्चारणे प्रयोजकत्वोक्त्या न ह्यनुगतिरूहः।

**वा०र०**— ऊहानुषङ्गयोः भेदेन प्रतिपादनात् उत्तरसूत्रेषु अनुगतेरूहत्वं नोपपद्यते इत्युक्तम्। तद्दूषणपरिहारोऽपि मूलसूचित इत्याह **अत्र ततश्चेति**। **अनुषङ्गरूपाधिकृतत्वेनेति**। अत्रानुषङ्गो नाम तन्त्रेणाम्नानं विवक्षितम्। अनुषज्यत इति अनुषङ्ग इति व्युत्पत्त्या अनुषज्यमानवाचकानुषङ्गपदस्यानुषज्यमानाम्नानेऽपि प्रयोगेण वाऽनुगतिरूपानुषङ्गतन्त्रेणाम्नानयोः अनुषज्यमानरूपैकार्थसमवायेन वा लक्षणायाः तद्ग्रहणोपपत्तेः। ततश्चानुषङ्गरूपं यदधिकृतत्वेनोच्चारात् तत्रेत्यर्थ उपपन्नो भवति। यद्वा अनुषङ्गं रूपयतीति व्युत्पत्त्या अनुषङ्गप्रयोजकतैवोक्ता। अयमर्थः। श्रौतार्थवादबलात् अध्याहाररूप ऊहस्तावत् कार्यः प्रथमसूत्रे। स चाध्याहृतोङ्कारः उत्तरसूत्रेषु अनुषज्यमानो भवति। तस्य चोत्तरसूत्रेषु अनुषङ्गरूपं यदधिकृतत्वेनोच्चारणम् उत्तरसूत्रेषु अनुगतिहेतुभूतं यदधिकृतत्वेनोच्चारणमिति यावत्। तत्र प्रयोजको हि श्रौतार्थवादलब्धः ऊहः एव। अर्थवादेनोत्तरसूत्रेष्वपि ऊहाभिधानेऽपि तस्य लाघवसहकारे उत्तरसूत्रेषु प्राप्तस्य ऊहस्य निवृत्त्या प्रथमसूत्रे एव ऊहं कृत्वा तल्लब्धोच्चारणं तन्त्रेणाभिधानमङ्गीकृत्य ओङ्कारस्य उत्तरसूत्रेषु अनुगतिरूपोऽनुषङ्गः कार्य इत्यस्य सिद्धत्वात्। न चैवं सति अनुगत्यूहयोः अभेदोऽङ्गीकृतः। येन भेदाभिधानविरोधोद्भावनं युक्तं स्यात्। इति। यद्यपि तेन विकृतिप्रयोगरूपोहानुषङ्गयोः भेदनियामकोक्त्या तदभेदस्य च कर्मव्युत्पत्त्यनाश्रयणेन अध्याहारपरत्वमात्राङ्गीकारपराहततया तत्पक्षोक्तदूषणपरिहाराय ग्रन्थाभिप्रायवर्णनानर्थक्यमित्याभाति। तथापि उक्तरीत्या अध्याहाररूपोहस्य नानुषङ्गाभेदः इति सुज्ञेयमेव। वस्तुतो अध्याहाररूपस्यापि सिद्ध एवानुषङ्गात् भेद इति प्रतिपादनाय अभ्युच्चयेन एतद्ग्रन्थप्रवृत्त्या तद्वर्णनानर्थक्यानापत्तिरिति ज्ञेयम्। अज्ञानमूलमिति सूचितं भवतीति। यद्यप्यस्य दूषणस्य पश्चात्तमत्वात् न तदलग्नकतासूचनं पूर्वग्रन्थे न कार्यम्। तथा चेत्यभिप्रायप्रतीतेः तस्यालग्नकत्वमित्येव





वाच्यम्। तथापि पश्चात्तनमपि ग्रन्थकृता दूषणत्वेन संभाव्यते इति तत्परिहारायाधिकाभिधानं युक्तमेव। ततश्च तेन सूचनेन परकीयं दूषणम्। उद्भावितं वा मा वा परिह्रियत एव। पश्चात्तनं तदुद्भावनं तु ग्रन्थकर्तृभिः संहितस्य स्पष्टीकरणार्थमेवेत्यनुकूलमेवेति अभिप्रायेण तथोक्तमिति ज्ञेयम्। एवमुत्तरत्रापि परिहारः ऊह्यः।

**कुण्डल०— अधिकृतत्वेनेति**। धातोः ङ्याप् प्रातिपदिकादित्यादाविवोत्तरसूत्रेष्वनुगत्यर्थत्वेनेत्यर्थः। न चैवमोङ्कारस्य तद्वदेवोत्तरसूत्रेष्वन्वयप्रसङ्ग इति वाच्यम्। तत्र दृष्टार्थसमर्थकत्वाभावेऽपि स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्चेति श्रुतिसिद्धस्रवणविशरणपरिहाररूपादृष्टार्थवत्त्वेन तत्रानुगत्युपपत्तेः। एतेनेषेत्वेत्यादाविवोत्तरसूत्रेषु साकाङ्क्षत्वाभावादध्याहारपर्याय ऊहो न युक्त इति निरस्तम्। श्रुतिबलादङ्गीकृतस्योहस्याकाङ्क्षानपेक्षत्वात्। ओङ्कारस्तु पृथगुच्चरितो वेदितव्यो नाथशब्दवत्सूत्रोपनिबद्ध इति सन्न्यायरत्नावलीकाराणामुक्तिरपि ओङ्कारः सूत्रात्पृथगसंहिततयोच्चार्य इत्यर्थपरा नत्वथशब्दवत्सूत्रावयवपरा न भवतीति। तथात्वे ओङ्कारश्चाथशब्दश्च ओतत्ववाची ह्योङ्कार इत्यादिस्मृतिभाष्यविरोधात्।

**स०ना०— गौरवं स्यादिति**। यद्यपि विधिप्राप्तत्वात् गौरवं न दोषाय। तथाप्यस्तोभैः सूत्रेऽनुवृत्त्या लाभसंभवे साक्षाद्ग्रहणस्यास्तोभत्वविघातकत्वेन दोषत्वमेवेति ध्येयम्।

**विट्ठ०— अधिकृतत्वेनेति**। उत्तरसूत्रेषु अनुषङ्गार्थत्वेनेत्यर्थः।

**चषकः— अधिकृतत्वेनेति**। अनुषज्यमानत्वेनेत्यर्थः। न चानुषक्तस्य 'ङ्याप् प्रातिपादिकात्' इत्यादेरुत्तरत्रान्वयदर्शनात्प्रकृतेऽप्युत्तरसूत्रेष्वन्वयोऽभिधातव्यः स चाशक्य इति वाच्यम्। अन्वयराहित्येऽपि दर्शितार्थवादप्रत्यापितादृष्टार्थोद्देशेनैवानुषज्यमानत्वात्।

**काशी०—** एतावता कथमुक्तशङ्कापरिहार इत्यत आह **ततश्चेति**। प्रतिसूत्रमाद्यन्तयोरोङ्कारोच्चारणस्य कर्तव्यत्वसिद्धौ चेत्यर्थः। **आदौ** प्रथमसूत्रस्यादौ। **अधिकृतत्वेन** उत्तरत्राध्याहारार्थत्वेन। **उच्चार्यत इति**। एतावता सूत्रकृतादावोङ्कार एव उच्चारितो न विद्यत इति शङ्का निरस्तेति ज्ञेयम्।

**गूढ०—** अस्त्वेवमवयवत्वं तथापि प्रतिसूत्रं कुतो नोच्चार्यत इत्यत आह **ततश्चेति**। **अधिकृतत्वेनेति**। यथा प्रत्ययः परश्चेत्येतदधिकृतत्वादुत्तरत्रानुवर्तते। एवमधिकृतत्वेनास्याप्युत्तरत्रानुवृत्तिर्ज्ञातव्येति भावः।

**१०१ सु०— तस्य संहिततया निर्देशे, प्रथमसूत्रावयव एवायं विज्ञायेत। तन्मा विज्ञायीति शिष्टैः पृथगोङ्क्रियते।**

**परि०—** अस्त्वेवं पृथक्पाठस्तु कुत इत्यत आह **तस्येति**। संहिततया संश्लिष्टतया निवेशेऽध्ययने कृते सतीत्यर्थः। प्रथमसूत्रावयव एवेत्यत्रावयवशब्द उपकारकमात्रपरः नत्वन्वय-





प्रतियोगिसमर्पकरूपावयवपरः। तथात्वे सति तन्मा विज्ञायीत्युत्तरवाक्ये प्रथमसूत्रावयवत्वमात्रं विज्ञातं मा भूत् किन्तु द्वितीयादिसूत्रावयवत्वमपि व्यज्ञायीत्यर्थस्य वाच्यत्वेन द्वितीयादावदृष्टमात्रोपकारकतया अन्वयप्रतियोगिसमर्पकत्वस्य बाधात् । यद्वा प्रथमसूत्रावयव एव विज्ञायेतेति द्वितीयादावदृष्टमात्रोपकारकत्वेन अनुवृत्तिर्न ज्ञायेतेत्येवं व्याख्येयम् ॥ **पृथगोङ्क्रियत इति**। यथा पाणिनीये। 'प्रत्ययः' 'परश्च' 'धातोः' 'अङ्गस्ये'त्यादीन्यनेकसूत्रेष्वनुवृत्त्यर्थं पृथक्कृत्य निर्दिश्यन्ते न तूपरितनसूत्रसंश्लिष्टतया तथा इहापीति भावः। 'ढ्रलोपे पूर्वस्य दीर्घोऽण' इत्यादौ पाणिनीये संहिततया निर्दिष्टस्यापि दीर्घादिपदस्य अनेकसूत्रेष्वनुवृत्तिर्भाष्यवृत्तिकारादिव्याख्यानाद्यथाऽवसीयते तथेहापि भाष्यकारादिव्याख्यानात् अनुवृत्त्यवगमसंभवादनुवृत्त्यर्थं शिष्टानां पृथक्पाठ इत्ययुक्तम् ।

**आनन्दः**— ननु एत्येधत्यूठ्सु इत्यत्र वृद्धिशब्दस्यानुवृत्तावपि वृद्धिरेचीत्यत्र संहिततया निर्देशवत् प्रकृतेऽप्यस्तु संहिततया निर्देश इत्यत आह **तस्येति**। तत्रानुवृत्तौ वाक्यन्यूनतारूपज्ञापकस्येव प्रकृते जन्माद्यस्य यत इत्यादावनुवृत्तावसंहिततया निर्देशातिरिक्तज्ञापकाभावात्तस्यावश्यकत्वमिति भावः ।

**कं०रा०— तस्येति**। ॐकारस्य संहिततया निर्देशोऽथशब्द इव **प्रथमसूत्रावयव एवायं विज्ञायेते**त्यर्थः।

**वा०चं०**— आम्नायमानं ह्यनुषज्यमानमित्यनुषज्यमानस्य मन्त्रत्वोक्त्याऽम्नातेष्वमन्त्रत्वमित्यूहस्य अमन्त्रत्वोक्त्या चानुषङ्गोहयोर्भेदेन व्यवहारात्तद्विरोध इति कस्यचित् प्रलपनमज्ञानमूलमिति सूचितं भवति । यदर्थमेतावदुक्तं तदिदानीमाह **तस्येति** ।

**स०ना०— शिष्टैरिति**। शिष्टानां पृथगोङ्करणस्य सूत्रकारपृथगोङ्करणमूलत्वेन तदनुमापकत्वात् तदुपन्यासो नासङ्गतः। तदिदमुक्तं **शिष्टैरिति**। अनुशिष्टैरित्यर्थः।

**काशी०**— नन्वेवमोङ्कारार्थस्योत्तरत्राप्यन्वयापत्तिरिति चेन्न । दृष्टार्थत्वेनाधिकृतस्योत्तरत्रान्वयनियमेऽप्यदृष्टार्थत्वेनाधिकृतस्य तदभावे बाधकाभावात् । तथाऽपीत्यादिनोक्तं दूषयति **तस्येति** । ॐकारस्येत्यर्थः । प्रथमसूत्रस्य प्रथमावयव एवायमोङ्कारो विज्ञायेत। तदोङ्कारस्य प्रथमसूत्रप्रथममात्रावयवत्वं मा विज्ञायीति विज्ञातं मा भूदित्येतदर्थं सर्वसूत्रेष्वाद्यन्तावयवत्वज्ञापनार्थमिति यावत्। **पृथगिति**। असंहिततयेत्यर्थः। एतेनोङ्कारस्तु पृथगुच्चरितो वेदितव्यो नाथशब्दवत्सूत्रोपनिबद्ध इति सन्न्यायरत्नावल्यामपि पृथगित्यस्यासंहिततयेत्येवार्थो न त्वनवयवतयेति उक्तवक्ष्यमाणरीत्या तदवयवत्वस्यावश्यकत्वादतो न तद्विरोध इत्यपि सूचितम् ।

**गूढ०**— ननु एत्येधत्यूठ्सु इत्यत्र वृद्धिशब्दस्यानुवृत्तावपि वृद्धिरेचीत्यत्र संहिततया निर्देशवत् प्रकृतेऽप्यस्तु संहिततया निर्देश इत्यत आह **तस्येति**। तत्रानुवृत्तौ वाक्यन्यूनतारूपज्ञापकस्येव प्रकृते जन्माद्यस्य यत इत्यादावनुवृत्तावसंहिततया निर्देशातिरिक्तज्ञापकाभावात् तस्यावश्यकत्वमिति भावः ।





**१०२ सु०— न च व्याख्यानतोऽप्यधिकारो ज्ञायत इति व्यर्थं पृथक्करणमिति वाच्यम्। अन्तरङ्गज्ञापकाभाव एव बहिरङ्गस्यान्वेषणीयत्वादिति।**

**परि०—** किन्त्वनवयवत्वादेवेत्यत आह **न चेति**। अधिकार उत्तरसूत्रेष्वनुषज्यमानत्वमित्यर्थः॥ **अन्तरङ्गेति**। असंहितापाठोऽन्तरङ्गम्। व्याख्यानं बहिरङ्गमिति भावः। इतिपदस्यैतदुक्तमिति पूर्वेणान्वयः।

**यादु०— न च व्याख्यानत इति**। श्रौतार्थवादानुसारिव्याख्यानत इत्यर्थः। **अन्तरङ्गेति**। पृथक्करणमेवात्रान्तरङ्गज्ञापकमिति भावः।

**वं०प०— अधिकृतत्वेनेति**। सर्वत्रानुगत्यर्थत्वेनेत्यर्थः।

**आनन्दः— व्याख्यानतोऽपीति**। व्याख्यानकृता तदोङ्कारः सर्वत्रानुवर्तृतामिति व्याख्यानत इत्यर्थः। **अन्तरङ्गेति**। शास्त्रकर्तृकं हि ज्ञापकं अन्तरङ्गं कर्त्रन्तरनिरपेक्षत्वाद्व्याख्यानकर्तृकं बहिरङ्गम्। कर्त्रन्तरसापेक्षत्वादिति भावः। यद्वा शास्त्रकरणव्यापारातिरिक्तव्यापारानपेक्षं ज्ञापकमन्तरङ्गम्। व्याख्यातृकर्तृकं त्वतिरिक्तं व्यापारसापेक्षमेव। एवं च शास्त्रकर्तृकृतव्याख्यानादेवाधिकारो ज्ञायत इति शङ्का निरस्ता भवतीति भावः।

**श्रीनिधि०— अन्तरङ्गेति**। उच्चारणमन्तरङ्गमिति ज्ञेयम्।

**वा०चं०—** अधिकारे ज्ञापकान्तरं शङ्कते **न चेति**॥ **अन्तरङ्गेति**। वाक्यस्य निर्देशापेक्षया व्याख्यानस्य बहिरङ्गत्वादिति भावः।

**वा०र०— ज्ञापकान्तरमिति**। व्याख्यानतो विशेषप्रतिपत्तिः न हि सन्देहादलक्षणमिति महाभाष्योक्तज्ञापकान्तरमित्यर्थः। महाभाष्यकृता हि सिद्धे शब्दार्थसंबन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मपरिमाणे यथा लौकिकवैदिकेष्विति वार्तिकस्थसिद्धशब्दस्य सिद्धमाकाशमित्यादाविव नित्यार्थकत्वं प्रतिज्ञाय तदुपपादनाय सिद्धशब्दः कार्यो वेति कार्यप्रतिद्वन्द्वितया सिद्धशब्दोपादानात् नित्यार्थत्वावधारणं युक्तम्। असमक्ष इत्यादाविव अवधारणकल्पनया सिद्ध एवेत्यर्थप्राप्तावनित्यार्थकत्वावधारणं युक्तम्। अत्यन्तसिद्धः सिद्ध इति पूर्वपदलोपो वात्र ज्ञेयः। तथाच नित्यार्थकत्वमित्येवं समाधित्रयमभिधाय व्याख्यानतो विशेष इति परिभाषारूपेणोक्त्वा नित्यपर्यायवाचिनो ग्रहणमिति व्याख्यास्यामः। इति चतुर्थेऽपि समाधिरभिहितः। सोऽयं समाधिस्तज्ज्ञापकतया विवक्षितः तेनैव ज्ञातुं शक्यः। अयमोङ्कारः उत्तरसर्वसूत्रेष्वनुगत इति। तथा च व्याख्यानेनैवोत्तरत्रानुवृत्तिसिद्धेः अनुगतिसूचनार्थम् ओङ्कारस्य पृथगुच्चारणं न कर्तव्यमिति मूलार्थः। अत एव च। अकर्तरि च कारके इत्यादितो अकर्तरीत्यादेः संहिततया निर्दिष्टस्यापि कृत्यल्युटो बहुलमित्येतत्पर्यन्तानुवृत्तिः व्याख्यातृव्याख्यानादेव सिद्ध्यतीति





स्वीकृतम् । सिद्धमिति भावः । एतत्परिभाषार्थस्पष्टीकरणं तु आनन्दमयनये अन्नमयादिशब्दानां च एकार्थत्व-प्रतिपादनपरमूलव्याख्यावसरे भविष्यतीति ज्ञेयम् ।

**स०व्र०**— तर्हि ऊह्यमानस्य व्यर्थत्वमित्यत आह **न चेति** । ओङ्कारस्य पृथगुच्चारण एव सर्वत्राधिकृतत्व-ज्ञानादुच्चारणस्यान्तरङ्गत्वं व्याख्यानं तूच्चारणानन्तरभावित्वात् बहिरङ्गमिति भावः ।

**कुण्डल०— अन्तरङ्गज्ञापकेति** । असंहिततया निर्देशलक्षणान्तरङ्गज्ञापकेत्यर्थः ।

**विठ्ठ०— व्याख्यानत इति** । श्रौतार्थवादानुसारेण सर्वत्रानुषङ्गव्याख्यानत इत्यर्थः ।

**चषकः— न च व्याख्यानत इति** । अणिण्ग्रहणेषु सन्देहादनिर्णयशङ्काविधूननफलकतया 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमि'ति परिभाषाया उपेततया प्रकृते श्रौतार्थवादानुसारिव्याख्यानेनैव निर्वाहादित्यर्थः ॥ **अन्तरङ्गेति** । वाक्यघटकपदसमभिव्याहारापेक्षया व्याख्यानस्य बहिरङ्गत्वादिति भावः ।

**काशी०**— ननु तत्तु समन्वयादित्यादौ तच्छब्दादिवदोङ्कारस्यापि संहिततयैव निर्देशोऽस्तु । व्याख्यानेनैव अध्याहारज्ञानसंभवादित्याशङ्क्य निराह **न चेति** । **अन्तरङ्गेति** । सौत्रज्ञापकाभाव एव व्याख्यानस्यापेक्षणीय-त्वादित्यर्थः । न चासंहिततया निर्देशस्याधिकारज्ञापकताऽपि व्याख्यानेनैव ज्ञातव्येत्यन्ततो व्याख्यानापेक्षा दुर्वारा इति वाच्यम् । तादृशव्याख्यानस्यासंहितारूपज्ञापकसिद्धत्वात् । अन्यथाऽनाश्वासापत्तेरिति भावः ।

**गूढ०— व्याख्यानतोऽपीति** । व्याख्यानकृता तदोङ्कारः सर्वत्रानुवर्ततामिति व्याख्यानत इत्यर्थः । **अन्तरङ्गेति** । शास्त्रकर्तृकं हि ज्ञापकं अन्तरङ्गं कर्त्रितरनिरपेक्षत्वात् । व्याख्यानकर्तृकं बहिरङ्गं कर्त्रन्तरसापेक्षत्वादिति भावः । यद्वा शास्त्रकरणव्यापारातिरिक्तव्यापारानपेक्षं ज्ञापकं अन्तरङ्गम् । व्याख्यातृकर्तृकं त्वतिरिक्तं व्यापार-सापेक्षमेव । एवं च शास्त्रकर्तृकृतव्याख्यानादेवाधिकारो ज्ञायत इति शङ्का निरस्ता भवतीति भावः ।

**प्रदीपः**— नन्वधिकारे पृथगुच्चारणमोङ्कारस्य व्यर्थमित्यत आह **न चेति** । ओङ्कारस्य पृथगुच्चारण एव सर्वत्राधिकृतत्वज्ञानादुच्चारणस्यान्तरङ्गत्वम् ।

**१०३ सु०— तदनेनासंहिततया निर्देशो निमित्तान्तरं वदता हेतोः अन्यथासिद्धिरुक्ता भवति ।**

**परि०**— तावताऽनवयवत्वसाधकहेतोः का गतिरुक्ता इत्यत आह **तदनेनेति** । सर्वत्र इत्यर्धेन ॥

**वं०प०— अन्यथासिद्धिरिति** । लक्षणान्तराभावे सत्यसंहिततया संपाठेऽखिलैः पठ्यमानत्वहेतोः अनवयवत्वरूपसाध्यं विना सर्वत्रानुगतिज्ञापनार्थत्वेनान्यथासिद्धिरित्यर्थः ।





**आनन्दः**— एवं सति फलितमनुमानदोषमाह **तदनेनेति** ।

**कं०रा०**— **हेतोरिति** । लक्षणान्तराभावे सत्यसंहिततया अखिलैः पठ्यमानत्वादिति हेतोः सूत्रानवयवत्व-साधकस्य ॐकारस्य सूत्रावयवत्वेऽप्युक्तनिमित्तान्तरवशात् असंहितपाठोपपत्तेरित्यन्यथासिद्धिरुक्ता भवतीत्यर्थः । यद्यप्यसंहिततया संपाठेऽखिलैः पठ्यमानत्वादित्यादौ असंहितेति समासोऽनुपपन्नः । प्रसज्यप्रतिषेधार्थकनञः क्रियान्वितत्वेन संहितशब्देन सामर्थ्याभावात् । तथाऽप्यकर्तरि च कारके संज्ञायामित्यत्राकर्तरीति निर्देशरूप-ज्ञापकात्समासोपपत्तिरिति ज्ञेयम् ।

**वा०चं०**— अस्त्वयं वाक्याभिप्रायस्तावताऽप्यनुमाने दूषणं किमुक्तं भवतीत्यत आह **तदनेनेति** ।

**वा०र०**— **वाक्याभिप्राय इति** । सर्वत्रानुगतत्वेनेति वाक्यस्य सर्वाणि हि सूत्राणि इत्यादिनोक्ताभि-प्रायोऽस्तु इत्यर्थः । यद्यपि एतदुक्तं भवतीत्यारभ्य गवेषणीयत्वादित्यन्तेनोक्तं वाक्यबललभ्यमेवेति प्राप्तम् । अन्यथाऽयमभिप्राय इति प्रतिज्ञां कुर्यात् । तथापि अभिप्रायतः प्राप्तमपि वाक्यबलादेवेति भावेनोक्तं भवतीति प्रतिज्ञातमिति मूलाभिप्रायं विशदयितुं अभिप्राय इति व्यवहार इति ज्ञेयम् । **अनुमान इति** । अयमोङ्कारो न सूत्रा-वयवः इत्यनुमानाच्च नेत्यर्थः । व्यभिचारादिदोषस्याप्रतीतेरिति भावः ।

**कुण्डल०**— **निमित्तान्तरमिति** । उत्तरसूत्रेष्वनुगतिसूचनलक्षणं निमित्तान्तरमित्यर्थः । **हेतोरिति** । लक्षणान्तराभावे सत्यसंहिततया संपाठे अखिलैः पठ्यमानत्वादिति हेतोरित्यर्थः । नन्वन्यथा सिद्धिनिश्चयो न संभवति । तथाहि । 'स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यत' इति ।

**चषकः**— **निमित्तान्तरम्** उत्तरसूत्रेषु अधिकृतत्वसूचनरूपम् । हेतोः लक्षणान्तरेत्यादिनाऽभिहितस्य अन्यथासिद्धिरप्रयोजकता ।

**काशी०**— एतावता तथाऽपीत्युक्तानुमाने किं दूषणं लब्धमित्यत आह **तदनेनेति** । उक्तशङ्कानिरासपरेण सर्वत्रेत्यादिग्रन्थेन निमित्तान्तरमनुगतत्वरूपं वदता भाष्यकृतेति शेषः । हेतोर्लक्षणान्तराभावे सतीत्यादिहेतो-रन्यथासिद्धिः । साध्यं विनोपपत्तिरित्यर्थः । तथा चाप्रयोजकतेति भावः ।

**गूढ०**— एवं सति फलितमनुमानदोषमाह **तदनेनेति** ।

**१०४ सु०— ननु च श्रौतार्थवादबलेन आद्यन्तयोरोङ्कारस्योहो वा प्राङ्मुखत्वादिवत् बहिर्भूतस्यैव उच्चारणं वा विधेयत्वेन कल्प्यमिति सन्दिह्यते । सत्यम् । सन्देहेऽपि तया प्रणाड्यानुमानस्य सन्दिग्धान्यथासिद्ध्याऽप्याभासत्वमेव । वक्ष्यमाणन्यायेन ओङ्कारार्थस्य प्रथमसूत्रवाक्यार्थे समन्वयेन निश्चयोपपत्तौ बाधितविषयं चानुमानमिति ।**

**अथवा दृष्टान्तदूषणमनेन क्रियते । तथा हि । अखिलैर्वेदपाठकैः पृथग् रूपान्तरेण स्थानव्यत्यासेन यदोङ्क्रियते तदुक्तन्यायेनादावुच्चारणेनैव लब्धेन सर्वत्रानुगतत्वेन कारणेनैवोपपद्यत इति । अनेन दृष्टान्ते साधकस्य हेतोरन्यथासिद्धिरुक्ता भवति । तथा च दृष्टान्तस्य साध्यविकलतेति ।**

**एवमनुमाने निरस्ते निरपवादेनादावुच्चारणेनोङ्कारस्य प्रथमसूत्रावयवतासिद्धावुक्तमुपपन्नम् ।**

**परि०— ऊहो वेति** । अवयवतयाऽध्याहारो वेत्यर्थः । उत्तरमाह **सत्यं सन्देहेऽपीति** ॥ **तया प्रणाड्येति** । प्रागुक्तकोटिद्वयरूपप्रणाड्येत्यर्थः । यद्वा एतदुक्तं भवतीत्यादिनोक्तप्रणाड्येत्यर्थः ॥ **वक्ष्यमाणेति** । ओतत्ववाचीत्यादिना वक्ष्यमाणेत्यर्थः । **अनेन** । सर्वत्रेत्यर्धेन । रूपान्तरेणेत्यस्यार्थः स्थानेति ॥ **हेतोरिति** । अन्यान्यस्थाने पठ्यमानत्वरूपस्य वेदोपक्रमे पठ्यमानोङ्काररूपदृष्टान्ते वेदानवयवत्वसाधकहेतोरित्यर्थः । अग्निमीळ इत्यादौ स्रवणादिदोषपरिहारकतया अध्यापकैरुच्चार्यमाणस्य वेदवाक्यावयवत्वं च वेदबोध्याग्न्यादिरूपार्थे गुणपूर्णत्वादिविशेषणार्पकत्वानुसन्धानाभिप्रायेणेति ध्येयम् । तथैव चन्द्रिकोक्तेः ॥ **साध्येति** । अनवयवत्वरूपसाध्यविकलतेत्यर्थः । अनुमाने सूत्रानवयवत्वसाधकानुमान इत्यर्थः ॥ **उक्तमिति** । ताराथमूलत्वमित्युक्तमित्यर्थः ॥ छ ॥ **उपोद्घातः समाप्तः** ॥ छ ॥

**यादु०— तया प्रणाड्येति** । श्रौतार्थवादबलेनाद्यन्तयोरोङ्कारस्योहविधिकल्पने तेन चावयवत्वकल्पनासिद्धौ प्रतिसूत्रमाद्यन्तयोरुच्चारणे गौरवं स्यादित्यादावेवोङ्कारोऽधिकृतत्वेनोच्चार्येह तस्य संहिततया निर्देशे प्रथमसूत्रावयव एवायं विज्ञायेत तन्मा विज्ञायीति शिष्टैः पृथगोङ्क्रियते । एवं च हेतोरन्यथासिद्धिरिति पूर्वोक्तया परम्परयेत्यर्थः ॥ **प्रथमसूत्रवाक्यार्थ इति** । न चात्रोङ्कारस्तु पृथगुच्चारितो वेदितव्यः । नाथशब्दवत्सूत्रोपनिबद्ध इति सन्न्यायरत्नावलीविरोधो वाच्यः । सन्न्यायरत्नावल्युक्तं पृथक्त्वमसंहिततयोच्चार्यमाणत्वं विवक्षितं न त्वनवयवत्वरूपम् । अन्यथा 'ओङ्कारश्चाथशब्दश्च तस्मात् प्राथमिकौ क्रमात्' इति भाष्योदाहृतप्रमाणेन तत्र ताराथमूलत्वमित्यनुव्याख्यानेन च विरोधप्रसङ्गात् । अतो न कोऽपि विरोध इति । रूपान्तरेणेत्यस्यैव विवरणं **स्थानव्यत्यासेनेति** ॥ **आदावुच्चारणेनेति** । पूर्वोक्तस्थापनानुमानरूपेणेत्यर्थः ।

**वं०प०**— उत्तरमाह **सन्देहेऽपीति** । अनुमानस्याखिलैः पठ्यमानत्वहेतोः ॥ **उक्तन्यायेन इति** । सर्वाणि वेदवाक्यानि प्रत्येकं परब्रह्मप्रतिपादकतया अवान्तरब्रह्मविद्याः । तत्र 'स्रवत्यनोङ्कृतं ब्रह्म' इति वचनात्सर्वास्वपि ब्रह्मविद्यास्वाद्यन्तयोरोङ्कारस्योहः कर्तव्यः । प्रतिवाक्यमाद्यन्तयोरुच्चारणे गौरवं स्यादित्यधिकृतत्वेनादावुच्चार्यत इत्येवमुक्तरीत्येत्यर्थः ॥ **दृष्टान्ते साधकहेतोरिति** । वेदाध्ययनोपक्रमे अध्येतृभिरुच्चार्यमाणोङ्काररूपदृष्टान्ते





वेदवाक्यानवयवत्वरूपसाध्यसाधकस्याध्ययनोपक्रमविरतिवैचित्र्येण तत्तत्स्थानपरित्यागेनान्यान्यस्थाने पठ्यमानत्वहेतोरनवयवत्वं विना सर्वत्रानुगतत्वेनान्यथासिद्धिः सर्वत्रानुगतत्वेनेति मूलवाक्येनोक्ता भवतीत्यर्थः ॥ **साध्यविकलतेति** । तत्रापि स्रवणाभावसंपादकतया पुण्यसंपादकत्वेन वेदेन सहैककार्यकारित्वरूपावयवत्वस्य सत्त्वादिति भावः ॥ **उक्तमुपपन्नमिति** । अयमोङ्कारः सूत्रकृता मङ्गलार्थतया सूत्रादावुपनिबद्ध इत्युपपन्न इत्यर्थः । अत्रोङ्कारस्य प्रथमसूत्रावयवत्वं नाम तदुपयुक्तार्थप्रतिपादकत्वम् । तथा हि । ब्रह्मजिज्ञासेत्यत्र निर्विषयत्वशङ्कापरिहाराय ब्रह्मपदेन वेदप्रतिपाद्यत्वरूपं विषयत्वमीश्वरस्योक्तम् । तत्कथमितिशङ्कायां वेदस्येश्वरप्रतिपादकतया तद्विषयकत्वसमर्थनार्थमोङ्कारः सूत्रकृता ब्रह्मणि प्रयुक्तः । तत्प्रकारश्च 'स एव ब्रह्मशब्दार्थो व्याहृतीनां च' इत्यादिना उत्तरत्र स्पष्टः । द्वितीयादिसूत्रेष्वोङ्कारस्य तदवयवत्वं नाम तेन सहैककार्यकारित्वम् । स्रवणविशरणाभावसंपादकतया सूत्रेण सह पुण्यरूपैककार्यकारित्वात् । आद्यन्तयोरोङ्कारपूर्वकं सूत्रोच्चारणे पुण्यं संपद्यत इति यावत् । एतादृशादृष्टार्थत्वमोङ्कारस्य प्रथमसूत्रेऽप्यस्ति । तथाच प्रथमसूत्रे ओङ्कारस्य स्विष्टकृदादिवत् दृष्टादृष्टोभयार्थत्वम् । द्वितीयादिसूत्रे तु केवलादृष्टार्थत्वमेवेति मन्तव्यम् ॥

**आनन्दः— तया प्रणाड्या** । उक्तप्रकारेणेत्यर्थः । तर्ह्योङ्कारस्यावयवत्वसन्देह एव स्यादित्यत आह **वक्ष्यमाणेति** । न चैवमोङ्कारस्योत्तरसूत्रेष्ववयवत्वं न स्यात् । तदर्थान्वितार्थप्रतिपादकत्वादिति वाच्यम् । न हि तदर्थान्वितार्थप्रतिपादकत्वमेव सर्वत्रावयवत्वं किन्तु उक्तं, तच्चोत्तरसूत्रेष्वोङ्कारस्यास्तीति युक्तं तस्योत्तरसूत्रेष्ववयवत्वमिति भावः । न चेदमेव सर्वत्रावयवत्वं विवक्षितमिति वाच्यम् । तथा सति हुंफडित्यादीनामनवयवत्वापत्तेः । न च तर्हि प्रथमसूत्रेऽवयवतयेति प्रथमसूत्रावयवतासिद्धाविति पूर्वोत्तरग्रन्थविरोध इति वाच्यम् । प्रथमसूत्रे ओङ्कारस्य तदर्थान्वितार्थप्रतिपादकत्वस्यापि सत्त्वादित्यभिप्रायेण तस्य प्रवृत्तत्वात् । अत एव प्रथमसूत्रावयव एवायं विज्ञायेत तन्मा विज्ञायीत्युक्तमिति । अनुमानस्याप्रयोजकत्वप्रदर्शनपरतयेदं वाक्यं व्याख्याय साधनवैकल्यप्रदर्शनपरतयापि व्याचष्टे **अथवेति** । तर्ह्यध्ययनोपक्रमविरतिवैचित्र्येऽप्योमिति ब्रह्मेतिवन्नियतस्थानतया पाठः स्यादित्युक्तमित्यत आह **अखिलैरिति** । **उक्तन्यायेनेति** । ब्रह्मविद्यात्वेनोकारस्योह आवश्यकः ऊह्यमानं त्ववयव एवेत्युक्तन्यायेनेत्यर्थः । **अनेनेति** । आदावुच्चारणेनैव सर्वत्रानुगतेर्लभकथनेनेत्यर्थः । उपसंहरति **एवमिति** ।

**कं०रा०— ननु स्रवत्यनोंकृतं ब्रह्म परस्ताच्च विशीर्यत इति श्रौतनिन्दार्थवादबलेनाद्यन्तयोरोङ्कारोच्चारणस्य विधेयत्वे परिकल्पिते तदुच्चारणमोङ्कारस्यावयवभूतस्य वा प्राङ्मुखत्वादिवद्बहिर्भूतस्यैव वेति सन्दिह्यमानत्वादवयवत्वेऽपि ओङ्कारस्यासंहिततयोच्चारणमुपपन्नमिति निश्चितान्यथासिद्धिः कथमुच्यत इत्यभिप्रेत्य शङ्कते **नन्विति** । उक्तरीत्याऽन्यथासिद्धिसन्देहेऽप्योङ्कारानवयवत्वसाधकहेतोः सन्दिग्धान्यथासिद्ध्या दुष्टत्वमेवेत्यभिप्रेत्य परिहरति **सत्यमिति** । **वक्ष्यमाणेति** । ओतत्ववाची ह्योङ्कार इत्यत्र वक्ष्यमाणरीत्या ॐकारार्थस्य प्रथमसूत्रवाक्यार्थे समन्वयेन तस्यावयवत्वनिश्चयोपपत्तावनवयवत्वसाधकमनुमानं बाधितविषयं चेत्यर्थः । **दृष्टान्तेति** । अध्ययनोपक्रमोच्चार्यमाणोङ्काररूपदृष्टान्तस्य साध्यवैकल्यदूषणमनेन सर्वत्रानुगतत्वेनेति वाक्येन व्युत्पाद्यत इत्यर्थः । **दृष्टान्तेति** । दृष्टान्तेनावयवत्वरूपसाध्यसाधकस्य तत्तत्स्थानपरित्यागेनान्यस्थानेऽखिलैः पठ्यमानत्वरूपहेतोरन्यथासिद्धिरुक्ता





भवतीत्यर्थः। अन्यथासिद्धिकथनेन लब्धं दृष्टान्तदोषमाह **तथा चेति**। **अनुमाने** ओङ्कारस्यानवयवतासाधकानुमाने। **इहैव** शास्त्र एव। **तन्निश्चये** ब्रह्मज्ञानस्य मोक्षहेतुतानिश्चये।

**श्रीनिधि०— तया प्रणाड्या**। ननु च श्रौतार्थवादबलेनेत्याद्युक्तया प्रणाड्या **उक्तमुपपन्नमिति**। मङ्गलार्थतया सूत्रादावुपनिबन्ध इत्युक्तमित्यर्थः।

**वा०चं०—** ननु चार्थवादस्यादृष्टफलबोधकत्वेन वाक्यार्थे समन्वयरूपदृष्टफलसमर्पकत्वाभावेन ब्रह्मविद्योच्चारणदशायामोङ्कारोच्चारणमात्रस्यार्थवादेन सिद्धावपि न नियमेनोहसिद्धिः। ऊहेनेव रात्रिसत्रन्यायेन प्राङ्मुखत्वादिवद्बहिर्भूतस्योच्चारणस्य विधिकल्पनयाऽप्यर्थवादस्योपपत्तेः। एवं चार्थवादसामर्थ्यादित्युक्तमनुपपन्नमिति सामर्थ्यरूपान्यथानुपपत्तावन्यथासिद्धिं शङ्कते **ननु चेति**। सन्देहेऽप्यूहपक्षे ऊह्यमानस्यावयवत्वात्प्रतिसूत्रं चोच्चारणे गौरवादधिकृतत्वेनादावुच्चारणे सिद्धेऽधिकारज्ञापकतयाऽसंहिततया निर्देशोपपत्तौ हेतोरन्यथासिद्धिः पक्षान्तरे तु नेति सन्दिग्धान्यथासिद्धिरप्यनुमानदूषणमेवेत्याह **सन्देहेऽपीति**। अङ्गीकृत्य चेदमुदितम्। वस्तुतस्त्वोङ्कारस्य विषयादिसमर्पकतया प्रथमसूत्रवाक्यार्थे समन्वयस्य वक्ष्यमाणत्वाद्वाक्यार्थान्वितस्य च तद्बहिर्भावासंभवादर्थवादो बहिर्भूतोच्चारणविधिकल्पनायां प्रवृत्तो वक्ष्यमाणन्यायानुसन्धानेन प्रथमसूत्र एव कुण्ठितः। तत्राप्रसराद्विधिकल्पनामार्गं परित्यज्योक्तरीत्या तदर्थानन्वितत्वेऽपि तदेककार्यकारित्वस्याध्याहृतेऽपि संभवेनाध्याहारपक्षे दोषमनुपलभमानः सर्वसाधारणमध्याहारमार्गमेवाश्रयतीति निश्चितान्यथासिद्धिरेव। प्रथमसूत्रवाक्यार्थान्वयेनावयवत्वनिश्चयात् बाधितविषयत्वं चानुमानस्येत्याशयेनाह **वक्ष्यमाणेति**। यद्वा न केवलमर्थवादबलेन सन्दिग्धान्यथासिद्ध्या अनुमानस्याभासत्वं वक्ष्यमाणन्यायेन बाधितविषयत्वाच्चेत्याशयेनाह **वक्ष्यमाणेति**॥ **उक्तन्यायेन इति**। अर्थवादबलादूहे सिद्धे प्रतिवाक्यमुच्चारणे गौरवं स्यादित्युक्तन्यायेनेत्यर्थः। अर्थवादवक्ष्यमाणन्याययोरवयवत्वसाधकत्वेनोक्तत्वेऽपि तयोः परानुमानदूषणे व्यापृतत्वेनोपक्रमोक्तसाधकमेवावयवत्वसाधकतयोपसंहरति **एवमिति**। विस्तरस्तु चन्द्रिकायां द्रष्टव्यः।

**वा०र०— अदृष्टफलेति**। स्रवणविशरणपरिहाररूपाऽदृष्टफलेत्यर्थः। प्रथमसूत्रवाक्यार्थे समन्वयश्चेत् फलत्वेनार्थवादसिद्धः स्यात् तदार्थवादबलात् नियमेनोहः सिद्धः स्यात् न चैवमित्याह **वाक्यार्थ इति**। ऊहाभावे ब्रह्मविद्योच्चारणदशायाम् ओङ्कारोच्चारणमात्रमपि कथं सिद्ध्यतीत्यत आह **ऊहेनेवेति**। ऊहेनार्थवादस्योपपत्तिवत् प्रकारान्तरेणापि अर्थवादस्य उपपत्तिरिति योज्यम्। प्रकारान्तरस्य प्रदर्शनम्। **प्राङ्मुखत्वादिवदिति**। प्राङ्मुखत्वादिकमध्येयवेदान्तर्गतं न भवति। तथापि अध्येतृभिः अध्ययननियमान्तर्गततयाऽनुष्ठीयते। एवमोङ्कारोच्चारणं सूत्रादिबहिर्भूतमपि तन्नियमान्तर्गततया अनुष्ठेयम्। न च प्राङ्मुखोऽधीयीत इत्यादि विधिबलात् बहिर्भूतस्यापि तस्यानुष्ठानप्राप्तावपि ओङ्कारोच्चारणस्योहाभावे प्रापकाभाव इति वाच्यम्। अत्रापि ओङ्कारमुच्चारयन् अधीयीतेति कल्पनापातेनैव तदुच्चारणप्राप्तेः। न च तत् कल्पकाभावः। स्रवतीत्यर्थवादस्यैव तत्कल्पकत्वात्। तत् यथा प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्तीत्यर्थवादबलात् प्रतिष्ठाकामो रात्रिसत्रं कुर्यात् इति विधिः कल्प्यते





इत्यर्थः। एतच्च चतुर्थस्य तृतीयगत'क्रतौ फलार्थवादमङ्गवत् कार्ष्णाजिनिरि'ति षष्ठेऽधिकरणे स्पष्टम्। फलितमाह **एवं चार्थवादेति**। सामर्थ्यरूपेत्यस्य सामर्थ्यपदोक्तान्यथानुपपत्तावित्यर्थः। अर्थवादेनाद्यन्तयोः ओङ्कारोच्चारणस्य मुखतः प्रतिपादनाभावेऽपि तदभावे स्रवणाद्यनर्थवचनात् तदन्यथानुपपत्त्या तत्र तस्योहरूपोच्चारणविशेषप्राप्तिरिति किल वाच्यम्। न च तत्संभवति। अध्ययनानन्तर्गतप्राङ्मुखत्वादिवत् ओङ्कारोच्चारणमात्रापादकविधिकल्पकत्वेनाप्यर्थवादस्योपपत्त्या तेन तदूहनियमासिद्धेरित्येव सामर्थ्यस्यान्यथोहकल्पनां विना सिद्धिघटना तामाशङ्कत इत्यर्थः। अन्यथा सिद्धिरियं भिन्नेति प्रागुक्तरीत्या द्रष्टव्यम्। **सन्देहेऽपीति**। यथाश्रुतमूलानुवादपूर्वकतया प्रणाड्येत्यादि विवृणोति **सन्देहेऽपीति**। अन्यथासिद्धिरस्ति न वेति सन्देहस्य कोटिद्वयमध्ये भावकोटेः प्राधान्यात् स्वस्याभ्यर्हितत्वाच्च तां कोटिमेव उपपादयति **सन्देहेऽप्यूहपक्ष इति**। **पक्षान्तरे त्विति**। प्राङ्मुखत्वादिवत् बहिर्भूतस्यैवोच्चारणं विधेयत्वेन कल्प्यते इति पक्षे त्वसंहिततया निर्देशस्याधिकारज्ञापनार्थतयोपपत्तिरूपान्यथासिद्धिर्नेत्यर्थः। इतीत्यस्येत्यर्थः। दूषणमिवेत्यनेनाभासत्वमेवेत्यत्र मूले सन्दिग्धान्यथासिद्धिर्दूषणमेवेति कल्पितान्यथासिद्ध्या च तयाप्यनुमानस्याभासत्वमेव। न तु अनाभासत्वमिति योजना सूचिता। एतेनाभासत्वमेवेति मूलानुसारेण व्यवहारं विहाय दूषणमेवेत्युक्तिः कुत इति शङ्काऽपहस्तिता भवति। सन्दिग्धान्यथासिद्ध्यापीत्यनेनापिशब्देनैव सापि दूषणं भवत्येवेति। अतः तवापि आभासत्वमिति सूचनात् इति ज्ञेयम्। वक्ष्यमाणेत्युत्तरवाक्ये ऊह एवेति निश्चयाभिधानस्य सन्देहाङ्गीकारेण प्रवृत्तपूर्ववाक्येन विरोध इत्यतः पूर्ववाक्यस्याङ्गीकारवादेन प्रवृत्तत्वात् तदुत्तरस्य वस्तुस्थितिकथनपरत्वात् न पूर्वोत्तरविरोधः इत्याशयेनाह **अङ्गीकृत्येति**। **एतत्**। सन्दिग्धान्यथासिद्ध्यापि आभासत्वमित्येतत्। **विषयादीति**। आदिना शास्त्रविषयसंबन्धसङ्ग्रहः। **वक्ष्यमाणत्वादिति**। ओतत्ववाची ह्योङ्कारः इत्यादिनाऽनुपदमेव वक्ष्यमाणत्वादित्यर्थः। **अर्थवादः**। स्रवतीत्यादिः। शङ्कितरीत्या बहिर्भूतोच्चारणविधिकल्पनायां प्रवृत्तः। वक्ष्यमाणन्यायेन शक्तिकुण्ठनमुपपादयितुमुक्तं बहिर्भावासंभवादित्यन्तम्। कुण्ठितशक्तिः। बहिर्भावाकल्पनायां न समर्थ इत्यर्थः। द्वितीयादिसूत्रेष्वपीति करणीयम्। तथा च प्रथमसूत्रे एव शक्तिकुण्ठनात् तत्सूत्रे न प्रसरति। एवंरूपो यो बहिर्भूतस्य एवोच्चारणविधिकल्पनामार्गः तं परित्यज्येत्यस्याध्याहारमार्गमेवाश्रयतीत्युत्तरेण संबन्धः। नाध्याहारमार्गस्याप्याश्रयणं युक्तम्। अध्याहृतोङ्कारार्थस्याद्वितीयादितत्तत्सूत्रवाक्यार्थेऽन्वयाभावेन तस्य तदन्वयानुपपत्तेः इत्यतः उक्तम् **उक्तरीत्येत्यादि**। प्रकृते च वाक्यत्वे सति ब्रह्मविद्यया एककार्यकारित्वरूपतदवयवत्वमित्युक्तरीत्या इत्यर्थः। तदर्थानन्वितत्वेऽपीत्यस्य तदर्थान्वितार्थप्रतिपादकत्वाभावेऽपि इत्यर्थः। **प्रथमसूत्र इवेति**। व्यतिरेकदृष्टान्तः पूरणीयः। तत्र तदर्थान्वितत्वसत्त्वात्। **दोषम्**। तदर्थान्यथानुपपत्तिरूपम्। **सर्वसाधारणम्**। प्रथमसूत्रे द्वितीयादिसूत्रे च इत्येवं सर्वसूत्रसाधारणम्। अर्थवादः आश्रयतीत्येवं निश्चये उपपन्ने सति निश्चितान्यथासिद्धिरेव प्राप्ता भवतीत्यर्थः। निश्चयोपपत्तावित्यन्तस्य इदं तात्पर्यम्। बाधितविषयं चानुमानमेतत् इति प्रतिज्ञादूषणपरमिति विवेकं स्पष्टयति **प्रथमेति**। एवं निश्चयोपपत्तावित्यन्तपूर्वशेषत्वेन योजनीयम्। बाधितविषयं चेत्येतत् स्वतंन्त्रदूषणमिति योज्यमिति प्रकारेण वाक्ययोजनां कृत्वा निश्चयोपपत्तावित्यन्तस्य बाधितेत्येतत् उपपादकत्वेनोक्तत्वात् तदनुसारेण एकमेव दूषणमत्राभिधीयते इति योजयति **यद्वेति**। **बाधितेति**। अवयवत्वनिश्चये





सति अनवयव इति साध्यं बाधितमिति भावः । सर्वत्रेत्येतत् तदनुव्याख्यानमनवयवत्वं विनापि लक्षणान्तराभावे सति इत्युक्तहेतोः उपपत्त्या अन्यथासिद्धिरिति हेतुदूषणपरत्वेन योजयित्वा वेदाध्ययनोपक्रमकाले पठ्यमानोङ्कार-रूपदृष्टान्तस्य निराकरणपरतयापि योजनीयमित्याह **अथवेति** मूलम् । **अथवेति** निपातसमुदायः प्रकारान्तरेणापि योजनीयः । विशिष्टदूषणसिद्धिरिति भावेन । न तु पूर्वयोजनायाम् । अस्वरसाभिप्रायेणेति ज्ञेयम् । दूषणशब्दश्च भावसाधनः । निराकरणमिति यावत् । **अनेन** । सर्वत्रेति भाष्येण । पूर्वयोजनायामिवाखिलैरित्यादेः सूत्रपाठकैः इत्याद्यर्थस्य एतद्योजनायामुपयोगात् प्रकारान्तरेणाखिलैरित्यादि व्याचष्टे **अखिलैर्वेदपाठकैः इत्यादिना** मूलेन । व्याख्याननिमित्तानि पूर्वटीकोक्तरीत्या ज्ञेयानि । उद्देश्यविधेयविवेकप्रदर्शनेन योजयति **पृथगित्यादि** मूले । रूपान्तरेणेत्यस्य विवरणं **स्थानव्यत्यासेनेति** । उक्तन्यायेनेत्यस्यार्थाप्रतीतेः व्याचष्टे **अर्थवादेति** । अयमर्थः स्रवति इत्याद्यर्थवादबलात् सूत्रेष्विवावान्तरब्रह्मविद्यावत्त्वात् वेदवाक्येष्वपि आद्यन्तयोः ओङ्कारस्य ऊहः सिद्धः । ऊह्यमानं च वेदवाक्यात् न पृथक् । ततश्च प्रतिवाक्यं ओङ्कारोच्चारणे प्राप्ते गौरवं स्यात् इत्येवमुक्तप्रायेण न्यायेनेति । **आदावुच्चारणेनैवं** इत्यादि मूलम् । यथा सूत्रपाठकाले पाठकैरादावोङ्कारस्योहबलात् प्राप्तस्याधिकृतत्वेनोच्चारणं क्रियते । तेन च उत्तरत्रानुवृत्तिर्ज्ञायते । तथा वेदवाक्येष्वपि स्रवतीत्यर्थवाद-बलात्प्राप्तोहबलात् आदावुच्चारणे सिद्धे गौरवादेवादावधिकृतत्वेनोच्चारणेनैवोङ्कारस्य उत्तरवाक्येषु सर्वत्रानुगतत्वं यल्लब्धं तेन कारणेन खलु वेदपाठकानां अन्यान्यस्थानत्यागेनान्यान्यस्थाने ओङ्कारस्य पाठोऽध्ययनोपक्रमतद्भिरितिवैचित्र्यानुसारेणोपपद्यत इति । मूलार्थः । न तु यथा सूत्रेषु उत्तरत्रानुगतत्वाभिलाषेणासंहिततया निर्देश एवमुत्तरत्र वेदवाक्येष्वनुगत्यर्थम् अन्यान्यस्थाने पाठ इत्यर्थः । सूत्रेष्वनुगतिः फलतया निमित्तम् । अत एव मिलितेनेति पूर्वमुक्तमत्र तु सूत्रेषु उक्तन्यायेनानुगतत्वे सिद्धे तेन कारणेन न व्यत्यासेनोङ्कारपाठः क्रियते इत्येवानुगतत्वं सिद्धम् । **निमित्तमिति** । प्रमेयत्वात् । अत एवानुगतत्वेन कारणेनेत्येवोक्तम् । तथाच सूत्रेषु स्रवतीत्यर्थवादलभ्योहप्राप्तोङ्कारसूत्रकृतत्वेनोच्चारितः सूत्रान्तर्गततया सूत्रकारैः प्रयुक्तत्वात् पाठकैरपि तथा पठ्यमानोऽस्ति । वेदवाक्येषु तु अध्ययनोपक्रमे ईश्वरादिभिः पठ्यमानोङ्कारः ॐ अथात इतिवत् न वेदान्तर्गततया पठ्यमानोऽस्ति । अत एव वेदे संहिततयाऽसंहिततया चोच्चारणविचारानवकाश इति विशेषः । एतेन सूत्र इव वेदेऽपि ऊहप्राप्त ओङ्कारः सम इति संहिततयोच्चारणाभावः कुत इति तत्रापि विचार्य इत्यादिशङ्कानवकाशहता । सूत्रकारैरेव सूत्रनिर्माणदशायां सूत्रान्तर्गततया ऊहप्राप्तस्य तस्योच्चारणात् । वेदे तु अनादितो भगवदादिकृतोच्चारणदशायाम् ऊहप्राप्तस्य हरिः ॐ इत्येवं हरिपदवत् तत्तत् वाक्यानन्तर्गततयैव द्वितीयादिसूत्रेष्विव उच्चारणात् । अत एवोङ्कारार्थस्य प्रथमसूत्रवाक्यार्थान्तर्गतार्थकतया समन्वयेन अवयवत्वम् । वेदे तु अधीयमानमन्त्रार्थे ओङ्कारार्थोतत्वस्यानुसन्धानद्वारा गतत्वेनावयवत्वमिति विशेषः । द्वितीयादिसूत्रेष्विव वेदवाक्येष्वपि तत्तद्वाक्यार्थान्तर्गततया समन्वयस्तु नास्त्येवेति ज्ञातव्यम् । उपसंहारे अर्थवादबलादुपन्यासे निमित्तकथनेनोपसंहारमुपपादयति **अर्थवादेति** । **दृष्टान्तसाधकेति** मूलम् । दृष्टान्ते साध्यसमर्थनेन तस्य दृष्टान्तत्वसाधकेत्यर्थः । **उक्तमिति** । ताराथमूलत्वमित्युक्तमित्यर्थः । ऊहादिस्थले अधिकानुक्तिः विस्तरभयात् इत्याशयेनाह **विस्तरस्त्विति** ।





**स०व्र०**— परिहरति **सन्देहेऽपीति** । **प्रणाड्या** परम्परया । न केवलमर्थवादबलादोङ्कारस्य प्रथमसूत्रावयवत्वं किन्तु समवेतार्थत्वादपीति न सन्देह इत्याह **वक्ष्यमाणेति** ॥ ओतत्ववाचीत्यादिनेति शेषः । **दृष्टान्तदूषणं** साध्यवैकल्यलक्षणम् । एवं च मङ्गलाचारादप्युपपन्नं ब्रह्मसूत्राणां व्याख्येयत्वमिति सिद्धम् ॥

**कुण्डल०**— श्रौतनिन्दार्थवादबलेनाद्यन्तयोरोङ्कारस्योच्चारणविधौ स्वीकृते सति किमेतदोङ्कारस्योच्चारणं सूत्रावयवभूतस्य वा उत प्राङ्मुखत्वादिवद्बहिर्भूतस्य वेति सन्देहास्कन्दितत्वादिति शङ्कते **नन्विति** । **तयेति** । स्रवत्यनोङ्कृतं ब्रह्मेति श्रुतिबलात्प्रतिसूत्रमाद्यन्तयोरोङ्कारस्योहे सिद्धे प्रतिसूत्रमोङ्कारोच्चारणे गौरवापत्त्या प्रथमसूत्रे तदवयवभूतस्याप्योङ्कारस्य सर्वत्रानुगतिसूचनाय पृथगुच्चारणमित्युक्त्या प्रणाड्यानवयवत्वसाधकानुमानस्य सन्दिग्धासिद्धव्याप्याभासत्वमित्यर्थः । **वक्ष्यमाणेति** । तत्र ताराथमूलत्वमिति वक्ष्यमाणेत्यर्थः । **दृष्टान्तेति** । अध्ययनोपक्रमे उच्चार्यमाणस्योङ्काररूपदृष्टान्तस्थानवत्वरूपसाध्यवैकल्यलक्षणं दूषणमित्यर्थः । **उक्तन्यायेनेति** । स्रवत्यनोङ्कृतमित्युक्तन्यायेनेत्यर्थः । **दृष्टान्ते साधकस्येति** । दृष्टान्ते वेदोपक्रमे उच्चार्यमाणोङ्कारे अनवयवत्वसाध्यसाधकस्य लक्षणान्तराभावे सत्यसंहिततया संपाठे अखिलैः पठ्यमानत्वादिहेतोरन्यथासिद्धिरुक्तेत्यर्थः । स्वामिचरणास्तु तत्तत्स्थानपरित्यागेनान्यस्थाने अखिलैः पठ्यमानत्वरूपहेतोरन्यथासिद्धिरुक्ता भवति इत्यर्थः इति व्युत्पादितवन्तः । **अनुमान इति** । ओङ्कारस्य प्रथमसूत्रावयवत्वसाधके अनुमान इत्यर्थः ।

**स०ना०**— **ननु चेति** । ननु श्रौतार्थवादबलेन प्रतिसूत्रमोङ्कारस्यावश्यकत्वात् । सूत्रान्तःपृथगुपादानेऽस्तोभत्वहानिभयेन प्रथमसूत्रावयवस्यैवानुवृत्त्यर्थमसंहिततया निर्देशो वा आहोस्वित् नैतदर्थवादवाक्यं ओङ्कारस्य ब्रह्मविद्यास्वदृष्टार्थस्य प्रवेशेनाभिधत्ते किन्तु प्राङ्मुखत्वादिवद्बहिर्मुखस्यैवोच्चारणमात्रमाचष्टे । एवं च बहिर्मुखस्यानुवृत्त्यसाध्यत्वेन पृथगुच्चारणस्य तदर्थत्वायोगात् । अनवयवत्वादेव पृथगुच्चारणमिति सन्दिह्यत इत्यर्थः । **दृष्टान्तस्य साध्यविकलतेति** । नन्वेवं तर्हि ओङ्कारः वेदावयवोऽप्यापन्नः । ओमिति चेत् । अग्निमीळेत्यत्राग्निपदेनैव ओङ्कारेणापि क्रमजटादि पाठः स्यात् । न चैवं तस्मादोङ्कारो न तदवयव इति न दृष्टान्तः । साध्यविकल इति चेत् । उच्यते । न ब्रूमो वयमोङ्कारः अग्निमीळेत्यादिवेदावयव इति येनोक्तदोषः स्यात् । न चैवं किन्नाम 'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ' इति स्मृतिसिद्धोमथेति प्रथमोच्चारितवेदावयव इति संमतं च भाष्यकृतोऽपि ओमथेत्यस्य वेदत्वं यदयं ओङ्कारव्याख्यानरूपत्वं व्याहृत्यादीनामाह न हि वेदव्याख्येयम् अवेद इति संभवति । अपौरुषेयत्वाच्च तस्य वेदत्वम् । एवं चास्य वेदावयवत्वं तस्य क्रमादिपाठस्त्विष्टः परन्तु पाठकाभावान्न पाठोपलम्भः । यस्य त्वपाठस्त्वनुभवसिद्धः नासौ वेदावयव इति न किञ्चिदनुपपन्नमिति ।

**विठ्ठ०**— **बहिर्भूतस्येति** । सूत्रानवयवस्यापि अध्ययननियमान्तर्गततयोच्चारणं वेत्यर्थः । किञ्चास्मिन् अनुमाने दृष्टान्तः साध्यविकलः तत्रापि अवयवतायाः सद्भावात् । न च तथात्वे अध्ययनोपक्रमविरतिवैचित्र्येण भिन्नस्थानेषु उच्चार्यमाणोङ्कारस्य नियतस्थानतया पाठप्रसङ्ग इत्युक्तमेवेति वाच्यम् । आदौ अधिकृततया उच्चारणेन तत्तत्स्थानेषु सर्वत्रानुगतेर्लब्धत्वात् नियतस्थानतया पाठाभावोपपत्तेरित्याशयेनार्थान्तरमाह **अथवेति** ।

रूपान्तरेणेत्यस्य विवरणं **स्थानव्यत्यासेनेति** । **उक्तन्यायेनेति** । श्रौतार्थवादबलादूहे सिद्धे प्रतिवाक्यमुच्चारणे गौरवमित्युक्तन्यायेनेत्यर्थः । **दृष्टान्ते साधकस्येति** । नियतस्थानतया पठ्यमानत्वाभावरूपहेतोरित्यर्थः ।

**चषकः—— तया प्रणाड्येति** । श्रौतार्थवादमहिम्नोङ्कारस्योहविधेरवधृत्या तदवयवतानिर्णीत्या प्रतिसूत्र-माद्यन्तयोरुच्चारणे गौरवं स्यादित्यादावेवोङ्कारोऽधिकृतत्वेनोच्चार्यते अस्य संहिततया निर्देशे प्रथमसूत्रावयव एवायं विज्ञायेत तन्मा विज्ञायीति शिष्टैः पृथगोङ्क्रियते । तथाच हेतोरसिद्धिरुक्ता भवतीति उक्तदिशेत्यर्थः । सन्दिग्धान्यथासिद्ध्या । अप्रयोजकताशङ्कया । आभासत्वमेव । रत्नकोशकारान्यमते संशयात्मकानुमितेरनुप-गमेन प्रकृतसाध्यविधेयकानुमित्यनुपपादकत्वमेव । **वक्ष्यमाणन्यायेन** । तदेतावोङ्कारब्रह्मशब्दावपि यौगिकौ जिज्ञास्यमनन्तगुणपूर्णं प्रतिपादयन्त्यावित्यादिनोङ्कारस्याभिधास्यमानविषयसमर्पकत्वाश्रयन्यायेन । ओङ्कारार्थस्य । गुणपूर्णत्वस्य प्रथमसूत्रवाक्यार्थे विशिष्टाधिकारिकमोक्षफलकजीवान्यभूतधर्मिविशेषितजिज्ञासालक्षणधर्मि-विशेषितत्वं विषयिताप्रत्यासत्त्या । **समन्वयेन** । प्रकारिताप्रत्यासत्त्याऽन्वयोपगमेन । अनुमानमनवयवत्व-साध्यकम् । अत्र चोङ्कारस्तु पृथगुच्चरितो वेदितव्यः न अथशब्दवत्सूत्रोपनिबद्ध इति सन्न्यायरत्नावलीग्रन्थ-विरोधमाशङ्कमानाश्चन्द्रिकाकाराः पृथक्त्वमूह्यमानत्वमसंहिततयोच्चार्यमाणत्वरूपं 'ओङ्कारश्चाथशब्दश्च' इत्याद्यानु-पूर्वीकभाष्योदाहृतप्रमाणेन तत्र ताराथेत्यनुव्याख्यया च विरोधादित्यभिसन्दधाना समादधुरिति सर्वं समञ्जसम् । **दृष्टान्तदूषणम्** । साध्यवैकल्यरूपम् । अनेन ग्रन्थेन क्रियते व्युत्पाद्यते । पृथगित्यनूद्य रूपान्तरेणेति व्याख्यातं तदपि विवृणोति **स्थानव्यत्यासेनेति** । ॐक्रियते ॐइत्युच्चार्यते । तदित्युपपद्यत इत्यनेनान्वेति **आदावुच्चा-रणेति** । दर्शितस्थापनानुमानरूपेणेत्यर्थः । अन्यथासिद्धिः साध्यमन्तरेणापि सत्त्वम् ॥ **निरपवादेनेति** । अपवादा-न्निष्क्रान्तेनेत्यर्थः । निरादय इत्यनुशासनात् । अपवादापादानकनिष्क्रान्तिविशेषितेनेति फलिताशयः ॥

**काशी०——** स्रवतीत्याद्यर्थवादस्यावयवत्वानिश्चायकत्वान्नोक्तान्यथासिद्धिनिश्चय इत्याशङ्कते **ननु चेति** । ऊहोऽध्याहारः । **बहिर्भूतस्येति** । सूत्रानवयवस्येत्यर्थः । स्रवतीत्यादेरवयवत्वानवयवत्वयोरुदासीनत्वादिति भावः । न चानवयवत्वे स्रवणविशरणपरिहारहेतुत्वानुपपत्तिः । तस्य तत्कार्यकारित्वरूपतदवयवत्वानतिरेकादिति वाच्यम् । प्राङ्मुखत्वादिवदनवयवस्यापि मन्त्रादिवीर्यवत्तामात्रहेतुत्वेनापि स्रवतीत्यर्थवादोपपत्तेः । तेन तत्कार्यकारित्वा-निर्णयात् । शङ्कोक्तमवयवत्वसन्देहमभ्युपेत्यादौ समाधत्ते **सत्यमिति** । सन्देहेऽपि श्रुत्याऽवयवत्वानिर्णयेऽपि । **तया प्रणाड्या** । सर्वत्रानुगतत्वेनेत्युक्तप्रणाड्या । **आभासत्वमेवेति** । अन्यथासिद्धिसन्देहेऽपि व्याप्त्यनिश्चयादिति भावः । वस्तुतस्त्वोङ्कारस्य सूत्रावयवत्वनिश्चयान्निश्चितान्यथासिद्धिरेव संभवतीत्याह **वक्ष्यमाणेति** । ओतत्ववाची-त्यादिना वक्ष्यमाणेन विषयसमर्पकत्वादिन्यायेनेत्यर्थः । समन्वयेन घटकत्वेन प्रथमसूत्रावयवत्वनिश्चयोपपत्तावि-त्यर्थः । इदमुपलक्षणम् । ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नुवानीति ब्रह्मैवोपाप्नोतीत्यादिश्रुत्योङ्कारस्य प्रवचन-साध्यब्रह्मप्राप्तिसाधनत्वोक्तेस्तदनुसारेण स्रवतीत्यादिश्रुतेरप्योङ्कारस्य वेदादिकार्यकारितापरत्वसिद्ध्या सकलसूत्रा-वयवत्वनिश्चयोपपत्तावित्यपि द्रष्टव्यम् । प्रथमसूत्रेऽन्वयसमर्पकत्वरूपप्रसिद्धावयवत्वमेव संभवतीत्याशयेन कण्ठत-

स्तदुक्तं **बाधितविषयं चेति** । चशब्देन निश्चितान्यथासिद्धं चेति ग्राह्यम् । **अनुमानमिति** । सूत्रानवयवत्वसाधकानुमानमित्यर्थः । नन्वोतत्ववाचीत्यादिनोङ्कारार्थस्य वक्ष्यमाणत्वेऽपि तदन्वयानुक्तेः कथं प्रथमसूत्रवाक्यार्थे समन्वयः । न चाभेदेन ब्रह्मणि तदन्वयः । ॐकारब्रह्मशब्दयोरेकार्थत्वेन घटो घट इतिवदन्वयानुपपत्तेः । अत एव न जिज्ञासायां तदन्वयः । ब्रह्मणो ब्रह्मजिज्ञासेतिवन्निराकाङ्क्षत्वादिति चेन्न । आत्मेति तूपगच्छन्तीति सूत्रे स्वामी मे विष्णुरित्येव नित्यदोपास्यमञ्जसेत्यनुव्याख्यानस्यात्मशब्दावृत्त्या रूढ्यर्थे विष्णौ योगार्थस्वामिनोऽभेदान्वयपरतया व्याख्यातत्वात्तद्वदिहापि रूढ्या ब्रह्मशब्दार्थे विष्णौ योगेनोङ्कारार्थगुणपूर्णस्याभेदान्वयसंभवात् । न च ब्रह्मणः समासे उपसर्जनतया न पदार्थान्तरान्वययोग्यतेति वाच्यम् । सौत्रत्वेन तदुपपत्तेः । ब्रह्मविशेषितजिज्ञासाविशेषणत्वेऽप्योङ्कारार्थस्य शिखी ध्वस्त इत्यादाविव विशेषणान्वयसंभवाच्चेति चन्द्रिकाद्यनुसारिणी सरणिः । अभिनवचन्द्रिकायां तु स्यादेवमन्वयदोषो यद्योङ्कारब्रह्मशब्दोभयघटितमेकं सूत्रं स्यात् । न चैवम् । किन्त्वथातो ब्रह्मजिज्ञासा ओमथातो जिज्ञासेति पाठभेदेन सूत्रद्वयं भाष्यटीकाकृत्संमतम् । तत्राद्यपाठस्य भाष्येऽथशब्दादेरेव व्याख्यानम् । न्यायविवरणे चाथातो ब्रह्मजिज्ञासेत्याहेत्योङ्काररहितसूत्रोपन्यासः । अनुव्याख्याने च पृथगोङ्क्रियतेऽखिलैरित्यत्र सूत्रकृतेति वक्तव्येऽप्यखिलैरित्युक्तिश्च लिङ्गम् । द्वितीयपाठस्य च भाष्ये 'ओङ्कारश्चाथशब्दश्च तस्मात्प्राथमिकौ क्रमादि'ति क्रमेणोदाहरणम् । अनुव्याख्याने च तत्र ताराथमूलत्वमित्योङ्कारस्याथशब्दसमकक्ष्यतया शास्त्रमूलत्वोक्तिश्च लिङ्गम् । भाष्यस्योङ्काररहितपाठानुसारित्वात्तत्र तदव्याख्यानम् । टीकायामथेतीत्येव सूत्रप्रतीकग्रहणं च । अनुव्याख्यानस्य च पाठद्वयानुसारित्वात्तत्रोङ्कारब्रह्मशब्दयोर्द्वयोरपि व्याख्यानम् । सुधायां प्रथमसूत्रव्याख्यामोतत्ववाचीत्यादिना आरभत इत्याद्युक्तिश्च । नन्वेवमत्र तारश्चाथश्च तयोर्मूलत्वं क्रमेणादित्वं सूत्रकृतोङ्कारब्रह्मशब्दौ प्रयुक्तावित्याद्युक्तिः ओमथातो ब्रह्मजिज्ञासेत्योङ्कारब्रह्मशब्दसहितसूत्रोपन्यासश्च विरुद्ध्यते । ततस्तयोरेकसूत्रघटकत्वप्रतीतिरिति चेत् । उच्यते । ॐकारब्रह्मशब्दोपेतसूत्रोपन्यासस्तावत्पाठद्वयं सङ्कल्य्य कृत इत्यविरुद्धः । अन्यत्सर्वं पाठभेदस्यैव साधकम् । तथा हि । क्रमेणादित्वमित्यत्र न पौर्वापर्यरूपः क्रमो विवक्षितः । तथा सत्यथशब्दस्यामुख्यादित्वप्रसङ्गात् । न च मुख्ये संभवत्यमुख्यग्रहणं युज्यते । संभवति च पाठभेदे पर्यायेण द्वयोरपि मुख्यमादित्वमतः क्रमेणेत्यस्य पर्यायेणेत्यर्थो युक्तः । एवमोङ्कारब्रह्मशब्दौ प्रयुक्तावित्याद्यपि पाठभेदस्यैव लिङ्गम् । अन्यथा जीवव्यतिरिक्त ईश्वर एव नास्तीत्यादिशङ्काया एकेनैव शब्देन परिहारादपरस्य वैयर्थ्यापत्तेस्तस्मात्पाठभेदेन प्रत्येकं द्वयोरपि शङ्कावारकत्वमिति युक्तम् । अन्यथा तथात्वे प्रथमसूत्रं न्यूनमापद्येत । अधिकार्यादिप्रतिपादकस्यान्यस्याभावादिति ग्रन्थासङ्गतिः । ओङ्कारस्य विषयाप्रतिपादकत्वेऽपि ब्रह्मशब्दस्यैव तथात्वसंभवेनादिपदग्राह्याभावात् । तस्माद्ब्रह्मशब्दघटितपाठाभिप्रायकतयैव तत्सङ्गतिः । किञ्चोङ्कारब्रह्मशब्दयोरेकार्थत्वादनन्वयः । न च ओं जिज्ञासा ब्रह्मजिज्ञासेति योजनाभेदाददोष इति वाच्यम् । वाक्यभेदापत्तेः । न च सूत्रे पाठद्वयमदृष्टचरम् । पुरुषाश्मवदिति चेत् । तत्रापीति पाठस्य यथा चेतनसंबन्धादचेतनमेव शरीरमश्मादिकमादाय गच्छत्येवमचेतनाऽपि प्रकृतिः पुरुषसंबन्धात्प्रवर्तत इति चेन्न । 'न ऋते त्वत्क्रियते किं च नार' इति तत्रापि तथात्वे दृष्टान्ताभावादिति भाष्ये व्याख्यातत्वात् । पुरुषाश्मवदिति चेत् । तथाऽपीति पाठस्य च सन्निधानाच्चेतनस्य वर्तते यद्यचेतनं तथाऽप्यबुद्धिपूर्वत्वादुक्तदोषः समो भवेदित्यनुव्याख्याने व्याख्यातत्वादित्युक्तम् । तदपरे न क्षमन्ते । तथा हि । यत्पाठभेदेन सूत्रद्वयमुक्तं तत्किं वैकल्पिकमुत नियतम् । नाद्यः ।





सर्वज्ञस्य भाष्यकर्तुर्विकल्पायोगेन वैकल्पिकपाठद्वयोपादानानुपपत्तेः । नान्त्यः । सूत्रकर्तुः समानार्थकसूत्रद्वय-प्रणयनवैयर्थ्यात् । वाक्यविशेषसूचकत्वेन तत्सार्थक्ये वा सूत्र एव पदद्वयोपादानं युक्तं लाघवात् । न च व्यासावतारभेदेन प्रणीतसूत्रद्वयं संगृह्य भाष्यकारेण व्याख्यातमिति कल्प्यम् । कल्पकप्रमाणाभावात् । एतेनोत्तरत्र पुरुषाश्मसूत्रे तत्रापि तथाऽपीति पाठद्वयनिदर्शनं प्रयुक्तम् । तथाशब्दघटितपाठस्यैव स्वपरसंमतत्वात् । भाष्ये तत्रापी-त्युक्तिस्तु तथाशब्दस्यैवार्थान्तराभिप्रायेणेति भावबोध एव स्पष्टम् । यच्चाद्यपाठस्येत्यादिना लिङ्गमुक्तम् । तन्न । भाष्याव्याख्याततत्वेनोङ्कारस्य सूत्राघटकत्वे जिज्ञासापदस्यापि सूत्राघटकत्वप्रसङ्गात् । जिज्ञासाकर्तव्येत्यनुवाद एव तत्र लिङ्गमिति चेत् । 'ओङ्कारश्चाथशब्दश्च तस्मात्प्राथमिकौ क्रमादि'ति स्मृत्युदाहरणमत्रापि लिङ्गं भविष्यति । न चात्र क्रमादित्यस्य पर्यायादित्यर्थो युक्तः । पौर्वापर्येण प्रथमनिःसृतत्वस्य तत्र हेतुत्वोक्त्ययोगात् । प्रथममित्यस्य युगपत्प्रथममित्यर्थत्वे च 'तृतीयोऽत उदाहृत' इति वाक्यशेषविरोधात् । 'अतश्च पूर्वमुच्चार्य सर्व एत' इत्युप-संहारोक्तेः पौर्वापर्येण पूर्वोच्चार्यत्वे पौर्वापर्येण पूर्वनिःसृतत्वस्यैव हेतुत्वसंभवाच्च । ब्रह्मशब्दश्च विष्णावेवेति भाष्ये चशब्देनोङ्कारस्यापि ग्रहणसंभवेन तस्य भाष्याव्याख्यातत्वासिद्धेश्च । ब्रह्मशब्दस्यैव मुख्यतो ग्रहणं तु देवमीमांसान्ते ब्रह्मशब्देन विष्णोः प्रस्तुतिसूचकत्वात् । तैत्तिरीयश्रुतिभिर्ब्रह्मशब्दस्य विष्णौ मुख्यत्वे समर्थिते ओमिति ब्रह्मेत्यादितच्छ्रुत्योङ्कारस्यापि तत्सिद्धिसंभवाच्चोपपद्यते । एवं न्यायविवरणस्यानुव्याख्यानोक्तन्यायमात्रविवरणाय प्रवृत्तत्वेन विषयादिमत्त्वरूपप्रथमाधिकरणन्यायस्याथात इत्यादिनैव लाभेन तच्च वाक्यान्तरादिसूचकोङ्कारानुपन्यास-संभवान्न तस्य लिङ्गत्वम् । एवमनुव्याख्यानेऽखिलैरित्युक्तेरप्यसन्निकृष्टसूत्रकारीयोङ्कारोच्चारणज्ञापकत्वेनान्यथा-सिद्धत्वादलिङ्गत्वम् । यत्तु द्वितीयपाठस्येत्युक्तं तत्सूत्रस्योङ्कारघटितत्व एव लिङ्गं न तु ब्रह्मशब्दाघटितत्वे । यच्च टीकायामथेतीति सूत्रप्रतीकग्रहणमोङ्कारासत्त्वे लिङ्गमुक्तम् । तदप्यन्यथासिद्धमेव । तत्र बुद्ध्यारोहाय तद्विजिज्ञासस्वेति श्रुत्युक्तजिज्ञासाया अकर्तव्यत्वशङ्कया सूत्रस्यावतारितत्वात्तस्याश्चाथेत्यादिभागेनैव निरासात्तस्यैव भाष्ये स्पष्टं व्याख्याततत्वाच्च तत्प्रतीकस्यैव ग्राह्यत्वात् । सूत्रमुपन्यस्यतीत्यवतारिका तु भाष्ये ओङ्कारोपेतसूत्रोपन्यासाद्युक्ता । अनुव्याख्याने चोङ्कारब्रह्मशब्दयोर्व्याख्यानं तयोरेकसूत्रघटकत्व एव श्लिष्टम् । एतेनोत्तरत्राथातो ब्रह्मजिज्ञासे-त्यनुवादोऽपि व्याख्यातः । देवमीमांसान्ते ब्रह्मशब्देन विष्णोरेव प्रकृतत्वात्तस्यैवात्र ग्रहणमित्यर्थसिद्धये तदनुवादात्तस्याश्चोङ्कारानपेक्षत्वात् । न चैवमथातःशब्दावपि तत्र न प्रयोक्तव्यावनुपयोगादिति वाच्यम् । यथा देवमीमांसासिद्धब्रह्माद्यसारताविवेकानन्तर्यमथशब्दार्थः । यथा च तत्सिद्धं सिद्धे व्युत्पत्त्यादिकमतःशब्दार्थः । एवं तत्र ब्रह्मशब्देन विष्णोः प्रकृतत्वात्स एवात्र ब्रह्मशब्दार्थ इत्येतल्लाभार्थमथातो ब्रह्मजिज्ञासेत्यनुवादसंभवात् । ओङ्कारब्रह्मशब्दोपेतसूत्रोपन्यासस्त्वस्मत्पक्ष एव श्लिष्ट इति स्पष्टमेव । यत्तु तयोर्मूलत्वं क्रमेणादित्वमित्यत्र मुख्यादित्वानुरोधात्क्रमेणेत्यस्य पर्यायेणेत्यर्थ इति । तन्न । मुख्यादित्वं यदि स्वघटितसूत्रघटकयावच्छब्दवत्त्वं तदा पर्यायेणाप्यथशब्दस्य दुर्लभम् । अथशब्दस्यापि यावदन्तर्गतत्वेन तत्र तत्पूर्वत्वाभावात् । यदि तु स्वघटित-सूत्रघटकस्वेतरयावच्छब्दपूर्वत्वं तदा स्वपदेनाथशब्दमुपादायाथशब्दस्येव ताराथोभयमुपादाय तदुभयस्यापि मुख्यादित्वं सुवचम् । अथशब्देऽप्यकारथकारयोरिव ताराथोभयस्मिन्नपि ताराथयोः क्रमेणादित्वात्तदुक्तिः । ननु पदस्य मुख्यादित्वं पदान्तरात्पूर्वत्वरूपमिति चेत् । पदद्वयस्य मुख्यादित्वं पदद्वयान्तरात्पूर्वत्वरूपमिति तुल्यम् ।





यदप्योङ्कारब्रह्मशब्दौ प्रयुक्तावित्यादावेकेनैव पूर्वपक्षपरिहारादपरस्य वैयर्थ्यमुक्तम् । तदपि न । ब्रह्मशब्दवदोङ्कारादेरपि जीवव्यतिरिक्तेश्वरसाधकत्वेन युक्त्यन्तरतया तदुपादानात् । न चैवमात्मादिशब्दस्यापि तथात्वादुपादानापत्तिः । उपलक्षणे चैकेनैवोपलक्षणसंभवादपरस्य वैयर्थ्यं दुर्वारमिति वाच्यम् । तथा सति क्वचिदपि युक्तिद्वयानुक्तिप्रसङ्गात् । युक्त्यन्तरोपलक्षणज्ञापकत्वादिना तत्सार्थक्यं तु प्रकृतेऽपि तुल्यम् । यत्त्वधिकार्यादिप्रतिपादकस्यान्यस्याभावादित्यत्रादिपदग्राह्याभाव इति । तदपि तादृशवाक्यस्य प्रागेव सम्यग्व्याख्यातत्वादयुक्तम् । प्रत्युत पाठभेदे ओङ्कारघटितसूत्रेऽधिकारिविषयप्रतिपादकाभावो ब्रह्मशब्दघटितसूत्रे चाधिकारिप्रतिपादकस्यैवाभाव इति विच्छिद्य व्याख्येयत्वादस्वारस्यम् । यच्च किञ्चेत्यादिनाऽनन्वयवाक्यभेदयोरापादनम् । तदप्यसत् । पाठभेदकल्पनापेक्षया वाक्यभेदकल्पनस्यादुष्टत्वात् । न च वाक्यभेदोऽपि । ब्रह्मशब्दरूढ्यर्थे ओङ्कारयोगार्थान्वयेनैकवाक्यत्वस्योक्तत्वात् । न च ब्रह्मशब्दस्यापि यौगिकत्वोक्तिविरोधः । सूत्रे ब्रह्मशब्दस्य रूढ्यर्थपरत्वेऽपि तत्सूच्यश्रुतौ तस्य योगार्थपरत्वेन विषयसमर्पकत्वात्तदपेक्षया यौगिकत्वोक्त्युपपत्तेः । यद्वा । ओमित्यस्योपलक्षणत्वेनोमात्मादिपदप्रतिपाद्य इत्यर्थः । ब्रह्मशब्दस्तु गुणपूर्णार्थः । ओं ब्रह्मण इत्यन्वयबलाच्च । गुणपूर्णत्वेनोमादिपदप्रतिपाद्यस्येत्यर्थलाभादोमादिपदस्य तत्तच्छ्रुतिषु यौगिकत्वेन जीवव्यतिरिक्तेश्वररूपविषयसमर्पकत्वासिद्धेर्न कश्चिद्दोषः । ओङ्कारार्थस्य गुणैर्गतस्य बृहधात्वर्थवृद्धिविशेषणतया गुणसंबन्धिनी या पूर्णता तदाश्रयस्योङ्कारब्रह्मशब्दाभ्यां लाभः । तयोः प्रत्येकं गुणपूर्णार्थत्वोक्तिस्तु तत्तच्छ्रुत्यभिप्रायेणेत्यप्याहुः । केचित्तु ओमित्यस्य तृतीयान्तस्य स्वपरतया करणत्वेन जिज्ञासायामेव तदन्वयः । साक्षादोङ्कारस्य जिज्ञासायामकरणत्वेऽप्यनुग्राह्यसकलवेदव्याख्येयतया मूलप्रमाणत्वात् 'सर्वैश्च वेदैः परमो हि देवो जिज्ञास्योऽसौ नाल्पवेदैः प्रसिद्धयेत्' इत्यादाविव करणत्वोपचारान्न दोष इति वदन्ति । किञ्च पाठभेदे बाधितविषयं चानुमानमिति ग्रन्थासङ्गतिः । ओङ्कारं पक्षीकृत्य ब्रह्मशब्दघटितसूत्रानवयवत्वसाधने ओङ्कारार्थस्य तादृशसूत्रार्थे समन्वयाभावेन बाधानवकाशात् । ओङ्काराघटितसूत्रानवयवत्वस्य चापाततोऽप्यसंभवित्वेन तच्छङ्काया एवानुपपत्तेः । न चोङ्कारघटितसूत्रपाठ एव नास्तीत्यभिप्रायेण सामान्यतः सूत्रानवयवत्वशङ्का सङ्गच्छते । तादृशपाठमुपेत्य बाधाभिधानं चोपपद्यत इति वाच्यम् । तथा सति तादृशपाठस्यैव स्थापनीयत्वेन सिद्धवत्कृत्य बाधोक्तेरयुक्तेः । एवं ब्रह्मशब्दघटितसूत्रादावोङ्कारानुच्चारणे श्रुतिविरोधः । तदुच्चारणे तस्यावयवत्वं दुर्वारमेव । न चोद्यमानं वाक्यात्पृथगित्यादिग्रन्थेन श्रुतिप्राप्तोङ्कारस्यैव सूत्रावयवत्वस्योक्तत्वात्सूत्रकारस्य विघ्नाप्रसक्तावपि मङ्गलाचरणस्येव स्रवणाद्यप्रसक्तावप्योङ्कारोच्चारणस्य शिष्यशिक्षार्थत्वेनावश्यकत्वादिति । अथोङ्कारार्थस्य प्रथमसूत्रवाक्यार्थान्वयित्वे तदन्तर्भाविन ब्रह्मविद्यात्वपर्याप्तेरोङ्कारात्पूर्वमप्योङ्कारोच्चारणप्रसङ्ग इति चेदिष्टापत्तिः । अत एव सन्न्यायरत्नावल्यामोङ्कारस्य पृथक्त्वोक्तेः । सुधायामवयवत्वोक्तेश्च । भिन्नविषयत्वेनाप्यविरोधश्चन्द्रिकायामुक्तः । न चैवमाद्यस्यानवयवभूतोङ्कारस्य सर्वत्रानुगत्यर्थमसंहिततया निर्देशोऽपि द्वितीयस्यावयवभूतोङ्कारस्याथादिशब्दवत्संहिततयैव निर्देशो युक्त इति वाच्यम् । सूत्रकारेणान्वयसमर्पकत्वेनानुगत्यर्थत्वेन चैकस्यैवोङ्कारस्य प्रयुक्तत्वात् । अत एव सर्वास्वपि ब्रह्मविद्यास्वाद्यन्तयोरोङ्कारस्योह इत्यपि साधु सङ्गच्छते । आदिसूत्रादावेकस्य साक्षादुच्चरितत्वेऽप्यन्यस्याध्याहार्यत्वात् । अत एव सूत्रकारानुच्चरितत्वज्ञापनार्थमाद्यन्तयोरोङ्कारमसंहिततयैवोच्चारयन्तीति ध्येयम् । केचिदादिसूत्रादावेकेनैवोङ्कारेण दृष्टादृष्टसिद्धेरोङ्कारान्तरमनावश्यकम् ।







न चादौ तदुच्चारणविधिविरोधः। आदिवर्णानुत्तरत्वरूपादित्वस्य तत्र विवक्षितत्वेनादिवर्णात्पूर्वमोङ्कारानुच्चारणेऽप्यविरोधादिति वदन्ति। एवं सर्वत्रेत्यादिमूलं प्रतिज्ञाहेतुदूषणपरतया व्याख्याय दृष्टान्तदूषणपरतयाऽपि व्याचष्टे **अथवेति**। पृथगित्यस्य व्याख्या **रूपान्तरेणेति**। तस्य विवरणं **स्थानव्यत्यासेनेति**। अध्ययनोपक्रमविरतिवैचित्र्यस्थानव्यत्यासेनेत्यर्थः। **उक्तन्यायेनेति**। सर्वत्रोच्चारणे गौरवरूपेण लब्धेनेति ज्ञापितेनेत्यर्थः। तथा च स्रवतीत्यादिश्रुत्या ओङ्कारस्य वेदवाक्येन सहैककार्यकारित्वरूपतदवयवत्वसिद्धावनियतस्थानतया पाठस्य सर्वत्रानुगतिरेव निमित्तं न त्वनवयवत्वमिति निश्चीयत इति विशिष्टार्थः। न चैवमध्यायाद्यन्तयोरोङ्कारोच्चारणेऽपि प्रतिवाक्यं तदनुच्चारणे वेदाध्ययनस्य वैयर्थ्यापत्तिरिति वाच्यम्। एकैकाध्यायानामप्येकैकब्रह्मविद्यात्वेन तदाद्यन्तयोरोङ्कारोच्चारणेन तत्फलसिद्धेरावश्यकत्वात्। एतावता लब्धं दृष्टान्तदोषं स्पष्टयति **अनेनेति**। **दृष्टान्तेति**। वेदाध्ययनोपक्रमे पठ्यमानोङ्कारे वेदवाक्यानवयवत्वसाधकस्यानियतस्थानतया पठ्यमानत्वहेतोरित्यर्थः। **तथा चेति**। अनवयवत्वसाधकाभावे चेत्यर्थः। नन्वित्यादिशङ्कानिरासमुपसंहरति **एवमिति**। **अनुमाने** अनवयवत्वसाधकानुमाने। **आदावुच्चारणेनेति**। प्रथमसूत्रे ज्ञापकतया सूत्रकृदुच्चरितत्वेनेत्यर्थः। **उक्तमिति**। ओङ्कारस्य मङ्गलार्थत्वसर्वसूत्रावयवत्वादिकमित्यर्थः। ततश्च शास्त्रस्य व्याख्येयत्वसिद्धिरिति भावः। इत्युपोद्घातग्रन्थः॥

**गूढ०— तया प्रणाड्या**। उक्तप्रकारेणेत्यर्थः। तर्ह्योङ्कारस्यावयवत्वसन्देह एव स्यादित्यत आह **वक्ष्यमाणेति**। न चैवमोङ्कारस्योत्तरसूत्रेष्ववयवत्वं न स्यात्। तदर्थान्वितार्थप्रतिपादकत्वादिति वाच्यम्। न हि तदर्थान्वितार्थप्रतिपादकत्वमेव सर्वत्रावयवत्वं किन्तु उक्तं, तच्चोत्तरसूत्रेष्वोङ्कारस्यास्तीति युक्तं तस्योत्तरसूत्रेष्ववयवत्वमिति भावः। न चेदमेव सर्वत्रावयवत्वं विवक्षितमिति वाच्यम्। तथा सति हुंफडित्यादीनामनवयवत्वापत्तेः। न च तर्हि प्रथमसूत्रेऽवयवतयेति प्रथमसूत्रावयवतासिद्धाविति पूर्वोत्तरग्रन्थविरोध इति वाच्यम्। प्रथमसूत्रे ओङ्कारस्य तदर्थान्वितार्थप्रतिपादकत्वस्यापि सत्त्वादित्यभिप्रायेण तस्य प्रवृत्तत्वात्। अत एव प्रथमसूत्रावयव एवायं विज्ञायेत तन्मा विज्ञायीत्युक्तमिति। अनुमानस्याप्रयोजकत्वप्रदर्शनपरतयेदं वाक्यं व्याख्याय साधनवैकल्यप्रदर्शनपरतयापि व्याचष्टे **अथवेति**। तर्ह्यध्ययनोपक्रमविरतिवैचित्र्येऽप्योमिति ब्रह्मेतिवन्नियतस्थानतया पाठः स्यादित्युक्तमित्यत आह **अखिलैरिति**। **उक्तन्यायेनेति**। ब्रह्मविद्यात्वेनोकारस्योह आवश्यकः. ऊह्यमानं त्ववयव एवेत्युक्तन्यायेनेत्यर्थः। **अनेनेति**। आदावुच्चारणेनैव सर्वत्रानुगतेर्लाभकथनेनेत्यर्थः। उपसंहरति **एवमिति**।

**प्रदीपः**— व्याख्यानं तूच्चारणानन्तरभावित्वाद्बहिरङ्गमिति **सन्देहेऽपीति**। परिहारप्रणाड्या परम्परया न केवलमर्थवादबलादोङ्कारस्य प्रथमसूत्रावयवत्वं समवेतार्थत्वादपीति न सन्देह इत्याह **वक्ष्यमाणेति**। एवं च मङ्गलाचारादप्युपपन्नं ब्रह्मसूत्राणां व्याख्येयत्वमिति सिद्धम्॥

**॥ इति श्रीमन्न्यायसुधायां उपोद्घातः समाप्तः॥**







॥ ब्रह्ममीमांसाशास्त्रस्य प्रेक्षावत्प्रवृत्तिविषयत्वेन आरम्भणीयत्वसमर्थनम् ॥
॥ शास्त्रस्य प्रयोजनाद्यभिसंबन्धः ॥

प्रथमसूत्रे प्रयोजनाद्यभिधानस्य शास्त्रप्रवृत्तिजनकत्वम्—

**१०५ सु०— तदेवं सिद्धे शास्त्रव्याख्येयत्वे, प्रेक्षावत्प्रवृत्तिविषयस्यैव आरम्भणीयत्वात्, प्रयोजनाभिधेयसंबन्धवत्येव च प्रेक्षावतां प्रवृत्तेः, आरम्भणीयतासिद्धये प्रेक्षावतः प्रवर्तयितुं प्रयोजनाद्यभिसंबन्धं प्रतिपादयतः प्रथमसूत्रस्य व्याख्याम् ओतत्ववाचीत्यादिना आरभते ।**

**परि०**— ओतत्ववाचीत्यादेरप्युपोद्धातत्वभ्रमनिरासाय आह **तदेवमिति** । उक्तप्रकारेण प्रामाण्यमङ्गलाचाराभ्यां युक्तत्वात्सिद्धे शास्त्रव्याख्येयत्व इत्यस्य प्रथमसूत्रस्य व्याख्यामारभत इत्यनेनान्वयः । शङ्कोत्थापनाय वा वैयर्थ्यनिरासाय वा आद्यसूत्रतात्पर्यमाह **प्रेक्षावदिति** ॥ **प्रयोजनेति** । प्रयोजनविषयसंबन्धवतीति वा ताभ्यां संबन्धवतीति वाऽर्थः ॥ **प्रयोजनाद्यभिसंबन्धमिति** । शास्त्रस्येत्यनुषङ्गः ॥ मोक्षरूपप्रयोजनेन ब्रह्मरूपविषयज्ञानद्वारा जन्यजनकभावरूपसंबन्धं ब्रह्मसूत्रसन्दर्भरूपशास्त्रस्य प्रतिपादयत इत्यर्थः । तज्ज्ञानाधीनत्वात्प्रवृत्तेरिति भावः । एतच्च जिज्ञासाद्वारेत्यग्रे व्यक्तम् ।

**यादु०**— **प्रेक्षावत्प्रवृत्तिविषयस्यैवारम्भणीयत्वादिति** । यद्यप्यत्रारम्भणीयत्वं मायावादखण्डनटीकोक्तं प्रेक्षावदुपादेयत्वरूपं ग्रहीतुं न शक्यम् । तस्य प्रेक्षावत्प्रवृत्तिविषयत्वरूपतया अत्रोक्तप्रयोज्यप्रयोजकभावानुपपत्तेः । तथाऽपि श्रोतव्यत्वादिरूपमन्यदेवेति द्रष्टव्यम् ।

**आनन्दः**— ननु ओतत्ववाचीत्यनेन प्रथमसूत्रव्याख्यानं क्रियते, तदयुक्तम् । निरर्थकत्वात् । न च आरम्भणीयत्वार्थं तदिति वाच्यम् । आरम्भणीयत्वोपयुक्तस्य प्रामाण्यादेस्तेनानुपपादनात् भाष्यकारेणोपपादनाच्चेत्यत आह **तदेवमिति** । सिद्धे प्रामाण्योपपादनादिति शेषः । ननु शास्त्रस्य प्रामाण्यादेव प्रेक्षावत्प्रवृत्तिविषयत्वं स्यादेवेत्यत आह **प्रयोजनेति** । उपलक्षणमेतत् । अधिकारिमतीत्यपि द्रष्टव्यम् । एवं चात्र प्रेक्षावत्प्रवृत्तौ सत्यामारम्भणीयत्वसिद्धिः । प्रेक्षावत्प्रवृत्तिश्च प्रयोजनादौ सतीति हेतुहेतुमद्भाव इति भावः ।

**श्रीनिधि०**— **आरम्भणीयत्वादिति** । उपादेयत्वादित्यर्थः । **व्याख्येयत्वं** व्याख्यानार्हत्वम् । प्रामाण्यं मङ्गलाचरणयुक्तत्वादिनेति भावः ।

**वा०चं०**— ओतत्ववाचीत्यादेरपि पूर्ववद्व्याख्येयतोपयुक्तप्रमेयप्रतिपादकत्वं न तु व्याख्यानत्वमिति भ्रान्तिं निवारयितुमोतत्ववाचीत्यादिव्याख्यानोपयुक्तप्रमेयोपक्षेपाय ओतत्ववाचीत्यादिभाष्यस्योपलक्षणत्वान्न सूत्र-





प्रतिपाद्यतत्फलानुक्त्या भाष्ये न्यूनतेत्यर्थसूचनाय च फलफलिभावोपपादनपुरःसरं परमावान्तरफले प्रतिपाद्यं च कथयन्नेव पूर्वग्रन्थासंभिन्नतयोत्तरग्रन्थप्रतिपाद्यं कथयति **तदेवमिति** ।

**वा०र०— व्याख्येयतोपयुक्तेति** । प्रामाण्यस्वरूपलाभरूपप्रमेयेत्यर्थः । अनेन एवं व्याख्येयत्वे सिद्धे इति मूलस्य प्रामाण्याद्युपपादनेन सिद्धे व्याख्येयत्वे इति योजना सूचिता । अस्य व्याख्यानम् आरभते इत्युत्तरेणान्वय इति संबन्धश्च सूचितः । **भ्रान्तिमिति** । गुरुर्गुरूणामित्यादि तथाभूतसाहचर्यात् व्याख्यानप्राक्कालीनसूत्रप्रतिपाद्यादि-वचनाभावाच्चोत्पन्नां भ्रान्तिमित्यर्थः । निवारयितुमुत्तरग्रन्थप्रतिपाद्यं कथयतीति संबन्धः । तर्हि प्रथमसूत्र-स्येत्यादिनैवालमित्यतः प्रेक्षावदित्याद्यधिकस्य प्रयोजनमाह **ओतत्ववाचीत्यादीति** । अयमर्थः । ओतत्व-वाचीत्यादिव्याख्यानं न कर्तव्यम् । तद्धि न शास्त्रस्य किन्तु प्रथमसूत्रस्यैव । न च तत्सूत्रं शास्त्रान्तर्भूतम् । येन तद्व्याख्यानं सङ्गतं स्यात् इत्याशङ्कापरिहारायारम्भणीयतासिद्ध्यर्थकप्रेक्षावदुपादेयत्वोपयोगिप्रयोजनादिमत्त्वं शास्त्रे प्रथमसूत्रं प्रतिपादयतीति मूले उक्तः अस्य सूत्रस्य शास्त्रप्रवृत्तिहेतुशास्त्रीयप्रयोजनादिमत्त्वप्रतिपादकतया शास्त्रोपोद्घातत्वस्य वा न्यायेन श्रौतप्रयोजनादिनिश्चायकत्वस्य वा वक्ष्यमाणरीत्या सत्त्वात् प्रथमसूत्रव्याख्यानं युक्तमित्येव ओतत्ववाचीत्यादिव्याख्यानोपयोगिशास्त्रोपोद्घातत्वादिरूपप्रमेयस्य उपक्षेपः प्रसक्तिः अनेन मूलेनेति । अत एव प्रतिपादयतः प्रथमसूत्रस्य व्याख्यानमित्यत्र प्रतिपादयतः इत्यन्तं हेतुगर्भं विशेषणमुपात्तमिति भावः । **व्याख्येयतयेति** । व्याख्यानेत्युपयुक्तविशेष्यिता । अनेनापि प्रकारेण भिन्नार्थतेति सूचितम् । प्रेक्षावदित्याद्यधिकोक्तेः प्रयोजनान्तरमाह **ओतत्ववाचीत्यादिभाष्यस्येति** । भाष्ये न्यूनताशङ्काप्राप्तौ तत्परिहारोऽन्यदीयवचने कथं स्यादित्यतो भाष्यस्योपलक्षणया प्रतिपाद्याभिधायकत्वेन तदभिप्रेतोपलक्षणास्पष्टीकारस्यान्यदीयत्वेऽपि न प्रति-पादनमेवान्यदीयमाश्रितमिति युक्त एव प्रतिपाद्यकथनेन न्यूनतापरिहार इति भावः । **फलफलिभावेत्यादीति** । अनेन प्रयोजनाद्यभिसंबन्धं प्रतिपादयतः इति प्रथमसूत्रप्रतिपाद्यकथनम् । तत्कथनप्रयोजनं प्रेक्षावतः प्रवर्तयितु-मिति कथितम् । तस्यापि प्रयोजनमारम्भणीयतासिद्धये इति । अत्रारम्भणीयत्वं कथमित्यतः तदुपपादनं **प्रेक्षावदिति** । प्रयोजनाद्यभिधानस्य तत्प्रवृत्त्यर्थोपपादनं **प्रयोजनेत्यादि** । अत्रारम्भणीयत्वं नाम न प्रेक्षावदुपा-देयत्वं मायावादखण्डनोक्तम् । प्रवृत्तिविषयत्वस्यैवेत्युक्तत्वेनाभेदापातात् । किन्तु आरब्धुमुचितत्वरूपमिति विवेक इति सूचितमिति ज्ञेयम् । तदेवं सिद्धे शास्त्रस्य व्याख्येयत्वे इत्येतत् उपयोगाभिधानम् । **पूर्वग्रन्थासंभिन्नतयेति** । पूर्वग्रन्थात् विविक्ततयेत्यर्थः । तत्सङ्गततयेति यावत् । व्याख्येयत्वसिद्ध्यनन्तरमेव व्याख्यानारम्भस्य युक्तत्वात् पूर्वप्रकरणेनास्य हेतुहेतुमद्भावलक्षणा सङ्गतिरिति भावः ।

**कुण्डल०—** ननु शास्त्रस्यादौ जिज्ञासासूत्रस्य सङ्गतत्वे तद्व्याख्यानमुचितम् । तदेव कथमित्यतः तत्सङ्गतिकथनपूर्वकं तद्व्याख्यानं समर्थयते **प्रेक्षावत्प्रवृत्तिविषयस्यैवेत्यादिना** । तथा चारम्भणीयत्वोपपादक-प्रेक्षावदुपादित्सागोचरत्वप्रयोजकप्रयोजनाद्यभिधानार्थम् आदौ जिज्ञासासूत्रस्य आवश्यकतया तद्व्याख्यानमुचित-मेवेति भावः ।





**स०ना०— प्रथमसूत्रस्य व्याख्यामिति** । प्रथमसूत्रस्य पाठद्वयम् । अथातो ब्रह्मजिज्ञासेत्याद्यः सूत्रप्रणयनावसरे निर्मितः, द्वितीयस्तु ॐ अथातो जिज्ञासेति सूत्रोपदेशावसरे निर्मितः । आद्यपाठाभिप्रायेण भाष्यन्यायविवरणे प्रवृत्ते । भाष्ये अथशब्दो मङ्गलार्थ इति ॐशब्दमव्याख्याय अथशब्दस्यैव व्याख्यातत्वात् कथमन्यथा प्राथमिकमोङ्कारमव्याख्यायाथशब्दं व्याकुर्वन् अकुशलो न स्यात् । न्यायविवरणे च जीवव्यतिरिक्तेश्वराभावात्तस्य च स्वप्रकाशत्वेन नित्यसिद्धत्वात् अजिज्ञास्यतेत्यतो अथातो ब्रह्मजिज्ञासेत्याह इत्यभिधानात् । अनुव्याख्यानं तु पाठद्वयाभिप्रायेण प्रवृत्तं, ओङ्काराथशब्दयोरुभयोरपि व्याख्यानात् । अवश्यं चैतदेवं विज्ञेयम् अथातो ब्रह्मजिज्ञासा अथात ॐ जिज्ञासेत्यन्वयसंभवात् । अन्यथा शब्दद्वयोपेतः एक एव पाठ इत्यङ्गीकारे जिज्ञासापदस्य ब्रह्मपदेनान्वितत्वात् ओङ्कारेणान्वयो न स्यात् । बुद्ध्या विवेकस्यागतिकगतित्वात् । अन्यथा तथात्वे प्रथमसूत्रं न्यूनमापद्येत । अधिकार्यादिप्रतिपादकस्यान्यस्याभावादिति प्राक्तनं टीकावाक्यमयुक्तं स्यात् । कुतः ? विषयसमर्पकस्य ब्रह्मशब्दस्य सद्भावेनादिशब्दसंग्राह्याभावात् । किञ्च ब्रह्मशब्देनैव गुणपूर्णत्वस्याभिहितत्वात् । ओङ्कारस्य वैयर्थ्यम् । न चान्यतरस्य रूढत्वात् न वैयर्थ्यमिति वाच्यम् । स एव ब्रह्मशब्दार्थ इति ओङ्कारवत् ब्रह्मशब्दस्यापि यौगिकत्वाभिधानात् ताभ्यां च तत्सकलजीवजडात्मकात्प्रपञ्चाद्विलक्षणमवगम्यत इति सुधोक्तेश्च । न च ॐ जिज्ञासा ब्रह्मजिज्ञासेति योजनाभेदेनावैयर्थ्यमिति वाच्यम् । वाक्यभेदापरिहारात् । बुद्ध्या विवेकप्रसङ्गाच्च । नारायणानन्तेश्वरादिशब्दानामिव ओङ्कारस्यापि ब्रह्मशब्दस्योपलक्षणत्वेन लाभसंभवे पृथग्ग्रहणवैयर्थ्यं च ।

**विठ्ठ०— प्रेक्षावतामिति** । अनेनैवाधिकारिलाभात् प्रयोजनाभिधेयसंबन्धवत्येवेत्युक्तमिति मन्तव्यम् ।

**चषकः— प्रेक्षावदिति** । अत्र आरम्भणीयत्वप्रेक्षावत्प्रवृत्तिविषयत्वयोः प्रयोज्यप्रयोजकभावोक्त्या तयोः परस्परतादात्म्यप्रत्यायकटीकान्तरं विरुद्ध्यत इति शङ्कमाना व्याकर्तारः श्रवणयोग्यत्वादिरूपमन्यदेव द्रष्टव्यमिति समादधति ।

**काशी०—** इदानीमोङ्काराद्यखिलवेदार्थभूतं शास्त्रस्य विषयं दर्शयितुमाह **ओतत्ववाचीतीति** । सन्न्यायरत्नावल्युक्त्या सूत्रबहिर्भूतस्यैवोङ्कारस्यात्र व्याख्यानमिति शङ्कानिरासार्थमाह **तदेवमिति** । **प्रेक्षावदिति** । आरम्भणीयत्वे प्रेक्षावत्प्रवृत्तिविषयत्वस्य तस्मिंश्च प्रयोजनादिमत्त्वस्य प्रयोजकत्वादित्यर्थः । यद्यपि मायावादखण्डनटीकायामारम्भणीयत्वं प्रेक्षावदुपादेयत्वमित्युक्तेरुपादेयत्वस्य च प्रवृत्तिविषयत्वरूपत्वान्न तत्र तस्य प्रयोजकत्वसंभवः । तथाऽपि श्रोतव्यत्वादिना प्रेक्षावत्प्रयत्नविषयत्वरूपप्रेक्षावदुपादेयत्वमारम्भणीयत्वम् । श्रोतव्यत्वादिना प्रेक्षावदिच्छाविषयत्वमेव च प्रेक्षावत्प्रवृत्तिविषयेत्यनेन विवक्षितम् । अनुपदमेव प्रवृत्तिशब्दस्येच्छार्थताया वक्ष्यमाणत्वात् । इच्छायाश्च प्रयत्नहेतुत्वात्तद्विषयत्वस्य तद्विषयत्वे प्रयोजकत्वोपपत्तिः । यादुपते तु प्रवृत्तिविषयत्वमुपादेयत्वं चैकीकृत्य श्रोतव्यत्वादिरूपमन्यदेवारम्भणीयत्वमित्युक्तम् । **प्रयोजनादीति** । शास्त्रस्य ये प्रयोजनादयस्तेषां मिथः संबन्धं प्रतिपादयत इत्यर्थः । जिज्ञासाया ब्रह्मज्ञानद्वारा मोक्षहेतुत्वप्रतिपादनादिना ब्रह्मणो मोक्षहेतुज्ञानविषयत्वादिरूपसंबन्धलाभादिति भावः । यद्वा । शास्त्रस्य प्रयोजनादिना यः संबन्धी मोक्षहेतु-





ज्ञानजनकजिज्ञासाङ्गन्यायव्युत्पादकत्वादिरूपस्तं ज्ञापयत इत्यर्थः । प्रथमसूत्रस्योक्तरूपसंबन्धाप्रतिपादकत्वेऽपि तज्ज्ञापकत्वमस्त्येव । एवं च सन्न्यायरत्नावल्यां प्रथमसूत्राभिप्रेतं विषयं दर्शयितुमित्यर्थस्य विवक्षितत्वान्नोक्त-शङ्कावकाश इत्याशयः ।

**गूढ०**— ननु ओतत्ववाचीत्यनेन प्रथमसूत्रव्याख्यानं क्रियते, तदयुक्तम्। निरर्थकत्वात्। न चारम्भणीय-त्वार्थं तदिति वाच्यम्। आरम्भणीयत्वोपयुक्तस्य प्रामाण्यादेस्तेनानुपपादनाद्भाष्यकारेणोपपादनाच्चेत्यत आह **तदेव-मिति** । **सिद्धे** प्रामाण्योपपादनादिति शेषः । ननु शास्त्रस्य प्रामाण्यादेव प्रेक्षावत्प्रवृत्तिविषयत्वं स्यादेवेत्यत आह **प्रयोजनेति** । उपलक्षणमेतत्। अधिकारिमतीत्यपि द्रष्टव्यम्। एवं चात्र प्रेक्षावत्प्रवृत्तौ सत्यामारम्भणीयत्वसिद्धिः। प्रेक्षावत्प्रवृत्तिश्च प्रयोजनादौ सतीति हेतुहेतुमद्भाव इति भावः।

**॥ प्रथमसूत्रे प्रयोजनाद्यभिधानस्य सार्थक्यम् ॥**

**१०६ सु०— ननु ब्रह्मज्ञानस्य मोक्षहेतुता यदि शास्त्रप्रवृत्तेः प्रागेव प्रमाणान्तरसिद्धा व्यर्थं तदा तदभिधानं शास्त्रे। प्रमाणान्तरसिद्धे क्वचिदुपदेशानपेक्षणात् । अथेहैव तन्निश्चयः, तदा प्रवृत्तौ प्रयोजनादिनिश्चयो निश्चिते च प्रयोजनादौ प्रवृत्तिरित्यन्योन्याश्रयत्वम् । अथ प्रथमसूत्रात् तन्निश्चयः । तत्रैव कथं प्रवृत्तिः । तदर्थं च प्रयोजनान्तराभिधाने अनवस्था । एवमेव तत्र प्रवृत्तावुत्तरत्रापि तथात्वप्रसङ्गादनर्थकं सूत्रे प्रयोजनाद्यभिधानमिति ।**

**परि०**— प्रयोजनाद्यभिसंबन्धज्ञानं प्रवृत्तिहेतुरित्युक्तम् । तत्किं मानान्तरेणाथैतच्छास्त्रेणोत आद्यसूत्रेणेति विकल्पान्क्रमेण निराह **नन्वित्यादिना** ॥ **ब्रह्मज्ञानस्य मोक्षहेतुतेति** । ब्रह्मज्ञानद्वारा शास्त्रस्य मोक्षहेतुतेत्यर्थः । यद्यपि प्रयोजनाद्यभिसंबन्धं प्रतिपादयतः प्रथमसूत्रस्येत्युक्तत्वान्न कोट्यन्तरशङ्काऽवकाशः । शास्त्रे प्रवृत्त्यर्थं तस्य प्रयोजनाद्यभिसंबन्धाभिधानमाद्यसूत्रे चेत्तत्रैव कथं प्रवृत्तिरित्येव शङ्कनीयम् । तथापि यदि कश्चिदन्यत एव तज्ज्ञानमिति ब्रूयात्तदा तं प्रत्युत्तरं वक्तुं परिशेषादाद्यसूत्रादेव तदिति दृढीकर्तुं प्रमाणान्तरसिद्धेत्यादिकोटेरप्युपन्यास इत्यदोषः ॥ **कथमिति** । आद्यसूत्रजन्योक्तरूपनिश्चयस्यापि फलान्तरहेतुत्वानिश्चये तज्जनकआद्यसूत्रेऽपि प्रवृत्त्ययोगादिति भावः। **तदर्थमिति** । यथा जन्माद्यस्येत्यादिशास्त्रप्रवृत्तिहेतुतया तज्जन्यब्रह्मज्ञानद्वारा तस्य प्रयोजनाद्यभिसंबन्ध-ज्ञानजननाय आद्यसूत्रमित्युच्यते । तथा आद्यसूत्रेऽपि प्रवृत्त्यर्थमाद्यसूत्रस्यापि तज्जन्योक्तरूपज्ञानद्वारा तस्य प्रयोजनाद्यभिसंबन्धं ज्ञापयितुं सूत्रान्तरं तत्राप्येवमित्यर्थः ॥ **एवमेवेति** । प्रयोजनहेतुत्वाननु-सन्धानेनैवाद्यसूत्रे प्रवृत्तावित्यर्थः।





**वं०प०— प्रयोजनान्तरेति** । प्रथमसूत्रे प्रवृत्त्यर्थं सूत्रान्तरं कृत्वा तेन प्रयोजनान्तराभिधान इत्यर्थः । **एवमेव** प्रयोजनाद्यनभिधानेऽपि । **तत्र** प्रथमसूत्रे । **उत्तरत्रापि** शास्त्रेऽपि । **अनुभवः** साधनगोचरानुभवः ॥ **नानुभूयत इति** । किन्त्वनुभूयत एवेति अनुभवस्य प्रयोजननिश्चयापेक्षत्वं नास्तीति भावः । **सुखं** सुखरूपं फलम् ॥ **नेष्यत इति** । किन्त्विष्यत एवेति फलगोचरेच्छायाः प्रयोजननिश्चयापेक्षत्वं नास्तीति भावः ॥

**आनन्दः**— प्रयोजनादिप्रतिपादनस्य प्रवृत्तिहेतुत्वमसहमानः शङ्कते **नन्विति** । ननु प्रथमसूत्रे प्रयोजनादिनिश्चये सति प्रवृत्तिरिति नान्योन्याश्रय इत्यत आह **अथेति** । **एवमेवेति** । प्रयोजनाभावेऽपि प्रथमसूत्रे प्रवृत्तिश्चेदित्यर्थः ।

**कं०रा०— प्रवृत्ताविति** । शास्त्र इति शेषः । इहेत्यस्यानुषङ्गो वा । **तदर्थमिति** । प्रथमसूत्रे प्रवृत्त्यर्थं प्रयोजनान्तराभिधायकवाक्येऽङ्गीक्रियमाणे तत्रापि प्रवृत्त्यर्थं प्रयोजनान्तराभिधानमङ्गीकर्तव्यमित्यनवस्थेत्यर्थः । **एवमेवेति** । प्रयोजनादिनिश्चयं विनैव प्रथमसूत्रे प्रवृत्तावङ्गीक्रियमाणायामुत्तरसूत्रेष्वपि तथैव प्रवृत्त्यापत्त्याऽनर्थकं प्रथमसूत्रे प्रयोजनाद्यभिधानमित्यर्थः ।

**वा०चं०**— ननु प्रथमसूत्रस्य शास्त्रप्रवृत्तिप्रयोजकप्रयोजनादिप्रतिपादकत्वं वदता तस्य शास्त्रान्तर्भावः अङ्गीक्रियते न वा । आद्येऽपि तस्य प्रमाणान्तरसिद्धब्रह्मज्ञानमोक्षसाध्यसाधनभावबोधकत्वं तदनवगततद्बोधकत्वं वा । आद्ये वाक्यप्रामाण्यस्य फलनियतत्वेनावगतार्थबोधकत्वे प्रयोजनान्तरस्याप्यभावेन अप्रामाण्यापत्तेः । द्वितीयेऽपि फलाद्यध्यायैस्तन्निश्चयः प्रथमसूत्रं तु तत्प्रतिज्ञारूपमिति वा शास्त्रैकदेशप्रथमसूत्रेणैव तन्निश्चयो वा । आद्ये शास्त्र-प्रवृत्तिप्रयोजकप्रयोजनादिनिश्चयस्य शास्त्रप्रवृत्तिसाध्यत्वेन अन्योन्याश्रयतापत्तेः । शास्त्रान्तर्भावो नेत्याद्यद्वितीये शास्त्रैकदेशप्रथमसूत्रेणैव तन्निश्चय इति । अव्यवहितद्वितीयेऽपि प्रथमसूत्रे प्रवृत्तिः प्रयोजनादिनिश्चयसाध्या न वा । आद्ये तत्र प्रयोजनादिनिश्चायकवाक्यस्य अभावे प्रवृत्त्यनुपपत्त्या तत्प्रवृत्तिप्रयोजकप्रयोजनादिनिश्चायकान्तरा-भिधाने तत्प्रवृत्तिप्रयोजकप्रयोजनादिनिश्चायकान्तरपरम्परयाऽनवस्थापत्तेः । नेति पक्षे न्यायसाम्येन शास्त्रप्रवृत्तेरपि तन्निश्चयाभावेऽप्युपपत्त्या प्रथमसूत्रे तदभिधानं व्यर्थं स्यादित्याशङ्कते **नन्विति** । अत्र शास्त्रस्य प्रयोजनहेतुतेति वक्तव्ये न्यायग्रथनात्मकशास्त्रस्य न्यायानुसन्धानफलकत्वस्य न्यायानुसन्धानरूपविचारस्य च विचार्यज्ञानहेतुताया लोकसिद्धत्वाल्लोकतोऽसिद्धब्रह्मज्ञानमोक्षसाध्यसाधनभावस्यैव सूत्रप्रमेयत्वमित्यभिप्रेत्य ब्रह्मज्ञानस्य मोक्षहेतुता इत्युक्तम् । प्रमाणान्तरसिद्धता च विचारस्य ज्ञानहेतुतयैव प्रत्यक्षादिसिद्धता वा । अलौकिकत्वादस्यार्थस्य श्रुतिसिद्धता वेति द्रष्टव्यम् । सूत्रे प्रकृते शास्त्र इत्युक्तिः प्रथमसूत्रस्य शास्त्रान्तर्भावपक्षे दूषणत्वं सूचयितुं तथा चेहैवेति शास्त्रपरामर्शादन्योन्याश्रयतोपपादनसौकर्यम् । प्रमाणान्तरसिद्धे क्वचिदुपदेशानपेक्षणादिति च श्रौतप्रयो-जनादेः न्यायेनोपपादनार्थमिति वक्ष्यमाणव्यावर्त्यत्वेनेति द्रष्टव्यम् ।

**वा०र०— ननु ब्रह्मज्ञानस्ये**त्यादि मूले व्यर्थं तदभिधानम् । शास्त्रे शास्त्रपदप्रयोगः कथम् । प्रथमसूत्रे एव तदभिधानसत्त्वे प्रथमसूत्रे इत्येव वक्तव्यत्वात् । अत एव इह एव इत्युत्तरवाक्येऽपि शास्त्र एवेत्यर्थस्वीकारोऽपि





न युक्तः। शास्त्रपदस्य तदेकदेशसूत्रलक्षकत्वाङ्गीकारेऽथ प्रथमसूत्रादिति वक्ष्यमाणशङ्कायोगः। अन्योन्याश्रयेण दूषिते सति पुनः शङ्कयोगात्। इत्याद्यनुपपत्तिप्रतीतेः दुर्घटमिदं मूलमिति शङ्कावारणायात्र **मूले** विकल्पदोषाश्रयणेन दूषणप्रवृत्तेरभिप्रेतत्वात् न दौर्घट्यमित्याशयेन मूलाभिप्रेतविकल्पप्रदर्शनपूर्वकं तद्दूषणपरतया तत्रतत्रोपयुक्तं कथयन् उपन्यासमुखेनैवैतत् मूलं विवृण्वन् अवतारयति । **ननु प्रथमसूत्रेत्यादिना** प्राक्सूत्रप्रतिपाद्यस्योपलक्षणया भाष्येऽभिधानाश्रयणात् तदुपर्येवायमाक्षेप इति दर्शयितुं वदतेत्यन्तम् । वक्ष्यमाणरीत्याशास्त्रपदप्रयोगसूचित-शास्त्रान्तर्भावपक्षावलम्बनेनाथ प्रथमेत्यतः प्राक्ग्रन्थस्य प्रवृत्तिरित्यभ्युपेयम्। अर्थेत्यादेस्तदनन्तभविन प्रवृत्त्यङ्गी-कारपक्ष एवानवस्थाप्रसङ्गोद्भावनसङ्गतेः। अन्यथाप्ताश्रयस्य प्रथमोपस्थितस्य त्यागायोगः इत्याशयेन प्रथम-विकल्पाभिधानं पूरितम् । **प्रमाणान्तरसिद्धेति** । सिद्धो यः ब्रह्मज्ञानमोक्षयोः साध्यसाधनभावः तद्बोधकत्व-मित्यर्थः। **तदनवगतेति**। प्रमाणान्तरानवगतेत्यर्थः। **आद्ये वाक्यप्रामाण्यस्येति**। अनेन मूले प्रयोजनाभिधान-वैयर्थ्योक्तिरसङ्गता । व्यर्थत्वेऽपि यथार्थज्ञानजनकत्वरूपप्रामाण्यस्याविधानात् । प्रयोजनाभिधानस्यात्र प्रयो-जनावगमप्रयोजनकत्वायोगेऽपि प्रयोजनार्थान्तरार्थताया एव संभवेन व्यर्थत्वाभावाच्चेति शङ्काऽपहस्तिता भवति। इतरप्रमाणप्रामाण्यस्य फलवत्त्वाघटितत्वेऽपि वाक्यप्रामाण्यस्य याथार्थ्यमिव मानत्वमपि वाक्यप्रयोजकम् । मानत्वमेति इति युक्तिपादे वक्ष्यमाणरीत्या फलवत्त्वघटिततयाऽवगतार्थबोधकत्वेऽप्रामाण्यापत्तेः। ब्रह्मज्ञानमोक्ष-साधनतावगमातिरिक्तफलसत्त्वे तद्घटितस्यापि प्रामाण्यस्य वक्तुं शक्यत्वेऽपि तदतिरिक्तफलाभावेन विशिष्टप्रामाण्या-नुपपत्तेः इति योजना। **इहैव** तन्निश्चयः इत्यस्य व्याख्यानं **फलाध्यायैरिति**। आदिपदेन साधनाद्यध्यायपरिग्रहः फलाध्यायसाधनाध्यायादौ प्रयोजनप्रतिपादनबाहुल्यक्रमेण फलाध्यायादिक्रमपरिग्रहः ततश्च जन्मादिसूत्रादिसमस्त-शास्त्रेणैवेत्यर्थः फलतीति ज्ञेयम्। शास्त्रेण ज्ञानमोक्षसाधनसाध्यमानप्रतिपादनं तु जन्मादिसूत्रे तन्निष्ठस्य अस्मिन्नस्य च इत्यादौ न कर्मविभागादित्यादौ पुरुषार्थाधिकरणादिषु चेति तत्र तत्र स्पष्टम्। ननु उक्तसाध्यसाधनभावस्य शास्त्रगम्यत्वविकल्पे प्रथमसूत्रवैयर्थ्यपरिहारः कथमित्यत आह **प्रथमसूत्रं त्विति**। ततश्चेहैव तन्निश्चयः इत्यनन्तरं प्रथमसूत्रं तु तत्प्रतिज्ञारूपमिति शेष इति सूचितं भवति । शास्त्रैकदेशेतिवदता शास्त्रप्रवृत्तेः प्रयोजनादि-निश्चयसाध्यत्वेऽपि सप्रयोजनादिनिश्चयो न शास्त्रेणैव। येनान्योन्याश्रयत्वमपि तु तदेकदेशेन शास्त्रात् बुद्ध्या विवेकेन पृथक्कृतेनेत्युक्तं भवति । वक्ष्यमाणमूलेऽस्य सूत्रस्य शास्त्रान्तर्भावाभ्युपगमात् तदनुसारेणात्र वस्तुगत्या एकदेशत्वकीर्तनमित्याहुः। **शास्त्रप्रवृत्तीति**। अनेन मूले प्रवृत्तेतिपदं शास्त्रप्रवृत्तिपरमिति सूचितम्। **अन्योन्या-श्रयेति**। शास्त्रप्रवृत्तिप्रयोजक इत्युक्तत्वात् प्रयोजनादिनिश्चये शास्त्रप्रवृत्तिः इति लाभादिति भावः। शास्त्रान्त-र्भविनेत्याद्यद्वितीयदूषणसाम्यात् पक्षद्वयं सङ्गृहीतम्। **आद्ये तत्रेति**। अनेन प्रथमसूत्रप्रवृत्तिप्रयोजकप्रयोजनादि-निश्चायकाभावेन तन्निश्चयस्याभावात् तत्र प्रवृत्तिः न संभवतीति कथं प्रवृत्तिः इत्येतत् मूलं आक्षेपपरतया व्याख्यातं भवति। आत्माश्रयापत्त्या स्वस्यैव स्वप्रयोजनादिनिश्चायकत्वं युक्तमित्याशयः। **तदर्थं चेति** मूलं व्याख्याति **तत्प्रवृत्तिप्रयोजक इति** । अनेन तदर्थस्य सूत्रप्रवृत्त्यर्थमिति प्रयोजनान्तरेत्यस्य प्रयोजनादिनिश्चायकान्तरेति व्याख्येयमिति सूचयति। **अभिधाने** इत्यस्याङ्गीकारे इत्यर्थो ज्ञेयः। शास्त्रप्रवृत्तिः सूत्रात् सूत्रप्रवृत्तिश्चान्यस्मात् इत्येतावन्मात्रेण अविश्रान्तपरम्परास्वीकाराप्रतीतेः कथम् अनवस्थाभिधानम् इत्यतः उपयुक्तमाह **तत्प्रवृत्तीति**।





सूत्रप्रवृत्तिप्रयोजकप्रयोजनादिनिश्चायकेऽपि प्रवृत्त्यन्यथानुपपत्त्या तन्निश्चायकगतप्रवृत्तिप्रयोजकप्रयोजनार्थं प्रयोजनादिनिश्चायकान्तरापेक्षेत्येवं परम्परयेत्यर्थः । **नेतीति** । प्रथमसूत्रप्रवृत्तिः प्रयोजननिश्चयसाध्या नेति पक्षे इत्युक्त्या **एवमेवेति** मूलम् । प्रयोजनादिनिश्चयाभावेऽपि इति विवृतं भवति । उत्तरत्रापि तथात्वेत्यत्राप्रयोजकताशङ्कानिरासाय उक्तं **न्यायसाम्येति** । शास्त्रप्रवृत्तेरिति वदतोत्तरत्र इत्येतत् शास्त्र इति निवृत्तम् । मूले **अनर्थकमिति** । प्रयोजनान्तरं तु नास्त्येवेति भावः । **इति वक्तव्य इति** । सिद्धे शास्त्रस्य इत्यादि पूर्वमूलानुसारादिति भावः । शास्त्रं हि न्यायग्रथनात्मकम् । न्यायग्रथनस्यापि न्यायानुसन्धानं प्रयोजनं प्रसिद्धमेवेति न तत्सूत्रप्रतिपाद्यम् । अथ न्यायानुसन्धानस्य प्रयोजनं विवक्षित्वा शास्त्रप्रयोजनं सूत्रप्रतिपाद्यमुच्यत इति चेत् । न तस्यापि विचार्यज्ञानरूपप्रयोजनवत् या प्रसिद्धिः तत्प्रयोजनस्य सूत्रप्रतिपाद्यत्वायोगात् । किन्तु शास्त्रसाध्यानुसन्धानसाध्यज्ञानस्य प्रयोजनवत्तायाः अप्रसिद्धत्वात् तत्प्रयोजनमेव सूत्रप्रतिपाद्यम् । तदभिप्रायेणैव शास्त्रस्य प्रयोजनाद्यभिसंबन्ध इत्याद्युक्तिरिति भावः । विचारस्य ज्ञानहेतुतायाः इति वेति पाठः हेतुतेवेति तु लेखकागतः । श्रौतस्य प्रयोजनादेरिति वक्ष्यमाणमूलानुसारेणाह **अलौकिकत्वादिति** । **सूत्रे प्रकृत इति** । प्रथमसूत्रस्येत्यनेन । **दूषणत्वमिति** । प्रयोजनाभिधानव्यर्थतायाः इति शेषः । उत्तरत्र तदनन्तर्भावपक्षदूषणस्यावश्यकतया तथात्वस्यावश्यकत्वादित्यर्थः । अनेन प्रयोजनान्तरमपि सिद्धमित्याह **तथा चेति** । पक्षापरिग्रहफलकतया शास्त्रपदोपादानस्य आवश्यकत्वात् तदुपादाने च इहैवेत्यनेन शास्त्रपदमुख्यार्थमङ्गीकृत्य परामर्शे सति शास्त्रान्तर्भावेनान्योन्याश्रयोपपादनं सुकरमित्यर्थः । **अनपेक्षणात् इति चेति** । इति उक्तिश्चेदित्यर्थः ।

**स०व्र०**— शास्त्रे प्रेक्षावत्प्रवृत्त्यर्थं प्रयोजनादिप्रतिपादकसूत्रार्थपरं भाषणं चानर्थकमिति आक्षिपति **ननु ब्रह्मज्ञानस्येति** । किं प्रवृत्तिमात्रे प्रयोजनादिनिश्चयस्य कारणत्वमेतच्छास्त्रप्रवृत्तावेव । आद्येऽपि किं प्रयोजनादिनिश्चयः प्रमाणान्तरेणोत प्रथमसूत्रेण । द्वितीयेऽपि किं प्रथमसूत्रं शास्त्रान्तर्भूतमुत बहिर्भूतमिति विकल्पान्मनसि निधाय प्रथमे प्रथममाशङ्क्य परिहरति **यदि शास्त्रप्रवृत्तेः प्रागेवेति** । शास्त्रारम्भहेतुभूतप्रयोजनादिप्रतिपादकस्यापि यदि श्रुत्यादिसिद्धानुवादकत्वं तर्हि तत एव तन्निश्चयात् सूत्रानर्थक्यम् । यद्यपि प्रमाणानां सम्प्लवोऽभिमतः तथापि शब्दस्यापेक्षितार्थबोधकत्वात् सिद्धे चोपदेशानपेक्षणादित्युक्तम् ॥ **क्वचिदिति** । निष्प्रयोजनस्थल इत्यर्थः । तेन 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम' इत्यादौ द्रव्यदेवतासंयोगाद्यागपरत्वे अर्थप्राप्तनिर्वापानुवादकत्वेऽपि धातोर्यथा अर्थवत्त्वं तथाऽत्रेति निरस्तम् । तत्र निर्वापवानयं याग इति प्राशस्त्यरूपार्थबोधकत्वेन सार्थक्यादिति भावः ॥ प्रथमस्य द्वितीये प्रथममाशङ्क्य पराचष्टे **अथेहैवेति** । **इह** शास्त्रे । तस्यैव प्रयोजनाद्यभावात्प्रवृत्त्यनुपपत्तौ शास्त्रीयप्रवृत्तिप्रयोजकत्वं न स्यात् । तेनैव तत्प्रतिपादनेऽन्योन्याश्रयापत्तेरिति भावः ॥ **तदर्थं चेति** । प्रयोजनादिप्रतिपादकस्यापि प्रयोजनादिरहितत्वे प्रवृत्त्यभावापत्तेः प्रयोजनादिमत्त्वं स्वत इत्युक्ते आत्माश्रयात्, तदपेक्षया प्रथमसूत्राच्चेदन्योन्याश्रयात् तस्यापि अन्यतश्चेत्तस्याप्येवमित्यनवस्थेति भावः । आद्ये द्वितीयं निराकरोति **एवमेवेति** । प्रयोजनादिमत्येव प्रवृत्तेः स्वारसिकत्वात् प्रथमसूत्रे प्रवृत्त्यभावे शास्त्रस्य प्रयोजनादिमत्त्वमेव न सिद्ध्येदिति भावः ॥ प्रवृत्तिमात्रस्य प्रयोजनादिनिश्चयसापेक्षत्वात् शास्त्रीयप्रवृत्तिप्रयोजनादिप्रतिपादकं प्रथमसूत्रं सार्थकमेव।





**कुण्डल०**— ननु शास्त्रे प्रेक्षावतां प्रवृत्त्युत्पादनाय प्रथमसूत्रे प्रयोजनाद्यभिधानमिति न युक्तम् । शास्त्रप्रवृत्तेः प्रागेव प्रमाणान्तरेण प्रयोजनावगतेः संभवात् । शास्त्र एव प्रवृत्त्यर्थं प्रयोजनाद्यभिधाने चान्योन्याश्रयात् तत्परिहाराय प्रथमसूत्रे प्रयोजनाभिधाने च तत्प्रवृत्तिजननाय प्रयोजनाभिधायकवाक्यान्तरस्यावश्यकतया तत्राप्येवमित्यनवस्थानात् प्रयोजनावगतिं विना प्रथमसूत्रे प्रवृत्त्यङ्गीकारे चोत्तरसूत्रेष्वपि तथैवोपपत्तिरिति शङ्कते **नन्विति** । शास्त्र एवेत्यर्थः । **अन्योन्याश्रयत्वमिति** । इदं चान्योन्याश्रयत्वकथनं शास्त्रप्रवृत्त्यर्थं प्रथमसूत्र एव प्रयोजनाभिधानमावश्यकमिति पर्यवसायं निराकर्तुम् । तथाच इहैव तन्निश्चय इत्यादिकं नानुपयुक्तं इति ध्येयम् । **एवमेवेति** । तूष्णीमित्यर्थः । प्रयोजननिश्चयं विनेति यावत् ।

**विठ्ठ०**— ओतत्ववाचीत्यादिना एतच्छास्त्राभिधेयं ब्रह्म तज्ज्ञानद्वारा मोक्षः प्रयोजनं इत्यत्र शास्त्रे प्रतिपाद्यत इत्युच्यत इति लब्धम् । तत्र शङ्कते **ननु ब्रह्मज्ञानस्येति** । अस्मिन् शास्त्रे प्रवृत्तेः पूर्वं ब्रह्मज्ञानस्य मोक्षलक्षणप्रयोजनहेतुतानिश्चयः उत शास्त्रेषु प्रवृत्त्यनन्तरं इहैव निश्चय इति विकल्पान् मनसि निधायाद्यं दूषयति **ब्रह्मज्ञानस्येति** । द्वितीये त्वाह **अथेहैवेति** । प्रथमसूत्रे प्रयोजनादिनिश्चये सति द्वितीयादिसूत्रे प्रवृत्तिरित्याशङ्क्याह **अथ प्रथमेति** । प्रवृत्तिमात्रस्य प्रयोजनादिनिश्चयपूर्वकत्वात् प्रयोजनाद्यनिश्चयपूर्वकत्वात् प्रयोजनाद्यनिश्चये प्रथमसूत्रेऽपि कथं प्रवृत्तिरित्याशयः । सत्यं, प्रथमसूत्रेऽपि प्रयोजनादिनिश्चयेनैव प्रवृत्तिः तन्निश्चयस्तु वाक्यान्तरेण चेत्यत्रापि प्रवृत्त्यर्थं पुनः प्रयोजनान्तरापेक्षापरम्परानवस्था स्यात् इत्याह **तदर्थमिति** । प्रयोजननिश्चयं विना तूष्णीमेव प्रथमसूत्रे प्रवृत्तिः अतो नानवस्थेत्यत आह **एवमेवेति** ।

**चषकः**— अथ शास्त्रप्रवृत्तिनिष्ठप्रवृत्तित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतेष्टसाधनतानिश्चयत्वावच्छिन्नधर्मिकप्रकृतशास्त्रान्यप्रमाणनिष्पन्नत्वप्रकृतशास्त्रनिवर्त्यत्वप्रथमसूत्रायत्तत्वोपरक्तकल्पत्रयीघटितादिमकल्पमुपदेशानर्थक्येन द्वितीयमन्योन्याश्रयेण तृतीयं प्रथमसूत्रगोचरप्रवृत्तिदौस्थ्येन प्रतिविधित्समानः प्रथमसूत्रप्रवृत्तिधर्मिकप्रयोजनान्तराभिधानायत्तत्वनिर्निबन्धनत्वोपरक्ततद्वयीघटकादिममनवस्थया द्वितीयं सौत्रतदभिधानानर्थक्येन पराचिकीर्षुराशङ्कते **नन्वित्यादि** ।

**काशी०**— प्रथमसूत्रस्यैतच्छास्त्रान्तर्भावसिद्धये न्यायसूत्रत्वमुपपादयितुमाशङ्कते **नन्विति** । प्रेक्षावद्भिः शास्त्रे स्वप्रवृत्तेः पूर्वं ब्रह्मज्ञानस्य मोक्षहेतुता निश्चिता न वेति विकल्पमभिप्रेत्याद्यमनूद्य दूषयति **ब्रह्मज्ञानस्येति** । इदमुपलक्षणम् । जिज्ञासाया ज्ञानहेतुता चेति ग्राह्यम् । **अनपेक्षणादिति** । प्रमाणान्तरजन्यप्रयोजनवत्तानिश्चयेनैव प्रवृत्त्युपपत्तेरिति भावः । द्वितीयमाशङ्कते **अथेति** । एवकारेण प्रमाणान्तरसिद्धत्वव्यवच्छेदः । सर्वथा प्रयोजनवत्त्वाद्यनिश्चये प्रवृत्त्यनुपपत्तिरित्यत इहेत्युक्तम् । एतच्छास्त्रघटकसूत्रादित्यर्थः । प्रयोजनेति प्रयोजनहेतुत्वं विवक्षितम् । ननु तत्सूत्रजन्यप्रयोजनादिनिश्चयात्तत्सूत्रे प्रवृत्तिरित्युक्तावन्योन्याश्रयः स्यात् । प्रथमसूत्रजन्यतन्निश्चयादुत्तरत्र प्रवृत्तिरित्युक्तौ तु नायं दोष इत्याशङ्कते **अथेति** । तत्रेत्यस्य तर्हीत्यादिः । प्रथमसूत्र इत्यर्थः । तत्पूर्वं प्रयोजनाद्यनिश्चयादिति भावः । एतेन प्रथमसूत्रस्य प्रयोजनादिप्रतिपादकतायाः प्रागुक्तत्वात् इहेत्यनेन





सूत्रान्तरग्रहणाप्रसक्तेः। प्रथमसूत्रस्यैव ग्राह्यतया पुनः प्रथमसूत्रादिति शङ्काऽनुपपत्तिरित्यपास्तम्। अन्योन्याश्रय-परिहारेण शङ्कोपपत्तेः। **तदर्थं** प्रथमसूत्रे प्रवृत्त्यर्थम्। **प्रयोजनान्तरेति**। तत्सूत्रार्थज्ञानस्य परंपरया मोक्षहेतुत्वा-भिधान इत्यर्थः। ननु प्रयोजनादिनिश्चयस्य प्रवृत्त्यहेतुत्वात्तदभावेऽपि न प्रथमसूत्रे प्रवृत्त्यनुपपत्तिरित्यत आह **एवमेवेति**। प्रयोजनादिनिश्चयं विनैवेत्यर्थः। **उत्तरत्रापीति**। न चाल्पायाससाध्ये प्रयोजनादिसन्देहेन सकम्पप्रवृत्तिसंभवेऽपि न महायाससाध्ये तत्संभव इति वाच्यम्। अल्पायाससाध्येऽपि वचनाधीनसन्देहस्यैव हेतुत्वमित्याशयात्। एवं प्रथमसूत्रे प्रवृत्त्यनुपपत्तावपि कथञ्चिच्छ्रवणे सति व्युत्पन्नस्य मोक्षहेतुत्वेन ब्रह्मज्ञान-विषयकतदर्थबोधोत्पत्त्या तत एवोत्तरत्र प्रवृत्त्याद्युपपत्तिरित्याशयेन समाधत्ते।

**गूढ०**— प्रयोजनादिप्रतिपादनस्य प्रवृत्तिहेतुत्वमसहमानः शङ्कते **नन्विति**। प्रथमसूत्रेण प्रयोजनादिनिश्चये सति प्रवृत्तिरिति नान्योन्याश्रय इत्यत आह **अथेति**। **एवमेवेति**। प्रयोजनाभावेऽपि प्रथमसूत्रे प्रवृत्तिश्चेदित्यर्थः। यदुक्तं ब्रह्मज्ञानस्य मोक्षहेतुत्वं शास्त्रप्रवृत्तेः पूर्वं प्रमाणान्तरसिद्धं न वेति। तत्र तमेवं विद्वानमृत इह भवती-त्यादिश्रुतिसिद्धमेवेति ब्रूमः। न चैवं सूत्रवैयर्थ्यं स्यादिति वाच्यम्। श्रुत्युक्ते विशेषशङ्कायां प्राप्तायां न्याय-प्रदर्शकत्वेन सार्थकत्वादिति ग्रन्थकृतैवोक्तत्वात्। न च प्रवृत्तेर्ज्ञानेच्छाप्रयत्नरूपत्वे श्रुत्यादिसिद्धप्रयोजनादि-ज्ञानस्यापि प्रवृत्तित्वेन तत्र प्रयोजननिश्चयार्थमन्यान्वेषणे अनवस्था स्यादिति वाच्यम्। साधनगोचरेच्छाप्रयत्न-योरेव प्रवृत्तित्वेनानुवादस्य प्रवृत्तित्वानङ्गीकारात्। न च चित्तवृत्तित्वाविशेषेऽपि अनुभवादेः प्रवृत्तित्वानङ्गीकारे इच्छाप्रयत्नयोरपि प्रवृत्तित्वं न स्यादिति वाच्यम्। प्रवृत्तेः प्रयोजननिश्चयाधीनत्वात्। साधनगोचरेच्छाप्रयत्नयोश्च प्रयोजननिश्चयाधीनत्वात्।

**प्रदीपः**— **अथेति**। प्रथमसूत्रस्य प्रयोजनाद्यभावात् प्रवृत्त्यनुपपत्तौ शास्त्रान्तर्भावो न स्यात्, तेनैव तत्प्रतिपादने अन्योन्याश्रयापत्तेः। तदर्थं चेति प्रयोजनादिप्रतिपादकस्यापि प्रयोजनादिरहितत्वे प्रवृत्त्यभावापत्तेः। प्रयोजनादिमत्त्वं स्वत इत्युक्ते आत्माश्रयात्प्रथमसूत्रादन्योन्याश्रयादन्यश्चेत् तस्याप्येवमनवस्थेति। एवमेवेति प्रयोजनादिमत्येव प्रवृत्तेः स्वारसिकत्वात्प्रथमसूत्रे प्रवृत्त्यभावे शास्त्रस्य प्रयोजनादिमत्त्वमेव न सिद्ध्येदिति।

**१०७ सु०— उच्यते। त्रिविधा हि पुंसां चित्तवृत्तिः। अनुभव इच्छा प्रयत्नश्च। तत्र साधनगोचराविच्छाप्रयत्नौ प्रवृत्तिरिति उच्येते। न त्वनुभवो नापि फलगोचरेच्छा। येन तयोरपि प्रयोजननिश्चयापेक्षा स्यात्।**

**न हि उपेक्षणीयं निष्प्रयोजनमिति नानुभूयते।**

**नापि सुखं प्रयोजनान्तररहितमिति नेष्यते।**

**न च मुमुक्षुणा अनपेक्षिते स्वर्गे यागादिकं तत्साधनतया नानुभूयते।**

**पुरुषार्थसाधने तु इच्छालक्षणा प्रयत्नलक्षणा वा प्रवृत्तिस्तथा न स्वरससिद्धा । न हि कश्चित्क्षुत्प्रहाणादिकमननुसन्धाय भोक्तुमिच्छति प्रयतते वा ।**

**तस्माद्यो यत्र प्रवर्तनीयः स तत्प्रयोजनादिकं दर्शयित्वैव इति सार्थकं सूत्रे प्रयोजनाद्यभिधानम् ।**

**बिन्दुः**— ननु ब्रह्मज्ञानस्य मोक्षहेतुतेत्यारभ्य अनर्थकं सूत्रे प्रयोजनाभिधानमित्यन्त-पूर्वपक्षानन्तरं पूर्वपक्षशेषो हरेरेव द्रष्टव्यः । तथाहि अभ्युपेत्य चेदमुदितं वस्तुतस्तु प्रेक्षावत्प्रवृत्तेः विषयप्रयोजनाद्यननुसन्धानेऽपि जायमानत्वेन व्यभिचारान्न तदनुसन्धानं प्रवृत्तिं प्रति कारणं ततश्च तत्प्रतिपादनार्थं प्रथमसूत्रं व्यर्थमेव तथाहि प्रवृत्तिशब्देन प्रकृष्टा चित्तस्य वृत्तिः ज्ञानेच्छाप्रयत्नरूपा प्रवृत्तिरित्युच्यते एवं च उपेक्षणीयज्ञानस्य फलगोचरज्ञानेच्छयोः साधनगोचरफलसाधनत्वज्ञानस्य च प्रयोजनाद्यज्ञानेऽपि जायमानतया व्यभिचारान्न तेषां कार्यकारणभावस्तथा च तत्कथनार्थं प्रथमसूत्र-मनारम्भणीयमेवेत्यत आह **उच्यते इति** । **त्रिविधा हि पुंसामिति** । इदमुक्तं भवति । स्यादेतत् दूषणा-भिधानं, यदि वयं प्रवृत्तिशब्देन ज्ञानेच्छाप्रयत्नरूपत्रितयमभ्युपगच्छेम किं नाम त्रिविधचित्तवृत्तिमध्ये साधनगोचराविच्छाप्रयत्नौ तयोरेव प्रवृत्तिशब्देनोपादानात् तयोश्च विषयाद्यननुसन्धानेऽनुदयात् आवश्यकं तद्वचनमिति । एवं स्थिते कार्यकारणभावे अवगतसूत्रकाराप्तभावस्य सामान्यतो विषयप्रयोजनानु-मानेन प्रवृत्त्युपपत्तौ किमर्थं पुनरभिधानमिति शास्त्रेणैव तज्ज्ञाने तु प्रथमसूत्र एव कथं प्रवृत्तिरिति शङ्का पुनरवशिष्यते । तां च 'तत्रैके समाधानमाहुरि'त्यादिना महाप्रघट्टकेन स्फुटतरं परिहरति । प्रथमसूत्रे तु तदर्थज्ञानमूलकपित्राद्याप्तोपदेशेन वा घनगर्जितन्यायेन प्रथमसूत्रश्रवणेन वा लोकप्रवादेन वा प्रयोजनादि-ज्ञानात्प्रवृत्तिः अन्यथा रोगार्तादिः रोगनिवृत्ति साधनभेषजस्वरूपप्रतिपादकवैद्यवाक्यश्रवणादावपि प्रवृत्त्य-भावापत्त्या सर्वलोकव्यवहार एवोच्छिद्येत ''स्वाध्यायोऽध्येतव्य'' इत्याद्यध्ययनादिविधिष्वपि प्रवृत्त्यर्थं विध्यन्तरान्वेषणं च प्रसज्येतेति भावः।

**परि०**— तत्रैव कथं प्रवृत्तिरित्यादिनोक्तामनवस्थां निरसितुं प्रवृत्तिशब्दार्थं तावन्निर्धारयति **त्रिविधा हीत्यादिना** । प्रयत्नश्चेत्यनन्तरमितिशब्दोऽध्याहार्यः । इच्छा च द्वेधा । साधनगोचरा फल-गोचरा चेत्यपि योज्यम् । **नत्वनुभव इति** । पुमर्थसाधनत्वप्रकारकसाधनगोचरानुभव इत्यर्थः । फल-गोचरेच्छाऽपि न प्रवृत्तिरित्युच्यत इत्यन्वयः ॥ **येनेति** । प्रवृत्तिशरीरप्रवेशेन निमित्तेन साधनत्व-प्रकारकसाधनगोचरनिश्चयफलेच्छयोरपि स्वस्वविषयस्य स्वस्य वा फलहेतुत्वनिश्चयापेक्षा स्यात्तथा





तन्निमित्तानवस्था च स्यादित्यपि योज्यम् ॥ एतच्चोपलक्षणम् । येन फलेच्छापि फलान्तराधीनेच्छा स्यात् । तथा तन्निमित्ता अनवस्था च स्यादित्यपि ध्येयम् ॥ **प्रयोजननिश्चयापेक्षे**त्यस्य प्रयोजन-हेतुत्वनिश्चयापेक्षेत्यर्थः । साधनानुभवफलेच्छयोः प्रयोजनापेक्षा नेत्येतत्क्रमेण व्यनक्ति **न हीति** । ननूक्तरूपानुभवस्य फलान्तरानपेक्षत्वेऽपि इच्छाप्रयत्नयोरेवं फलेच्छापेक्षत्वं तु स्यादित्यतस्तदपि नेत्याह **न चेति** । अनपेक्षितत्वे हेतुः **मुमुक्षुणेति** । 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादिवाक्यश्रवणे सति स्वर्गादौ विरागिणोऽपि व्युत्पन्नस्य वाक्यार्थबोधोदयानुभवादिति भावः । ननु यथाऽऽद्यसूत्राच्छास्त्रस्य पुमर्थहेतुत्वानुभवस्तस्य फलहेतुत्वज्ञानानपेक्षस्तथेच्छाप्रयत्नावपि तदनपेक्षौ स्याताम् । एवं चाद्यसूत्रं व्यर्थमित्यत आह **पुरुषार्थसाधने त्विति** । शास्त्ररूप इति भावः । इच्छा प्रारम्भेच्छा ॥ **प्रयत्नेति** । श्रवणाद्यनुकूलप्रयत्नेत्यर्थः ॥ **न स्वरससिद्धेति** । पुरुषार्थहेतुत्वज्ञानं विना फलेच्छां च विना न सिद्धे-त्यर्थः । तद्व्यनक्ति **न हीति** । क्षुत्प्रहाणादिकं भोजनसाध्यत्वेनाननुसन्धायेत्यर्थः ॥ **सार्थकमिति** । एतेन आद्यपक्षे भाष्यकारीयं प्रयोजनाभिधेयसंबन्धव्युत्पादनमपि समर्थितं ध्येयम् ।

**गु०दी०— त्रिविधा हि पुंसां चित्तवृत्तिः** इत्यस्यायं भावः । बहुत्वेन गम्भीरत्वेन चात्यायाससाध्य-ब्रह्ममीमांसायां न स्वरससुन्दरतयेच्छा प्रयत्नश्च भवतः । न हि राजदेयधनलाभरूपफलमनिश्चित्य कोऽपि भटः गदायुद्धाद्यायासमिच्छति कुरुते वा । अत आनन्दमय इत्यादिरूपब्रह्मजिज्ञासायां रुचिजननाय प्रवर्तनाय चास्तु फलनिर्णय आवश्यकः । सुखरूपमोक्षमिच्छतः साधुनिकटं गतस्य व्युत्पन्नस्य तैरुच्यमानप्रथमसूत्रानुभवमात्रे न प्रयोजनापेक्षा । प्रमाणवस्तुपरतन्त्रत्वाद् ज्ञानस्य । अतो नानवस्था । नाप्यन्योन्याश्रयः । प्रथमसूत्रोक्तमीमांसाया-श्चाल्पत्वात् । "दृष्ट्वैव तं मुच्यत" इति श्रुत्युक्तमोक्षासाधारणकारणज्ञानस्य च परामशार्थिकातःपदेन बोधने "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति श्रुत्युक्तज्ञानसाधनब्रह्मजिज्ञासायाश्च ब्रह्मजिज्ञासापदेनैव बोधने अथशब्देन चाधिकारानन्तर्यबोधने व्युत्पन्नस्य प्रयासाभावान्न तत्रापि कश्चित् क्षुद्रोपद्रव इति ।

**यादु०—** प्रथमसूत्रादेव ब्रह्मज्ञानस्य मोक्षहेतुत्वनिश्चयः । न च प्रयोजनाद्यनिश्चये तत्रैव कथं प्रवृत्ति-रिति वाच्यम् । तत्राप्रवृत्तस्यापि घनगर्जितन्यायेन प्रथमसूत्रश्रवणे व्युत्पन्नस्य मुमुक्षोर्ब्रह्मज्ञानं मोक्षहेतुरित्यनु-भवोपपत्तेरित्यभिप्रेत्य समाधानमाह **उच्यत इति** । नन्वनुभवेच्छाप्रयत्नानां प्रवृत्तित्वात् प्रवृत्तित्वावच्छिन्ने च प्रयोजनादिनिश्चयस्यापेक्षितत्वात्तदभावे कथं ब्रह्मज्ञानं मोक्षहेतुरित्यनुभवरूपा प्रवृत्तिः प्रथमसूत्रात्स्यात् । कथं वा प्रयोजनाद्यनिश्चये मोक्षे इच्छारूपा प्रवृत्तिर्येन स पूर्वं मुमुक्षुः स्यादित्यत आह **त्रिविधा हीति** । ब्रह्मज्ञानं मोक्षहेतुरित्यनुभवस्य वा मोक्षरूपफलेच्छाया वा प्रवृत्तिशब्दावाच्यत्वेनाप्रवृत्तित्वेन विवक्षितत्वात् । प्रयोजना-द्यनिश्चयेऽप्युक्तरीत्या तयोः संभवान्न कोऽपि दोष इति भावः । अनुभवस्य प्रयोजननिश्चयानपेक्षत्वं दर्शयति **न हि उपेक्षणीयमिति** । फलगोचरेच्छायाः तदनपेक्षत्वं दर्शयति **नापि सुखमिति** । ननूपेक्षणीयानुभवस्य प्रयोजन-





निश्चयानपेक्षत्वेऽपि साधनानुभवस्य प्रयोजननिश्चयापेक्षानियमादुक्तदोषस्तदवस्थ एवेत्यत आह **न च मुमुक्षुणेति**। तथा च न कोऽप्यनुभवः प्रयोजननिश्चयापेक्षः किन्तु स्वकारणापेक्ष एवेति भावः। नन्वेवं **पुरुषार्थसाधने** ब्रह्मज्ञाने इच्छाप्रयत्नरूपप्रवृत्त्योरपि स्वकारणाधीनत्वसंभवेन तदर्थं सूत्रे प्रयोजनाद्यभिधानं व्यर्थमापन्नमित्यत आह **पुरुषार्थसाधने त्विति**। तथा च न स्वरससिद्धा यथाऽनुभवफलेच्छे प्रयोजनानिश्चयेऽपि स्वकारणादेव भवतस्तथेत्यर्थः। नन्वेवं व्युत्पन्नस्य मुमुक्षोः प्रथमसूत्र इवाग्रेऽपि प्रयत्नाद्यभावेऽपि कथञ्चित् श्रवणेन तदर्थानुभवसंभवात्तदर्थकोक्तरूपप्रवृत्तिप्रयोजकं प्रयोजनाद्यभिधानं व्यर्थमापन्नमिति चेत्। न। आद्यसूत्रमात्रे कथञ्चित् श्रवणस्योक्तन्यायेन संभावितत्वेऽप्यशेषशास्त्रे तथा श्रवणसंभावनाया अनुभवबाधितत्वात् मोक्षोपयोगिनो विमर्शसाध्यस्येदमित्थमित्येवेत्यवधारणरूपशास्त्रसाध्यानुभवस्योक्तरूपप्रवृत्त्यभावे कथञ्चित् श्रवणमात्रेणासंभवाच्च ॥ **प्रवर्तनीय इति**। साधनगोचरेच्छाप्रयत्नवान्करणीय इत्यर्थः। केचित्तु विमता प्रवृत्तिः प्रयोजनादिज्ञानपूर्विका प्रवृत्तित्वात् भोजनादिप्रवृत्तिवदिति शास्त्रविषयप्रवृत्तेः प्रयोजनादिपूर्वकत्वनियमात्। नैवमेव प्रवृत्तिर्युक्तेत्याह **उच्यत इति**। इच्छाप्रयत्नानुभवानामेव प्रवृत्तित्वात्सुखादिविषयेच्छानुभवयोः प्रयोजनान्तराभावात् प्रवृत्तित्वहेतोर्व्यभिचार इत्यत आह **त्रिविधा हीति**। तत्र तेषां मध्ये सुखादिविषयेच्छानुभवयोः प्रवृत्तिशब्दवाच्यत्वाभावान्न व्यभिचार इत्यर्थ इत्याहुः।

**वं०प०— नानुभूयत इति**। मुमुक्षुत्वादेव स्वर्गेच्छा न हि। तस्यापि ज्योतिष्टोमेनेत्यादिवाक्यश्रवणानन्तरं यागः स्वर्गसाधनमित्यनुभवस्य जायमानत्वेन साधनगोचरानुभवस्यापि न प्रयोजननिश्चयापेक्षत्वमिति न कोऽप्यनुभवः प्रयोजननिश्चयापेक्ष इति भावः। नन्वनुभवफलगोचरेच्छयोरिव प्रवृत्तित्वेनाभिमतयोः साधनगोचरेच्छाप्रयत्नयोरपि प्रयोजननिश्चयाधीनत्वाभावोपपत्तेः पुरुषार्थसाधनभूतब्रह्मज्ञानगोचरेच्छाप्रयत्नरूपपुरुषप्रवृत्त्यर्थं सूत्रे प्रयोजनाभिधानं व्यर्थमेवेत्यत आह **पुरुषार्थेति** ॥ **तथेति**। अनुभवफलगोचरेच्छयोरिवेत्यर्थः ॥ **स्वरसेति**। प्रयोजनानिश्चयेऽपीत्यर्थः। ननु पुरुषार्थसाधनेऽपीच्छाप्रयत्नलक्षणप्रवृत्त्योः प्रयोजननिश्चयानपेक्षत्वमेव किं न स्यादित्यत आह **न हीति**। क्षुत्प्रहाणादिकं तद्रूपं पुरुषार्थं प्रयोजनमिति यावत् ॥ **भोक्तुमिति**। क्षुत्प्रहाणसाधनीभूतभोजनेच्छावान् भवति भोजने प्रयतते वा। न हीत्यर्थः ॥

**आनन्दः—** प्रवृत्तित्वमनुभवस्य च प्रयोजननिश्चयव्यतिरेकेऽपि जायमानत्वेन व्यभिचारान्न प्रवृत्तित्वमित्यभिप्रायेण साधनगोचरयोरिव इच्छाप्रयत्नयोः प्रवृत्तित्वमिति व्यवस्थापयितुं चित्तवृत्तिं विवेचयति **त्रिविधा हि पुंसां चित्तवृत्तिरिति**। ननु प्रयोजनादिनिश्चयस्य न प्रवृत्तिकारणत्वमित्युक्ते चित्तवृत्तेस्त्रैविध्याभिधानमयुक्तम्। प्रश्नासङ्गतत्वादिति। मैवम्। शङ्कान्तरपरिहारार्थत्वेन सार्थकत्वात्। न च कथं तदिति वाच्यम्। अत्र हि प्रथमसूत्रे सूत्रकृता प्रवृत्त्यर्थं प्रयोजनादिकमभिधीयते। तेन च प्रयोजनादिनिश्चयस्य प्रवृत्तिं प्रति कारणत्वमभिप्रेतम्। तदयुक्तम्। प्रवृत्तिशब्देन हि अनुभवेच्छाप्रयत्ना गृह्यन्ते। तत्र प्रयोजनादिनिश्चयस्यानुभवादीन् प्रति कारणत्वं प्रयोजनादिनिश्चयाभावेऽपि अनुभवादेर्जायमानत्वेनान्वयव्यतिरेकाभ्यां व्यभिचारादित्याशङ्कायां प्रवृत्तिशब्दार्थं विवेचयितुं चित्तवृत्तेस्त्रैविध्याभिधानमिति नासङ्गतिरिति भावः। **साधनगोचराविच्छाप्रयत्नाविति**। नन्वेत-

दयुक्तम् । साधनगोचरप्रयत्नस्य प्रवृत्तिशब्दवाच्यत्वेऽपि साधनविषयकेच्छाया न प्रवृत्तिशब्दवाच्यत्वम् । प्रमाणाभावात् । किञ्च प्रवृत्तिपदस्य नानार्थत्वप्रसङ्गः । शक्यतावच्छेदकस्य साधनगोचरप्रयत्नत्वस्य च भेदादिति । मैवम् । प्रयत्नस्यैव प्रवृत्तिशब्दवाच्यत्वात् । प्रयत्ने प्रयोजनादिनिश्चयजन्यत्ववदस्या अपि प्रयोजनादिनिश्चयजन्यत्वेन प्रयत्नसाम्यात् प्रवृत्तिशब्देनोक्तिरिति न कोऽपि दोषः । यद्वा इच्छाप्रयत्नयोरुभयोरपि न प्रवृत्तिशब्दवाच्यत्वम् । तर्हि तत्र प्रवृत्तिशब्दप्रयोगो न युक्त इति वाच्यम् । प्रवृत्तेश्चेष्टाविशेषत्वेन इच्छाप्रयत्नयोरुभयोरपि चेष्टाविशेषहेतुत्वेन तत्र प्रवृत्तिशब्दप्रयोग इति भावः । अथवा अस्तु उभयोरपि प्रवृत्तिशब्दवाच्यत्वम् । न च प्रयत्नवति प्रवृत्त इति व्यवहारात् साधनगोचरप्रयत्नस्य प्रवृत्तिशब्दवाच्यत्वेऽपि तद्विषयकेच्छाया न प्रवृत्तिशब्दवाच्यत्वं प्रमाणाभावादित्युक्तमिति वाच्यम् । एतत्फलार्थमिदं करिष्यामीति इच्छावत्त्वेऽन्यस्य ज्ञातेऽयमत्र प्रवृत्त इति व्यवहारसद्भावेनेच्छाया अपि प्रवृत्तिशब्दवाच्यत्वे प्रमाणसद्भावात् । न चैवं नानार्थत्वापत्तिः शक्यतावच्छेदकनानात्वादिति वाच्यम् । ज्ञानभिन्नसाधनगोचरप्रवृत्तित्वस्येच्छाप्रयत्नानुगतस्यैकस्य शक्यतावच्छेदकस्यात्र सत्त्वेन नानार्थत्वापादनायोगात् । न चैवं द्वेषस्यापि प्रवृत्तिशब्दवाच्यत्वं स्यदिति वाच्यम् । निवृत्त्यप्रयोजकेति विशेषितत्वात् । तस्य च निवृत्तिप्रयोजकत्वान्न तत्रातिप्रसङ्गः । न चैवमपिपदात् यत्प्रकारको बोध उपजायते तस्यैव शक्यतावच्छेदकत्वं, न हि प्रवृत्तिपदादेतत्प्रकारको बोधो जायते किन्त्विच्छात्वप्रयत्नत्वप्रकारक एवेति नास्य शक्यतावच्छेदकत्वं युक्तमिति वाच्यम् । अहमादिपदेषु बुद्धिस्थत्वप्रकारकबोधजनकत्वेऽपि तस्याहमादिपदप्रवृत्तिनिमित्तत्ववदस्यापि प्रवृत्तिनिमित्तत्वोपपत्तिरिति । यद्वा अस्तु नानार्थत्वमिति न कश्चित्क्षुद्रोपद्रवः । **न त्वनुभव इति** । तत्र प्रवृत्तिशब्दव्यवहाराभावादिति भावः । प्रयोजननिश्चयापेक्षाभावमेवाह **न हीति** । ननु मास्तु फलविषयकानुभवेच्छयोः प्रवृत्तिशब्दवाच्यत्वं तथापि साधनविषयकानुभवस्य तदस्त्वित्यत आह **न चेति** । अस्तु वा फलेच्छायाः प्रवृत्तित्वस्य प्रयोजननिश्चयसाध्यत्वव्यभिचारः अस्वारसिकप्रवृत्तित्वस्य तथात्वादित्याह **तेनेति** । विवक्षितार्थतत्त्वज्ञानादिरूपोक्तविधाप्तिमत्वं यस्यास्ति स परप्रयोजनादिमदेव वदेत् । नान्यथेत्युक्तविधाप्तत्वगमकप्रमाणेनैव प्रयोजनादिसंबन्धः सिद्ध्यतीति भावः । ननु तर्हीच्छाप्रयत्नयोरपि न प्रयोजननिश्चयसाध्यत्वम् अत आह **पुरुषार्थेति** ।

**कं०रा०**— प्रयोजननिश्चयाभावेऽपि प्रथमसूत्रमनुभवतः पुंसस्ततः प्रयोजननिश्चये साधनगोचरेच्छाप्रयत्नलक्षणा प्रवृत्तिः शास्त्रे संभवति । न चानुभवोऽपि प्रयोजननिश्चयाधीनः । तस्याप्रवृत्तित्वात् । प्रवृत्तिशब्दार्थस्यैव प्रयोजननिश्चयसाध्यत्वात् । अतो न कोऽपि दोष इत्यभिप्रेत्य परिहरति **उच्यत इत्यादिना** । **न त्वनुभव इति** । अनुभवः प्रवृत्तिरिति नोच्यत इत्यर्थः । नन्वनुभवफलगोचरेच्छयोः प्रवृत्तिशब्दार्थत्वं प्रयोजनानुसन्धानापेक्षत्वं चास्त्वित्यत आह **न हीति** । 'उपेक्षणीयं निष्प्रयोजनमिति न हि नानुभूयत' इत्यनेनानुभवस्य प्रवृत्तिशब्दार्थत्वप्रयोजनानुसन्धानसाध्यत्वशङ्का निरस्ता । फलगोचरेच्छायास्तच्छङ्का तु नापीत्युत्तरवाक्येन । ननु तथाऽपि साधनगोचरानुभवस्य फलेच्छासाध्यत्वेन प्रवृत्तित्वान्न त्वनुभवः प्रवृत्तिरित्युच्यत इत्येतदयुक्तमित्यत आह **न चेति** । मुमुक्षोः स्वर्गेच्छाविरहेऽपि तत्साधनयागाद्यनुभवस्य जायमानत्वेन साधनगोचरानुभवे फलेच्छासाध्यत्वस्यैवाभावान्नोक्तानुपपत्तिरिति भावः । स्वरससिद्धा प्रयोजनानुसन्धानं विना सिद्धा ।





**श्रीनिधि०**— त्रिविधा हि पुंसां चित्तवृत्तिरित्यादेरयमाशयः । ब्रह्मज्ञानस्य मोक्षहेतुतानिश्चयः प्रथमसूत्राद्भवतीत्युक्ते मदुक्तं प्रवृत्त्यनुपपत्त्यादि तदयुक्तम् । प्रथमसूत्रे प्रवृत्तेरनुक्तत्वात् । किं तर्हि प्रवृत्तिनिरपेक्षानुभव एवेत्यङ्गीकारात् । तथा च नानवस्था नान्योन्याश्रयश्च उत्तरशास्त्रे । प्रवृत्त्यर्थं प्रयोजनाभिधानस्यापेक्षितत्वेन नानर्थक्यं च । प्रयोजनाधीनत्वात् प्रवृत्तेः । एवं समाधानस्याभिप्रेतत्वादेव प्रवृत्त्यनुभवयोर्विभागेन कथनम् । ननु उत्तरत्रापि तत्तत्सूत्रैस्तत्सूत्रार्थानुभव एव उत्पाद्यते । तथा च प्रयोजनाभिधानमनर्थकमनुभवार्थम् इति चेत् । सत्यम् । अनुभवो द्विविधः आयाससाध्यः अनायाससाध्यश्चेति । समग्रशास्त्रानुभवस्तु अतिचिरकालं महायाससाध्यः । अतस्तत्र प्रयोजनज्ञानापेक्षा इति प्रयोजनज्ञानमुपपद्यते । प्रथमसूत्रार्थानुभवस्तु व्युत्पन्नस्य सुजनस्य महतां निकटे सञ्चरतः तेषु यदृच्छया प्रथमसूत्रार्थं प्रतिपादयत्सु अस्य यदृच्छया आयासं विना भवति । अतस्तत्र प्रयोजनज्ञानापेक्षाभावः । ननु जिज्ञासाधिकरणार्थानुभवोऽपि बहुकालं भाष्यतट्टीकादिश्रवणसाध्यः । अतः कथमुच्यते अनायाससाध्य इति । सत्यम् । सोऽपि द्विविधः । सङ्क्षेपतः विस्तरतश्चेति । तत्राद्य उक्तविध एव । तावतैव प्रयोजनादिज्ञाने सति विस्तृते प्रवर्तते । अथोत्तरत्रापीति । **निष्प्रयोजनमिति** । इति हेतोरित्यर्थः । **प्रयोजनान्तररहितमिति** । हेतोरित्यर्थः । साधनगोचरानुभवोऽपि न प्रयोजनाधीन इत्याह **न च मुमुक्षुणेति** । प्रवृत्तिस्तु तथानुभववत् न स्वरससिद्धेत्यन्वयः ।

**वा०चं०**— विमता शास्त्रे प्रवृत्तिः प्रयोजनादिज्ञानसाध्या प्रवृत्तित्वाद्बालस्य स्तन्यपानप्रवृत्तिवदित्यनुमानेन प्रवृत्तेः प्रयोजनादिज्ञानसाध्यत्वसिद्धेः सूत्रकारेण शास्त्रे प्रवर्तनीयं प्रति प्रयोजनादि दर्शनीयमेवेति युक्तं सूत्रे तदभिधानमिति वक्तुं यत्किञ्चिदनुभवे फलेच्छायां स्वानपेक्षितप्रयोजनसाधनानुभवे च प्रवृत्तित्वहेतोर्व्यभिचारादनुमानमेव अयुक्तमित्यतः साधनगोचरेच्छाप्रयत्नयोरेव प्रवृत्तित्वेनोभयविधानुभवफलेच्छयोश्चित्तवृत्तित्वेऽपि प्रवृत्तित्वाभावान्न व्यभिचार इत्याह **उच्यत इति** ॥ **स्यादिति** । अन्यथा व्यभिचारापत्तेरिति भावः । ननु साध्यसत्त्वमेवाभ्युपगम्य व्यभिचारपरिहारसंभवे एवं वैलक्षण्यमङ्गीकृत्य हेत्वभावव्युत्पादनमनुचितमित्यतस्तत्र साध्याभ्युपगमस्य अयुक्ततामाह **न हीत्यादिना** । उपेक्षणीयस्य स्वस्य प्रयोजनत्वाभावे सति प्रयोजनान्तरशून्यत्वं सुखस्य तु प्रयोजनान्तरशून्यत्वमात्रं यागादेस्त्वनपेक्षितप्रयोजनत्वमिति विशेषः (भेदः) । ननु पक्षीभूतप्रवृत्तेरप्यनुभवादिवत्प्रयोजनादिनिरपेक्षत्वे बाधः स्यादित्यत आह **पुरुषार्थेति** । अत्रार्थसाधन इत्यंशेन सुखोपेक्षणीययोः पुरुषार्थेत्यंशेनानपेक्षितप्रयोजनस्य व्यावृत्तिरिति द्रष्टव्यम् । तदेव उपपादयति **न हीति** । एवमाभासोद्धारे सिद्धमनुमानमित्यभिप्रेत्योपसंहरति **तस्मादिति** । यद्वा । यदि पक्षीभूतप्रवृत्तेः प्रयोजनादिनिश्चयसाध्यत्वं तर्हि ज्ञानफलेच्छयोरपि प्रवृत्तित्वाविशेषात् प्रयोजनादिनिश्चयसाध्यता स्यात् । अन्यथा पक्षीकृतप्रवृत्तेरपि न स्यादिति पूर्वोक्तानुमाने तर्कपराहतौ प्राप्तायां ज्ञानेच्छाप्रयत्नानां चित्तवृत्तित्वाविशेषेऽपि प्रवृत्तित्वाविशेषोऽसिद्धः । साधनेच्छाप्रयत्नयोरेव प्रवृत्तित्वेन ज्ञानफलेच्छयोः प्रवृत्तित्वाभावात् । तदभावे तत्प्रयोज्यप्रयोजनादिनिश्चयसापेक्षताया अपि अभावात् पक्षीभूतप्रवृत्तेश्च प्रयोजकवत्त्वात् प्रयोज्यवत्त्वमिति व्याप्तिविकलोऽयं तर्काभास इत्यभिप्रेत्याह **उच्यत इति** । ननु ज्ञानफलेच्छयोरपि प्रयोजकप्रयोज्ययोः प्रवृत्तित्वप्रयोजनादिनिश्चयसापेक्षत्वयोः स्वीकारेणैव तर्कस्येष्टापादनत्वे वक्तुं शक्ये व्याप्तिवैकल्योक्तौ किं बीजमित्यतः प्रयोजनादिनिश्चयसापेक्षत्वस्य तत्रासंभवित्वात्





युक्तं व्याप्तिवैकल्यकथनमित्यभिप्रेत्याह **न हीत्यादिना**। पक्षीकृतप्रवृत्तावपि प्रयोजनादिनिश्चयसाध्यत्वस्यासंभवित्वे तत्साधनमशक्यमित्यत आह **पुरुषार्थेति**। एवं च तर्कपराहतेरभावात् युक्तमनुमानमित्यभिप्रेत्य तत्फलमुपसंहारव्याजेनाह **तस्मादिति**। अथवा प्रथमसूत्रप्रवृत्तेः प्रयोजनान्तराभिधानेऽनवस्थां प्रसञ्जयन्प्रष्टव्यः। ज्योतिष्टोमेन स्वर्गकाम इत्यादिवाक्यजनितमुमुक्ष्वनभिमतस्वर्गादिसाधनतानुभवस्येव प्रथमसूत्राज्जायमानफलसाधनतानुभवमात्रस्य प्रवृत्तिशब्दार्थत्वमित्यभिप्रेत्य तदर्थं प्रयोजनान्तराभिधानेऽनवस्थाप्रसङ्गं ब्रूषे आहोस्वित्प्रथमसूत्रसाध्यजिज्ञासावाक्यविचाररूपपुरुषार्थसाधनेच्छाप्रयत्नरूपप्रथमसूत्रप्रवृत्तेः प्रयोजनादिनिश्चयसाध्यत्वेऽनवस्थाप्रसङ्गं ब्रूषे। नाद्यः। दृष्टान्तदार्ष्टान्तिकानुभवद्वयस्यापि प्रयोजनादिनिश्चयसाध्यत्वानभ्युपगमात्। न च तर्ह्येवमेव प्रवृत्तावित्युक्तदूषणप्रसङ्गः। अनुभवद्वयस्य चित्तवृत्तित्वेऽपि प्रवृत्तित्वाभावेन तद्दूषणाप्रवृत्तेरित्यभिप्रेत्य चित्तवृत्तिप्रवृत्तिस्वरूपं विवेचयति **उच्यत इति**। न केवलं प्रवृत्तित्वाभावादनुभवादेः प्रयोजनादिनिश्चयसापेक्षत्वाभावोऽपि त्वसंभावितत्वाच्चेत्याह **न हीत्यादिना**। अत्र पक्षे उपेक्षणीयानुभवफलेच्छयोर्दृष्टान्ततयोपादानमिति मन्तव्यम्। द्वितीये तु प्रथमसूत्रप्रवृत्तेः प्रयोजनादिनिश्चयसापेक्षत्वमनुमतमेव। अनवस्थां च परिहरिष्याम इत्यभिप्रेत्यानुभवादेरिव प्रवृत्तेः प्रयोजनादिनिश्चयसापेक्षत्वं नासंभावितमित्याह **पुरुषार्थेति**। फलितमाह **तस्मादिति**।

अथवा प्रवृत्तेः प्रयोजननिश्चयसापेक्षत्वनियमाच्छास्त्रप्रवृत्तिप्रयोजकतया आद्यसूत्रेऽवश्यं प्रयोजनादिकमभिधेयम्। न चैवं प्रथमसूत्रप्रवृत्तिप्रयोजकप्रयोजनाद्यभिधायकवाक्यान्तरानुसरणपरम्परयाऽनवस्थोक्तेति वाच्यम्। पुरुषार्थसाधनगोचरेच्छाप्रयत्नरूपचित्तवृत्तेः प्रवृत्तित्वेन प्रयोजननिश्चयसापेक्षत्वेऽपि यत्किञ्चिदनुभवफलेच्छापुरुषानपेक्षितसाध्यसाधनभावानुभवानां चित्तवृत्तित्वेऽपि प्रवृत्तित्वाभावात्। प्रथमसूत्रेण च साध्यसाधनभावानुभवमात्रस्य जायमानत्वेऽपि तस्य प्रयोजनादिनिश्चयानपेक्षतया वाक्यान्तराननुसरणेन अनवस्थाऽभावात्। न च तर्ह्यनुभवस्यैव शास्त्रफलत्वेन तदर्थप्रयोजनाद्यभिधायकप्रथमसूत्रवैयर्थ्यमिति वाच्यम्। प्रथमसूत्रतः साध्यसाधनभावानुभवस्य अयत्नसाध्यत्वेन पुरुषार्थसाधनस्य द्वितीयसूत्रादिशास्त्राकलनस्य पूर्वापरपरामर्शतत्तदविरोधादवगमस्य च अतिप्रयत्नसाध्यतया प्रयत्नसाध्ये प्रयोजनादिनिश्चयस्यावश्यापेक्षितत्वात्। न च आद्यसूत्रावधारणेऽपि विरोधाशङ्का नियता येन तन्निरासाय यत्नो युज्येत। संभावनामात्रस्याप्रयोजकत्वात्। न च शास्त्रावधारणादिकमपि लोकोत्तरमतेः कस्यचित्संभाव्यत इति न तदर्थमपि प्रयोजनाद्यभिधेयमिति वाच्यम्। कस्यचित्प्रयोजनानपेक्षायामपि सर्वस्यातथात्वेन तदर्थमेव प्रयोजनाद्यभिधानादित्याशयेन चित्तवृत्तिविभागं दर्शयन्नेव प्रवृत्त्यप्रवृत्ती विवेचयति **त्रिविधा हीत्यादिना**। ननु किमनेनार्धजरतीयेन सर्वचित्तवृत्तेः प्रवृत्तित्वमेव स्वीकृत्य प्रयोजननिश्चयसापेक्षत्वस्य सर्वत्र तन्निरपेक्षत्वस्य वा स्वीकार्यत्वेन वैचित्र्ये नियामकाभावादित्यतो यत्किञ्चिदनुभवफलेच्छासाध्यसाधनभावानुभवानां प्रयोजनादिनिश्चयसापेक्षत्वस्य बाधितत्वेन पुरुषार्थसाधनेच्छाप्रयत्नयोश्च प्रयोजनादिनिश्चयसापेक्षत्वस्यानुभवसिद्धतया वैचित्र्यकल्पनस्य आवश्यकत्वमित्याशयेनाह **न हीत्यादिना**। तस्माद्या प्रवृत्तिस्तस्याः प्रयोजनादिनिश्चयसापेक्षत्वं यस्याश्च तन्नास्ति तस्याः प्रवृत्तित्वमेव नेति युक्तं प्रथमसूत्रे तदभिधानं नाप्यनवस्थेत्याशयेनाह **तस्मादिति**।





**वा०र०— उच्यते त्रिविधा हि** इत्यादिग्रन्थे । तस्मात् यो यत्र प्रवर्तनीय इत्युपसंहारवाक्योक्तानुमानोपपादनमात्रप्रतीत्यनुसारेण शास्त्रीयप्रवृत्तेः प्रयोजनादिनिश्चयसाध्यत्वात् तदर्थं सूत्रे प्रयोजनाभिधानं सार्थकमित्येवार्थः प्रतिपाद्यतया प्रतीयते । अतस्तदनुसारेणोच्यते इत्येतत् ग्रन्थतात्पर्यं वदन् अवतारयति **विमता शास्त्रेत्यादिना** । प्रयोजनादिज्ञानेत्यादौ ज्ञानपदं निश्चयपरम् । यद्यपि ब्रह्मज्ञानस्य मोक्षेति मूलानुसारेण ब्रह्मज्ञानमोक्षसाध्यसाधनभावेतिशङ्कोपक्रमटीकानुसारेण च प्रयोजनज्ञानसाध्येत्येव वक्तुमुचितम् । न तु आदिपदम् । तथा सत्येवं निष्प्रयोजनं प्रयोजनान्तरेत्यादि वक्ष्यमाणमूलमुपपद्यते । तथापि अत्रोपलक्षणया विषयादिकमप्यभिप्रेतमेव । अत एवोत्तरवाक्ये तस्मादित्यादिमूले च प्रयोजनादिकमित्यादिवचनम् । उत्तरत्रापि श्रौतस्य प्रयोजनादेरिति । निष्प्रयोजन इत्यादिवचनं तु तत्र विषयराहित्याभावात् प्रयोजनमात्रप्रतिपादनविवक्षया प्रयुक्तमिति न दोषः । **वक्तुमिति** । तस्मात् यो यत्र इत्यनेनेति शेषः । **यत्किञ्चिदनुभव इति** । स्वपरसाधारण्येनानपेक्षिताख्योपेक्षणीयं यत्किञ्चित्तस्यानुभवेत्यर्थः । **स्वानपेक्षितेति** । स्वानपेक्षितं यत् प्रयोजनं तस्य यत्साधनं तदनुभवो नाम तत्साधनतयानुभवः प्रयोजनादिज्ञानसाध्यत्वाभावः । तत्साध्यप्रयोजनस्यैवाभावेऽपि तस्यानपेक्षितत्वाद्वेधा वेति भावेनेदम् । **प्रवृत्तित्वेनेति** । प्रवृत्तिशब्दवाच्यत्वेनेत्यर्थः । **उभयविधेति** । यत्किञ्चिद्विषयकः अनपेक्षितप्रयोजनसाधनविषयकश्चेत्येवं उभयविधेत्यर्थः । अत्रोभयविधेति अनुभवद्वयमेकीकृत्य व्यवहरता व्यक्तिद्वयाभिप्रायेण एव मूलम्, न त्वनुभव इत्येकवचनम् । तयोरपीति द्वयोरेव ग्रहणं च कृत्वा न हीत्यादौ व्यक्तिद्वयं पृथक् निर्दिष्टम् इति न दोष इत्युपपादितं भवति । मूले प्रयोजननिश्चयापेक्षा इत्यनन्तरं अङ्गीकर्तव्या इत्युपस्कर्तव्यमित्याशयेनानङ्गीकारे बाधकमाह **अन्यथेति** । **साध्यसत्त्वमेवेति** । तत्रेति शेषः । वक्ष्यमाणस्याकर्षणं वा । **अनुचितमिति** । उक्तपरिहारासंभव एव तदौचित्यादिति भावः । निष्प्रयोजनत्वसाम्ये वाक्यत्रयेण विभागेन प्रतिपादनं व्यर्थमित्यतः तत्रावान्तरविशेषसत्त्वात् तत्सूचनाय पृथगभिधानमित्याह **उपेक्षणीयस्येति** । स्वस्य प्रयोजनत्वेत्यनेन सुखव्यावृत्तिः मात्रमित्यनेनोपेक्षणीयत्वव्यावृत्तिः । **अनपेक्षितेति** । अनपेक्षितं प्रयोजनं यस्य तस्य भावः । तत्त्वं अनपेक्षितप्रयोजनकत्वमित्यर्थः । इति भेद इत्येतत् विशेषसूचना पृथगभिधानमित्यर्थः । **प्रयोजनादिनिरपेक्षत्व इति** । प्रयोजनादिज्ञानसाध्यत्वाभावेत्यर्थः । **सुखोपेक्षणीययोरित्यादि** । सुखादिव्यावृत्तिर्नाम तद्व्यावृत्ततयाभिधानम् । **न हीतीति** । पुरुषार्थसाधनभोजने इच्छाप्रयत्ने भोजनसाध्यक्षुत्प्रहाणादिप्रयोजननिश्चयाभावेन भवतः इति न तयोः स्वरससिद्धता । किन्तु प्रयोजनादिनिश्चयसाध्यतैवेत्यर्थः । मूले भोक्तुमित्युपलक्षणम् । पातुमित्याद्यपि ज्ञेयम् । **आभासेति** । व्यभिचारबाधरूपेत्यर्थः । **सिद्धमिति** । व्याप्त्या बाधितविषयत्वरूपाङ्गप्राप्तौ अनुमानसिद्धिरिति भावः । **उपसंहरतीति** । तत्फलं उपसंहारव्याजेनाहेत्यर्थः । वक्ष्यति च उत्तरत्र योजनायां तथैव टीकाकृदिति विज्ञेयम् । एवं येन तयोरपि प्रयोजननिश्चयापेक्षा स्यात् इत्यस्य प्रतीयमानव्यभिचारपरत्वेन योजना कृता । अथ यदि पक्षीकृतप्रवृत्तेः इत्याद्युत्तरटीकोक्तरीत्या स्यादित्यस्य तर्कपराहतिसूचकत्वं स्वीकृत्य तत्सूचिततर्कपराहतिशङ्कावारकतया उच्यते इत्यादिकं योजयति **यद्वेति** । अत्र यद्वेत्यनन्तरं विमता शास्त्रे प्रवृत्तिः इत्यादि तदभिधानमिति वक्तुमित्यन्तमनुवर्तते । तेन यदि पक्षीकृतेत्यादेः प्रवृत्तिरिति न दोषः । अत एव वक्ष्यति **पूर्वोक्तानुमान इति** । तेन तदनुमानाभिधानानन्तरमेतच्छङ्कावकाश इति सूचनात् । ज्ञानफलेत्यत्र ज्ञानपदेन उक्तानुभवद्वयग्रहणम् । **प्रवृत्तित्वाविशेषादिति** । अनेन





विशेषव्याप्त्यभावेऽपि अविशेषलक्षणा सामान्यव्याप्तिरत्रेति सूचितम् । **ज्ञानेच्छेति** । अनुभवेच्छेत्यर्थः । अनुभवान्यज्ञानव्यावृत्त्यभिप्रायलक्षणभाव इति सूचनाय ज्ञानेति प्रयोगः । **त्रिविधा हीति** मूलार्थप्रतिपादनलाभाय चित्तवृत्तित्वाविशेषेऽपीत्युक्तम् । अवान्तरभेदभिन्नज्ञानादीनां सर्वेषामपि चित्तवृत्तित्वमात्रेण अविशेषेऽपि प्रवृत्तित्व-रूपेणाविशेषो नास्तीत्यर्थः । **प्रवृत्तित्वेनेति** । तच्छब्दवाच्यत्वेनेत्यर्थः । एवं प्रवृत्तित्वाभावात् इत्यादावपि । **तत्प्रयोज्येति** । हेतुर्हि साध्यं प्रयोजयति इति प्रवृत्तित्वहेतुप्रयोज्येत्यर्थः । **इतीति** । इति विशेषादित्यर्थः । **व्याप्तिविकल इति** । अविशेषलक्षणव्याप्तिविकलेत्यर्थः । **स्वीकारेणैव तर्कस्येति** । स्वीकारेण तर्कस्येष्टापादनत्व एवेति संबन्धः । **असंभवित्वादिति** । तथा च तदङ्गीकारायोगेनेष्टापत्तिर्न वक्तुं शक्येत्यर्थः । **न हीत्यादिनेति** । पृथक् निर्देशनिमित्तं तु प्रागुक्तमेवावसेयमिति भावः । **तत्फलमिति** । सूत्रे प्रयोजनाद्यभिधानस्य सार्थक्यरूप-मित्यर्थः । उक्तरीत्या त्रिविधा हीत्येतद्ग्रन्थस्य शास्त्रप्रवृत्तिपक्षकानुमाने व्यभिचारशङ्कानिरासकत्वेन वा प्रतिकूल-तर्कपराहतिशङ्कानिरासपरत्वेन वा योजनायां मूलवाक्यानां सङ्गतिमात्रलाभेऽपि ननु ब्रह्मज्ञानस्येत्यादिना विकल्प्य निराकृतपक्षेषु कस्यचित्पक्षस्याङ्गीकारपूर्वकं तत्पक्षोक्तदोषोद्धाराय अयं ग्रन्थः इत्येवं पक्षविशेषसमर्थनपरतया त्रिविधा हीत्यादिग्रन्थयोजनायाः न तु इत्यादिग्रन्थसङ्गततया अवश्यं करणीयायाः अकरणात् असङ्गतिः । शङ्का स्यादेवेति अपरितोषं मन्वान उक्तपक्षेष्वभिप्रेतपक्षमङ्गीकृत्य तत्समर्थनपरतयापि योजयति **अथवा प्रथमेति** । अनेन प्राग्विकल्पितपक्षेषु शास्त्रैकदेशप्रथमसूत्रादुक्तसाध्यसाधनभावावगम इति पक्षमङ्गीकृत्य उच्यते इत्यादि परिहारग्रन्थप्रवृत्तिरिति सूचितं भवति । **वाक्यजनितेति** । अनुभवस्येवेत्यत्रत्यानुभवविशेषणं चेदम् । **अनुभवस्येवेति** प्रवृत्तिशब्दार्थत्वमित्यनेन संबध्यते । तेन स्वर्गादिसाधनतानुभवस्य यथा प्रवृत्तिशब्दार्थत्व एव प्रथमेत्यादि योजना लब्धा । अन्यथा तदनुभववत् जायमानस्येति जायमानत्वविशेषणता प्रतीयेत । तथा सति दृष्टान्तदार्ष्टान्तिकेत्या-द्युत्तरविरोधः प्रसज्येतेति ज्ञातव्यम् । **प्रथमसूत्रसाध्येति** । जिज्ञासावाक्यविचारस्य न्यायानुसन्धानरूपतया न्यायग्रथनात्मकसूत्रसाध्यत्वमुक्तमिति ज्ञेयम् । अनेन एवमुक्तं भवति प्रथमसूत्रेण हि शास्त्रे प्रयोजनादिक-मस्तीति जायमानैकानुभवरूपा चित्तवृत्तिरपेक्षा । एतत्सूत्रसाध्यन्यायानुसन्धानविषयकेच्छाप्रयत्नरूपा चित्तवृत्तिः । एतद्विचारमुखेनैव फलतः शास्त्रप्रयोजनसाधनतानुभवस्य जायमानत्वात् । तत्राद्यायाः चित्तवृत्तेः अनपेक्षित-प्रयोजनसाधनतानुभवस्येव प्रवृत्तिशब्दार्थत्वमङ्गीकृत्य तद्वदेव च प्रयोजनादिनिश्चयसापेक्षतां चाङ्गीकृत्य तत्प्रयोजनादिनिश्चयार्थप्रयोजनान्तराभिधानपरम्पराश्रयणेऽनवस्थेत्युच्यते । आहोस्वित् अपरस्याश्चित्तवृत्तेः तदर्थत्वमङ्गीकृत्येति । अत्र च न हि कश्चित् इति वक्ष्यमाणत्वात् 'क्षुधार्त्त ! अन्नं भुंक्ष्व' इत्येतद्वाक्यसाध्य-पुरुषार्थसाधनभोजनेच्छाप्रयत्नरूपतद्वाक्यप्रवृत्तिवदिति शेषो द्रष्टव्यतया लभ्यते । **दृष्टान्तदार्ष्टान्तिकेति** । अयमर्थः । मुमुक्ष्वभिमतप्रयोजनसाधनानुभवस्य प्रयोजनादिनिश्चयसापेक्षत्ववत् प्रथमसूत्रात् जायमानानुभव-मात्रस्य प्रयोजनादिनिश्चयसापेक्षत्वमस्तीत्यङ्गीकारे ह्यनवस्था वाच्या । न चास्माभिरनपेक्षितसाधनानुभवस्य वा प्रथमसूत्रात् जायमानानुभवस्य वा तत्सापेक्षत्वमङ्गीक्रियते । एवं चेत् दृष्टान्तदार्ष्टान्तिकयोरुभयोरपि तत्सापेक्षत्वानभ्युपगमात् । तद्दृष्टान्तेन तत्सापेक्षत्वाङ्गीकारमस्मदीयमाश्रित्यानवस्थापादनमसङ्गतमिति । यदि प्रयोजनादिनिश्चयानपेक्षमेतत् प्रवृत्तिद्वयं तर्हि प्रथमसूत्रवदेव शास्त्रेऽपि तन्निश्चयाभावेऽपि प्रवृत्तिरिति प्रयोजना-





भिधानं प्रथमसूत्रेऽनर्थकमिति शङ्का परिहृता स्यात् इति शङ्कते **न च तर्हीति** । **अनुभवद्वयस्येतीति** । अनेन **न त्वनुभव इति** मूले उक्तद्विविधानुभव इत्यर्थ उक्तो भवति । तद्दूषणेऽतिप्रवृत्तेरेव हि तन्निश्चयसाध्यता उच्यते । न च एतत् अनुभवद्वयं प्रवृत्तिः । तथा च चित्तवृत्तिमात्ररूपैतदनुभवद्वये प्रयोजनादिनिश्चयानपेक्षत्वेऽपि प्रवृत्तिभूतशास्त्रीयचित्तवृत्तेः तदपेक्षत्वसंभवेन तदभावस्योक्तानुभवदृष्टान्तेनाप्रसङ्गात् सूत्रे प्रयोजनाभिधानसार्थक्य-तदानर्थक्यरूपदूषणाप्रवृत्तेरित्यर्थः । एतद्योजनायां नापि फलगोचरेच्छेति दृष्टान्ततया मूलेऽभिधानमित्यभिप्रेतम् । अत्र पक्षे उपेक्षणीयेत्यादि वक्ष्यमाणन्यायेनास्यापि सूचनादिति ज्ञेयम् । **वृत्तिप्रवृत्तिस्वरूपमिति** । अनेन मूले विभागकथनमुक्तविकल्पकोटिद्वयोत्थापकतयेति सूचितं भवति । **प्रवृत्तित्वाभावादिति** । प्रवृत्तेरेव च प्रयोज-नादिनिश्चयापेक्षत्वाभ्युपगमादिति भावः । असंभावितत्वाच्चेति वदता युक्त्यन्तरप्रतिपादकत्वात् न हीत्यादेः न वैयर्थ्यमित्युक्तं भवति । पूर्वयोजनाद्वये व्यभिचारस्थलतया वा प्रतितर्कधर्मितयापि वोपेक्षणीयानुभवफलेच्छयोः प्रसङ्गेन तदुभयस्य प्रवृत्तित्वानिवारणोपपादनमनर्थवद् भवति । एतद्योजनायां तु अनपेक्षितसाधनानुभवप्रवृत्तित्वा-भावस्यैवोपपादनेन दृष्टान्तासिद्धौ प्रथमसूत्रजन्यानुभवस्यापि न तत्सापेक्षताप्रसङ्गः इत्यभिप्रेततया तदर्थं न च मुमुक्षुणेत्येतद्वचनस्यैवापेक्षिततया न हि उपेक्षणीयमित्यादि व्यर्थमित्यत आह **अत्र पक्ष इति** । **द्वितीये त्विति** । प्रथमसूत्रसाध्यजिज्ञासावाक्यविचाररूपेत्युक्तद्वितीयेत्यर्थः । **प्रथमसूत्रप्रवृत्तेरिति** । उक्तरूपप्रवृत्तेरित्यर्थः । न च तर्हि अनवस्था इत्यत आह **अनवस्थां चेति** । अत एवास्य न शास्त्रात् बहिर्भावः इत्यनेनेति शेषः । पूर्वयोजनाद्वय इव एतद्योजनायामुक्तानुमानेन प्रवृत्तेः प्रयोजनादिनिश्चयसाध्यत्वसाधनानाश्रयणात् त्रिविधानुमानोपदर्शनपूर्वकतत्फलो-पदर्शकत्वेन योजनायोगादाह **फलितमाहेति** । प्रेक्षावतः प्रवर्तयितुं प्रयोजनाद्यभिसंबन्धं प्रतिपादयतः इत्युक्त-प्रवृत्तेः प्रयोजनादिनिश्चयसाध्यत्वाभ्युपगमनानन्तरं हि सूत्रे प्रवृत्तेरपि प्रवृत्तित्वात् तन्निश्चयसाध्यता वाच्या । तत्र च तन्निश्चायकान्तरं वाच्यमित्यनवस्था शङ्किता । प्रवृत्तिपदार्थकथनेनानवस्थायाः वक्ष्यमाणरीत्या परिहाराङ्गीकारेण चोपपादने सति प्रागुक्ताभ्युपगमे बाधकाभावात् शास्त्रे प्रवर्तनीयं प्रति प्रयोजनादिकमवश्यं प्रदर्शनीयमेवेति तदभिधानं प्रथमसूत्रे युक्तमिति फलितमिति भावः । चित्तवृत्तिमात्रपरित्यागेन साधनगोचरेच्छाप्रयत्नयोरेव प्रवृत्तिपदार्थतायां यत्रेत्यादिरूपा प्रवृत्तिघटिता व्याप्तिः फलिता भवति तामाह इत्यर्थः इत्यप्याहुः ।

प्रथमसूत्राज्जायमानानुभवमात्रस्य प्रयोजनादिनिश्चयानपेक्षत्वाङ्गीकारे शास्त्रेणाप्यनुभवस्य जायमानतया तस्य प्रयोजनादिनिश्चयानपेक्षतापत्त्या प्रथमसूत्रवैयर्थ्यमिति शङ्का प्रसज्यते । प्रागुक्तपक्षत्रयेऽपि न त्वनुभव इत्यनुभवप्रकृतित्वनिराकरणायोग इति शङ्का च । शास्त्रे महायाससाध्यानुभवस्यापि प्रकृतित्वाङ्गीकारा-दित्यतस्तद्दोषप्रसक्तिशून्यं प्रकारान्तरमाह **अथवा प्रवृत्तेरिति** । तस्मात् यो यत्रेति वक्ष्यमाणोपसंहारोपपत्तये प्रतिज्ञां तावदाह **प्रवृत्तेः प्रयोजनेति** । प्रयोजनादिनिश्चयेत्यर्थः । **न चैवमिति** । उक्तनियमाङ्गीकार इत्यर्थः । तदनङ्गीकारे प्रथमसूत्र इवोत्तरत्रापीति दूषणं प्रसङ्गाभावेऽपीत्यप्यनेन सूचितम् । प्रवृत्तेः प्रयोजननिश्चयसापेक्षत्व-नियमादित्यस्याभिप्रायस्फोरणेन परिहरति **पुरुषार्थेति** । **प्रवृत्तित्वेन** प्रवृत्तिशब्दार्थत्वेन साधनगोचरेच्छाप्रयत्नयोरेव प्रवृत्तिपदार्थत्वादुक्तप्रवृत्तेरेव तन्निश्चयसापेक्षत्वनियमाभ्युपगमादुक्तचित्तवृत्तेश्च शास्त्रविषयाया भोजनविषयाया वा





प्रवृत्तिपदेन ग्रहणोपपत्त्या तस्याः प्रयोजनादिनिश्चयसापेक्षत्वमपि प्राप्यत एव । यत्किञ्चिदनुभवादीनां तूक्तरूप-प्रवृत्तित्वाभावात्तत एव प्रयोजननिश्चयानपेक्षत्वात् प्रथमसूत्रेण चानुभवमात्रस्यैव जायमानतयोक्तरूपप्रवृत्तेस्तत्रा-भावेनानुभवमात्रस्य च प्रवृत्तित्वाभावेन प्रयोजनादिनिश्चयानपेक्षतया तन्निश्चयाय वाक्यान्तराननुसरणेन निश्चायक-परम्पराप्रयुक्तानवस्थाभावादित्यर्थः । **न च तर्हीति** । यद्यनुभवस्य प्रवृत्तिशब्दवाच्यत्वाभावमङ्गीकृत्य प्रवृत्तिशब्द-वाच्यसाधनेच्छाप्रयत्नयोरेवोक्तनिश्चयसापेक्षतानियम इत्यङ्गीक्रियते तर्हीत्यर्थः । न त्वनुभव इत्यनुभवमात्रस्य प्रवृत्तित्वनिषेधानुसारेण सर्वानुभवानां प्रयोजननिश्चयानपेक्षत्वे उपपादनीयेऽनुभवद्वयस्यैव तदुपपादनेनान्यानुभव-विशेषस्य प्रयोजनादिनिश्चयापेक्षत्वस्यानुमतत्वसूचनात् तदपेक्षत्वादेव प्रवृत्तित्वस्यापि वाच्यत्वान्नानुभवविशे-षेऽपि तदुभयनिराकरणमेतन्मूलाभिप्रेतमिति दर्शयितुमनुभवविशेषान्तरे तन्निश्चयापेक्षाप्रदर्शनस्य प्रकृतानुपयोगात् प्रकृतशास्त्रजन्यानुभव एव तदपेक्षां व्युत्पादयितुं तदनपेक्षत्वोक्तिमालम्ब्य सूत्रवैयर्थ्यशङ्कनमेतदिति ज्ञातव्यम् । **अनुभवस्यैवेति** । उत्तरोत्तरे वा । शास्त्रार्थानुभवस्यैवेत्यर्थः । **तदर्थेति** । सूत्रेण हि शास्त्रे प्रवृत्तिसिद्ध्यर्थं प्रयोजनादिकमभिधेयम् । यदा तु शास्त्रस्योत्तरपुरुषाणामर्थानुभव एव फलं तदानुभवरूपप्रवृत्त्यर्थप्रयोजना-द्यभिधानमित्युक्तं स्यात्तथा चानुभवस्य प्रवृत्तित्वाभावे उक्तप्रयोजनाद्यभिधानं प्रथमसूत्रेऽनर्थकमित्यर्थः । प्रथम-सूत्राज्जायमानानुभवस्य प्रयोजनादिनिश्चयानपेक्षत्वप्रतिबन्द्या खलु शास्त्रजन्यानुभवरूपचित्तवृत्तेरपि तन्निश्चयान-पेक्षत्वप्रसङ्गोऽभिधेयः । न चात्र प्रतिबन्द्यवकाशः । सूत्रजन्यानुभवस्य प्रयत्नसाध्यत्वाभावेन तन्निश्चयानपेक्षत्वेऽपि शास्त्रजन्यानुभवस्य प्रयत्नसाध्यतया तनिश्चयापेक्षत्वोपपत्तेरिति परिहरति **प्रथमसूत्र इति** । **वर्धमाने** द्विविधं ज्ञानमेकं प्रयत्नसाध्यमन्यच्च प्रयत्नाधीनं तत्र प्रथमसूत्रार्थानुभवो न यत्नापेक्षी तं विनापि विदितपदपदार्थसङ्गतेः श्रुतादिसूत्रस्य तदर्थज्ञानोदयादिति प्रतिपादनादयत्नसाध्यत्वमुक्तरीत्योपपाद्यमिति भावः । अयत्नसाध्यत्वेनेत्यनन्तरं तत्र प्रयोजननिश्चयस्यापेक्षितत्वेऽपीति पूरणीयम् । पुरुषार्थसाधनेत्युक्त्या पुरुषार्थसाधनगोचरेच्छाप्रयत्नयोरिव तत्साधनानुभवोऽपि प्रवृत्तिरिति सूचनादस्य जन्मादिसूत्रार्थाकलनादेः प्रवृत्तित्वमप्यस्तीति सूचितम् । शास्त्रार्था-कलनं त्वित्येव **वर्धमाने** उक्तत्वेऽपि तद्विवरणाय द्वितीयसूत्रादीत्युक्तम् । शास्त्रार्थेत्यर्थपाठः । **अतिप्रयत्नेति** । शास्त्रार्थाकलनस्य प्रयत्नसाध्यतया पूर्वापरपरामर्शतत्तदविरोधावगमस्य चातिप्रयत्नसाध्यतयेति योजना प्रयत्न-साध्यत्वेनोक्तप्रथमसूत्रजानुभववैलक्षण्यस्य प्रयत्नसाध्यत्वोक्तिक्रमेणैव वाच्यत्वात् । **वर्धमान**ानुसाराच्च । **अवश्या-पेक्षितत्वादिति** । पुरुषार्थसाधनगोचरेच्छाप्रयत्नेति पूर्वग्रन्थस्तु यथाश्रुतमूलानुसारी । उपेक्षणीयाद्यनुभवविशेषस्य प्रयोजनाद्यनपेक्षत्वोक्त्यादिलभ्यमूलतात्पर्यविषयप्रदर्शकतयेत्येतद्ग्रन्थस्तु तात्पर्यानुसारीति न पूर्वोत्तरविरोध इत्युक्त-प्रायम् । गायत्रीनिर्णयोऽवश्यापेक्षित इति तत्त्वप्रकाशिकावाक्ये यदुपपादनं तदत्रापि ज्ञेयम् । **आद्यसूत्रेति** । तदर्थेत्यर्थः । उपलक्षणमेतत् । आद्यसूत्रजानुभवविषयस्य साध्यसाधनभावमात्रस्य द्वितीयादिसूत्रार्थस्येव पुरुषार्थ-साधनत्वाभाववत्तदनुभवस्य पुरुषार्थसाधनानुभवत्वाभावादित्यपि ज्ञेयम् । शास्त्रावधारणादिकमित्यत्र शास्त्रपदेन शास्त्रार्थो ग्राह्यः । लोकोत्तरमतेरित्यनेन सर्वेषामभावेऽपि कस्यचित्प्रज्ञाविशेषवतः संभवतीति प्रतिपादयति । ततश्च तत्पुरुषीयशास्त्रार्थावधारणस्य प्रयत्नानपेक्षतया न तदपेक्षत्वप्रयुक्तं प्रयोजनादिनिश्चयापेक्षत्वमङ्गीकार्यमिति भावः । **सर्वस्यातथात्वेनेति** । प्रयत्नानपेक्षायामित्येतदर्थस्यानपेक्षितप्रयत्नत्वस्य तथापदेन परामर्शादनपेक्षित-





प्रयत्नत्वाभावेनेत्यर्थः । **तदर्थमेव** तथाविधपुरुषप्रवृत्त्यर्थमेवेत्यर्थः । **पुरुषार्थसाधनेच्छाप्रयत्नयोश्चेति** । प्रयत्न-साध्यपुरुषार्थसाधनानुभवस्येत्यपि द्रष्टव्यम् । **या प्रवृत्तिरिति** । शास्त्रे पुरुषार्थसाधनब्रह्मज्ञानगोचरेच्छाप्रयत्नरूपा वा प्रयत्नसाध्यपुरुषार्थसाधनानुभवरूपा वा प्रवृत्तिरित्यर्थः । **यस्याश्चेति** । प्रथमसूत्रजन्यानुभवमात्ररूपाया इत्यर्थः । अत्र या प्रवृत्तिरित्यादिप्रमेयद्वयस्य युक्तं प्रथमसूत्र इत्याद्युक्तप्रमेयद्वये क्रमेण हेतुत्वमिति बोध्यम् । अनेन यः प्रवर्तनीयः प्रवृत्तिशब्दवाच्यार्थेन युक्तः करणीयः स प्रयोजनादिकं दर्शयित्वैवेति मूले प्रवृत्तिशब्दावाच्येनानुभवेन युक्ततया प्रथमसूत्रेण क्रियमाणस्तु न प्रयोजनादिकं दर्शयित्वैव तथा करणीय इत्यपि लक्ष्यत इति सूचितं भवति ।

**स०व्र०**— ननु प्रवृत्तिमात्रस्य प्रयोजनादिनिश्चयसापेक्षत्वे अनुभवादेरपि प्रवृत्तित्वात् सापेक्षता स्यादित्यतो या प्रवृत्तिः सा प्रयोजनादिनिश्चयसापेक्षा या प्रयोजनादिनिश्चयानपेक्षा न सा प्रवृत्तिरिति वक्तुं प्रवृत्तिविवेकार्थं चित्तवृत्तिविभागमाह **त्रिविधा हीति** । अत्र प्रवृत्तिमात्रे प्रयोजनादिनिश्चयो हेतुरिति प्रथमपक्षान्तर्गतः प्रमाणान्तरेण प्रयोजनादिनिश्चय इति पक्षः । प्रथमसूत्रेणेत्याद्यद्वितीयेऽपि प्रथमसूत्रं शास्त्रान्तर्भूतमिति प्रथमपक्षः शास्त्रीयप्रवृत्तावेव प्रयोजनादिनिश्चयो हेतुरिति ॥ **आद्यद्वितीयपक्ष इति** । पक्षत्रयस्यानङ्गीकारपराहतत्वात् न तत्पक्षोक्तदोषावकाशः । प्रथमसूत्रेण तन्निश्चयपक्षोक्तदोषं तु 'अध्ययनविध्यादिवदस्याप्यत एवारम्भणीयत्वसिद्धेर्नानवस्थादिदोषोऽपि' इत्युत्तरत्र परिहरिष्यतीति द्रष्टव्यम् । अथवा तत्र तावद्विमता प्रवृत्तिः प्रयोजनादिनिश्चयसापेक्षा प्रवृत्तित्वा-द्भोजनादिप्रवृत्तिवदिति शास्त्रविषयप्रवृत्तेः प्रयोजनादिनिश्चयपूर्वकत्वनियमान्नैवमेव प्रवृत्तिर्युक्तेत्याह **उच्यत इति** । इच्छाप्रयत्नानुभवानामेव प्रवृत्तित्वात्सुखादिविषयेच्छानुभवयोः प्रयोजनान्तराभावात् प्रवृत्तित्वहेतोर्व्यभिचार इत्यत आह **त्रिविधा हीति** । तत्र तेषां मध्ये सुखादिविषयेच्छानुभवयोः प्रयोजनान्तराभावात्प्रवृत्तित्वहेतोर्व्यभिचार इत्यत आह **प्रवृत्तीति** । प्रवृत्तिशब्दवाच्यत्वाभावान्न व्यभिचार इत्यर्थः ॥ **न त्विति** । तयोः प्रवृत्तित्वस्यैवाभावात्तन्निबन्धनं प्रयोजनान्तरवत्त्वमपि नास्ति । यतः सपक्षत्वं स्यादित्यर्थः ॥ **न हीति** । प्रमाणविरुद्धं च तयोः प्रयोजनान्तरवत्त्वम् । स्वर्गस्य सुखरूपत्वेऽप्यपेक्षितत्वाभावादैहिकामुष्मिकफलवैराग्यवतेत्यभिप्रेत्य **मुमुक्षुणे**त्युक्तम् ॥ **पुरुषार्थेति** । फलगोचरेच्छादेः प्रवृत्तित्वमेव नास्तीत्युक्तम् । अस्तु वा तथापि न व्यभिचारः । अस्वारसिकप्रवृत्तित्वस्य हेतुत्वादिति भावः । अथवा न चै(नन्वे)वं तर्हि साधनगोचरेच्छादिकं न फलवत् इच्छादित्वात्तत्फलगोचरेच्छा वदिति फलस्यानर्थक्यमाशङ्क्यम् । अत्रास्य स्वारसिकेच्छादित्वमुपाधिः । न चोपेक्षणीये साध्याव्यापकता, साधनावच्छिन्ने साध्ये अस्योपाधित्वादित्याह **पुरुषार्थेति** । ननु प्रवृत्तेरपि प्रयोजनादिपूर्वकत्वाभावे किं बाधकं तत्राह **न हीति** । प्रवृत्त्यनुपपत्तिः बाधिकेत्यर्थः । तस्मादिति व्याप्तिप्रदर्शनं इतीत्युपनयनिगमने । इतिशब्दो हेतौ । यस्मादियं प्रवृत्तिः तस्मात्प्रयोजनाद्यभिधानपूर्विका इति ।

**कुण्डल०**— प्रवृत्तेः प्रयोजनादिनिश्चयसापेक्षत्वेऽपि प्रयोजननिश्चयस्य प्रवृत्त्यपेक्षाविरहात् । प्रथमसूत्रं कथञ्चित् श्रुतवतो व्युत्पन्नस्य पुंसस्तत एव प्रयोजनाद्यवगतिसंभवेन शास्त्रे प्रवृत्त्युपपत्तेर्युक्तं प्रथमसूत्रे प्रयोजनादिव्युत्पादनमिति परिहरति **उच्यत इति** । ननु प्रयोजननिश्चयस्यापि प्रवृत्तित्वात् कथं प्रयोजनानुभवः





ततः शास्त्रे प्रवृत्तिरित्यतः प्रवृत्तिशब्दार्थमाह **त्रिविधा हीति** । न त्वर्थप्रवृत्तिशब्दितयोः साधनगोचरेच्छाप्रयत्नयोः प्रयोजननिश्चयसापेक्षत्वं प्रतिपादयितुम् । अतथाभूतयोरनुभवफलेच्छयोः प्रयोजननिश्चयानपेक्षत्वं प्रतिपादयति **न हीति** । साधनानुभवोऽपि न प्रयोजननिश्चयसापेक्ष इत्याह **न चेति** । प्रवृत्तेः प्रयोजननिश्चयापेक्षा नैयत्यमुपपादयति **पुरुषार्थेति** । प्रयोजनानुसन्धानं विना सिद्धेत्यर्थः । **प्रवर्तनीय इति** । साधनगोचरेच्छाप्रयत्नवत्तया संपादनीय इत्यर्थः । तथा च 'उच्यत' इत्यादि परिहारवाक्यस्यायमभिप्रायः । कथञ्चित् प्रथमसूत्रमनुभवतः पुंसस्ततः प्रयोजननिश्चये सति साधनगोचरेच्छाप्रयत्नलक्षणप्रवृत्तिः शास्त्रे संभवति न चानुभवोऽपि प्रयोजननिश्चयाधीनः । अप्रवृत्तित्वात् । प्रवृत्तिशब्दार्थस्यैव प्रयोजननिश्चयसाध्यत्वात् । अतः सार्थकं प्रथमसूत्रे प्रयोजनाभिधानमिति ।

**विठ्ठ०**— न सूत्रे प्रयोजनाभिधानं अनर्थकं प्रयोजनादिज्ञानस्य प्रेक्षावत्प्रवृत्तिहेतुत्वेन प्रेक्षावतः शास्त्रे प्रवर्तयितुं प्रयोजनाभिधानस्य सार्थक्यादित्याशयेन तत्रोक्तदोषान् परिहर्तुमाह **उच्यत इत्यादिना** । तत्र तावत् प्रयोजनादिज्ञानस्य प्रवृत्तिं प्रति हेतुत्वं दर्शयितुं प्रवृत्तिस्वरूपं निर्धारयति **त्रिविधा हि इति** । इत्युच्यते इत्यतःपरं अतस्तयोरेव प्रयोजननिश्चयापेक्षा नान्यत्र । अनुभवादेश्च न प्रवृत्तित्वम्, अतो न दोष इत्याह **नत्वनुभवो नापि फलगोचरेच्छेति** । अनुभवस्य प्रयोजननिश्चयानपेक्षत्वं दर्शयति **न ह्युपेक्षणीयमिति** । फलगोचरेच्छायास्तदनपेक्षत्वं दर्शयति **नापीति** । नन्वनुभवमात्रस्य प्रयोजननिश्चयानपेक्षत्वेऽपि साधनस्य साधनत्वप्रकारानुभवः तत्साध्यप्रयोजननिश्चयसापेक्ष एवेत्युक्तनियमानुपपत्तिरित्यत आह **न चेति** । यथानुभवफलेच्छयोः प्रयोजनादिनिश्चयमनपेक्ष्य केवलं स्वकारणादेव सिद्धत्वं न तथा साधनगोचरेच्छाप्रयत्नयोरित्युपपादयति **पुरुषार्थसाधने त्विति**। अस्तु साधनगोचरेच्छाप्रयत्नयोः प्रयोजनादिनिश्चयसापेक्षत्वं ततः किमित्यत आह **तस्मादिति** । इति हेतोः मोक्षसाधनेऽस्मिन् शास्त्रे अधिकारिणः प्रवर्तयितुं प्रथमसूत्रे प्रयोजनाभिधानं सार्थकमेवेत्यर्थः । तथाच प्रथमसूत्रात् प्रयोजनादिनिश्चयेन समग्रशास्त्रे प्रवृत्त्युपपत्तेर्नान्योन्याश्रयत्वमित्यर्थः ।

**चषकः**— प्रथमसूत्रगोचरेच्छाप्रयत्नलक्षणप्रवृत्तिविनिर्मुक्तस्यापि गृहीतशक्तिकतद्घटकपदजातस्य पुंसस्तत्सूत्रश्रवणाव्यवहितोत्तरक्षणावच्छेदेनेष्टसाधनतानिश्चयोदयात् तदुदीच्येच्छाप्रयत्नयोरप्युत्पादनिर्वाह इत्यभिप्रेत्य समाधत्ते **उच्यत इति** । तथा च विषयितासंबन्धेन साधनविशेषितेच्छाप्रयत्नत्वयोरेव साधनानुभवफलेच्छाव्यावृत्तयोस्तादृङ्निश्चयजन्यतावच्छेदकत्वोपगमान्न क्षतिरित्याशयः ॥ **पुरुषार्थसाधन इति** । इच्छाप्रयत्नान्वयिविषयित्वार्थिका सप्तमी ॥ **स्वरससिद्धेति** । इष्टसाधनतानिश्चयासमवधानकालीनस्वकारणायत्तोत्पत्तिके यथा साधनानुभवफलेच्छे तद्वन्न तादृशहेत्वधीनोत्पत्तिकेत्यर्थः । **प्रवर्तनीयः** । साधनगोचरेच्छाप्रयत्नवत्तया विधातव्यः ।

**काशी०**— **उच्यत इति** । वाक्यार्थबोधस्यापि प्रवृत्तिशब्दार्थत्वे प्रयोजननिश्चयं विना प्रथमसूत्रार्थबोधस्याप्यनुपपत्तिः स्यादतः प्रवृत्तिशब्दार्थं निर्धारयितुमाह **त्रिविधेति** । पुंसां प्रवर्तमानानामिति शेषः । चशब्दोत्तरमितिशब्दोऽध्याहार्यः । ज्ञानेच्छाप्रयत्नानां क्रमिकत्वात्क्रमेणोक्तिः । तत्रानुभव इच्छा च फलसाधनयोः, प्रयत्नस्तु साधन एवेति द्रष्टव्यम् । **न त्विति** । अनुभवादिकाले प्रवर्तत इत्यव्यवहारादिति भावः । अत्रेच्छाग्रहणं





दृष्टान्तार्थम् । ननु मा भूदनुभवफलेच्छयोः प्रवृत्तिशब्दार्थत्वम् । प्रयोजननिश्चयापेक्षत्वं तु स्यादित्यतस्तथात्वे क्रमेणोभयत्र व्यतिरेकव्यभिचारमाह **न हीति** । निष्प्रयोजनं प्रयोजनवत्त्वेनानिश्चितमित्येतावता नानुभूयते किन्त्वनुभूयत एवेत्यर्थः । उपेक्षणीये तृणादौ सतोऽपि प्रयोजनस्यानिश्चयः सुखे तु प्रयोजनस्यासत्त्वादेवानिश्चय इति सूचयितुमन्तरशब्दः । ननूपेक्षणीयानुभवसामान्यस्य प्रयोजनवत्त्वनिश्चयानपेक्षत्वेऽपि साधनत्वानुभवस्य तदपेक्षत्वान्न प्रथमसूत्रश्रवणेऽपि ब्रह्मज्ञानस्य मोक्षसाधनत्वानुभवसंभवः । न च तज्ज्ञाने तज्ज्ञानापेक्षाया-मात्माश्रयः । शाब्दानुभवं प्रत्येव तस्य हेतुत्वोपगमेन प्रमाणान्तराधीनप्रयोजनसाधनत्वनिश्चयेन शाब्दानुभवोपपत्ते-रित्याशङ्क्य तत्रापि व्यभिचारमाह **न चेति** । स्वर्ग इत्यन्तस्वर्गसाधनत्वस्य प्रागनिश्चितत्वसिद्ध्यर्थम् । **नानुभूयत इति** । स्वर्गकामो यजेतेत्यादिवाक्येन तदनुभवादिति भावः । परिमळे तु साधनानुभवस्य प्रयोजननिश्चयानपेक्षत्वेऽपि फलेच्छाधीनत्वं स्यादित्यतस्तदपि नेत्याह न चेतीत्यवतारितम् । तत्र यद्यपि फलेच्छायाः फलसाधनत्वानुभव-हेतुत्वेऽपि मुमुक्षोर्मोक्षसाधनत्वानुभवः सूत्रात्संभवति । तथाऽपि फलेच्छाधीनत्वे प्रवृत्तित्वापत्त्या प्रयोजननिश्चया-पेक्षाऽपि स्यादित्याशङ्कानिरासार्थं तदिति भावः । वाक्यार्थचन्द्रिकायां तु शास्त्रप्रवृत्तिः प्रयोजननिश्चयापेक्षा प्रवृत्ति-त्वात् भोजनादिप्रवृत्तिवदिति सिद्धान्त्यभिप्रेतानुमानेऽनुभवफलेच्छयोर्व्यभिचारवारणाय न त्वित्यादिग्रन्थः । तत्र साध्यसत्त्वेनैव व्यभिचारो वार्यताम् । किं हेत्वसत्त्वव्युत्पादनेनेत्याशङ्क्य साध्याभ्युपगमस्यानुभवविरुद्धतामाह **न हीति** । अत्र सुखस्य स्वयं प्रयोजनरूपस्याप्रयोजनत्वादितरयोस्त्वतद्रूपयोरप्रयोजनत्वानपेक्षितप्रयोजनत्वाभ्यां भेदादुक्तिरिति भावश्चोक्तः । अनुभवादिवत्प्रवृत्तेरपि प्रयोजननिश्चयानपेक्षत्वे प्रथमसूत्रे तदुक्तिवैयर्थ्यमतस्तस्या-स्तदपेक्षत्वमुपपादयति **पुरुषार्थेति** । यद्यपीच्छाप्रयत्नयोः प्रवृत्तिपदार्थत्वं पूर्वमुक्तम् । तथाऽपि तयोर्द्वयोरपि प्रयोजननिश्चयापेक्षत्वसिद्धये विशिष्य ग्रहणम् । **तथेति** । यथाऽनुभवफलेच्छे प्रयोजनाद्यनिश्चयेऽप्यनुभूयेते तथा नोत्सर्गतोऽनुभूयेते इत्यर्थः । मत्तादिप्रवृत्तेस्तथा दर्शनादुत्सर्गत इति । **क्षुदिति** । भोजनादेः क्षुत्प्रहाणादि-साधनत्वमनिश्चित्येत्यर्थः । **तस्मादिति** । यस्मात्प्रयोजनादिनिश्चयापेक्षा प्रेक्षावत्प्रवृत्तिर्यस्माच्च प्रमाणान्तरा-निश्चितप्रयोजनादिकाः प्रेक्षावन्तोऽत्र प्रवर्तनीयास्तस्मादित्यर्थः । **दर्शयित्वैवेति** । तत्र प्रवर्तनीय इति शेषः । अतः प्रयोजनादिप्रदर्शनस्य प्रेक्षावत्प्रवृत्तिहेतुत्वात् । **सार्थकमिति** । ननु मा भूदुत्तरसूत्रेष्वपि प्रेक्षावतां प्रवृत्तिः । प्रथमसूत्र इवोत्तरत्रापि घनगर्जितन्यायेन शब्दश्रवणादेव अर्थबोधसंभवादिति चेन्न । कथञ्चिच्छ्रवणसंभवेऽपि विशिष्टार्थप्रतीतेर्बहुतरविमर्शसाध्यत्वेन प्रवृत्तिं विना तदनुपपत्तेः । न चैवं प्रथमसूत्रेऽपि विशिष्टार्थप्रतीते-र्विमर्शाधीनत्वात्तदर्थं प्रवृत्त्यपेक्षायामुक्तानवस्था तादवस्थ्यमिति वाच्यम् । प्रथमसूत्रादापाततः प्रयोजनज्ञाने सति तदर्थिनः पश्चाद्विमर्शेन विशिष्टार्थप्रतीत्युपपत्तेः । एतेन प्रथमसूत्रे प्रवृत्त्यनपेक्षायामस्याप्यत एवारम्भसिद्धेरित्युत्तर-ग्रन्थविरोधः । आरम्भस्य प्रेक्षावत्प्रवृत्तिरूपताया उक्तत्वादित्यपास्तम् । विशिष्टार्थप्रतीत्यर्थं प्रवृत्तेरभ्युपगमादिति ।

**गूढ०**— प्रवृत्तित्वमनुभवस्य च प्रयोजननिश्चयव्यतिरेकेऽपि जायमानत्वेन व्यभिचारान्न प्रवृत्तित्व-मित्यभिप्रायेण साधनगोचरयोरिव इच्छाप्रयत्नयोः प्रवृत्तित्वमिति व्यवस्थापयितुं चित्तवृत्तिं विवेचयति **त्रिविधा हीति** । ननु प्रयोजनादिनिश्चयस्य न प्रवृत्तिकारणत्वमित्युक्ते चित्तवृत्तेस्त्रैविध्याभिधानमयुक्तम् । प्रश्नासङ्गतत्वादिति ।





मैवम् । शङ्कान्तरपरिहारार्थत्वेन सार्थकत्वात् । न च कथं तदिति वाच्यम् । अत्र हि प्रथमसूत्रे सूत्रकृता प्रवृत्त्यर्थं प्रयोजनादिकमभिधीयते तेन च प्रयोजनादिनिश्चयस्य प्रवृत्तिं प्रति कारणत्वमभिप्रेतम् । तदयुक्तम् । प्रवृत्तिशब्देन हि अनुभवेच्छाप्रयत्ना गृह्यन्ते । तत्र प्रयोजनादिनिश्चयस्य अनुभवादीन् प्रति कारणत्वं प्रयोजनादिनिश्चयाभावेऽपि अनुभवादेर्जायमानत्वेनान्वयव्यतिरेकाभ्यां व्यभिचारादित्याशङ्कायां प्रवृत्तिशब्दार्थं विवेचयितुं चित्तवृत्तेस्त्रैविध्याभिधानमिति नासङ्गतिरिति भावः । **साधनगोचराविच्छाप्रयत्नाविति** । नन्वेतत् अयुक्तम् । साधनगोचरप्रयत्नस्य प्रवृत्तिशब्दवाच्यत्वेऽपि साधनविषयकेच्छाया न प्रवृत्तिशब्दवाच्यत्वम् । प्रमाणाभावात् । किञ्च प्रवृत्तिपदस्य नानार्थत्वप्रसङ्गः । शक्यतावच्छेदकस्य साधनगोचरेच्छात्वस्य साधनगोचरप्रयत्नत्वस्य च भेदादिति । मैवम् । प्रयत्नस्यैव प्रवृत्तिशब्दवाच्यत्वात् । प्रयत्ने प्रयोजनादिनिश्चयजन्यत्ववदस्या अपि प्रयोजनादिनिश्चयजन्यत्वेन प्रयत्नसाम्यात् प्रवृत्तिशब्देनोक्तिरिति न कश्चिद्दोषः । यद्वा इच्छाप्रयत्नयोरुभयोरपि न प्रवृत्तिशब्दवाच्यत्वम् । तर्हि तत्र प्रवृत्तिशब्दप्रयोगो न युक्त इति वाच्यम् । प्रवृत्तेश्चेष्टाविशेषत्वेन इच्छाप्रयत्नयोरुभयोरपि चेष्टाविशेषहेतुत्वेन तत्र प्रवृत्तिशब्दप्रयोग इति भावः । अथवा अस्तूभयोरपि प्रवृत्तिशब्दवाच्यत्वम् । न च प्रयत्नवति प्रवृत्त इति व्यवहारात् साधनगोचरप्रयत्नस्य प्रवृत्तिशब्दवाच्यत्वेऽपि तद्विषयकेच्छाया न प्रवृत्तिशब्दवाच्यत्वं प्रमाणाभावादित्युक्तमिति वाच्यम् । एतत्फलार्थमिदं करिष्यामीतीच्छावत्त्वेऽन्यस्य ज्ञातेऽयमत्र प्रवृत्त इति व्यवहारसद्भावेनेच्छाया प्रवृत्तिशब्दवाच्यत्वे प्रमाणसद्भावात् । न चैवं नानार्थत्वापत्तिः । शक्यतावच्छेदकनानात्वादिति वाच्यम् । ज्ञानभिन्नसाधनगोचरप्रवृत्तित्वस्येच्छाप्रयत्नानुगतस्यैकस्य शक्यतावच्छेदकस्यात्र सत्त्वेन नानार्थत्वापादनायोगात् । न चैवं द्वेषस्यापि प्रवृत्तिशब्दवाच्यत्वं स्यादिति वाच्यम् । निवृत्त्यप्रयोजकेति विशेषितत्वात् । तस्य च निवृत्त्यप्रयोजकत्वान्न तत्रातिप्रसङ्गः । न चैवमपि पदात् यत्प्रकारकबोध उपजायते तस्यैव शक्यतावच्छेदकत्वं, न हि प्रवृत्तिपदादेतत्प्रकारकबोधो जायते । किन्त्विच्छात्वप्रयत्नत्वप्रकारक एवेति नास्य शक्यतावच्छेदकत्वं युक्तमिति वाच्यम् । अहमादिपदेषु बुद्धिस्थत्वप्रकारकबोधाजनकत्वेऽपि तस्याहमादिपदप्रवृत्तिनिमित्तत्ववदस्यापि प्रवृत्तिनिमित्तत्वोपपत्तिरिति । यद्वा अस्तु नानार्थत्वमिति न कश्चित्क्षुद्रोपद्रवः । **नत्वनुभव इति** । तत्र प्रवृत्तिशब्दव्यवहाराभावादिति भावः । प्रयोजननिश्चयापेक्षाभावमेवाह **न हीति** । ननु मास्तु फलविषयकानुभवेच्छयोः प्रवृत्तिशब्दवाच्यत्वं तथापि साधनविषयकानुभवस्य तदस्त्वित्यत आह **न चेति** । अस्तु वा फलेच्छायाः प्रवृत्तित्वस्य प्रयोजननिश्चयसाध्यत्वव्यभिचारः । अस्वारसिकप्रवृत्तित्वस्य तथात्वादित्याह **तेनेति** । विवक्षितार्थतत्त्वज्ञानादिरूपोक्तविधाप्तिमत्त्वं यस्यास्ति स परप्रयोजनादिमदेव वदेत् । नान्यथेत्युक्तविधाप्तत्वगमकप्रमाणेनैव प्रयोजनादिसंबन्धः सिद्ध्यतीति भावः । ननु तर्हीच्छाप्रयत्नयोरपि न प्रयोजननिश्चयसाध्यत्वम् अत आह **पुरुषार्थेति** ।

**प्रदीपः**— तत्र तावद्विमता प्रवृत्तिः प्रयोजनादिज्ञानपूर्विका प्रवृत्तित्वात् भोजनादिविषयप्रवृत्तिवदिति शास्त्रविषयप्रवृत्तेः प्रयोजनादिपूर्वकत्वनियमान्नैवमेव प्रवृत्तिर्युक्तेत्याह **उच्यत इति** । इच्छाप्रयत्नानुभवानामेव प्रवृत्तित्वात् सुखादिविषयेच्छानुभवयोः प्रवृत्तिशब्दवाच्यत्वाभावान्न व्यभिचार इत्यर्थः । **नन्विति** । तयोः प्रवृत्तित्वस्यैवाभावात् तन्निबन्धनं प्रयोजनान्तरसत्त्वमपि नास्ति यतः सपक्षत्वं स्यात् । **न हीति** । प्रमाणविरुद्धं च





तयोः प्रयोजनान्तरपूर्वकत्वमित्यर्थः । **न चेति** । साधनगोचरोऽनुभवः फलपूर्वको वेति किमु वाच्यफलगोचरेच्छादेः प्रवृत्तित्वमेव नास्तीत्युक्तम् । अस्तु वा तथापि न व्यभिचारः अस्वारसिकप्रवृत्तित्वस्य हेतुत्वात् । अथवा नन्वेवं तर्हि साधनगोचरेच्छादिकं न फलवत् इच्छादित्वात्फलगोचरेच्छावदिति फलोक्तानर्थक्यमाशङ्क्य स्वारसिकेच्छादित्वमुपाधिः न चोपेक्षणीये साध्याव्यापकत्वं साधनावच्छिन्ने साध्ये सोपाधिकत्वादित्याह **पुरुषार्थेति** । ननु प्रवृत्तेरपि प्रयोजनादिपूर्वकत्वाभावे किं बाधकं तत्राह **न हीति** । प्रवृत्त्यनुपपत्तिर्बाधिकेत्यर्थः । **तस्मादिति** व्याप्तिप्रदर्शनम् । इतीत्युपनयनिगमने **इतिशब्दो** हेतौ ।

**॥ उक्तस्य प्रयोजनादेः श्रौतप्रयोजनाद्युपपादकत्वम् ॥**

**प्रथमसूत्रस्य श्रोतुः शास्त्रे प्रवर्तकत्वम्—**

**१०८ सु०— उक्तं च प्रयोजनादिकं श्रोता कथं श्रद्दधीताश्रद्दधानश्च कथं प्रवर्तेतेति पुनरवशिष्यते ।**

**परि०**— प्रयोजनाद्यभिधानस्यार्थवत्त्वमङ्गीकृत्यापि प्रवृत्त्यसंभवं शङ्कते **उक्तं चेति** । अवशिष्यते शङ्केति शेषः ।

**यादु०**— प्रयोजनाद्यभिधानस्यार्थवत्त्वमङ्गीकृत्यापि प्रवृत्त्यभावं शङ्कते **उक्तं चेति** ।

**आनन्दः**— नन्वस्तु सूत्रे प्रयोजनाद्यभिधानं तथापि किं तेन प्रयोजनादिज्ञानमात्रं वा भवति तन्निश्चयो वा । नाद्यः । तस्य प्रागपि सत्त्वात् । प्रवृत्त्यनुपयोगाच्चेत्यभिप्रेत्य द्वितीयं शङ्कते **उक्तं चेति** ।

**श्रीनिधि०**— ननु प्रयोजनादिवचने श्रद्धा मास्त्विति अत आह **अश्रद्दधानश्चेति** ।

**वा०चं०**— शास्त्रीयविषयप्रयोजनादिसमर्पकत्वेन शास्त्रारम्भहेतोरस्य सूत्रस्य वेदार्थनिर्णायकन्यायग्रथनात्मकत्वाच्छास्त्रान्तर्भावोऽप्यस्तीति नानवस्थादोष इति वक्तुं कुतोऽस्य न्यायसूत्रत्वं येन नानवस्थेति आशङ्कायां न्यायसूत्रत्वाङ्गीकारनिवर्त्यां शङ्कां प्रकारान्तरेण केषाञ्चित्समाधानप्रकारं तद्दूषणप्रकारं च दर्शयति **उक्तं चेत्यादिना** ।

एवं प्रथमसूत्रस्य शास्त्रोपोद्धातत्वमभ्युपगम्यैवानवस्थां परिहृत्याधुना शास्त्रान्तर्भावमङ्गीकृत्य अपि तां परिजिहीर्षुः शास्त्रान्तर्भावप्रयोजकं वक्तुं तन्निवर्त्यां शङ्कां प्रदश्र्य तत्र केषाञ्चित्प्रकारेण परिहारं दूषयितुमनुवदति **उक्तं चेत्यादिना** ।





**वा०र०**— **इति वक्तुमिति** । 'अत एव अस्य न शास्त्रे'त्यनेन इति शेषः । **न्यायसूत्रत्वाङ्गीकारेति** । **उक्तं च** इत्यारभ्य **अवशिष्यते** इत्यन्तेन तन्निवर्त्यशङ्काप्रदर्शनम् । **अनवस्थां परिहृत्येति** । प्रयोजनादिनिश्चयानपेक्षत्वाभ्युपगमेनेति शेषः । **परिजिहीर्षुरिति** । अध्ययनविध्यादिवदित्यादिनेति शेषः । **प्रयोजकं** न्यायसूत्रत्वम् । **दूषयितुमनुवदतीति** । अत्राशङ्कां प्रदर्श्य तत्र केषाञ्चित्प्रकारान्तरेण परिहारमनूद्य दूषयतीत्यर्थः ॥ उक्तयोजनासु **उक्तं चेत्यादिनेत्य**त्रैवात्र नादिपदेन ग्राह्यं तस्मान्नेदमित्येतत्पर्यन्तमपि तु अध्ययनेत्येतत्पर्यन्तमिति द्रष्टव्यम् । अनवस्थादितादवस्थ्यमिति पाठः । आदिपदाभावे वा तदर्थान्तभर्विन व्याख्येयम् । अत्र मूले प्रमाणप्रमेयेति प्रथमसूत्रीयन्यायवाचस्पतितत्तात्पर्यपरिशुद्धिमनुसृत्य ननु प्रमाणादिपदार्थतत्त्वज्ञानस्य यदि निःश्रेयसहेतुतेति ग्रन्थमर्यादया ननु ब्रह्मज्ञानस्येत्यादिरुभयथापि प्रयोजनाद्यभिधानमित्यन्तो ग्रन्थः प्रवर्तितः । तन्मध्ये **उक्तं चेत्यादि**ग्रन्थः स्पष्टार्थतया टीकाकृता न व्याख्यातः । तथापि मन्दबोधाय किञ्चिद्व्याख्यायते **श्रद्धधीतेति** । श्रत्पूर्वो दधातिर्निश्चयार्थे वर्तते । निश्चिनुयादित्यर्थः । **अश्रद्दधानो**ऽनिश्चिन्वानः ।

**कुण्डल०**— नन्वस्तूक्तरीत्या प्रथमसूत्रात् प्रयोजनाद्यवगतिस्तथापि शास्त्रे न प्रवृत्तिः संभवतीति शङ्कते **उक्तं चेति** ।

**विठ्ठ०**— प्रथमसूत्रे प्रयोजनाद्यभिधानेऽपि प्रवृत्त्यभावमाशङ्कते **उक्तं चेति** । न हि सन्देहात्प्रवृत्तिर्भवतीति भावः ।

**चषकः**— सौत्रप्रयोजनाभिहितेरर्थवत्तामूरीकृत्यापि प्रवृत्तिदौस्थ्यमाशङ्कते **उक्तं चेति** ।

**काशी०**— प्रयोजनाद्यभिधानेऽपि प्रवृत्त्यनुपपत्तिरित्याशङ्कायां परोक्तसमाधानं दूषयित्वा स्वयं प्रकारान्तरेण समाधातुमाह **उक्तं चेति** । **श्रद्दधीत** अवधारयेत् । सूत्रे प्रामाण्यसन्देहे प्रयोजनादिसन्देहसंभवादिति भावः । तथात्वे का क्षतिरित्यत आह **अश्रद्दधानश्चेति** । प्रयोजनादिसन्देहे सति महायाससाध्येष्वप्रवृत्तेरिति भावः । **इतीत्य**स्य शङ्केति शेषः । **एके** तार्किकादयः । तद्वचनात् सूत्रादेवेत्यर्थः । आप्तवाक्यत्वेन सूत्रप्रामाण्यस्य निश्चिततया तत्सन्देहाहितप्रयोजनादिसन्देहासंभवादिति भावः ।

**गूढ०**— नन्वस्तु सूत्रे प्रयोजनाद्यभिधानं तथापि किं तेन प्रयोजनादिज्ञानमात्रं वा भवति तन्निश्चयो वा । नाद्यः । तस्य प्रागपि सत्त्वात् । प्रवृत्त्यनुपयोगाच्चेत्यभिप्रेत्य द्वितीयं शङ्कते **उक्तं चेति** ।

**प्रदीपः**— यस्मादियं प्रवृत्तिस्तस्मात्प्रयोजनाद्यभिधानपूर्वतेति प्रयोजनाद्यभिधानस्यार्थवत्त्वमङ्गीकृत्यापि प्रवृत्त्यसंभवं शङ्कते **उक्तं चेति** ।





**१०९ सु०— तत्रैके समाधानमाहुः। अवगतसूत्रकाराप्तभावस्तावत्तद्वचनादेव श्रद्धास्यति। यद्यपि आप्तत्वावधारणे, प्रयोजनाद्यनभिधानेऽपि तत्सामान्यनिश्चयो भवत्येव 'प्रयोजनादिमदिदं शास्त्रम् आप्तोक्तत्वादि'ति। तथाऽपि नासौ प्रवृत्त्यङ्गम्। न हि प्रयोजनादिमदित्येव प्रवर्तते। किं नामास्मदभिम(लषि)तप्रयोजनादिमदिति। स च प्रयोजनादिविशेषो वचनादेवावसीयत इति सार्थकं तदभिधानम्।**

**परि०—** स्वयं किन्तु श्रौतस्येत्यादिना समाधिं विवक्षुः प्रकारान्तरेण समाधिद्वयं तदेतदनुपपन्नमित्यादिना निरसितुमनुवदति **तत्रैक इत्यादिना**। **तद्वचनादेवेति**। प्रथमसूत्ररूपतद्वचनादेवेत्यर्थः। तथात्वे आद्यसूत्रानर्थक्यमित्याशङ्क्य निराह **यद्यपीति**॥ **असौ** सामान्यनिश्चयः॥ **वचनादेवेति**। प्रथमसूत्रादित्यर्थः। मानान्तराभावादिति भावः॥ **तदभिधानमिति**। आद्यसूत्र इति योज्यम्। समाधानान्तरमाह **आप्तत्वेति**। यथा कृष्यादाववश्यं फलं भवत्येवेत्यनिश्चयेऽपि फलोत्पत्तिसन्देहात्प्रवृत्तिरेवं शास्त्रेऽप्यस्तु प्रवृत्तिरित्यर्थः। अस्मिन्पक्षेऽप्याद्यसूत्रं व्यर्थमित्याशङ्क्य समाधत्ते **नन्वित्यादिना**॥ **विशेषेति**। मोक्षफलकं भवति न वा स्वर्गफलकं भवति न वेत्यादिरूपेण मोक्षादिकोटिविशेषस्मृतिरित्यर्थः। तदर्थमप्याद्यसूत्रं व्यर्थमिति भावः॥

**यादु०— वचनादेवावसीयत इति**। आप्तोक्तत्वहेतोः प्रयोजनविशेषव्यभिचारित्वेन अनुमानासंभवादिति भावः॥

**वं०प०— प्रयोजनाद्यभिधानेऽपीति**। तथा च तद्वचनादेव श्रद्धास्यतीत्ययुक्तमिति भावः।

**आनन्दः— तत्सामान्यनिश्चयः** प्रयोजनादेः सामान्यनिश्चयः। **न हीति**। तथा सति परप्रयोजनादिमत्यपि प्रवृत्तिः स्यादिति भावः। **स चेति**। प्रयोजनादिविशेषेऽभिहिते तं प्रति स्वस्याधिकारित्वे ज्ञाते प्रयोजनादौ स्वाभिमतत्वमपि ज्ञातुं शक्यमिति भावः।

**कं०रा०— अर्थसन्देहेऽपि** प्रयोजनसन्देहेऽपि। नन्विदं प्रयोजनाद्युपेतं न वेति सन्देहकोटिप्रयोजनादिस्मरणार्थं प्रयोजनादिवचनमावश्यकमेवेत्यत आह **विशेषस्मृतिश्चेति**।

**वा०र०— तत्र एके समाधानमित्यादि उभयथापि प्रयोजनाद्यभिधानमुपपन्न**मित्यन्तेन केषाञ्चित् समाधानप्रदर्शनम्। **एक इति**। न्यायवाचस्पतिमिश्रा इत्यर्थः। **श्रद्धास्यतीति**। निश्चेष्यतीत्यर्थः। **तत्सामान्यनिश्चय इति**। प्रयोजनादिसामान्यनिश्चय इत्यर्थः। निश्चयप्रकारमेव दर्शयति **प्रयोजनादिमदिदमिति**। **असाविति**। सामान्यनिश्चय इत्यर्थः। **प्रयोजनादिमदित्येवेति**। प्रयोजनादिमत्त्वावधारणमात्रेण न प्रवर्तत इत्यर्थः।





यदि यत्किञ्चिदभिमतप्रयोजनादिमत्त्वमात्रेण स्वस्य प्रवृत्तिः तर्हि पराभिमतप्रयोजनवति स्वस्य तत्प्रयोजनानपेक्षत्वेऽपि प्रयोजनवत्त्वनिश्चयमात्रेण प्रवृत्तिः स्यादिति भावः। **किं नामेति**। अस्मदभिमतप्रयोजनादिमदित्येवावधार्य प्रवर्तत इत्यर्थः। **वचनादेवेति**। आप्तोक्तत्वस्य सामान्यतः प्रयोजनादिमत्त्वसाधन एव सामर्थ्यस्य तवापि संमतत्वादित्याशयः।

**स०व्र०**— प्रयोजनादिमत्त्वं प्रवृत्तौ प्रयोजकं, तच्चाप्तत्वावधारणेन सामान्यतो भविष्यति किमभिधानेन इत्यर्थः॥ **तथाऽपीति**। सामान्येन फलादिप्रतिपत्तावपि निश्शङ्कप्रवृत्तये प्रयोजनविशेषोक्तिः इत्यर्थः॥

**कुण्डल०**— **तत्सामान्येति**। प्रयोजनसामान्येत्यर्थः। **वचनादेवेति**। आप्तोक्तत्वहेतोः सप्रयोजनत्वं प्रति व्याप्तत्वेऽपि प्रयोजनविशेषं प्रति विशिष्य गमकत्वायोगेन शब्दादेव प्रयोजनविशेषोऽवगन्तव्य इत्यर्थः।

**विठ्ठ०**— इति सार्थकमिति प्रयोजनविशेषप्रदर्शनार्थः। सन्देहादपि प्रवृत्तिर्दृश्यते अतः आद्यसूत्रे श्रद्धाभावेऽपि प्रवृत्तिर्युज्यते। समाधानान्तरमाह **आप्तत्वानिश्चयेऽपीति**। सन्देहात् प्रवृत्त्यभ्युपगमे तदभिधानं व्यर्थमित्याशङ्क्य परिहरति **नन्विति**। अस्मदभिमतप्रयोजनसाधनं भवति न वेति संशयकोटिविशेषस्मृतिजननाय सार्थकमित्यत आह **विशेषस्मृतिश्चेति**। स्वापेक्षितप्रयोजनविशेषस्य सदा मनसि स्फुरणात् सन्देहकोट्युपस्थितिसंभवेन तत्साधनमिदं शास्त्रं भवति न वेति सन्देहजननोपपत्तेः व्यर्थमाद्यसूत्रे तदभिधानमिति भावः।

**चषकः**— **वचनादेव** आप्तवचनादेव॥ **अवसीयते** सूत्रे धर्मिणि प्रयोजनविशेषवैशिष्ट्यमनुमीयते। तस्य तद्व्याप्तत्वादिति भावः।

**काशी०**— तर्हि सूत्रे प्रयोजनाद्यभिधानं व्यर्थमित्याशङ्कते **यद्यपीति**। **तत्सामान्येति**। प्रयोजनत्वादिना प्रयोजनादिनिश्चय इत्यर्थः। तस्य च शाब्दस्यासंभवादाह **प्रयोजनादिमदिति**। इत्यनुमानादिति शेषः। अप्रमाणवाक्ये व्यभिचारवारणाय **आप्तेति**। न चाप्रमाणवाक्यस्याप्यर्थसंशयनिवृत्त्यादिप्रयोजनवत्त्वान्न व्यभिचार इति वाच्यम्। अनाप्तोक्तत्वशङ्कया प्रामाण्यसन्देहेऽर्थसंशयस्यापि दुर्वारत्वात्। **अभिलषितेति**। मोक्षसाधनमित्यादिज्ञानादित्यर्थः। अभिलषितपदं तु विशिष्य मोक्षादेरिष्टत्वसिद्ध्यर्थम्। इष्टतावच्छेदकतत्तद्धर्मावच्छिन्नसाधनताज्ञानस्यैव प्रवृत्तिहेतुत्वात्। वचनादेवेत्येवकारेणानुमानादिव्यवच्छेदः।

**गूढ०**— **तत्सामान्यनिश्चयः** प्रयोजनादेः सामान्यनिश्चयः। **न हीति**। तथा सति परप्रयोजनादिमत्यपि प्रवृत्तिः स्यादिति भावः। **स चेति**। प्रयोजनादिविशेषेऽभिहिते तं प्रति स्वस्याधिकारित्वे ज्ञाते प्रयोजनादौ स्वाभिमतत्वमपि ज्ञातुं शक्यमिति भावः।

**प्रदीपः**— परमतेन परिहरति **तत्रेति**। **यद्यपीति**। प्रयोजनादिमत्त्वप्रतिपत्तयस्त्वेताः तत्र तत्रोद्भाव्य निराकरिष्यन्त इति नेह प्रयोजनं प्रपञ्चेन।





**११० सु०— आप्तत्वानिश्चयेऽप्यर्थसन्देहादेव कृष्यादाविव प्रवृत्त्युपपत्तिः ।**

**ननु सन्देहः प्रयोजनाद्यवचनेऽपि साधकबाधकप्रमाणाभावे सति सुलभ एव । विशेषस्मृतिश्च तदर्थित्वविशेषाद्भविष्यति ।**

**मैवम् । यो हि यद्वचनात्प्रवर्तते स तद्वचनादेव विशेषस्मृतिमपेक्षते । न तु स्वातन्त्र्येण । न हि रोगार्तो ममेदं रोगनिवृत्तिसाधनं न वेति यत्र तत्र उच्छृङ्खलः स्वयम् उत्प्रेक्ष्य प्रवर्तते । किं नामानवधृताप्तभावस्यापि वैद्यस्यैव वचनात् । अन्यथा स्वयं प्रयोजनाभिधानमनधिगच्छन् अनर्थमप्याशङ्केत । किं निष्प्रयोजनमिदं काकदन्तपरीक्षाग्रन्थवदुत अशक्यसाधनप्रयोजनं मृतिहरहिममहीधरोत्तरसानुसिद्धसञ्जीवनीकथनवत् । उत मदनभिमतप्रयोजनमार्यावर्तवासिनं प्रति दाक्षिणात्यस्य मातुलकन्यापरिणयनप्रकारोपदेशवत् । अथवा अभिमतस्यापि प्रयोजनस्य सत्यपि लघीयस्युपायान्तरे गरीयानयमुपायः पिपासुं प्रति गीर्वाणतरङ्गिणीसमीपकूपखननोपदेशवदित्यादि । एतासु चानर्थसंभावनासु न प्रवर्तेत ।**

**न च प्रयोजनाद्यभिधानेऽप्येतासामवकाशः । लोकव्यवहारोच्छेदप्रसङ्गात् । न हि कश्चिद्वैद्यवचनादावेवमाशङ्क्य निवर्तते ।**

**तस्मादुपपन्नमुभयथाऽपि प्रयोजनाद्यभिधानमिति ।**

परि०— **अन्यथेति** । आद्यसूत्राभाव इत्यर्थः । अनर्थाशङ्कामेव व्यनक्ति **किमित्यादिना** । **गीर्वाणतरङ्गिणी** गङ्गा ॥

यादु०— **सुलभ एवेति** । तथा च सूत्रे प्रवृत्त्यर्थं प्रयोजनाद्यभिधानं व्यर्थमिति भावः । ननु सन्देहजनककोटिकस्मृतिहेतुतया तदभिधानं सार्थकमेवेत्यत आह **विशेषस्मृतिश्चेति** । कोटिस्मृतिश्चेत्यर्थः । आप्त्यनिश्चयदशायामपि प्रथमसूत्रश्रवणानन्तरं ब्रह्मज्ञानं मोक्षसाधनं न वेति जायमाने मानसे संशये विधिकोटिप्रापकेऽप्यन्यन्न संभवतीति तदर्थं सूत्रे प्रयोजनाद्यभिधानमित्यभिप्रेत्य समाधत्ते **यो हीति** । **यद्वचनात्प्रवर्तत इति** । यद्वचनश्रवणानन्तरभाविमानससंशयात्प्रवर्तत इत्यर्थः । वैद्यस्यैव वचनादित्यनन्तरमिदं रोगनिवृत्तिसाधनमिति विधिकोटिमवगम्य मानसे संशये सतीति शेषः । **अन्यथेति** । औत्प्रेक्षिककोटिस्मृत्यधीनमानससंशयेन प्रवृत्तावित्यर्थः । दाक्षिणात्यस्येति कर्तरि षष्ठी । **परिणयनं** विवाहः । **उभयथाऽपीति** । आप्तत्वनिश्चयानिश्चयपक्षयोरित्यर्थः ।





**वं०प०— अर्थसन्देहादेवेति** । घनगर्जितन्यायेन सूत्रश्रवणानन्तरमिति शेषः ॥ **स्वातन्त्र्येणेति** । औत्प्रेक्षिककोटिस्मृत्यधीनमानससंशयेनेत्यर्थः ॥ **दाक्षिणात्यस्येति** । कर्तरि षष्ठी । दाक्षिणात्यकर्तृकोपदेशवदित्यर्थः ।

**आनन्दः— तथापि** येषां नाप्तत्वनिश्चयस्तत्र कथमित्यत आह **आप्तत्वेति** । ननु कोटिस्मृतिः प्रयोजनादिवचनेन भवतीत्यत आह **विशेषस्मृतिरिति** । कोटिस्मृतिरित्यर्थः । **तदर्थित्वविशेषात्** । प्रयोजनेच्छाविशेषात् । **अन्यथेति** । उच्छृंखलः स्वयमेव उत्प्रेक्ष्य प्रवर्तते चेदित्यर्थः । अशक्ये साधनप्रयोजने यस्य तत्तथोक्तमिति । मृतिहरा या महीधरस्योत्तरस्मिन्सानुनि सिद्धा संजीवनी तत्कथनवदित्यर्थः । ननु प्रयोजनाद्यभिधानेऽप्येतासां प्रवृत्तिः स्यादेवेत्यत आह **न चेति** । **उभयथापीति** । आप्तत्वनिश्चये तदनिश्चयेऽपीत्यर्थः ।

**कं०रा०—** अनर्थाशङ्काप्रकारमेव दर्शयति **किं निष्प्रयोजनमि**त्यादिना **कूपखननोपदेशवदित्यादी**त्यन्तेन । **तस्मादिति** । आप्तवाक्यत्वेन वेषेण प्रथमसूत्रस्य प्रयोजनादिबोधकत्वे न्यायसूत्रत्वहान्यादिदोषप्रसङ्गान्नेदं सूत्रं प्रयोजनाद्युपदेशमात्रम् । किन्तु श्रुत्यवगतस्य प्रयोजनादेर्न्यायेनोपपादनार्थमित्येव वक्तव्यमित्यर्थः । एवं चोक्तं च प्रयोजनादिकं श्रोता कथं श्रद्दधीतेत्यादिशङ्कानवकाशः । न्यायेनोपपादितेऽर्थे श्रद्धावश्यंभावादिति द्रष्टव्यम् ।

**वा०र०—** तथा च सूत्रकारे आप्तत्वावधारणानन्तरं तद्वाक्ये प्रयोजनादिविशेषनिश्चयस्य सूत्रकारवचनं विनाऽयोगात्तदर्थं तद्वचनमावश्यकमेवेति प्रतिपादितं भवति । सूत्रकारे आप्तत्वावधारणशून्यानां तु कथं तद्वचनात्प्रयोजनादिनिश्चय इत्यतस्तेषां तद्वचनात्तन्निश्चयाभावेऽपि सन्देहसंभवात्तस्यैव च कृष्यादाविव प्रवर्तकत्वोपपत्तेर्नानुपपत्तिरित्याह **आप्तत्वानिश्चयेऽपीति** । **अर्थसन्देहादिति** । अर्थ्यत इत्यर्थः प्रयोजनं तत्सन्देहादित्यर्थः । आप्तत्वावधारणाभावे सूत्रकारवचनं प्रयोजनादिसन्देहरूपज्ञानजनकं सन्देहश्च प्रवृत्तिहेतुरित्युक्ते बाधकमाशङ्कते **ननु सन्देह इति** । ब्रह्मज्ञानं मोक्षसाधनत्वाद्युपेतं न वेति सन्देहः । **प्रयोजनादीति** । सूत्रकारेणेति शेषः । सूत्रकारीयप्रयोजनादिवचनाभावेऽपीति यावत् । ततश्च तदभावेऽपि भवतः सन्देहस्य प्रयोजनाद्यभिधानाकार्यत्वात्तदभिधानं सन्देहार्थं न कार्यं, व्यर्थतापत्तेरिति भावः । ननु तदभिधानस्य न व्यर्थता कोटिस्मृतेस्तदभिधानसाध्यत्वेन तद्द्वारा संशयं प्रति प्रयोजकतया तदभावे संशयस्यायोगादित्यत आह **विशेषेति** । कोटिस्मृतिरित्यर्थः । **तदर्थित्वविशेषात्** प्रयोजनेच्छाविशेषात् । प्रयोजनविशेषेच्छावत्त्वादित्यर्थः । **यो यद्वचनादिति** । ननु साधकाद्यभावे सत्यर्थित्वविशेषात्कोटिस्मृतौ च सत्यां संशयस्य प्रयोजनाद्यभिधानापेक्षोत्पत्तिर्नास्तीत्याक्षिप्ते यस्य यद्वचनात्प्रवृत्तिः तस्य तद्वचनादेव विशेषस्मृतिर्नार्थित्वविशेषादिति प्रतिपादनमसङ्गतम् । प्रवृत्त्यर्थं परेण वाक्योपयोगानङ्गीकारात् । तत्कथमेतदिति चेन्मैवम् । नात्र यो यद्वचनादिति यथाश्रुतमेव व्याख्यायते । अपि तु यो यद्वचनादेव विशेषस्मृतिमान् स तद्वचनादेव संशयं लब्ध्वा प्रवर्तत इति व्याख्यायते । न चार्थित्वविशेषादेव कोटिस्मृतेरेतदपि नास्तीत्युक्तमिति वाच्यम् । वक्ष्यमाणरीत्या वैद्यवचनदृष्टान्तेन प्रयोजनाभिधानाधिगमाभावेऽपि सन्देहाङ्गीकारेऽनर्थशङ्काया अपि प्रसङ्गेन चात्रत्यविशेषस्मृतेर्वचनसाध्यताया एव





स्वीकार्यतया अर्थित्वविशेषाधीनत्वाभावात् । तथा चान्यत्रास्तु यथा तथा । प्रकृतकोटिस्मृतेर्वचनसाध्यतया संशयस्य वचनाभावेऽभावसिद्ध्या तत एव सन्देहपूर्वकप्रवृत्त्यसिद्धेः प्रवृत्तिहेतुसंशयहेतुकोटिस्मृत्यर्थं प्रयोजनाभिधानमर्थवदित्यभिप्रायेणैतद्ग्रन्थप्रवृत्त्या दोषाभावात् । एतेनात्यनिश्चयदशायामपि प्रथमसूत्रश्रवणानन्तरं ब्रह्मज्ञानं मोक्षसाधनं न वेति जायमाने मानससंशये विधिकोटिप्रापकमन्यन्न संभवतीति तदर्थं सूत्रे प्रयोजनाद्यभिधानमित्यभिप्रेत्य समाधत्त इत्यन्यथाख्यातिस्थावतारोऽपि निरस्तः । साधकाद्यभावादिनैव संशयोपपत्तेर्वचनानर्थक्यमित्याक्षिपन्तं प्रति वचनश्रवणानन्तरं जायमानत्वस्य संशये सिद्धवत्कारायोगात् । न हि परेण सूत्रश्रवणसमनन्तरभावितां संशयस्याङ्गीकृत्य तत्र कारणगवेषणायां साधकाभावादिकं कारणम् । न तु तत्संशयपूर्वभाव्यपि प्रयोजनाद्यभिधानमिति शङ्कितम् । येन श्रवणसमनन्तरभाविसंशये इत्याद्युक्तिः सङ्गता स्यात् । किञ्च मानससंशयेऽपि पुरुषान्तरवचनादिनैव विधिकोटिप्राप्तेः संभवात्तद्वचनादेवेत्ययुक्तमित्यलम् । **न तु स्वातन्त्र्येणेति** । प्रवर्तत इति वर्तते । यद्वाक्यात्कोटिस्मृतिमान् तद्वाक्यं विनैव न प्रवर्तत इत्यर्थः । स्वातन्त्र्येण यो विशेषस्मृतिमान् स न तद्वाक्यात्प्रवर्तत इत्यर्थ इत्यप्याहुः । कुत्रेदमुपलब्धम् । यद्यद्वचनादेव विशेषस्मृतिमत्त्वं तस्मादेव संशयमासाद्य प्रवर्तत इतीत्यतस्तदुभयं दृष्टान्ते दर्शयति **न हि रोगार्त इति** । स्वयमुत्प्रेक्षायाः कोट्यन्तरे आवश्यकत्वादुक्तम् **उच्छृङ्खल इति** । विधिकोटौ वाक्यप्रापितायां तदभावकोटावपि प्रतियोगिप्रापकमेव नियामकम् । न तु नियामकशून्यस्यैवोत्प्रेक्षा । प्रकृते चैककोटेरपि वाक्येन प्रापणाभावे नियामकरूपशृङ्खलाशून्यत्वमायातीति नियामकशून्यस्यैवोत्प्रेक्षेत्यर्थः । **किं नामेति** । अत्र किं नाम वैद्यस्यैव वचनात्प्रवर्तत इत्यस्य तद्वचनाद्विशेषस्मृतिं लब्ध्वा संशयं च प्राप्य प्रवर्तत इत्यर्थपर्यवसानात्तद्वाक्यात्संशयप्राप्तौ हेत्वभिधानमनवगताप्तभावस्यापीति । आप्तत्वावधारणे तु संशयप्रसक्तिरेव नेति भावः । वैद्यवचनात्प्रवृत्तिस्थले एवं दर्शनेऽपि प्रकृते कोटिस्मृतेरर्थितानिमित्तत्वस्यैवोपपत्त्या किमिति वचनसापेक्षत्वम् । येन वचनप्रवर्तकतासिद्धिरित्यतः प्रकृते विशेषस्मृतेः प्रयोजनादिवचनानपेक्षत्वे बाधकमाह **अन्यथेति** । वर्धमाने तु यो यद्वचनादितीति प्रतीकमुपादाय यद्यपि सामान्यतो औषधमात्रोपदेशेऽप्यात्मानं प्रत्युपदेशपर्यालोचनयैव रोगार्तस्य विशेषस्मृत्युत्पत्तौ संशयेनाप्रवृत्तिदर्शनादन्यवचनादपि विशेषस्मृत्या सन्देहाच्च बहुशः प्रवृत्तिदर्शनान्नैतद्युक्तम् । तथापि यो यद्वाक्यात्प्रवर्तते तस्य ततो विशेषस्मृतेः संशयविशेषस्यानुभवसिद्धस्य प्रवृत्तिविशेषहेतुतायाः अनुभवसिद्धत्वात् तत एव विशेषस्मृतिर्युक्ता । यद्वोपायान्तरसद्भावः नोपेये दूषणमित्येवंपरोऽयं ग्रन्थ इति भाव इत्युक्तम् । तत्तु यथाश्रुतार्थानुसारेणेति स्पष्टम् । वाक्यानर्थक्यवादिनं प्रति वस्तुतो यत्र वाक्यप्रवृत्त्युत्तरकालीनविशेषस्मृतिसापेक्षसंशयविशेषात्प्रवृत्तिविशेषोऽनुभवसिद्धस्तत्र वाक्यमावश्यकमिति प्रतिपादनस्य कथं सङ्गतिः । तथात्वे वा वाक्यादपि प्रवृत्तेः क्वचिदनुभवसिद्धत्वात्प्रकृतेऽपि तदङ्गीकारोऽनुभवादेवेति वाच्यतया तद्वचनादेव विशेषस्मृतिरिति प्रतिपादनानर्थक्यापात इत्याभाति । **अशक्येत्यादि** । न शक्यं साधनं यस्येत्यशक्यसाधनम् । तथाविधं प्रयोजनं यस्येति विग्रहः । **यत्** प्रयोजनम् । विद्यमानमपि साधयितुं न शक्यत इति यावत् । **मृतिहरेति** । मृतिहरा च सा हिमाचलस्योत्तरस्मिन् सानुनि विद्यमाना सिद्धा च सा सञ्जीविनी च तत्कथनवदित्यर्थः । अयमुपाय इत्यत्रायमित्यस्योपदिश्यमान इत्यर्थः । प्रयोजनाद्यभिधाने त्वेतासामवकाशाभावात्तदभिधानं सार्थकमित्याह **न च प्रयोजनादीति** । कुतोऽवकाशो नेत्यत





आह **लोकव्यवहारेति**। यद्यपि सर्वस्य सर्वत्र सर्वदानर्थक्यशङ्काविरहान्नैतदापादनं युक्तम्। तथापि क्वचित्सा स्यादेवेति भावः। उच्छेदमेवोपपादयति **न हीति**। **उभयथापीति**। आप्तत्वनिश्चयपक्षे तदनिश्चयपक्षे चेत्यर्थः।

**श्रीनिधि०**— 'अश्रद्दधानश्च कथं प्रवर्तेते'त्यस्य समाधानमाह **आप्तत्वानिश्चयेऽपीति**। **विशेषस्मृतिरिति**। काचित्स्मृतिरित्यर्थः। **यत्र तत्र** यत्र कुत्र। उच्छृङ्खलः निगडशून्यः। गजो निगडरहितः यथा स्वेच्छानुसारेण प्रवर्तते तथेति भावः। **आर्यावर्तः** विन्ध्यहिमवतोर्मध्यम्। **परिणयनप्रकारः** विवाहप्रकारः।

**स०व्र०**— **यो हीति**। विवक्षितफलालाभप्रसङ्गान्नोत्प्रेक्षामात्रेण फलविशेषप्रतिपत्तिरिति भावः। विशेषवचनाभावे न केवलं विवक्षितफलालाभः किन्तु विपरीतफलमप्यापद्येतेत्याह **अन्यथेति**। सति तु विशेषवचने न विपरीतफलाशङ्का विवक्षितार्थलाभादित्याह **न चेति**।

**कुण्डल०**— **अर्थसन्देहेऽपीति**। प्रयोजनसन्देहेऽपीत्यर्थः। ननु प्रयोजनसन्देहात्प्रवृत्त्यङ्गीकारे सूत्रे तदभिधानं व्यर्थमेवेति शङ्कते **नन्विति**। नन्वत्र त्वदभिमतप्रयोजनमस्ति न वेति सन्देहविषयस्य प्रयोजनविलक्षणकोटिविशेषोपस्थित्यर्थं वचनमावश्यकमित्यत आह **विशेषस्मृतिश्चेति**। **तदर्थत्वेति**। प्रयोजनविशेषार्थत्वाद्भविष्यतीत्यर्थः। सन्देहेन प्रवृत्तावपि वचनादेव कोटिविशेषस्मृतिरपेक्षिता न तु स्वातन्त्र्येणेति सदृष्टान्तमुपपादयति **यो हीति**। **न मदभिमतप्रयोजनमिति**। "मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेदि"ति स्मृतेरापाततः प्रतीतार्थमङ्गीकृत्य मातुलसुतापरिणयनं त्यक्तवतः आर्यावर्तनिवासिनः पुरुषस्य दाक्षिणात्यानां मातुलसुतापरिणयनप्रकारोपदेशस्यानभिमतप्रयोजनत्वादित्यर्थः। **उभयथापीति**। सूत्रकारस्याप्तभावनिश्चयलक्षणपक्षद्वयेऽपीत्यर्थः। **आगमतयेति**। सूत्रस्य स्वनिर्णयेन वेदवाक्यादिसाधारणागमत्वापत्त्या वेदार्थनिर्णायकन्यायग्रथनात्मकसूत्रत्वहानिः स्यादित्यर्थः। तद्धेतोरेवास्तु तद्धेतुत्वं मध्ये किं तेनेति न्यायेनेति भावः। **तस्मादिति**। सूत्रत्वहानिप्रसङ्गादित्यर्थः।

**विठ्ठ०**— सत्यमन्यतोऽपि संशयकोट्युपस्थितिरिति तथापि यत्र वचनात् प्रवृत्तिः तत्र वचनादेव विशेषस्मृतिरपेक्षितेति नियमः न चान्यतः शास्त्रप्रवृत्तिर्युज्यते अतः प्रवृत्तिहेतुसन्देहजनकतया युक्तमाद्यसूत्रे प्रयोजनाभिधानमिति समाधत्ते **मैवं यो हीति**। **अन्यथेति**। प्रयोजनवचनमलभमानः स्वयम् औत्प्रेक्षिककोटिस्मृत्या संशयेन प्रवृत्तावित्यर्थः। अनर्थशङ्काप्रकारमाह **किं निष्प्रयोजनमिति**। ब्रह्ममीमांसाशास्त्रमिदं वर्तते, अस्य प्रयोजनं च नोक्तम्, अतः इदं किं निष्प्रयोजनं इत्याद्येतासु अनर्थसंभावनासु सतीषु न प्रवर्तेत। अतः प्रयोजनादिकमवश्यं वक्तव्यमित्यर्थः। **परिणयनं** विवाहः। **उभयथापीति**। सूत्रकारस्याप्तत्वनिश्चयपक्षे अनिश्चयपक्षेऽपीत्यर्थः।

**चषकः**— **सुलभ एवेति**। प्रतियोगिमता तदभाववत्तानिश्चयाभावसाधारणधर्मदर्शनादिघटितसामग्रीमात्रनिष्पाद्यत्वात्सन्देहस्येति भावः। सन्देहजनककोटिद्वयोपस्थित्यौपयिकतया तदभिधानावश्यकतेत्यत आह





**विशेषेति** । फलविशेषेच्छानिबन्धनैककोटिस्मृतिर्न तदभिधाननिर्वाह्येति भावः । आप्तत्वानवधृतिदशायां प्रथमसूत्रश्रवणाव्यवहितोत्तरक्षणावच्छेदेनोत्पद्यमानब्रह्मज्ञानधर्मिकमुक्तिसाधनत्वतदभावकोटिक-सन्देहविषयतापन्नविधिकोट्युपस्थितिजनकस्यान्यस्य दुर्मिलतया सौत्रं तदभिधानमेव तादृशमाश्रयणीयमित्यनुसन्दधानः समादधाति **यो हीति** ॥ **यद्वचनात्प्रवर्तत इति** । यद्वचनश्रवणोत्पद्यमानसन्देहाधीनप्रवृत्तिमान् भवतीत्यर्थः ॥ **तद्वचनादेव विशेषस्मृतिम्** । तत्प्रणीतवाक्यघटकपदश्रवणाव्यवहितोत्तरक्षणजनितकोटिगोचरस्मृतिम् ॥ **स्वातन्त्र्येण** । तादृशपदश्रवणादतिरिच्यमानेन हेतुना ॥ **उत्प्रेक्ष्य** । संशय्य ॥ **वैद्यस्यैव वचनादिति** । तादृग्वचनश्रवणोत्तरक्षणभाविस्मृतिविषयीभूतरोगनिवृत्तिसाधनत्वरूपविधिकोटिं कोट्यन्तरं चावगाहमानो यः सन्देहस्तदधीनप्रवृत्तिमान् भवतीत्यर्थः ॥ **अन्यथा** । स्वाच्छन्द्यायत्तकोटिस्मृतिनिबन्धनसन्देहाधीनप्रवृत्त्युपगमे ॥ **उभयथाऽपीति** । आप्तत्वावधृत्यनवधृतिकल्पयोरित्यर्थः ॥ **इतीति** आहुरित्यनेनान्वयि ।

**काशी०**— नन्वेवमनवधृतसूत्रकाराप्तभावस्य कथं प्रवृत्तिरत आह **आप्तत्वेति** । अर्थसन्देहात् मोक्षादिसाधनत्वसन्देहात् । तर्हि सूत्रे तदभिधानं व्यर्थमित्याशङ्कते **नन्विति** । **साधकेति** । एककोटिमात्रस्येत्यादिः । ननु सन्देहजनकविधिकोट्युपस्थित्यर्थमेव तद्वचनमस्त्वत आह **विशेषेति** । मोक्षसाधनत्वादिकोटिस्मृतिश्चेत्यर्थः । **तदर्थित्वविशेषात्** मोक्षादिविषयकोत्कटेच्छावत्त्वात् । तस्मिन्नुत्कटेच्छावतस्तत्साधनेच्छायास्तत्साधनत्वज्ञानाधीनत्वादिति भावः । तथा च शास्त्रे वस्तुत्वादिसमानधर्मदर्शनाद्विशेषादर्शनाच्च मोक्षसाधनत्वादिसन्देहः सुलभ इति शङ्काशयः । किमेतावता । प्रथमसूत्रमेव व्यर्थमिति विवक्षितं किंवा तत्र प्रयोजनाद्यभिधानम् । नाद्यः । विधिमन्तरेणालौकिकार्थे प्रवृत्त्ययोगात् । नान्त्यः । तद्वचनजन्यकर्तव्यताज्ञानाधीनप्रवृत्तिं प्रति तद्वचनाधीनस्वेष्टसाधनताज्ञानस्यैव हेतुतया तस्य चाप्तत्वनिश्चयस्थले शाब्दनिश्चयरूपस्य तत्सन्देहस्थले च वचनजन्यविधिकोटिस्मृत्यधीनमानससंशयरूपस्यावश्यकत्वात् । अन्यथा प्रवृत्त्यनुपपत्तेरिति सूत्रे प्रयोजनाद्युक्तिरावश्यकीत्याशयेन समाधत्ते **मैवमिति** । विशेषस्मृतिं स्वेष्टसाधनत्वस्मृतिम् । स्वातन्त्र्येण तद्वचनमन्तरेण । नन्विष्टसाधनताज्ञानसामान्यस्यैव प्रवृत्तिहेतुत्वमस्तु न तूक्तविशेषहेतुत्वमित्यतोऽन्वयव्यतिरेकाभ्यां तदुपपादयति **न हीति** । रोगार्त औषधं भक्षयेत्यादिवाक्यं श्रुत्वेति शेषः । यत्र तत्र यत्किञ्चिदौषधभक्षणे । **उत्प्रेक्ष्य** सन्दिह्य । अनेन व्यतिरेको दर्शितः । अन्वयमाह **अनवधृतेति** । **वचनात्** इदमेतद्रोगनिवृत्तिसाधनमित्यादिवचनात् । तद्वचनजन्यकोटिस्मृत्यधीनसन्देहादिति यावत् । उक्तविशेषहेतुत्वानङ्गीकारे बाधकमप्याह **अन्यथेति** । स्वयमनर्थमप्याशङ्केतेत्यन्वयः । अनर्थशङ्काप्रकारं दर्शयति **किमिति** । निष्प्रयोजनमित्यादिना । एकैककोटिकसंशया विवक्षिताः । तेन निष्प्रयोजनत्वतदभावकोटिकस्य सप्रयोजनत्वसंशयानतिभिन्नतया प्रवृत्त्यविरोधित्वेऽपि न क्षतिः । यद्वा । निष्प्रयोजनत्वाद्युत्कटकोटिकसंभावना एवात्र विवक्षिताः । अत एवैतासु संभावनास्विति वक्ष्यति । न च विरुद्धानेकसंभावनानां यौगपद्यायोगात्तदुक्तिविरोधः । विवक्षाभेदेनाविरोधात् । तथा हि । शास्त्रे यस्य सामान्यतोऽपि प्रयोजनवत्त्वनिश्चयो नास्ति तस्य प्रयोजनाद्यनुक्त्या निष्प्रयोजनत्वसंभावना । तन्निश्चयवतोऽशक्यसाधनप्रयोजनत्वसंभावना । शक्यसाधनप्रयोजनत्वनिश्चयवतः स्वाभिलषितप्रयोजनत्वाभावसंभावना । तादृशप्रयोजननिश्चयवतो





गरीयस्त्वसंभावना विवक्षितेति न कश्चिद्दोषः । नन्वेतावता प्रकृते किं बाधकमुक्तमित्यत आह **एतासु चेति** । तथा च वचनाधीनप्रवृत्तिं प्रति वचनाधीनप्रयोजनज्ञानस्य हेतुत्वानङ्गीकारे निष्प्रयोजनत्वादिसंभावनायां प्रवृत्त्यापत्तिरिति भावः । नन्वेवमुक्तसंभावनानां प्रवृत्तिप्रतिबन्धकत्वमुपगम्यतां न तु वचनाधीनप्रयोजनादिज्ञानस्य तद्धेतुत्वम् । अन्यथा प्रयोजनाद्यभिधानेऽपि तादृशसंभावनावतः प्रवृत्त्यापत्तेरित्यत आह **न त्विति** । अयं भावः । विरुद्धकोटिद्वयभासकसाम्ये सति संशयः । एककोटिभासकाधिक्ये तु संभावनैव भवति । तथा च प्रयोजनाद्यभिधाने विधिकोटिभासकाधिक्येन सप्रयोजनत्वादिसंभावनायां निष्प्रयोजनत्वादिसंभावनाऽनवकाशान्नोक्तदोषः । न च वचनाधीनप्रयोजनादिज्ञानस्य हेतुत्वं वा निष्प्रयोजनत्वादिसंभावनायाः प्रतिबन्धकत्वं वा कल्प्यमिति विनिगमना-विरह इति वाच्यम् । अनेकविधानर्थसंभावनानां प्रतिबन्धकत्वापेक्षयोक्तप्रयोजनविशेषवत्ताज्ञानस्य प्रवृत्तिहेतुत्वे लाघवात् । अस्तु वा तासां प्रतिबन्धकत्वम् । तथाऽपि तन्निवर्तकतयैव प्रयोजनाद्यभिधानसार्थक्यमिति । ननु प्रयोजनाद्यभिधानेऽप्याहार्यनिष्प्रयोजनत्वादिसंभावनासंभवात्प्रवृत्त्यनुपपत्तिरत आह **लोकेति** । आहार्यसंभावनाया न विरोधित्वमिति भावः । तदेवोपपादयति **न हीति** । एवं निष्प्रयोजनमित्याद्युक्तप्रकारेण निवर्तते न प्रवर्तते । तस्मात् वचनाधीनप्रयोजनादिज्ञानस्य तदधीनप्रवृत्तिहेतुत्वात् । **उभयथाऽपीति** । आप्तिनिश्चयसत्त्वे प्रयोजन-निश्चायकत्वेन तदसत्त्वे विधिकोटिस्मारकत्वेन चेत्यर्थः ।

**गूढ०**— तथापि येषां नाप्तत्वनिश्चयस्तत्र कथमित्यत आह **आप्तत्वेति** । ननु कोटिस्मृतिः प्रयोजनादिवचनेन भवतीत्यत आह **विशेषस्मृतिरिति** । कोटिस्मृतिरित्यर्थः । **तदर्थित्वविशेषात्** । प्रयोजनेच्छा-विशेषात् । **अन्यथेति** । उच्छृंखलः स्वयमेवोत्प्रेक्ष्य प्रवर्तते चेदित्यर्थः । अशक्ये साधनप्रयोजने यस्य तत्तथोक्तमिति । मृतिहरा हिममहीधरस्योत्तरस्मिन् सानुनि सिद्धा या सञ्जीविनी तत्कथनवदित्यर्थः । ननु प्रयोजनाद्यभिधानेऽप्येतासां प्रवृत्तिः स्यादेवेत्यत आह **न चेति** । **उभयथापीति** । आप्तत्वनिश्चये तदनिश्चयेऽपीत्यर्थः । ननु मास्तु फलविषयकानु-भवयोः प्रवृत्तिशब्दवाच्यत्वम् । तथापि साधनविषयकानुभवस्य तदस्त्वित्यत आह **न चेति** ।

**१११ सु०— तदेतदनुपपन्नम् । तथा हि । यदि तावदाप्तवाक्यतया सूत्रमिदं प्रयोजनादे-र्निश्चायकं स्यात्तदा आगमतया न्यायसूत्रत्वहानिः ।**

**किञ्चाप्तत्वं सूत्रकृतो येन वेदादिना प्रमाणेनावगन्तव्यं तेनैव प्रयोजनाद्यभिसंबन्धोऽपि शास्त्रस्यावगम्यत इति व्यर्थं तदभिधानमापद्येत ।**

**'आप्तत्वानिश्चयेऽप्यर्थसन्देहात् प्रवृत्तिरि'ति चातिस्थवीयः । न हि कश्चित् प्रयोजना-दिसन्देहे (सति) अतिमहायाससाध्ये प्रवर्तते प्रागुक्तानर्थपरम्पराश्च कथं न शङ्केत ।**





**परि०— येनेति** । 'पाराशर्यश्च कपिलो वैकुण्ठो ऋषभस्तथा । यज्ञो धन्वन्तरिश्चैव स्त्रीरूपस्तापसो मनुः । नारायणो हरिः कृष्णः उपेन्द्रः सर्व एव च । एवमाद्या हरेस्साक्षात् प्रादुर्भावाः प्रकीर्तिता' इति बृहद्भाष्योक्तपैङ्गिश्रुत्यादिरूपवेदेन । 'नारायणाद्विनिष्पन्नम्' इत्यादिप्रागुक्तस्मृत्या चेत्यर्थः ॥ **तेनैवेति** । 'गुणोत्कर्षे देवदेवस्य विष्णोः' । 'तमेवं विद्वानमृत इह भवति' इत्यादिना तज्जातीयवाक्येनैवेत्यर्थः ॥ **अतिस्थवीयः** । अतिस्थूलतरं समाधानमित्यर्थः ।

**यादु०— तदेतदिति** । परिहारद्वयमपि इत्यर्थः ॥

**आनन्दः**— नन्वागमतया बोधकत्वेऽपि न्यायसूचकत्वात्सूत्रत्वं स्यादेवेत्यत आह **किञ्चेति** । ननु कृष्यादौ सन्देहादपि प्रवर्तत इत्यत उक्तम् **अतिमहायाससाध्य इति** । कृष्यादेश्चाल्पायाससाध्यत्वादिति भावः । अल्पायाससाध्ये चरकादौ कथञ्चिदनिश्चयेन प्रवृत्तावपि महायाससाध्ये न तथा प्रवृत्तिरिति अनर्थपरम्पराशङ्का स्यादेवेत्यत आह **प्रागुक्तेति** ।

**कं०रा०**— नन्वस्य सूत्रस्याप्तवाक्यतया बोधकत्वाभावे भाष्यकारीयं सूत्रकाराप्तत्वव्युत्पादनमफलं स्यादित्यत आह **आप्तत्वमिति** ।

**वा०र०— तदेतदनुपपन्नम्** इत्यारभ्य **न शक्यन्त** इत्यन्तेन तद्दूषणप्रकारप्रदर्शनम् । कुतोऽस्य न्यायसूत्रत्वमित्याशङ्कोत्थापनेन न्यायसूत्रत्वाङ्गीकारेत्युक्तत्वाच्च न्यायसूत्रत्वाङ्गीकारेण स्वाभिप्रेतं परिहारं च दर्शयतीति सूचनाय तथानुक्तिः । **अतिस्थवीयः** । अतिशयेन स्थूलम् । अत्यप्रामाणिकमित्यर्थः (अत्यन्ताविमर्श-पूर्वकम्) । कृष्यादाविवेति प्रागुक्तमन्यथयितुं महायाससाध्य इत्युक्तम् । **कथं न शङ्केत इति** । न चानवधृताप्तभाववत्सूत्रकारवचनेऽनर्थपरम्पराशङ्कया ततो निवृत्तौ तादृशवैद्यवचनेऽपि तच्छङ्कया ततो निवृत्त्यापत्त्या लोकव्यवहारोच्छेदः स्यादिति वाच्यम् । अल्पायाससाध्यार्थबोधके अनवधृताप्तभाववैद्यवचने उक्तशङ्कानवकाशेन निवृत्त्यभावेऽपि महायाससाध्यार्थबोधके तस्मिन् प्रागुक्तानर्थपरम्पराशङ्कया निवृत्तेरिष्टत्वेन तदुच्छेदाभावादिति भावः ।

**स०व्र०**— परमतमपाकरोति **तदेतदिति** । आप्तवाक्यस्यागमत्वाद्युत्त्यनुसन्धानात्मकतर्कत्वव्याघात इति भावः । प्रागुक्तानर्थपरम्पराशङ्कया निवृत्तौ अनवधृताप्तभावे वैद्यवचनेऽप्यनर्थपरम्पराशङ्कया निवृत्तिः स्यात्तथा च सकललोकव्यवहारोच्छेद इति चेन्न । अल्पायाससाध्येऽनवधृताप्तभाववैद्यवचनेऽनर्थपरम्पराशङ्कया अनिवृत्तावपि महायाससाध्ये प्रागुक्तानर्थपरम्पराशङ्कया निवृत्तेरिष्टत्वेन सकललोकव्यवहारोच्छेदासंभवादिति भावः ॥





**विठ्ठ०— न्यायसूत्रत्वहानिरिति** । आप्तवाक्यत्वेनैवार्थनिश्चयोपपत्तौ उपक्रमादिन्यायोपन्यासायोगः स्यादिति भावः। **तेनैव प्रयोजनाद्यभिसंबन्धोऽपीति** । सूत्रकारस्याप्तताप्रतिपादकेनैव सङ्कीर्णबुद्धयो देवा इत्यादिनैवेत्यर्थः। **अतिमहायासेति** । कृष्यादेरल्पायाससाध्यत्वात् ऐहिकत्वाच्च सन्देहेनापि प्रवृत्त्युपपत्तिः इति भावः।

**चषकः— तदेतदिति** । कल्पद्वयदिशा समाधानमित्यर्थः । **आगमतया** आप्तवाक्यतया । **न्यायसूत्रत्वहानिः** । न्यायावबोधकपदघटितसूत्रत्वहानिः ।

**काशी०— आप्तवाक्यतयेति** सावधारणम्। अत एवोपदेशमात्रमिति वक्ष्यति। तथा चाप्तवाक्यतयैव न तु न्यायसमर्पकत्वेनेत्यर्थः । तेनाप्तवाक्यतयाऽपि प्रयोजनादिनिश्चायकत्वमविरुद्धम् । **आगमतया** आगममात्रतया । प्रयोजनाद्यनुमित्यजनकतयेति यावत्। **न्यायेति** । श्रौतार्थनिश्चायकन्यायव्युत्पादकसूत्रत्वानुपपत्तिरित्यर्थः। तथा च मीमांसाव्यवहारानुपपत्तिरिति भावः । ननु प्रयोजनाद्यंशे सूत्रस्याप्तवाक्यत्वेऽपि जिज्ञासाकर्तव्यत्वांशे प्रयोजनादिमत्त्वरूपन्यायव्युत्पादकत्वान्न न्यायसूत्रत्वानुपपत्तिः । न हि सूत्राणि सर्वांशे न्यायव्युत्पादकानि, न्यायांशे न्यायान्तराव्युत्पादकत्वादिति चेन्न । विप्रतिपन्नयावदंशे न्यायव्युत्पादकत्वानुपपत्तेर्विवक्षितत्वात् । प्रयोजनाद्यंशस्यापि विप्रतिपन्नत्वस्य वक्ष्यमाणत्वात्। यत्किञ्चिदंशे न्यायव्युत्पादकत्वेन मीमांसात्वसंभवेऽपि विश्वतोमुखत्वघटितमुख्यसूत्रत्वानुपपत्तेर्दुर्वारत्वात्। अत एव सूत्रपदप्रयोगः। अन्यथा न्यायशास्त्रत्वहानिरित्यवक्ष्यत्। एतत्पक्षे ननु ब्रह्मज्ञानस्येत्यादिना शङ्कितदोषोऽपि दुर्वार इत्याह **किञ्चेति** । **येनेति** । 'कृष्णव्यासौ रामकृष्णौ च रामकपिलौ यज्ञप्रमुखाः स्वयं स वेदान्तकृत्स ह्येव युक्तिसूत्रकृदि'ति गीताभाष्याद्युदाहृतेन वेदेन 'वेदान्तकृद्वेदविदेव चाहं', 'पुनस्तस्यार्थवित्तये', 'चकार ब्रह्मसूत्राणी'त्यादिस्मृतिवचनेन चेत्यर्थः। **व्यर्थमिति** । न च येन वाक्येन सूत्रकारस्याप्तत्वसिद्धिर्न तेन ब्रह्मज्ञानस्य मोक्षहेतुत्वं प्रतिपाद्यते। वाक्यान्तरेण तत्प्रतिपादनेऽपि तदविदुषां तद्बोधाय सूत्रे तदभिधानं सार्थकमिति वाच्यम् । तादृशवेदाध्ययनहीनस्य शास्त्रेऽधिकाराभावादिति भावः । **अतिस्थवीयः** अतिस्थूलतरम् । अत्यन्ताविमर्शपूर्वकमिति यावत् । तदेवोपपादयति **न हीति** । **कथं न शङ्केतेति** । प्रयोजनाभिधानेऽप्यतिमहायाससाध्यत्वादेवासाध्यसाधनत्वादिसंभावना दुर्वारेति भावः ।

**गूढ०—** नन्वागमतया बोधकत्वेऽपि न्यायसूचकत्वात्सूत्रत्वं स्यादेवेत्यत आह **किञ्चेति** । **तेनेति** । विवक्षितार्थतत्त्वज्ञानादिरूपोक्तविधामित्त्वं यस्यास्ति स परप्रयोजनादिमदेव वदेत् नान्यथेत्युक्तविधानत्वगमकप्रमाणेनैव प्रयोजनादिसंबन्धः सिद्ध्यतीति भावः। ननु कृष्यादौ सन्देहादपि प्रवर्तत इत्यत उक्तम् **अतिमहायाससाध्य इति** । कृष्यादेश्चाल्पायाससाध्यत्वादिति भावः। अल्पायाससाध्ये कृष्यादौ कथञ्चिदनिश्चयेन प्रवृत्तावपि महायाससाध्ये न तथा प्रवृत्तिरिति **अनर्थपरम्पराशङ्का** स्यादेवेत्याह **प्रागुक्तेति** ।

**प्रदीपः—** प्रसिद्धपरत्वस्याप्रसिद्धकल्पनाया ज्यायस्त्वादोङ्कारब्रह्मशब्दयोः प्रसिद्धजीवपरत्वोपपत्तेः तस्य अन्यतः सिद्धत्वात्कथमेताभ्यां विषयसिद्धिः कथं वा जीवादिव्यावृत्तिरित्यत आह **तेनेति** ।

**११२ सु०— तस्मान्नेदं प्रयोजनाद्युपदेशमात्रं किन्तु श्रौतस्य प्रयोजनादेः न्यायेनोपपादनार्थमित्येव परिहारः ।**

**'आप्तत्वं तु न्यायस्योपोद्बलकमात्रमि'ति भाष्यकारीयं तद्व्युत्पादनमपि नानर्थकम् ।**

**अत एवास्य सूत्रस्य न शास्त्रबहिर्भावः । अध्ययनविध्यादिवदस्याप्यतएवारम्भणीयत्वसिद्धेः नानवस्थादिदोषोऽपीति ।**

**परि०— श्रौतस्येति** । तद्विजिज्ञासस्वेत्यत्र विशब्दतच्छब्दाभ्यां यस्य प्रसादादित्यादौ मुच्यत इत्यादिशब्दैः श्रुतस्येत्यर्थः ।। **न्यायेनेति** । पूर्वपक्षिणा वक्ष्यमाणदिशा प्रयोजनाद्यभावशङ्कायां प्रयोजनस्य कर्माद्यजन्यत्वरूपन्यायेन । विषयब्रह्मणोः जीवाद्भिन्नत्वन्यायेनाधिकारिणः शूद्रादिव्यावृत्तत्वोपपादकाध्ययनादिमत्त्वरूपन्यायेनोपपादनार्थमित्यर्थः ।। **तद्व्युत्पादनमपीति** । प्रादुर्भूत इत्यादिना कृतमिति भावः ।। **अत एवेति** । न्यायव्युत्पादकत्वादेव इत्यर्थः । प्रेक्षावतां शास्त्रारम्भसिद्धये यथैतत्सूत्रं तथैतदारम्भार्थमस्य प्रयोजनाद्यभिसंबन्धबोधकस्यान्यस्योक्तावनवस्थाऽऽत्माश्रयादिर्वा स्यादित्यत आह **अध्ययनेति** । 'स्वाध्यायोऽध्येतव्य' इति वाक्यं स्वाध्यायमात्रस्याध्ययनं विदधदात्मनोऽपि तद्विधत्ते तद्वदित्यर्थः । आदिपदेन 'सर्वे वेदा यत्पदमामनन्ति' 'वाचा विरूप नित्यया' इत्यादेर्ग्रहः ।। **अत एवेति** । एतत्सूत्रादेवेत्यर्थः । न चैकस्य द्वैरूप्यविरोधः ।। अन्यसाहित्यकैवल्यरूपावच्छेदकधर्माभ्यामुपपत्तेरिति भावः । एतेन शास्त्रे प्रवृत्तिहेतुप्रयोजनाद्यभिसंबन्धज्ञानायाद्यसूत्रं चेत्तत्र प्रवृत्त्यर्थं तस्य प्रयोजनाद्यभिसंबन्धबोधकस्य अन्यस्योक्तावनवस्थितिरिति निरस्तम् । स्वेनैव स्वस्यापि शास्त्रत्वेन रूपेण तद्बोधनादिति ।

**गु०दी०— अत एव आरम्भसिद्धेः** इत्यत्र श्रद्धापूर्वकारम्भसिद्धेरित्यर्थः ।

**यादु०— इत्येव परिहार इति** । अनेन ब्रह्मज्ञानस्य मोक्षहेतुता शास्त्रप्रवृत्तेः प्रागेव प्रमाणान्तरसिद्धेत्येतत्पक्षः समाहितो भवति । प्रमाणान्तरसिद्धेऽपि विप्रतिपत्त्यादिनिरासकन्यायग्रथनात्मकसूत्रोपदेशसार्थक्यादिति ज्ञातव्यम् ।। **अत एवास्य सूत्रस्येति** । श्रौतस्य प्रयोजनादेर्न्यायेनोपपादनार्थत्वादेव न श्रुत्यर्थनिर्णायकन्यायग्रथनात्मकशास्त्रबहिर्भाव इत्यर्थः । नन्वेवं यदि प्रथमसूत्रस्य विषयादिप्रतिपादनद्वारा शास्त्रारम्भोपपादकता तर्हि स्वस्यारम्भणीयता केनोपपादितव्या । न तावत्स्वेन । आत्माश्रयत्वप्रसङ्गात् । अन्येन चेत्तस्याप्यारम्भणीयता पुनरन्येनेत्यनवस्थापात इत्यत आह **अध्ययनविध्यादिवदिति** । यथा 'स्वाध्यायोऽध्येतव्य' इति विधिवाक्यं स्वाध्यायत्वावच्छिन्नस्याध्ययनं विदधत्स्वस्यापि तदवच्छिन्नत्वादध्ययनं विधत्ते । एवमिदं सूत्रं ब्रह्ममीमांसाशास्त्रत्वावच्छिन्नस्यारम्भणीयतोपपादकं सत् स्वस्यापि तदवच्छिन्नत्वात् आरम्भोपपादकं भवति । आत्माश्रयत्वं तु





प्रामाणिकम् । अत एव न कर्तृकर्मभावविरोधोऽपीति । आदिपदेनाभिधेयत्वावच्छेदेन प्रमेयत्वविधायकं लौकिकं वाक्यं यथा प्रमेयस्याप्यभिधेयत्वावच्छिन्नत्वात्प्रमेयत्वविधायकं तथेत्यादिकं द्रष्टव्यम्।

**वं०प०**— तर्हि भाष्यकारीयं सूत्रकारस्याप्युपपादनं व्यर्थमापन्नमित्यत आह **आप्तत्वं त्विति**।

**आनन्दः**— तर्हि कः परिहार इत्यत आह **तस्मादिति**। एवं च वेदार्थनिर्णायकन्यायग्रथनात्मकत्वेन न्यायसूत्रत्वमुपपद्यत इति भावः। तर्हि आप्तत्वोपपादनं भाष्यकारीयमनर्थकमापद्येतेत्यत आह **आप्तत्वं त्विति**। **अत एवेति**। श्रौतस्य प्रयोजनादेर्न्यायेनोपपादकत्वेन वेदार्थनिर्णायकन्यायग्रथनात्मकत्वादेवेत्यर्थः। न चैवमपि प्रथमसूत्रे कथं प्रवृत्तिः। सन्देहादिति चेत् तथा सति शास्त्रेऽपि सन्देहादेव प्रवृत्त्युपपत्तेः न प्रयोजनाद्यभिधातव्यमिति वाच्यम्। कृष्यादिवत् अल्पायाससाध्यत्वेन सन्देहादेव प्रवृत्तिरिति भावः। ननु शास्त्रीयविषयादिनिश्चयोऽनेन चेदस्य विषयादिनिश्चयः केन। अनेन सूत्रेण वा सूत्रान्तरेण वा। नाद्यः आत्माश्रयात्। न द्वितीयः अन्योन्याश्रयाद्यापत्तेरित्यत आह **अध्ययनविध्यादिवदिति**। यथा ह्यध्ययनविधिः सर्वस्याप्यध्ययनं बोधयन् सर्वान्तर्गतत्वेन स्वस्यापि अध्ययनं बोधयति। न ह्येतावता आत्माश्रयादिकं असाधारण्येन स्वस्याध्ययनबोधकत्वात्तथा प्रकृतेऽपि इदं सूत्रं शास्त्रस्य विषयादिमत्त्वेनारम्भणीयत्वं बोधयत् स्वस्याप्यारम्भणीयत्वं बोधयति। शास्त्रान्तर्गतत्वेन, न तु केवलं स्वस्यैवाव्यवधानेन येनात्माश्रयादि स्यात् इत्यर्थः।

**कं०रा०**— **अत एवेति**। यत इदं सूत्रं श्रोतृप्रयोजनादिनिर्णायकन्यायग्रथनात्मकमत एव। अस्य सूत्रस्य श्रुत्यर्थनिर्णायकन्यायग्रथनात्मकशास्त्राद्बहिर्भावो नेत्यर्थः। नन्वस्य सूत्रस्यारम्भणीयत्वमन्यस्माद्वा सिद्ध्यति अस्माद्वा। नाद्यः। अनवस्थाप्रसङ्गात्। न द्वितीयः। स्वस्य स्वविषयकत्वायोगादित्यत आह **अध्ययनेति**। स्वाध्यायोऽध्येतव्य इत्यध्ययनविधेः स्वाध्यायान्तर्गततया तत एव तस्याप्यध्येतव्यत्वं यथा सिद्ध्यति तथा अस्य सूत्रस्य शास्त्रान्तर्भूतत्वेन शास्त्रारम्भणीयत्वप्रतिपादकादस्मात्सूत्रादेव अस्याप्यारम्भणीयत्वं सिद्ध्यति। अतो नानवस्था। अध्ययनविधिवत् स्वविषयकत्वोपपत्तेः स्वविषयकत्वायोगश्च नेत्यर्थः। यद्वा। प्रथमसूत्रस्यारम्भणीयत्वसिद्धिः सूत्रान्तराद्वा अस्मादेव वा। आद्येऽपि सूत्रान्तरस्यारम्भणीयत्वसिद्धये पुनः सूत्रान्तराभ्युपगमे तत्राप्येवमित्यनवस्था। सूत्रान्तरारम्भणीयत्वमस्मात्प्रथमसूत्रात्सिद्ध्यतीत्यङ्गीकारे अन्योन्याश्रयः। सूत्रान्तरस्य आरम्भणीयत्वं पुनः सूत्रान्तरेण सिद्ध्यतीत्यङ्गीकृत्य तस्य चारम्भणीयत्वमनेन प्रथमसूत्रेण सिद्ध्यतीत्यभ्युपगमे तु चक्रकम्। द्वितीये स्वस्यारम्भणीयत्वसिद्धये स्वापेक्षेत्यात्माश्रयत्वमित्याशङ्कायामिदमुदितमित्यवतार्य अनवस्थादीत्यादिपदेन अन्योन्याश्रयचक्रकादिकं गृहीतमिति व्याख्येयम्।

**श्रीनिधि०**— **इत्येव परिहार इति**। उक्तं प्रयोजनं श्रोता कथं श्रद्दधीतेत्यादि चोद्यस्येति शेषः। एवेति परोक्तपरिहारं व्यवच्छिनत्ति। आगमतया साधकत्वे खलु कथं श्रद्दधीतेत्यादि चिन्तेति भावः। **उपोद्धलकमात्रमिति**। दार्ढ्यसंपादकमात्रमित्यर्थः। **अत एवेति**। श्रौतार्थनिर्णयानुकूलन्यायप्रतिपादकत्वादेवेत्यर्थः। ननु प्रथमसूत्रस्य व्याख्यानाद्यर्थम् उपादेयता प्रयोजनज्ञानेन विना न संभवति। तच्च प्रयोजनज्ञानं किं प्रथमसूत्रेण भवति उत





वाक्यान्तरेण । नाद्यः । आत्माश्रयप्रसङ्गात् । न द्वितीयः । तत्राप्येवमित्यनवस्थापातात् । अतः प्रयोजनाभिधानं नोपपद्यत इत्यत आह **अध्ययनेति** । अस्यापि आद्यसूत्रस्याप्यत एवाद्यसूत्रादेवारम्भणीयत्वसिद्धेः । अयं भावः स्वाध्यायत्वावच्छिन्नस्वाध्यायाध्ययनविधिवाक्यस्य स्वाध्यायोऽध्येतव्य इत्यस्य यथा स्वाध्ययनविधायकत्वम् । एवं विचारशास्त्रस्य प्रयोजनादि प्रतिपादयतोऽस्यापि सूत्रस्य विचारकत्वात् स्वप्रयोजनप्रतिपादकत्वं च सिद्ध्यति । अत एवारम्भणीयत्वं च । एतादृशात्माश्रयस्तु न दोषाय । अन्यथाध्ययनविधिवाक्येऽपि तथात्वापातात् । **अनुभवविरोधाच्चेति** । कश्चिदाह ब्रह्मज्ञानस्य मोक्षहेतुतानिश्चयः प्रथमसूत्राद्भवतीत्युक्ते यदुक्तं प्रवृत्त्यनुपपत्त्यादि तत्परिहारायाह **अध्ययनेति** । प्रथमसूत्रार्थस्तु प्रथमसूत्रस्य च प्रयोजनादिज्ञाने तथा च शास्त्रप्रवृत्तिरुपपद्यते । तथा प्रथमसूत्रेऽपि । न चात्माश्रयादिदोषः स्वाध्यायोऽध्येतव्य इत्यत्रेवादोषत्वात् । न च त्रिविधा हि पुंसां चित्तवृत्तिरिति प्रवृत्त्यनुभवयोः विभागेन कथनानुपपत्तिः । प्रवृत्तिस्वरूपनिर्धारणार्थत्वादिति तदसत् । उक्तं च प्रयोजनं कथं श्रोता श्रद्दधीतेत्याद्युत्तरवाक्यानाञ्चस्यापातात् पूर्वप्राप्तामाशङ्कामपरिहृत्य शङ्कान्तरतत्परिहारयोरनवसरग्रस्तत्वात् । इति पुनरवशिष्यते इति पूर्वशङ्कापरिहारसूचनाच्च । अथोच्येत शास्त्रे कथं प्रवृत्तिरित्याशङ्कां प्रथमसूत्रात् प्रयोजनादिज्ञाने सति शास्त्रे प्रवृत्तिः उपपद्यत इति परिहृत्य उक्तं च प्रयोजनादिकमित्यादिना शङ्कान्तरमाशङ्क्य परिहृत्य प्रथमसूत्रे कथं प्रवृत्तिरित्याशङ्कां परिहरति **अध्ययनेत्यादिनेति । न किञ्चिदनुपपन्नमिति** । मैवम् । प्रवृत्तौ प्रयोजनादिनिश्चयः । निश्चये सति प्रवृत्तिरिति अन्योन्याश्रयस्य दुष्परिहरत्वात् । नन्वेतद्दोषपरिहारार्थं अध्ययनविधिर्दृष्टान्त उक्त इति चेन्न । उक्तदोषेणैव तस्याप्यसंभवात् । तर्ह्यध्ययनं कस्यापि न स्यादिति चेन्न । अधीतप्रवृत्त्युपपत्तेः । स्वारसिकी प्रवृत्तिस्तु यदृच्छया स्वाध्यायाध्येतव्यताज्ञाने सति भविष्यति । अन्योन्याश्रयो दोषो न भवतीति चेन्न । एवं वदता एतद्देहावच्छेदेन स्वपितृपितृत्वमङ्गीकरणीयं स्यात् । परस्परपूर्ववृत्तित्वलक्षणान्योन्याश्रयस्योच्यमानत्वादिति सन्तोष्टव्यमायुष्मता इति सङ्क्षेपः ।

**वा०चं०— श्रौतस्य प्रयोजनादेः** न्यायेनोपपादनार्थमित्युक्त्या प्रमाणान्तरसिद्धार्थप्रतिपादकत्वेऽपि नास्य वैयर्थ्यं पूर्वपक्षरीत्या श्रुतिप्रतिपादितेऽप्यर्थेऽनुपपत्तौ प्राप्तायां न्यायेन तदर्थोपपादकत्वेनोपदेशमात्रत्वाभावादिति सूचितं भवति । **आप्तत्वं त्विति** । न्यायस्वरूपे न्यायसाध्यप्रमेये वाऽन्यथात्वशङ्कानिरासेन न्यायोपोद्बलकमित्यर्थः । **अत एवेति** । वेदार्थनिर्णायकन्यायग्रथनात्मकस्यैव शास्त्रत्वादस्य च तथात्वादित्यर्थः । एवं चास्य शास्त्रबहिर्भावे शास्त्रारम्भसमर्थनेन एतदारम्भासिद्धेरेतदारम्भोपपादकान्तरापेक्षायामनवस्थायामपि नेदानीं सा । एतदारम्भायोपपादकान्तरानन्वेषणात् । नापि समन्वयाध्यायाद्यारम्भोपपादकैतदारम्भाय तदध्यायाद्यपेक्षा येनान्योन्याश्रयः स्यात् । नाप्येतदारम्भाय एतदपेक्षायामात्माश्रयः । स्वाध्यायोऽध्येतव्य इति वाक्यत्वरूपविशेषाकारेण सर्वस्वाध्यायाध्ययनविधायकस्याप्यस्य वाक्यस्य स्वाध्यायत्वरूपसामान्याकारेण स्वविषयत्ववदेतत्सूत्रत्वेन शास्त्रारम्भहेतोरप्यस्य शास्त्रत्वेन स्वविषयत्वस्याप्युपपन्नत्वादित्याह **अध्ययनेति** । अत्र तस्मादित्यारभ्य दोषोऽपीत्यन्तेनैव । ननु ब्रह्मज्ञानस्येत्यादिना शङ्कितस्य सर्वस्य परिहारः उच्यत इत्यादिपूर्वग्रन्थेन तु प्रसङ्गाच्छिष्यशिक्षायै प्रवृत्तेः प्रयोजनादिनिश्चयसापेक्षत्वं विविच्योपपादितमिति द्रष्टव्यम् । न चैतदुभयमेकत्र विरुद्धमिति वाच्यम् । शास्त्रप्रवृत्तिहेतुशास्त्रीय-





प्रयोजनादिप्रतिपादकत्वमात्रविवक्षयोपोद्घातत्वस्य न्यायेन श्रौतप्रयोजनादिनिश्चायकत्वविवक्षया च तदन्तर्भावस्य चोपपत्तेः। शास्त्रान्तर्भावे प्रयोजनादिनिश्चयसापेक्षतयाऽनवस्थातादवस्थ्यमित्यत आह **अध्ययनविध्यादिवदिति**।

**वा०र०**— तथा च **तस्मात्** इत्यारभ्य **तद्व्युत्पादनमपि नानर्थकम्** इत्यन्तं स्वाभिप्रेतं परिहारकथनमिति विवेकः। न केवलं न्यायसूत्रत्वे शास्त्रान्तर्भावोपपत्त्या वक्ष्यमाणरीत्याऽनवस्थापरिहारोपपत्तिरित्येव। अपि तु प्राग्विकल्पितपक्षेषु प्रथमसूत्रस्य शास्त्रान्तर्भावपक्षे प्रमाणान्तरसिद्धब्रह्मज्ञानमोक्षसाध्यसाधनभावबोधकत्वमिति यः पक्षः सोऽप्यङ्गीकर्तुं शक्य एव। तत्रोक्तस्य अवगतार्थबोधकत्वेन प्रामाण्यप्रसङ्गस्य न्यायेनोपपादनार्थत्वोक्त्याऽवगतिमात्रबोधकत्वानभ्युपगमसूचनेन परिहारसिद्धेरित्यप्येतच्छङ्कापरिहारादेव सिद्ध्यतीति दर्शयति **श्रौतप्रयोजनादेरित्यादिना**। न्यायेनोपपादने निमित्तमाह **पूर्वपक्षरीत्येति**। **आप्तत्वं त्विति**। सूत्रप्रामाण्यसिद्ध्यर्थतयोक्तं सूत्रकारस्याप्तत्वं त्वित्यर्थः। शास्त्रान्तर्भावोऽप्यस्तीति नानवस्थादोष इति वक्तुमित्युक्तम्। तत्प्रकारप्रदर्शकतया दोषान्तरनिरासकतया चाध्ययनविध्यादिवदित्येतद्वाक्यमवतारयति **एवं चास्येत्यादिना**। **शास्त्रबहिर्भावे**। तदङ्गीकारपक्ष इत्यर्थः। **इदानीमिति**। अन्तर्भावाङ्गीकार इत्यर्थः। समन्वयाध्यायाद्यारम्भोपपादकेत्यनेन समन्वयाध्यायाद्यारम्भस्यैतत्सूत्रापेक्षेति प्रतिपादितं भवति। मा भूतमेतत्पक्षेऽनवस्थान्योन्याश्रयैः। आत्माश्रयस्तु स्यादेव। स्वारम्भाय स्वापेक्षाङ्गीकारादित्यत अध्ययनविध्यादिवदित्यन्तामात्माश्रयपरिहारकतया योजयति **स्वाध्यायोऽध्येतव्य इतीति**। इति वाक्यत्वरूपविशेषाकारेणेत्यादिना विधायकतावच्छेदकविषयतावच्छेदकरूपभेदाश्रयणेन आत्माश्रयपरिहारप्रतिपादनेनैव आत्माश्रयत्वमेतत्प्रामाणिकमिति न दोष इति वदन्तोऽपि निराकृताः। ननु प्रयोजनादिनिश्चयकथन्ताशङ्कापरिहाराय श्रौतस्य न्यायेनोपपादनमित्यादि परिहाराश्रयणे शास्त्रान्तर्भावाश्रयणेन चानवस्थादिदोषनिरासाभ्युपगमे च ननु ब्रह्मज्ञानस्येत्यादिशङ्काग्रन्थीयसमस्तविकल्प पूर्वकदूषणानामुद्धारः सिद्ध एव भवति शास्त्रान्तर्भावे वा तदनन्तर्भावे वा। ब्रह्मज्ञानमोक्षसाध्यसाधनभावस्य प्रमाणान्तरसिद्धत्वाश्रयणेऽनवस्थादिदोषाप्रसङ्गात्। न्यायेनोपपादनार्थतया सूत्राप्रामाण्यस्य चाभावात्। शास्त्रान्तर्भावेऽपि स्वाध्यायाध्ययनविधिवत्स्वविषयत्वोपपत्त्याऽनवस्थाद्यभावात् प्रयोजनादेर्न्यायेनोपपादकतया तन्निश्चयोऽपि युज्यत एव। तदेवं शङ्कितसर्वदोषपरिहारस्य नेदं प्रयोजनाद्युद्देशमात्रमित्यादिना दोषोऽपीत्यन्तेन संभवादुच्यते नेदमित्यादिकमेव वक्तव्यम्। त्रिविधा हि पुंसामित्यादि शङ्क्यत इत्यन्तं तु व्यर्थमेवाभिधानमित्यन्तस्य तथापि नोक्तदोष निराकरणार्थत्वमेतस्याङ्गीक्रियते किन्तु प्रयोजनान्तरार्थमेव पूर्वग्रन्थ इत्याह **अत्र तस्मादित्यारभ्येति**। **विविच्योपपादितमिति**। उपलक्षणं चैतत्। उक्तं चेत्येतदवतारभूतशास्त्रीयविषयप्रयोजनेत्यादि दर्शयतीत्यन्तोक्तरीत्या विविच्योपपादनप्रसङ्गेन न्यायसूत्रत्वाङ्गीकारव्यावर्त्यशङ्कोत्थापनपूर्वकं कैश्चित्कृततत्परिहारमनूद्य तद्दूषणं च कृतमित्यपि ज्ञेयम्। अत एव तस्मादित्यारभ्येति तस्मादित्यस्याप्यनुवादः। तेनोक्तं चेत्यादेरप्युपयोगाङ्गीकारसूचनात्। तदङ्गीकारे एव तस्मादित्यस्य सार्थक्यात्। अन्यथा नेदं प्रयोजनाद्युपदेशेत्यारभ्येत्येव ब्रूयादिति ज्ञेयम्। अत्र पक्षे नापि फलगोचरेच्छा। न ह्युपेक्षणीयम्, नापि सुखमित्याद्युक्तिरनुपयुक्ता प्रसज्येत। **एतदुभयमिति**। शास्त्रोपोद्घातत्वं शास्त्रान्तर्भूतत्वं चेत्युभयमित्यर्थः॥ कस्तर्हि परिहार इत्यत आह **तस्मादिति**। **परिहारः**। उक्तं च प्रयोजनादिकमिति





शङ्काया इति पूरणीयम् । तर्हि भाष्यकारीयं शास्त्रस्याप्तवाक्यत्वोपपादनमसङ्गतमित्यत आह **आप्तत्वं त्वितीति** सकलमकलङ्कम् ॥

**स०व्र०— तस्मान्नेदमिति** । एवं च श्रुतिसिद्धार्थप्रतिपादकत्वेऽपि न सूत्रानर्थक्यं संशयविपर्ययनिरासेन निर्णायकत्वादिति भावः । यदुक्तं प्रयोजनादिमत एव शास्त्रत्वादाद्यसूत्रस्य अतिरिक्तसूत्राणां प्रयोजनादिकं प्रतिपादयतस्तदयोगात् शास्त्रानन्तर्भाव इति तत्राह **अत एवेति** । श्रुत्यर्थस्य न्यायेनोपपादकत्वादेव इत्यर्थः । श्रुत्यर्थनिर्णायकत्वात् सूत्राणाम् । तत्र यथा श्रुतिवाक्यस्य स्वव्यतिरिक्तवेदराशेः प्रयोजनादिमत्त्वेनाध्येतव्यत्वं प्रतिपादयतो न वेदबहिर्भाव एवमत्रापीति भावः ॥ **अध्ययनेति** । स्वत एव प्रयोजनादिमत्त्वान्नानवस्था । न च कर्तृकर्मविरोधः । यथा स्वाध्यायोऽध्येतव्य इति विधिना अध्ययनार्थसर्वविधायकविधिर्युज्यते स्वाध्यायपदोपात्तश्चात्मा यथोक्तं 'स्वाध्यायविधिना सर्वे नियुज्यन्ते विधायकाः । स्वाध्यायविधिरप्येवं न प्रतीमो विरुद्धताम्' इति, तथेहापि अथातो ब्रह्मजिज्ञासा इत्येतत् जिज्ञासाद्वारा शास्त्रस्य ।

**कुण्डल०— श्रौतस्येति** । तथाच प्रमाणान्तरादेव प्रयोजनावगतिसंभवे प्रथमसूत्रे तदभिधानं व्यर्थमिति शङ्का । तथोक्तं च प्रयोजनादिकं श्रोता कथं श्रद्दधीतेत्यादिशङ्का च निरस्ता । प्रमाणान्तरावगतत्वेऽपि प्रयोजनस्य तन्निश्चयस्य दार्ढ्यार्थं न्यायस्योहितत्वात् । न्योयेनोपपादिते चार्थे श्रोतुः श्रद्धाया आवश्यकत्वात् । ननु सूत्रस्याप्तवाक्यतया बोधकत्वाभावे भाष्यकारीयं सूत्रकारस्य आप्तत्वव्युत्पादनमसङ्गतं स्यादित्यत आह **आप्तत्वं त्विति** । **अत एवेति** । वेदार्थनिर्णायकन्यायग्रथनात्मकत्वादेव प्रथमसूत्रस्य तथाविधशास्त्राद्बहिर्भावो नेत्यर्थः । नन्वस्य सूत्रस्यारम्भणीयत्वं सूत्रान्तरसापेक्षं चेत्तस्याप्येवमेवमित्यनवस्था एतत्सूत्रारम्भणीयत्वप्रयोजनकसूत्रान्तरस्य आरम्भणीयत्वमेतत्सूत्राधीनं चेदन्योन्याश्रयः । सूत्रत्रयस्य परस्पराङ्गीकारे चक्रकाश्रयः । स्वारम्भणीयत्वं प्रति स्वस्यैवापेक्षायामात्माश्रयः । स्वस्यैव स्वविषयतापत्तिश्च स्यादित्यत आह **अध्ययनविधीति** । यथा स्वाध्यायशब्दितवेदाध्ययनविधायकस्य स्वाध्यायोऽध्येतव्य इति वाक्यस्यापि स्वाध्यायपदवाच्यवेदान्तर्गतत्वेन वेदाध्ययनविधायकं स्वाध्यायोऽध्येतव्य इति वाक्यं स्वस्याप्यध्ययनं विधत्ते । तथा सूत्रसन्दर्भरूपशास्त्रस्यारम्भणीयत्वव्युत्पादकमिदं प्रथमसूत्रं शास्त्रान्तर्भूतस्य स्वस्याप्यारम्भणीयत्वं संपादयतीति न काचिदनुपपत्तिरिति भावः ।

**विठ्ठ०— श्रौतस्येति** । 'ज्ञानेनैवामृतीभवति' 'य एवं विद्वानि'त्यादिश्रुत्युक्तस्येत्यर्थः । तर्ह्याप्तवाक्यतया इत्याद्यनर्थकं स्यादित्यत आह **आप्तत्वं त्विति** । नन्वेवमाद्यसूत्रस्य शास्त्रे प्रेक्षावत्प्रवृत्तिजननाय प्रयोजनाद्यभिधायकत्वे शास्त्रबहिर्भाव इत्यत आह **अत एवेति** । प्रयोजनादिपरश्रुतिमीमांसारूपत्वादेव न मीमांसाशास्त्रबहिर्भाव इत्यर्थः । ननु प्रयोजनादिनिश्चयश्च प्रथमसूत्रात् तथाच शास्त्रे प्रवृत्तौ तत्प्रयोजनादिनिश्चयः निश्चिते च प्रयोजनादौ शास्त्रे प्रवृत्तिरिति अन्योन्याश्रयतेति दोषो नास्तीत्युक्तं तथाप्यनुपपत्तिरेव । प्रथमसूत्रे एव कथं प्रवृत्तिः तदर्थं प्रयोजनान्तराभिधाने अनवस्थेत्युक्तदोषापत्तेः । प्रथमसूत्रादेव प्रथमसूत्रे प्रवृत्तिरित्युक्ते आत्माश्रयप्रसङ्गात् एवमेव





तत्र प्रवृत्तौ अन्यत्रापि तथात्वप्रसङ्गादित्यत आह **अध्ययनेति** । यथा सर्ववेदाध्ययने स्वाध्यायोऽध्येतव्य इति विधिवाक्यात् प्रवृत्तिः यथा वा सर्वं पौरुषेयं वाक्यमनित्यमिति वाक्यं स्वस्यापि पौरुषेयतया स्वानित्यतां प्रतिपादयति तथा प्रेक्षावत्प्रवृत्तिविषयस्यैव शास्त्रस्यारम्भणीयत्वात् प्रयोजनाभिधेयसंबन्धवत्येव प्रेक्षावतां प्रवृत्तेरारम्भणीयतासिद्धये प्रेक्षावतः प्रवर्तयितुं समस्तशास्त्रस्य प्रयोजनादिकं प्रतिपादयतः प्रथमसूत्रस्य प्रयोजनादिकमपि प्रथमसूत्रादेव सिद्ध्यतीति नानुपपत्तिरिति भावः ।

**चषकः**— **इत्येव परिहार इति** । शास्त्रप्रवृत्तेः प्रागेव प्रमाणान्तरेण ब्रह्मज्ञानस्य मुक्तिसाधनताऽसैत्सीदित्युपगमेऽपि विप्रतिपत्त्यादिव्युदासकन्यायावबोधकपदघटितसूत्रप्रणयनसफलत्वोपपत्तेरिति मन्तव्यम् । **अत एवास्य सूत्रस्येति** । श्रुत्यभिहितप्रयोजनोपपादकन्यायावबोधकपदघटितत्वादेव न श्रुतिप्रतिपाद्यगोचरानुमितिरूपनिर्णयजनकन्यायावबोधकपदघटितत्वलक्षणकशास्त्रबहिर्भाव इत्यर्थः । अथ प्रथमसूत्रस्य विषयाद्यनुबन्धचतुष्टयव्युत्पादनं द्वारीकृत्य शास्त्रारम्भणीयतासमर्थकताया आत्माश्रयताप्रसङ्गेन स्वस्य दुरुपगमतयाऽनवस्थाप्रसङ्गेनान्यस्यापि तस्यास्तादृशतया असामञ्जस्यमित्यत आह **अध्ययनविध्यादिवदिति** । स्वाध्यायत्वावच्छेदेनाध्ययनकर्मतां विदधानः स्वस्यापि तादृशकर्मतावच्छेदकीभूतस्वाध्यायत्वाक्रान्ततया स्वकर्मकाध्ययनक्रियामपि विदधाति यथा तद्वदिदं सूत्रं ब्रह्ममीमांसाशास्त्रत्वावच्छेदेनारम्भणीयतासमर्थकं स्वस्यापि तदवच्छेदकीभूततादृशधर्माक्रान्ततया स्वारम्भणीयतासमर्थकमपि भवत्येव । आत्माश्रयत्वादिकमेकस्यैव धर्मस्योभयावच्छेदकत्वोपगम एव । प्रकृते तु सामान्यधर्मविशेषधर्मयोरेव तत्तदवच्छेदकत्वोरीकृतेर्न तदवतारः । अत एवाभिधेयत्वादेः केवलान्वयिताविधायकवाक्यस्याप्यभिधेयत्वं सेधिष्यति इति सर्वं सुस्थम् । आत्माश्रयत्वं तु प्रामाणिकमत एव न कर्तृकर्मभावविरोधोऽपीत्यपि स्थितम् ॥

**काशी०**— ब्रह्मज्ञानस्य मोक्षहेतुता शास्त्रप्रवृत्तेः प्रागेव सिद्धेति पक्षमुपेत्य स्वयं समाधत्ते **तस्मादिति** । **इदं** प्रथमसूत्रम् । **श्रौतस्येति** । तद्विजिज्ञासस्वेति विषयवाक्योक्तस्य दृष्ट्वैव तं मुच्यत इत्यादिश्रुत्यन्तरोक्तस्य च मोक्षसाधनत्वस्येत्यर्थः । अभिसंविशन्तीति पूर्ववाक्यप्रक्रान्तमोक्षरूपेष्टसाधनत्वस्य विजिज्ञासस्वेति विधिबोध्यत्वात् । **न्यायेनेति** । प्रयोजनादेः श्रुत्यादिनाऽवगतत्वेऽपि वक्ष्यमाणविप्रतिपत्तिमूलकसन्देहनिवृत्तये बन्धसत्यत्वादियुक्त्योपपादनार्थमित्यर्थः । नन्वेवमाप्तवाक्यत्वस्यानावश्यकत्वात्प्रादुर्भूत इत्यादिना तद्व्युत्पादनं व्यर्थमत आह **आप्तत्वं त्विति** । उपोद्बलकमात्रं प्रामाण्यनिश्चायकमेव न तु न्यायव्यावर्तकमित्यर्थः । यदर्थोऽयमारम्भस्तदिदानीं सिद्धमित्याह **अत एवेति** । श्रौतार्थनिश्चायकन्यायव्युत्पादकत्वादेव । **अस्य** प्रथमस्य । **नेति** । आगमतयैवार्थनिश्चायकत्वे ब्रह्मज्ञानफलकश्रुत्यर्थनिश्चायकन्यायग्रथनरूपशास्त्रान्तर्भावो न स्यादिति भावः । मास्तु प्रथमसूत्रस्य शास्त्रान्तर्भावः । ततः को दोष इत्यत आह **अध्ययनेति** । अत एवेति वर्तते । शास्त्रान्तर्भूतत्वादेवेत्यर्थः । **अस्य** प्रथमसूत्रस्य । **अत एव** प्रथमसूत्रादेव । **आरम्भणीयत्वसिद्धेरिति** । यथा स्वाध्यायोऽध्येतव्य इति विधिना स्वस्यापि स्वाध्यायान्तर्भूतत्वादेवाध्ययनसिद्धिस्तथा शास्त्रारम्भसमर्थनार्थेन प्रथमसूत्रेण स्वस्यापि शास्त्रान्तर्भूतत्वादेवारम्भसिद्धिः । अन्यथा तदर्थं सूत्रान्तरारम्भापत्त्याऽनवस्था यदि चारम्भकत्वाद्ब्रह्मजिज्ञासासूत्रं कार्यमित्यादिरूपसूत्रान्तर-





निर्माणेऽपि तस्य प्रकृतशास्त्रान्तर्गतस्य जिज्ञासासूत्रेणैवारम्भसिद्धेर्नानवस्थेत्युच्यते तदाऽप्यन्योन्याश्रयः स्यादिति भावः। न चैवमात्माश्रयः। घनगर्जितन्यायेन प्रथमसूत्रश्रवणादापाततस्तदर्थावगमे पश्चाद्विमर्शे प्रेक्षावतां प्रवृत्तिसंभवस्योक्तत्वादिति ॥ **॥ इति श्रीमन्न्यायसुधाटिप्पणी काशीआचार्यविरचिता समाप्ता ॥**

**गूढ०—** तर्हि कः परिहार इत्यत आह **तस्मादिति**। एवं च वेदार्थनिर्णायकन्यायग्रथनात्मकत्वेन न्यायसूत्रत्वमुपपद्यत इति भावः। तर्ह्याप्तत्वोपपादनं भाष्यकारीयमनर्थकमापद्येतेत्यत आह **आप्तत्वं त्विति**। **अत एवेति**। श्रौतस्य प्रयोजनादेर्न्यायेनोपपादकत्वेन वेदार्थनिर्णायकन्यायग्रथनात्मकत्वादेवेत्यर्थः। न चैवमपि प्रथमसूत्रे कथं प्रवृत्तिः। सन्देहादिति चेत्, तथा सति शास्त्रेऽपि सन्देहादेव प्रवृत्त्युपपत्तेर्न प्रयोजनाद्यभिधातव्यमिति वाच्यम्। कृष्यादिवदल्पायाससाध्यत्वेन सन्देहादेव प्रवृत्तिरिति भावः। ननु शास्त्रीयविषयादिनिश्चयोऽनेन चेत् अस्य विषयादिनिश्चयः केन। अनेन सूत्रेण वा सूत्रान्तरेण वा। नाद्यः। आत्माश्रयात्। न द्वितीयः। अन्योन्याश्रयाद्यापत्तेरिति तत्राह **अध्ययनविध्यादिवदिति**। यथा ह्यध्ययनविधिः सर्वस्याप्यध्ययनं बोधयन् सर्वान्तर्गतत्वेन स्वस्याप्यध्ययनं बोधयति। न ह्येतावता आत्माश्रयादिकं असाधारण्येन स्वस्याध्ययनाबोधकत्वात् तथा प्रकृतेऽपि इदं सूत्रं शास्त्रस्य विषयादिमत्त्वेनारम्भणीयत्वं बोधयति। शास्त्रान्तर्गतत्वेन, न तु केवलं स्वस्यैव अव्यवधानेन येनात्माश्रयादिः स्यादित्यर्थः।

**प्रथमसूत्रस्य प्रसङ्गः—**

**११३ सु०— कः पुनरस्य सूत्रस्य प्रसङ्गः। उच्यते। प्रारिप्सिततया हि बुद्धिसन्निहितं शास्त्रं सूत्रकारस्य। तत्र संशयः किमिदमारम्भणीयं न वेति। उपलभ्यन्ते खलूभयविधान्यपि वाक्यानि। वाक्यं चेदम्। न च विशेषो दृश्यते। येनान्यतरपक्षनिश्चयः स्यात्।**

**बिन्दुः— तत्र संशय इति**। अत्र ब्रह्ममीमांसाशास्त्रमनारम्भणीयमुतारम्भणीयमिति प्रधानचिन्ता। तदर्थं न्यायानुसन्धानरूपविचारो न कर्तव्य उत कर्तव्य इति। तदर्थं तद्विजिज्ञासस्वेत्यादिविचारविधेर्विषयप्रयोजनादिकं न संभवति उत संभवतीति तदर्थं विषयभूतं ब्रह्म किं प्रत्यगर्थभूतजीव एव उत तदन्यदिति। यदि ब्रह्म प्रत्यगर्थ एव स्यात् तदा तस्य निश्चितत्वेन विषयाद्यभावाच्छास्त्रमनारम्भणीयमिति पूर्वपक्षे फलफलिभावः। यदि तु ब्रह्मप्रत्यगर्थादन्यत्तदा प्रत्यगर्थस्य जीवस्य निश्चितत्वेऽपि ब्रह्मणो विषयत्वसंभवाच्छास्त्रमारम्भणीयमिति सिद्धान्ते फलफलिभावः। तथा "अतो यथार्थबन्धस्य विना विष्णुप्रसादतः। अनिवृत्तेस्तदर्थं हि जिज्ञासाऽत्र विधीयते। कार्यता च न काचित्स्यादिष्टसाधनतां विना ॥","इष्टे व्युत्पत्तिरिष्यते", 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य ही"त्यादि पृथक् पृथक् प्रघट्टकैर्व्याख्यास्यमानातःशब्दवर्णकान्तरपर्यालोचनया चिन्तान्तराण्यप्यूहनीयानि। तथाहि





प्रयोजनत्वेनाभिमतस्य बन्धनिवृत्तिरूपमोक्षस्य प्रतियोगिभूतो बन्धः शुक्तिरजतादिवत् मिथ्या वा पारमार्थिको वा । आद्ये मिथ्याभूतशुक्तिरजतादेः प्रसादनिवर्त्यत्वादर्शनान्न तदर्थं जिज्ञासा कर्तव्येति तच्छास्त्रमनारम्भणीयम् अन्त्ये त्वारम्भणीयमिति । तथा जिज्ञास्यत्वेनाभिमतस्य वेदस्य कार्यमात्रनिष्ठत्वं वा सिद्धे ब्रह्मण्यपि महातात्पर्यं वा । तदर्थं व्युत्पत्तिः किं कार्यान्विते एव वा सिद्धार्थेऽपि वा संभवतीत्यादिचिन्ता । तथा आरम्भणीयत्वाभिमतशास्त्रव्युत्पाद्यन्यायविषयीभूतार्थप्रतिपादको वेदोऽप्रमाणं प्रमाणं वा । तदर्थं शब्दः प्रमाणं न वा इत्यादिचिन्ता । फलफलिभावस्तूक्त एवेति महाप्रघट्टकार्थसङ्क्षेपः ।

**परि०**— श्रौतस्य प्रयोजनादेर्न्यायेनोपपादनार्थमिदं सूत्रमित्युक्तमयुक्तम् । श्रौतस्य अन्यथात्वप्रसक्तावेव न्यायावतारावसरादिति भावेन पृच्छति **कः पुनरिति** ॥ **अस्येति** । श्रौतप्रयोजनादेः न्यायेनोपपादनपरस्य, संशयादिरूपप्रसञ्जकमित्यर्थः । यद्वा 'जीवव्यतिरिक्तेश्वराभावात्तस्य च स्वप्रकाशत्वान्न जिज्ञास्यतेति प्राप्त' इति न्यायविवरणोक्तमत्र वक्ष्यमाणदिशाऽनेकधा सौत्रपदार्थनिरूपणाननुरूपमिति भावेन पृच्छति **क इति** । संशयबीजमाह **उपलभ्यन्त इति** । काकदन्तपरीक्षादिरूपवाक्यान्यनारभ्याणि इष्टगोष्ठीपरवाक्यान्यारभ्याण्युपलभ्यन्त इत्यनेन वाक्यत्वरूपधर्मस्य आरभ्यत्वानारभ्यत्वरूपकोटिद्वयसहचारो दर्शितः । पुरोवर्तिनिष्ठतामाह **वाक्यं चेति** ॥

**यादु०**— **प्रसङ्ग इति** । अत्र प्रसङ्गशब्देन प्रसज्यतेऽनेनेति व्युत्पत्त्या प्रसञ्जकमुच्यते । तथा चैतत्सूत्रप्रवृत्तौ कीदृशं संशयपूर्वपक्षादिकं निमित्तमिति प्रश्नार्थः ।

**आनन्दः**— ननु श्रौतस्य प्रयोजनादेर्न्यायेनोपपादनार्थमिदं सूत्रमित्युक्तं, तदयुक्तम् । प्रयोजनादेरसंभवाशङ्काया एवाभावेन तदुपपादनायोगात् । उपपादनस्य च तत्पूर्वकत्वात्तथा चेदं सूत्रं व्यर्थमिति शङ्कते **कः पुनरिति** । एवं च प्रयोजनादेः श्रुतिसिद्धत्वाच्छ्रुतेश्चापौरुषेयत्वादपौरुषेयश्रुत्युक्ते च संशयाद्यभावेन व्यर्थमिदं सूत्रमित्याक्षेपार्थः किंशब्द इति भावः । तत्र संशयपूर्वपक्षाभ्यां असंभवशङ्कायाः प्राप्तत्वादुपपादनमित्याशयेन सिद्धान्तयति **उच्यत इति** । ननु सिद्धे धर्मिणि धर्मचिन्ता कर्तव्या, प्रकृते शास्त्ररूपधर्मिण एवासिद्धत्वात्कथं तत्रारम्भणीयत्वानारम्भणीयत्वचिन्तेत्यत उक्तं **बुद्धिसन्निहितमिति** । तथा च बुद्धिसन्निधानादेव धर्मिसिद्धिरिति भावः । तथापि पूर्वमनारब्धत्वाद्बुद्धिसन्निधानं कथमत्राह **प्रारिप्सिततयेति** । अस्तु धर्मिज्ञानं तथापि कोटिस्मृत्यभावान्न संशय इत्यत आह **उपलभ्यन्त इति** । तथा च वाक्यत्वरूपसाधारणधर्मदर्शनादारम्भणीयत्वानारम्भणीयत्वरूपकोटिस्मृतिरिति भावः । विशेषादर्शनं दर्शयति **न चेति** ।

**कं०रा०**— एवं पूर्वपक्षे प्राप्ते तन्निरासायेदं सूत्रं प्रवृत्तमित्यस्य प्रसङ्गं दर्शयितुं पूर्वपक्षस्य च विषयसंशयौ विनाऽनुत्थानाद्विषयादिप्रदर्शनपूर्वकं पूर्वपक्षमाह **उच्यत इत्यादिना** । अनुपस्थिते शास्त्रे किमिदमारम्भणीयं न वेति





संशयायोगादुपस्थितिं संपादयति **प्रारिप्सितेति । उपलभ्यन्त इति ।** तथा चारम्भणीयत्वानारम्भणीयत्वरूपकोटिद्वयसहचरितवाक्यत्वरूपसाधारणधर्मः संशयबीजमित्युक्तं भवति ।

**श्रीनिधि०— प्रसङ्गः** प्रसक्तिः । 'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः । प्रयोजनं च पञ्चैते प्राञ्चोऽधिकरणं विदुरि'ति वचनात् अधिकरणस्य विषयादिमत्त्वेन भाव्यम् । तच्च विषयादि किमिति प्रष्टुर्भावः ।

**वा०चं०—** नन्वधिकरणस्य विषयसंशयपूर्वपक्षसिद्धान्तप्रयोजनरूपपञ्चाङ्गत्वादारम्भणीयतासिद्धये प्रेक्षावतः प्रवर्तयितुमित्यादिपूर्वग्रन्थे शास्त्रारम्भणीयतासिद्धेः प्रयोजनत्वोक्तावपि शास्त्रस्य विषयत्वसंभव एव तदारम्भणीयत्वसिद्धेः प्रयोजनत्वसंभवात् सामान्यतो ज्ञातस्य विशेषतश्च सन्दिग्धस्यैव विषयत्वात् शास्त्रस्याद्याप्यनुत्पन्नत्वेन सामान्यतो ज्ञानासंभवाद्धर्मिज्ञानाभावेनारम्भणीयत्वादिकोटिप्रापकस्याप्यभावेन विशेषतः सन्देहासंभवाद्विषयसंशययोः सतोरेव सन्दिग्धेऽर्थे न्यायः प्रवर्तत इति न्यायेन विपरीतयुक्त्यनुसन्धानात्मकपूर्वपक्षप्रवृत्तेरवतारिकारूपपूर्वपक्षस्यैव च सिद्धान्तसूत्रप्रापकत्वादस्य च सिद्धान्तसूत्रत्वात् प्रसङ्गकाभावे कथमस्य सूत्रस्य प्रवृत्तिरित्याशङ्कते **कः पुनरिति** । केचित्तु कः पुनरिति विवरणवाक्यस्य तत्त्वदीपनव्याख्यानमनुसृत्येदं वाक्यं व्याचक्षते । तत्तु विवरणपरिहारवाक्ये तादृगर्थप्रतीतेः तद्व्याख्यानसंभवेऽपि प्रारिप्सिततयेत्यादिप्रकृतग्रन्थाननुसारित्वाद्विचारणीयम् ॥ **उच्यत इत्यादि** । अत्र प्रारिप्सिततया बुद्धिसन्निहितमिति विषयस्य सामान्यतो ज्ञानसमर्थनं सूत्रकारस्येति तदसंभावनापरिहारः । **उपलभ्यन्त** इत्यादिना संशयप्रापकसमर्थनम् । **नन्वित्यादिना** च संशयानुपपत्तिपरिहार इति द्रष्टव्यम् ।

**वा०र०— प्रयोजनरूपपञ्चाङ्गत्वादिति** । एतच्च प्रयोजनस्य विषयादिपञ्चकान्तर्भाव इति मीमांसकैकदेशिमतमाश्रित्य प्रयोजनमेलनेन पञ्चाङ्गाभिधानम् । प्रयोजनस्याधिकरणफलत्वेन तदवयवत्वाभावात् पञ्चकान्तर्गतं सन्देहबीजमेवेति स्वसंमततन्मुख्यमतानुसारेण तु सन्देहबीजमेव पञ्चकान्तर्गततया ग्राह्यम् । अत एव तत्त्वप्रकाशिकायां प्रत्यधिकरणं सन्देहबीजमेवोपन्यस्तम् । तदेतदभिप्रेत्यैव तात्पर्यचन्द्रिकायां सन्देहबीजपूर्वस्येति पञ्चकान्तर्गततया सन्देहबीजमेवोक्तम् । अन्यथा विषयादेरिति वक्तव्यं स्यात् । एवमेव न्यायामृतेऽखण्डार्थत्वभङ्गे परमते विषयादिपञ्चकाभावादिति प्रतिज्ञातविषयाद्यभावोपपादनावसरे चन्द्रिकायां च समन्वयाधिकरणीयपरमतनिरासावसरे प्रयोजनाभावाभिधानमप्येकदेशिमतानुसारेणेति व्याख्येयम् । अत एव तन्त्रचूडामण्यादिषूक्तरूपमेकदेशिमतं प्रयोजनस्याधिकरणफलतया तदङ्गत्वाभावादिति प्रदूष्य सन्देहबीजान्तर्भावेन पञ्चकमतं मुख्यमित्यभिहितम् । एवमेव चोपपादितं चन्द्रिकाटीकायां गुरुचरणैरिति द्रष्टव्यम् । एवमानन्दमयाधिकरणटीकायामपि ज्ञेयम् । प्रयोजनरूपपञ्चाङ्गत्वादिति बहुव्रीहिः । अस्य प्रसङ्गकाभाव इत्युत्तरत्र संबन्धः । **प्रयोजनत्वोक्तावपीति** । तेनैव शास्त्रस्य विषयालाभेऽपीत्यस्योपलक्षणम् । अत एव विषयत्वसंभव एवेत्येवोच्यते । न तु विषयसद्भाव एवेति । तथा च आरम्भणीयतेत्यादि पूर्वग्रन्थेन विषयप्रयोजनयोरुक्तावपि तयोर्मध्ये प्रयोजनस्य शास्त्रीयविषयत्वसिद्ध्यधीनत्वात् विषयत्वायोगे विषयाभाववत् विषयत्वापेक्षप्रयोजनत्वायोगेन प्रयोजनाभावोऽपि सिद्ध इति भावः । अस्तु

तर्हि विषयत्वसंभवोऽपीत्यतस्तदसंभवमुपपादयति **सामान्यत इति । सन्देहासंभवादिति ।** तथा च शास्त्रस्य विषयत्वानुपपत्तेरुक्तरीत्या विषयप्रयोजनयोरभावः सिद्ध इति भावः । उक्तसन्देहाद्यसंभवेनैव पूर्वपक्षायोगमुपपादयति **विषयसंशययोरिति । पूर्वपक्षप्रवृत्तेरिति ।** प्रकृते च तयोरभावेन पूर्वपक्षप्रवृत्त्ययोगादिति पूरणीयम् । **प्रापकत्वादिति ।** प्रकृते च पूर्वपक्षाप्रवृत्त्या प्रापकाभावादिति पूरणीयम् । अवतारिकारूपेत्यनेनैव तत्तत्सूत्रव्यावर्त्यशङ्कारूपोऽवतार एव पूर्वपक्षशब्दार्थ इति सूचितम् । उक्तप्रापकाभावे सिद्धान्तसूत्राप्रवृत्तिरस्तु । प्रकृतसूत्रप्रवृत्तिस्तु तदभावेऽपि किं न स्यादित्यत उक्तम् **अस्य च सिद्धान्तेति ।** एतेनैव पूर्वमीमांसायामर्थवादचरणे आम्नायस्य क्रियार्थत्वादिति पादादिसूत्रस्य तदुत्तरसूत्राणां च पूर्वपक्षसूत्रत्वसत्त्वात् अन्यत्रापि बहुस्थलेषु तत्तत्सूत्राणां तथात्वदर्शनाद्भावं तु, पूर्वं तु बादरायण इत्याद्युत्तरमीमांसास्थसूत्रेभ्यः पूर्वसूत्राणामपि तथात्वदर्शनादथात इति प्रथमसूत्रस्यापि पूर्वपक्षसूत्रत्वप्रसक्तिरित्यपि निराकृतम् । प्रसञ्जकाभाव इत्यनेन प्रसज्यतेऽनेनेति प्रसङ्ग इति व्युत्पत्त्या प्रसङ्गपदेन अधिकरणप्रवृत्तिरूपप्रसक्तिहेतुभूतविषयादिकं विवक्षित्वा कः प्रसङ्गः किं प्रसञ्जकं न किमपीति मूलं योज्यमिति सूचितं भवति । प्रसञ्जकाक्षेपफलमाह **कथमस्येति ।** यद्वा मूले कथं प्रसङ्ग इत्यावर्तते प्रथमस्योक्त एवार्थः । द्वितीयस्य तु प्रसङ्गपदं प्रवृत्त्यर्थकमाश्रित्य कथं प्रवृत्तिरित्यर्थः । पूर्वार्थस्य प्रयोजकत्वं च विवक्षितमित्याशयेन प्रसञ्जकाभावे कथमस्येत्याद्युक्तमिति द्रष्टव्यम् । एतदुपपादनायैव प्रागधिकरणस्येत्याद्यङ्गत्वादित्यन्तमुक्तम् । यदधिकरणमारभ्यते तदुक्तपञ्चाङ्गमिति तेन लभ्यते । ततश्चाधिकरणस्य पञ्चाङ्गत्वादस्य च तदभावान्नारम्भणीयाधिकरणत्वमस्य युक्तमिति समुदायार्थः । **विवरणवाक्यस्येति ।** अनेन विवरणरीत्येवाक्षेपवाक्यविन्याससंभवे किमपूर्ववाक्यविन्यासेनेत्याशंयेन तद्वाक्यमेवोपन्यस्तं मूल इति सूचितम् । **इदं वाक्यं** विवरणवाक्यानुवादरूपपुनरितिवाक्यमित्यर्थः । तत्त्वदीपनकृता हि कः प्रसङ्ग इत्येतच्चतुर्विधासङ्गतिपरत्वेन योजितम् । तथाहि । जिज्ञासितं हि सूत्रणीयं जिज्ञासा च ज्ञाते ज्ञानं च पाठकादिष्वदृष्टे शास्त्रश्रवणमन्तरेण न संभवतीत्यसङ्गतिरेका । प्रसज्यतेऽनेनेति प्रसङ्गपदोक्तप्रसञ्जकमनुग्राह्यं वाक्यम् । तच्चोक्तविचाररूपजिज्ञासाकर्तव्यत्वस्य मानान्तरागोचरत्वेन श्रोतव्य इत्यादिरूपमेव वाच्यम् । तस्य चाकरणे प्रत्यवायाश्रवणेन नित्यत्वपक्षायोगाद्गृहदाहादिष्विव निमित्ताश्रवणेन नैमित्तिकत्वस्याप्ययोगात् 'ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेते'तिवद्दोषसंयोगे सत्यचोदिततया प्रायश्चित्तरूपत्वस्याप्ययोगात् । विध्युपदेशे फलाश्रवणेन काम्यत्वस्याप्ययोगाच्चतुर्विधं विधिरूपं न संभवतीत्येतदनुग्राह्यप्रमाणाभावात्तदभावे च प्रमाणापेक्षितन्यायसूचकसूत्रस्येवासङ्गतिरित्यपरा । समन्वयादिप्रतिपादकशास्त्रे समन्वयाद्यन्यतमस्याप्यप्रतिपादकं यदेतत्सूत्रं प्रतिपादकैतत्सूत्रस्यासङ्गतिश्चान्या । आदावेव सूत्रणे सङ्गत्यभावादसङ्गतिश्चेतरेति । तदनुसृत्येदमुक्तासङ्गतिपरत्वेन व्याचक्षत इत्यर्थः । **विवरणपरिहारवाक्य इत्यादि ।** उच्यते । नित्येनैव अध्ययनविधिनाऽधीतस्वाध्यायो वेदान्तवाक्येष्वापातदर्शिनेनेदमवगच्छतीत्यादिवाक्यसमुदाये साङ्गाध्ययनादेव विचारं विनोत्पन्नापातदर्शनरूपावगतेः संभवाच्छास्त्रस्य च निश्चयार्थत्वेन वैयर्थ्यानापत्तेस्तज्ज्ञानादेव जिज्ञासाद्युपपत्त्या आद्या सङ्गतिर्नास्तीत्यस्य साधनचतुष्टयसंपन्नस्य मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यविचारं विदधत इत्यादि वाक्यसमुदाये च विध्युद्देश्ये फलाश्रवणेऽपि आत्मनस्तु कामाय सर्वं प्रियमित्युपक्रम्यात्मनि विज्ञाते सर्वमिदं विज्ञातमेतावदरे खल्वमृतत्वमित्युपसंहारान्तार्थवादोक्तफलमादायामृतत्वसाधनदर्शनकामो वेदान्तवाक्यं





विचारयेदिति विधिविपरिणामस्य रात्रिसत्रन्यायेन सिद्ध्या द्वितीयासङ्गतिर्नास्तीत्यस्य; स च कर्तव्यो विचारो जन्मादिसूत्रमारभ्य प्रवर्तिष्यत इति वाक्ये चोत्तरविचारस्य शास्त्रारम्भकर्तव्यत्वसिद्ध्युत्तरकालीनतयारम्भ-कर्तव्यत्वविचारस्याद्यत्वं युक्तम् । चिन्तां प्रकृतसिद्ध्यर्थामित्युक्तेरुपोद्घातत्वेन शास्त्रसङ्गतिश्चेत्यस्य सिद्ध्या चतुर्थतृतीयासङ्गती न स्त इत्यस्य च प्रतीतिरित्येवं तद्ग्रन्थीयपरिहारवाक्ये चतुर्विधासङ्गतिपरिहाररूपार्थप्रतीते-रित्यर्थः । **प्रकृतग्रन्थेति** । एतद्ग्रन्थीयपरिहारवाक्ये उक्तचतुर्विधासङ्गतिपरिहारस्याप्रतीत्या तन्मूलकशङ्काशयस्य कल्पनायोगात्तदीयं व्याख्यानं प्रकृतग्रन्थाननुसारित्वेनाकर्तव्यत्वाद्विचारणीयमित्यर्थः । उपलक्षणमेतत् । अधिगत-स्वाध्यायस्य निगमनिरुक्तादिना व्युत्पन्नपदपदार्थस्य भगवानेव सर्वशब्दार्थ इति ज्ञातवतः सात्त्विकप्रकृतेरित्यादि-परिहाराशयवर्णनं विवरणादिग्रन्थानुसारेण यत्क्रियते तदुदक्षरमिति न सङ्गतमित्यपि ज्ञेयम् । किञ्च ननु ब्रह्मज्ञानस्य मोक्षहेतुतेत्याद्याशङ्क्य नेदं प्रयोजनाद्युपदेशमात्रमित्यादिना अत एवास्य न शास्त्रबहिर्भाव इत्यन्तेन शास्त्रोपोद्घात-त्वादिप्रतिपादनेनासङ्गतिनिरासस्याप्तव्यवहितपूर्वग्रन्थ एव सिद्धत्वेनात्र पुनराशङ्कायास्तत्परिहारस्य चाभिप्रायत्वेन वर्णने पूर्वापरामर्शविवरणतत्त्वदीपनग्रन्थदर्शनरूपोभयातिरिक्तनिमित्ताभाव इत्यलम् । प्रारिप्सिततयेत्येतद्ग्रन्थेनैव विषयादिपञ्चकोपपादनमिति भ्रान्तिवारणाय तत्र तावज्जिज्ञासेत्यादिना पूर्वपक्षप्रवृत्तिवर्णनस्य करिष्यमाणत्वा-त्तावत्पर्यन्तग्रन्थस्य विषयं विवेकेनाह अत्र **प्रारिप्सिततयेत्यादिना** । अनेनैवमेतानि मूलवाक्यानि योजनीयानीति सूचितम् । तथाहि । सिद्धे धर्मिणि धर्मचिन्तेति न्यायेनारम्भणीयत्वानारम्भणीयत्वकोटिकसंशयार्थं धर्मिभूतशास्त्र-ज्ञानस्यापेक्षितत्वात्प्रकृते च शास्त्रस्यासिद्ध्या विषयत्वानुपपत्तिरित्यतो विषयत्वप्रयोजकं सामान्यतो ज्ञातत्वमुप-पादयति **बुद्धिसन्निहितमिति** । तत्रापि हेतुकथनं **प्रारिप्सिततयेति** । प्रारिप्सिततया बुद्धिसन्निधानमप्यन्यस्या-संभावितमित्यत उक्तं **सूत्रकारस्येति** । कोटिद्वयसाहचर्यादिप्रतिपादनमुपलभ्यन्त इत्यादिना कृतम् । निर्णायका-भावस्य संशयाङ्गत्वात्तदुपपादनं **न चेति** ।

**स०व्र०— कः पुनरिति** । अयमर्थः । जिज्ञासासूत्रारम्भणीया जिज्ञासा च ज्ञाते । ज्ञानं च शास्त्रश्रवण-मन्तरेण न संभवति । पाठकादिषु अदृष्टेरित्यसङ्गतिः । तथा प्रसज्यतेऽनेनेति प्रसङ्गः प्रसञ्जकः । स किमस्त्युत नास्ति । नाद्यः । वेदवाक्यविचारकर्तव्यतायाः प्रमाणान्तरागोचरत्वात् तद्विजिज्ञासस्व मन्तव्य इत्यादिकं वक्तव्यम् । न च तत्संभवति विकल्पासहत्वात् तत्किं नित्यमुत नैमित्तिकं, किं वा प्रायश्चित्तरूपमुत काम्यम् । नाद्यः । अकरणे प्रत्यवायाश्रवणात् । न द्वितीयः । गृहदाहेष्ट्यादिवदनिमित्तश्रवणात् । न तृतीयः । 'ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभ-मालभेते'तिवद्दोषसंयोगे सत्यचोदितत्वात् । न चतुर्थः । विध्युद्देशे फलाश्रवणात् । न चरमः सूत्रस्य प्रमाणापेक्षित-न्यायसूचकत्वात् तदभावे सूत्रत्वस्यैवासङ्गतेः । तस्मात्प्रसञ्जकाभावाच्चासङ्गतिः । शास्त्रासङ्गतिश्च । समन्वयादि-प्रतिपादकं शास्त्रम् । न च समन्वयाद्यन्यतममनेन प्रतिपाद्यत इति आदौ चास्य सूत्रस्य प्रणयने प्रसञ्जकं न पश्याम इति ॥ **उच्यत इति** । अधिगतस्वाध्यायस्य निगमनिरुक्तादिना व्युत्पन्नपदपदार्थस्य भगवानेव सर्वशब्दार्थ इति ज्ञातवतः सात्त्विकप्रकृतेर्वैराग्यादिसम्पन्नस्य मुमुक्षोः किं मया अनुष्ठेयं साधनं किं वा फलमित्यादि जिज्ञासमान-स्यानुग्रहार्थमपेक्षितमागमिकमपि न्यायेन निर्णेतुं प्रारब्धवानिदं शास्त्रं भगवान् सूत्रकारः । ततश्च श्रवणेनैव ज्ञाते वस्तुनि





मननविधानात् ज्ञात एव जिज्ञासा । तद्विजिज्ञासस्वेत्यादीनां प्रसञ्जकत्वात् तस्य मननस्य काम्यत्वात् विध्युद्देशे फलाभावेऽपि 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती'ति अर्थवादेन चोदितेषु रात्रिसंज्ञकेषु कर्मसु आर्थवादिक-प्रतिष्ठाफलवत् 'तरति शोकमात्मविदि'त्यार्थवादिकबन्धनिवृत्तिफलोपपत्तेर्न प्रसञ्जकाभावः । शास्त्रारम्भासिद्धौ हि समन्वयादिकं नोपपद्यत इति शास्त्रारम्भसमर्थनपरस्य सूत्रस्य शास्त्रान्तर्भावः आद्यत्वं चेति न कश्चिद्दोष इति भावः ।

**कुण्डल०**— विषयप्रयोजनाद्यभिधायकस्यास्य प्रथमसूत्रस्योत्पत्तौ कः प्रसङ्गः का वा सङ्गतिः सूत्राव-तारहेतुभूतपूर्वपक्षः क इति भावेन पृच्छति **कः पुनरिति । प्रसङ्ग इति** । सङ्गतिरित्यर्थः । यथा प्रयुज्यते अनेनेति प्रसङ्गः करणे घञ् । सूत्रावतारहेतुभूतपूर्वपक्ष इत्यर्थः । तमेव प्रतिज्ञापूर्वकं प्रदर्शयति **उच्यत इत्यादिना** । पूर्वपक्षस्य विषयसंशयपूर्वकत्वात् तौ दर्शयति **प्रारिप्सिततयेति । वाक्यं चेदमिति** । अनेन संशयमूलः आरम्भ-णीयत्वानारम्भणीयत्वरूपकोटिद्वयसहचरितो वाक्यत्वलक्षणः साधारणधर्मः दर्शितो भवति । न च विशेष इत्यनेन संशयप्रतिबन्धकविशेषादर्शनादिर्दर्शितः । **विशेषस्मृतिमतेति** । कोटिद्वयलक्षणविशेषस्मृतिमतेत्यर्थः ।

**विठ्ठ०**— संशयपूर्वपक्षादिप्रसञ्जकसद्भाव एव सूत्रावतारात् प्रसञ्जकं पृच्छति **कः पुनरिति** । धर्मिणि सिद्धे संशयोत्पत्तिः संशयधर्मिभूतं शास्त्रं चेदानीं नोत्पन्नम् अतः कथं संशय इत्याह **प्रारिप्सिततयेति** । निर्णायका-भावसहकृतसाधारणधर्मस्य संशयबीजत्वात्तद्दर्शयति **उपलभ्यन्त इति** ।

**गूढ०**— ननु श्रौतस्य प्रयोजनादेर्न्यायेनोपपादनार्थमिदं सूत्रमित्युक्तम् । तदयुक्तम् । प्रयोजनादे-रसंभवाशङ्कया एवाभावेन तदुपपादनायोगात् । उपपादनस्य तत्पूर्वकत्वात् तथा चेदं सूत्रं व्यर्थमिति शङ्कते **कः पुनरिति** । एवं च प्रयोजनादेः श्रुतिसिद्धत्वात् श्रुतेश्चापौरुषेयत्वादपौरुषेयश्रुत्युक्ते च संशयाद्यभावेन व्यर्थमिदं सूत्रमित्याक्षेपार्थः किंशब्द इति भावः । तत्र संशयपूर्वपक्षाभ्यामसंभवशङ्कायाः प्राप्तत्वात्तदुपपादनमित्याशयेन सिद्धान्तयति **उच्यत इति** । ननु सिद्धे धर्मिणि धर्मचिन्ता कर्तव्या, प्रकृते शास्त्ररूपधर्मिण एवासिद्धत्वात्कथं तत्रारम्भणीयत्वानारम्भणीयत्वचिन्तेत्यत उक्तं **बुद्धिसन्निहितमिति** । तथाच बुद्धिसन्निधानादेव धर्मिसिद्धिरिति भावः । तथापि पूर्वमनारब्धत्वात् कथं बुद्धिसन्निधानं तत्राह **प्रारिप्सिततयेति** । अस्तु धर्मिज्ञानं तथापि कोटिस्मृत्यभावान्न संशय इत्यत आह **उपलभ्यन्त इति** । तथाच वाक्यत्वरूपसाधारणधर्मदर्शनादारम्भणीयत्वा-नारम्भणीयत्वरूपकोटिस्मृतिरिति भावः । विशेषादर्शनं दर्शयति **न चेति** ।

**११४ सु०— ननु कस्यायं संशयः । न तावत्सूत्रकारस्य । अवगतविशेषत्वात् । अन्यथा निर्णायकसूत्रप्रणयनानुपपत्तेः । नापि परस्य । परेणाद्यापि शास्त्रस्यानुपलब्धत्वात् । अनुपलब्धे च समानधर्मदर्शनाद्ययोगेन संशयोत्पादानुपपत्तेः ।**

**मैवम् । यदीदं शास्त्रं परेणोपलभ्येत तदोक्तसन्देहकारणोपपत्तौ प्रयोजनार्थित्वेन विशेषस्मृतिमतैवं सन्दिह्येतेति सूत्रकृत एव परकीयसंभावितसंशयाहरणोपपत्तेः ।**





**परि०**— **उक्तेति**। धर्मिज्ञानविशेषादर्शनरूपसन्देहकारणेत्यर्थः॥ **विशेषेति**। आरम्भणीयत्वादिकोटिस्मृतिमतेत्यर्थः। तत्र हेतुः **प्रयोजनेति**। अस्मात्प्रयोजनं मया लब्धव्यमिति फलकामित्वेनेत्यर्थः।

**वं०प०**— **अनुपलब्धे** शास्त्ररूपे धर्मिणि॥ **उक्तसन्देहकारणोपपत्ताविति**। आरम्भणीयानारम्भणीयोभयविधवाक्यरूपोक्तसन्देहकारणप्राप्तावित्यर्थः।

**आनन्दः**— **अवगतविशेषत्वादिति**। विशेषदर्शनवत्त्वादित्यर्थः। तथाच विशेषादर्शनरूपकारणाभावान्न संशय इति भावः। **अन्यथेति**। निर्णीतविशेषदर्शनाभाव इत्यर्थः। धर्मिज्ञानस्य हेतुत्वे प्रमाणाभावात्तदभावेऽप्यस्तु संशय इत्यत आह **अनुपलब्ध इति**। आदिशब्देन असाधारणधर्मकोटिस्मृत्यादिपरिग्रहः। **यदीदमिति**। आहार्यसंशयस्य च विशेषदर्शनाप्रतिबन्धित्वादिति भावः।

**कं०रा०**— **विशेषस्मृतिमता** कोटिस्मृतिमता।

**श्रीनिधि०**— **समानधर्मदर्शनाद्ययोगेति**। पररीत्या साधारणधर्मावान्तरविशेषाभिप्रायेण स्वरीत्या वा।

**वा०र०**— धर्मिज्ञानवतः सूत्रकारस्य संशयायोगो निश्चितविशेषत्वात्। अन्यस्य च धर्मिज्ञानशून्यतया तदयोग इत्याशङ्कते **ननु कस्येति**। अवगतविशेषत्वेन सूत्रकारस्य संशयानुपपत्तावपि परस्यैवायं संशयः धर्मिज्ञानाभावेऽपि शास्त्रोत्पत्त्यनन्तरं तदुपलम्भे सति तत्र संशयसंभवात्। न च परसंशयस्य सूत्रकारं प्रत्यप्रबिन्धकत्वात्तन्निरासाय यत्नायोग इति वाच्यम्। तस्य स्वस्मिन्नाहरणेन तन्निरासाय यत्नोपपत्तेरित्याह **मैवमित्यादिनेति**।

**विट्ठ०**— संशयानुपपत्तिमाशङ्क्य समाधत्ते **मैवमिति**।

**चषकः**— **अवगतविशेषत्वात्**। निषेधकोटिव्यावर्तकधर्मदर्शनवत्त्वात्॥ **समानधर्मदर्शनायोगेन**। प्रकृतधर्मितावच्छेदकाभिमतधर्मावच्छिन्नविशेष्यानिरूपित-कोटिद्वयनिरूपितसाहचर्यावच्छिन्न-धर्मनिष्ठप्रकारताशालिदर्शनाद्ययोगेन। विशिष्टानुयोगिकवैशिष्ट्यबोधे विशेष्यतावच्छेदकेप्रकारकज्ञानस्य हेतुत्वादिति भावः।

**गूढ०**— **अवगतविशेषत्वादिति**। विशेषदर्शनवत्त्वादित्यर्थः। तथाच विशेषादर्शनरूपकारणाभावान्न संशय इति भावः। **अन्यथेति**। निर्णीतविशेषदर्शनाभाव इत्यर्थः। धर्मिज्ञानस्य हेतुत्वे प्रमाणाभावात्तदभावेऽप्यस्तु संशय इत्यत आह **अनुपलब्ध इति**। आदिपदेन असाधारणधर्मकोटिस्मृत्यादिपरिग्रहः। **यदीदमिति**। आहार्यसंशयस्य च विशेषदर्शनाप्रतिबध्यत्वादिति भावः।





॥ शास्त्रविहितजिज्ञासायाः कर्तव्यत्वसमर्थनम् ॥

॥ अधिकारिविषयप्रयोजनाभिसंबन्धवत्त्वम् ॥

॥ विषयाद्यभावशङ्का ॥

**कर्तव्यतायाः विषयादिमत्तया व्याप्तिः—**

**११६ सु०— नन्विदं युक्त्यनुसन्धानात्मकविचारमीमांसामननापरनामकजिज्ञासाङ्गभूत-न्यायनिबन्धनं जिज्ञासायाः कर्तव्यतायामारम्भणीयं भविष्यति । न हि विचारः कर्तव्यः तद्वारभूतन्यायनिबन्धनं च नारम्भणीयमिति संभवति । निःसाधनस्य विचारस्यैवानु-त्थानात् । अन्यथा तु नेति जिज्ञासैव विचारणीया ।**

**परि०—** शास्त्रधर्मिकसंशयस्य जिज्ञासाकर्तव्यत्वोक्तिपरसूत्राननुरूपत्वभ्रमनिरासाय सौत्र-जिज्ञासाकर्तव्यत्वाकर्तव्यत्वयोः शास्त्रानारम्भारम्भौ फले इति शङ्कामुखेन दर्शयति **नन्वित्यादिना** । शास्त्रम् इदंशब्दार्थः । शब्दानां भिन्नार्थत्वभ्रमनिरासायोक्तं **युक्त्यनुसन्धानात्मकेत्यादि** । श्रवणाद्यात्म-कत्वे शास्त्रारम्भेण हेतुहेतुमद्भावायोगादुक्तं **युक्त्यनुसन्धानेति** । भाष्यटीकायां श्रवणादिरूपत्वोक्तेर्भावः चन्द्रिकायां व्यक्तः । इच्छायां सन्निधानात्कथमेतदित्यतो रूढोऽयं जिज्ञासाशब्द इति भावेन उक्तं **मीमांसेत्यादि** । जिज्ञासायाः कर्तव्यतायामारम्भणीयं भविष्यतीत्यस्यान्यथा तु नेतीत्यनेनान्वयः । मध्ये हेतुहेतुमद्भावं व्यनक्ति **न हीति** ॥ **न्यायेति** । न्यायाः करणानि यस्याः सा न्यायकरणिका तस्यामित्यर्थः ॥

**यादु०—** ननु जिज्ञासायाः कर्तव्यत्वमेव विचारणीयं न शास्त्रारम्भणीयत्वम् । तस्य तदन्वय-व्यतिरेकानुविधायित्वादित्यभिप्रेत्य शङ्कते **नन्विदमिति** । ननु सन्नन्तजिज्ञासाशब्दवाच्येच्छायां कथं न्यायोऽङ्गभूत इत्यत उक्तम् **विचारमीमांसामननापरपर्यायनामकेति** । ततश्च जिज्ञासाशब्दस्य विचारादिशब्दापरपर्यायत्वा-न्नेच्छापरत्वमत्रेति भावः । सूत्रनिबद्धन्यायानां क्वचिद्विचाराङ्गत्वं क्वचित् मीमांसाङ्गत्वं क्वचिन्मननाङ्गत्वं शास्त्रे व्यवहृतम् । अतस्तस्य सर्वस्य सङ्ग्रहाय विचारेत्याद्युक्तम् । ननु विचारादिरपि न्याय एवातस्तत्र कथं न्यायोऽङ्गभूत आत्माश्रयत्वप्रसङ्गादित्यत उक्तम् **युक्त्यनुसन्धानात्मकेति** । युक्तिभिरनुसन्धानं पूर्वोत्तरपक्षबलाबलचिन्तनं तदा-त्मकेत्यर्थः । यथा आहुः 'पूर्वोत्तरपक्षबलाबलचिन्ता विचार' इति । तथा च विचारशब्दोऽत्र न न्यायपर इति भावः ।

**वं०प०— अङ्गभूतेति** । तत्करणीभूतेत्यर्थः । **न्यायनिबन्धनमिति** । तद्ग्रथनात्मकं शास्त्रमित्यर्थः । भविष्यत्यन्यथा तु नेत्यन्वयः । तत्रारम्भणीयत्वमुपपादयति **न हीति** । **तद्वारभूतेति** । तत्करणीभूतेत्यर्थः ॥ **अन्यथा तु नेतीति** । जिज्ञासाया अकर्तव्यत्वे त्वारम्भणीयं न भविष्यतीत्यर्थः ।





**आनन्दः**— नन्वारम्भणीयत्वानारम्भणीयत्वसंशयो न प्रदर्शनीयः जिज्ञासाकर्तव्यत्वाकर्तव्यत्वसंशयेनान्यथासिद्धत्वादिति शङ्कते **नन्विदमिति**। विचारकर्तव्यत्वेऽप्यारम्भणीयत्वं कुत इत्यत आह **न हीति** । अन्यथा विचारस्याकर्तव्यत्वेन आरम्भणीयत्वं नेति ।

**कं०रा०**— **तद्द्वारेति**। तस्य विचारस्य द्वारभूत उपायभूतो यो न्यायस्तन्निबन्धनमित्यर्थः। **अन्यथेति**। मननापरनामकजिज्ञासाया अकर्तव्यत्वे तदङ्गभूतन्यायनिबन्धनात्मकमिदं शास्त्रमारम्भणीयं न भविष्यतीति जिज्ञासैव कर्तव्या न वा इत्येवं विचारणीयेत्यर्थः।

**श्रीनिधि०**— **युक्त्यनुसन्धानात्मकविचारेति**। युक्तीनामनुसन्धानं युक्त्यनुसन्धानम्। **अन्यथा तु नेतीति**। जिज्ञासाया अकर्तव्यत्वे शास्त्रमारम्भणीयं नेत्यर्थः।

**वा०चं०**— एवं सविषयचिन्तामुपपाद्य सूत्रोक्तकर्तव्यत्वकोटिकां सविषयां तदर्थचिन्तामुपपादयितुं तस्यास्तादर्थ्यं शङ्कामुखेनोपपादयति **नन्विति** । यद्वा शास्त्रारम्भणीयत्वानारम्भणीयत्वयोर्जिज्ञासाकर्तव्यत्वाकर्तव्यत्वे विहाय हेत्वन्तरेण प्राप्त्यभावात्तत्कर्तव्यत्वादौ च स्वत एव तत्सिद्धेः सूत्रकारेण युक्तिभिर्जिज्ञासाकर्तव्यताया एव प्रतिपादनीयतया जिज्ञासाया एव विचारविषयत्वात्तद्धर्मिक एव संशये वक्तव्ये शास्त्रधर्मिकतत्कथनमयुक्तमित्याशङ्कते **नन्विति**। अत्र शास्त्रजिज्ञासयोः स्वरूपकथनं जिज्ञासाकर्तव्यत्वादेरारम्भणीयत्वादिसाधकत्वमुपपादयितुमिति द्रष्टव्यम् । अत्र मननापरनामकेत्युक्त्या जिज्ञासासूत्रस्य मननविधिमूलत्वमेव न तु श्रवणविधिमूलत्वमित्यर्थम्। मीमांसापरनामिकेत्युक्त्या च विचारार्थकमान्धातोर्मान् बधेति स्वार्थसन्नन्तान्निष्पन्नस्य मीमांसाशब्दस्य विचाररूढेः सर्वसिद्धत्वात् जिज्ञासाशब्दस्यापि विचाररूढिं युक्त्यनुसन्धानात्मकेति विचारशब्द व्याख्यानपूर्वं विचारशब्दपर्यायत्वोक्त्या च तर्हि मान्धातोर्विचारार्थत्वेऽपि विचारस्य श्रवणरूपत्वान्मीमांसापरनामकत्वं मननापरनामकत्वं च विरुद्धमिति शङ्कापरिहारं च सूचयति **विचारणीयेति**। ('गुप्तिज्किद्भ्यः सन्'। 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' । सूत्रद्वयोक्तेभ्यः सन्स्यान्मानादीनामभ्यासस्येकारस्य दीर्घश्च । मानेः जिज्ञासायाम् । अभ्यासस्य विकार आभ्यासः स चेत्वमेव । तथा हि दीर्घश्रुत्याऽच इत्युपस्थितम् । न च मानादीनामभ्यासस्य विकारभूतोऽच् इकारादन्यः संभवति। यदि तु ह्रस्व इत्येव गृह्येत तर्हि तद्धितनिर्देशो व्यर्थः स्यात् । स ह्यभ्यासे ईकारश्रवणार्थं क्रियते । अन्यथाऽजन्तस्याभ्यासस्य विधीयमानो दीर्घो हलादिशेषमात्रं प्रतीक्षतां न तु सन्वदित्वमपि । तदेवाह । इकारस्येति । सनाद्यन्ता इति धातुत्वम् । 'सन्यङोः' । सन्नन्तस्य यङन्तस्य च प्रथमस्यैकाचो द्वेस्तोऽजादेस्तु द्वितीयस्य। 'अः प्रत्ययात्'। प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारप्रत्ययः स्यात् । मीमांसा । कर्मण्यनीयरिति । 'तव्यत्तव्यानीयरः' । धातोरेते प्रत्यया भावकर्मणोः स्युः । तकाररेफौ स्वरार्थौ । एधितव्यम् । एधनीयं त्वया भावे औत्सर्गिकमेकवचनं क्लीबत्वं च। चेतव्यश्चयनीयो वा धर्मस्त्वयेत्याद्युदाहरणानि।) तथा च तद्धर्मिक एव संशयः प्रदर्शनीय इति वाक्यशेषः ।





**वा०र०— एवं सविषयेति** । शास्त्ररूपविषयसहितां फलचिन्ताम् । सामान्यतो धर्मिज्ञानादिसमर्थनेन विषयत्वोपपादनद्वारा फलीभूतारम्भणीयत्वचिन्तायाः सविषयत्वमुपपाद्येत्यर्थः । एवं सविषयां तदर्थेत्यत्र तदर्थचिन्तायाः सविषयत्वमुपपादयितुमित्यर्थः । जिज्ञासारूपविषयोपेतत्वस्य प्रतिपादयिष्यमाणत्वादेवमुक्तम् । सविषयत्वोपपादनेन चिन्तामुपपादयिष्यन्निति यावत् । तस्याः । तदर्थचिन्तात्वेनाभिमतायाः कर्तव्यत्वकोटिकचिन्तायाः । तादर्थ्यं फलीभूतचिन्तार्थत्वम् । अत्र पक्षे फलचिन्ताया एव प्राधान्यप्राप्त्या सूत्रोक्तकर्तव्यत्वकोटिकचिन्तायाः प्राधान्यप्रतीतिविरोध इत्यतः तदर्थचिन्तात्वेनोक्ताया एव प्राधान्यप्रधानार्थविषयकत्वात् । तस्यां च सिद्धायामारम्भणीयत्वानारम्भणीयत्वकोटिका फलीभूतचिन्ता स्वत एव सिद्ध्यतीत्येवं तत्प्राधान्यं शङ्कामुखेन वदन्नवतारयति **यद्वा शास्त्रेति** । **जिज्ञासाकर्तव्यत्वादेरिति** । जिज्ञासाकर्तव्यत्वस्य शास्त्रारम्भणीयत्वसाधकत्वं तदकर्तव्यत्वस्य च तदनारम्भणीयत्वसाधकत्वमुपपादयितुं न्यायानुसन्धानत्वादिरूपेण जिज्ञासादिस्वरूपकथनमित्यर्थः । न हि विचार इत्याद्युत्तरमूले तत्स्पष्टमिति भावः । **मननविधिमूलत्वमेवेति** । श्रुतिसूत्रयोर्युक्त्यनुसन्धानात्मकविचाररूपैकविषयत्वोपपत्त्या समानविषयत्वलाभादिति भावः । **न तु श्रवणेति** । न्यायग्रथनात्मकशास्त्रारम्भसिद्धये विचारकर्तव्यत्वोक्त्यन्यथानुपपत्त्या सूत्रोक्तविचारस्य तत्त्वनिर्णायकन्यायानुसन्धानरूपत्वात् श्रवणस्य चोक्तानुसन्धानरूपत्वस्य मननाभेदप्राप्त्याऽयोगेन श्रवणविधिमूलत्वं नेत्यर्थः । यथा चैतत्तथा न्यायामृततृतीयपरिच्छेदीयश्रवणविधेर्विचारविधायकत्वभङ्गे स्पष्टमिति भावः । **इत्यर्थम्** इत्यस्य रूढिमित्यस्य च सूचयतीत्युत्तरेण संबन्धः । विचारार्थकमानधातोरित्यकारान्तमानेः पाठः । **मान् बधेतीति** । 'मान्बध्दान्शान्भ्यो दीर्घश्चाभ्यासस्ये'ति सूत्रेणेत्यर्थः । **स्वार्थसन्नन्तादिति** । यद्यपि मान्बधेत्येतत्सूत्रीयमानेर्जिज्ञासायामित्यादि काशिकाव्याख्यावसरे अर्थविशेषे मानधातोः समभ्यनुज्ञानमनर्थकम् । ज्ञानार्थवृत्तेर्मनेर्धातोः कर्मण इत्युत्तरसूत्रेणैव सनः सिद्धत्वादित्याशङ्क्य दीर्घस्येडभावस्य च सिद्ध्यर्थमेतत्सूत्रमिति मञ्जर्यामुक्तेरिच्छार्थ एव सन्नयं विहित इति ज्ञायते । अत एव मान्बधेत्यादिना मीमांसाशब्दस्यानिच्छार्थे सति व्युत्पादनम् । इच्छार्थे उत्तरत्र सन् विधानादिति भामतीकल्पतरूक्तमपि निरस्तम् । उक्तमञ्जरीविरोधात् । तथापि भाष्यस्थ'शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थकः । सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यत' इति श्लोकव्याख्यावसरे भवार्थप्रत्ययान्तात्तदर्थकसरूपप्रत्ययो न भवति । मतुबन्तान्न मतुप् । विरूपस्त्वाहिच्छत्रीयः दण्डिमतीति भवति । सन्नन्तात्तु सरूपोऽपि सनर्थभेदे भवति । यथा जुगुप्सितेत्यादौ गुप्तिज्किद्भ्यः सन् । मान्बधदान्शान्भ्य इत्यादिना स्वार्थे सन्नन्तादपि इच्छार्थे सन्नित्यादिप्रतिपादनात् सन्नन्तान्न सनिष्यत इत्यस्य सङ्कोचरूपेच्छासन्नन्तात्प्रतिषेधो वक्तव्य इत्यादि काशिकायां विशेषणं किं जुगुप्सिषते मीमांसिषत इत्याद्युदाहरणादनिच्छार्थेऽपि सन्नयमित्यस्य तेन लब्धत्वात् स्वार्थसन्नन्तात् स्यादेवेति मीमांसिषत इत्याद्युपपादनाय कौमुदीद्वयेऽपि प्रतिपादनात् स्वार्थसन्नन्तादिति मान्बधेत्यनेनेति । उक्तं च शेष्याम् । योऽपि निन्दादिषु गुपादिभ्यः सन् सोऽपि स्वार्थिक एवेति भावः । जुगुप्सिषत इति । गुप्तिज्किद्भ्यः सन् । ततः परस्य सनः आर्धधातुकत्वादिट् अतो लोपः । मीमांसिषत इति । मान् बधेत्यादिना सन् इति । तट्टीकासु व्याख्यातत्वाच्च मान् बधेति सूत्रस्य स्वार्थेऽपि सन् विधायकता अस्त्येव । अधिकं तत्सूत्रीयग्रन्थेषु ज्ञेयमिति मनसि कृत्वा स्वार्थसन्नन्तादित्युक्तमिति न दोष इति द्रष्टव्यम् । **निष्पन्नस्येति** । सन्प्रत्ययान्तमीमांसशब्दादः-





प्रत्ययादित्यनेन चिकीर्षेत्यादाविव अकारप्रत्यये स्त्रीत्वाट्टापि च निष्पन्नस्येत्यर्थः। **जिज्ञासाशब्दस्यापीति**। एतेन विचारपर्यायेषु मीमांसाशब्दगणनेऽपि जिज्ञासाशब्दगणनाभावान्न तस्य विचारार्थतेति निरस्तम्। अपरनामके-त्युक्तिबलेन तस्याप्युपसंख्याने तात्पर्यात्। वक्ष्यति च मूलकारः। यदि च जिज्ञासाशब्दो मीमांसाशब्दवद्विचार एवोपसंख्यायत इति। अधिकं जिज्ञासाशब्दविचारावसरे टीकायां ज्ञातं भविष्यति। **विरुद्धमिति शङ्कापरिहारं चेति**। मानधात्वर्थस्य विचारस्य मननरूपतया श्रवणरूपतानङ्गीकारादिति भावः। अनुमानविचारापरपर्यायजिज्ञासेति स्वप्नाधिकरणमूले वक्ष्यमाणत्वादनुमानेत्यप्युपलक्षणया ग्राह्यम्। 'तव्यत्तव्यानीयर' इति सूत्रेण भावकर्मणोः तव्यत् तव्य अनीयर् इत्येतत्प्रत्ययविधानाद्भावस्यैकत्वेनौत्सर्गिकैकवचनस्य क्लीबतायाश्च विधानादेधितव्यमेधनीयं त्वयेत्यादाविव नपुंसकत्वापत्तिवारणायाह **कर्मण्यनीयरिति**। सत्यमित्यङ्गीकारो न युक्तः। तर्हि शास्त्रधर्मिक-संशयस्य प्राक्प्रदर्शनमयुक्तं स्यादित्यतस्तद्ग्रन्थतात्पर्यमाह **चिन्तासाफल्यायेति**।विचारस्य कर्तव्यतायामपि कुतः शास्त्रस्यारम्भणीयत्वमित्यत आह **न हीति** मूलम्। **निःसाधनस्येति**। न्यायग्रथनातिरेकेण न्यायानुसन्धान-साधनान्तरस्यानिरूपणादिति भावः। **अन्यथा तु नेति** मूलम्। विचारस्याकर्तव्यत्वे शास्त्रं नारम्भणीयमित्यर्थः। जिज्ञासायां संशय इत्यन्वयः।

**स०व्र०— नन्विदमित्या**देरयमर्थः। जिज्ञासायाः कर्तव्यताऽकर्तव्यते विचार्ये न शास्त्रस्य आरम्भणीय-तानारम्भणीयते। तयोस्तदन्वयव्यतिरेकानुविधायित्वादिति। तत्र योग्यतां प्रदर्शयितुं न्यायनिबन्धनमित्युक्तम्। न हीत्यादिनान्वयव्यतिरेकौ दर्शितौ। केचिज्जिज्ञासाशब्दस्य रूढ्या लक्षणया वा श्रवणार्थत्वमाहुः। तन्निरासार्थं युक्त्यनुसन्धानेत्यादिना जिज्ञासाशब्दार्थो दर्शितः। श्रवणादित्रयं जिज्ञासाशब्दार्थत्वेन प्रसक्तम्। प्रकृतिप्रत्ययार्थयो-र्ज्ञानेच्छयोः साध्यसाधनभावानुपपत्तेः अस्य तदुपपादकत्वाच्च तत्र तत्र श्रवणस्योपदेशमात्रेण सिद्धेः निदिध्यासनस्य मननानन्तरं स्वत एव सिद्धत्वात् मननस्य असंभावनाविपरीतभावनाव्युदासार्थत्वेन न्यायनिबन्धनापेक्षत्वात्तदेव जिज्ञासाशब्दार्थ इत्यर्थः।

**कुण्डल०—** ननु जिज्ञासायाः कर्तव्यतासमर्थनेनैव शास्त्रारम्भसिद्धेर्विशिष्य शास्त्रारम्भणीयत्वं न समर्थ-नीयमिति शङ्कते **नन्विदमिति**। **युक्त्यनुसन्धानेति**। युक्तिभिः क्रियमाणपूर्वोत्तरपक्षानुसन्धानात्मिकेत्यर्थः। शास्त्रे तत्र तत्र विचारमीमांसामननशब्दानां प्रयोगात्तत्संग्रहाय त्रितयोक्तिः। अत एव जिज्ञासायाः ज्ञानेच्छारूपत्वेन कृत्यसाध्यत्वात् तस्याः कर्तव्यतासाधनमयुक्तमिति निरस्तम्। रूढ्या लक्षणया वा जिज्ञासाशब्देन विचारस्यैव प्रतिपादनात्। **तद्द्वारभूतेति**। विचारोपायभूतेत्यर्थः। **अन्यथेति**। विचाररूपजिज्ञासायाः अकर्तव्यत्वे तदङ्गभूत-न्यायनिबन्धनात्मकमिदं शास्त्रमारम्भणीयं न भविष्यति इति हि जिज्ञासैव कर्तव्या न वेति विचारणीयेत्यर्थः।

**विठ्ठ०—** ननु कर्तव्या न वेति जिज्ञासैव विचारणीया, न त्वारम्भणीयत्वं शास्त्रस्य। जिज्ञासायाः कर्तव्यतासिद्धौ आरम्भणीयतायाः तत एव सिद्धत्वादित्याशङ्कते **नन्विदमिति**। ननु जिज्ञासाशब्दस्येच्छापरत्वेन कथं न्यायस्य तदङ्गभूतत्वमित्यत्रोक्तजिज्ञासाशब्दस्य विचारार्थत्वमेव न त्विच्छापरत्वमित्याशयेन शास्त्रे बहुधा व्यवहारात्





सर्वसङ्ग्रहायोक्तं **विचारमीमांसामननापरनामकमिति**। जिज्ञासायाः कर्तव्यतायाम् आरम्भणीयं भविष्यति अन्यथा नेति हेतोः जिज्ञासैव विचारणीयेति संबन्धः। जिज्ञासायाः कर्तव्यत्वेऽप्यारम्भणीयत्वं कुत इत्यतो मध्ये युक्तिरभिधीयते **न हीति**। कुतो न संभवतीत्यतो विचारं प्रति न्यायनिबन्धनस्य साधनत्वात्तदभावे तत्साध्यस्य विचारस्यैवानुत्थानादित्याशयेन निस्साधनस्येत्युक्तम्।

**गूढ०**— नन्वारम्भणीयत्वानारम्भणीयत्वसंशयो न प्रदर्शनीयः। जिज्ञासाकर्तव्यत्वाकर्तव्यत्वसंशयेनान्यथासिद्धत्वादिति शङ्कते **नन्विदमिति**। विचारकर्तव्यत्वेऽप्यारम्भणीयत्वं कुत इत्यत आह **न हीति**। अन्यथाविचारस्याकर्तव्यत्वेन आरम्भणीयत्वं नेति।

**११६ सु०— सत्यम्। एतच्छास्त्रव्युत्पादनीयन्यायकरणिकायां जिज्ञासायाम् उभयविधव्यापारदर्शनाद् विशेषादर्शनाच्च संशयः किं कर्तव्या न वेति। ननु च 'तद्विजिज्ञासस्व' इति जिज्ञासायाः श्रुतिविहितत्वात् कथं विशेषादर्शनम्। मैवम्। विना विचारेण श्रुत्यर्थस्य अद्याप्यनिर्णीतत्वेन संशयास्पदत्वात्।**

**परि०— विना विचारेणेति**। विषयप्रयोजनादिमत्त्वरूपन्यायानुसन्धानेन विना जिज्ञासाकर्तव्यत्वरूपश्रुत्यर्थस्येत्यर्थः॥

**यादु०**— अस्माभिरपि जिज्ञासाकर्तव्यतैव विचार्यते। आरम्भणीयत्वविचारस्तु तत्फलभूतोऽतः पूर्वं प्रदर्शित इत्याशयवानाह **सत्यमिति**। **संशयास्पदत्वादिति**। वक्ष्यमाणरीत्या विषयाद्यभावेनोपपत्तिविरोधात्। तद्विजिज्ञासस्वेत्यादिकं न प्रमाणतया निश्चेतुं शक्यमित्याशयः।

**आनन्दः**— अभ्युपेत्य परिहरति **एतच्छास्त्रेति**। जिज्ञासायां संशय इत्यन्वयः। जिज्ञासायाः कर्तव्यत्वेऽपि शास्त्रस्यारम्भणीयत्वे किमागतमित्यत उक्तम् **एतच्छास्त्रेति**। तच्छास्त्रेति एतच्छास्त्रव्युत्पादितन्यायाः करणं यस्यामिति विग्रहः। संशयकारणसाधारणधर्मं दर्शयति **उभयेति**। तथा च व्यापारत्वमेव साधारणो धर्मः। तस्य च कर्तव्यत्वाकर्तव्यत्वयोर्लोके दृष्टत्वाज्जिज्ञासाया अपि व्यापारत्वात्संशय इति भावः।

**श्रीनिधि०— न्यायकरणिकायामिति**। ननु कथमिदं न्यायानुसन्धानस्य न्यायकर्मत्वादिति चेन्न अनुमित्यपेक्षयैवमुक्तत्वात्।

**वा०चं०**— चिन्तासाफल्याय शास्त्रधर्मिकानारम्भणीयत्वादिकोटिकसंशयप्रदर्शनेऽपि विचार्यत्वाज्जिज्ञासायास्तद्धर्मिक एव संशयः प्रदर्श्यत इत्याह **सत्यमिति**। एतच्छास्त्रेत्यादिना जिज्ञासाया विषयत्वाय बुद्धिसन्निहितत्वोक्तिः। तद्विजिज्ञासस्वेति श्रुत्या जिज्ञासायाः कर्तव्यत्वे प्रतिपादितेऽपि ज्ञानेच्छयोश्च





विधेयत्वासंभवेन विचारविधानस्य च वस्तुतः संभवेऽपि प्रकृतब्रह्मविचारकर्तव्यत्वं श्रुत्युक्तमपि तस्य विषयादिमत्त्वे युक्तं तदभावे चायुक्तमिति सूत्रे वर्तिष्यमाणविषयादिमत्त्वविचारसाध्यस्य श्रुत्यर्थभूतविचारकर्तव्यताया युक्तत्वस्य सूत्रप्रवृत्तेः पूर्वं विषयादिसंशयदशायामनिश्चितत्वेन श्रुतेः विशेषदर्शनत्वासंभव इत्याह **मैवमिति** । श्रुत्यर्थस्य विचारकर्तव्यत्वस्याद्यापि विषयादिसंशयदशायामप्यनिर्णीतत्वेन युक्ततयाऽनिश्चितत्वेन । अनेन अस्मिन्नधिकरणे अस्य विषयवाक्यत्वं सूचितमुपपादितं भवति । न चैवं तद्ब्रह्मेत्यादि ब्रह्मशब्द इत्याद्युत्तराधिकरणादाविव तद्विजिज्ञासस्वेति श्रुत्युक्तजिज्ञासा कर्तव्या न वेति सन्देह इति साक्षादेव तस्य विषयवाक्यत्वसूचनसंभवे सन्देहहेतुविशेषादर्शनोपपादनमुखेन तस्य विषयवाक्यत्वसूचनोपपादने कुत इति वाच्यम् । तद्विजिज्ञासस्वेति वाक्यार्थविचारपरस्याप्यस्य न तेन रूपेण प्रवृत्तिरपि तु शास्त्रव्यापारविचारकर्तव्यतासमर्थनद्वारेण शास्त्रारम्भणीयताप्रतिपादकत्वमुखेनेति दर्शयितुं तथा सूचनमिति द्रष्टव्यम् ।

**वा०र०—— एतच्छास्त्रेति** मूलम् । एतच्छास्त्रव्युत्पादनीयाः न्यायाः करणं यस्या इति विग्रहः । व्यापारत्वं साधारणो धर्म इत्यभिप्रेत्याह **उभयेति** मूलम् । **ज्ञानेच्छयोश्चे**त्यादि टीका । अनेन श्रुत्यर्थस्य ज्ञानेच्छाविधानस्य असंभवादेव तद्विशेषदर्शनत्वाभावः कुतो नाश्रित इति शङ्का निराकृता भवति । **सूत्रे वर्तिष्यमाणेति** । सूत्रे वर्तिष्यमाणो यो विषयादिमत्त्वविचारस्तत्साध्यस्येत्यर्थः । विचारस्वरूपप्रदर्शनं प्रकृतब्रह्मेत्यादिसूत्रितमुपपादितं च भवतीति मूलकोशानुसारी पाठः । सूचनपूर्वकमुपपादितमिति यावत् । वक्ष्यति च **सूचनोपपादने इति** । तद्ब्रह्मेत्ययं ब्रह्मशब्द इत्याद्युत्तरेति पाठः । आदिपदेन तैत्तिरीयके स वा एष पुरुषोऽन्नरसमय इत्यादिनेत्यानन्दमयाधिकरणाद्युक्तिर्ग्राह्या । सूचनोपपादने कुत इति प्रयोजनप्रश्नानुसारेण प्रयोजनमाह **तद्विजिज्ञासस्वेतीति** । अत्र सूचनादिति पञ्चम्यन्तपाठः । सूचनमितिपाठे यत इति शेषः । इतीत्यस्यावृत्तिर्वा । उपलक्षणं चेदमुपपादनं चेत्यपि ज्ञेयम् ।

**स०व्र०—— सत्यमिति** । अस्माभिरपि जिज्ञासाकर्तव्यतैव विचार्यते । शास्त्रस्य आरम्भणीयत्वानारम्भणीयत्वविचारस्तु फलभूत इत्यर्थः ॥ **एतच्छास्त्रेति** । पूर्वपक्षसिद्धान्तन्यायाभ्यां कर्तव्यताकर्तव्यतयोरुपस्थितिसंभवाद्विनिगमकाभावाच्च संशय इत्यर्थः ॥

**कुण्डल०—** जिज्ञासाकर्तव्यतासमर्थनं प्रति शास्त्रारम्भस्य फलत्वात् शास्त्रारम्भणीयत्वसमर्थनं युक्तमेवेति भावेन परिहरति **सत्यमिति** । **उभयविधेति** । विचारे कर्तव्यत्वाकर्तव्यत्वलक्षणोभयविधव्यापारदर्शनादित्यर्थः ।

**विठ्ठ०—** अस्माभिरपि जिज्ञासैव कर्तव्यत्वेन विचार्यते आरम्भणीयताविचारस्तु जिज्ञासाविचारफलरूपत्वात् पूर्वं दर्शित इति भावेन जिज्ञासाविषयकसंशयादिकं दर्शयति **सत्यमेतच्छास्त्रेति** । **एतच्छास्त्रव्युत्पादनीयो** यः सिद्धान्तः न्यायः स एव यस्याः जिज्ञासायाः कर्तव्यत्वनिश्चये करणभूता सा न्यायकरणिका तस्यां जिज्ञासायाम् । लोके कर्तव्याकर्तव्योभयविधव्यापारदर्शनात् प्रकृते विशेषादर्शनाच्च भवति सन्देह इत्यर्थः ।





**चषकः**— चिन्तासाफल्याय शास्त्रधर्मिकसन्देहस्य प्रदर्शितत्वेऽपि प्राधान्याज्जिज्ञासाधर्मिक एव स प्रदश्र्यत इत्याशयेनाह **सत्यमिति** ॥ **विशेषादर्शनम्** । व्यावर्तकादर्शनम् । प्राक्सूत्रप्रवृत्तेर्विषयादिसन्देहदशायां श्रुत्यर्थभूतविचारकर्तव्यत्वस्यानवधृत्या श्रुतेर्न विशेषदर्शनता घटत इत्यनुसन्दधानः समाधत्ते **मैवमिति** । **श्रुत्यर्थस्य** विचारकर्तव्यत्वस्य ॥ **अद्यापि** विषयादिसन्देहदशायाम् । **अनिर्णीतत्वेन** युक्तत्वप्रकारकनिश्चया-विषयीकृतत्वेन । एतेन प्रकृतनये विषयवाक्यतैतस्य ध्वन्यते ॥ **संशयास्पदत्वाद् इति** । अभिधास्यमानदिशा विषयाद्यभावलक्षणयुक्तिविरोधात्तद्विजिज्ञासस्वेति वाक्यं प्रामाण्यप्रकारकनिश्चयेनावगाढुं दुःशकमिति भावः ॥

**गूढ०**— अभ्युपेत्य परिहरति **एतच्छास्त्रेति** । जिज्ञासायां संशय इत्यन्वयः । जिज्ञासायाः कर्तव्यत्वेऽपि शास्त्रस्य आरम्भणीयत्वे किमागतमित्यत उक्तम् **एतच्छास्त्रेति** । एतच्छास्त्रव्युत्पादितन्यायाः करणं यस्यामिति विग्रहः । संशयकारणसाधारणधर्मं दर्शयति **उभयेति** । तथाच व्यापारत्वमेव साधारणधर्मः । तस्य च कर्तव्यत्वा-कर्तव्यत्वयोर्लोके दृष्टत्वेन जिज्ञासाया अपि व्यापारत्वात् संशय इति भावः ।

**११७ सु०— तत्र तावज्जिज्ञासा न कर्तव्येति प्राप्तम् । कुतः । विषयप्रयोजनसंबन्धाधिकारि-लक्षणानुबन्धविधुरत्वात् । कर्तव्यता खलु विषयादिमत्तया व्याप्ता । कृष्यादिकं हि सति विषयभूते भूम्यादौ, प्रयोजने च सस्याधिगमादौ, अधिकारिणि च कृषीवलादौ कर्तव्यमुप-लब्धम् । सा च व्यापिका व्यावर्तमाना इतो व्याप्यामपि कर्तव्यतां व्यावर्तयतीति प्रतिबन्धसिद्धिः ।**

**परि०— अनुबन्धेति** । अनुबध्यते प्रवर्त्यतेऽनेन प्रणेता श्रोता चेत्यनुबन्धः प्रवर्तक-स्तद्विधुरत्वादित्यर्थः । व्यतिरेकमुखेन व्याप्तिमाह **कर्तव्यतेति** ॥ **प्रतिबन्धेति** । व्याप्तिसिद्धिरित्यर्थः ।

**आनन्दः**— तथापि विपरीतप्राप्तेरभावात्प्रयोजनाद्युपपादनमयुक्तमित्यतो विपरीतप्राप्तिं दर्शयति **तत्रेति** । तत्राकर्तव्यत्वे विषयादिशून्यत्वादीनां प्रत्येकमेव हेतुत्वं अन्यथा विशेषणवैयर्थ्यापत्तेरिति भावः । तत्र हेतोर्व्याप्ति-मुपपादयति **कर्तव्यतेति** ।

**श्रीनिधि०— कर्तव्यता खलु विषयादिमत्तया व्याप्ते**त्यादिना सामान्यानुमानमुक्तम् ।

**वा०चं०**— तत्रोक्तरीत्या विषयसंशयसिद्धौ तस्यां न्यायविरोधाभावाद्युक्ता पूर्वपक्षप्राप्तिरित्याह **तत्रेति** । तद्विध्यप्रामाण्यशास्त्रानारम्भणीयत्वप्राप्त्यपेक्षया तावच्छब्दः । यद्वा सिद्धान्तापेक्षया तावच्छब्द इति ध्येयम् ॥ **विषयेति** । तत्र विषयादीनां वैधुर्यं प्रत्येकमेव हेतुर्न तु मिलितम् । प्रत्येकं व्यभिचाराभावादिति द्रष्टव्यम् । अनुबन्ध-





ग्रहणं च यत्र कर्तव्यता तत्र विषयादिकमनुबद्ध्यत एवेति व्युत्पत्त्याऽनुबन्धशब्दस्य तत्र प्रसिद्धिसूचनद्वारा विषयादिमत्त्वस्य कर्तव्यताव्यापकत्वसूचनेन विपक्षे बाधकत्वं सूचयितुं न तु हेत्वन्तर्गतम्। अनुबन्धशब्दार्थमेव विशदयन् कृष्यादिकमत्र. व्यतिरेकदृष्टान्त इति सूचयति **कर्तव्यतेत्यादिना**। स्यादेतदेवं यदि विषयादिमत्त्वस्य कर्तव्यताव्यापकत्वं स्यात्।

**वा०र०**— एवं विषयसंशयतद्बीजान्युक्त्वा पूर्वपक्षार्थं प्रवृत्तं **तत्र तावदिति** मूलगतं तत्रेत्येतदनूद्य व्याकुर्वन्नुत्तरवाक्यतात्पर्यमाह **तत्रोक्तरीत्येति**। विषयसंशययोः सतोरेव सन्दिग्धेऽर्थे न्यायः प्रवर्तत इति न्यायेन विपरीतयुक्त्यनुसन्धानात्मकपूर्वपक्षप्रवृत्तेः प्रकृते च विषयाद्यभावात्तदभावेऽपि पूर्वपक्षप्रवर्तने उक्तन्यायविरोध इति किल शङ्कनीयम्। न चात्र तथास्ति। एतच्छास्त्रेत्याद्युक्तरीत्या तयोः संभवेन न्यायविषयस्य प्राप्त्या तत्प्रवृत्ति-संभवेन तद्विरोधाप्रसक्तेस्तन्न्यायेन विपरीतयुक्त्यनुसन्धानरूपपूर्वपक्षप्रवृत्त्युपपत्तेरित्याहेत्यर्थः। टीकायां संशयपदं संशयबीजस्याप्युपलक्षणम्। युक्तिस्तु प्रागुक्तैवेति ज्ञेयम्। तद्विध्यप्रामाण्यादेर्जिज्ञासाकर्तव्यत्वाभावे स्वतः-सिद्धतया पृथक्प्रमेयान्तरत्वाभावं मन्वानः पक्षान्तरमाह **यद्वेति**। विषयप्रयोजनेत्यादिना चतुष्टयशून्यत्वरूपो विशिष्टो हेतुरिति भ्रान्तिपरिहाराय निर्विषयत्वादिहेतुभ्य इति चन्द्रिकां मनसि कृत्वाह **अत्र विषयादीनामिति**। **तत्र प्रसिद्धीति**। विषयादिमत्त्वस्य कर्तव्यताव्यापकत्वे प्रसिद्धीत्यर्थः। कथमनुबन्धशब्दस्य तत्र प्रसिद्धिसूचनमित्यतो यत्रेत्यादिव्युत्पत्त्येत्यन्तम्। **विपक्षे बाधकमिति**। विषयाद्यभावेऽपि कर्तव्यत्वमस्त्विति प्राप्ताप्रयोजकत्वशङ्कायाः परिहाररूपं यदि कर्तव्यत्वव्यापकाभावेऽपि कर्तव्यत्वाङ्गीकारस्तर्हि प्रसिद्धतद्व्याप्यव्यापकभावभङ्ग इत्येवं बाधकं सूचयितुमित्यर्थः। **नन्विति**। येन व्यभिचारवारणप्रयोजनाभावेन तदर्थताशङ्का स्यादिति भावः। **विशदयन्निति**। व्यापकाभावलिङ्गकानुमानमेतदिति दर्शयितुं कर्तव्यत्वविषयादिमत्त्वयोर्व्याप्यव्यापकभावोऽस्तीति स्पष्टयन्नित्यर्थः। **कृष्यादिकमत्र व्यतिरेकेति**। व्यापकाभावलिङ्गकव्याप्याभावानुमानीयव्याप्तिसिद्ध्यर्थकव्यतिरेकव्याप्तौ दृष्टान्तः कृष्यादिकमिति सूचयतीत्यर्थः। कृष्यादिदृष्टान्तेन कर्तव्यत्वविषयादिमत्त्वयोर्व्याप्तिमुपपाद्य व्यापकाभावलिङ्गक-मेतदनुमानमिति दर्शयितुमेव **सा च व्यापिका व्यावर्तमाने**त्यादेर्मूले उक्तत्वात्। **इति प्रतिबन्धसिद्धिरिति** मूलम्। इत्येवं व्यापकाभावेन व्याप्याभावानुमानाङ्गीकारादेतदनुमानीयसाध्यसाधनयोरभावरूपे ये कर्तव्यत्वविषयादिमत्त्वे; तयोर्यत्र कर्तव्यता तत्र विषयादिमत्त्वं यथा कृष्यादावित्येवंरूपा या व्याप्तिस्तद्रूपा या व्यतिरेकव्याप्तिस्तत्सिद्धि-रित्यर्थः। केचित्त्वेवं व्यापकाभावेन व्याप्याभावानुमानाङ्गीकारादेतदनुमानीयहेतुसाध्ययोः यत्र व्यापकाभावस्तत्र व्याप्याभाव इत्येवंरूपेण सामान्यव्याप्तिसिद्धिरित्यर्थ इत्याहुः। अपरे त्वेवं व्यतिरेकयोर्व्याप्तिं मूलीकृत्य साधनाङ्गीकारात् तदभावव्यापकाभावप्रतियोगित्वेन हेतोः साध्येनान्वयव्याप्तिसिद्धिरित्यर्थ इति वदन्ति **व्यापकत्वं स्यादिति**। कृष्यादौ दृष्टसामानाधिकरण्यमात्रस्य साधकत्वायोगादिति भावः। तथा चास्या व्यापकाभावलिङ्गक-त्वमेव नास्तीति नैतदनुमानीयव्याप्तिसिद्धिरित्याशयः।

**स०व्र०— तत्र तावदित्यादि**। जिज्ञासा न कर्तव्या विषयविधुरत्वात् समनस्केन्द्रियसन्निकृष्टस्यालोक-मध्यमध्यासीनस्य घटस्य जिज्ञासावत्। प्रयोजनशून्यत्वात् सन्दिग्धवायसदशनजिज्ञासावत्। संबन्धरहितत्वा-





च्छब्दज्ञानार्थिनो वैद्यकजिज्ञासावत् । अधिकारिरहितत्वात् मुमुक्षोर्वात्स्यायनशास्त्रोक्तार्थवत् । सर्वत्र व्यतिरेके कृष्यादिवदिति दृष्टान्त इति भावः ॥ **वात्स्यायनं** भोगशंसनम् ॥

**कुण्डल०— सा चेति** । विषयादिमत्तेत्यर्थः । **प्रतिबन्धेति** । व्याप्तिरित्यर्थः ।

**विठ्ठ०—** एतच्छास्त्रेत्याद्युक्तिस्तु सविषयत्वाय बुद्धिसन्निहितत्वप्रदर्शनार्थम् । **तत्र तावदिति** । तावच्छब्दो अनारम्भणीयत्वप्राप्त्यपेक्षया सिद्धान्तापेक्षया वा । न च विषयादिविधुरत्वहेतोः अप्रयोजकता अकारणकार्योत्पत्तिप्रसङ्गस्य विपक्षे बाधकस्य सत्त्वादित्याह **विषयादीति** ।

**चषकः— अनुबन्धविधुरत्वादिति** । कर्मसाधनघञन्तोऽनुबन्धशब्दो अनुबध्यमानपरः । अत्र च हेतुचतुष्टयमेवाभिप्रेतं न त्वेकविशेषितापररूपं तत्कूटरूपं वा तेन न निग्रहसिद्ध्यवकाशः । **कर्तव्यता** कृतिविधेयता । **विषयादिमत्तया व्याप्ता** विषयादिमत्तानिरूपितव्याप्तिविशेषिता ।

**गूढ०—** तथापि विपरीतप्राप्तेरभावात् प्रयोजनाद्युपपादनमयुक्तमित्यतो विपरीतप्राप्तिं दर्शयति **तत्रेति** । अत्राकर्तव्यत्वे विषयादिशून्यत्वादीनां प्रत्येकमेव हेतुत्वमन्यथा विशेषणवैयर्थ्यापत्तेरिति भावः । तत्र हेतोर्व्याप्तिमुपपादयति **कर्तव्यतेति** ।

**११८ सु०— विषयादिसद्भावो हि जिज्ञासायाः कारणम् । न च कारणाभावे कार्यमुत्पत्तुमर्हति । विषयशून्यत्वाद्धि समनस्केन्द्रियसन्निकृष्टस्य स्फीतालोकमध्यवर्तिनो घटस्य न जिज्ञासा क्रियते । प्रयोजनविकलत्वात्खलु सन्दिग्धमपि वायसदशनादिकं न जिज्ञास्यते । संबन्धवैधुर्याद्धि सप्रयोजनं सविषयमपि शब्दज्ञानमर्थयमानो न वैद्यके प्रवर्तते । अधिकारविरहाच्च न मुमुक्षोर्वात्स्यायने प्रवृत्तिः ।**

**बिन्दुः— वात्स्यायन इति** । सुखप्रतिपादके कामशास्त्र इत्यर्थः ।

**परि०—** हेतोरप्रयोजकत्वं निराह **विषयादीति** । विषयादिवैधुर्यं प्रत्येकं हेतुरिति भावेन हेतुचतुष्टये अन्वयव्याप्तिं दृष्टान्तोक्त्या व्यनक्ति **विषयशून्यत्वाद्धीति** । सन्दिग्धस्यैव विषयत्वेन निश्चितस्य अविषयत्वादिति भावः । विषयाभावनिमित्तमजिज्ञास्यत्वमत्रेति शङ्काव्युदासायोक्तं **सन्दिग्धमपीति** । **शब्दज्ञानं** सुशब्दापशब्दविवेकेन साधुशब्दज्ञानम् ॥ **वात्स्यायने** कामतन्त्रे ।





**यादु०**— निश्चितकार्यकारणभावसूचकत्वान्नात्राप्रयोजकताशङ्केत्याह **विषयादिसद्भाव इति**। विषयादि-सद्भावस्य जिज्ञासाकारणत्वमुपपादयति **विषयशून्यत्वाद्धीत्यादिना**। **वात्स्यायने** कोकशास्त्रे।

**आनन्दः**— विषयादिशून्यत्वेऽपि अकर्तव्यत्वं मास्त्वित्यप्रयोजको हेतुरित्यत आह **विषयादीति**। **न जिज्ञासेति**। सन्दिग्धस्यैव विषयत्वादिति भावः। **संबन्धवैधुर्यादिति**। अत्रापीत्येतत्तथापीति व्याख्येयम्। यद्यपीत्येतदनुवर्त्य तथाच यद्यपि वैद्यशास्त्रं सविषयं सप्रयोजनं तथापि वैद्यके न प्रवर्तते शब्दज्ञानवैद्यकशास्त्रयोर्जन्य-जनकभावरूपसंबन्धवैधुर्यादित्यर्थः। **वात्स्यायने** वैषयिकशास्त्रे।

**श्रीनिधि०**— विशेषानुमानमाह **विषयादिसद्भावो हीति**। अत्र च धर्मजिज्ञासा निदर्शनम्। **सप्रयोजनेति**। एकः शब्दः सम्यक् ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुक् भवतीति वचनात् सविषयं सप्रयोजनं शब्दलक्षणविषयस्वर्गलक्षणप्रयोजनसहितम्। **न वैद्यक इति**। वैद्यकशास्त्रस्य शब्दशास्त्रविषयाद्यपेक्षया प्रतिपाद्य-प्रतिपादकभावादिसंबन्धाभावादिति भावः। **वात्स्यायने**। काम(कोक)शास्त्रे।

**वा०चं०**— न चैवम्। विपक्षबाधकाभावेन तदनिश्चयादित्यतः कर्तव्यतायां विषयादिमत्त्वस्या-कारणत्वेऽपि कर्तव्यजिज्ञासां प्रति तत्कारणत्वस्यान्वयव्यतिरेकाभ्यां निश्चितत्वाद्विषयाद्यभावेऽपि कर्तव्यताऽङ्गीकारे कर्तव्यजिज्ञासायाः तदभावेऽपि प्रसत्त्याऽकारणकार्योत्पत्तिप्रसङ्गस्यैव विपक्षबाधकत्वाद्व्याप्तिसिद्धिरित्यभिप्रेत्याह **विषयादीति**। अत्र कर्तव्यतामात्रस्य विषयादिप्राप्तावपि प्रकृतत्वाद् दृष्टान्तसौलभ्याच्च जिज्ञासाग्रहणम्। अन्वयस्य सौलभ्यात् कृष्यादिग्रहणेन सूचितत्वाच्च व्यतिरेकमेव कारणतोन्नाहकत्वेन दर्शयति **विषयाभावादिति**। अत्र पूर्वद्वये स्वरूपेण न जिज्ञास्यत्वमुत्तरद्वये तु स्वरूपेण जिज्ञास्यत्वेऽपि पुरुषविशेषेणाजिज्ञास्यत्वमिति विशेषसूचनाय पूर्वत्र न जिज्ञास्यत इत्युक्त्वोत्तरत्र न प्रवर्तत इत्याद्याह।

**वा०र०**— शङ्काया व्याघातावधित्वाद्व्याघातेन शङ्कानिराकरणाय तं प्रतिपादयितुं कार्यकारणभावं विवेचयति **कर्तव्यतायामिति**। कार्यविशेषानवच्छिन्नकर्तव्यत्वमात्र इत्यर्थः। यद्वा जिज्ञासातिरिक्तयत्किञ्चि-त्कर्तव्यतायामित्यर्थः। **कर्तव्यजिज्ञासामिति**। अत्र कर्तव्यत्वरूपव्याप्यानुगमप्रदर्शनाय कर्तव्यजिज्ञासा-मित्यनुवादः। जिज्ञासाकर्तव्यत्व इति तु लभ्यते। जिज्ञासा न क्रियत इत्युत्तरमूलानुसारी जिज्ञासाकृतिं प्रतीति यावत्। तथा च विषयाद्यभावेऽपि कर्तव्यत्वमस्त्वित्येतज्जिज्ञासाकर्तव्यत्वं विषयाद्यभावेऽपि भवत्वित्येवं पर्यवस्यति। न च तद्युक्तम्। वक्ष्यमाणरीत्या विषयाद्यभावे कर्तव्यजिज्ञासाया अभावदर्शनेन तत्राकारण-कार्योत्पत्तिप्रसङ्गरूपबाधकसत्त्वादित्यर्थः। **व्याप्तीति**। यत्र कर्तव्यजिज्ञासात्वं तत्र विषयादिमत्त्वमिति व्याप्तीत्यर्थः। जिज्ञासाविशिष्टकर्तव्यत्वं प्रतीव यत्किञ्चित्कर्तव्यत्वं प्रत्यपि विषयादेर्व्यापकतासद्भावात् अप्रयोजकतानिरासाय विशेषयोः कार्यकारणभावोपपादनमनर्थकमित्यस्वरसं दृष्ट्वा जिज्ञासापदसत्त्वमभ्युपगम्य प्राचीनं व्युत्पादनम्। वस्तुतस्तु तदनावश्यकमेव। तथाविधस्याप्युपादाने तु निमित्तान्तरमस्तीत्याह **अत्रेति**।





**अन्वयस्येति** । यत्र विषयादिमत्त्वं तत्र कर्तव्यजिज्ञासात्वमिति कारणताग्राहकान्वयस्येत्यर्थः । कृष्यादेरेव दृष्टान्तत्वायोगात् सूचितत्वादित्युक्तम् । ब्रह्मादिजिज्ञासायामुक्तान्वयस्य सत्त्वादिति भावः । **व्यतिरेकमेवेति** । यत्र विषयाद्यभावस्तत्र कर्तव्यजिज्ञासात्वाभाव इति व्यतिरेकमेवेत्यर्थः । मूले **विषयशून्यत्वादिति** पाठवत् विषयाभावादित्यपि बहुपुस्तकेषु पाठदर्शनाद्विषयाभावादितीति प्रतीकोपादानम् । अर्थानुवाद इति वा । सन्दिग्धस्यैव विषयत्वात्तदभाव इति भावः । पूर्वं प्रकृतजिज्ञासा न कर्तव्या विषयादिशून्यत्वादित्यनुमानस्य व्यापकाभाव-लिङ्गकानुमानत्वप्रदर्शनाय कृष्यादिदृष्टान्तेन व्याप्तिसिद्धिप्रतिपादनद्वारोक्तव्यापकाभावेऽपि व्याप्याङ्गीकारे प्रसिद्धि-सिद्धव्याप्यव्यापकभावभङ्ग इति विपक्षे बाधकप्रदर्शनमभिमतम् । अत्र तु कृष्यादिदर्शनस्य सामानाधिकरण्य-सिद्धिमात्रफलकत्वेन व्याप्त्यनिश्चयादप्रयोजकताशङ्कातादवस्थ्यमित्याशङ्कापरिहाराय अकारणकार्योत्पत्तिप्रसङ्गरूप-विपक्षे बाधकप्रदर्शनेन अप्रयोजकताशङ्कानिराकरणमिति भेदः । अत एव तदनिश्चयादिति टीकाकृता कर्तव्यत्वं प्रति विषयादिमत्त्वस्य यद्व्यापकत्वं तन्निश्चयाभाव एवोक्त इति ज्ञातव्यम् । **पूर्वद्वय इति** । विषयशून्यस्थले प्रयोजनाभावस्थले चेत्यर्थः । **उत्तरद्वय इति** । संबन्धाभावस्थले अधिकाराभावस्थले चेत्यर्थः । **न जिज्ञास्यत इत्युक्त्वेति** । इत्याद्युक्त्वेत्यर्थः । आदिपदेन जिज्ञासा न क्रियत इत्यस्य परिग्रहः । अव्ययानामनेकार्थत्वादितीत्यस्य आवृत्तस्य आद्यर्थत्वमिति वा । वस्तुतस्तु जिज्ञासा न क्रियते न जिज्ञास्यत इत्युक्तिभेदमात्रमर्थस्त्वेक एवेत्याशयेनोभयकीर्तनमेतदेवेति मन्तव्यम् । तथा च जिज्ञासैव स्थलचतुष्टयेऽपि विवक्षितेति जिज्ञासात्वे सति कर्तव्यत्वाभावः सर्वत्राविकल इति भावः । **संबन्धवैधुर्यादिति** मूलम् । ननु यत्र विषयप्रयोजनयोरभावस्तत्र विषयजिज्ञासयोः प्रयोजनकामस्याधिकारिणोऽप्यभावः सिद्धः । यत्रापि विषयप्रयोजनयोः सत्त्वेऽपि तत्प्रयोजनस्य पुरुषविशेषेणार्थ्यत्वाभावस्तत्राप्युक्तरूपाधिकारिणोऽभावः सिद्धः । संबन्धस्तु त्रिषु सत्सु अवश्यंभावी । त्रितयान्य-तमाभावे स्वत एव नास्तीति तद्वैधुर्यं न पृथङ्निमित्तमाश्रयितुं युक्तम् । तथा च प्रकृतेऽधिकार्यभावमुखेनैव संबन्धाभावस्य वाच्यतया अधिकार्यभावमनादृत्य केवलसंबन्धाभावेन अकर्तव्यत्वोपपादनाय एतदुदाहरणायोगः । न हि वैद्यके सप्रयोजने सविषयकेऽपि शब्दज्ञानार्थिनोऽधिकारित्वेऽपि विषयप्रयोजनादेः संबन्ध एव केवलं नास्तीति शक्यते वक्तुम् । वैद्यकसाध्यप्रयोजनापेक्षत्वतद्व्याप्यविषयजिज्ञासुत्वरूपाधिकारित्वे वैद्यकेन च स्वविषये आरोग्यो-पायरूपे ज्ञापिते तेन च तदनुष्ठानद्वारा आरोग्यादिसिद्धिरूपप्रयोजने च सति संबन्धाभावस्यैवासंभवात् । किन्तु सतोर्विषयप्रयोजनयोः प्रयोजनान्तरार्थितया वैद्यकसाध्यप्रयोजनानपेक्षत्वेन अनधिकारित्वमित्येव वाच्यम् । तथा च वात्स्यायने भोगसाधनविषयादिप्रतिपादके कोकशास्त्रमिति प्रसिद्धे मुमुक्षोर्विषयविरक्तस्य तत्साध्यप्रयोजना-नपेक्षतयाऽनधिकारे सति तत एव संबन्धाभाववत्प्रकृतेऽपि संबन्धाभावोऽन्यसंबन्धिविरहलभ्य इति न केवल-तदभावाभिधानं युक्तम् । ततश्चेदमुदाहरणं वात्स्यायनैकरूपमेवेति क्वचित्संबन्धाभावादिति क्वचिदधिकारि-विरहादिति विचित्रोक्तिरयुक्तेति चेत्सत्यम् । अधिकार्यभावस्यैव प्रकारद्वयेन प्रतिपादनायोदाहरणद्वयोपपत्तिः । तथाहि । सर्वत्रापि प्रवृत्तिस्तावदिष्टसाधनताज्ञानसाध्या । ततोऽन्येषां प्रवृत्तावपि यत्र यस्यकस्यचित्प्रवृत्त्यभावस्तस्य तत्रेष्टसाधनत्वाभावज्ञानेनैव स इत्यङ्गीकर्तव्यतयेष्टसाधनत्वाभावस्य चाधिकारिणो यदिष्टं तत्साधनतायाः साधन-त्वाभिमतेऽभावेन वा साधनत्वाभिमततत्तत्साध्यप्रयोजनस्यान्येनेष्टत्वेऽप्यधिकारित्वादिमता तेनेष्टत्वाभावेन वेति





द्विरूपतया प्रकृते च संबन्धवैधुर्येण वैद्यके प्रवृत्त्यभावप्रतिपादकवाक्ये शब्दज्ञानमर्थयमानो वैद्यके न प्रवर्तत इत्युक्त्या वैद्यकस्य तत्साधनत्वं नास्तीत्यस्य लाभादधिकारीष्टसाधनत्वाभावरूपेणेष्टसाधनत्वाभावस्य अधिकारिवैधुर्येण प्रवृत्त्यभावप्रतिपादकवाक्ये च मुमुक्षोर्न वात्स्यायने प्रवृत्तिरित्युक्त्या मुमुक्षुतया वात्स्यायनसाध्यप्रयोजनेच्छा नास्तीत्यस्य लाभात्तच्छास्त्रेण यत्साध्यं तत्राधिकार्यभिमतेनेष्टत्वाभावरूपेणेष्टसाधनत्वाभावस्य च ज्ञातुं शक्यतया प्रकारद्वयेनाप्यधिकार्यभावस्यैव लाभसंभवात् । यद्यपि स्थलद्वयोक्तप्रकारस्योभयत्रापि बोद्धुं शक्यत्वम् । तथाऽप्येकैकरूपेणैव तदभावप्रतिपादकत्वविवक्षयोदाहरणभेदोपपत्तिः । एवमधिकार्यभाव एव पर्यवसानमित्यभिप्रेत्यैव टीकायामुत्तरद्वये स्वरूपेण जिज्ञास्यत्वेऽपि पुरुषविशेषेणाजिज्ञास्यत्वमित्यधिकारित्वाभावपर्यन्तमेव धावनं कृतमिति भाति । वस्तुतस्त्वत्र विषयाभावमात्रोदाहरणादिष्वपि प्रयोजनाद्यभावः शक्योपपादन एवेति न सङ्करेणोदाहरणे तात्पर्यमपि तु पुरस्फूर्त्यनुसारेण तत्तदभावोक्तिरिति न दोषः । उदाहृतटीकाप्येतदभिप्रायेण प्रवृत्तेति ज्ञेयम् । ननु तथापि सप्रयोजनं सविषयमिति शब्दज्ञानविशेषणस्यायोगोऽनुपयोगश्च । तथा हि शब्दज्ञानमर्थयमान इत्युक्त्या हि शब्दज्ञानं प्रयोजनमिति लभ्यते प्रयोजनस्य च प्रयोजनवत्ताया अवाच्यत्वात् अस्यावान्तरप्रयोजनतया मुख्यप्रयोजनान्तरवत्त्वं च युक्तमित्यस्य च विषयसमकक्ष्यतयाऽत्र प्रयोजनस्य प्रवृत्त्युपपादकतयाऽभिधानेनाविवक्षणीयतया प्रयोजनीयविषयस्य च सर्वथाऽभावेन तदुभयवत्ताप्रतिपादकविशेषणद्वयस्यायोगः शास्त्रस्य प्रवृत्तिविषयतया तत्रैव विषयप्रयोजनयोः सद्भावप्रतिपादनाय सप्रयोजने सविषयके वैद्यक इत्येव वक्तव्यतया शब्दज्ञानविशेषणत्वेनाभिधानानुपयोगश्चेति चेदत्र वदन्ति । सविषयकमपीत्यपिशब्दो यद्यपि तथापीत्यर्थे वर्तते । विभक्तिविपरिणामेन वैद्यकं विशेष्यतया अत्रापि संबध्यते । तथाच यद्यपि वैद्यकं सप्रयोजनं सविषयं च । तथापि शब्दज्ञानमर्थयमानो वैद्यके न प्रवर्तत इत्यर्थाङ्गीकारेणायोगानुपयोगाविति । अपरे तु सप्रयोजनसविषयपदयोर्विभक्तिविपरिणामेन वैद्यकेन संबन्धात् नोक्तदोष इत्याहुः । वस्तुतस्तु शब्दज्ञानमर्थयमानः सप्रयोजनकं सविषयं यथा स्यात्तथा न प्रवर्तत इति क्रियाविशेषणमेवोभयम् । अपिशब्दो वैद्यक इत्यनेनान्वेति । स च व्याकरणरूपव्यतिरेकदृष्टान्तार्थः । प्रयोजनविषयवतीत्यर्थको वा । तथाच शब्दज्ञानमर्थयमानोऽधिकारी स्वज्ञेयविषयज्ञापकतया स्वेष्टप्रयोजनसाधनतया यथा व्याकरणे प्रवर्तते तथा न वैद्यके प्रवर्तते । अन्याभिमतप्रयोजनादिमत्यपि वैद्यकेन प्रवर्तत इति वा योजनान्नायोगानुपयोगाविति बोध्यम् ॥ एवं संबन्धविरहात् प्रवृत्तेर्नास्तितावचः । व्याकृतं गुरुपत्स्मृत्या सन्तस्तच्छोधयन्त्वलम् ॥

**कुण्डल०**— व्याप्तिमेवोपपादयति **विषयादीत्यादिना** । **वात्स्यायन इति** । कामशास्त्र इत्यर्थः ।

**विठ्ठ०**— मास्तु विषयादिकं, कर्तव्यता किं न स्यादित्यतो विपक्षे अकारणकार्योत्पत्तिं बाधकमाह **विषयादिसद्भावो हीति** । विषयादिसद्भावस्य जिज्ञासाकरणत्वमुपपादयति **विषयशून्यत्वादिति** । **शब्दज्ञानं** शब्दसाधुताज्ञानम् । **वात्स्यायने** कोकशास्त्रे ।

**चषकः**— धूमानुमाने यथा धूमो यदि वह्निजन्यो न स्यात्तदा वह्न्यसमवहिताजन्यत्वे सति वह्निसमवहित-जन्यः स्यादिति तर्कोपजीविना धूमो यदि वह्निव्यभिचारी स्यात्तदा वह्निजन्यो न स्यादिति तर्केणावधृतकार्यकारण-भावानुगृहीतव्याप्तिमूलकस्य पर्वतो यदि निर्वह्निः स्यात्तदा निर्धूमः स्यात् इति विषयपरिशोधकतर्कस्येव प्रेक्षाव-त्कर्तव्यता यदि विषयाद्यनुबन्धचतुष्टयप्रयोज्या न स्यात्तदा तन्निरूपितान्वयव्यतिरेकानुविधायिनी न स्यादिति प्रसङ्गोपजीविना यदि कर्तव्यता तच्चतुष्टयव्यभिचारिणी स्यात्तदा तच्चतुष्टयप्रयोज्या न स्यादितिप्रसङ्गेन निर्धारित-प्रकृतसाध्यव्यतिरेकनिष्ठसाधनव्यतिरेकनिरूपितव्याप्तिमूलकस्य यदि कर्तव्यता स्यात्तर्हि तद्व्यापिका सविषयकता स्यादिति तर्कस्यावतरणसंभवात् नाप्रयोजकतेत्याह **विषयादिसद्भाव इति** ।

**गूढ०**— विषयादिशून्यत्वेऽप्यकर्तव्यत्वं मास्त्वित्यप्रयोजको हेतुरित्यत आह **विषयादीति** । **न जिज्ञासेति** । सन्दिग्धस्यैव विषयत्वादिति भावः । **संबन्धवैधुर्यादिति** । अत्रापीत्येतत्तथापीति व्याख्येयम् । यद्यपीत्येतदनुवर्त्यम् । तथाच यद्यपि वैद्यशास्त्रं सविषयं सप्रयोजनं तथापि वैद्यके न प्रवर्तते । शब्दज्ञान-वैद्यकशास्त्रयोर्जन्यजनकभावरूपसंबन्धविधुरत्वादित्यर्थः । **वात्स्यायने** वैषयिकशास्त्रे ।

**॥ विषय-अधिकारि-तत्संबन्धाभावशङ्का ॥**

**॥ विषयतत्संबन्धवैधुर्यम् ॥**

**न अनात्माविषयः – तृणादिरूपो न—**

**११९ सु०— विषयादिवैधुर्यमेवात्र कथमिति चेदित्थम् ॥ न तावदनात्मविषयेयं जिज्ञासा ॥ तस्य तृणादिलक्षणस्य प्रत्यक्षादिनैव निश्चितत्वात् । सन्दिग्धश्चार्थो न्यायविषयो भवति । यथोक्तम् । 'अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क' इति । निष्पादितक्रिये च कर्मण्यविशेषाधायिनः साधनस्य साधनन्यायातिपातः । नाप्यसौ जिज्ञासितः कस्मैचन प्रयोजनाय कल्पते ।**

**बिन्दुः— अविज्ञाततत्त्वेऽर्थे इति** । अविज्ञातम् अनिश्चितं तत्त्वमनारोपितं स्वरूपं यस्य तस्मिन्नर्थे विषये करणस्य प्रमाकरणस्य उपपत्तिरनुग्रहस्तत्संपादनेन तत्त्वज्ञानार्थम् ऊहः विपक्षे बाधका-दिप्रतिसन्धानं तर्क इत्यर्थः ।

**परि०**— सौत्रब्रह्मादिपदार्थोक्तिपरस्योतत्ववाचीत्यादेर्व्यावर्त्यं निर्विषयत्वं तावद्व्यक्ती-कुर्वन्नैन्द्रियकानैन्द्रियकरूपेण वा श्रेयोऽहेतुतद्धेतुरूपेण वा द्विविधाऽनात्मनां स्वात्मपरात्मपरमात्मनां च विषयत्वं क्रमेण निराह **अनात्मेत्यादिना प्रयोजनं चेश्वरजिज्ञासाया** इत्यतः प्राक्तनग्रन्थेन । तार्किकोक्तमाह **यथोक्तमिति** ॥ **कारणोपपत्तित इति** । कारणस्य प्रमाकरणस्य प्रमाणस्येति यावत् ।





**उपपत्तिः** अनुग्रहः । ततः प्रमाणानुग्रहकरणेन तत्त्वज्ञानसंपादको य ऊहः स तर्क इति न्यायसूत्रार्थः । निश्चितार्थकत्वेऽप्यस्तु जिज्ञासायास्तृणादिविषयत्वमित्यत आह **निष्पदितक्रिये चेति** बहुव्रीहिः। **कर्मणि** कर्मकारके। साधनन्यायोऽतिशयाधायकत्वं तस्यापगम इत्यर्थः।। **नाप्यसाविति**। तृणादिः इत्यर्थः।। **कस्मैचनेति**। चनशब्दोऽप्यर्थे निपातः।

**यादु०— अविज्ञाततत्त्वेऽर्थ इति** । अविज्ञाततत्त्वेऽनिश्चितस्वरूपे सन्दिग्ध इति यावत् । अनेन तर्कविषयो दर्शितः । उत्तरेण पञ्चम्यन्तेन कारणं कारणस्याहार्यलिङ्गस्योपपत्तिः सद्भावस्तस्मादिति । इत्थम्भावलक्षणतृतीयान्तत्वमङ्गीकृत्य तर्कव्यापारनिर्देश इति केचित् । कारणस्य प्रमाणस्योपपत्तिः संभावना प्रमाणविषयाभ्यनुज्ञानमिति यावत् ।। तदुपलक्षितमिति । तत्त्वज्ञानार्थमिति प्रयोजनम् । ऊह इति लक्षणम् । ऊहशब्देन प्रसङ्गाभिधानादिति गौतमसूत्रार्थः । तृणादिरूपे कर्मणि जिज्ञासारूपसाधनस्य प्रमारूपक्रियायाः प्रत्यक्षादिसाधनान्तरसाध्यत्वेनाफलतया अन्यस्य कर्तव्यस्य क्रियाविशेषणस्य अनुपलम्भेन साधनत्वमेवापगतमित्याह **निष्पादितक्रिये चेति** । निष्पादिता प्रमितिलक्षणा क्रिया यस्य कर्मणो विषयस्य स इह तथोक्तः । **साधनन्यायः** साधनरीतिः। **अतिपातः** अतिक्रमः । साधनत्वेन अभिमते तस्मिन्फलाभावात्साधनरीतिरपगतेति भावः ।

**वं०प०— अविज्ञाततत्त्वेऽर्थ इति**। विशेषेण ज्ञातं निश्चितं विज्ञातम्। विज्ञातं न भवतीति अविज्ञातं सन्दिग्धं तत्त्वं यस्यार्थस्य विषयस्यासावविज्ञाततत्त्वोऽर्थस्तस्मिन्नित्यर्थः। यथोक्तं वरदराजीयमूले अस्याविज्ञाततत्त्वोऽर्थ इत्यनूद्य सन्दिग्धो विषयो मत इति व्याख्यातम्।

**आनन्दः—** हेत्वसिद्धिं शङ्कते **विषयादीति**। स हि किमनात्मा वा। आद्येऽपि किं तृणादिर्वा धर्मादिर्वा। नाद्य इत्याह **न तावदिति** । अत्रैव काणादसूत्रं संवादयति **यथोक्तमिति** । अत्र एतच्च स्वयमेव व्याख्याति । असन्दिग्धस्याप्यस्तु विषयत्वमित्यत आह **निष्पादितेति** । निष्पादिता क्रिया ज्ञानरूपा यस्येति विग्रहः । साध्यतेऽनेनेति साधनम् । न हि सिद्धं साधनार्हम् । तथाच सिद्धे विशेषान्तरमनादधत्साधनमेव नेति साधनन्यायातिक्रम इत्यर्थः।

**कं०रा०— असौ** तृणादिलक्षणोऽनात्मा।

**श्रीनिधि०—** विषयः किं अनात्मा उत जीवात्मा अथवा परमात्मा। आद्ये किं प्रत्यक्षसिद्ध उतातीन्द्रियः। द्वितीयेऽपि किं देहेन्द्रियादिः उत तद्भिन्नः तत्रापि किं स्वात्मा परमात्मा वेति विकल्पान् हृदि निधाय दूषयति **न तावदित्यादिना**। अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितः तत्त्वज्ञानार्थमूहस्तर्क इति न्यायसूत्रम्। तत्र कारणोपपत्तित इत्यस्य प्रमाकरणस्य प्रमाणस्योपपत्तिरनुग्रहः, तत्करणेनेत्यर्थः इत्यनुपदं स्वयमेवार्थं वक्ष्यति । ननु वरदराजेन "अस्याविज्ञाततत्त्वोऽर्थः सन्दिग्धो विषयो मतः। हेतुरारोपितं लिङ्गं फलं तत्त्वार्थनिर्णयः" इति श्लोकव्याख्यानावसरे

इदं सूत्रमुदाहृत्यात्राविज्ञाततत्त्वेऽर्थे इति विषयो दर्शितः । उत्तरेण पञ्चम्यन्तेन कारणम् । कारणस्याहारिलिङ्गस्य उपपत्तिः सद्भावः । तस्मादिति व्याख्यातम् । तत्कथमित्थं व्याख्यानमिति चेत् सत्यम् । तथापि इत्थंभावलक्षण-तृतीयान्तत्वमङ्गीकृत्य तर्कव्यापारनिर्देशः कारणस्य प्रमाणस्योपपत्तिः संभावनाप्रमाणविषयाभ्यनुज्ञानमिति यावत् इति वार्तिककारीयव्याख्यानानुसारेणास्यार्थस्य कथनाददोषः, तत्त्वज्ञानार्थमिति प्रयोजनम् ऊह इति लक्षणम् । ऊहशब्देन प्रसङ्गाभिधानात् यदाह किरणावलिः 'ऊहापरनामा प्रसङ्गात्मा तर्क' इति । ननु निश्चितस्यापि विषयत्वमस्तु न हि परोक्तिमात्रं नियामकमित्यत आह **निष्पादितक्रिये चेति** । कर्मणि विषये अतिपातो-ऽतिक्रमः क्रियां कुर्वत एव कारकत्वादिति भावः ।

**वा०चं०**— एवं हेतोर्व्याप्तिमुपपाद्यासिद्धिं परिहर्तुं शङ्कते **विषयादीति** । सूत्रेऽधिकारिसमर्पकाथशब्दस्य विषयसमर्पकब्रह्मशब्दापेक्षयाऽऽदित्वेन तन्निवर्त्यपूर्वपक्षस्य प्रथमतः कथनीयत्वेऽपि, विषयसमर्पकोंशब्दस्य ततोऽप्यादित्वात् विषयाभावोक्त्याऽधिकार्यभावसिद्धिवदधिकार्यभावोक्त्या विषयाभावसिद्धेरभावेन लाघवाच्च, सूत्रे ॐब्रह्मशब्दाभ्यां तदर्थकथनपरौतत्ववाची ह्योङ्कार इत्यनुव्याख्यानेन च सूचितपूर्वपक्ष एव प्रथमतो वक्तव्य इत्य-भिप्रेत्य; 'विषयोऽस्य शास्त्रस्य भवन्ननात्माऽऽत्मा वा । आद्येऽप्युपेक्षणीयत्वेन सर्वसिद्धस्तृणादिर्वा । अतथाविधो धर्मादिर्वा । द्वितीयेऽपि जीव ईश्वरो वा । आद्येऽपि स्वात्मा परात्मा वे'ति विकल्पान्मनसि निधायाद्यं तावन्निराकरोति **न तावदिति** । अत्राभ्यर्हितत्वादात्मपक्षस्य प्रथमं निराकर्तव्यत्वेऽपि सूचीकटाहन्यायेन अनात्मपक्षनिराकरणमादौ कृतमिति मन्तव्यम् । प्रत्यक्षादिनेत्यादिपदेन लोकसिद्धानुमानवाक्ययोः सङ्ग्रहः ॥ **अविज्ञातेति** । कारणं प्रमाणं चोपपत्तिश्च ताभ्यामित्यस्याविज्ञाततत्त्व इत्यनेन संबन्धः । अत्र न विशेषतो ज्ञातं तत्त्वमस्येति विशेषज्ञान-रहितत्वोक्त्या संशयकारणीभूतधर्मिज्ञानरूपसामान्यज्ञानलाभेन सन्दिग्धत्वसूचनात्प्रकृतोपयोग इति ज्ञेयम् । निश्चितस्य ज्ञानविषयत्वं युक्तिविरुद्धं चेत्याह **निष्पादितेति** । निष्पादिता क्रिया यस्मिंस्तस्मिन्कर्मकारके क्रियारूपं तदुपकारकं वा विशेषमकुर्वतः क्रियासाधकत्वरूपं साधनत्वं न स्यादित्यर्थः । निष्पादिता प्रमितिलक्षणा क्रिया यस्य कर्मणो विषयस्य स इह तथोक्त इति कल्पतरुः । **असाविति** । उपेक्षणीय इत्यर्थः ।

**वा०र०**— **व्याप्तिमिति** । उक्तरीत्या यत्र कर्तव्यतेति वा यत्र कर्तव्यजिज्ञासात्वमिति वा तत्र विषयादीति व्यतिरेकव्याप्तिम् । तथा यत्र विषयाद्यभावस्तत्र कर्तव्यजिज्ञासात्वाभाव इति तदनुमानीयान्वयव्याप्तिमित्यर्थः । **ततोऽप्यादित्वादिति** । अस्य च सूत्रे ॐ ब्रह्मेत्यादि प्रतिज्ञयान्वयः । तर्हि प्रयोजनार्थकातःशब्दनिवर्त्यपूर्वपक्षापेक्षया अथशब्दनिवर्त्यपूर्वपक्षस्य प्राथम्यापत्तिः स्यादित्यतो हेत्वन्तरमाह **विषयाभावोक्त्येति** । अनेनैव समानन्यायतया प्रयोजनपूर्वपक्षस्य प्राथम्यमपि सूचितं ज्ञेयम् । एवं विषयाभावपूर्वपक्षस्य प्राथम्यमुपपाद्य मूलाभिप्रेतविकल्पक्रमं शिष्यान् ग्राहयितुं संगृह्य दर्शयन्नुत्तरमूलमवतारयति **विषयोऽस्येति** । **अनात्मा आत्मा वेति** । ननु तद्विजिज्ञासस्व तद्ब्रह्मेत्यादिश्रुतौ जिज्ञासाकर्मत्वेन ब्रह्मादिपदाभिधेयस्य श्रुतत्वाद्ब्रह्मविषयां जिज्ञासां कुर्वित्युक्ते जिज्ञासा-विषयत्वेनेश्वरस्यैव प्राप्त्या अनात्मादेराशङ्क्यतायोगः । न हि घटानयनं कार्यमित्युक्तेऽपि आनयनकर्म पटो वा गौर्वा





घटो वेत्यादि विकल्पो युज्यते । तत्कथं मूलादावुक्तविकल्पप्रवृत्तिस्तन्निराकरणं चेति चेत्सत्यम् । अयमभिप्रायः पूर्वपक्षिणः । ब्रह्मादिपदाच्छादनेन संभावितत्वमात्रेण चेतनादिपक्षे मया निराकृते यदि सिद्धान्ती श्रौत-ब्रह्मादिपदानुसारेणेश्वरविषयेति पक्षमुपादद्यात् तदापि जिज्ञास्यं यद्ब्रह्मादिपदार्थभूतं वस्तु विषयतया वाच्यं तदेव प्रमाणाभावान्नास्ति । यदि च ब्रह्मादिपदनिरर्थकत्वपरिहाराय कश्चन तदर्थो वाच्यस्तर्हि सोऽर्थः जडं वा जीवो वाऽङ्गीकर्तुं शक्यत इति न जीवजडातिरिक्तजिज्ञास्यब्रह्मादिपदार्थप्राप्तिः प्रतीतार्थपरित्यागेनाप्रतीतार्थकल्पने कल्पना-गौरवप्रसङ्गादिति वदिष्यामीति । ततश्च फलतः ब्रह्मादिपदार्थतया जडादेः प्राप्तिसद्भावाद्युक्त एवानात्मादिविकल्प इति ज्ञेयम् । ननु तथापि जीवव्यतिरिक्तेश्वराभावात् तस्य चेति न्यायविवरणे ईश्वरजीवरूपेणात्मन एव विषयत्व-निराकरणेऽप्यनात्मनो विषयत्वानिराकरणात्कथं तत्पक्षविकल्पोत्थानम् । एतेन मूले न तावदनात्मविषयेति निरा-करणादनात्मपक्षानुवाद इति निरस्तम् । मूलकृतोंऽपि बीजाभावेनानात्मपक्षनिराकरणस्य असङ्गतत्वादिति चेन्मैवम् । जीवव्यतिरिक्तेश्वरेति न्यायविवरणमुपलक्षणयाऽनात्मविषयत्वपक्षस्यापि निराकरणपरमित्यवश्यं वाच्यम् । अन्यथा न्यूनतापातादित्येवं न्यायविवरणाभिप्रायमाविष्कर्तुमत्र मूले न तावदित्यनात्मविषयेति न्यायविवरणे उपलक्षणया अभिप्रेतं पक्षान्तरमुपन्यस्तम् । तदनुसारेण च टीकायामनुवाद इत्यदोषात् । अत एवोपलक्षणयाऽनात्मपक्षनिराकरणं सिद्धं कृत्वेश्वरपक्षनिराकरणं न्यायविवरण इति स्पष्टयितुमेव तट्टीकायामीश्वरो हि विचारविषयतयाऽभिमत इति पक्षविशेषे पर्यवसानमुक्तम् । तत्त्वप्रकाशिकायामपि न तावद्ब्रह्मेत्यनेनोपलक्षणासूचनात् तदनुसारेणात्मपक्ष-निराकरणान्तेऽनात्मपक्षस्याप्युपलक्षणया व्याख्येयत्वात् । अत एव सिद्धान्ते मूले ताभ्यां च तत्सकलजीव-जडात्मकात्प्रपञ्चाद्विलक्षणमवगम्यत इति जिज्ञास्यमनन्तगुणं प्रतिपादयन्तौ जीवजडयोस्तदयोगात् तद्व्यतिरिक्तमेव किञ्चिद्गमयत इति जीवादिव्यतिरिक्तवस्तुसाधनाविरोधीति जीवजडातिरिक्तस्य जिज्ञास्यस्येति जीवादिव्यति-रिक्तमिति जीवादिविषयतेति जीवादिविषयमिति जीवजडात्मकात्प्रपञ्चादत्यन्तविविक्तत्वेनेति च तत्र तत्र ओङ्कार-ब्रह्मशब्दोक्तगुणपूर्णत्वरूपसिद्धान्तन्यायव्यावर्त्यता जीवस्येव जडस्यापि बहुधा व्यवहरिष्यते । बन्धमिथ्यात्वं नैव मुक्तिरित्यस्यान्त्ययोजनायां समस्तजीवजडात्मकात्प्रपञ्चादत्यन्तव्यावृत्तं ब्रह्मैवाशेषवेदप्रतिपाद्यमित्येवं तत्तु समन्वयादित्युक्तिश्च । उक्तग्रन्थानुसारेणैव कथञ्चिज्जीवविषयत्वोपपत्तेरिति पूर्वपक्षमूलेऽपि कारणेषु स्थितं कार्यं व्याप्तं कार्येषु कारणमित्यादिपञ्चदशाध्यायीयगीतातात्पर्यनिर्णयवचनात् यत्किञ्चिन्नियामकत्वमादाय जडस्याप्युपलक्षणा अभिप्रेतेति वक्तुं शक्यतयेश्वरविषयत्वपक्षनिराकरणावसरेऽपि जडस्य जीववत्प्रसक्तिसत्त्वाच्च । एवं न्यायविवरणे जडस्योपलक्षणयाऽभिप्रेतत्वस्य सिद्धत्वादेव यदुक्तं जीवव्यतिरिक्त ईश्वर एव नास्तीत्युत्तरमूलेऽपि जडस्योपलक्षणया ग्रहणं सिद्धं कृत्वा जीवेत्येवोक्तजीवजडव्यतिरिक्त ईश्वर इत्यर्थप्राप्तिः । सकलजीवजडेत्यादितदुत्तरमूलस्य तथा सत्येव सङ्गतिः संभवति । कथञ्चिदेषां शब्दानां जीवादिविषयताङ्गीकरणं श्रौतं ब्रह्मादिशब्दं जीवादिविषयमित्याद्युत्तर-ग्रन्थे स्पष्टमेव जीवसमकक्षतया जडस्येश्वरत्वपूर्वपक्षप्रतीतेश्च । एवमन्यत्रापि व्याख्यानं कार्यमित्यलम् ॥ छ ॥

एवं न्यायविवरणे उपलक्षणयाऽभिप्रेतं जडविषयतानिराकरणपूर्वपक्षं प्रदर्श्य जीवव्यतिरिक्तेति मुखत उक्तमीश्वरविषयतानिराकरणपूर्वपक्षं दर्शयितुं तद्विषयत्वपक्षमाशङ्कते **ईश्वरविषयेति** मूलम् । **तस्यैवेति** मूलम् । ईश्वरसंज्ञकस्य कस्यचित्पदार्थस्यैवेत्यर्थः । मीमांसानुग्राह्यप्रमाणाभावव्युत्पादनपरं किञ्चेश्वरे प्रमाणं भवन्न

तावत्प्रत्यक्षमित्याद्युत्तरग्रन्थोक्तरीत्या प्रमाणाभावेनेश्वराख्यपदार्थस्यैवाभाव इत्याशयः। अनेन जीवव्यतिरिक्तेश्वराभावादिति न्यायविवरणगतेश्वराभावादित्यंशस्येश्वरस्यैवाभावादिति व्याख्यानं सूचितम्। **जीवविषयत्वोपपत्तेरिति** मूलम्। अनेनेश्वराख्यः पदार्थ एव नास्ति। यदि तु जिज्ञासावाक्यगतेश्वरब्रह्मादिपदानामानर्थक्यपरिहाराय कश्चनार्थोऽङ्गीकार्यतया प्राप्नोति, तथापि जिज्ञास्योऽर्थो जीवव्यतिरिक्तो नास्ति किन्तु जीवाख्य एव। ईश्वरादिपदानामर्थोऽपि जीव एव। न तु तदतिरिक्तः कश्चनार्थो भवदभिमतोऽस्तीति यावत्। येन तस्य विषयता वक्तुं शक्या स्यादित्येवं जीवव्यतिरिक्तेति न्यायविवरणे व्याख्यातं भवति। अत एव पूर्वत्रात्मा तु शरीरेन्द्रियादिसङ्घातव्यतिरिक्तो नास्त्येवेति वाक्ये शरीरादिकमेवात्मा न तु तदतिरिक्तः कश्चनात्माऽस्तीति प्रतिपादितम्। अन्यथा तत्राप्यर्थान्तरस्वीकारप्रसङ्गः। एवं तत्पदानां जडविषयत्वोपपत्तेरित्यप्युपलक्षणयाऽभिप्रेतमिति तु प्रागुक्तमेव। न त्वत्र जीवब्रह्मणोरभेदाभिप्रायः कल्प्यः। जीवब्रह्मणोरेकत्वस्य शारीरकमीमांसाविषयत्वं परोक्तं निराकर्तुं प्रवृत्तेन सत्यत्वात्तेन दुःखादेरित्याद्यनुव्याख्यानेनैवाभेदनिराकरणेनेह जीवेशाभेदस्य सूत्रकृता निराकरणाय ब्रह्मादिशब्दप्रयोगः कृत इत्यादेरकल्पनीयतया तदभेदावष्टम्भेन पूर्वपक्षप्रवृत्त्ययोगात्। सकलजीवजडात्मकात्प्रपञ्चाद्विलक्षणं जिज्ञास्यं वस्त्ववगम्यत इति जिज्ञास्यमनन्तगुणपूर्णं प्रतिपादयन्तौ जीवजडयोस्तदयोगात् तद्व्यतिरिक्तमेव किञ्चिद्गमयत इत्युत्तरमूले जीव एवेश्वरादिपदार्थोऽतो न तदतिरिक्तः कश्चन भवदभिमत ईश्वरोऽस्तीत्येतत्पूर्वपक्षस्यैव निराकरणप्रतीतावपि सत्यं ज्ञानमित्यादिवाक्यप्रतिपादितं ब्रह्म योऽयं विज्ञानमय इत्यादिवाक्यप्रतिपाद्यं जीवं चाङ्गीकृत्य तयोरभेद एवेति पूर्वपक्षस्य निराकरणाप्रतीत्या च तथा पूर्वपक्षायोगः। ईश्वरस्यैवाभावादित्यादिपूर्वपक्षग्रन्थायोगश्च। न हीश्वराभेदवादी ईश्वर एव नास्तीत्यादिवदिति। अपि तु तमङ्गीकृत्य योऽयं जीवो दुःखाज्ञानादिमान् प्रतीयते तस्य दुःखादिकमुपाधिकृतं स्वभावतस्तु जीवो ब्रह्मवत् दुःखादिरहितस्तदभिन्न इत्यादि वदतीति प्रसिद्धम्। अस्त्वोङ्कारब्रह्मशब्दाभ्यां जीवजडातिरिक्तस्य जिज्ञास्यस्य सिद्धिः तथापीश्वरस्य किमायातमित्याद्युत्तरमूलानुसारेण जिज्ञास्यस्यैव जीवाभेदेन पूर्वपक्षः। गुणपूर्णत्वेन जिज्ञास्ये श्रुतेन तस्यापूर्णजीवाद्व्यावृत्तिप्रतिपादनेन सिद्धान्त इत्यादेः स्पष्टत्वाच्चेत्यलम्। ईश्वरो हि विचारविषयतयाऽभिमतः न चासौ जीवव्यतिरिक्तोऽस्ति। प्रमाणाभावादिति न्यायविवरणटीकायामपि जीवव्यतिरिक्तः कश्चनेश्वराख्यः पदार्थोऽस्तीत्यत्र प्रमाणाभावात् स पदार्थो नास्तीत्येवार्थः। अत एव सिद्धपरत्वेऽपि तस्य जीवविषयत्वोपपत्तेरित्युत्तरवाक्ये आगमो य ईश्वरे प्रमाणतया वक्तव्यः स जीवविषय एव। तत्रोक्तधर्माणां कथञ्चिज्जीवेऽप्युपपत्तेरन्यथाऽप्रतीतार्थकल्पनापत्त्या कल्पनागौरवप्रसङ्गादित्येवमुक्तमूलानुसारेणैवार्थः। न तु जीवेनेश्वरस्यैकत्वमाश्रित्य तत्र पूर्वपक्ष इत्यपि स्पष्टम्। **सोऽपि हीति** मूले कारणेषु स्थितं कार्यमित्यादिवचनात्कारणभूतजडमपि कार्यस्येष्ट इत्यप्युपलक्षणया ज्ञेयम्। न तावद्ब्रह्मविषयः। असन्दिग्धत्वात्। प्रमाणाभावेन जीवव्यतिरिक्तस्य ब्रह्मणोऽभावादित्यादितत्त्वप्रकाशिकायामपि पूर्ववत् ब्रह्माख्यपदार्थस्यैव प्रमाणाभावेनाभावान्न तस्य जिज्ञास्यत्वम्। ब्रह्मपदनिरर्थकत्वपरिहाराय कस्यचिदर्थस्याङ्गीकारे वा सोऽर्थो जीव एव भविष्यति। न तु तदतिरिक्तं किञ्चिद्भवदभिमतब्रह्म तत्पदार्थः। प्रतीतार्थपरित्यागेत्युक्तेरित्येवमेवार्थः। अभेदपदार्थस्तु जिज्ञास्यस्य जीवातिरिक्तत्वाभाव एव विवक्षितः। सिद्धान्तावसरे भवेदेतदसन्दिग्धत्वं जिज्ञास्यस्य यदि तत्स्वप्रकाशजीवाभिन्नं स्यादिति वाक्येऽप्युक्त एवार्थः।





जिज्ञास्ये ब्रह्मपदश्रवणात् । कथं तस्य जीवाभेद इत्याद्युत्तरवाक्येऽपि कथं जीवातिरिक्तत्वाभावः जीवमात्रत्वमेवेत्यर्थः । न तु जीवब्रह्मणोरभेद इत्यर्थः । जिज्ञास्यस्येत्याद्यनुसारेण जिज्ञास्यस्यैव जीवातिरिक्तस्याभावेन पूर्वपक्षः । जिज्ञास्ये श्रौतयौगिकब्रह्मपदोक्तपूर्णगुणत्वेनाल्पगुणत्वेनानुभवादिसिद्धजडजीवातिरिक्तं जिज्ञास्यं वस्तु किञ्चिदस्तीति सिद्धे यदेव तद्वस्तु सिद्ध्यति तदेव नाम्नि विवादायोगात्परं ब्रह्मैवेति सिद्ध्यतीति ब्रह्मशब्देन जीवातिरिक्तेश्वरसिद्धिरिति सिद्धान्त इति स्पष्टम् । उक्तं च चन्द्रिकायां 'जिज्ञास्यं ब्रह्मशब्देन गुणपूर्त्यभिधायिना । अपूर्णत्वेनानुभूताज्जीवाद्भिन्नं प्रतीयत' इति । तेन जिज्ञास्यस्यैव जीवाद्भेदसाधनप्रतिपादनेन जीवातिरिक्तस्य कस्यचिद्वस्तुनः साधनमेव प्रतीयते । अन्यथा जिज्ञास्यमित्यनुक्त्वा ब्रह्मेत्येव ब्रूयात् इति ज्ञेयम् । तदनुसारेणैवं विषयत्वेनाभिमतं हि ब्रह्म जीवचैतन्याद्भिन्नम् । मानाभावादित्यादिग्रन्थोऽपि तद्विजिज्ञासस्वेति वाक्ये यज्जिज्ञास्यमुक्तं तत्तावदनात्मा जीवात्मा वा न भवतीति ईश्वरपदाभिधेयं ब्रह्मैव वाच्यम् । तद्ब्रह्मेत्यनुसारात् । तच्च नास्त्येव मानाभावात् । ब्रह्मपदनिरर्थकत्वपरिहाराय तदर्थे वाच्ये वा जीव एव तदर्थोऽस्तु इत्यादि पूर्वोक्तरीत्या व्याख्येयम् । केचित्तु न्यायविवरणटीकैतन्मूलयोरद्वैतिरीत्या पूर्वपक्षाप्रतीतावपि तत्त्वप्रकाशिकायां तद्रीत्यैव पूर्वपक्षाश्रयणं जीवव्यतिरिक्तेति न्यायविवरणस्य वर्णकान्तराश्रयणेन कृतमिति नोभयग्रन्थयोरेकप्रकारप्रवृत्त्युपपादनप्रयासप्रसक्तिरित्याहुः । तदेवं न्यायविवरणस्थजीवपदस्य जडोपलक्षणत्वादनात्मविकल्पोपपत्तिः । अत एव सिद्धान्तेऽपि अनात्मजीवात्मनोर्विषयत्वानुपपत्तावपीत्यादि वक्ष्यति । यदुक्तं जीवव्यतिरिक्त ईश्वर एव नास्तीत्युत्तरमूलवाक्यस्यापि ईश्वर एव मानाभावान्नास्ति । ईश्वरादिपदनिरर्थकत्वपरिहाराय तदर्थवाच्यश्चेत्सोऽर्थो जीव एव भवति । न तु तदतिरिक्तः कश्चनेश्वरोऽस्तीति यदुक्तमित्यर्थान्न दोषः । एवमेव तत्रतत्रानुगुण्यं योज्यमित्यलम् । ततश्चायं मूलारूढः पूर्वपक्षसिद्धान्तयोः प्रवृत्तिप्रकारः । पूर्वोक्तं मूलतट्टीकान्तःप्रातं संगृह्य लेख्यमस्ति । **उपेक्षणीयत्वेनेति** । अनेन घटादिपरित्यागेन तृणादिग्रहणे निमित्तमुक्तं भवति । तृणाद्यर्थिनां तृणादिकमुपादेयमेवेति नोपेक्षणीयतेत्यत उक्तं **सर्वसिद्धेति** । हेयोपादेयोपेक्षणीयविभागमाश्रित्य तृणादिकमुपेक्षणीयमिति सर्वैरुदाहरणात् । कादाचित्कतृणाद्यर्थितामनादृत्य सर्वेषां घटपटादाविवार्थिताविशेषस्याभावं चाश्रित्योपेक्षणीयत्वोक्तिसंभवः । वस्तुतस्तु तृणादिपदं तृणविशेषादिकं कस्यापि नोपादेयं तत्परं घटादिकमपि तादृशं चेदादिपदसङ्ग्राह्यमेवेति ज्ञातव्यम् । **अतथाविध इति** । उपेक्षणीयत्वेन सर्वसिद्धो न भवतीत्येवंरूप इत्यर्थः । कथञ्चित्सन्दिग्ध इति यावत् । तावदित्यन्तेनोत्तरत्र धर्मादिपक्षो निराक्रियत इति वदता तत्र पृथगवतारो नेति सूचयति **अभ्यर्हितत्वादित्यादि** । आत्मपक्षस्य प्रथमं निराकर्तव्यत्वे हेतुरभ्यर्हितत्वादिति । निराकर्तव्यत्वं च विकल्प्य निराकर्तव्यत्वमिति विकल्पक्रमो दूषणक्रमयुक्त इति सूचितं भवति । **लोकसिद्धेति** । लोकसिद्धार्थविषयकानुमानवाक्ययोरित्यर्थः । धर्मादिविषयकानुमानादिव्यावृत्त्यर्थमेतद्विशेषणम् । अस्तु प्रत्यक्षादिनिश्चितस्यापि जिज्ञासाविषयत्वमित्यत आह **सन्दिग्धश्चेति** मूलम् । चशब्द एवार्थः, सन्दिग्ध एवार्थ इत्यर्थः । उक्तार्थे प्रथमाध्यायप्रथमाह्निकस्थं गौतमसूत्रं प्रमाणीकृतं मूले **यथोक्तमविज्ञातेति** । कारणमित्यनूद्य प्रमाणमिति व्याकुर्वन् विग्रहप्रदर्शनाय द्वन्द्वे विवक्षितचशब्दसंबन्धं कुर्वन्नुपपत्तित इति च तृतीयाद्विवचनान्तात्तसिरिति सूचयंश्च तत्सूत्रं व्याचष्टे **कारणं प्रमाणं चेति** । उक्तं च वात्स्यायनभाष्ये । कारणोपपत्त्या अनुजानाति । संभवत्यस्मिन् कारणं प्रमाणं हेतुरित्यादि । वार्तिकादावप्युक्तिरेवंजातीयास्ति । **उपपत्तिश्चेति** । यद्यपि कारणोपपत्तित इत्येतदूहाख्यकार्येण संबन्धं





सूचयति । तथाच कारणोपपत्तितो य ऊह इत्येवार्थादविज्ञातेत्यनेन संबन्धो नास्ति । नापि भाष्यादौ तथा संबन्ध आश्रितोऽस्ति । तथाऽप्यविज्ञाते तत्त्वज्ञानार्थमिति पदसमभिव्याहारात् कारणोपपत्तित अविज्ञाते इत्येवव्याख्येयतया प्राप्तं भवतीति मनसि कृत्वा सूत्रार्थतया भाष्याद्यभिमतं सन्दिग्धत्वविशेषं वक्तुं स्वयं भाष्याद्यनुक्तोऽपि संबन्धः कारणोपपत्तित इत्यस्य विज्ञाते इत्यनेन संबन्ध इत्यादि चतुर्थवर्णकतत्त्वदीपनमनुसृत्याश्रितः । तथा सत्येवाज्ञातत्वोक्तिसार्थक्यम् अन्यथा येन केनचित्पुरुषेण विज्ञातत्वादिकमपि प्रतीयेत । यद्यपि च प्रमाणस्योपपत्त्येति कर्तव्यतयेति वाच्यस्येत्युक्तेः संभवत्यस्मिन् कारणमिति प्रमाणाभ्यनुज्ञा प्रमाणोपपत्तिरित्यादितात्पर्यशुद्ध्याद्युक्तेश्च कारणस्योपपत्तिरित्येव आयाति । वक्ष्यते चायमर्थ उत्तरमूलेऽपि । चतुर्थवर्णकतत्त्वदीपने तथा संबन्धप्रदर्शनमपि निवर्त्यमेव । तथापि यावदनिष्टापत्त्या विपर्ययशङ्का नापनीयते तावत्प्रमाणं स्वविषये प्रवर्तितुमुद्यतमपि न प्रवर्तते । न चोपपत्तिरेवास्तु निश्चयहेतुः कृतं प्रमाणेनेति वक्तव्यम् । उपपत्तेः स्वतन्त्रताया आश्रयासिद्धतया ततो निश्चयायोगादित्यादि वाचस्पत्याद्यनुसारेणोपपत्तेरपि सहकारितया निर्णायकत्वप्राप्तेरुभयोः समकक्ष्यतया टीकायां व्याख्यानं युक्तम् । अत एव तात्पर्यशुद्धौ तदस्य विषयोऽविज्ञाततत्त्वः । स्वरूपमनिष्टप्रसङ्गः । कारणमाहार्यलिङ्गारोपः । प्रमाणाभ्यनुज्ञा फलं प्रमाणपरतन्त्रस्य सतः फलवत्सन्निधावफलं तदङ्गमिति न्यायेन तत्त्वनिर्णय इति तर्कविषयादिप्रदर्शनं कृतम् । यद्येवं प्रमाणस्योपपत्त्येति व्याख्यानेऽपि सहकारित्वविवक्षया पृथक्करणमित्याशयो वर्ण्यते कथं तर्हि प्रमितत्वाभावपक्षे दूषणपरोत्तरमूलव्याख्यावसरे प्रमाकरणस्य प्रमाणस्योपपत्तिरनुग्रह इत्येतन्मूलोक्तव्याख्यानं पूर्वव्याख्यानापेक्षया व्याख्यानान्तरमित्युक्तिष्टीकायामिति चेत्सत्यम् । कारणोपपत्तितोऽविज्ञाततत्त्व इत्यपि तत्संबन्धाश्रयणेन व्याख्यानेऽनुग्राहकत्वोक्तिवैयर्थ्यादुपपत्तिः पृथगेव विवक्षिता । उत्तरत्र तु अनुग्राहकत्वोक्तिप्रयोजनसद्भावात् तस्यापि विवक्षा क्रियत इत्येवं कारणोपपत्तित इत्यस्य व्याख्यानद्वयं भवतीति वा संबन्धान्तराश्रयणवत् व्याख्यानान्तरमपि स्वयमेव मूले कृतमिति वा विचारमभिप्रेत्य भाष्याद्यनुसारी व्याख्यानान्तरपूर्वव्याख्यानापेक्षया व्याख्यानान्तरतयोक्तमिति न दोष इति ज्ञेयम् । सन्दिग्धत्वलाभाप्रतीत्या अस्योदाहरणमसङ्गतमित्यत आह **अत्र न विशेषतो ज्ञातमित्यादि** । इदं च विशब्दार्थबलेन विशेषतो नाधिगततत्वसामान्यताधिगततत्वयोः प्रतिपादनं वर्णकान्तरतया । वार्तिके तु कुतः पुनः सामान्यतोऽवगतमिति । अविज्ञाततत्त्वेऽर्थ इत्यभिधानादित्युक्त्वा यदि पुनः सामान्यमपि नाधिगतमिति । तन्न ब्रूयादविज्ञाततत्त्व इति । अविज्ञात इत्येव ब्रूयादिति तत्त्वपदप्रयोगबलेनैव सामान्यतोऽवगतत्वलाभादि वर्णितम् । परं तु विशेषाकारेण ज्ञातत्वे तत्त्वज्ञानस्यैव प्राप्तेरविज्ञातत्वोक्तौ सामान्यतोऽधिगतत्वे सति विशेषतो ज्ञाततत्त्वार्थप्रत्ययोपपत्त्या तत्त्वपदस्य वैयर्थ्यमेव प्राप्यत इत्याद्यरुचिं वार्तिकपक्षे सूचयितुं तत्परित्यागेन वर्णकान्तराभिधानमित्यलम् । प्रमेयतत्त्वबोधस्थसूत्रार्थविचारानुसारिपृथक्पत्रं गुरुलिखितं तदनुसारेण एतट्टीकाप्रवृत्तेरत्र तद्ग्रन्थानुसारेण तत्र तत्र व्याख्येयम् । अधिकं वक्ष्यामः । तत्सूत्रं पठति । **अविज्ञाततत्त्व इति** । न विज्ञातं विशेषतोऽज्ञातं तत्त्वं वास्तवं रूपं यस्यार्थस्येति विशेषज्ञाननिषेधात्सामान्यज्ञानलाभेन धर्मिज्ञानं सांशयिकं लभ्यते । कारणं व्याप्यं तदुपपत्तिराहार्यारोपस्तत एव ऊहो विपर्यये अनिष्टप्रसञ्जनरूपस्तर्क इत्यर्थः । तत्त्वज्ञानार्थमिति तत्त्वनिर्णयप्रयोजकत्वदर्शनम् । अत्र तर्क इति लक्ष्यनिर्देशः । अन्यस्तु लक्षणनिर्देशः । यद्यपि संशयजिज्ञासे अप्यविज्ञाततत्त्वे प्रवर्तेते तथापि न कारणोपपत्तित इति तद्व्यवच्छेदः । न विज्ञातं तत्त्वं येनेति





तृतीयाविग्रहेण बहुव्रीहौ ज्ञानमात्रे एवातिव्याप्तिरत उक्तमर्थ इति। तेन च तृतीयविग्रहानन्तरं बहुव्रीहिभ्रमनिरासान्न ज्ञानमात्रप्रसङ्गः। यद्यपि चात्र तत्त्वज्ञानार्थमित्यत एवाविज्ञाततत्त्व इति सिद्धचत्येवेत्यनर्थकमिव तदाभाति तथापि विज्ञाततत्त्वेऽपि य ऊहः पूर्वानुभूतपरिच्छेदात्मा पुनस्तत्त्वज्ञानार्थः सोऽपि तर्कः स्यादिति तन्निरासार्थं तदावश्यकम्। न च कारणोपपत्तित इत्यत एव तद्व्यावृत्तिः। अविज्ञाततत्त्वग्रहणं विना कारणोपपत्तेस्तद्व्यावृत्ताया अलाभात् अधिगतपरिच्छेदात्मनोऽप्यूहस्य कारणस्योपपत्त्या संभवेन जायमानत्वात्कारणासंभवे कार्यस्याभावान्न त्वसाव-विज्ञात इति भवत्यनेन ततो व्यवच्छेदः। यद्यपि चात्राविज्ञाततत्त्वस्येति षष्ठीत्युक्ता, अर्थस्य कर्मत्वात् तत्र च षष्ठ्यनु-शासनात् तथापि विभक्तिव्यत्ययेन सप्तमीनिर्देशोऽयमिति द्रष्टव्यम्। अत्र च तर्कणं तर्क इति भाव एव लक्ष्यः। तस्य साक्षान्निर्णायकत्वात्। न तु तर्क्यतेऽनेनेति करणं तर्कः। परम्परया तदनुकूलत्वात् अस्य च तर्कस्याविज्ञातार्थो विषयः। स च विज्ञाततत्त्व इत्यनेन दर्शितः कारणमाहार्यलिङ्गारोपः स च कारणोपपत्तित इत्यनेनोक्तः। कारणं व्याप्यं तस्योपपत्तिराहार्यारोप इति। स्वरूपमनिष्टप्रसञ्जनं तच्च तर्क इत्यनेन सूचितम्। प्रमाणपरतन्त्रस्य स्वतः फलवत्सन्निधावफलं तदङ्गमिति न्यायेन तत्त्वनिर्णयः फलम्। तच्च तत्त्वज्ञानार्थमित्यनेन दर्शितम्। तत्त्वज्ञानानु-कूलता चास्य प्रमाणाभ्यनुज्ञाद्वारा। प्रमाणाभ्यनुज्ञा च विरोधिकोट्यन्तरगोचरजिज्ञासानिरासद्वारा नियतकोटि-जिज्ञासासंशयान्नानाकोट्युपस्थितौ संशयानुसारिण्याः अव्यवस्थितनानाकोटिकजिज्ञासाया अपि ततो जननात्। तर्कश्चोक्तजिज्ञासां प्रत्यन्वयव्यतिरेकाभ्यां हेतुः। तेन विना विरोधिकोटिजिज्ञासाया अनिरासात् इति। ततश्चायं सूत्रार्थः। प्रमाणविषयाभ्यनुज्ञाद्वारेण फलसिद्धौ व्याप्रियमाणः ऊहस्तर्कः। स च सन्देहापन्न एव प्रवर्तत इत्यज्ञाततत्त्व इत्यनुक्त्वाऽविज्ञाततत्त्व इत्युक्तमिति। तथाच सन्दिग्धस्यैव न्यायविषयत्वे सिद्धे निश्चितस्य तद्विषयत्वं न्यायसूत्रे विरुद्धमित्याशयः। इति प्रमेयतत्त्वबोधानुसारेण विज्ञाततत्त्वेऽर्थ इत्यादिसूत्रविचारो गुरुराजकृतोऽस्ति तत्रत्यमुपयुक्तं संशोध्य स्वामिलिखितप्रकारे योजनीयमस्ति सावकाशतादशायाम्। तत्पुनर्ब्रह्म प्रसिद्धमित्यादि शाङ्करभाष्य-व्याख्यानावसरे निष्पादितक्रिये कर्मण्यविशेषाधायिनः साधनस्य साधनन्यायातिपातादिति दूषणं भामत्यामुक्तं तद्व्याख्यानरूपकल्पतर्वनुसारेणावयवस्थलीयन्यायवाचस्पत्युक्तैतद्दूषणस्य निबन्धकृतव्याख्यानानुसारेण च व्याचष्टे **निष्पादितक्रिये इति। क्रियासाधकत्वरूपमिति**। इदं च फलितार्थकथनम्। अक्षरार्थस्तु। साधनस्य न्यायः प्रवृत्तिप्रकारः स च नानुपलब्ध इत्यादिरूपस्तस्यातिपातोऽभाव इति। अतिपातादिति भामत्यनुसारेणात्मपरीक्षास्थ-निबन्धगतपञ्चम्यन्तपाठानुसारेण च स्यादिति योजितम्। न हि साध्यरहितं साधनमिति युक्तमिति भावः। साधनत्वं न स्यादित्यर्थ इत्यनन्तरं निष्पादिता प्रमितिलक्षणा क्रियेत्यादि कल्पतरुरिति वाक्यं टीकापुस्तकेऽस्ति। तत्तु स्वामिचरणैरुक्तव्याख्यानं कल्पतरुसंमतमिति दर्शयितुं हंसपदे प्रक्षेपं विनोपर्येव टीकावल्लिखितं मूलकोशे। तत् दृष्ट्वा लेखकैरिति कल्पतरुरित्यस्येति कल्पतरौ व्याख्यानादिति व्याख्यां कुर्वद्भिः संमतित्वेन ग्रन्थान्तर्गतता अस्य अस्तीत्याश्रित्य हंसपदप्रक्षेपणग्रन्थे निवेश आश्रितः। तदनुसारेण सर्वपुस्तकेषु तथैव पाठ इति ज्ञेयम्।

**स०व्र०— न तावदिति**। ज्ञातुमिच्छा जिज्ञासा। निश्चित एवेत्यसन्दिग्धो विषयो न जिज्ञासां अपेक्षते। सा च विचाररूपत्वात् नासन्दिग्धं विषयीकरोतीत्युभयतो नियमः। सामान्यतो ज्ञाते विशेषेण सन्दिग्धेऽर्थे कारणस्य

प्रमाणस्योपपत्तितोऽनुग्राहकत्वेन विशेषनिर्णयार्थमूहस्तर्क इति समुदायार्थः ॥ **कर्मणि** कर्मकारकभूते अर्थे । निष्पादिता क्रिया यस्य तन्निष्पादितक्रियं तस्मिन्विशेषानाधायिनः क्रियाफलाजनकस्य साधनस्य करणस्य साधनन्यायातिपातः । क्रियायां साधकतमत्वाभावः । क्रियायामनुपकुर्वतः साधनत्वाभावात् तृणादिविषये प्रत्यक्षादिनैव निश्चिते निष्पादितज्ञानक्रियेऽस्य तर्कस्य अनुपयोगित्वान्न तद्विषया जिज्ञासेति भावः ।

**कुण्डल०— अविज्ञाततत्त्व इति** । अस्य गौतमसूत्रस्यायमर्थः । अविज्ञातं तत्त्वं स्वरूपं यस्यासौ तथोक्तः । सन्दिग्ध इत्यर्थः । तस्मिन्नर्थे कारणोपपत्तितः कारणानुग्रहणेन तत्त्वज्ञानार्थं क्रियमाण ऊहः विचारस्तर्क इति । **निष्पादितक्रिये चेति** । अस्य सूत्रस्यायमर्थः । निष्पादितक्रिये उत्पन्ना क्रिया प्रमा यस्य तथोक्तम् । प्रमितमित्यर्थः । तस्मिन्कर्मणि प्रत्यक्षादिना प्रमिते कर्मणि घटादिलक्षणे विषयेऽविशेषाधायिनः विशेषमसंपादयतः साधनस्यायं घट इत्यादि शब्दलक्षणस्य साधनन्यायातिपातः साधनत्वव्यतिक्रमः इति । **असाविति** । तृणादि-लक्षणः । अनात्मेत्यर्थः ।

**विट्ठ०— अविज्ञाततत्त्वेऽर्थे इति** । अविज्ञातं तत्त्वं याथार्थ्यं यस्य तस्मिन् सन्दिग्धेऽर्थे इति यावत् । तर्कव्यापारमाह **कारणोपपत्तित इति** । प्रमाकरणस्य प्रमाणस्योपपत्तिरनुग्रहः तत्करणेनेत्यर्थः । प्रमाणानुग्रहं कुर्वन् इति यावत् । तत्त्वज्ञानार्थमिति तत्प्रयोजनकथनम् । ऊहः प्रसङ्गात्मेति लक्षणकथनम् । एतादृशः तर्क इत्यर्थः । जिज्ञासायाः तृणादिविषयत्वे साधनलक्षणाभावेनासाधनत्वं स्यादित्याह **निष्पादितेति** । निष्पादिता प्रमितिलक्षणा क्रिया यस्मिन् तस्मिन् । प्रत्यक्षादिना सम्यक् प्रमिते तृणादिलक्षणे कर्मणि विशेषानाधायिनः साधनस्य साधनत्व-रूपसाधनन्यायस्यातिक्रमः स्यात् अतो न तृणाद्यनात्मविषयेयं जिज्ञासा इत्यर्थः ।

**चषकः**— हेतुचतुष्टयेऽपि व्याप्तिमुपपादयति **विषयादीति** । असिद्धिमाशङ्कते **विषयादीति** । विषया-भिमतधर्मिकानात्मात्मोपरक्तकल्पद्वयीघटकादिमकल्पे ऐन्द्रियकातीन्द्रियभेदभिन्नतृणादिधर्मादित्वगोचरकल्पद्वयीं द्वितीयेऽपि तस्मिन् जीवेश्वरत्वावगाहितद्वयीघटकादिमेऽपि स्वात्मपरात्मत्वविषयिणीं तां प्रतिविधित्समानो-ऽसिद्धिशङ्कां परिजिहीर्षति **न तावदिति** ॥ **यथोक्तमिति** । इतीत्यनेनान्वेति । गौतमसूत्र इति पूरणीयम् । अविज्ञाततत्त्वे । अनवधृतस्वरूपे सन्दिग्ध इति फलितम् । कारणपदेन प्रमाणसामान्यमुपपत्तिपदेन तद्विशेषस्ताभ्यां पञ्चमीद्विवचनस्यायं तसिलादेशः । अविज्ञातेत्यनेनान्वेतीत्येकः पन्थाः । कारणस्याहार्यलिङ्गस्योपपत्तिः सद्भाव-स्तस्मादिति ऊहपदार्थेन अन्वेतीति चान्यः । प्रमाकरणस्य प्रमाणस्योपपत्तिरनुग्रहस्तत्करणेनेत्यर्थ इति चाभि-धास्यत एव । **निष्पादितक्रिये** उत्पादितप्रमितिरूपक्रियाविशेषिते कर्मणि विषये । **अविशेषाधायिनः** क्रियारूपं तदुपकारकलक्षणं वा विशेषमनुत्पादयतः । **साधनन्यायातिपातः** साधनमर्यादातिक्रमः । फलानुपधायकतया साधनमपि असाधनायितमिति भावः ।

**गूढ०**— हेत्वसिद्धिं शङ्कते **विषयादीति** । स हि किमनात्मा आत्मा वा आद्येऽपि किं तृणादिर्वा नाद्य इत्याह **न तावदिति** । अत्रैव काणादसूत्रं संवादयति **यथोक्तमिति** । एतच्च स्वयमेव व्याख्यास्यति ।





असन्दिग्धस्याप्यस्तु विषयत्वमित्यत आह **निष्पादितेति** । निष्पादिता क्रिया ज्ञानरूपा यस्येति विग्रहः । साध्यतेऽनेनेति तत्साधनं, न हि सिद्धं साधनार्हम् । तथाच सिद्धेऽर्थे विशेषान्तरमनादधत्साधनमेव नेति साधनन्यायातिक्रम इत्यर्थः ।

॥ अधिकारितत्संबन्धवैधुर्यम् ॥

**१२० सु०— एवंविधे चाधिकारी दूरोत्सारितः । यतोऽर्थी समर्थो विद्वानधिक्रियते । न चैतादृशोऽर्थेऽर्थिता संभवति ।**

**परि०— अर्थी** । फले तत्साधने वा कामनावान् । **समर्थः** पटुकरणः । **विद्वान्** कर्तव्योपयुक्तज्ञानी ॥ **एतादृश इति** । निष्फले तृणादौ ।

**श्रीनिधि०— एवंविधे चेति** । निष्प्रयोजन इत्यर्थः । समर्थो विद्वानिति दृष्टान्तार्थम् । **एतादृशोऽर्थ इति** । निष्प्रयोजनज्ञानविषय इत्यर्थः । यो हि यत्प्रयोजनेच्छुः यद्विषयज्ञानमपेक्षते स तत्राधिकारीति भावः ।

**वा०चं०— एवंविधे चेति** । उपेक्षणीयविषयक इत्यर्थः । सामान्यविवक्षया नपुंसकनिर्देशोऽयमिति ज्ञातव्यम् । तेन जिज्ञासाया विशेष्यत्वे स्त्रीलिङ्गापत्तिस्तृणादेरर्थस्य विशेष्यत्वे तु विषयस्य कुत्रापि साधिकारित्वाभावादप्रसक्तप्रतिषेधापत्तिरिति दूषणमपास्तं भवति ॥ **न चैतादृश इति** । अर्थी समर्थ इत्यत्रार्यत इत्यर्थ्यत इति व्युत्पत्तिभ्यां क्रमेण विषयः प्रयोजनं चार्थो ज्ञेयत्वेन विषयवत्ता काम्यत्वेन प्रयोजनवत्ता चार्थिता विवक्षिता । ततश्चैतादृशे निश्चितेऽर्थे विषयेऽर्थिता जिज्ञास्यत्वेन तद्वत्तैतादृशे अविद्यमानेऽर्थे प्रयोजनेऽर्थिता काम्यत्वेन तद्वत्ता पुरुषस्य न हि संभवतीत्यर्थः । यद्वा न चैतादृशोऽर्थ इति वक्ष्यमाणम् अर्थ इति एवंविधे च इत्यनेनापि संबध्यते । एवंविधे एतादृश इत्यनयोः निश्चिते निष्प्रयोजने चेत्युभयमप्यर्थः । सतिसप्तम्यौ चेमे । सप्तम्यन्तोऽर्थशब्दो विषयमात्रपरः । अर्थिशब्दश्चोक्तरीत्या उभयपरः । एवं च निष्प्रयोजने निश्चिते च विषये सत्यधिकारी दूरोत्सारितो यतोऽर्थी समर्थो विद्वानधिक्रियते । न च निष्प्रयोजने निश्चिते च विषये सत्युक्तोभयविधार्थिता संभवतीत्यर्थः ।

**वा०र०— सामान्यविवक्षयेति** । जिज्ञासायाः जिज्ञासात्वरूपविशेषं विहाय वस्तुत्वादिसाधारणाकारेण निर्देशविवक्षयेत्यर्थः । एवं सामान्यविवक्षया नपुंसकत्वं च तच्चाविशेषमानेनेत्युत्तरभाष्यमूलटीकायां स्पष्टम् । तदुपपादनं च तत्रैव करिष्यत इति द्रष्टव्यम् । उक्तरीत्या नपुंसकत्वाश्रयणे निमित्तमाह **तेनेति** । जिज्ञासातृणाद्योरुभयोरपि प्रकृतत्वादुभयविशेष्यत्वप्रसक्तिरिति भावः । अर्थी समर्थ इत्यत्र हीति हिशब्दघटितः पाठः स्वरसः । न तु यथाकथञ्चिदर्थिता विवक्षिता । येन प्रयोजनवत्त्वमात्रस्यैवार्थितारूपत्वेन प्रयोजनशून्येऽर्थिता

न संभवतीत्यस्य लाभेऽपि विषयशून्ये सा न संभवतीत्यस्य लाभायोगप्रसङ्ग इति भावः । अर्थितापदस्य विषयवत्त्वरूपत्वेन योजनानुसारेणैतादृश इत्याद्यनूद्य निश्चित इत्यादि व्याख्यानम् । प्रयोजनवत्त्वरूपत्वेन योजनानुसारेण त्वेतादृश इत्याद्यनूद्य विद्यमान इत्यादि व्याख्यानमिति विवेकः । अत्र पक्षे सामान्ये नपुंसकमित्याश्रित्यैवंविधे चेत्यनेन जिज्ञासापरामर्श आश्रयणीयो भवति । स न युज्यते । तृणादिलक्षणस्यानात्मन एवंविध इत्यनेन परामर्शसंभवात् । क्रमेणाधिकारित्वार्थित्वाभावोपपादनाय प्रवृत्तैतद्वाक्यद्वये प्रथमवाक्येऽप्युत्तरवाक्यश्रुतार्थपदस्याकर्षणेनैवंविधेऽर्थ इति संबन्धाश्रयणसंभवाच्च । न चैवमर्थस्य साधिकारिताया अभाव इति दोषः । एवंविध इत्येतत्सप्तम्याः सतिसप्तमीत्वाङ्गीकारोपपत्तेरित्यपरितोषं सूचयन्पक्षान्तरं विवक्षुरेवंविध इत्यादिवाक्यद्वयगतशब्दद्वयस्यैकार्थत्वात्सकृदेवार्थं वदन्वाक्यद्वयं क्रमेण योजयति **यद्वा न चेति** । **इमे इति** । एतादृशेऽर्थे इत्यत्र सतिसप्तम्याश्रयणेनार्थस्वार्थिताधिकरणत्वायोगान्नाधिकरणत्वं सप्तम्यर्थः । अर्थविषये अर्थवत्त्वमित्यर्थस्य चानन्विततया विषयत्वमपि न सप्तम्यर्थ इति दूषणं पराकृतं वेदितव्यमित्याशयेनोत्तरवाक्येऽपि सतिसप्तमीत्ववर्णनमिति ज्ञेयम् । **सप्तम्यन्त इति** । एवंविधेऽर्थे एतादृशेऽर्थ इति सप्तम्यन्त इत्यर्थः । अर्थी समर्थ इत्यत्रत्यार्थशब्दव्यवच्छेदाय सप्तम्यन्त इति विशेषणम् । **अर्थिशब्दश्चेति** । अर्थी समर्थ इत्यत्रार्थिशब्दोऽर्यत इति व्युत्पत्त्या अर्थशब्दवाच्यज्ञेयवताऽर्थ्यत इति व्युत्पत्त्या अर्थशब्दवाच्यप्रयोजनवत्ता चेत्युभयपर इत्यर्थः ।

**धर्मादिरूपोऽप्यनात्मा न विषयः—**

## १२१ सु०— धर्मादिलक्षणस्त्वनात्मा शास्त्रान्तरादिनैव निर्णीतः ।

**परि०—** ऐन्द्रियकस्याविषयत्वमुपपाद्यातीन्द्रियस्यापि तदुपपादयति **धर्मादीति** । यद्वा निष्फलस्याविषयत्वमुपपाद्य सफलस्यानात्मनस्तदाह **धर्मादीति** ॥ **शास्त्रान्तरादिनेति** । कर्ममीमांसया धर्मादिस्वरूपस्य दैवीमीमांसया देवतादिस्वरूपस्य कालादिस्वरूपस्य ज्योतिःशास्त्रादिना सिद्धत्वादिति भावः ॥

**आनन्दः—** द्वितीयं प्रत्याह **धर्मादीति** ।

**कं०रा०— शास्त्रान्तरादिना** पूर्वमीमांसादिना ।

**वा०चं०— धर्मादीत्यादि**पदेन देवादिस्वरूपमश्वलक्षणादिकं च गृह्यते । **शास्त्रान्तरं** मीमांसान्तरम् । **आदिपदेन** अश्वविद्यादिसङ्ग्रहः ।

**वा०र०— मीमांसान्तरमिति** । धर्मदेवमीमांसा इत्यर्थः । **अश्वलक्षणादिक**मित्यादिपदेन षड्जादिस्वरादिलक्षणादिपरिग्रहः । **अश्वविद्यादी**त्यादिपदेन गान्धर्वविद्यादिपरिग्रहः ।





**कुण्डल०— शास्त्रान्तरेति**। कर्ममीमांसादिलक्षणशास्त्रान्तरादिनैवेत्यर्थः।

**गूढ०—** द्वितीयं प्रत्याह **धर्मादीति**।

॥ नात्मापि विषयः ॥

**१२२ सु०— आत्मा तु (च) शरीरेन्द्रियादिसङ्घातव्यतिरिक्तो नास्त्येव। शरीरादिकं च यथायथं प्रत्यक्षादिनैव निश्चितम्। नन्वात्मा शरीरादिव्यतिरिक्तोऽहमिति असन्दिग्धाविपर्यस्तसाक्षात्प्रतीत्यैव निश्चीयत इति चेत्। एवं तर्हि तत एव न जिज्ञास्यः।**

**अत एवानादितस्तदीयतत्त्वज्ञाने विद्यमानेऽपि इष्टानिष्टप्राप्तिपरिहारयोरदर्शनान्नासौ जिज्ञासितः कस्यचित्प्रयोजनस्येष्टे।**

**परि०— तत एवेति**। साक्षात्प्रतीतिसिद्धत्वादेवेत्यर्थः। सन्दिग्धार्थ एव न्यायविषय इति प्रागुक्तत्वादिति भावः। अत एव इत्यस्य विवृतिः अदर्शनादित्यन्तेन। प्रयोजनस्येत्यधीगर्थदयेशां कर्मणीति षष्ठी।

**वं०प०— तत एव** निश्चितत्वादेव॥ **अत एवानादित इति**। अहमित्यसन्दिग्धाविपर्यस्तसाक्षात्प्रतीतेः सकाशादेवेत्यर्थः।

**आनन्दः—** द्वितीयेऽप्यात्मा जीवो वा ब्रह्म वा ईश्वरो वा। नाद्य इत्याह **आत्मा त्विति**। एतच्च चार्वाकमताभिप्रायेण। असन्दिग्धा अविपर्यस्ता या साक्षात्प्रतीतिस्तयेत्यर्थः। **तत एवेति**। निश्चितत्वादेवेत्यर्थः। **अत एवेति**। यतः साक्षात्प्रतीतिविषयोऽत एवेत्यर्थः।

**श्रीनिधि०— साक्षात्प्रतीत्येति**। अत एव साक्षिप्रतीत्या निश्चितत्वादेव। प्रयोजनस्येष्ट इति अधीगर्थेति षष्ठी। 'जरद्गवः कंबलपादुकाभ्यां द्वारि स्थितो गायति भद्रकाणि। तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्घ' इति जरद्गववाक्यम्। जरद्गवादिवाक्यवच्छ्रुतेराभासत्वम्। पावकशैत्यानुमानवत् जिज्ञासाया आभासत्त्वमापाद्येतेत्यर्थः।

**वा०चं०—** आत्मपक्षं दूषयति **आत्मा चेति**। यथा गोशब्दस्य व्यक्त्याकृतिजातिसन्निधौ प्रयुज्यमानस्य वाच्यं कैश्चिज्जातिरिति कैश्चिद्व्यक्तिरिति कैश्चिदाकृतिरिति कैश्चित्त्रितयमपीति प्रतिपन्नं तथा चैतन्यकार्यकारणसङ्घातसन्निधावुत्पद्यमानाहंप्रत्ययस्यालम्बनं कैश्चिद्देहादिष्वेकैकमेव प्रतिपन्नं कैश्चिच्च सङ्घात एवेति प्रतिपन्नमिति पक्षद्वयमत्राभिप्रेतम्। अत एव गीताभाष्यटीकायां पक्षद्वयमप्युदाहृत्य निराकृतम्। एवं च शरीरेन्द्रियादिश्च सङ्घातश्चेति विग्रहः। सङ्घातश्च प्रकृतत्वात्तेषामेव। आदिपदेन च मनोबुद्ध्योर्ग्रहणम्। अत्रात्मा नास्त्येवेत्येवं विशेषणपरित्यागेन

अन्वयस्याभिप्रेतत्वाच्छून्यपक्षोऽप्यत्र शङ्कितः। एवं चोत्तरवाक्ये शून्यस्यासत्त्वादेव न विषयत्वमित्यपि द्रष्टव्यम्। शरीरादीनां प्रत्येकं सङ्घातस्य वा आत्मत्ववादिनामहंप्रत्ययविषयत्वेन शरीरादीनां प्रत्यक्षत्वस्य संमतत्वेऽप्यादिपदेन अनुमानादिग्रहणं यथायथमित्युक्तिश्च विषयत्वाभावप्रयोजकनिश्चितत्वमुपपादयतामस्माकं परेण प्रमाणान्तरसिद्धत्वे अङ्गीकृतेऽपि न क्षतिरिति प्रदर्शयितुमिति द्रष्टव्यम्। तत्र देहस्य तावदात्मत्वमहं मनुष्य इत्याद्यनुभवसिद्धमिति कश्चित्। अत एव गीताभाष्यटीकायां न केवलमित्यादिनैतदेवोक्तम्। सत्यपि शरीरे विषयज्ञानानामिन्द्रियैरन्वय-व्यतिरेकवत्त्वात्कारणतया अन्वयव्यतिरेककल्पनादाश्रयतया अन्वयव्यतिरेककल्पनस्याभ्यर्हितत्वाच्छरीरमहमिति-प्रत्ययाभावेऽपि मनुष्यत्वादिधर्मविशिष्टस्याहंप्रत्ययालम्बनत्ववत्काणोऽहं मूकोऽहमिति धर्मविशिष्टेन्द्रियाणामहंत्वेन सामानाधिकरण्यस्य सत्त्वात् शरीरस्याहंप्रत्ययालम्बनत्वविज्ञानान्वयव्यतिरेकयोरिन्द्रियात्मनामाश्रयत्वेनाप्युप-पत्त्येन्द्रियाणामेव व्यस्तानामात्मत्वमित्यपरः। एतेनेन्द्रियचैतन्यपक्षोऽपि निरस्त इति गीताभाष्यटीकायामियमेव तत्पक्षप्रसक्तिरभिमता। तत्सन्निधौ ईक्षणदर्शनस्य शरीरादिसर्वसाधारणत्वेनास्यैव विशिष्यप्रसञ्जकत्वात्। तत्रैव पूर्वत्र शरीरप्राणजठरानलेन्द्रियमनोविषयसन्निधावीक्षणदर्शनादेषामन्यतमः किं न स्यादित्युक्तिस्तु साधारणत्वहेतो-स्तत्तत्प्रापकत्वमभिप्रेत्य न तु तस्यैव विशेषप्रापकत्वमित्यभिप्रेत्यासंभवादिति द्रष्टव्यम्। स्वप्ने चक्षुराद्यभावेऽपि केवले मनसि विज्ञानालम्बनत्वाहंप्रत्ययविषयत्वयोरबाधितयोर्दर्शनाद्रूपादिविज्ञानानां चक्षुराद्याश्रयत्वे तदभावे केवलं मनसि स्मृत्यनुपपत्तेराश्रयान्तरे च सिद्धे चक्षुरादीनां ज्ञानान्वयव्यतिरेकयोः करणविषयतयाऽपि उपपत्तेः। अहंप्रत्ययस्य च देह इव करणे कर्तृत्वोपचारात्सिद्धेश्चक्षुरादिकरणं शरीराधारं मन एवात्मेत्यन्यः। पूर्ववदिदमेव मनःपक्षविशेष-प्रसञ्जकं टीकाभिमतं द्रष्टव्यम्। शरीरादीनां विज्ञेयतया घटादिवज्ज्ञानव्यतिरिक्तत्वेनात्मत्वान्मनसश्च समनन्तर-प्रत्ययव्यतिरेकिणोऽभावाच्च विज्ञानमेवाहंप्रत्ययालम्बनमात्मेत्यपरः। सङ्घातावलम्बनोऽहमिति प्रत्ययः सङ्घात-सन्निधावहमितिप्रत्ययदर्शनादित्यन्य इत्युक्तमेव। विज्ञानव्यतिरिक्तानामात्मत्वस्य विज्ञेयत्वेन प्रत्याख्यानात्सुषुप्ते च विज्ञानलेशस्याप्यभावेन समनन्तरप्रत्ययरूपकारणाभावात्स्वोचितकारणाभावे च सुप्तोत्थितस्याकस्माज्जाय-मानाहंप्रत्ययस्य सदवलम्बनत्वानुपपत्त्या शून्यालम्बनत्वमेवेत्यपि कश्चित्। नन्वित्युत्तरवाक्येन च सर्व एते पक्षा निराक्रियन्ते। तत्र चात्माऽसन्दिग्धाविपर्यस्तसाक्षात्प्रतीत्यैव निश्चीयत इत्येतावन्मात्रेण शून्यपक्षनिराकरणम्। अत्र च य एवाहं पूर्वेद्युर्हस्तिनमद्राक्षं स एवाहं सम्प्रति तुरगमुपलभ इत्येवमादिप्रत्यभिज्ञा साक्षात्प्रतीतिरभिप्रेता। तद्वशाच्च सुप्तावात्मनः सत्त्वमास्थेयमिति। विशिष्टेन वाक्येन तु पक्षान्तरनिराकरणम्। तस्य च स्वप्ने शरीरानवभासेऽपि चक्षुरादिव्यापाराभावेऽपि चाहमिति साक्षात्प्रतीतेः सुप्ते च शरीरेन्द्रियाणां मनोबुद्ध्योश्च व्यापाराभावेऽप्येतावन्तं कालं सुखमस्वाप्समित्युत्थितपरामर्शानुरोधेनाहमितिप्रतीतेः सुप्तिदशायामपि सिद्धेस्तस्याः शरीरादिभिन्नविषयत्वमिति। शरीरादेर्ममेतिप्रतीतिविषयस्याहमितिप्रतीतिविषयत्वासंभवात् अहमितिप्रतीतेः शरीरादिव्यतिरिक्तविषयकत्व-मित्यप्यर्थः। एवं चानेन सर्वपक्षनिराकरणम्। गीताभाष्ये तु प्रकारान्तरेणैषां पक्षाणां निराकरणमिति द्रष्टव्यम्। एवं तर्हि नात्माभावे तस्य शरीराद्यभेदे वा अस्माकं तात्पर्यं किन्तु तस्य निश्चितत्वे। तदर्थं च तस्य शरीराभेदा-द्युक्तिः। एवं च शरीराद्यतिरिक्ततयाऽप्यात्मनो निश्चयाङ्गीकारे तावतैवाजिज्ञास्यत्वरूपास्मदभिमतसिद्धिरित्याह **एवं तर्हीति**।





**वा०र०— आत्मपक्षं दूषयतीति** । एवमनात्मपक्षं सप्रभेदं प्रदूष्यात्मपक्षं सप्रभेदं दूषयतीत्यर्थः । आत्मा चेतीत्यस्यात्मा चेत्यादिनेत्यर्थः । उत्तरत्र परात्मेश्वरात्मपक्षदूषणपरतया पृथगवताराभावादयमेवार्थः । यद्वा सप्रभेदमात्मपक्षं दूषयन् स्वात्मपक्षं तावद्दूषयतीत्यध्याहारेण योज्यम् । स्वात्मेति स्पष्टमेव वक्तव्ये तथानुक्त्वा सामान्येनात्मेति वचनमेतत्पक्षोक्तदूषणस्य परात्मपक्षे ईश्वरात्मपक्षे च समानतया सर्वात्मपक्षदूषणत्वमित्याशयेनेति परमार्थः । शरीरेन्द्रियादितत्सङ्घातानामात्मत्वपक्षाणां परस्परविरुद्धानां प्रापकाभावात्कथमुत्थानमित्यतस्तत्तत्पक्ष-प्रापकं देहशब्दश्चेन्द्रियादिसहितशरीरवृत्तिरिति गीताभाष्यटीकोक्तिं मनसि कृत्वा वदन् शरीरेन्द्रियादिसंबन्धीयः सङ्घात इति विग्रहाश्रयणेन सङ्घातस्यैवात्मत्वशङ्केति प्रतीतिं निराकुर्वन् देहमात्रमित्यादिशाङ्करभाष्यव्याख्यानरूपतद्यथा गोशब्दस्य व्यक्त्याकृतिजातिक्रियागुणसास्नाद्यनेकार्थमात्रसन्निधौ प्रयुज्यमानस्येत्यादिपञ्चपादिकानुसारेण तत्र दृष्टान्तं च कथयन्नेतत्पक्षाणामुत्थानं व्युत्पादयति **यथा गोशब्दस्येत्यादिना** । आकृतिरवयवसन्निवेशविशेषः । **कैश्चि-दिति** । प्रथमस्य वैदिकैरिति । द्वितीयस्य तस्य सांख्यादिभिरिति । तृतीयस्य आर्हतादिभिरिति । चतुर्थस्य तु नैयायिकादिभिरित्यर्थो ज्ञेयः । कैश्चिदुभयमित्यपि ज्ञेयम् । वैयाकरणैस्तथाभ्युपगमात् । उक्तं च विवरणे । **वैयाकरणैरुभयमिति** । क्रियागुणसास्नादयोऽपि यथादर्शनमिति विवरणानुसारेणाधिकं च ज्ञेयम् । **कार्यकारणेति** । कार्यादिपदेन शरीरेन्द्रियप्राणजाठरानलमनोबुद्धीनां ग्रहणम् । उपपत्तिस्तूत्तरग्रन्थादेव स्पष्टीभविष्यति । तथाच यथा गोशब्दप्रयोगे जात्यादीनामन्वयव्यतिरेकनियमादेकस्यापि व्यभिचाराभावात् गोशब्दार्थत्वाशङ्का तथा शरीरादीनामप्यन्वयव्यतिरेकवत्त्वादात्मत्वाशङ्केति भावः । **पक्षद्वयमिति** । सङ्घातातिरिक्तपक्षाणामेकैकविषयत्वेन क्रोडीकृतानामेकत्वविवक्षया द्वित्वोक्तिरित्यवगन्तव्यम् । **पक्षद्वयमप्युदाहृत्येति** । ईक्षिता हि तेन सिद्ध्यति । स च शरीरप्राणजाठरानलेन्द्रियमनोविषयसन्निधावीक्षणदर्शनात् तेषामन्यतमः किं न स्यादित्यतः शरीरस्य तावदीक्षणं निषेधति । न हीतीत्यनेन । शरीरपक्षनिराकरणपरतया भाष्ययोजनावसरे एतेन सङ्घातचैतन्यपक्षः प्राणादिचैतन्यपक्षश्च पराकृतो वेदितव्यः । मनस ईक्षितृत्वे तमतिदेशेन निराचष्टे । समश्चेतीत्याद्युक्त्वा एतेनेन्द्रियचैतन्यपक्षोऽपि निरस्त इति । अतीतादिज्ञानदर्शनाद्विषयचैतन्यपक्षः स्फुटदूषण इति न निराकृत इत्यभिधानादिति भावः । **मनोबुद्ध्यो-रिति** । इन्द्रियग्रहणेन गृहीतयोरपि तयोर्विशेषविवक्षया पृथक्करणम् । अत एव वात्स्यायनभाष्ये तृतीयाध्याये 'किं देहेन्द्रियमनोबुद्धिसङ्घातमात्रमात्मा आहोस्वित्ततोऽतिरिक्त इती'त्युक्तम् । मन आत्मेति बुद्धिशब्दोक्तं विज्ञानमात्मेति च पक्षोपपादनावसरेऽनुपपादनस्याधिकस्य सत्त्वाच्चेति ज्ञेयम् । शरीरेन्द्रियादिकमेवात्मेति मतानुसारेण पूर्वपक्षप्रवृत्तिवत् आत्मैव नास्तीति शून्यवादिमतानुसारेणापि पूर्वपक्षप्रवृत्तिरभिमतेति दर्शयन् तर्हि शरीरादिकं चेत्युत्तरवाक्ये पक्षान्तरस्यैवैतत्पक्षस्य दूषणस्याप्रतीतेः कथमेतदित्यतः उपलक्षणया तदपि द्रष्टव्यमित्याह **अत्रात्मा चेत्यादिना** । **विशेषणपरित्यागेने**त्यत्र शरीरेन्द्रियादिसङ्घातव्यतिरिक्त इति विशेषणं तत्परित्यागप्रदर्शनमात्मा च नास्त्येवेत्येव-मिति । आत्माभावरूपशून्यपक्षे विशेषणानुपयोगादेवमुक्तम् । शङ्कित इत्यस्य शङ्कितो भवतीत्यर्थः । यद्यपि विज्ञानव्यतिरिक्तानामित्यादिनाऽन्ते शून्यालम्बन एवाहंप्रत्यय इति शून्यवादः शङ्कितः । तथा चादौ शून्यपक्ष-शङ्कनस्य अन्ते तत्पक्षशङ्कनेन तस्य वा अनेन गतार्थत्वात्स्थलद्वये शून्यपक्षाशङ्कनं न युक्तमित्याभाति । तथापि तदुभयत्रावान्तरविशेषात्पृथगाशङ्का युक्ता । तथाहि । प्रथमतः शङ्कितः शून्यपक्षो हि । आत्मैव नास्तीत्येव-

मात्माभावरूपे शून्यमेवास्तीति पर्यवसन्नः । अयं च पक्षः सर्वो ह्यात्मास्तित्वं प्रत्येति न नाहमस्मीतीत्यादिशाङ्करभाष्यसंबन्धि यदि नात्मास्तित्वप्रसिद्धिः स्यात्सर्वलोको नाहमस्मीति प्रतीयादिति पञ्चपादिकाया विवरणे ननु शून्य एवायमात्मा प्रकाशते तत्कथमात्मास्तित्वप्रसिद्धिरिति शून्यवादमाशङ्क्याहेति तत्पञ्चपादिकावाक्यावतारानुसारेणात्मनास्तित्वरूपशून्यविषयकः । तत्पक्षे आत्माभावरूपशून्यस्य चासत्त्वान्न जिज्ञासाविषयत्वमिति शरीरादिव्यावृत्तयुक्तिष्टीकायामुपलक्षणत्वेनोक्ता । अन्ते शङ्किष्यमाणशून्यपक्षस्त्वहंप्रत्ययालम्बनं यत्तदात्मेति पक्षं स्वीकृत्य तदालम्बनं शरीरादिविज्ञानान्तमिति पक्षाणामुत्थानप्रकारनिरूपणव्याजेन पूर्वपूर्वपक्षास्वारस्यसूचनानन्तरं विज्ञानस्यापि सुषुप्तावभावेन शून्यालम्बन एवायमहंप्रत्यय इति तत्प्रत्ययालम्बनं यदात्मेत्युच्यते तच्छून्यमेवेति शून्यमेवात्मेति प्राप्तमिति शङ्कायां पर्यवस्यति । तस्मिन् शून्ये तु विज्ञानादिवदहंप्रत्ययसिद्धत्वादेव न जिज्ञासाविषयत्वमिति शरीरादिसाधारण्येव युक्तिः । असत्त्वरूपाप्यभ्युच्चयेन भवति । अत एवास्ति देहादिव्यतिरिक्तसंसारीत्यादिना देहादिशून्यान्तानामात्मत्वमिति तत्तत्पक्षाणां निराकरणं यत्पञ्चपादिकायां कृतं तदुपपादनविवरणमध्ये तस्मादहमुल्लेखप्रत्यभिज्ञाभ्यां शून्यविज्ञानभेदव्यतिरिक्तआत्मेत्युपपाद्यान्ते तदेवमहमुल्लेखप्रत्यभिज्ञाभ्यां शरीरेन्द्रियमनोबुद्धिशून्यव्यतिरिक्त आत्मा सिद्ध इत्युपसंहृतम् । तस्मादात्माभावरूपशून्यपक्षः अहंप्रत्ययालम्बनमात्मेति स्वीकृत्य तदालम्बनं शून्यमेव न ततोऽतिरिक्तआत्मेति शून्यपक्षश्च भिन्नविषयावाद्यन्तयोष्टीकायामाशङ्किताविति नैकेनैकस्य गतार्थताशङ्कावकाशः । यत्पुनरुत्तरटीकायां नन्वित्युत्तरग्रन्थे च सर्वे एते पक्षा निराक्रियन्त इति प्रतिज्ञाय तत्र चात्माऽसन्दिग्धविपर्यस्तसाक्षात्प्रतीत्यैव निश्चीयत इत्येतावन्मात्रेण शून्यपक्षनिराकरणमिति विवेकपूर्वकं तदुपपादनं कृतम् । तत्रोभयविधशून्यपक्षनिराकरणस्य तदंशेन सिद्धिरित्येवाभिप्रायेण संमुग्धतया शून्यपक्ष इत्येवोक्तम् । एतावता हि भोक्तृत्वप्रत्यभिज्ञाबलान्नात्माभावोऽङ्गीकर्तुं युक्तः । तदन्यस्य भोक्तुरभावादित्याद्यशून्यपक्षस्य य एवाहमिति प्रत्यभिज्ञाबलादेव पूर्वोत्तरदिवसयोरेकस्यैव गजाद्यवगमसिद्धेः सुप्तिकालेऽप्यात्मनः सत्त्वसिद्ध्या सुप्तोत्थितस्य जायमानाहमिति परामर्शसिद्धाहमिति सुप्तिकालीनप्रत्ययस्य सदात्मविषयत्वस्यैवोपपत्त्या नासच्छून्यालम्बनत्वमिति च समाशङ्कितशून्यपक्षस्य च निराकरणसिद्धेः । एवं च तद्वशाच्चेति वाक्यं द्वितीयशून्यपक्षनिराकरणशेषत्वेन नेयमिति स्पष्टम् । तस्मादुभयशून्यपक्षाशङ्कनं युक्तमिति सूरयोऽवगच्छन्तु । ननु शरीरेन्द्रियादीनामात्मत्वं वदद्भिरहंप्रत्ययविषयत्वाङ्गीकारेण प्रत्यक्षप्रमाणगम्यत्वस्यैव स्वीकारात्प्रत्यक्षेणैव निश्चितमित्येव वाच्यमितरद्व्यर्थमित्याशङ्कां सूचयन् परिहरति **शरीरादीनामिति** । वादिनां सम्मतत्वेऽपीति संबन्धः । यदादिपदेनेति या चोक्तिरिति यच्छब्दयोगो व्याख्येयः । तद्वयमिति पूरणीयम् । शरीरस्यात्मत्वे प्रत्यक्षं प्रमाणमाह **तत्रेति** । शरीरादिषु मध्य इत्यर्थः । इन्द्रियाद्यपेक्षया तावच्छब्दः **न केवलमित्यादिनेति** । अहं मनुष्य इत्यनुभवाच्च तत्सिद्धमिति भाष्यव्याख्यानरूपं न केवलमिदमाशङ्क्यते किन्त्वहं मनुष्य इत्याद्यनुभवादेतद्देहस्येक्षितृत्वं सिद्धं प्रमितं चेत्यर्थ इत्यनेनेत्यर्थः । शरीरस्यात्मत्वपक्षोपमर्देन इन्द्रियात्मत्वपक्षमुत्थापयति **सत्यपि शरीर इति** । इन्द्रियाणां चक्षुरादिमनःपर्यन्तानामित्यादिपञ्चपादिकाव्याख्यानरूपोऽयमाशयः । सत्यपि शरीरविषयज्ञानानामिन्द्रियैरित्यादिविवरणादिग्रन्थानुसारेणात्र ग्रन्थः । अस्तु नाम ज्ञानान्वयव्यतिरेकवत्त्वम् । न तावताप्यात्मत्वसिद्धिः ज्ञानाश्रयत्वेन तद्वत्तयैवात्मत्वस्याङ्गीकार्यतयेन्द्रियाणां च करणतया





तदन्वयव्यतिरेकवत्त्वेऽप्याश्रयतया तदभावादित्यत आह **करणतयेति**। मुख्ये संभवत्यमुख्यकल्पनायोगादिति भावः। अहंप्रत्ययालम्बनस्यैवात्मत्वादिन्द्रियाण्यहमिति च प्रत्ययाभावात्कथमेतदित्यतस्तदभावमन्यथयति **शरीरमहमितीति**। **अहंप्रत्ययेति**। अहं मनुष्य इत्याद्यहंप्रत्ययेत्यर्थः। अत्र काणोऽहमिति पूर्वं चक्षुरहमित्यादिप्रत्ययाभावेऽपीति पूरणीयम्। केवलेऽहंत्वसामानाधिकरण्याभावेऽपि धर्मविशिष्टे तदस्तीत्यत्र सर्वसिद्धमुपष्टम्भकमुक्तं शरीरमित्यादिवदित्यन्तेन। तर्हि इन्द्रियाणामिव शरीरस्याप्युक्तात्मत्वसाधकत्वात् कुतस्तत्परित्याग इत्यत आह **शरीरस्येति**। **इन्द्रियात्मनामिति**। इन्द्रियलक्षणात्मनामित्यर्थः। तथाच तत्र साधकद्वयमन्यथासिद्धमिति भावः। **इन्द्रियाणामेवेति**। मनोबुद्धिव्यतिरिक्तानामिन्द्रियाणामित्यर्थः। इन्द्रियाणां सङ्घातं व्यावर्तयितुं **व्यस्तानामिति**। प्रत्येकमित्यर्थः। **इयमेव तत्पक्षप्रसक्तिरिति**। आश्रयतया ज्ञानान्वयव्यतिरेकवत्त्वकल्पनादिरूपेन्द्रियचैतन्यपक्षप्रसक्तिरित्यर्थः। उक्तरूपतत्पक्षप्रसञ्जकमिति यावत्। प्रसञ्जकं च प्रसञ्जकविशेषः। उत्तरवाक्ये स्पष्टं चैतत्। **तत्रैवेति**। उक्तटीकायामेवेत्यर्थः। तत्सन्निधावीक्षणदर्शनस्य सर्वपक्षप्रसञ्जकतया प्रागुक्तिः साधारणप्रापकेन सर्वेषामपि प्राप्तिरिति सामान्यपूर्वपक्षानुसारेणाविशेषपूर्वपक्षदशायां तु तस्येन्द्रियमात्रप्रापकत्वादेरयोगात् प्रापकान्तरमेव वाच्यमिति तदस्माभिरुक्तमित्याशयः। यद्यपि तट्टीकायां मनःपक्षस्य निराकरणानन्तरमेव तत्पक्षदूषणभूतमनसा जानामीति करणत्वप्रतीतिन्यायेन चक्षुषा पश्यामीति करणत्वप्रतीतेरित्यतिदेशेनेन्द्रियचैतन्यपक्षनिराकरणं कृतमिति मनोनिराकरणानन्तरमेवेन्द्रियात्मत्वनिरासो वर्णनीय इति तत्पक्षोत्थापनमपि मनस आत्मत्वपक्षोत्थापनानन्तरमेवोचिततया भाति। तथापि उक्तटीकायां मनोनिराकरणानन्तरमतिदेशेनेन्द्रियपक्षनिराकरणं नाधिकयुक्त्या मनोपेक्षयेन्द्रियाणामात्मत्वप्राप्तिरिति भावेन। अपि तु भाष्यकृतमनःपक्षमात्रनिराकृत्या इन्द्रियपक्षनिराकरणं कुतो न कृतमित्याशङ्कायां मनोनिरासकतयाऽभिहितयुक्तिषु कयाचिद्युक्त्यैव तन्निरासस्यापि समानन्यायतया सिद्धत्वान्न पृथङ्निराकरणमावश्यकमिति तत्परिहारसूचनाय। मनःपक्षदूषणायाभिहितयुक्तिष्वेकदेशेनैवेन्द्रियपक्षनिराकरणाभिधानेनैव मनःपक्षापेक्षया दुर्बलत्वसिद्धेः। टीकाकृता तु तट्टीकाभिप्रायमाविष्कुर्वतेन्द्रियचैतन्यपक्ष एव प्रथममुत्थापित इति न कश्चिद्दोष इति विज्ञातव्यम्। सुप्त्यादौ सत्यपि मनसि ज्ञानादर्शनादिति गीताभाष्यटीकोक्तन्यायेनाह **स्वप्न इति**। दृश्यते हि स्वप्न इति पञ्चपादिकाव्याख्यानरूपस्वप्ने चक्षुराद्यभावेऽपीत्यादिविवरणानुसारेण चायं ग्रन्थः। **विज्ञानालम्बनत्वं** रूपादिविज्ञानाश्रयत्वम्। ननु चक्षुरादीनामेवानुभवरूपतद्विज्ञानाश्रयत्वं स्वप्ने तु तत्स्मृतिमात्रमत आह **रूपादीति**। चक्षुरादीनां यद्यनुभवाश्रयत्वमङ्गीक्रियते तर्हि तेषामुपरमकाले केवलमनसि स्मृतिरनुभवसिद्धा न स्यात्, अनुभवितृस्मर्त्रोरेकत्वनियमात्। ततश्च मनसः स्मर्तृत्वे अनुभवितृत्वस्यावर्जनीयत्वात् चक्षुराद्यतिरिक्तमेव तदाश्रयतया स्वीकार्यमिति भावः। चक्षुरादीनां ज्ञानान्वयव्यतिरेकावन्यथयति **आश्रयान्तरे चेति**। उक्तन्यायेनेति पूरणीयम्। तत्सिद्धिमूलकमेव करणत्वकल्पनमिति भावः। तेषां काणोऽहमित्यादिनाऽहंप्रत्ययविषयत्वमुक्तमप्यन्यथयति **अहंप्रत्ययस्य चेति**। चक्षुरादिकरणमित्यादिर्बहुव्रीहिः। मनःपक्षे शरीरादिसन्निधावीक्षणदर्शनरूपा युक्तिः साधारणयुक्तिरेव विशेषप्रसञ्जकं त्विदमेव गीताभाष्यटीकायामभिमतम्। इन्द्रियपक्षे प्रागुक्तविशेषप्रसञ्जकवत् इत्याह **पूर्ववदिति**। **अनात्मत्वादिति**। आत्मनश्च विज्ञानरूपत्वादिति भावः। **समनन्तरप्रत्ययेति**। बौद्धाधिकरणे प्रत्ययानन्तरभाविनी विज्ञानादिरूपप्रत्ययानां संबन्धिनी रागद्वेषमोहरूपा वासना समनन्तरप्रत्ययः इत्युक्तो य

अधिपतिसहकार्यवलम्बनसमनन्तरप्रत्ययाश्चत्वारो हि ज्ञानहेतव इत्येतन्मूले समनन्तरप्रत्ययपूर्वज्ञानाद्बोधरूपतेत्युक्तेः पूर्वज्ञानरूपः समनन्तरप्रत्ययो व्याख्यातस्तद्व्यतिरिक्तस्येत्यर्थः । विज्ञानवादिरीत्याऽयं पूर्वपक्ष इति दर्शयितुं तत्प्रसिद्धशब्दानुवादः विज्ञानमेव । न तु तदाश्रयः । अहंप्रत्ययालम्बनम् । तत्प्रत्ययविशेषः । **सङ्घातेति** । इन्द्रिया-दीनां सङ्घातेत्यर्थः । **सङ्घातसन्निधाविति** । **उक्तमेवेति** । कैश्चिच्च सङ्घात एवेति प्रतिपन्नमित्यनेनेति शेषः । विशेषप्रतिपादनस्यावश्यकत्वेन तेन पक्षान्तराणामुपपादनेऽप्येतत्पक्षे विशेषप्रतिपादनस्यावश्यकत्वात्प्रागुक्तिरेव स्मारिता । मनोनिराकरणयुक्तिमेव विज्ञाननिराकरणेऽप्यवतारयन् शून्यवादिरीत्याऽहंप्रत्ययस्य सदवलम्बनत्वमेव नास्ति किन्तु शून्यावलम्बनत्वमेव । ततश्चाहमिति प्रत्ययालम्बनं शून्यमेवात्मेति प्रागुपपादितं पक्षं सुषुप्ते विज्ञानलेशस्याप्यभावादित्यादि पञ्चपादिकाद्यनुसारेणोत्थापयति **विज्ञानव्यतिरिक्तानामिति** । विज्ञानमेव तर्हि भवत्वात्मेत्यत आह **सुषुप्ते चेति** । अयमर्थः । सुषुप्तौ तावन्न विज्ञानसत्त्वं तद्धि सविषयं निर्विषयं वा । नाद्यः तत्रापि विषयाभावाभ्युपगमे सुषुप्तित्वव्याघातात् । नान्त्यः निरालम्बनज्ञानायोगात् । साकारज्ञानानामेव सालम्बनत्वं न सौषुप्तिकानां तेषामित्यस्य च विशेषनियामकाभावेन कल्पयितुमशक्यत्वात् । शिष्टं विवरण इति । ततश्च सुप्तोत्थितस्याहमिति प्रत्ययो न विज्ञानविषयक इति भावः । तर्हि सुप्तोत्थितस्य कथमहमिति प्रत्ययोत्पत्तिस्तदुत्पत्तौ च तद्विषयः सन्नात्मा सिद्ध इत्यत आह **समनन्तर इति** । पूर्वसमनन्तरप्रत्ययरूपकारणशून्यतया स्वोचितकारणाभावे सुप्तोत्थितस्य अहंप्रत्ययरूपकार्यमेव नोदेतुमलम् । सत्यप्येवं यदेतत्कार्यं जायते तत्कारणं विना जायमानत्वात् कादाचित्कं परमार्थाऽसदेव स्वीकार्यां सामग्रीं विनोत्पद्यमानहस्त्यादेरपरमार्थस्यासत्त्वदर्शनात् । ततश्चाहमिति प्रत्ययस्योक्तरूपस्य सदन्वयालम्बनत्वायोगादसच्छून्यतदवलम्बनत्वमेव स्वीकार्यमिति तत्प्रत्ययविषयरूप आत्मा शून्यरूपमसदेवेति प्राप्तमित्यर्थः । नन्वेवं शरीरेन्द्रियादिव्यतिरिक्त आत्मा नास्तीत्यस्यानेकपक्षपरत्वेन नन्वात्मा शरीरेत्युत्तरमूलवाक्ये एतावतामपि पक्षाणां निरासेन भाव्यम् । तन्निरासमुखेनात्मसद्भावप्रतिपादकत्वात् तद्वाक्यस्य । न चैतावतां पक्षाणामुत्तरवाक्यान्निरासः प्रतीयत इत्यतः सर्वैतत्पक्षनिरास उत्तरवाक्ये न भवतीति प्रतिज्ञापूर्वकं स्पष्टयति **नन्वित्युत्तरेत्यादिना** । **शून्यपक्षनिराकरणमिति** । आत्मैव नास्तीत्येवंरूपात्माभावलक्षणशून्यपक्षस्याह-मिति प्रत्ययस्य विज्ञानाद्यालम्बनत्वानुपपत्त्या असद्यच्छून्यं तदवलम्बनत्वेऽहंप्रत्ययालम्बनस्यैवात्मत्वाङ्गीकारा-च्छून्यमेवात्मेति शून्यपक्षस्य च निराकरणमित्यर्थः । एतच्च प्रागेव विवृतम् । **एवमादीति** । य एवाहं पूर्वेद्युर्गामद्राक्षं स एवाहं संप्रति गोवत्समुपलभ इत्यादि प्रत्यभिज्ञाया आदिना ग्रहः । चरमाशङ्कितशून्यपक्षे सुप्तौ विज्ञानादि-सकलपदार्थानामभाववत् सदात्मनोऽप्यभावं स्वीकृत्याहंप्रत्ययविषयः शून्यमेवात्मेति यदुक्तं तस्य प्रत्यभिज्ञा-विरोधेनानुपपत्तौ दिवसद्वयेऽपि पदार्थज्ञानवान्सन्नात्मैवाहंप्रत्ययालम्बनः सिद्ध इति द्वितीयशून्यपक्षनिराकरण-मुपसंहरति **तद्दशाचेति** । इति निराकरणमिति पूर्वेणान्वयः । **पक्षान्तरेति** । शरीरादिपक्षान्तराणां निराकरणमित्यर्थः । विज्ञानाश्रयत्वस्येवाहंप्रत्ययालम्बनत्वस्यापि शरीरादिव्यावर्तकतया शाङ्करभाष्यादावुक्तेस्तदनुसारेणाह **शरीरादे-र्ममेति** । मम शरीरमित्याद्येव हि प्रतीतिरिति भावः । **व्यतिरिक्तेत्यस्य** भिन्नेत्यर्थः । शरीरादिभिन्नेति पाठस्तु सुगम एव । **सर्वपक्षनिराकरण**मित्यनन्तरम् उपपन्नमित्यर्थः । **प्रकारान्तरेणेति** । न हि जडस्य शरीरस्य कौमाराद्यनुभवः संभवतीत्यादिप्रकारान्तरेणेत्यर्थः । उपायस्योपायान्तरादूषकत्वेन विरोधाभावादिति भावः । **एवं तर्हीति** । वाक्ये





शरीरादिभिन्नस्यात्मनः साक्षात्प्रतीतिसिद्धत्वं प्रतिवाद्युक्तं स्वीकृत्य जिज्ञास्यत्वाभाव उच्यते । तथा सति प्रागुक्तात्माभावादिकं विरुद्धमापद्यत इत्यतस्तद्वाक्यतात्पर्यमाह **एवं तर्हीति** । निश्चितत्व इत्यनन्तरं तात्पर्यमिति वर्तते । तर्हि किमर्थं शरीराद्यभेदोक्तिरित्यतः शरीरादिकं च यथायथमिति वाक्योक्तं न विस्मर्तव्यमित्याह **तदर्थं चेति** । तदर्थमेवेत्यर्थः । अत एवेत्यस्यैव विवरणम् **अनादित इत्यादि** मूले ।

**विठ्ठ०**— नन्वात्मा कथं शरीरव्यतिरिक्तो नास्ति तद्भिन्नतयाऽध्यक्षसिद्धत्वादिति शङ्कते **नन्विति** ।

**गूढ०**— द्वितीयेऽप्यात्मा जीवो वा स्यात् ब्रह्म वा ईश्वरो वा । नाद्य इत्याह **आत्मा चेति** । एतच्च चार्वाकमताभिप्रायेण । असन्दिग्धा अविपर्यस्ता या साक्षात्प्रतीतिस्तयेत्यर्थः । **तत एवेति** । निश्चितत्वादेवेत्यर्थः । **अत एवेति** । यतः साक्षात्प्रतीतिविषयोऽत एवेत्यर्थः ।

**कर्त्रादिरूपो भिन्नो न**—

**१२३ सु०— नन्वयं कर्ता भोक्ता दोषसंसर्गी चाहंप्रत्यये प्रकाशते, तद्विपरीतस्तु श्रुतिप्रतिपादितः प्रतिपत्तव्योऽतो जिज्ञासेति चेत् । एवं तर्हि जरद्गवादिवाक्यवत्पावकशैत्यानुमानवच्च प्रतीतिविरोधेन श्रुतिजिज्ञासयोराभासतापातः ।**

**परि०**— मायावादिरीत्या विषयत्वसंभवमाशङ्क्याक्षप्राबल्येन निराह **नन्वयमिति** । अहंधीविषय इत्यर्थः ॥ **श्रुतीति** । 'निष्कलं निष्क्रियं' 'निरनिष्टो निरवद्य' इत्यादिश्रुतीत्यर्थः ॥ **प्रतिपत्तव्य इति** । जिज्ञासयेति योज्यम् ॥ **जरद्गवेति** । 'जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति भद्रकाणी'तिवाक्यवदिति श्रुतेरयं दृष्टान्तः ॥ **जरद्गवो** वृद्धबलीवर्दः । पावकशैत्यानुमानवदिति न्यायचिन्तारूपजिज्ञासायाः दृष्टान्तः ।

**यादु०**— जरद्गवादिवाक्यं श्रुत्याभासतायां निदर्शनं पावकशैत्यानुमानं च जिज्ञासाभासतायामिति द्रष्टव्यम् । 'जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति भद्रकाणि । तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्घ' इत्येतज्जरद्गववाक्यशब्देन गृह्यते । 'शङ्खः कदल्यां कदली च भेर्यां भेर्यां महच्चाविरभूद्विमानमि'त्येतदादिशब्देनोच्यते ।

**आनन्दः**— द्वितीयं शङ्कते **नन्विति** ।

**कं०रा०— जरद्गवादीति** । "जरद्गवः कंबलपादुकाभ्यां द्वारि स्थितो गायति भद्रकाणि । तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्थ" इत्यादिवाक्यं श्रुतेराभासतायां दृष्टान्तः । पावकशैत्यानुमानं तु (पावकः शीतः पदार्थत्वात्) न्यायानुसन्धानरूपजिज्ञासाया आभासत्त्वे दृष्टान्त इति द्रष्टव्यम् ।

**वा०चं०**— नन्वात्मनः शरीराद्यतिरिक्ततया असन्दिग्धाविपर्यस्तसाक्षात्प्रतीतिनिश्चितत्वेऽपि तस्य जिज्ञास्यता न तेन रूपेणापि तु श्रुतिप्रतिपादितकर्तृत्वादिशून्यत्वरूपेणैव । फलार्थं तादृशस्यैव प्रतिपत्तव्यत्वात् । न च प्रत्यक्षं तद्रूपनिश्चायकं प्रत्युत विपरीतमिति तस्य जिज्ञास्यतासिद्धिरित्याङ्क्ते **नन्विति** । एवं तर्हि माऽस्तु प्रत्यक्षनिश्चितत्वेनाविषयत्वादजिज्ञास्यता प्रत्यक्षविरुद्धताप्रयुक्ताविषयत्वादिनिमित्तिका तु सा भविष्यति । कथमपि जिज्ञासाप्रयोजकविषयाभावे ह्यस्माकं तात्पर्यं न तु निश्चितत्वेनाविषयत्व इत्याह **एवं तर्हीति** ॥ **जरद्गवादि-वाक्यवदिति** । तद् वाक्यं च प्रसिद्धम् । आदिपदेन 'शङ्खः कदल्यां कदली च भेर्यां भेर्यां महच्चाविरभूद्विमानमि'ति वाक्यमुच्यते । यथासङ्ख्यं च वाक्यानुमानयोः श्रुतिजिज्ञासे प्रति निदर्शनत्वम् ।

**वा०र०**— **तेन रूपेणेति** । शरीराद्यतिरिक्तत्वरूपेणेत्यर्थः । रूपेणैव जिज्ञास्यतेति संबन्धः । कर्तृत्वादि-शून्यरूपपुरस्कारे निमित्तमाह **फलार्थमिति** । मोक्षरूपफलार्थमित्यर्थः । **प्रत्यक्षविरुद्धतेति** । विरुद्धताप्रयुक्तं यदविषयत्वादि तन्निमित्तिकेति योज्यम् । तर्हि निश्चितत्वेनाविषयत्वमिति प्रागुक्तत्याग इत्यत आह **कथमपीति** । तदुक्तस्य प्रतिपन्नार्थ एव तात्पर्यादिति भावः । **न तु निश्चितत्वेनाविषयत्व इति** । निश्चितत्वेनैवाविषयत्व इत्यर्थः । **तद्वाक्यं चेति** । अत्र तच्छब्देन जरद्गवस्तदादिश्च न गृह्यते । किन्तु बुद्ध्या विवेकेन जरद्गव एव । तथा च जरद्गववाक्यं तद्धर्मप्रतिपादकं वाक्यं जरद्गवः कम्बलेत्यादिरूपेण प्रसिद्धमित्यर्थः । आदिपदेनेत्यनन्तरमुपात्तस्य शङ्खादेरिति शेषः । शङ्खादिस्थितिप्रतिपादकं वाक्यमुच्यत इत्यर्थः । एतेन जरद्गववाक्यादिवदिति पाठाभावात्तद्वाक्यमित्यादिग्रन्थायोग इति निरस्तम् । यदादिवाक्यं दृष्टान्तः तत्र तस्य जरद्गवस्य वाक्यमिति वर्तिपदार्थप्राधान्येनोपस्थितिविशेषमाश्रित्य तद्वाक्यमिति निर्देशोपपत्तेः । एवमत्र ग्रन्थे अन्यथाख्यातिमूलभूतगुरुग्रन्थे च बुद्ध्या विवेकेन जरद्गववाक्यमित्युक्तौ इति वाक्यमिति इत्यादिवाक्येति चोक्तौ सत्यां नूतनटीकाकारंमन्येनान्यथाख्यातिकृता जरद्गववाक्यमिति यथा प्रतिव्यवहृत्य 'शङ्खः कदल्यां कदली चे'त्येतदादिपदेन गृह्यत इति वाक्यपदासमभिव्याहारेण यद्व्याख्यातं तदपरामर्श-मूलकमिति ज्ञेयम् । अत एव पञ्चपादिकास्थजरद्गवादि-वाक्यवदित्यस्य योजनारूपतत्त्वदीपने 'जरद्गव........कोऽर्घ' इति वाक्यं जरद्गवादिवाक्यशब्देन गृह्यते । 'शङ्खः कदल्या....मि'त्येतदादिपदेनेत्युक्तावपि टीकाकृता जरद्गववाक्यं शङ्खादिवाक्यं चेति विग्रहमभिप्रेत्य तद्वाक्यं चेति वाक्यमिति चाधिकमुक्तम् । वाक्यानुमानयोः प्रत्येकमुभयत्र निदर्शनत्वमिति भ्रान्तिनिरासायाह **यथासङ्ख्यमिति** । जरद्गवादिवाक्यं श्रुतेराभासतायां निदर्शनं पावकशैत्यानु-मानं च जिज्ञासाया आभासत्वे निदर्शनमित्यर्थः । यथाक्रममिति वक्तव्ये यथासङ्ख्यमिति वचनं तथा क्रमेऽपि सङ्ख्यैव नियामकतया वाच्या । आद्यस्याद्यं द्वितीयस्य द्वितीयमिति क्रमशरीरेऽपि सङ्ख्योपस्थितेरनिवार्यत्वा-दित्यभिप्रायेणेति ज्ञेयम् ।

**स०व्र०**— श्रुतिजिज्ञासापेक्षया प्रत्यक्षस्य प्राबल्यं मन्यमान आह **जरद्गवादीति** । यथासङ्ख्यं निदर्शनम् । आदिपदेन 'जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति भद्रकाणि । तं ब्राह्मणी पृच्छति रन्तुकामा राजन्रुमायां लशुनस्य कोऽर्घ' इति समग्रश्लोकग्रहणम् । 'शङ्खः कदल्यां कदली च भेर्याम्' इत्यादेर्ग्रहणार्थं वा ।





**कुण्डल०— जरद्गवादीति**। "जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति भद्रकाणि। तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्थः॥" इत्यादिवाक्यं श्रुतेराभासतायां दृष्टान्तः। पावकशैत्यानुमानं तु न्यायानुसन्धानरूपजिज्ञासाया आभासत्वे दृष्टान्त इति विवेकः। जरद्गवादीत्यादिपदेन "शङ्खः कदल्यां कदली च भेर्यां भेरी महच्चाऽविरभूद्विमान" इत्यादेः सङ्ग्रहः।

**विठ्ठ०**— नन्वात्मनोऽहमिति शरीरादिव्यावृत्ततया निश्चितत्वेऽपि श्रुत्युक्तकर्तृत्वादिराहित्यप्रकारेण अनिश्चितत्वात् जिज्ञासास्य न स्यादिति शङ्कते **नन्वयमिति**। श्रुतिजिज्ञासयोराभासतायां जरद्गवादिवाक्यं पावकशैत्यानुमानं च क्रमेण निदर्शितमिति ज्ञेयम्। "जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति भद्रकाणि। तं ब्राह्मणी पृच्छति पुत्रकामा राजन्नुमायां लशुनस्य कोऽर्थ" इति जरद्गवादिवाक्यं च आदिपदेन "शङ्खः कदल्यां कदली च भेर्यां भेर्यां महच्चाविरभूद्विमानम्" इत्यादिकम्।

**चषकः— जरद्गवादिवाक्यवदित्यादि**। षष्ठ्यन्ताद्वतिद्वयमुपमेये तद्दर्शनात्। लोटो लङ्वदितिवत्। आद्यं निदर्शनं श्रुत्याभासतायाम्। चरमं तु जिज्ञासाभासतायाम्। 'जरद्गवः कम्बलपादुकाभ्यामि'त्याद्यानुपूर्वीकमन्यत्रोपन्यस्तम्।

**गूढ०**— द्वितीयं शङ्कते **नन्विति**।

परात्मा न—

**१२४ सु०— अत एव न परात्मा जिज्ञास्यः। तस्य प्राणादिलिङ्गैरवगतत्वात्। सैव जिज्ञासेति चेन्न। तस्याः लौकिकप्रवेदनीयार्थत्वेन शास्त्राव्युत्पादनीयत्वात्। न खलु बालकः स्तनपानेष्टसाधनत्वानुमाने शास्त्रव्युत्पादनमपेक्षते। यत्कचिच्छास्त्रेऽपि लौकिकप्रवेदनीयार्थव्युत्पादनम्; अनुवादोऽसौ, न पुनः स एव प्रधानव्यापारः।**

**परि०— अत एवेति**। उपायान्तरसिद्धत्वादेवेत्यर्थः। **परात्मा** परशरीरस्थजीवः॥ **प्राणादीति**। हिताहितप्राप्तिपरिहारानुकूलचेष्टादिलिङ्गैरित्यर्थः। 'चेष्टालिङ्गेन सात्मत्वे परदेहस्य साधित' इत्युपाधिखण्डनोक्तेः। प्राणवाय्वादिमत्त्वलिङ्गेनेति वाऽर्थः॥ **लौकिकप्रवेदनीयार्थेति**। धूमाग्न्यादिव्याप्त्यादिव्युत्पादनमित्यर्थः। अनुवादो दृष्टान्तार्थमिति भावः॥

**यादु०— यत्कचिदिति**। 'अग्निर्हिमस्य भेषजमि'त्यादौ।

**वं०प०— प्राणादिलिङ्गैः** चेष्टादिलिङ्गैः। **सैवेति**। चेष्टादिलिङ्गैरवगतिरेवेत्यर्थः। **तस्या इति**। प्राणादिलिङ्गैरवगतिरूपजिज्ञासाया लोकदृष्टान्तसिद्धानुमानप्रवेदनीयत्वेनेत्यर्थः।

**आनन्दः—** अत एवेति परामृष्टहेतुमाह **तस्येति** । **सैवेति** । प्राणादिलिङ्गैरवगतिरेवेत्यर्थः । **तस्याः** अवगतेः । **लौकिकप्रवेदनीयत्वेनेति** । लौकिकन्यायसंपाद्यत्वेनेत्यर्थः । यद्वा लौकिकप्रमाणप्रवेदनीयन्यायसंपाद्यत्वेनेत्यर्थः । ननु शास्त्रेऽपि लौकिकन्यायव्युत्पादनमस्त्येवेत्यत आह **यत्कचिदिति** ।

**कं०रा०— परात्मा** स्वापेक्षयाऽन्यो जीवः । **तस्येति** । तस्य परात्मनः । इदं शरीरं सात्मकं चेष्टादिमत्त्वादित्यादिलिङ्गैर्निश्चितत्वेन स्वात्मवन्न जिज्ञास्यत्वमिति भावः ।

**श्रीनिधि०— यत्कचिच्छास्त्र इति**। अग्निर्हिमस्य भेषजमित्यादावित्यर्थः। प्रयोजनान्तरार्थमिति भावः।

**वा०चं०—** नन्वेवं बन्धसत्यत्वादेर्लोकप्रवेदनीयार्थस्यातःशब्दार्थतया भाष्यकारीयं व्युत्पादनमयुक्तं स्यादित्यत आह **यत्कचिदिति**। अत एव प्रत्यक्षेक्षाक्षम इत्यनुव्याख्यानावसरे 'यो हि लौकिकप्रवेदनीयमि'त्यादिना बन्धस्य सत्यत्वादेर्लौकिकव्युत्पादनीयत्वं वक्ष्यति।

**वा०र०—** परात्मेति द्वितीयपक्षं दूषयति **अत एवे**तीत्यवतार आत्मपक्षं दूषयतीति पूर्वत्रात्मपक्षमित्यस्य सप्रभेदमिति पूरणेन बहुसङ्ग्राहकत्वमिति तत्रैव सिद्ध इति प्रागेवोक्तम्। **अत एवेति** परामृष्टमेव दर्शयति **तस्यापीति** मूलम्। **सैवेति**। प्राणादिलिङ्गैरवगतिरेवेत्यर्थः। **लौकिकप्रवेदनीयार्थस्येति**। हेतुगर्भं चेदं विशेषणं लोकप्रवेदनीयत्वादित्यर्थः। यद्यपीयं शङ्का न सिद्धान्तिना पूर्वपक्षिणं प्रति कर्तुं शक्या। भाष्यकारीयवक्ष्यमाणातःशब्दार्थव्याख्यानस्य तदभिप्रेतत्वाभावेन तेन तत्परिहारस्यापि कर्तव्यत्वेन च तं प्रति शङ्कानुपपत्तेः । तथापि पूर्वपक्षिरीत्या लोकप्रवेदनीयस्य सिद्धान्ते व्युत्पादनायोग इति शङ्किते पूर्वपक्ष्युक्तमङ्गीकृत्य वास्तवस्तत्परिहारो मूलकृताभिहितः । अत एव बन्धसत्यत्वादेर्लोकप्रवेदनीयत्वं कुत इति शङ्कापरिहाराय सिद्धान्तग्रन्थमेवोदाहरति । **अत एव प्रत्यक्षेतीति** ज्ञेयम् । परन्तूभयसंप्रतिपन्नस्य लोकप्रवेदनीयस्योत्तरत्र व्युत्पादनस्थलं निष्कास्यमस्ति । अन्यथाख्यातौ तु 'अग्निर्हिमस्य भेषजमि'त्यादाविति यत्कचिदित्यस्यार्थ उक्तः। स तु जिज्ञासायाः विचारापरपर्यायायाः प्रस्तुतत्वात् **लोकप्रवेदनीयार्थे व्युत्पादनमिति** मूले स्पष्टमुक्तेश्च तदननुसन्धानमूलः। न्यायेनोपपादनस्यैवेह व्युत्पादनपदार्थतायाः सिद्धत्वात्।

**स०व्र०— यत्कचिदिति**। आपो वै शीता इत्यादावप्शैत्यादिकमित्यर्थः। सिद्धबोधनवाक्यमिहानुवादशब्दार्थः।

**कुण्डल०— परात्मेति**। अन्यः जीवात्मेत्यर्थः। **तस्या इति**। प्राणादिलिङ्गावगतेरित्यर्थः। **लौकिकप्रवेदनीयेति**। 'अग्निर्हिमस्य भेषजम्' इत्यादौ लौकिकप्रमाणार्थगोचरव्युत्पादनमित्यर्थः।





**विठ्ठ०— लौकिकप्रवेदनीयत्वेनेति** । शास्त्रं विना केवललोकदृष्टन्यायेनेत्यर्थः । **यत्कचिदिति** । 'अग्निर्हिमस्य भेषजमि'त्यादौ ।

**गूढ०—** अत एवेति परामृष्टं हेतुमाह **तस्येति** । **सैवेति** । प्राणादिलिङ्गैरवगतिरेवेत्यर्थः । **तस्याः** अवगतेः । **लौकिकप्रवेदनीयत्वेनेति** । लौकिकन्यायसंपाद्यत्वेनेत्यर्थः । यद्वा लौकिकप्रमाणप्रवेदनीयन्यायसंपाद्यत्वेनेत्यर्थः । ननु शास्त्रेऽपि लौकिकन्यायव्युत्पादनमस्त्येवेत्यत आह **यत्कचिदिति** ।

**ईश्वरो नास्ति—**

**१२५ सु०— ईश्वरविषया जिज्ञासा भविष्यतीति चेन्न। तस्यैवाभावात्।**

**न चैवमीश्वरादिपदानामानर्थक्येनापदत्वप्रसङ्ग इति वाच्यम् । तेषां कथञ्चिज्जीवविषयत्वोपपत्तेः । सोऽपि हि स्वशरीरेन्द्रियादीनामीष्टे । प्रतीतार्थत्वोपपत्तावप्रतीतार्थता-(त्व)कल्पनायां गौरवप्रसङ्गात् ।**

**बिन्दुः— अपदत्वप्रसङ्ग इति** । द्विविधं हि पदं सुबन्तं तिङन्तं च । तत्राद्यस्य ईश्वर इत्यादेः पदत्वं सुबन्तत्वेनैव वाच्यं सुबुत्पत्तिश्च 'ङ्याप् प्रातिपदिकात्' प्रकृते च ङ्याबन्तत्वाभावान्न सा । ङ्याबुत्पत्तावप्यर्थवत्तापेक्षप्रातिपदिकसंज्ञाया आवश्यकत्वाच्च । प्रातिपदिकत्वं चार्थवच्छब्दरूपस्यैव । 'कृत्तद्धितसमासाश्चे'त्यस्य नियमार्थत्वात् । अर्थवत्समुदायस्य यदि पदसंज्ञा तदा 'कृत्तद्धितान्तानां समासस्य चे'ति सूत्रार्थस्य व्यवस्थापितत्वात् । अन्यथा वाक्यश्लोकादेरपि समुदायस्य प्रातिपदिकसंज्ञायां सुबाद्युत्पत्तिः प्रसज्येत । न चैवं बहुपटुरिति न सिद्ध्येत् । तत्र 'ईषदपरिसमाप्तौ विभाषा सुपो बहुच्पुरस्तादि'ति बहुच्प्रत्ययस्य पूर्वविधानेन तद्धितान्तत्वाभावादर्थवत्समुदायत्वाच्च प्रातिपदिकत्वासंभवापत्त्या सुप्प्रसक्तेरसंभवादिति वाच्यम् । यस्य पूर्वावयवः पदसंज्ञकः तादृशार्थवत्समुदायस्य यदि प्रातिपदिकसंज्ञा तर्हि कृत्तद्धितसमासानामेवेति नियमविशेषस्य विवक्षितत्वात् । बहुपटुरित्यत्र तु पूर्वावयवः प्रत्ययरूपत्वान्न पदं तथाच न काप्यनुपपत्तिरिति भावः । कथञ्चित्त्वमेव विवृणोति **सोऽपि हीति** । जीवस्य चेति स्वप्रकाशज्ञानाश्रयतयेति प्राभाकररीत्या मानसप्रत्यक्षवेद्यतयेति वैशेषिकादिरीत्येति बोध्यम् । **तस्यापातत इति** । ईश्वरोऽतीन्द्रियतया पिशाचवद्विद्यमानोऽपि नोपलभ्यते, आहोस्विच्छशशृङ्गादिवन्नास्त्येव वेति सांशयिकत्वादिति भावः ।

**परि०— अपदत्वेति** । 'अर्थवदधातुरप्रत्ययः प्रातिपदिकमि'त्यर्थवत्त्वेन प्रातिपदिकसंज्ञायां तत्र 'प्रातिपदिकादि'त्यधिकृत्य 'स्वौजसमौडि'तिसूत्रोक्तसुप्प्रत्यये सति सुप्तिङन्तमिति पदसंज्ञाविधाना-दर्थवत्त्वाभावे प्रातिपदिकसंज्ञाऽभावेन सुप्प्रत्ययानुत्पत्त्या पदत्वं न स्यादित्यर्थः । ईष्टे ईशो भवति । ॐब्रह्मपदयोः यौगिकत्वोक्तेः व्यावर्त्यमाह **प्रतीतेति** । जीवत्यागेनेश्वररूपाप्रतीतार्थकत्वकल्पनाया-मित्यर्थः । तेषामित्यनुकर्षः ।

**वं०प०— अपदत्वप्रसङ्ग इति** । 'अर्थवदधातुः' इति सूत्रेण प्रातिपदिकसंज्ञायां 'ङ्याप् प्रातिपदिकात्' इति सूत्रेण स्वाद्युत्पत्तौ 'सुप्तिङन्तं पदम् इति' पदत्वं भवति । अर्थराहित्ये तु प्रातिपदिकसंज्ञाऽभावेन स्वाद्यनुत्पत्तौ पदत्वं व्याहतमित्यर्थः । ईश्वरादिपदानां जीवे रूढ्यभावात्कथञ्चिदित्युक्तम् । **गौरवप्रसङ्गादिति** । धर्मिकल्पनातो धर्मकल्पना लघीयसीति न्यायादीश्वररूपधर्मिकल्पनापेक्षया ईश्वरादिपदानामहमिति प्रत्यक्षसिद्धजीववाचित्वकल्पने लाघवमित्यर्थः ।

**आनन्दः— तृतीयं शङ्कते ईश्वरेति । अपदत्वप्रसङ्ग इति** । अर्थवत एव पदत्वं तद्वत एव प्रातिपादिक-संज्ञा तद्वतः सुबुत्पत्तिः सुबन्तस्यैव च पदत्वमिति भावः । कथञ्चिदित्युक्तमेव विशदयति **सोऽपि हीति** । एवं चेश्वरादिपदानि जीवविषयाणि विषयान्तराभावे सति सविषयत्वात् । अत्र विपक्षे बाधकमाह **प्रतीतेति** ।

**कं०रा०— न चैवमिति** । एवमीश्वराभावे ईश्वरादिपदानामानर्थक्येनार्थवाचित्वाभावेन शक्तं पदमिति पदलक्षणाभावात् अपदत्वप्रसङ्गः । सुप्तिङन्तं पदमित्याश्रयणेऽप्यर्थवदधातुरप्रत्ययः प्रातिपदिकं ङ्याप्प्रातिपदिका-दित्यादिना सुबुत्पत्तेरर्थवत्त्वप्रयुक्तप्रातिपदिकसंज्ञानिबन्धनत्वावगमेन अर्थवत्ताभावे सुबुत्पत्तेरयोगादपदत्वप्रसङ्ग इति न च वाच्यमित्यर्थः । ईश्वरादिपदानां जीवविषयत्वसिद्ध्यर्थमुपलक्षणयेश्वरपदस्य जीवे व्युत्पत्तिमाह **सोऽपीति** । 'स्थेशभासपिसकसो वरजि'ति वरच्प्रत्ययान्तस्य ईश्वरशब्दस्येष्ट इत्येव व्युत्पत्तिः । स्वशरीरेन्द्रियादीनामिति तु केषामीष्ट इत्याकाङ्क्षायामुक्तमिति मन्तव्यम् । नन्वीश्वरपदस्य जीवविषयत्वे ईश्वरशब्दप्रवृत्तिनिमित्तस्यैश्वर्यस्य स्वशरीरेन्द्रियादिविषयत्वेन सङ्कोचः कार्यः । परब्रह्मविषयत्वे तु नेति तद्विषयतैवोचितेत्यत आह **प्रतीतेति** । अप्रतीतार्थकल्पने गौरवभीत्या प्रतीतजीवार्थत्वं परिकल्प्येश्वरपदप्रवृत्तिनिमित्तैश्वर्यसङ्कोचः स्वीकार्य एवेति भावः ।

**श्रीनिधि०— आनर्थक्येन** अर्थरहितत्वेन । शक्तं पदं शक्तिश्चार्थ एव । सुबन्तं तिङन्तं वा पदम् । सुप् प्रातिपदिकादेव । ङ्याप् प्रातिपदिकात् इत्यधिकारात् । प्रातिपदिकत्वं चार्थवत एव । अर्थवदधातुरप्रत्ययः प्रातिपदिकमित्युक्तेरिति भावः । **परमैश्वर्याभावात् कथञ्चिदिति** । एवं तर्हि अमुख्यार्थकल्पनादोष इत्यतः स्वपक्षे प्रतीत्यानुगुण्यमस्तीत्याह **प्रतीतार्थतेति** ।

**वा०चं०—** नन्वेवं तत्पदानां मुख्यार्थपरित्याग एव दोष इत्यतो बाधके सति तस्यादोषत्वमाह **प्रतीतेति** ।

**वा०र०—** मूले **आनर्थक्येनापदत्वेति** । अर्थवदधातुरित्यादिना अर्थवत एव प्रतिपादिकसंज्ञाविधानेन प्रातिपदिकत्वाधीनस्वाद्युत्पत्तावेव सुप्तिङन्तं पदमिति पदत्वोक्तेश्चेश्वरादिपदानामीश्वररूपार्थाभावे अर्थवत्त्वाधीन-





प्रातिपदिकसंज्ञानुपपत्त्या स्वादेरप्रसङ्गात्सुबन्तत्वेन पदत्वमपि न संभवतीति भावः। यद्यपि शशविषाणादिपदाना-मिवार्थाभावेऽपि पदत्वनिर्वाहः संभवति। यथा चैतत्तथा मिथ्याशब्दोऽनिर्वचनीयं वदतीत्यत्र चेत्येतत् तत्त्वोद्योत-टीकाव्याख्यावसरे मिथ्याशब्दस्त्वभाववाचीति तत्त्वनिर्णयटीकाव्याख्यावसरे चास्माभिरुपपादितम्। तथापि उदाहृतग्रन्थे निरर्थकत्वपरिहारायासदाद्यर्थकत्वे प्रतिपादनदर्शनात्तदनुसारेणैवेह निरर्थकत्वाशङ्कनं तत्परिहारश्च युज्यते। परन्तु शशविषाणादिपदैस्तदर्थस्य बुद्ध्यावारोहमात्रमित्येवंरूपमर्थस्य सत्त्वमाश्रित्य तत्र प्रतिपादकत्व-निर्वाहवदीश्वरस्यापि तत्पदाद्बुद्ध्यावारोहमात्रमित्यङ्गीकृत्य परिहारो न वक्तुं शक्यः। न हीश्वरं शशविषाणतुल्यतया किञ्चित्पदार्थत्वेनाङ्गीकारिणं प्रतीदमाशङ्कनम्। अपि तु सर्वथा तदभावं तत्पदानां च तदर्थत्वाभावमङ्गीकरोति यस्तं प्रति। तथा चेश्वररूपार्थाभावादर्थान्तराभावाच्च पदत्वानुपपत्तिरित्येवं शङ्किते अर्थस्य बुद्ध्यावारोहादिमात्रेणेत्युक्तं पदत्वमिति शङ्कायाः कथमवकाशः। अत एवार्थान्तरमादायार्थवत्त्वेन समाधानं तेषां कथञ्चिज्जीवेत्यादिना क्रियत इति ज्ञेयम्। मूले **कथञ्चिदित्यनेन** ईश्वरादिपदप्रवृत्तिनिमित्तनिरवधिकैश्वर्यादिर्मुख्यस्य जीवेऽभावेऽप्यमुख्यस्य तस्य सत्त्वाज्जीवविषयकत्वं युक्तमिति सूचयति। अमुख्यप्रवृत्तिनिमित्तसद्भावमेव दर्शयति **सोऽपीति** मूलम्। अधीगर्थेति षष्ठी।

**स०व्र०— सोऽपीति**। प्रतिनियतेश्वरत्वं सर्वस्य विद्यते सर्वेश्वरत्वं तु न कस्यापीति भावः।

**कुण्डल०— अपदत्वेनेति**। अर्थवदधातुरप्रत्ययः प्रातिपदिकमिति सूत्रेणार्थवत एव प्रातिपदिकसंज्ञाया विधानादानर्थक्ये च तदयोगात्। ङ्याप् प्रातिपदिकादिति सूत्रशिष्टसुबनुत्पत्तेः सुप्तिङन्तं पदमिति सूत्रशिष्टपदत्वं न स्यादित्यर्थः। अत एव शक्तं पदमिति पक्षोऽपि निरस्तः। अभिधेयस्यैवाभावे पदस्य शक्तत्वायोगात्। **स्वशरीरेति**। अधीगर्थदयेषां कर्मणीति षष्ठी। **ईष्टे इति**। ईश ऐश्वर्य इत्यस्माद्धातोः 'स्थेशभासपिसकसोवरजि'ति सूत्रशिष्टवरच्प्रत्यये सति निष्पन्न ईश्वरशब्दः उक्तयुक्त्या जीवे युक्त इति भावः। नन्वेवमीश्वरपदस्य जीवपरत्वे पदप्रवृत्तिनिमित्तस्यैश्वर्यस्य सङ्कोचः ब्रह्मपरत्वे तु तस्य पौष्कल्यमत आह **प्रतीतार्थेति**। तथाच धर्मिकल्पनातो वरं धर्मकल्पनमिति न्यायेन सङ्कोच एव ज्यायानिति भावः।

**विठ्ठ०— अपदत्वप्रसङ्ग इति**। अर्थवति शब्दरूपे प्रातिपदिकसंज्ञायां ततः सुबादिप्रत्ययोत्पत्तावेव पदत्वलाभादिति भावः। मुख्यस्येश्वरत्वस्य जीवे असंभवात्कथञ्चिदित्युक्तम्। तदेव दर्शयति **सोऽपीति**। नन्वीश्व-रादिपदानां मुख्यार्थत्यागोऽयुक्त इत्यतो बाधकतेति। तस्य दोषत्वमित्याशयेनाह **प्रतीतेति**। प्रमितजीवार्थत्वोपपत्तौ अप्रमितदेवार्थत्वकल्पनायां गौरवमित्यर्थः।

**चषकः— अपदत्वप्रसङ्ग इति**। अर्थवत्तानिबन्धनप्रातिपदिकसंज्ञाऽभावेन तन्नियन्त्रित सुबाद्युत्पत्तेर्दुरुप-पादतया तदन्तत्वाधीनपदसंज्ञाया अयोगादित्यर्थः॥

**गूढ०—** तृतीयं शङ्कते **ईश्वरेति**। **अपदत्वप्रसङ्ग इति**। अर्थवत एव पदत्वं तद्वत एव प्रातिपदिकसंज्ञा तद्वतः सुबुत्पत्तिः। सुबन्तस्यैव पदत्वमिति भावः। कथञ्चिदित्युक्तमेव विशदयति **सोऽपि हीति**। एवं चेश्वरादिपदानि जीवविषयाणि विषयान्तराभावे सति सविषयत्वात्। अत्र विपक्षे बाधकमाह **प्रतीतेति**।

ईश्वरपदार्थरूपो जीवो न—

**१२६ सु०— जीवस्य चाहमिति स्वप्रकाशतया स्वप्रकाशज्ञानाश्रयतया मानसप्रत्यक्षवेद्यतया वा सिद्धत्वेन न जिज्ञासाविषयत्वमित्युक्तम्।**

**परि०—** अस्तु जीव एव विषय इत्यत आह **जीवस्य चेति**। न्यायविवरणरीत्याऽऽह **स्वप्रकाशतयेति**। प्राभाकररीत्या आह **स्वप्रकाशज्ञानेति**। तार्किकरीत्या आह **मानसेति**। अत्र भाष्यटीकाद्यविरोधश्चन्द्रिकायां व्यक्तः॥ **उक्तमिति**। सन्दिग्धश्चार्थो न्यायविषय इत्यादिनोक्तमित्यर्थः।

**यादु०— स्वप्रकाशतयेत्यादि**। क्रमाद्वेदान्तिप्राभाकरवैशेषिकादिमतमाश्रित्योक्तमित्यवगन्तव्यम्।

**वं०प०—** न्यायविवरणरीत्योक्तं **स्वयंप्रकाशेति**। प्राभाकररीत्योक्तं **स्वयंप्रकाशज्ञानेति**। तार्किकरीत्योक्तं **मानसेति**। **उक्तम्** सन्दिग्धश्चार्थो न्यायविषय इत्यादिना॥

**आनन्दः— जीवस्य चेति**। न चैतत्पुनरुक्तं साक्षात्प्रतीत्या निश्चितत्वादित्यनेन जिज्ञासाविषयत्वस्योक्तत्वादिति वाच्यम्। प्रतीतिकारणप्रदर्शनेन तस्यैव विवरणादपौनरुक्त्यमिति भावः।

**वा०चं०—** एवं चेश्वरादिशब्दानामपूर्वार्थविषयकत्वाभावे ईश्वरविषया जिज्ञासेत्यनेन जीवविषयेत्युक्तं स्यात्। तस्य च सिद्धत्वान्न विषयत्वमित्यभिप्रेत्य विशेषं विवक्षन्नुक्तं स्मारयति **जीवस्य चेति**। स्वप्रकाशत्वमानसवेद्यतापक्षयोरहमित्येतावन्मात्रमुल्लेखः स्वप्रकाशज्ञानाश्रयपक्षे त्वहमिदं जानामीति ज्ञानस्य एकदेशोल्लेखोऽयमिति ज्ञातव्यम्। अत्र चाहमिति प्रत्यक्षेण जीवसिद्धिं वदता पूर्वपक्षिणाहमिति सिद्धान्त्यभिप्रेतं जीवविषयकप्रकाशस्य जीवरूपत्वरूपं स्वप्रकाशत्वमेव वक्तव्यमिति न नियमः। अहं इत्यस्य मानसवेदनत्वेन वा स्वप्रकाशज्ञानाश्रयसमर्पकत्वेम वाऽङ्गीकारेऽपि जीवसिद्धेरविघातात्। तथा च तस्य च स्वप्रकाशत्वादिति न्यायविवरणमुपलक्षणमित्यभिप्रेत्य प्राभाकरवैशेषिकमतमप्युपन्यस्तम्। अत एव न्यायविवरणटीकायां तदुपलक्षणत्वमुक्तम्। तत्त्वप्रकाशिकायां तु सिद्धान्तरीत्यैव सिद्धिसंभवे किं रीत्यन्तरगवेषणेनेत्यनुपलक्षणत्वपक्षमाश्रित्य वोपलक्षणत्वेऽपि स्वशब्देनानुपादाने बीजत्वेन वा वस्तुस्थितिप्रदर्शनमित्यवधेयम्।

**वा०र०—** जीवस्य जिज्ञास्यत्वाभावो नन्वात्मेत्याशङ्कानिरासायैवं तर्हि तत एव न जिज्ञास्य इत्यनेन पूर्वमुक्तोऽतः पुनस्तदभिधानं व्यर्थमित्यतस्तदुद्घाटयति **एवं चेश्वरेति**। अपूर्वार्थत्वाभावे जीवरूपार्थव्यतिरिक्ताप्रसिद्धार्थत्वाभावे। तस्य चेत्यनेन बुद्ध्या विविक्तजीवपरामर्शः। उक्तस्मारणमात्रं व्यर्थतापर्यवसायीत्यतो अधिकवचनस्य सद्भावान्न व्यर्थतेत्याशयेनोक्तं **विशेषं विवक्षन्निति**। वक्तुमिच्छन् विशेषं वक्तुमिति यावत्। **अहमिति स्वप्रकाशतयेति** मूले अहमित्याकारोल्लेख एव स्वप्रकाशतयेत्यादिपक्षत्रयेऽपीति प्रतीयते। तत्राहमिति स्वप्रकाशतया अहमिति मानसप्रत्यक्षवेद्यतया सिद्धत्वेनेति संबन्धसंभवेऽपि नाहमिति स्वप्रकाशज्ञानाश्रयतया सिद्धत्वेनेति संबन्धः संभवति। स्वप्रकाशज्ञानाश्रयतया प्राभाकरसंमतआत्मप्रकाशोल्लेखो हीदमहं जानामि इत्येवंरूपः। न त्वहमित्येवातः कथमिदमित्यतो विवेकमाह **स्वप्रकाशत्वेति**। एकदेशेति वदतैकदेश्येकदेश-





भावलक्षणसंबन्धेन लक्षणया संपूर्णज्ञानाकारस्य ग्रहणेन स्वप्रकाशज्ञानाश्रयतयेत्यत्र संबन्धः कर्तव्य इत्युक्तं भवति। ननु जीवस्य विषयत्वाभावसाधकसिद्धत्वमुपपादयितुं सिद्धान्त्यभिप्रेतस्य च स्वप्रकाशत्वादिति न्यायविवरणोक्तो हेतुरेव वाच्यः । तत्कथं सिद्धान्त्यनभिप्रेतमानसवेदनत्वादेः कीर्तनमित्यतः पूर्वपक्षिणः जीवस्य सिद्धत्वसंपादने तात्पर्येण सिद्धत्वस्य च सिद्धान्तरीत्यैव प्राभाकरवैशेषिकरीत्याऽप्युपपत्तेस्तद्रीतेरप्यादरणं तस्य न दोषाय । न्यायविवरणेऽपि न तावन्मात्रमभिप्रेतम् । तट्टीकायामुपलक्षणया अधिकस्याप्युक्तेरित्याह **अत्र चाहमितीति** । जीवविषयकेत्यादिनिर्वचनेनावेद्यत्वरूपं पूर्वपक्ष्यभिमतं स्वप्रकाशत्वं न संमतमिति सूचयति **अनुपलक्षणत्वपक्षमिति** । तत्र हि **अहमिति स्वप्रकाशतया** सिद्धिमुक्त्वा न चायं मानसोऽनुभव इत्यादिना तस्य मानसत्वादिनिरासेन जीवस्य रीत्यन्तरेण वेद्यत्वाभावाङ्गीकारप्राप्तेरनुपलक्षणत्वपक्षाश्रयणं प्रतीयते । तथोपलक्षणाया न्यायविवरणटीकोक्तत्वेऽपि स्वशब्देनानुपादाननिमित्तत्वेन पक्षान्तरनिराकरणोपपत्त्योपलक्षणत्वपक्षाङ्गीकारोऽपि तत्र ज्ञातुं शक्यते । उक्तप्रकारद्वयस्य वस्तुस्थितिकथनेन ज्ञापनादिति भावः ।

**स०व्र०**— क्रमाद्वेदान्तिप्राभाकरवैशेषिकादिमताश्रयणेनाह **जीवस्येति**।

**कुण्डल०**— **जीवस्य चेति**। अत्र क्रमाद्वेदान्तिप्राभाकरतार्किकमतानि प्रदर्शितानीति द्रष्टव्यम्।

**विठ्ठ०**— तर्हि स जीव एव जिज्ञास्योऽस्तु इत्यतो विशेषं वदन् उक्तं स्मारयति **जीवस्य चेति** । स्वप्रकाशतयेति क्रमात् मायावादिप्राभाकरवैशेषिकादिमतमाश्रित्योक्तमिति ध्येयम् ।

**चषकः**— **स्वप्रकाशतया** स्वात्मकप्रकाशविषयतया । वेदान्तिमताशयेनेदम् ॥ **स्वप्रकाशज्ञानाश्रयतया** अयं घटो घटमहं जानामीत्यादिव्यवसायानुव्यवसायोभयलिङ्गकमितिमातृमेयरूपत्रिपुटीप्रत्यक्षवादिनां गुरूणां मतमनुरुन्धानेनोक्तम् ॥ **मानसप्रत्यक्षवेद्यतयेति** । मनःकरणकात्माश्रितप्रत्यक्षविषयीकृततयेत्यर्थः । न्यायनयाभिप्रायेणेयमुक्तिः ॥

**गूढ०**— **जीवस्य वेति**। न चैतत्पुनरुक्तं साक्षात्प्रतीत्या निश्चिततत्वादित्यनेन जिज्ञासाविषयत्वस्योक्तत्वादिति वाच्यम्। प्रतीतिकारणप्रदर्शनेन तस्यैव विवरणादपौनरुक्त्यमिति भावः।

ईश्वरे प्रमितत्वविकल्पाः—

**१२७ सु०— किं चेश्वरः प्रमितो न वा। नोभयथाऽपि जिज्ञासा संभवति। नेति पक्षे अनुग्राह्यप्रमाणाभावेन जिज्ञासायास्तर्कत्वव्याघातात्। 'कारणोपपत्तितः' इति हि उक्तम्। प्रमाकरणस्य प्रमाणस्य, उपपत्तिः अनुग्रहः, तत्करणेनेत्यर्थः। न च बुद्धावनारूढं शक्यं जिज्ञासितुम्। प्रमितत्वे तु निश्चितत्वादेव। न चैवं सकलतर्कानुपपत्तिप्रसङ्गेन व्याघातः। सामान्यतः प्रतीतौ विशेषे तदवकाशात्। न चात्र तथात्वं पश्यामः।**

**परि०**— ब्रह्मणि वेदरूपप्रमाणोक्तिपरतयोङ्कारस्य व्याख्यानपरं 'स एव भर्गशब्दार्थ' इत्यादि। तद्व्यावर्त्यं व्यनक्ति **किञ्चेति**॥ **तत्करणेनेति**। अनुग्रहकरणेनेत्यर्थः। **निश्चितत्वादेवेति**। न जिज्ञासितुं शक्यमित्यन्वयः॥ **न चात्रेति**। ईश्वरविषये सामान्यतः प्रमितत्वं विशेषेणाप्रमितत्वं च न पश्याम इत्यर्थः। अतो नेश्वरोऽपि विषय इति भावः।

**यादु०**— **निश्चितत्वादिति**। तथा च नेश्वरजिज्ञासयोर्विषयविषयिभावः संबन्धः संभवतीति भावः। **न चैवं सकलेति**। यद्यग्निर्न स्यादित्यादावपि विषयीभूताग्निमत्त्वादिना पर्वतादिनिश्चये निश्चितत्वादेवानिश्चये च बुद्ध्यावनारूढं न शक्यं जिज्ञासितुमिति उक्तरीत्या तर्कावतारानुपपत्तिप्रसङ्गेन इत्यर्थः। **व्याघात इति**। निश्चितत्वेऽनिश्चितत्वे वा जिज्ञास्यत्वं न स्यादिति प्रकृततर्कविषयेऽपि प्रमितत्वाप्रमितत्वविकल्पतद्दूषणयोः प्रसङ्गेनेत्यर्थः। **सामान्यत इति**। पर्वतत्वादिना सामान्यरूपेण धर्मिणो निश्चितत्वं न तु तर्कविषयीभूतत्वेन वह्निमत्पर्वतत्वादिविशेषरूपेणापि येन तर्कानवतार इति भावः। **न च तत्रेति**। वक्ष्यमाणरीत्या ईश्वराख्यधर्मिणः सामान्यतोऽप्युपस्थापकप्रमाणाभावादिति भावः।

**वं०प०**— **अनुग्राह्यप्रमाणाभावेनेति**। मीमांसानुग्राह्येत्यर्थः। ईश्वरस्य अप्रमितत्वे तत्प्रमापक-प्रमाणाभावप्राप्तेरित्याशयः। **अनुग्रहस्तत्करणेनेति**। प्रमाणानामनुग्रहस्तर्कसाध्यव्यापार इत्यर्थः। यथाहुः। 'प्रत्यक्षादेः प्रमाणस्य तर्कोऽनुग्राहको भवेदि'ति। **बुद्ध्यावनारूढमिति**। आश्रयासिद्ध्यापत्तेः इत्यर्थः। **न चात्रेति**। सामान्यतोऽपीश्वरप्रमापकप्रमाणाभावादिति भावः।

**आनन्दः**— नन्वीश्वरस्य श्रुत्यादिप्रमाणसिद्धत्वात् कथं तदभाव उक्त इत्यत आह **किञ्चेति**। अभावप्रतीतेर्भावप्रतीतिपूर्वकत्वादादौ प्रमितपक्षमुक्त्वा तस्याल्पत्वात्तं पक्षं पश्चाद्दूषयिष्यन् अप्रमितपक्षमेवादौ दूषयति **नेति पक्ष इति**। **व्याघात इति**। स्वेनापि सकलतर्कदूषणाय तर्कस्यैवोपन्यसनीयत्वेन विरोध इत्यर्थः। तर्हि प्रकृतेऽप्येवं किं न स्यादत्राह **न चेति**।

**कं०रा०**— ईश्वरः प्रमितो नेति पक्षे तस्य बुद्ध्यावनारूढत्वेन जिज्ञास्यत्वायोग इति दूषणान्तरमाह **न चेति**।

**श्रीनिधि०**— ननु ईश्वरो न प्रमितः न च जिज्ञासाया तर्कत्वव्याघातः, प्रकारान्तरेण तल्लक्षणसंभवादित्यत आह **न च बुद्धाविति**।

**वा०चं०**— एवमोङ्कारब्रह्मशब्दाभ्यां साक्षान्निवर्त्यं विषयाभावप्रयुक्तजिज्ञासाऽसंभवपूर्वपक्षमभिधाय ननु यौगिकोङ्कारब्रह्मशब्दप्रयोगान्यथाऽनुपपत्तिप्रमाणकत्वेनापूर्वार्थकल्पनाभावात्क्वचिन्मुख्यस्यैव शब्दस्य क्वचिदमुख्य-त्वेन सर्वथाऽमुख्यार्थशब्दाभावान्मुख्यार्थे च तादृशे वस्तुनि स्वीकृते तच्छब्दानां तद्विषयत्वाङ्गीकारे गौरवाख्य-बाधकाभावाच्च नेयमनुपपत्तिरित्यतो व्याहृतीनां चेत्याद्यनुव्याख्यानोपपादितोङ्कारप्रयोक्तृसूत्रकृदभिप्रेतार्थनिवर्त्यं





तथाऽपि न जिज्ञासासंभवोऽनुग्राह्यप्रमाणाभावेन शास्त्रस्य विषयसंबन्धाभावादित्येवंरूपं पूर्वपक्षं दर्शयति **किञ्चेति** ॥ **इत्यर्थ इति** । इदं च पूर्वोक्तात् सूत्रस्यार्थान्तरमिति द्रष्टव्यम् । प्रमितत्वाप्रमितत्वयोरीश्वरस्य बाधकतया त्वयोच्यमानस्यापि तर्कत्वात् तद्विषयस्याप्रमितत्वे बुद्ध्यचनारूढविषयकत्वेन प्रमितत्वे तु निश्चितविषयकत्वेन तर्कत्वानुपपत्तिरूपतर्कसामान्यदूषणस्य तत्रापि आपत्त्या तर्कसामान्यं तर्केण निराकुर्वतो व्याघात इत्याशङ्क्य निषेधति **न चैवमिति** ॥ **न चात्रेति** । सामान्यतः प्रत्यायकस्य विशेषतोऽप्रत्यायकस्येश्वरे प्रमाणस्याभावेन सामान्यतः प्रमितत्वे सति विशेषतोऽप्रमितत्वरूपतर्कविषयताप्रयोजकस्य तर्कान्तर इवात्राभावान्न व्याघात इति भावः ।

**वा०र०— एवमोङ्कारब्रह्मशब्दाभ्यामिति** । वक्ष्यमाणमोङ्कारप्रयोक्तृसूत्रकृदभिप्रेतार्थनिवर्त्यपूर्वपक्षं व्यावर्तयितुं साक्षादित्युक्तम् । योगेन गुणपूर्तिप्रतिपादकतच्छब्दाभ्यां वचनवृत्तिलब्धार्थेनैव जीवाभेदपूर्वपक्षस्य निरासान्न तत्राभिप्रायापेक्षेति भावः । ईश्वरविषयैव जिज्ञासास्तु । न चापूर्वार्थकल्पनापातादिदूषणमुक्तमिति वाच्यम् । तस्य परिहर्तुं शक्यत्वादित्याशयेन नारायणपदोदित इत्येतद्व्याख्यानमूलोक्तप्रकारेण तद्दूषणपरिहारकरणेन पूर्वास्वरसं शङ्कामुखेन सूचयन्नुत्तरग्रन्थतात्पर्यं च वदन्नवतारयति **ननु यौगिकोङ्कारब्रह्मशब्देत्यादिना** । **क्वचिदिति** । गङ्गायां घोष इत्यादौ दृष्टत्वादिति भावः । **स्वीकृत इति** । स्वीकर्तव्यत्वप्रयोजके सति तदस्वीकारायोगादिति भावः । **नेयमिति** । ईश्वरविषया जिज्ञासेति पक्षे प्रतीतार्थत्वोपपत्तावित्यनेनोक्तानुपपत्तिर्नेत्यर्थः । **उपपादितोङ्कारेति** । उपपादितो योऽभिप्रेतार्थ इति संबन्धः । मूलेऽभावप्रतीतेर्भावप्रत्ययाधीनत्वनिमित्तेन प्रमितत्वादिक्रमेण विकल्पकरणेऽप्यल्पदूषणत्वादिनिमित्तेनाप्रमितत्वादिक्रमेण निराकरणमिति ज्ञेयम् । इत्यर्थ इति मूलमित्यप्यर्थ इति व्याख्येयमिति व्यञ्जयन्पूर्वविरोधं परिहरति **इदं च पूर्वोक्तादिति** । कारणं प्रमाणं चोपपत्तिश्चेत्युक्तार्थादर्थान्तर-मित्यर्थः । एतच्चार्थान्तरमेतत्सूत्रीयकारणोपपत्त्याऽनुजानाति । संभवत्यस्मिन् कारणं हेतुः प्रमाणस्योपपत्त्येति-कर्तव्यतयेत्यादिभाष्यतद्वार्तिकतद्वाचस्पतिग्रन्थानुसारेणेति ज्ञेयम् । शिष्टं प्रागेवोक्तम् । अनुग्राह्यापेक्षामुपपादयति **न च बुद्धाविति** मूलम् । सकलतर्कानुपपत्तिप्रसङ्गेन व्याघाताभिधानमयुक्तम् । सकलतर्काणां परेणाभिधानेनोक्त-दूषणसाम्येन तावतामनुपपन्नत्वाप्रसक्त्या व्याघाताभावादित्यतो बुद्ध्या विवेकेन व्याघातमुपपादयति **प्रमितत्वा-प्रमितत्वयोरीश्वरस्येत्यादिना** । ईश्वरस्य प्रमितत्वेति संबन्धः । प्रमितत्वाप्रमितत्वयोरङ्गीकार इत्यर्थः । तर्कत्वात् तर्कसामान्यदूषणस्य तत्राप्यापत्त्येति संबन्धः । दूषणस्वरूपप्रदर्शनं तद्विषयस्येत्यादि । तर्कसामान्यं तर्कत्वावच्छिन्नं तर्केण निराकुर्वत इत्यनेन त्वयोच्यमानस्येत्यनेन च तर्केण क्रियमाणं तर्कदूषणं सर्वतर्केषु सममित्यतस्त्वदीयतर्केऽपि सर्वान्तर्गतस्त्वया दूषितो भवतीति व्याघात इति योजना सूचिता भवति । **तर्कान्तर इवेति** । सर्वतर्केष्विवेत्यर्थः । ततश्च सर्वतर्काणां तर्कविषयताप्रयोजकरूपवद्विषयोपेतत्वेन तन्निराकरणप्रसङ्गान्न तदन्तर्गतमदीयतर्कनिराकरण-प्रसङ्गप्रयुक्तो व्याघात आयातीत्यर्थः । ननु सर्वतर्केषु तत्तद्विषयाणां सामान्यत इत्युक्ततर्कविषयत्वप्रयोजकव-द्विषयोपेतत्वसत्त्वेऽपि न तदीये तर्के तथाविधविषयसत्त्वं तत्तर्कस्य दूष्यतर्कसमानविषयतया प्रयोजकस्य दूष्यतर्क इव दूषणतर्केऽप्ययोगात् । अन्यथा दूष्येऽपि तत्प्रयोजकसत्त्वापातोऽविशेषादिति चेन्न । दूषणतर्को हि दूष्यतर्क-

संपादितविषयप्रसिद्धिमानिति सामान्यतः प्रसिद्धत्वरूपतर्कविषयताप्रयोजकं दूषणतर्कविषयेऽस्तीति तत्प्रवृत्तिरपि सकलतर्कवत्संभवत्येवेत्यभिमानेनास्य प्रवृत्तेरित्याशयात् । न चैवं सकलतर्केति मूलान्यथाख्यातिस्तु सकले-त्युक्तार्थस्य व्याघातोपपादकत्वाश्रयणाद्व्याघात इत्यस्य पृथगेव योजनाद्वाक्यभेदाश्रयणसूचिका । **व्याघात इति** प्रतीकमुपादाय प्रसङ्गेनेत्यर्थ इति चायुक्तम् ।

**स०व्र०**— अनुग्राह्यप्रमाणाभावे जिज्ञासाया अकर्तव्यत्वे युक्तिं चाह **न च बुद्धाविति** । **न चात्रेति** । प्रमाणाभावाद्विपर्ययावेदकत्वाच्च न सामान्यतः प्रतीतिरित्यर्थः ॥

**कुण्डल०**— **तर्कत्वव्याघातादिति** । प्रमाणानुग्राहकत्वलक्षणतर्कत्वं न स्यादित्यर्थः । प्रमाणानु-ग्राहकत्वं कुतः प्रतिपन्नं जिज्ञासायाः इत्यतः प्रागुदाहृतगौतमसूत्रखण्डं पठित्वा व्याचष्टे **कारणोपपत्तित इति** । **उक्तमिति** । अनुग्राह्यप्रमाणाभावे जिज्ञासाया असंभवमुपपादयति **न चेति** । यद्वा ईश्वरः प्रमितो नेति पक्षे दूषणा-न्तरमाह **न चेति** । **एवमिति** । प्रमितत्वाप्रमितत्वविकल्पाभ्यां जिज्ञासानिराकरणे सति सकलतर्कविषयेऽपि निश्चितत्वानिश्चितत्वविकल्पाभ्यां तर्कमात्रानुपपत्तिप्रसङ्गेन व्याघात इत्यर्थः । **सामान्यत इति** । पर्वतत्वादिना सामान्येन पर्वतादेर्धर्मिणः प्रभा(मि)तौ वह्निमत्त्वादिविशेषे तर्कस्यावश्यकत्वादित्यर्थः । **न चात्रेति** । ईश्वरविषये वक्ष्यमाणरीत्या प्रमाणमेव नास्तीत्यर्थः ।

**विठ्ठ०**— जीवातिरिक्तेश्वर एव नास्तीति न तस्य जिज्ञासाविषयस्याप्रमितत्वादिति विकल्पेन तर्कत्वव्याघातस्तर्हि यद्यग्निर्न स्यादित्यादितर्कस्याप्युक्तरीत्या तद्विषयस्याग्निमत्पर्वतादेः निश्चयानिश्चयपक्षदूषणेन तर्कमात्रस्याप्यनुपपत्तिप्रसङ्गात् ईश्वरस्य प्रमितत्वाप्रमितत्वयोरजिज्ञास्यत्वोपपादकतर्कस्यापि तर्कत्वावच्छिन्नत्वेन तद्विषयस्येश्वराजिज्ञास्यत्वस्य प्रमितत्वाप्रमितत्वपक्षयोरुक्तरीत्या तर्कत्वानुपपत्तेर्वक्तुं शक्यत्वेन तर्कसामान्यं तर्केण निराकुर्वतः स्वव्याघातः स्यादित्याशङ्क्य निराकरोति **न चैवमिति** । पर्वतत्वादिसामान्यरूपेण विषयप्रतीतावपि तस्यैव अग्निमत्त्वादिविशेषेण अप्रमितत्वात् तद्विषयसन्देहोपपत्त्या तर्कावकाश इति न तर्कमात्रानुपपत्तिरिति भावः । तर्हि ईश्वरस्यापि सामान्यतः विषयत्वोपपत्त्या तद्विशेषविषये जिज्ञासा भवतीत्यत आह **न हीति** । सामान्यतोऽपि **ईश्वरस्य** प्रमितत्वं न पश्यामः, प्रमापकाभावादिति भावः ।

**चषकः**— **निश्चितत्वादेवेति** । न जिज्ञासा संभवतीत्यनुषक्तेनान्वेति **सकलतर्केति** । उक्तदिशा निर्वह्नित्वापादकनिर्धूमत्वापाद्यतापत्तावपि पर्वतादौ वह्निमत्त्वाद्युपरक्तनिश्चयानिश्चयसमवहितिनियन्त्रितदूषण-प्रसरादिति भावः । **सामान्यत इति** । तृतीयार्थतसिः प्रतीत्यन्वयिप्रकारतानिरूपकत्वं तृतीयार्थः । पर्वतत्वादि-सामान्यधर्मोपरागेण धर्म्यवगाही निश्चय एव प्रसङ्गहेतुर्न स्वनिवर्तनीयशङ्काकोटितापन्नापादकविपर्ययोपरागेणेति न प्रसङ्गानुदयप्रसङ्ग इति भावः । **तथात्वम्** । सामान्यधर्मोपरक्तप्रतीतिविषयत्वम् । अभिधास्यमानदिशा सामान्य-धर्मोपरागेणापीश्वराख्यधर्मिगोचरोपस्थितिजनकप्रमाणवैधुर्यादिति भावः ।

**गूढ०**— नन्वीश्वरस्य श्रुत्यादिप्रमाणसिद्धत्वात्कथं तदभाव उक्त इत्यत आह **किञ्चेति** । अभावप्रतीते-र्भावप्रतीतिपूर्वकत्वादादौ प्रमितपक्षमुक्त्वा तस्याल्पत्वात् तं पश्चाद्दूषयिष्यन् अप्रमित इति पक्षमेव चादौ दूषयति





**नेति पक्ष इति । व्याघात इति ।** स्वेनापि सकलतर्कदूषणाय तर्कस्यैवोपन्यसनीयत्वेन विरोध इत्यर्थः । तर्हि प्रकृतेऽप्येवं किं न स्यादित्यत आह **न चेति ।**

**ईश्वरे प्रमाणविकल्पः—**

**१२८ सु०— किं चेश्वरे प्रमाणं भवन्न तावत्प्रत्यक्षम् । तस्यापाततस्तदभावावेदकत्वात् । नाप्यनुमानम् । तत्प्रतिबद्धलिङ्गाभावात् । आगमस्तु कार्यनिष्ठो न निष्पन्नस्वरूपमीश्वरं शक्नोत्यवगमयितुम् । न चान्यत्प्रमाणमस्ति यन्मीमांसया अनुगृह्येत ।**

**बिन्दुः— तत्प्रतिबद्धेति ।** प्रतिबन्धो व्याप्तिः । व्याप्तिमल्लिङ्गाभावादित्यर्थः । अर्थसंस्पर्शशून्यत्वादिति वक्ष्यमाणपूर्वपक्षरीत्या शब्दार्थसंबद्धस्य निरूपयितुमशक्यत्वादिति भावः ।

**परि०—** एवं ॐब्रह्मपदव्याख्यानपरौतत्ववाचीत्यादिसपादश्लोकद्वयव्यावर्त्यं प्रमेयारोपितान्यथाकारमूलचोद्यमुक्त्वा अधुना यदतःपदस्य वेदानां सिद्धार्थपरत्वात् इति व्याख्यानं कार्यता चेत्यादिना क्रियते, यच्च वेदस्य प्रामाण्यमात्रस्य स्वतस्त्वादिति व्याख्यानं 'प्रत्यक्षवच्च प्रामाण्यमि'त्यादिना क्रियते तदुभयव्यावर्त्यं प्रमाणे आरोपितान्यथाकारमूलचोद्यं क्रमेणाह **किञ्चेश्वर इत्यादिना । तत्प्रतिबद्धलिङ्गेति ।** कार्यत्वादिकं शास्त्रयोनिसूत्रे निरसिष्यत इति भावः ॥ **कार्येति ।** प्राभाकररीत्या यागादिजन्यापूर्वलक्षणकार्यपर इत्यर्थः । तत्परत्वप्रकारश्च कार्यता चेत्येतदवतारिकायामग्रे स्फुटीकरिष्यत इति भावः । **न चान्यत्प्रमाणमिति ।** पाशुपतादिकं तु न प्रमाणमिति भावः ॥

**यादु०—** ननु प्रत्यक्षेण कथमीश्वराभावज्ञानं तस्यातीन्द्रियत्वेन तदयोग्यत्वादित्यत आह **आपातत इति ।** तस्यातीन्द्रियत्वादिविचाराभावदशायामित्यर्थः । तद्विचारानन्तरं तु न प्रत्यक्षं तत्रोपन्यासार्हमित्यभिसन्धिः ।

**वं०प०— तत्प्रतिबद्ध इति ।** तद्व्याप्तेत्यर्थः । अनुग्राह्यप्रमाणाभावे जिज्ञासाया अकर्तव्यत्वे युक्तिं चाह **बुद्धावनारूढमिति ।** वेदातिरिक्तमप्यनुग्राह्यं प्रमाणं भवत्तद्विरोधिशैवपुराणादिकं वा (तदनुकूलपञ्चरात्रादिकं वा) ।

**आनन्दः—** नन्वीश्वरोऽपि श्रुत्यादितः सामान्येन प्रमित एवेत्यत आह **किञ्चेति ।** योग्यानुपलब्धिसहकारेणैव प्रत्यक्षस्याभावावेदकत्वादतीन्द्रिये योग्यानुपलब्धिरूपसहकार्यभावेन न तदभावावेदकत्वमिति आशयेन **आपातत** इत्युक्तम् ।

**कं०रा०— निष्पन्नस्वरूपं** सिद्धस्वरूपम् । वेदस्य पौरुषेयत्वे पुरुषस्य भ्रमादिसंभवेन वक्तृवाक्यार्थयथार्थज्ञानलक्षणकारणानिश्चयेन प्रामाण्यं दुर्लभम् । अपौरुषेयत्वे तु सुतरामुक्तकारणाभावे प्रामाण्यं दुर्लभमित्यर्थः ।

**श्रीनिधि०**— आपातत इति प्रत्यक्षस्य योग्याभावनिश्चायकत्वात् । ईश्वरस्य च प्रत्यक्षायोग्यत्वादेवमुक्तम् । **तत्प्रतिबद्धं** ईश्वरेण व्याप्तम् । **निष्पन्नस्वरूपं** सिद्धस्वरूपं कार्यतदन्वितातिरिक्तम् ।

**वा०चं०**— एवं सामान्यतोऽनुग्राह्यप्रमाणनिराकरणमुखेन शास्त्रविषयसंबन्धानुपपत्तिरूपपूर्वपक्षमोङ्कारप्रयोगसूचिताभिप्रायनिवर्त्यम् उपपाद्य ननु प्रत्यक्षादीनामेव तथात्वेन नानुग्राह्यप्रमाणाभावो येन बुद्ध्यनारूढविषयकत्वेन जिज्ञासाया अशक्यत्वं स्यात् नापि निश्चितविषयकत्वं विप्रतिपत्त्यादिप्रतिबन्धकनिरासार्थत्वसंभवादित्यतो विशेषतः अनुग्राह्यप्रमाणनिराकरणेनापि शास्त्रविषयसंबन्धानुपपत्तिरूपं कार्यता चेत्याद्यनुव्याख्याने सिद्धव्युत्पत्तिसमर्पकतया व्याख्यातातःशब्दनिवर्त्यं पूर्वपक्षमाह **किञ्चेति** । योग्यप्रतियोगिकत्वेनाभावस्य योग्यतया प्रत्यक्षस्येश्वराभावावेदकतयाऽवक्तव्यत्वेऽपीश्वरस्य प्रत्यक्षत्ववादिनाऽयोग्यताया वक्तुमशक्यत्वेन तं प्रति तदभावे प्रत्यक्षोक्तिर्युक्तेत्यभिप्रेत्यापातत इत्युक्तम् ॥ **नापीति** । कार्यत्वादेः प्रतिपक्षग्रस्तत्वादिति भावः । अर्थापत्त्यादेरनुमानानतिरेकादुपमानाभावयोर्नियतविषयकत्वाच्च न प्रमाणान्तरसंभावनेत्याह **न चेति** ।

**वा०र०**— **विषयसंबन्धानुपपत्तीति** । बुद्ध्यनारूढे वक्ष्यमाणतदनुपपत्तीत्यर्थः । **तथात्वेनेति** । अनुग्राह्यप्रमाणत्वेनेत्यर्थः । तर्हि निश्चितार्थकतापात इत्यत आह **नापीति** । निश्चितार्थोऽपि विप्रतिपत्त्यादिप्रतिबन्धकनिरासाय प्रवृत्ते तज्जिज्ञासाया न व्यर्थतेत्याह **विप्रतिपत्त्यादीति** । **विशेषतोऽनुग्राह्येति** । प्रत्यक्षत्वादिरूपेणेत्यर्थः । अनुपपत्तिरूपं पूर्वपक्षमिति संबन्धः । सिद्धे या व्युत्पत्तिरिति विग्रहः । **योग्यप्रतियोगिकत्वेनेति** । अभावस्य प्रत्यक्षेण सिद्धिं वदता प्रत्यक्षयोग्यता वाच्या । योग्यार्थस्यैव प्रत्यक्षेण ग्रहणात् । अभावयोग्यत्वं च तत्प्रतियोगिनो योग्यतया योग्यप्रतियोगिकत्वमेव । ईश्वररूपप्रतियोगी चायोग्य इति न तदभावस्य योग्यप्रतियोगिकत्वम् । अत एवातिप्रसङ्गपरिहाराय योग्यानुपलब्धिसहकृतप्रत्यक्षमेवाभावग्राहकमिति सर्वसंमतमतस्तस्य प्रत्यक्षेण ग्रहणानुपपत्तेरीश्वराभावे प्रत्यक्षप्रमाणतया वक्तुमयोग्यमित्यर्थः । **प्रत्यक्षत्ववादिनेति** । प्रसक्तिपूर्वको निषेध इति सिद्धेः प्रत्यक्ष एवेश्वर इति केनचिदङ्गीकृते तं प्रति प्रत्यक्षस्य तदभावावेदकत्वोपन्यासाददोष इत्यर्थः । ननु क्षित्यादिकमित्यादिकेऽनुमाने कार्यत्वादिलिङ्गोक्तेस्तदेवेह लिङ्गमित्यत आह **कार्यत्वादेरिति** । **प्रतिपक्षेति** । उपाधिप्रतिरोधौ त्वित्याद्युक्तेरिति भावः । आदिना सिद्धत्वादिसङ्ग्रहः । **नियतेति** । सादृश्याभावरूपनियतेत्यर्थः ।

**स०व्र०**— **नापीति** । कार्यत्वादीनां प्रत्यक्षागमविरोधान्न प्रवृत्तिरीश्वर इत्यर्थः । अस्तु तर्ह्यागमानुकूलमनुमानमागमो वा साक्षात्प्रमाणमित्यत आह **आगमस्त्विति** । **न चान्यदिति** । उपमानस्य सादृश्याद्यभावेनासंभवात् । अर्थापत्तेः अनुमानानतिरेकादनुपपत्त्यभावाच्च । अभावस्य भावविषयत्वाभावात्प्रमाणाविषयत्वेनाभाव एवेश्वरस्येत्यर्थः ।

**कुण्डल०**— नन्वीश्वरस्यातीन्द्रियादित्वात् कथं प्रत्यक्षेण तदभावावेदनमित्यत आह **आपातत इति** । अतीन्द्रियत्वादिविचाराभावदशायामित्यर्थः । **निष्पन्नस्वरूपमिति** । सिद्धस्वरूपमित्यर्थः । **अन्यदिति** । वेदादन्यस्यागमस्य संभावितदोषतया प्रमाणत्वेनानाशङ्कनीयत्वादित्यर्थः ।





**विठ्ठ०**— एवं सूत्रगतोंशब्दब्रह्मशब्दाभ्यां निवर्तनीयं पूर्वपक्षमभिधाय ईश्वरस्य प्रमापकाभावं दर्शयन्नतःशब्दनिवर्त्यं पूर्वपक्षमाह **किञ्चेत्यादिना** । आपाततः विचाराभावदशायामिति यावत् । प्रस्तुतेश्वरस्यातीन्द्रियत्वेन प्रत्यक्षायोग्यार्थाभावग्रहणस्वभावस्य प्रत्यक्षस्येश्वराभावे दृष्टत्वात् न प्रत्यक्षं तत्रोपन्यस्तमिति भावः । **लिङ्गाभावादिति** । कार्यत्वादेः प्रतिपक्षत्वादिदुष्टत्वादिति भावः । **निष्पन्नस्वरूपं** सिद्धरूपम् ।

**चषकः**— अनुग्राह्यप्रमाणाभिमतधर्मिकां प्रत्यक्षानुमानागमत्वोपरक्तकल्पत्रयीं तद्घटकचरमकल्पे पौरुषेयापौरुषेयत्वगोचरकल्पद्वयीं चाभिप्रेत्य क्रमेण प्रतिविधत्ते **किञ्चेत्यादिना तद्विशेषस्येत्यन्तेन** । **आपातत इति** । योग्यप्रतियोगिकाभावस्यैव योग्यत्वेन ईश्वराभावस्यातीन्द्रियेश्वरप्रतियोगिकतया वास्तवयोग्यताराहित्येऽपि यः पूर्ववादी वैय्यात्येनेश्वरस्य प्रत्यक्षगोचरतां मनुते तन्मतदिशा तदभावस्य योग्यप्रतियोगिकताप्रास्या तादृशाभावस्य तं प्रति प्रत्यक्षगोचरतोक्तिः युज्यत इति भावः । एतेन वस्तुत ईश्वराभावस्यातीन्द्रियत्वेन तत्प्रत्यक्षतोक्तिः न सङ्गच्छत इति शङ्काऽनवकाशः । **कार्यनिष्ठः** कार्यतात्पर्यकः । **निष्पन्नस्वरूपं** कार्यान्यकार्यानन्वितस्वरूपम् ।

**गूढ०**— नन्वीश्वरोऽपि श्रुत्यादितः सामान्येन प्रमित एवेत्यत आह **किञ्चेति** । योग्यानुपलब्धिसहकारेणैव प्रत्यक्षस्याभावावेदकत्वादतीन्द्रिये योग्यानुपलब्धिसहकार्यभावेन न तदभावावेदकत्वमित्याशयेनापातत इत्युक्तम् ।

**१२९ सु०— किं चागमोऽपि भवन् वेद एव वक्तव्यः । अन्यस्यानाशङ्कनीयत्वात् पारतन्त्र्याच्च । वेदस्य पौरुषेयत्वापौरुषेयत्वयोः कारणाभावेन प्रामाण्यमेव दुर्लभम् । स्वतः प्रामाण्याङ्गीकारे तु वेदविरुद्धानामपि शाक्यादिवचसां तथात्वापातेन पुनर्वेदाप्रामाण्यतादवस्थ्यम् । किं च शब्दस्यैव प्रामाण्यं दुर्घटमर्थसंस्पर्शशून्यत्वात् । वाक्यार्थप्रत्यायनप्रकारानिरूपणाच्च । कुतस्तद्विशेषस्य वेदस्य ।**

**बिन्दुः**— **वाक्यार्थेति** । पदानां च स्वस्वार्थे वृत्तिरूपसंबन्धमङ्गीकुर्वतापि वाक्यार्थे शक्त्याद्यनङ्गीकारादिति भावः ।

**परि०**— **पारतन्त्र्याच्चेति** । वेदमूलपञ्चरात्रादेर्वेदप्रामाण्यपरतन्त्रत्वादित्यर्थः ॥ **कारणेति** । आप्तोक्तत्वलक्षणगुणरूपप्रामाण्यकारणाभावेनेत्यर्थः । पौरुषेयत्वे 'अविप्रलम्भस्तज्ज्ञानमि'ति वक्ष्यमाणदिशाऽऽस्यसंभवात् इति भावः ॥ 'अप्रामाण्यं तथाऽन्यत' इत्येतद्व्यावर्त्यमाह **स्वत इति** । गुणमनपेक्ष्य ज्ञानजनकादेव प्रामाण्यजन्माङ्गीकार इत्यर्थः ॥ **अर्थसंस्पर्शशून्यत्वादिति** । एतच्च

प्रत्यक्षवच्चेत्यत्र व्यक्तीकरिष्याम इति भावः । 'शक्तिश्चैवान्विते स्वार्थे' इत्यादिना अतःपदस्यान्विताभिधायकत्वादिति व्याख्या क्रियते । तद्व्यावर्त्यमाह **वाक्यार्थेति** । एतदपि शक्तिश्चैवान्विते स्वार्थ इत्येतदवतारिकायां व्यक्तीभविष्यति ।

**यादु०— पारतन्त्र्याच्चेति** । वेदसंवादाधीनप्रामाण्यनिश्चायकत्वादित्यर्थः । **पौरुषेयत्वापौरुषेयत्वयोरिति** । पौरुषेयत्वे आप्तिनिश्चायकत्वाभावेन अपौरुषेयत्वे आप्तस्यैवाभावेनाप्तोक्तत्वरूपगुणलक्षणकारणाभावेनेत्यर्थः । **शाक्यादिवचसां** बौद्धादिवचसाम् । **संस्पर्शः** संबन्धः । शब्दस्यार्थेन संयोगसमवाययोरसंभवादन्यस्य चासंबन्धत्वादिति भावः । **वाक्यार्थेति** । पदानामर्थ इव वाक्यार्थेऽपि शक्त्याद्यभावादिति भावः ।

**वं०प०**— नाद्य इत्याह **अन्यस्यानाशङ्कनीयत्वादिति** । द्वितीये त्वाह **पारतन्त्र्याच्चेति** । तस्य वेदमूलकप्रमाणकत्वादिति भावः ।

**आनन्दः**— ननु सिद्धार्थपरादपि वाक्यादर्थबोधस्य दृष्टत्वात्सिद्धपरत्वमित्यत्राह **किञ्चेति** । **अन्यस्य** स्मृत्यादेः । **पारतन्त्र्यादिति** । मूलभूतप्रमाणसापेक्षत्वेन परतन्त्रत्वादित्यर्थः । ततः किमत्राह **वेदस्येति** । **कारणाभावेनेति** । आप्तोक्तत्वरूपगुणाभावेनेत्यर्थः । पौरुषेयत्वेऽपि मूलभूतपुरुषस्याप्त्यनिश्चयादिति भावः । **अर्थसंस्पर्शेति** । अर्थसंबन्धेत्यर्थः । ननु पदार्थबोधस्य जायमानत्वेन कथं तत्संबन्धशून्यत्वमत्राह **वाक्यार्थेति** । केन साधनेन कीदृशो भवतीति प्रकारानिरूपणादित्यर्थः ।

**कं०रा०— अर्थेति** । ज्ञापकस्य ज्ञाप्येन संबन्धो वक्तव्यः । प्रत्यक्षादौ तथा दर्शनात् । असन्निकृष्टज्ञापनेऽतिप्रसङ्गाच्च । प्रकृते च शब्दस्यार्थेन संयोगादिरूपसंबन्धाभावात् तत्प्रतीतिजनकत्वमेव न संभवतीति प्रामाण्यं दुर्घटमिति भावः । **वाक्यार्थेति** । वर्णपदपदार्थतदनुभवस्मृतीनां प्रत्येकं समुदितानां वा वाक्यार्थप्रत्ययकारणत्वायोगेन तत्प्रत्ययोपायस्य निरूपयितुमशक्यत्वाच्चेत्यर्थः ।

**श्रीनिधि०— अनाशङ्कनीयत्वादिति** । दोषशङ्काकलङ्कितत्वेनेति भावः । **पारतन्त्र्यादिति** । वेदप्रामाण्याधीनप्रामाण्यकत्वादिति भावः । **कारणाभावेन** । प्रामाण्यकारणाभावेन यथार्थज्ञानलक्षणगुणाभावेनेत्यर्थः । अपौरुषेयत्वे यथार्थज्ञानपूर्वकत्वमेव नास्ति पौरुषेयत्वे तु तत्र यथार्थत्वसन्देहेन प्रामाण्यकारणसन्देहात् प्रामाण्यनिश्चयो दुर्लभ इत्यर्थः । **अर्थसंस्पर्शशून्यत्वादिति** । अर्थसंस्पर्शः संयोगादिरूपः । उभयोरद्रव्यत्वान्न संयोगः । अयुतसिद्ध्यभावान्न समवायः । स्वरूपसंबन्धाङ्गीकारे चातिप्रसङ्ग इति भावः । **वाक्यार्थप्रत्यायनेति** । **प्रत्यायनं** ज्ञापनम् । वाक्यस्फोटस्य ज्ञानस्य वा ज्ञातस्य वा प्रत्यायकत्वम् । न द्वितीयः । अतिप्रसङ्गात् । प्रथमे किं एकेन पदेन ज्ञानं सर्वैः पदैर्वा । नाद्यः पदान्तरवैयर्थ्यात् । न द्वितीयः । सर्वेषां मेलनाभावात् विशेषतः योग्येतरान्विते शक्तिरिति पक्षे पदान्तरवैयर्थ्यम् । अनन्विताभिधानपक्षे न संसर्गलाभ इत्यादि 'शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयत' इत्यत्र वक्ष्यमाणप्रकारेणेत्यर्थः ।

**वा०चं०**— एवं सामान्यत आगमनिराकरणमुखेनानुग्राह्यप्रमाणाभावपूर्वपक्षमुपपाद्य ननु नागमस्य कार्यनिष्ठत्वं व्युत्पत्तिग्राहकव्यवहारादेः सिद्धविषयत्वादित्यतः 'स्वत एवागमस्य हि मिथ्याज्ञप्ति' इत्याद्यनुव्याख्यान-प्रतिपादितार्थकातःशब्दनिवर्त्यं विशेषतोऽप्यागमनिराकरणेनानुग्राह्यप्रमाणाभावपूर्वपक्षं दर्शयति **किञ्चेति** । अन्यस्योदासीनलौकिकवाक्यस्य भिन्नविषयत्वेन विरोधिपाशुपतादेर्विपरीतविषयत्वेनैतदनुग्राह्यत्वेनानाशङ्कनीय-त्वात्समानविषयकपञ्चरात्रादेस्तु मूलभूतवेदपरतन्त्रत्वेन स्वतोऽनुग्राह्यत्वासंभवान्नान्यसंभावनेत्याह **अन्यस्येति** ॥ **कारणाभावेनेति** । पौरुषेयत्वे निश्चायकाभावेनाप्तिरूपविशेषणाभावेन अपौरुषेयत्वे च विशेष्याभावेनाप्तवक्तृकत्व-गुणरूपकारणाभावेनेत्यर्थः । ननु प्रामाण्यस्य स्वतस्त्वेन गुणाजन्यत्वात्तदभावेऽपि प्रामाण्यं युक्तमित्यतो विशिष्य प्रामाण्यस्वतस्त्वप्रतिपादकातःशब्दसूचिता प्रामाण्यस्वतस्त्ववत् अतःशब्देन साक्षादभिहिता वा 'अप्रामाण्यं तथाऽन्यत' इत्यनुव्याख्यानप्रतिपादिता वा अप्रामाण्यपरतस्त्वरूपा या युक्तिस्तन्निवर्त्यां युक्तिमाह **स्वत इति** । ननु शाक्यादिवचसां प्रामाण्येऽपि वेदस्यानुग्राह्यप्रमाणत्वाभावरूपप्रकृतस्य न सिद्धिरित्यतः शाक्यादिवाक्यप्रामाण्यस्य वेदप्रामाण्यविघातकत्वात्प्रकृतसिद्धिरित्याह **तथात्वापातेन पुनरिति** । ननु प्रामाण्यस्य स्वतस्त्वादप्रामाण्यस्य च परतस्त्वान्नेदं दूषणं युक्तमित्यतो माऽस्त्वनेन प्रकारेण वेदस्यानुग्राह्यप्रमाणत्वाभावसिद्धिः कैमुत्येन तु स सिद्ध्यत्येवेत्यभिप्रेत्य 'प्रत्यक्षवच्च प्रामाण्यं' 'शक्तिश्चैवान्विते स्वार्थे' इत्यनुव्याख्याव्युत्पादितार्थकातःशब्दनिवर्त्यं पूर्वपक्षमाह **किञ्चेति** । अत्र यद्यपि प्रथमभाविप्रत्यक्षवच्चेत्यनुव्याख्याननिरसनीयैतत्पूर्वपक्षानन्तरभावित्वं स्वत एवागमस्य हि मिथ्याज्ञप्तीत्युत्तरानुव्याख्यानिरसनीयपूर्वपक्षस्य युक्तम् । तथाऽपि शक्तिश्चैवान्विते स्वार्थ इति पूर्वोत्तरभाव्यनुव्याख्यानेनापि निरसनीयत्वाद्धेतुद्वयसिद्धत्वेन प्रबलत्वाच्चास्य पूर्वपक्षस्य सर्वान्तिमतेति द्रष्टव्यम् । **अर्थसंस्पर्शशून्यत्वादिति** । अत्रार्थशून्यत्वात् संस्पर्शशून्यत्वात् इति हेतुद्वयं विवक्षितम् । संस्पर्शश्च सन्निधानादर्थेन एव । एवं च वक्ष्यमाणो विषयाभावरूपो हेतुरप्यनेन सङ्गृहीतो भवति । उपलक्षणं चैतत् अविज्ञानात्मकत्वादीनाम् । अपरोक्षविषयस्य प्रत्यक्षसिद्धत्वात्परोक्षस्य अनुमानवेद्यत्वाच्छब्दार्थयोर्वक्ष्यमाणरीत्या तादात्म्यसंयोगसमवाया-नामसंभवाद्धेतुद्वयसिद्धिरिति द्रष्टव्यम् । **वाक्यार्थेति** । वर्णपदपदार्थतदनुभवस्मृतीनां प्रत्येकं समुदितानां चोपाय-त्वासंभवादिति भावः ।

**वा०र०**— अन्यस्य अनाशङ्कनीयत्वादित्यत्रत्यान्यस्येति पारतन्त्र्याच्चेत्यत्रापि संबध्यते । तथाच अन्यस्येति द्वयं लभ्यते । तच्च भिन्नविषयमिति दर्शयन् प्रथमान्यपदार्थं च दुरागमास्तदन्ये ये इत्येतत् तत्त्वनिर्णयटीकायामन्ये तद्विरुद्धास्तदुदासीनाश्चेत्युक्तिं सर्वशाखाधिकरणस्थततःपरमित्यनुव्याख्यानमूलगततद्विरुद्धं तदुदासीनं चेत्युक्तिं च मनसि कृत्वा द्वेधा दर्शयन्नेव व्याख्याति **अन्यस्य उदासीनेति** । अन्यशब्दस्यास्य राज्ञोऽयमन्य इत्यादौ समानेऽपि प्रयोगमाश्रित्य समानविषयकेति व्याख्यातम् । संभावनेत्यनेन प्रमाणत्वेन निषेधो न क्रियते । उत्कटैककोटिकसंशयरूपसंभावनापदार्थानङ्गीकारात् । अपि तु संभावितः प्रतिज्ञाया इत्यादाविव भवितुं युक्तत्व-मात्रम् । असंभावनया अपवादानर्हत्वमिति यावदिति सूचयति । **विशेष्याभावेनेति** । वक्त्रुपेतत्वरूपविशेष्याभावेन इत्यर्थः । **गुणरूपेति** । मूलस्थं कारणपदं प्रामाण्यकारणगुणपरमिति व्याख्यातमनेन । सूचितेत्यादेर्या युक्तिरिति

वक्ष्यमाणेनान्वयः। अत्र प्रकरणे उत्तरानुव्याख्यानकीर्तनस्थले तद्व्याख्यानपरोत्तरमूलानुसारेण तदर्थो ज्ञातव्यः। प्रकृतस्य न सिद्धिरिति। तथा चेष्टापादनमेतदिति सूचितं मूले। पुनर्वेदेत्युक्त्या प्रामाण्यकारणाभावेऽपि स्वतःप्रामाण्यसिद्ध्यङ्गीकारे वेदविरुद्धशाक्यादिवचनानामपि प्रामाण्यापत्त्या विरुद्धयोर्द्वयोरपि च तदयोगेन तथात्वे वा शाक्यादिविरोधेन वेदस्याप्रामाण्यमायातीति स्वतःप्रामाण्यग्रहस्य अनङ्गीकर्तव्यत्वात्। वेदप्रामाण्याभावे चानुग्राह्य-प्रमाणाभावरूपप्रकृतसिद्धिर्भवत्येवेति सूचितमित्याह **शाक्यादिवाक्येति**। बौद्धादिवाक्येत्यर्थः। प्रामाण्यस्य च परतस्त्वादिति पाठः। चशब्दाभावे वा तदर्थान्तर्भाविन व्याख्येयम्। **नेदमिति**। स्वतःप्रामाण्येन वेदप्रामाण्यसिद्धावपि शाक्यादिवाक्ये बाधकादप्रामाण्यं युक्तमिति भावः। कुतस्तद्विशेषस्येति वक्ष्यमाणमभिप्रेत्योक्तं **कैमुत्येनेति**। **स सिद्ध्यत्येवेति**। प्रमाणत्वाभावसिद्धिरित्यत्रत्यप्रमाणत्वाभावः। बुद्ध्या विवेकेन स इति परामृश्यत इति ज्ञेयम्। **निरसनीयपूर्वपक्षस्येति**। किञ्चागमोऽपि भवन्नित्युक्तपूर्वपक्षस्येत्यर्थः। **हेतुद्वयेति**। **संस्पर्शशून्य-त्वादितीति**। शून्यत्वाच्चेतीति चशब्दार्थो योज्यः। **वक्ष्यमाण इति**। प्रत्यक्षवच्चेत्युत्तरानुव्याख्यानावतारे वक्ष्यमाण इत्यर्थः। हेतुद्वयानङ्गीकारे अर्थसंबन्धशून्यत्वरूपवक्ष्यमाणहेतोरेवाभिधानं कृतमिति सङ्कोचो विज्ञायेत। न च अर्थलाभसंभवे तदाश्रयणमुचितमिति भावः। वक्ष्यमाणहेत्वन्तरसङ्ग्रहायाह **उपलक्षणं चैतदिति**। धूमज्ञानादे-र्विज्ञानात्मकस्यैव प्रमाणतादृष्टेरित्याद्याशयः। अर्थशून्यत्वादिति हेतुद्वयासिद्धिं वक्ष्यमाणरीत्या सङ्क्षेपेण परिहरति **अपरोक्षेति**। कर्मधारयोऽयम्। **अनुमानेति**। अन्यस्य च विषयस्याभावादित्यपि ज्ञेयम्। **वक्ष्यमाणरीत्येति**। शब्दार्थयोस्तादात्म्याभ्युपगमे वह्न्यादिशब्दोच्चारणे मुखदाहादिप्रसङ्गाद्वर्तमानशब्दस्यातीतार्थाद्यभेदेनातीतत्वाद्यापत्ते-श्चेत्यादिकमुपपादयिष्यत इति भावः। असंभवादित्येतत्तदसंभवाच्चेति योज्यम्। ननु परोक्षमेव विषयं स्वीकृत्यानुमानेन तत्सिद्ध्या निराकरणस्य च शब्देन तत्सिद्ध्या अनुमाननिरासापादकत्वेनायोगं चाश्रित्य शक्तेरेव च संबन्धतामाश्रित्य दोषद्वयपरिहारः संभवतीत्यरुचेराह **वाक्यार्थेति** मूलम्। तदभिप्रायमाह **वर्णपदेत्यादि**। वक्ष्यमाणरीत्येति शेषः। शब्दमात्रप्रामाण्यानुपपत्तिकथनफलमाह **कुतस्तदिति** मूलम्।

**स०व्र०— अन्यस्येति**। पुरुषवचसां सदोषत्वात्तन्मूलत्वेन वेदस्याभ्युपेयत्वाच्चेत्यर्थः। यद्वा वेदातिरिक्तमनुग्राह्यप्रमाणं भवत्तद्विरोधि शैवपुराणादिकं वा तदनुकूलपञ्चरात्रादिकं वा। नाद्य इत्याह **अन्यस्येति**। अन्त्ये च आह **पारतन्त्र्याच्चेति**। तस्य वेदमूलकत्वादिति भावः। वेदस्यापि पौरुषेयत्वे विप्रलम्भादिशङ्का-कलङ्कितत्वादपौरुषेयत्वे प्रामाण्यकारणगुणाभावादप्रामाण्यमित्याह **वेदस्येति**। **स्वत इति**। उभयोर्विरुद्धयोः प्रामाण्यायोगादिति भावः। **अर्थसंस्पर्शेति**। परोक्षस्यानुमानवेद्यत्वादपरोक्षस्य च प्रत्यक्षवेद्यत्वादर्थस्यासत्त्वात् तत्सद्भावेऽपि तेन तादात्म्यादिसंबन्धशून्यत्वादित्यर्थः।

**कुण्डल०—** नन्वाप्तप्रमाणत्वेन प्रमाणं भविष्यति पौरुषेय इत्यत आह **पारतन्त्र्याच्चेति**। संवादादि-सापेक्षत्वादिना पारतन्त्र्याच्चेत्यर्थः। पौरुषेयत्वापौरुषेयत्वयोरिति वेदस्य पौरुषेयत्वे तत्प्रणेतुर्भ्रान्त्यादिसंभवेन वक्तृवाक्यार्थयथार्थज्ञानरूपस्य प्रामाण्यकारणस्यानिश्चयेन, अपौरुषेयत्वे तूक्तस्याप्रामाण्यकारणस्य सुतरामभावेन वेदस्य प्रामाण्यमेव दुर्लभमित्यर्थः। **शाक्यादीति**। बौद्धादीत्यर्थः। **वेदाप्रामाण्येति**। स्वतःप्रमाणबौद्धवचोभिः





वेदाप्रामाण्यस्यावेदनादिति भावः। **अर्थसंस्पर्शेति**। ज्ञापकस्य ज्ञाप्येन सह संबन्धो वाच्यः। प्रत्यक्षादौ तथा दर्शनात् प्रकृते च शब्दस्यार्थेन सह संयोगादेरभावाद्वर्णपदपदार्थतदनुभवस्मृतीनां प्रत्येकं समुदितानां वाक्यार्थप्रत्यय-कारणत्वायोगेन तत्प्रत्ययोपायस्य निरूपयितुमशक्यत्वाच्च शब्दस्यैव प्रामाण्यं दुर्घटमित्यर्थः।

**विठ्ठ०— अन्यस्यानाशङ्कनीयत्वादिति**। पुरा वेदमीमांसायां प्रवृत्तेः पुराणादेः ब्रह्मणि प्रमाणतया अनाशङ्कनीयत्वात् वेदाधीनप्रामाण्यतया स्वातन्त्र्येणार्थप्रमापकत्वायोगाच्चेत्यर्थः। **पौरुषेयत्वेति**। आगमप्रामाण्यं प्रति आप्तोक्तत्वलक्षणगुणस्यैव कारणत्वेन पौरुषेयत्वे कर्तुराप्तिनिश्चयाभावेन अपौरुषेये तत्प्रसक्तेरेवाभावात् कारणाभावेन प्रामाण्यं दुर्लभमित्यर्थः। **शाक्यादिवचसां** बौद्धजैनादिवचसामित्यर्थः। **संस्पर्शः** संबन्धः। शब्दस्यार्थेन तादात्म्यसंयोगसमवायानामभावात् अन्यस्य संबन्धत्वानङ्गीकारादिति भावः। **वाक्यार्थेति**। पदानां प्रत्येकं अप्रत्यायकत्वात् आशुतरविनाशिनां तेषां मेलनासंभवात् स्फोटस्य चाप्रामाणिकत्वादिति भावः।

**चषकः— कारणाभावेनेति**। पौरुषेयत्वे आप्तोक्तत्वघटकाप्तत्वाभावनिबन्धन अपौरुषेयत्वे च तादृशोक्तत्वाभावनिबन्धनो गुणाभाव इत्याशयः। **शाक्यादिवचसां** बुद्धादिवचसाम्।

**गूढ०**— ननु सिद्धपरादपि वाक्यादर्थबोधस्य दृष्टत्वात् सिद्धपरत्वमत्राह **किञ्चेति**। **अन्यस्य** स्मृत्यादेः। **पारतन्त्र्यादिति**। मूलभूतप्रमाणसापेक्षत्वेन परतन्त्रत्वादित्यर्थः। ततः किमत्राह **वेदस्येति**। **कारणाभावेनेति**। आप्तोक्तत्वरूपगुणाभावेनेत्यर्थः। पौरुषेयत्वेऽपि मूलभूतपुरुषस्याप्त्यनिश्चयादिति भावः। **अर्थसंस्पर्शेति**। अर्थसंबन्धेत्यर्थः। ननु पदार्थबोधस्य जायमानत्वेन कथं तत्संबन्धशून्यत्वमत्राह **वाक्यार्थेति**। केन साधनेन कीदृशो भवतीति प्रकारानिरूपणादित्यर्थः।

**प्रयोजनतत्संबन्धाभावशङ्का—**

**१३० सु०— प्रयोजनं चेश्वरजिज्ञासाया अभ्युदयो वा स्यात् मोक्षो वा। नाद्यः। तस्य धर्मादिलघूपायसाध्यस्य शास्त्रान्तरप्रयोजनत्वात्। न द्वितीयः। तस्यापि 'अपाम सोमम्' इत्याद्यागमेन लघूपायान्तरसाध्यतावगमात्। न चैकस्यैव कर्मणोऽभ्युदयनिःश्रेयसहेतुत्वं विरुद्धम्। फलाभिसन्ध्यादिभावाभावाभ्यां विशेषोपपत्तेः।**

**बिन्दुः— शास्त्रान्तरेति**। कर्मकाण्डादीत्यर्थः। **कुतस्तरामिति**। यद्यपि कुत इति काङ्क्षा नास्तीत्याक्षिप्यते, ततश्चाभावे तारतम्याभावान्न तरप्तमपौ संभवतः। तथापि फलस्य प्रसादनिरपेक्षत्वेन निश्चितेन साधनसापेक्षतायां संभावनापि नावतरतीति तज्ज्ञाने अप्रामाण्यशङ्काशून्यत्वरूपप्रकर्षो विषयेऽप्युपचर्यत इति ध्येयम्। **न च सत्यस्येति**। बन्धो न निवर्तते सत्यत्वात् अनादित्वात्

जीवस्वभावत्वात् आत्मस्वरूपवदिति प्रत्येकमनुमानानि । मोक्षो नाम नास्त्येव स्वर्गनरकावेव पारत्रिकं फलमिति मन्वानस्य मते संसारित्वं जीवस्वभाव एवेत्यङ्गीकारान्नासिद्धिः । वाद्यसिद्धिस्तु वर्तत एव ।

**परि०**— एवं विषयाभावमुपपाद्य यच्च 'ज्ञानी प्रियतमोऽतो मे' इत्यादिना अतःपदस्य मोक्षहेतुप्रसादजनकज्ञानजनकत्वादिति व्याख्यानान्तरं तद्व्यावर्त्यप्रयोजनाभावे हेतुं व्यनक्ति **प्रयोजनं चेत्यादिना** । यद्यपीदं मूलकृत्करिष्यमाणव्याख्यानक्रमानुरोधेन किञ्चेश्वरं इत्यादितः पूर्वं वक्तव्यं तथाऽप्यतःपदस्य पश्चात्करिष्यमाणव्याख्यानत्रयव्यावर्त्यत्रयस्यापि ॐब्रह्मपदव्यावर्त्यविषयाभावोपपादकत्वेन तत्संबद्धत्वात्तद्व्याख्यानत्रयव्यावर्त्यं किञ्चेश्वर इत्यादिना पूर्वमुक्त्वेदं पश्चादुक्तमित्यदोषः ॥ **शास्त्रान्तरेति** । धर्मादिस्वरूपप्रतिपादककर्मतन्त्रप्रयोजनत्वादित्यर्थः ॥ **अपामेति** । 'अपाम सोमममृता अभूम' इति सोमपानस्यामृतशब्दितमुक्तिहेतुत्वश्रवणादिति भावः ॥ **फलाभिसन्धीति** । यथैकमेवान्नमनुपानभेदात् पथ्यमपथ्यं तथैवेत्यर्थः । 'निष्कामं ज्ञानपूर्वं तु निवृत्तमिह चोच्यते । निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम्' इत्युक्तेरिति भावः ॥

**वं०प०**— **अभ्युदयः** स्वर्गादिः ।

**आनन्दः**— एवं विषयं निराकृत्य प्रयोजनं निराकरोति **प्रयोजनं चेति** । **फलाभिसन्धीति** । फलाभिसन्धौ सत्यभ्युदयहेतुत्वं तदभावे तु निःश्रेयसहेतुत्वमित्यर्थः ।

**श्रीनिधि०**— **अभ्युदयः** दुःखशिरस्कं सुखं तत्साधनं वा ।

**वा०चं०**— एवं विषयतत्संबन्धोपपादकहेतुसमर्पकोंब्रह्मातःशब्दनिवर्त्यं पूर्वपक्षमुपपाद्य प्रयोजनोपपादकहेतुसमर्पकातःशब्दनिवर्त्यं पूर्वपक्षमुपपादयति **प्रयोजनं चेत्यादिना** । अत्राभ्युदयशब्देन स्वर्गादिकमणिमाद्यैश्वर्यं च गृह्यते । धर्मादीत्यत्रादिशब्देन योगः शास्त्रान्तरं धर्ममीमांसा योगशास्त्रं चेति द्रष्टव्यम् । अत्र 'जिज्ञासोत्थज्ञानजात्तत्प्रसादादेव मुच्यत' इत्यतःशब्दार्थकथनपरानुव्याख्याने मुच्यत इत्युक्तेर्व्यावर्त्यत्वेनाभ्युदयपक्षमुद्भाव्य तद्दूषणं तस्मिन्नेवानुव्याख्यानेऽभिप्रेतं यज्जिज्ञासाया मोक्षं प्रत्यवधारणं तद्व्यावर्त्यत्वेन मोक्षस्योपायान्तरसाध्यत्ववर्णनं तद्वाक्योक्तज्ञानप्रसादघटितपरम्पराव्यावर्त्यतया जिज्ञासाज्ञानयोः साक्षान्मोक्षसाधनत्वे दृष्टादृष्टत्यागकल्पनाप्रसञ्जनं तद्वाक्याभिप्रेतेन ज्ञानप्रसादौ प्रति जिज्ञासाज्ञानयोः साधनत्वावधारणेन व्यावर्त्यतया ज्ञानप्रसादयोर्लघूपायान्तरसाध्यत्वकथनं ज्ञानप्रसादान्तरालीकतया तद्वाक्याभिप्रेतभक्त्युक्तिव्यावर्त्यतया ज्ञानस्य प्रसादे हेतुतायाः क्वाप्यदृष्टत्वकथनं चेति ज्ञातव्यम् । नन्वभ्युदयरूपस्वर्गसाधनतया श्रुतसोमयागस्यापाम सोममित्यादिवाक्यबलेन मोक्षसाधनत्वाभ्युपगमे शरीरेन्द्रियविषयादिसंसर्गेण जायमानानागतदुःखाविरोध्यल्पास्थिरसुखरूपाभ्युदयस्य शरीरादिविनिर्मोकेनाभिव्यज्यमानानागतदुःखविरोधिबहुस्थिरसुखरूपमोक्षेण विरोधादेकजातीय-





साधनस्य विरुद्धोभयजनकत्वे एकमात्रोत्पत्तिदशायामपरमात्रोत्पत्तेः सामग्रीसद्भावेनैकोत्पत्तिदशायामुभयोत्पत्तेर्नैकस्याप्युत्पत्तेर्वा आपातेन व्याघात इति शङ्कते **न चेति**। सहकारिवशादेकस्यापि विरुद्धकार्यजनकत्वमुपपन्नमित्याह **फलेति**। आदिपदेन हरौ समर्पितत्वादिपरिग्रहः।

**वा०र०— विषयतत्संबन्धेति**। विषयोपपादकावोङ्कारब्रह्मशब्दौ तत्संबन्धोपपादको यो हेतुस्तत्समर्पकोऽतःशब्दः एतन्निवर्त्यम्। एकवचनं समुदायापेक्षम्। निवर्त्यान् पूर्वपक्षानित्यर्थः। **तत्संबन्धः**। शास्त्रस्य विषयसंबन्धः। **पूर्वपक्षमुपपादयतीति**। प्रयोजनवैधुर्यहेतोरसिद्धिशङ्कापरिहारायेति शेषः। यद्यप्यथात इत्यधिकारिसमर्पकाथशब्दप्रयोगस्य प्राथम्यं तथापि प्रयोजनाभावोक्त्याधिकार्यलाभवत् अधिकार्यभावोक्त्या प्रयोजनाभावसिद्धेरभाव इति लाघवं प्रागुक्तरीत्या मनसि कृत्वा प्रयोजनाक्षेप एव पूर्वदर्शित इति ज्ञेयम्। प्रयोजनं चेत्यारभ्य अल्पोपायसाध्यताप्रतीतेश्चेत्यन्तं मूलं हि जिज्ञासोत्थेत्युत्तरानुव्याख्यानं व्यावर्त्यशङ्काप्रदर्शनम्। तत्र विवेको न प्रतीयते। किं व्यावर्त्यकाशङ्केति। ततस्तद्विवेचयति **अत्र जिज्ञासेति**। अभ्युदयपक्षस्यानङ्गीकारपराहतत्वं सूचयितुं इहैव तद्दूषणं च कृतमित्याह **तद्दूषणमिति**। अन्यथोपायान्तरसाध्यत्ववर्णनमित्याद्युत्तरत्रेव शङ्कामात्रविषयानुवादायाभ्युदयपक्षोद्भावनमित्येवोच्येत। दूषणवर्णनमित्यादीनामिति ज्ञातव्यमित्युत्तरेण संबन्धः। **अवधारणमिति**। जिज्ञासयैव मोक्ष इत्यवधारणमित्यर्थः। **ज्ञानप्रसादघटितेति**। जिज्ञासाया ज्ञानघटिता ज्ञानस्य च प्रसादघटिता परम्परेति योज्यम्। जिज्ञासाज्ञानयोरित्यत्रापि प्रत्येकं मोक्षसाधनत्व इत्यनेन संबन्धः। एवं ज्ञानप्रसादावित्यादावपि ज्ञानं प्रति जिज्ञासायाः प्रसादं प्रति ज्ञानस्येति योज्यम्। **प्रसादान्तरालीकतयेति**। यद्यपि प्रसादस्य लघूपायान्तरसाध्यत्वाशङ्कनात्पूर्वमेव मूले इदमस्ति तथाप्युक्तिलाघवाय जिज्ञासाज्ञानयोरित्यादिरूपेण सङ्गृह्य कथनात्तत्रैकमात्रदूषणस्य निवेशायोगादवसरतोऽन्ते तदभिधानमिति न दोष इति ज्ञेयम्। **तस्याप्यपामेति**। न चात्र श्रुतममृतत्वं बहुकालावस्थायित्वमात्रमिति न मोक्षहेतुत्वलाभ इति वाच्यम्। मुख्यार्थे बाधकाभावे गौणार्थस्वीकारानुपपत्तेरित्यत्र तात्पर्यात्। **स्वर्गसाधनतया श्रुतेति**। दर्शपूर्णमासाभ्यां इष्ट्वा सोमेन यजेतेत्यत्र स्वर्गकामपदस्य विश्वजिन्न्यायेन वा ज्योतिष्टोमेन स्वर्गकाम इति फलसंबन्धवाक्याद्वा सत्त्वात्तस्य तथा श्रवणमिति भावः। साधनताभ्युपगमे एकजातीयसाधनस्य विरुद्धोभयजनकत्व इत्युत्तरेण संबन्धः। मोक्षसाधनताभ्युपगमे विरुद्धोभयजनकत्वमायाति। तथा चैकमात्रेष्विति योजना। कुतः कार्यद्वयविरुद्धमित्यत उभयस्वरूपपरस्परव्यावृत्तधर्मवत्तया प्रतिपादितं **शरीरेन्द्रियेत्यादिना**। एकजातीयेति वदता एकस्यैवेति मूलमेकजातीयस्यैवेति व्याख्येयमिति सूचितम्। कर्मव्यक्तिभेदस्य परेणाप्यङ्गीकृतत्वादिति ज्ञेयम्। **एकमात्रोत्पत्तिदशायामिति**। यदा एकस्यैव कार्योत्पत्त्या भवितव्यं तदा तत्परित्यागेनापरस्य तद्विरुद्धस्यैवोत्पत्तेरापातेन व्याघात इति संबन्धः। तत्र हेतुः **सामग्रीसद्भावेनेति**। यदैकमात्रसामग्रीसद्भावेनैकमेव कार्यमिति वाच्यम्। तदा तत्सामग्र्येव तद्विरुद्धस्यापरस्य सामग्रीति तादृशापरमात्रसामग्र्याः सत्त्वादित्यर्थः। ततश्चाभिमतकार्याभावापत्तिरूपो मूलस्थविरोधपदेनोक्तो व्याघात इत्यर्थः। नन्वेकैवोभयोरपि सामग्री चेदेकोत्पत्तिदशायामपरोत्पत्तिप्रसङ्गेऽपि नाभिमतानुत्पत्तिप्रसङ्ग इत्यतस्तर्हि स एव दोषोऽस्त्वित्याह **एकोत्पत्तीति**। अत्राप्यापातेन व्याघात इति संबन्धः। एकदोक्तविरुद्धकार्यद्वयसमावेशस्तु





व्याहत इति स्पष्टमेव । अङ्गीकृत्य चेदमुक्तम् । वस्तुतस्तु विरोधान्नैकमपि कार्यं भवितुमर्हतीत्याह **नैकस्यापीति** । अत्रैकस्यापि नोत्पत्तिरिति संबन्धः । तथाच कारणत्वस्य स्वरूपेणैवाभावरूपो व्याघात इत्यर्थः । **उपपन्नमिति** । दावदग्धवेत्रबीजादौ कदलीकाण्डजनकत्वदर्शनेन विरोधाभावादिति भावः ।

**स०व्र०— तस्यापीति** । न च स्थायित्वमात्रममृतशब्दार्थः । मुख्यार्थे बाधकाभावादिति भावः ।

**कुण्डल०— शास्त्रान्तरेति** । कर्ममीमांसालक्षणेत्यर्थः । **अपामेति** । 'अपाम सोमममृता अभूम' 'अगन्म ज्योतिरविदाम देवानि'त्याद्यागमेनेत्यर्थः । **फलाभिसन्धीति** । 'निष्कामं ज्ञानपूर्वं तु निवृत्तमिति चोच्यते । निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनमि'त्यादिस्मृतेरिति भावः ।

**विठ्ठ०— अभ्युदयः** स्वर्गादिकमणिमाद्यैश्वर्यं वा । **धर्मादी**त्यनेन योगो गृह्यते । **शास्त्रं** धर्ममीमांसा-योगशास्त्रम् । **अभिसन्धी**त्यादिपदेन हर्यर्पणादिग्रहणम् ।

**चषकः—** निष्प्रयोजनत्वहेतोः पक्षधर्मतां प्रतिपिपादयिषति **प्रयोजनं चेत्यादिना** । **शास्त्रान्तरम्** धर्ममीमांसादिकम् । **फलाभिसन्धिः** फलेच्छा ।

**गूढ०—** एवं विषयं निराकृत्य प्रयोजनं निराकरोति **प्रयोजनं चेति** । **फलाभिसन्धीति** । फलाभिसन्धौ सत्यभ्युदयहेतुत्वं तदभावे तु निःश्रेयसहेतुत्वमित्यर्थः ।

**१३१ सु०— जिज्ञासा च मोक्षसाधनं भवन्ती किं साक्षादुत ज्ञानद्वारेण । नाद्यः । दृष्टादृष्ट-त्यागकल्पनाप्रसङ्गात् । न द्वितीयः । 'कर्मणा ज्ञानमातनोती'त्याद्यागमेन ज्ञानस्य लघूपाया-न्तरसाध्यताध्यवसायात् । ज्ञानस्यापि साक्षान्मोक्षहेतुत्वाभ्युपगमेऽदृष्टकल्पनैव । न चेश्वर-प्रसादद्वारा । ज्ञानस्य प्रसादहेतुतायाः क्वाप्यदृष्टत्वात् । 'तत्कर्म हरितोषं यदि'त्यादिना तत्प्रसादस्य कर्माद्यल्पोपायसाध्यताप्रतीतेश्च ।**

**परि०— दृष्टेति** । लोके गान्धर्वादिशास्त्रविचारेण ज्ञानस्यैव तत्फलत्वेन दर्शनान्मोक्षस्य तत्त्वेनादर्शनात् दृष्टत्यागादृष्टकल्पनाप्रसङ्गादित्यर्थः ॥ **अदृष्टकल्पनैवेति** । लोके क्वाप्यदृष्टेः इति भावः । राजदर्शनस्य तत्प्रसादद्वारा निगडमोक्षहेतुत्वं दृष्टमित्यरुचेराह **तत्कर्मेति** । 'तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यये'त्येकादशस्कन्धोक्तेरित्यर्थः ।

**वं०प०— दृष्टादृष्टत्यागकल्पनेति** । जिज्ञासायाः साक्षान्मोक्षसाधनत्वे दृष्टत्यागः । 'आत्मा वा अरे द्रष्टव्य' इति श्रुतौ दर्शनार्थश्रवणादिरूपजिज्ञासाया विधानात् प्रमाणदृष्टस्यापरोक्षज्ञानसाधनत्वस्य त्यागः । यद्वा





इदमित्थमिति ज्ञानं जिज्ञासायाः प्रयोजनमित्युक्तरीत्या दृष्टस्याज्ञानसंशयविपर्ययनिवृत्तिद्वारा इदमिति निश्चय-रूपज्ञानसाधनत्वस्य त्यागः। अदृष्टस्य मोक्षसाधनत्वस्य कल्पनं कार्यम्। जिज्ञासायाः साक्षान्मोक्षसाधनत्वस्य प्रमाणादृष्टत्वादिति भावः।

**आनन्दः— दृष्टेति**। दृष्टज्ञानरूपफलत्यागः, अदृष्टजिज्ञासारूपफलकल्पनं च स्यादित्यर्थः। **अदृष्टेति**। प्रसादस्यैव मोक्षहेतुताया दृष्टत्वादित्यर्थः।

**कं०रा०— दृष्टेति**। विचारस्य विचार्यार्थतत्त्वज्ञानं प्रत्येव हेतुताया दृष्टत्वात्साक्षान्मोक्षहेतुत्वस्यादृष्टत्वाच्च दृष्टत्यागादृष्टकल्पनाप्रसङ्गादित्यर्थः। **अदृष्टेति**। लोके प्रभुप्रसादस्यैव निगडादिबन्धमोक्षहेतुत्वदर्शनेनादृष्टकल्पनेति भावः।

**श्रीनिधि०— दृष्टादृष्टेति**। **दृष्टं** ज्ञानम्। सत्यस्यापि घटादेर्निवृत्तिरस्तीत्यतः अनादेरित्युक्तम्।

**वा०र०**— मूले **दृष्टादृष्टेति**। जिज्ञासया ज्ञानोत्पत्तेर्दृष्टत्वान्मोक्षस्य चादृष्टत्वात् तत्त्यागादिकमित्यर्थः। ननु **कर्मणा ज्ञानमिति** वाक्यं कर्मणामन्तःकरणशुद्धिद्वारा ज्ञानाङ्गत्वपरतया सावकाशं निरवकाशप्रमाणसिद्धस्य ज्ञानजिज्ञासयोः साध्यसाधनभावस्य न बाधकमित्यतोऽङ्गीकृत्योक्तसाध्यसाधनभावं ज्ञानद्वारेणेत्युक्त्या लब्धं ज्ञानस्य मोक्षहेतुत्वं किं साक्षाद्वा परम्परया वेति विकल्पद्वयं मनसि कृत्वाद्यं दूषयति **ज्ञानस्येति**। **अदृष्टेति**। ज्ञानेन मोक्षस्यादृष्टेरिति भावः। द्वितीयमाशङ्कते **न चेति**। **अदृष्टत्वादिति**। तथा चादृष्टकल्पनैवेति भावः। राजदर्शनादे-स्तत्प्रसादहेतुतादर्शनान्नादृष्टकल्पनेत्यरुचेराह **तत्कर्मेति**। **इत्यादिने**त्यादिपदेन कर्मव्यतिरिक्तस्यप्रसादहेतुता-प्रतिपादकत्वेत्यादिवाक्यपरिग्रहः।

**स०व्र०— ज्ञानस्यापीति**। मोक्षस्य प्रसादसाध्यत्वावगमादित्यर्थः। प्रसादसाध्यत्वस्याप्यसंभवमाह **न चेति**।

**कुण्डल०— दृष्टेति**। विचारस्य विचार्यार्थतत्त्वनिश्चयहेतुत्वस्य दृष्टस्य त्यागः। अदृष्टस्य मोक्षहेतुत्वस्य च कल्पना च स्यादित्यर्थः। **अदृष्टकल्पनेनैवेति**। लोके राजप्रसादस्यैव निगडादिबन्धनिवृत्तिहेतुत्वदर्शनेन ज्ञानस्य तदभावाददृष्टकल्पनेत्यर्थः।

**विठ्ठ०— दृष्टादृष्टादि**। तमेवं विद्वानिति ज्ञानादेव मोक्षस्य दृष्टत्वात् जिज्ञासया मोक्षस्य कुत्राप्य-दृष्टत्वादित्यर्थः। **अदृष्टकल्पनैवेति**। ज्ञानिनां मोक्षदश्च स इत्युक्तिबलात् ज्ञानान्मोक्षाभिधायकतया प्रतीतस्यापि परम्परयैवेत्यभिप्रेतत्वादिति भावः।

**गूढ०— दृष्टेति**। दृष्टज्ञानरूपफलत्यागः, अदृष्टजिज्ञासारूपफलकल्पनं च स्यादित्यर्थः। **अदृष्टेति**। प्रसादस्यैव मोक्षहेतुताया दृष्टत्वादित्यर्थः।





**१३२ सु०— किञ्चायमात्माऽविद्याकल्पितो बन्धस्तद्विद्ययैव निवृत्तिमर्हति । शुक्तिकाऽविद्याकल्पितं रजतमिव शुक्तिविद्यया। तत्र (तत्) कुतो बन्धनिवृत्तिलक्षणे मोक्षे परमेश्वरप्रसादस्योपयोगः। कुतस्तरां तज्ज्ञानस्य कुतस्तमां च तज्जिज्ञासायाः ॥ अथ परमार्थ एवायं बन्धस्तर्हि न ज्ञानेन निवर्तेत । न च सत्यस्य अनादेरात्मस्वरूपमात्रानुबन्धिनो बन्धस्य आत्मस्वरूपस्येव केनापि निवृत्तिर्युक्ता ।**

**परि०**— यदप्यतःपदस्य बन्धसत्यत्वादिति व्याख्यानान्तरं 'इत्युक्तेर्बन्धमिथ्यात्वमि'त्यादिनोच्यते तद्व्यावर्त्यमाह **किञ्चायमिति**। सिद्धान्ती शङ्कते **अथ परमार्थ एवेति**। पूर्वपक्षी निराकरोति **न ज्ञानेन निवर्तेतेति**। तद्व्यनक्ति **न चेति**। एतच्च 'अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्च स' इत्येतद्व्यावर्त्यमिति ज्ञेयम् ।

**कं०रा०**— **आत्माऽविद्याकल्पितः** आत्मविषयाविद्याकल्पितः । **आत्मस्वरूपेति** । आत्मस्वरूपानुबन्धिनो बन्धस्य सादित्वे बन्धात्पूर्वमात्मनो मुक्तत्वापत्त्या बन्धस्यानादित्वमेष्टव्यमित्यनादित्वोपपादकमेतद्विशेषणम् ।

**श्रीनिधि०**— तादृशस्यापि प्रागभावस्य निवृत्तिरस्तीत्यतः **आत्मस्वरूपमात्रानुबन्धिनः** इत्युक्तम् । मात्रशब्देन औपाधिकं निवर्त्यते।

**वा०चं०**— जिज्ञासायाः साक्षान्मोक्षसाधनत्वासंभवमभिप्रेत्य ज्ञानप्रसादयोर्मध्ये निवेशे दूषणान्तरं 'अतो यथार्थबन्धस्य' इत्यनुव्याख्याव्याख्याताःतःशब्दनिवर्त्यं शङ्कते **किञ्चेति** । बन्धनिवृत्तिलक्षणे मोक्ष इत्युक्त्या स्वर्गादिवदनित्यत्वापातेन नाभ्युदयमात्रं मोक्षो येन प्रसादापेक्षा तत्र स्यादिति ध्वनितं भवति । तज्ज्ञानस्येत्युक्त्या विवक्षितभगवज्ज्ञानस्यैवायमाक्षेपो न तु ज्ञानमात्रस्य 'इति एवं दृष्टः स' इत्यस्य व्यावर्त्यकथनम् । अथ परमार्थ एवायमिति 'यथादृष्टे'त्यस्य । 'न च सत्यस्ये'त्यादि भगवानित्यस्येति द्रष्टव्यम् ।

**वा०र०**— अनेन कर्माद्यल्पेत्युत्तरानुगुण्यं भवति। तत्कर्मेत्यत्रोक्तः प्रसादोऽधमः स्वर्गादिसाधनम्। कर्मणा त्वधम इत्यादेः। मोक्षहेतुस्तु ज्ञानेनैव प्रसाद इति ज्ञानसार्थक्यमित्यपरितोषात् प्रवृत्तस्य किं चायमात्मेत्यादिग्रन्थस्य विषयं दर्शयति **जिज्ञासाया इति**। अभिप्रेत्येत्यत्र अदृष्टत्वादियुक्त्याङ्गीकृत्य तयोः श्रूयमाणसाध्यसाधनभावोपपादनाय स्वीकृतो यो ज्ञानप्रसादयोर्मध्ये निवेशस्तत्र दूषणान्तरमित्यर्थः। तत्राप्यदृष्टकल्पनाया उक्तत्वात् दूषणान्तरमित्युक्तम्। इत्यनुव्याख्यायां व्याख्यातो योऽतःशब्दस्तन्निवर्त्यं शङ्कत इत्यर्थः । अयमात्माविद्येत्यादेरुक्तस्योपयोगमाह **तत्रेति** मूलम्। तथा सतीत्यर्थः। बन्धस्य तद्विद्ययैव निवृत्तेः सत्त्वादित्यर्थः। **उपयोग इति**। रजतादिनिवृत्तौ तदभावादिति भावः। **प्रसादापेक्षा तत्रेति**। मोक्षार्थप्रसादापेक्षेत्यर्थः। **विवक्षितभगवदिति**। विवक्षितं यद्भगवज्ज्ञानं अपरो-





क्षज्ञानं तस्यैवायमाक्षेपो ज्ञानं व्यर्थमिति । न तु परोक्षज्ञानस्यापीत्यर्थः । **ज्ञानमात्रस्येतीति** । इत्यभिप्रायिकया तज्ज्ञानस्येत्युक्त्येति योज्यम् । इत्यस्येत्युत्तरद्वये व्यावर्त्यकथनमित्यनुवर्तते । **न ज्ञानेनेति** मूलम् । सत्यभृङ्खला-बन्धस्य ज्ञानान्निवृत्त्यदर्शनादिति भावः । ननु विपक्षे बाधकाभावाद्दर्शनादर्शनमात्रस्य नियमासाधकत्वाद्यत्सत्तन्न निवर्तत इति व्याप्त्यसिद्धिरित्यत आह **न च सत्यस्येति** मूलम् । सत्यस्यापि बन्धस्य निवृत्तौ सत्य आत्मापि निवर्तेतेत्येव विपक्षे बाधकमिति तदभावोऽसिद्धः । न चैतत्तर्के व्याप्त्यभावात् तदयोगः । विशेषव्याप्त्यभावेऽपि अविशेषलक्षणसामान्यव्याप्तिसंभवादित्याशयेनोक्तम् ।

**स०व्र०**— बन्धस्य मिथ्यात्वे सत्यत्वे वा न प्रसादसापेक्षतेत्याह **किञ्चायमिति** ।

**कुण्डल०— आत्माविद्येति** । आत्मविषयकाविद्येत्यर्थः । **आत्मस्वरूपेति** । प्रपञ्चविशेषणं बन्धस्य आदित्वोपपादनार्थं कारणसामग्रीतत्कारणपौष्कल्येत्यर्थः ।

**विठ्ठ०— अथेत्यस्य** यदीत्यर्थः । (न ज्ञानेनेत्यतः पूर्वं तर्हीति शेषः।)

**चषकः— आत्माविद्याकल्पितः** आत्मावरकाविद्याकल्पितः ।

**१३३ सु०— अपि च मुक्तस्य शरीरेन्द्रियविषयादिसंसर्गे मुक्तत्वव्याघातः । दुःखादि-प्रसङ्गश्च । कारणसामग्रीसद्भावात् । तथा चाभ्युदयतुल्यतयोक्तदोषः ॥ शरीराद्यभावे च तत्साध्यसुखाभावेन कस्यापि तत्रार्थितानुपपत्तेरनधिकारिकं शास्त्रमापद्येत । को हि स्वस्थात्मा सहसा सुखतत्साधने हातुमुत्सहते ।**

**परि०**— 'आनन्ददश्च मुक्तानामि'त्येतद्व्यावर्त्यमाह **अपि चेति** । अत्रानुव्याख्याने सौत्राथ-पदव्याख्यानस्याकृतत्वात्तद्व्यावर्त्यप्रपञ्चनमकृत्वा सङ्क्षिप्योपसंहरति **कस्यापि तत्रार्थितेत्यादि** ।

**वं०प०**— शास्त्रस्यानधिकारिकत्वं व्युत्पादयितुमाह **अपि चेति** । **कारणसामग्री** कारणसाकल्यम् । शरीरेन्द्रियविषयादिसंसर्गस्यैव दुःखादिकारणत्वादित्यर्थः । **अभ्युदयतुल्यतयेति** । स्वर्गवदनित्यत्वप्राप्त्योक्तदोषो मुक्तत्वव्याघात इत्यर्थः ।

**आनन्दः— कारणेति** । दुःखादिकारणेत्यर्थः । **उक्तदोषः** लघूपायसाध्यत्वेनैतच्छास्त्रवैयर्थ्यलक्षणोक्तदोष इत्यर्थः ।

**कं०रा०— उक्तदोष इति** । धर्मादिलघूपायसाध्यत्वेन शास्त्रान्तरप्रयोजनत्वमित्युक्तदोष इत्यर्थः ।

**श्रीनिधि०— कारणसामग्रीसद्भावात्** कारणपौष्कल्यसद्भावात् । **उक्तो दोषः** अभ्युदयस्य धर्मादि-लघूपायसाध्यस्य शास्त्रान्तरप्रयोजनत्वादित्युक्तो दोषः ।





**वा०चं०**— एवं प्रयोजनपरातःशब्दनिवर्त्यं पूर्वपक्षमुत्थाप्याधिकारिपराथशब्दनिवर्त्यं शिरःकराद्यभावश्चेत्यनुव्याख्याव्याख्यानेनान्यार्थं प्रवृत्तेनाप्यर्थान्निराकृतं पूर्वपक्षमुत्थापयति **अपि चेति**। अदोषः देहः स्वरूपात्मक एवेत्युक्तव्यावर्त्यकथनं मुक्तत्वव्याघातो दुःखादिप्रसङ्गश्चेति। **सामग्रीति**। समग्रस्य भावः सामग्री साकल्यमित्यर्थः। औचितीत्यादिवद्ब्राह्मणादित्वात् ष्यञ् षित्वात् ङीष्॥ **उक्तदोष इति**। नाद्यस्तस्य धर्मादीत्युक्तो दोष इत्यर्थः।

**वा०र०**— अनादेरात्मेत्याद्यधिकारिपराथशब्देति पाठः। **अनुव्याख्यानेनेति**। चतुर्थद्वितीयगतेति पूरणीयम्। **अन्यार्थं प्रवृत्तेनापीति**। सांख्याद्युक्तस्य सुखाभावोपपादकतया शरीरराहित्यस्यासिद्धिप्रतिपादनाय प्रवृत्तेनेत्यर्थः। **उत्थापयतीति**। अधिकारिवैधुर्यरूपहेत्वसिद्धिपरिहारायेति हृदयम्। **अदोष इत्यादि**। अदोष इत्युक्तव्यावर्त्यकथनं दुःखादिप्रसङ्गश्चेत्यादिरूपेण यथायोग्यं संबन्धः। मूले **मुक्तत्वेति**। शरीरादिसंसर्गस्यैव संसारत्वादिति भावः। शरीरादिसंसर्गेऽपि कुतो दुःखादीत्यतो दुःखादिकं प्रति तत्संसर्गस्य पुष्कलकारणत्वात् तस्मिन्सति तत्प्रसङ्गो दुर्वार इत्याह **कारणसामग्रीति** मूलम्। तत्र सामग्रीपदस्य कारणसमुदायपरतया कारणपदानर्थक्यमित्यतो व्याचष्टे **समग्रस्येति**। तथाच समग्रस्य भावः सामग्र्यम्। तद्वाची सामग्रीशब्दः साकल्यमात्रं प्रतिपादयन् कारणपदमपेक्षत एवेति न वैयर्थ्यमिति भावः। कथं भावार्थे प्रत्ययाश्रयणेन साधुत्वमित्यतः सदृष्टान्तं साधुतामाह **औचितीत्यादिवदिति**। उचितस्य भाव इति भावार्थे गुणवचनब्राह्मणादिभ्यः कर्मणि चेति सूत्रेण ब्राह्मणादेराकृतिगणतया ष्यञि सति षकारञकारयोर्लोपे यस्येति चेति उचितशब्दाकारलोपे आदिवृद्धौ औचित्यशब्दे निष्पन्ने तलन्तस्येव ष्यञन्तस्यापि शब्दस्वभावात् क्वचित् स्त्रीत्वे षिद्गौरादिभ्यश्चेति ङीषि यस्येति चेत्यनेन औचित्यशब्दाकारलोपे हल उत्तरस्य तद्धितयकारस्य लोपविधायकेन हलस्तद्धितस्येति सूत्रेण यकारलोपे औचितीति रूपम्। आदिपदेन याथाकामीति रूपं ग्राह्यम्। तद्वत्समग्रशब्दादपि भावेऽर्थे ष्यञि यस्येति चेत्यनेनाकारलोपे उक्तरीत्या स्त्रीत्वे ङीषि हलस्तद्धितस्येति यकारलोपे सामग्रीति साकल्यवाचिरूपं साध्वित्यर्थः। **नाद्यस्तस्य धर्मादीत्युक्त इति**। अयमर्थः। अभ्युदयमोक्षस्वरूपपर्यालोचनायां मुक्तस्य सशरीरत्वादावङ्गीकृते भवदभिमतस्य मोक्षत्वं नायाति। किन्तु स्वर्गपदाभिहिताभ्युदयत्वमेव। तस्य च धर्ममीमांसादिलघूपायसाध्यत्वं प्रागुक्तमेवेति। जिज्ञासावैयर्थ्यलक्षणो दोष इति। नाद्यः तस्य धर्मादीत्युक्तो दोष इत्यर्थ इति पाठः। धर्मादिलघूपायसाध्यस्य शास्त्रान्तरप्रयोजनत्वादिति पूर्वमूले उक्तेः। धर्मादिलक्षणस्त्वनात्मेत्येतद्व्यावर्तयितुं नाद्यः तस्येत्यधिकोदाहरणम्। धर्मादिलघूपायेत्यपि पाठोऽस्ति। तस्य धर्मादिलक्षणस्येत्यर्थ इति तु लेखककल्पितः। **तदर्थितानुपपत्तेरिति** मूलम्। मोक्षेच्छानुपपत्तेरित्यर्थः। अप्राकृतशरीरस्वरूपसुखादिसद्भावे च प्रमाणाभावादिति भावः। ननु तत्साध्यसुखाभावेऽपि प्रवृत्तिः किं न स्यादित्यत आह **को हीति** मूलम्। सिद्धपरित्यागेन प्रयोजनशून्ये प्रवर्तमानस्य मूर्खत्वापातादित्याशयः।

**स०व्र०**— **अपि चेति**। अप्राकृतशरीरसत्त्वे प्रमाणाभावो विरोधश्चेत्यर्थः। **उक्तदोष इति**। मोक्षस्याभ्युदयतुल्यत्वेन तस्य च धर्मादिलक्षणलघूपायसाध्यत्वेन शास्त्रान्तरप्रयोजनत्वाद्ब्रह्मजिज्ञासावैयर्थ्यलक्षणो दोष इत्यर्थः। विप्रतिपत्तयस्तु तत्रतत्रोद्भाव्य निरसिष्यन्त इति नेह प्रपञ्चिताः।

**कुण्डल०— उक्तदोष इति** । तस्य धर्मादिलघूपायसाध्यस्य शास्त्रान्तरप्रयोजनत्वादित्यादिना उक्तदोष इत्यर्थः । अनारम्भणीयं प्रेक्षावदुपादेयं न भवतीत्यर्थः ।

**विट्ठ०—** सौत्राथपदनिवर्त्यं पूर्वपक्षं दर्शयति **अपि चेति** । **कारणसामग्री** कारणपौष्कल्यम् ।

**गूढ०— कारणेति** । दुःखादिकारणेत्यर्थः । **उक्तदोषः** । लघूपायसाध्यत्वेनैतच्छास्त्रवैयर्थ्यलक्षणोक्तदोष इत्यर्थः ।

**१३४ सु०— तदेवं विषयाद्यनुबन्धविधुरत्वान्न जिज्ञासा कर्तव्या । तद्विधयोऽपि न प्रमाणम् । शास्त्रं चेदमनारम्भणीयमिति प्राप्ते सूत्रयामास भगवानाचार्यः ॐ अथातो ब्रह्मजिज्ञासेति ।**

**परि०—** 'तद्विजिज्ञासस्वे'त्यादेस्तर्हि का गतिरित्यत आह **तद्विधय इति** । विना विचारेण श्रुत्यर्थस्याद्याप्यनिर्णीतत्वेनेति पूर्ववाक्यानुरोधेन न प्रमाणमित्यस्य जिज्ञासाकर्तव्यत्वरूपेऽर्थे न प्रमाणमिति वा सर्वथा न प्रमाणमिति वा द्वेधाऽर्थो ध्येयः । तथैव चन्द्रिकोक्तेः । **आचार्यः** सूत्रकारः ॥

**आनन्दः—** उपसंहरति **तदेवमिति** ।

**कं०रा०— अनारम्भणीयं** प्रेक्षावदनुपादेयम् ।

**वा०चं०—** पूर्वपक्षमुपसंहरन्नेव तत्परमप्रमेयोक्तिपूर्वकं पूर्वपक्षनिवर्तकतया सूत्रमवतारयति **तदेवमिति** ।

**वा०र०— तत्परमप्रमेयेति** । शास्त्रं चेदमनारम्भणीयमिति परमप्रमेयोक्तिः । उपलक्षणं चैतत् । तावज्जिज्ञासा न कर्तव्येति प्रतिज्ञावाक्यगततावच्छब्दार्थतद्विध्यप्रामाण्यरूपावान्तरप्रमेयोक्तीत्यपि द्रष्टव्यम् । तद्विध्यप्रामाण्यशास्त्रानारम्भणीयत्वप्राप्त्यपेक्षया तावच्छब्द इति पूर्वटीकानुसारात् । **निवर्तकतयेति** । अवतारिकारूपपूर्वपक्षस्य सिद्धान्तसूत्रप्रसञ्जकत्वादिति भावः ।

**कुण्डल०— तदिति** । जिज्ञास्यं वस्त्वित्यर्थः ।

**स०ना०— सूत्रयामास भगवानाचार्य इति** । अत्र ॐ अथातो ब्रह्मजिज्ञासेति पाठद्वयं संकलय्य उदाहृतमिति द्रष्टव्यम् । ओङ्कारब्रह्मशब्दौ प्रयुक्ताविति पाठभेदेनेति शेषः । अन्यथा एकेनैव शब्देन शङ्कायाः परिहृतत्वात् शब्दान्तरोपादानमनर्थकं स्यात् इति वाच्यम् । ओतंप्रोतमित्यस्य गतिप्रवेशार्थक-ऊयतिरूपत्वसंभवेन अवतिरूपत्वस्य निर्णेतुमशक्यत्वात् । बाहुलकत्वेन गुणाश्रयणस्योभयत्रापि तुल्यत्वात् ।

**विट्ठ०— तद्विधयः** जिज्ञासाविधायकवाक्यानि 'तद्विजिज्ञासस्व' 'आत्मा वा अरे द्रष्टव्य' इत्यादीनि ।

**गूढ०—** उपसंहरति **तदेवमिति** ।





॥ विषयाद्यभावशङ्कानिरसनम् ॥
॥ ब्रह्मप्रमेये आरोपितस्य अन्यथाकारस्य शङ्कायाः निरसनम् ॥

चिदचिद्विलक्षणस्य ईश्वरस्य विषयत्वोपपादनम्—

## ब्रह्मसूत्रम्— ॐ ॐ अथातो ब्रह्मजिज्ञासा ॐ ॥ १-१-१ ॥

**१३९ सु०— यत्तावदुक्तं 'विषयाभावान्न जिज्ञासा कर्तव्ये'ति तदनुपपन्नम् । अनात्मजीवात्मनोर्विषयत्वानुपपत्तावपीश्वरस्य तदुपपत्तेः ।**

**परि०—** तदयुक्तमित्यादिना भाष्यमवतारयितुं विषयाभावशङ्कानिरासकत्वप्रकारं ॐब्रह्मपदयोः व्यनक्ति **यत्तावदित्यादिना** । तदिति जिज्ञास्यं वस्तु । इतीत्यस्येत्ययमर्थः सूचित इति पूर्वेणान्वयः ।

**वं०प०— ॐ अथातो ब्रह्मजिज्ञासेति** ।

**आनन्दः—** ननु विषयाभावाज्जिज्ञासा न कर्तव्येत्युक्ते विषयोऽस्तीति वक्तव्ये ब्रह्मजिज्ञासेतिवचनमयुक्तं, प्रकृतानुपयोगादित्यत आह **अनात्मेति** ।

**वा०चं०—** ननु भर्गादिशब्दतुल्यतयोङ्कारब्रह्मशब्दनिर्वचनमात्रपरौतत्ववाचीत्यादिसिद्धान्तानुव्याख्याने पूर्वपक्षनिराकृतविषयत्वेषु अनात्मजीवात्मपरमात्मस्वन्यतरपक्षपरिग्रहस्य तत्पक्षोक्तदोषपरिहारस्य वाऽदर्शनाद्वैयर्थ्यमित्यतः स्पष्टत्वादीश्वरविषयत्वपक्षपरिग्रहस्य तत्पक्षोक्तदूषणपरिहारस्य सूत्रकारेणैव सूचनात्सूत्रसूचितपक्षविशेषदूषणपरिहारे प्राप्तानुपपत्तिपरिहारेण स्वयमपि पक्षपरिग्रहादेः सूचनात्साक्षात्तदनुक्तावपि सूत्रसूचितपरिहारे प्राप्तानुपपत्तिपरिहारार्थत्वान्न तदनुव्याख्यानवैयर्थ्यमित्यभिप्रेत्य बहिरेव साध्यनिर्देशपूर्वकं पक्षविशेषपरिग्रहप्रकारं सूत्रसूचिततत्पक्षोक्तदूषणपरिहारप्रकारं च दर्शयन्नेव तत्र प्राप्तानुपपत्तिनिवर्तकतया भाष्यमवतारयति **यत्तावदित्यादिना** ।

**वा०र०— भर्गादीति** । इदं च स एव भर्गशब्दार्थ इत्येतद्व्याख्यावसरे उपपादयिष्यते । **पूर्वपक्षनिराकृतेति** । पूर्वपक्षे निराकृतं विषयत्वं येष्विति व्यधिकरणो बहुव्रीहिः । **अन्यतरपक्षेति** । अन्यतमेत्यर्थः । वस्तुतस्तु अनात्मजीवात्मशब्दे द्वन्द्वानन्तरं परमात्मशब्देन द्वन्द्वाश्रयणादभ्यर्हितत्वेन परमात्मपक्षस्यैवानात्मजीवात्मरूपानभिप्रेतपक्षात्पृथक्करणोपपत्तेरन्यतरेति साध्विति ज्ञेयम् । साक्षात् तदित्यतः पूर्वं अनुव्याख्याने इत्यनुवृत्तेरनुव्याख्यानस्येति शेषपूरणं सूत्रसूचितेत्यतः प्राक् ज्ञेयम् । अत्र वैयर्थ्यमित्यतः साक्षात्तदनुक्तावपि सूत्रसूचितपरिहारे प्राप्तानुपपत्तिपरिहारार्थत्वान्न तदनुव्याख्यानवैयर्थ्यमित्यभिप्रेत्य बहिरेवेत्यादिसंबन्धः । कथं तत्परिहारार्थत्वमात्रेणोक्तशङ्कापरिहारो येनावैयर्थ्यमित्यत उक्तं सूत्रसूचितपक्षविशेषदूषणपरिहारे प्राप्तानुपपत्तिपरिहारेणेत्यादि ।





सूत्रकारीयपक्षविशेषपरिग्रहादिकथनाभावशङ्कापरिहारव्याजेन भाष्यकारीयपक्षविशेषपरिग्रहादिसूचनोपयुक्तं सूत्रसूचितपक्षविशेषेत्येतदुपपादितं **स्पष्टत्वादित्यादि**। ईश्वरविषयत्वपक्षपरिग्रहस्य स्पष्टत्वात् तमनभिधाय तत्पक्षोक्तदूषणपरिहारस्यैव सूत्रकारेण सूचनं कृतम् । सूत्रकारेणैव तत्सूचनाद्भाष्यकारेणापि स्वयं तत्परिहारमनभिधाय सूत्रसूचितपरिहारे प्राप्तानुपपत्तिपरिहार एव कृतस्तेनैव पक्षपरिग्रहादिकमपि भाष्यकारेण सूचितमित्यर्थः ।

**चषकः**— निर्विषयत्वहेतोरसिद्धिमुपपादयति **तदनुपपन्नमिति**।

**गूढ०**— ननु विषयाभावाज्जिज्ञासा न कर्तव्येत्युक्ते विषयोऽस्तीति वक्तव्ये ब्रह्मजिज्ञासेतिवचनमयुक्तम्, प्रकृतानुपयोगादित्यत आह **अनात्मेति**।

**१३६ सु०— अत्र यदुक्तं 'जीवव्यतिरिक्त ईश्वर एव नास्ती'ति तत्परिहाराय सूत्रकृतोङ्कारब्रह्मशब्दौ प्रयुक्तौ । तेनायमर्थः सूचितः । 'ॐ इत्येतदक्षरमुद्गीथमुपासीत', 'तद्विजिज्ञासस्व तद्ब्रह्मे'त्यादिश्रुतावोङ्कारब्रह्मशब्दौ जिज्ञास्ये वस्तुनि श्रूयेते, ताभ्यां च तत् सकलजीवजडात्मकात्प्रपञ्चाद्विलक्षणमवगम्यत इति । तदयुक्तमिवाभाति । ॐ आदिपदस्य अलौकिकार्थेऽनवगतसङ्गतित्वात् । न हि पदं चक्षुरादिवदप्रतीत एवार्थे प्रतीतिं जनयति । येनापूर्वमर्थं पदप्रयोगादेव प्रतीमः । स्वर्गापूर्वदेवताद्यर्थोऽपि न पदप्रयोगादेव सिद्धः । किन्तु सन्निहितानेकवाक्यार्थसामर्थ्याल्लभ्यत इत्यत आह भाष्यकारः ओतत्ववाचीति ।**

## अनु०— ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोतताम् ।

**बिन्दुः— स्वर्गापूर्वदेवतेति**। ''यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वः पदास्पदम् ।'' ''वज्रहस्तः सहस्राक्षः पुरन्दर'' इत्यादिवाक्यार्थरूपत्वात् स्वर्गादिपदार्थानां तत्र च घटकीभूतदुःखादिपदानां लोके गृहीतसङ्गतिकत्वात् अपूर्वपदार्थस्य च ज्योतिष्टोमेन स्वर्गो भवतीति वाक्यार्थरूपसाध्यसाधनभावान्यथानुपपत्तिरूपसामर्थ्यलब्धत्वादित्यर्थः।

**परि०**— अत्र ब्रह्मपदेनैव जीवादिविलक्षणविषयसंभवेऽप्योमित्युक्तेः कृत्यं नारायणपदोदित इत्यत्राग्रे व्यक्तं भविष्यति। स्वर्गाद्यलौकिकार्थावबोधवत्स्यादित्यत आह **स्वर्गेति**॥ **सन्निहितेति**। 'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च सुखं स्वर्गपदास्पदमि'त्यनेकवाक्यार्थलभ्यः स्वर्गपदार्थः । 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति यागस्य स्वर्गसाधनत्वरूपवाक्यार्थसामर्थ्यलभ्यो-





ऽपूर्वाख्योऽर्थः । 'वज्रहस्तस्सहस्राक्ष' इत्यनेकवाक्यार्थसामर्थ्यलभ्येन्द्रादिदेवतारूपोऽर्थ इत्यर्थः । सामर्थ्यमन्यथाऽनुपपत्तिः ॥

**यादु०**— नन्वेवं स्वर्गापूर्वदेवतादिरूपोऽर्थोऽपि सङ्गतिग्रहणासंभवेनागमसिद्धो न स्यादित्यत आह **स्वर्गापूर्वदेवतादीति**। **किन्तु सन्निहितानेकेति**। यथा 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्' इत्यनेकवाक्यार्थसामर्थ्येनोपस्थिते सुखविशेषे स्वःपदशक्तिग्रहः पश्चादेवेति भावः। यथा 'स्वर्गकामो यजेत' इत्यादौ स्वर्गकामपदसमभिव्याहाराल्लिङादेरपूर्वपरत्वमेवं देवताशब्दस्यापि तदर्थपरत्वं द्रष्टव्यम्।

**वं०प०**— ननु पूर्वं सङ्गतिग्रहणाभावेऽपि चक्षुरादिवत्पदमप्यप्रतीतार्थज्ञानजनकमेव किं न स्यादित्यत आह **न हीति** ।

**आनन्दः**— ननु ओङ्कारब्रह्मशब्दाभ्यां कथमीश्वरस्य जीवव्यतिरिक्तत्वसिद्धिः । किञ्च ॐशब्दस्य जिज्ञासाविधायकवाक्ये जिज्ञास्ये क्वाप्यप्रयुक्तत्वात्कथं तेन जीवभिन्नेश्वरसिद्धिरित्यत आह **तेनेति**। **ताभ्यां चेति**। ॐब्रह्मशब्दाभ्यां प्रतिपादितयोः ओत्वब्रह्मत्वयोः जीवादावसंभवेन विलक्षणवस्तुसिद्धिरिति भावः। ननु ॐब्रह्मशब्दाभ्यां जीवादिविलक्षणवस्तुसिद्धिर्हि योगेन वा स्याद्रूढ्या वा उभयथापि सङ्गतिग्रहाभावे पदेनार्थबोधाजननात् सङ्गतिग्रहोऽवश्यं वक्तव्यः। तत्र लौकिके तद्ग्रहस्य प्रकृतानुपयोगादलौकिके तद्ग्रह इति वक्तव्यम्। तत्रानुपस्थिते तद्ग्रहायोगादुपस्थितिर्वक्तव्या। सा हि प्रत्यक्षादिना वा शब्देन वा। नाद्यः। तस्य प्रत्यक्षाद्यगोचरत्वात्। न द्वितीयः। गृहीतसङ्गतिकस्यैव तस्य बोधकत्वेनानुपस्थिते च सङ्गतिग्रहासंभवेनोपस्थित्यर्थं शब्दान्तरप्रयोगेऽनवस्थापत्तेः। तथा चाभ्यां विलक्षणवस्तुसिद्धिरित्ययुक्तमित्याशङ्क्ते **तदयुक्तमिति**। ननु सङ्गतिग्रहाभावेऽपि चक्षुरादेरिव पदार्थबोधः किं न स्यादित्यत आह **न हीति**। ननु तर्हि स्वर्गापूर्वादिरूपार्थस्य शब्देन सिद्धिर्न स्यात्। तस्यालौकिकत्वेनानुपस्थितत्वेन सङ्गतिग्रहासंभवादित्यत आह **स्वर्गेति**।

**कं०रा०**— **ताभ्यामिति**। **विलक्षणमवगम्यत इति**। वक्ष्यमाणरीत्या सकलगुणपूर्तिपराभ्यामोङ्कारब्रह्मशब्दाभ्यां जिज्ञास्ये प्रयुक्ताभ्यां सकलगुणपूर्तिरहितादशेषजीवजडात्मकात्प्रपञ्चाज्जिज्ञास्यं वस्तु विलक्षणमवगम्यत इत्यर्थः। **अलौकिकार्थे** अपूर्वे गुणपूर्णरूपार्थे। **प्रतीमः** जानीमः। **सन्निहितेति**। "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्" इत्यादिसन्निहितानेकवाक्यार्थविधया लभ्यत इत्यर्थः ।

**श्रीनिधि०**— **सन्निहितानेकवाक्येति**। 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वः पदास्पदमि'त्यादि वाक्यार्थसामर्थ्यलभ्य इत्यर्थः।

**वा०चं०**— **सूचित इति**। जिज्ञास्यस्य जीवादिवैलक्षण्यासूचनेऽवैलक्षण्यपूर्वपक्षप्रतिक्षेपकत्वायोगाताभ्यां तत्सूचनमिति भावः। **चक्षुरादिवदिति**। अत्र चक्षुरितीन्द्रियान्तरोपलक्षणम्। आदिपदेन चानुमानग्रहणम्।





सङ्गतिग्रहणसापेक्षार्थबोधकत्वात्पदस्य तदुभयवैलक्षण्यमिति भावः। **सन्निहितेति**। 'स्वर्गकामो यजेत' इत्यादि-श्रुतिस्थस्वर्गशब्दशक्तिग्राहिकायां 'यन्न दुःखेने'त्यादिश्रुतौ 'न हि दुःखेन संभिन्नं न च ग्रस्तमि'त्याद्यनेक-वाक्यार्थभूतदुःखासंभिन्नत्वाग्रस्तत्वादीनां प्रसिद्धसुखेऽनुपपत्तिरूपसामर्थ्येन 'तानि धर्माणि प्रथमानि' 'पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकमि'त्यादौ 'स्वर्गकामो यजेत' इत्यादौ च सन्निहितवाक्यार्थलोकान्तर-प्राप्तिसाधनत्वकालान्तरभाविफलसाधनत्वादीनां प्रसिद्धयागादिसाधनेऽनुपपत्तिरूपसामर्थ्येन 'न कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे', 'मृदब्रवीदि'त्यादिवाक्यार्थानां प्रसिद्धपरत्वेऽनुपपत्तिरूपसामर्थ्येन स्वर्गापूर्वदेवतालाभः। देवतादीत्यत्रादिपदेन यूपाहवनीयादिसङ्ग्रहः। तदर्थतया 'यूपं तक्षति' इत्यादिवाक्यार्थसामर्थ्यमुदाहार्यम्।

**वा०र०— सकलजीवजडेति** मूलम्। यद्यपि जीवाभेदपूर्वपक्षनिराकरणाय प्रयुक्तोङ्कारब्रह्मशब्दाभिहित-गुणपूर्णत्वेन जीवव्यावृत्तिरेवाभिधेया। तथापीदं ब्रह्मणो लक्षणं तच्च सजातीयमिव विजातीयमपि व्यवच्छिनत्तीति वस्तुस्थितिकथनाय जडस्यापि ग्रहणम्। एवं जीवजडयोरित्यत्रापि ज्ञेयम्। **अनवगतेति** मूलम्। अगृहीतसङ्गतिक-त्वादित्यर्थः। सङ्गतेः ससंबन्धिकपदार्थत्वेन तद्ग्रहणस्य संबन्धितावच्छेदकप्रकारकसंबन्धिधीसाध्यत्वेन प्रकृते च संबन्धिभूतब्रह्मण औपनिषदत्वेन प्रत्यक्षादिना तदनवगमाद्वेदेन तदवगमस्य चान्योन्याश्रयग्रस्तत्वादिति भावः। ननु संबन्धाप्रतीतावपि चक्षुरादिनेव शब्देनाप्यर्थप्रत्ययोऽस्त्वित्यत आह **न हीति**। पक्षवत्पदबोधकं लिङ्गवद्वा वाक्यवद्वा इत्यर्थक**चक्षुरादिवदिति** मूले अन्यदपि सङ्ग्राह्यमाह **अत्र चक्षुरितीति**। चक्षुरादीत्यत्रादिपदेनेन्द्रियान्तरग्रहण-व्याख्यानपक्षे चक्षुर्घ्राणादीन्द्रियवदित्येव बोधापत्तेरनुमानोपस्थितिनिमित्ताभावः प्राप्नोति। अतः अन्तरङ्गतया चक्षुःपदेनेन्द्रियान्तरोपलक्षणोक्तिरिति ज्ञेयम्। **अनुमानग्रहणमिति**। वाक्यस्याप्युपलक्षणमेतत्। **अप्रतीत एवार्थ इति** मूले विषयसप्तमी। सङ्गतिग्रहणसापेक्षार्थबोधकत्वादिति। अयमर्थः। प्रमाणत्वाविशेषेऽपि प्रमाणान्तरेणार्थ-मधिगम्य तस्मिन् गृहीतसङ्गतिकस्य पदस्यार्थस्मारकत्वान्नाधिगतविषयत्वं युक्तम्। तदेतदुक्तं पदमिति प्रयोगेण। तथा चागृहीतसङ्गतिकस्य शब्दस्यार्थबोधकत्वे अतिप्रसङ्गेनावगतसङ्गतिकस्यैव तस्य तद्बोधकत्वात्प्रत्यक्षादेश्च सङ्गतिग्रहणानपेक्षत्वाद्युक्तं प्रत्यक्षादिवैलक्षण्यमिति। ननु सङ्गतिग्रहणसापेक्षस्य पदस्य बोधकत्वनियमो न युक्तः। तथा सति स्वर्गापूर्वाद्यर्थस्यालौकिकतया तथाशब्दस्य तत्रानवगतसङ्गतिकत्वेन पदमात्रेण तस्याप्यसिद्धिप्रसङ्गा-दित्यत आह मूले **स्वर्गापूर्वेति। पदप्रयोगादेवेति**। तथा चेष्टापादनमेतदिति भावः। केन तर्हि तत्सिद्धिरिति शङ्कते **किन्त्विति**। उत्तरमाह **सन्निहितेति** मूलम्। तत्र सन्निहितं यद्वाक्यं तदर्थसामर्थ्यं अनेकानि यानि वाक्यानि तदर्थसामर्थ्यं चेति। संबन्धमाश्रित्य द्वितीयं तावदुदाहरणमिष्टतयोपपादयति **स्वर्गकाम इति। यन्न दुःखेनेत्यादिश्रुताविति**। यद्यपि यन्न दुःखेनेति वाक्यमेकमेव। तथापि वाक्यार्थानामनेकत्वात् तत्प्रतिपादकतया वाक्यानेकत्वविवक्षया तादृशवाक्यसमुदायरूपा श्रुतिरित्यङ्गीकारेणैतदिति न दोषः। यन्न दुःखेन संभिन्नमित्यादि-वाक्यानि वने चूत इत्यादिप्रत्ययदर्शनाच्छ्रुतिस्थानि भवन्तीति वक्तुं शक्यतया श्रुताविति सप्तम्यन्त-स्यानेकवाक्येत्यनेन संबन्धोपपत्तिश्च। यद्वोक्तसप्तम्या प्रतिपादितत्वमर्थः। दुःखासंभिन्नत्वादि विशेषणं चैतत्। तच्छ्रुतिस्थानेकवाक्यप्रतिपाद्यतया च परम्परया तत्प्रतिपादितत्वं द्रष्टव्यम्। एवमनेकवाक्यार्थसामर्थ्यमुदाहृत्य

सन्निहितवाक्यार्थसामर्थ्यमुदाहरति **तानि धर्माणीत्यादिना** । (धर्मशब्दोऽपूर्वे पुल्लिङ्गः तत्साधने तु नपुंसकः तानि धर्माणि प्रथमानीति काशिकानुसारेण) तानि धर्माणीत्येतद्व्याख्यानरूपग्रन्थानुसारेण धर्मशब्दोक्तानां पुण्येनेत्यादि-वाक्यगतपुण्यादिशब्दस्य च शुभाशुभकर्मपरत्वेन तद्वाक्यैकदेशरूपसन्निहितवाक्यस्य ते ह नाकं; स च तं पुण्यं लोकं नयतीत्यादिरूपस्य योऽर्थो लोकान्तरप्राप्तिसाधनत्वरूपः । स्वर्गकाम इत्यत्र च यजेतेति सन्निहितवाक्यार्थभूत-यागनिष्ठकालान्तरभाविफलसाधनत्वादिरूप इति विवेकः । कदाचन स्तरीरसीति मन्त्रे एकस्यैव नञः श्रवणा-दावृत्तिमभिप्रेत्यान्वयमुखेनाह **न कदाचनेत्यादि** । प्रत्यक्षस्य जात्या प्राबल्यप्रतिपादनपरन्यायामृतस्थऐन्द्रेति-वाक्यव्याख्यानरूपकण्टकोद्धारे तु न स्तरीरसि घातको न भवसि किन्तु सश्वसि प्रीयसे इति वर्णकान्तरमुक्तमिति न दोषः । सन्निहितस्थलं स्पष्टनीयमस्ति । **सामर्थ्येनेति** । त्रयस्य स्वर्गादित्रितयलाभे क्रमेणान्वयः । **तदर्थतयेति** । यूपाहवनीयादिलाभार्थतयेत्यर्थः । कार्यतावादीयतत्त्वप्रकाशिकायां तदेवमलौकिकत्वेऽपि नियोगस्य यूपाहवनी-यादिवत्पदान्तरसमभिव्याहाराल्लिङ्गादीनां तत्र संबन्धेत्याद्युक्तम् । तन्नयनप्रसादिन्यां 'यथा खलु यूपाहवनीयादौ यूपं तक्षति यूपमष्टाश्रीकरोति। यूपमनक्ति। अर्धोदिते सूर्ये आहवनीयमादधाती'त्यादिवाक्यपर्यालोचनया 'संस्कृतौ कौचन दार्वग्निविशेषौ यूपे पशुं बध्नाति आहवनीये जुहोती'त्यत्र यूपाहवनीयशब्दार्थाविति निर्णीयत इत्युक्तेर्यूपादिलाभस्तेन प्रकारेण ज्ञेयः । आदिपदेन यववराहादिशब्दा ग्राह्याः । यदान्या ओषधय इत्यादिवाक्यपर्यालोचनया दीर्घशूकादि-परत्वात्तेषाम् । वाक्याधिकरणशास्त्रदीपिकायां 'यन्न दुःखेने'त्यादि । उक्तं च लोकवेदाधिकरणे— 'पदावधारणोपायान् बहूनिच्छन्ति सूरय' इति च तत्रैवम् । एतत्प्रमेयं किञ्चिन्न्यायवाचस्पत्यादिषु शब्दपरीक्षायां किञ्चिच्च चतुर्थवर्णकविवरणे द्रष्टव्यम् । प्रकृते तु नार्थविशेषज्ञापकपदसमभिव्याहारोऽस्तीति न तत्सामर्थ्यादप्यलौकिकार्थलाभ इति भावः ।

**स०व्र०**— प्रसिद्धपरत्वस्याप्रसिद्धकल्पनाया ज्यायस्त्वादोङ्कारब्रह्मशब्दयोः प्रसिद्धजीवपरत्वोपपत्तेः । तस्य चान्यतः सिद्धत्वात्कथमेताभ्यां विषयसिद्धिः । कथं च जीवादिव्यावृत्तिरित्यत आह **तेनेति** । **न हीति** । पदग्रहणेन प्रमाणत्वाविशेषाच्छब्दस्य सङ्गतिग्रहणापेक्षयार्थबोधकत्वस्वाभाव्यं दर्शयति । 'लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक'इति न्यायात् । ननु प्रमाणान्तरविषयस्वर्गाद्यर्थकस्वर्गादिपदेषु नायं न्याय इत्यतो 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्', 'यूपं तक्षती'त्यादिपदसमभिव्याहारादगत्याऽलौकिकेऽप्यर्थे व्युत्पत्तिः स्वर्गादिपदानाम् । न चेहार्थ-विशेषज्ञापकपदसमभिव्याहारो दृश्यत इत्याह **स्वर्गेति** । आदिशब्दो यूपाहवनीयाद्यभिप्रायः ।

**कुण्डल०**— **अलौकिकार्थ इति** । अनन्तकल्याणगुणपूर्तिमत्यर्थ इत्यर्थः । **प्रतीम इति** । जानीम इत्यर्थः । नन्वलौकिकस्य स्वगदिरिव पदेन प्रतीतिः सेत्स्यतीत्यत आह **स्वर्गेति** । **सन्निहितेति** । "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्" इत्यादिसन्निहितानेकवाक्यार्थविधया लभ्यत इत्यर्थः । सन्निहितानेकवाक्यार्थसामर्थ्येनोपस्थिते सुखविशेषे स्वर्गपदस्य शक्तिग्रहः पश्चादेवेति भावः ।

**विठ्ठ०**— ननु अलौकिकस्यापि स्वर्गापूर्वदेवतादेः पदप्रयोगादेव प्रतीतिः । तथा अत्रापि किं न स्यादित्यत आह **स्वर्गापूर्वेति** । "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्"





इत्यादिस्वर्गवाचकस्वःपदसन्निहितानेकवाक्यार्थसामर्थ्येन उपस्थिते दुःखासंभिन्नत्वादिविशेषणविशिष्टे पश्चात् स्वःपदशक्तिग्रहो लभ्यत इति भावः ।

**चषकः— अलौकिकार्थ इति** । अतीन्द्रियार्थ इत्यर्थः । **अनवगतसङ्गतित्वात्** शक्तिग्रहाविषयत्वात् । **सन्निहितेत्यादि** । 'स्वर्गकामो यजेत'इत्यादिश्रुतिघटकीभूतस्वर्गादिशब्दशक्तिग्रहजनिकायां 'यन्न दुःखेन'इत्यादिश्रुतौ समभिव्याहृतानेकपदात्मकवाक्यतात्पर्यधीविषयीभूतदुःखासंभिन्नत्वाग्रस्तत्वाभिलाषोपनीतत्वादीनां प्रसिद्धसुखे अनुपपत्तिप्रतिसन्धानरूपसामर्थ्येनोपस्थिते सुखविशेषादौ पदशक्तिग्रहः पश्चादेवेति तदुदीच्यशाब्दधीविषयः स्वर्गापूर्वादिरिति भावः ।

**गूढ०**— ननु ओङ्कारब्रह्मशब्दाभ्यां कथमीश्वरस्य जीवव्यतिरिक्तत्वसिद्धिः । किञ्च ॐशब्दस्य जिज्ञासाविधायकवाक्ये जिज्ञास्ये क्वाप्यप्रयुक्तत्वात्कथं तेन जीवभिन्नेश्वरसिद्धिरित्यत आह **तेनेति** । **ताभ्यां चेति** । ॐब्रह्मशब्दाभ्यां प्रतिपादितयोः ओत्वब्रह्मत्वयोर्जीवादावसंभवेन विलक्षणवस्तुसिद्धिरिति भावः । ननु ॐब्रह्मशब्दाभ्यां जीवादिविलक्षणवस्तुसिद्धिर्हि योगेन वा स्यात् रूढ्या वा । उभयथापि सङ्गतिग्रहाभावे पदेनार्थबोधाजननात् सङ्गतिग्रहोऽवश्यं वक्तव्यः । तत्र लौकिके तद्ग्रहणस्य प्रकृतानुपयोगादलौकिके तद्ग्रह इति वक्तव्यम् । तत्रानुपस्थिते तद्ग्रहायोगादुपस्थितिर्वक्तव्या । सा हि प्रत्यक्षादिना वा शब्देन वा । नाद्यः । तस्य प्रत्यक्षाद्यगोचरत्वात् । न द्वितीयः । गृहीतसङ्गतिकस्यैव तस्य बोधकत्वेनानुपस्थिते च सङ्गतिग्रहासंभवेनोपस्थित्यर्थं शब्दान्तरप्रयोगेऽनवस्थापत्तेः । तथा चाभ्यां विलक्षणवस्तुसिद्धिरित्ययुक्तमित्याशयेन शङ्कते **तदयुक्तमिति** । ननु सङ्गतिग्रहाभावेऽपि चक्षुरादेरिव पदार्थबोधः किं न स्यादित्यत आह **न हीति** । ननु तर्हि स्वर्गापूर्वादिरूपार्थस्य शब्देन सिद्धिर्न स्यात् । तस्य अलौकिकत्वेनानुपस्थितत्वेन सङ्गतिग्रहासंभवादित्यत आह **स्वर्गेति** ।

**प्रदीपः— न हीति** । पदग्रहणेन प्रमाणत्वाविशेषेऽपि शब्दस्य सङ्गतिग्रहापेक्षार्थबोधकस्वाभाव्यं दर्शयति लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधक इति न्यायात् । प्रमाणान्तरवेद्यस्वर्गाद्यर्थकस्वरादिपदेषु नायं न्याय इत्यतो 'यन्न दुःखेन संभिन्नं', 'यूपं तक्षती'त्यादिपदसमभिव्याहारादगत्याऽलौकिके व्युत्पत्तिः स्वर्गादिपदानाम् । नेहार्थविशेषज्ञापकपदसमभिव्याहारो दृश्यत इत्याह **स्वर्गेति** । यूपादिशब्दो यूपाहवनीयाद्यभिप्रायेण ।

**१३७ सु०— हिशब्दो हेत्वर्थे । ॐकारः तावदोतत्वस्य गतत्वस्य प्रविष्टत्वस्य वा वाचकः । गत्याद्यर्थस्यावतेः खलु रूपमेतत्, 'अवतेष्टिलोपश्चे'ति सूत्रात् । 'ॐ इति पुनः कस्य वक्ते'ति प्रश्नपूर्वकं 'अवतिर्नामाऽयं धातुर्गतिकर्मा प्रवेशनकर्मा चे'त्यन्यत्राप्येवमेव निरुक्तत्वात् । तथा च यद्यसौ कर्मणि तदा कर्तुर्यदि वा कर्तरि तदा कर्मणोऽपेक्षायामुपपदाद्यभावेऽपि योग्यतया श्रुत्यन्तरादिबलाद्वाऽसावोङ्कारस्तस्य जिज्ञास्यस्य गुणैरानन्दाद्यनन्तकल्याण-**





**गुणैर्गुणान्वोततां वक्ति । पक्षद्वयेऽप्यनन्तानवद्यकल्याणगुणपूर्णतैवोङ्कारस्यार्थः । ब्रह्मशब्दस्यापि स एव अर्थः । बृहतेर्वृद्ध्यर्थस्य खल्वेतद्रूपम् । तथा च पूर्ववद्योग्यतया 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणा' इत्यादिश्रुत्यन्तरादिबलाद्वा गुणानां संबन्धः ।**

**बिन्दुः— गत्याद्यर्थस्यावतेरिति** । अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिष्विति धातुपाठे व्याख्याततत्वादिति भावः । यद्यपि धातुव्याख्याने रक्षणस्य प्रथममुपात्तत्वाद्रक्षणाद्यर्थस्येति वक्तुमुचितं, तथापि गुणोततामिति प्रकृतोपयोगिव्याख्याने गतिप्रवेशरूपार्थद्वयापेक्षया गत्याद्यर्थस्येत्युक्तम् । **अवतेष्टिलोपश्चेति सूत्रादिति** । अवतेर्धातोर्मन्प्रत्ययो भवति । तस्यैव मन्प्रत्ययस्य टेर्लोपश्च भवतीति सूत्रार्थः । न तु अवतेरेव टिलोप इति । तथात्वे सर्वस्यापि प्रकृतिभूतस्य धातोर्लोपे मकारमात्रप्रत्ययस्य श्रवणप्रसङ्गात् । अत्रायं साधनप्रकारः । अवधातोरुणादयो बहुलमित्युक्तत्वात्कर्तरि कर्मणि वा उक्तसूत्रेण मन्प्रत्ययः । टिलोपश्चेति चकारेण 'अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्नि'ति पूर्वसूत्रोक्तमन्प्रत्ययस्यानुकर्षणात् । नकारस्त्वित्संज्ञको ञ्नित्यादिर्नित्यमिति सूत्रेणाद्युदात्तस्वरविधानार्थः । न तु ब्रह्मन् शब्दादाविव श्रवणार्थः । उदाहरणीभूतस्तोमहोमादिशब्दानां अकारान्तत्वात् । हलन्त्यमिति प्राप्तेत्संज्ञाया अपवादकाभावाच्च । ब्रह्मेत्यादौ तु मनिन्प्रत्यये अन्त्यत्वाभावात् इत्संज्ञायाः प्रसङ्ग एव नास्ति, सोमो धेनुं सोमो अर्वंतमाशुं स्तोमं रुद्रायेत्यादौ सोमादिशब्दानामाद्युदात्ततया पाठाच्च । ननु नित्त्वेन प्रत्ययस्याद्युदात्तत्वेऽपि कथं तत्प्रकृतिभूतधातोरुदात्तता लभ्येत । न च धातोरिति स्वरसूत्रे धातोरन्त उदात्तो भवतीत्युक्तत्वेन तस्याप्युदात्तता सुलभेति वाच्यम् । धातुस्वरानन्तरं क्रियमाणप्रत्ययस्वरस्य बलवत्त्वात् । उक्तं च 'सविशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य' इति । न चोक्तसूत्रद्वयेन धातुप्रत्यययोरुभयोरप्युदात्तत्वमस्त्विति युक्तम् । अनुदात्तं पदमेकवर्जमिति सूत्रे यत्रोदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शिष्टं पदमनुदात्तं भवतीति शेषनिघाताम्नानात् । तथाच सोमशब्दस्थओकारोऽनुदात्तः प्रसज्येतेति चेत् । मैवम् । स्वरशास्त्रे सप्तम्यन्तपदस्य तदन्तपरत्वात् । तथाचोक्तं सौवर्यः सप्तम्यस्तदन्तसप्तम्य इति । ततश्च ञ्नित्यादिर्नित्यमित्यस्यार्थः । ञिदन्तस्य निदन्तस्य चादिरुदात्तो भवतीति । तेन सोमादिशब्दानां मन्प्रत्ययरूपनिदन्तत्वादादिभूत ओङ्कार उदात्तः । तस्मिंश्चोदात्ते उक्तन्यायेन शेषनिघातान्मन्प्रत्ययाकारोऽनुदात्तः । तस्य च उदात्तादनुदात्तस्य स्वरित इति सूत्रेण स्वरितत्वम् । न च पुनः स्वरितत्वे सति शिष्टत्वेन अनुदात्तं पदमेकवर्जमिति ओङ्कारस्यानुदात्तताप्रसङ्ग इति वाच्यम् । उदात्तादनुदात्तस्य स्वरित इत्याष्टमिकस्य स्वरितस्य त्रिपादीस्थतया अनुदात्तं पदमेकवर्जमिति षाष्ठं निघातं प्रति पूर्वत्रासिद्ध-

मित्यसिद्धत्वेन तन्निबन्धननिघाताप्रसङ्गात् । सिद्धकाण्डस्थस्वरितमादाय निघातविधेश्चरितार्थत्वाच्च । तस्मान्नकार इत्संज्ञक इति स्थितम् । ततष्टिलोपे च सति अवम् इति स्थिते च्छ्वोः शूडनुनासिके च सतुक्कस्य छस्य वस्य च शऊठ् एतावादेशौ स्तः अनुनासिके क्वौ झलादौ च क्ङिति इति वकारस्य ऊठादेशे प्राप्ते ज्वरत्वरस्रिव्यविमवामुपधायाश्चेत्यनेन उपधाभूताकारसहितस्य संपूर्णस्य धातोरूठिकृते तस्य सार्वधातुकार्द्धधातुकयोरिति मकारप्रत्ययरूपार्द्धधातुके परत आन्तरतम्यात् उदात्तस्य स्थानेऽनुदात्त एव ओकाररूपे गुणादेशे च सति ओम् इति आद्युदात्तं रूपं सिद्ध्यति । ननु च्छ्वोरिति सूत्रेणैव वकारस्योठि कृते आद्गुण इति गुणादेशे च सति ओमिति सिद्धे व्यर्थं ज्वरत्वरेत्यनेन सोपधस्योठ्विधानमिति चेत् न । तथा सति एत्येधत्यूठ्स्विति वृद्धिप्राप्तौ औमिति रूपं प्रसज्येतेत्युक्त एव पन्थाः साधीयान् इति । नन्ववतेः रक्षणादयोऽनेकेऽर्थाः सन्ति, तत्किं गतिप्रवेशरूपमर्थद्वयमेवोपात्तमित्यत आह **ओमिति पुनः कस्य वक्तेति** । आर्षनिर्वचनानुसारेणैवं व्याख्यातमिति भावः । अवति रक्षति दीप्यते अव गच्छतीत्याद्यर्थानां भगवत्यविरोधित्वादिष्टत्वाच्च तथा व्युत्पादनेऽपि न दोषः । अत एवानुपदं वक्ष्यति व्याख्यानान्तरं अविरुद्धत्वान्न दूषितं अनुमतं वेति । वस्तुतस्तु धातुव्याख्याने अर्थपरिगणनम् उपलक्षणत्वेनैव धातूनामनेकार्थत्वात् । अन्यथा आलिङ्गनमात्रार्थत्वेन व्याख्यातस्य श्लिषधातोः श्लिष आलिङ्गन इति सूत्रम् (आत्मनेपदार्थ)। अर्थकथनपुरस्कारेण उपादानमसङ्गतं स्यात् । तस्मादवतिद्वारानन्तार्थकः अनन्तार्थप्रतिपादकसर्ववेदार्थप्रतिपादकत्वादोङ्कारस्य । तथा च छन्दोगाः पठन्ति । तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येवमोङ्कारेण सर्वा वाक् सन्तृण्णोङ्कार एवेदꣳसर्वमोङ्कार एवेदꣳसर्वमिति । अत्र कर्मशब्देन क्रियोच्यते गतिरूपं प्रवेशनरूपं च कर्म यस्य वाच्यतासंबन्धेनेति बहुव्रीहिः समासः । मनः प्रवेशनरूपक्रियावाचक इत्यर्थः । धातूनां क्रियावाचकत्वात् गुणैरोत इति कर्मव्युत्पत्तिपक्षे तृतीयातत्कृतार्थेनेति समासः । कर्त्रर्थत्वपक्षे गुणान् ओत इति द्वितीयाश्रितेति सूत्रे गम्यादेरुपसंख्यानमित्यादिशब्देनोतशब्दस्याप्युपादानात्समासः ।

**परि०— गत्याद्यर्थस्येति** । अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिष्विति भीमसेनधातुपाठेऽवतेरनेकार्थत्वोक्तेर्गत्याद्यर्थस्येत्युक्तम् । कथं रूपमित्यत आह **अवतेरिति** । उणादावाद्यपादे 'अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्' इत्यव्यवहितसूत्रात् मन्प्रत्ययमनुवर्त्य 'अवतेष्टिलोपश्च' इति सूत्रे अवतेर्मन्प्रत्ययः टिलोपश्च भवतीति सूत्रार्थ उक्त उणादिवृत्तौ । टिलोपश्चेति सामान्योक्तावपि मन्प्रत्ययस्यैव टिलोपो भवति । टिग्रहणसामर्थ्यात् । अवतिधातोरेव टिलोपे टिग्रहणमनर्थकम् । लोप इत्युक्तावप्यवधातोर्लोपो

भविष्यति । न च 'अलोऽन्त्यस्य' इति परिभाषया अवधातोर्वकारमात्रलोपनिवृत्त्यर्थं टिग्रहणमिति शङ्क्यम् । षष्ठीनिर्दिष्टस्याल एवालोऽन्त्यपरिभाषावतारात् । इह च मन्प्रत्ययविधानार्थमवतेरित्यस्य पञ्चम्यन्तत्वात् । 'अलोऽन्त्यस्य' इति वकारमात्रस्य लोपेऽप्यतो लोप इत्यकारस्य लोपः स्यादेवेत्यनर्थकं टिग्रहणम् । ननु चातो लोप इत्यस्याकारान्तस्य लोप इत्यर्थ इति चेत्सत्यम् । आद्यन्तवदेकस्मिन्नित्याद्यन्तवद्भावसंभवात् । केचित्तु यदि धातोष्टिलोपस्तर्हि 'अवतेर्डिच्च' इति सूत्रकरणेनैवावतेर्मन्प्रत्ययो डिच्चेत्युक्तावपि धातोस्सर्वस्य लोपः सिद्ध इति टिलोप इति न वक्तव्यम् । तेन ज्ञायते प्रत्ययस्यैव टिलोप इति टिग्रहणसामर्थ्यं प्रकारान्तरेणाहुः । तथाच अव् म् इति स्थिते 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' इत्यकारवकारयोर्द्वयोरपि ऊठि कृते सवर्णदीर्घे 'सार्वधातुकार्धधातुकयोरि'ति गुणे 'नेड्वशि कृति' इतीडागमाभावे च ओमिति रूपमित्यर्थः । यद्यप्यङ्गपादे ज्वरत्वरेति सूत्रवृत्तौ क्वौ झलादौ किति परत ऊठ् भवतीत्येवोक्तं न त्वनुनासिके परत इत्यपि । तथाप्युणादिवृत्तौ ज्वरत्वरेत्यूठ् इत्युक्त्वा ओमिति रूपसिद्धेरुक्तत्वात् । 'छ्वोः शूडनुनासिके च' इति पूर्वसूत्रादनुनासिके चेत्येतत् ज्वरत्वरेत्यत्राप्यनुवर्तत इति ज्ञायत इत्यदोषः । धातुवृत्तावप्येवमुक्तेश्च । औणादिकानामर्थानुगत्यदृष्टेरोंपदेऽप्येवमिति शङ्कानिरासायाह **ॐ इतीति** । गतिकर्मेति बहुव्रीहिः । गतिक्रियावाचीत्यर्थः । एवमग्रेऽपि । अन्यत्रेति महाभाष्य इत्येके । निरुक्तग्रन्थ इत्यन्ये । **कर्मणीति** । यद्यप्युणादीनामपि धात्वधिकारविहितत्वेन 'कृदतिङ्' इति कृत्संज्ञकत्वात् 'कर्तरि कृद्' इति कर्तर्येवोणादिः विहितः । तथाऽपि 'उणादयो बहुलम्' इति बहुलग्रहणात् कर्मणीत्युक्तम् । निष्पन्न इति योज्यम् । **श्रुत्यन्तरादीति** । 'ओतं जगद्यत्र स्वयं च पूर्णो वेदोक्तरूपोऽनुपचारतश्च । सर्वैः शुभैश्चाभिहितो न चान्यैरों तत्सदित्येनमतो वदन्ति' इति सप्तदशगीताभाष्योक्तश्रुतिबलात् 'ॐ इति ब्रह्म' इति श्रुतिबलाच्च 'ॐनामा भगवान्विष्णुरधिकोच्चगुणत्वत' इत्यादि तैत्तिरीयभाष्योक्तस्मृतिबलात् । 'ओतमस्मिन् जगत्सर्वमत्युच्चश्चाखिलैर्गुणैः' इत्यादिछान्दोग्यभाष्योक्तस्मृतिबलाच्चेत्यर्थः । कर्मसाधनत्वेऽर्थमाह **गुणैरिति** ॥ कर्तरि निष्पन्नत्वेऽर्थमाह **गुणान्वेति** ॥ **पक्षद्वयेऽपीति** । गतिप्रवेशरूपार्थद्वयपक्षेऽपीति वा कर्तृकर्मणोरन्यतरार्थनिष्पन्नत्वपक्षेऽपि इति वाऽर्थः । **बृहतेरिति** । बृहबृहिवृद्धाविति भीमसेनधातुषु शब्विकरणेषु पठितस्य बृहधातोः तृतीयाध्यायद्वितीयपादे 'आतो मनिन् क्वनिब्वनिपश्च' इति सूत्रानन्तरेण 'अन्येभ्योऽपि दृश्यत' इति सूत्रेण 'मनिन्प्रत्यये दृशिग्रहणसामर्थ्याद्धातोरमागमश्च' इति चतुर्थाध्यायाद्यपादे 'ब्रह्मदृष्टिरुत्कर्षात्' इत्यत्र सुधायां वक्ष्यमाणदिशा रूपमित्यर्थः । यद्यपि बृहिवृद्धावित्यस्मात् 'बृंहेरम्नलोपश्च' इत्यादि चतुर्थपादीयौणादिकसूत्रेण 'मनिन्सर्वधातुभ्य' इति पूर्वसूत्रादनुवृत्तमनिन्प्रत्यये नलोपेऽमागमे यणादेशे च ब्रह्मेति रूपं सिद्ध्यति । न च बृहिधातुरेव नास्ति भीमसेनधातुष्वपाठादिति शङ्क्यम् । अङ्गपादेऽनिदितां हल उपधायाः





'क्ङिति' इति सूत्रे बृंहेश्चानिटीति वार्तिके भाष्ये च बृंहेरुक्तत्वात् । तथाप्यौणादिकसूत्रानुशिष्टानामव्युत्पन्नप्रातिपदिकत्वस्य 'अतः कृकमिकंसकुम्भपात्र' इत्यादिसूत्रे कंसग्रहणेन ज्ञापितत्वात् ब्रह्मशब्दस्य यौगिकत्वासिद्धेरष्टाध्यायीगतसूत्रेणैव रूपादिसिद्धिर्ध्येयेति भावः । अत एवानुमानिकपादे योगादिवृत्तिलक्षणोक्तिप्रस्तावे सुधायामौणादिकानामर्थानुगमादर्शनादित्युक्तम् । नन्वेवं शब्विकरणस्य तिपा निर्देशे बर्हते रूपमेतदिति निर्देशापत्त्या बृहतेरिति कथं निर्देशः । 'पुगन्तलघूपधस्य च' इति गुणेन भाव्यत्वादिति चेत्सत्यम् । अनुक्रियमाणरूपविनाशप्रसङ्गेनाकृतगुणस्यानुकरणात् 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इत्यत्र तृनो णत्वाभावेन निर्देशो यथा तथेत्येके । 'संज्ञापूर्वको विधिरनित्य' इत्यगुणेन निर्देश इत्यपरे । 'अथ कस्मादुच्यते ब्रह्मेति बृहति बृंहयति चे'त्यादि श्रुत्यनुरोधात् शब्विकरणेऽप्यस्ति बृहधातुरित्यन्ये । अत एव दशमगीताभाष्यटीकायां 'अथ कस्मात्' इति श्रुतिव्याख्यानावसर एव बृहतेर्मनिन्नमागमश्चेति उक्तमित्याहुः ।

गु०दी०— **अवतेष्टिलोपश्चेति सूत्रात्** इत्यस्य अवतेर्धातोः मन्प्रत्ययो भवति । प्रत्ययस्थटेश्च लोप इति वृत्त्या स्पष्टीकृतार्थकौणादिसूत्रादित्यर्थः । एवं च मकाराख्यानुनासिके परतः "छ्वोः शूडनुनासिके च" इति सूत्रात् धातुस्थयोश्छकारवकारयोः श ऊठ् इत्येतावादेशौ भवत इत्यवधातुगतवकारस्य ऊकारादेशे कृते 'आद्गुण' इति गुणे च कृते ओमिति शब्दः निष्पन्नो भवति । "एत्येधत्यूठ्स्वि"तिसूत्रोक्तवृद्धिस्तु "ओमाङोश्चे"ति सूत्रप्रयोगबलान्न भवतीति भावः । **कल्याणगुणैर्गुणान्वोततां वक्ति** इत्यत्र गुणैरोत इति व्युत्पत्तौ गुणानां कर्तृता भगवतः कर्मता, गुणान् ओतः गत इति व्युत्पत्तौ गुणानां कर्मता भगवतः कर्तृतेति भावः ।

यादु०— **गत्याद्यर्थस्यावतेरिति** । अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिष्विति धातुव्याख्यानादिति भावः । **अवतेष्टिलोपश्चेति** । अवतेर्मन्प्रत्ययः । प्रत्ययस्य टेर्लोपश्चेत्युणादिसूत्रार्थः । एवं च अव्+म् इति स्थिते ज्वरत्वरेत्यादिनोपधाऽकारस्य वकारस्य चोठिकृते सवर्णदीर्घे सार्वधातुकार्धधातुकयोरिति गुणे च सति ओमिति सिद्ध्यतीति भावः । नन्वत्र न ज्वरत्वरेति सूत्रेणोठः प्राप्तिः । तत्र क्वौ झलादौ किति परतस्तद्विधानादत्र तदभावादिति चेत् । उच्यते । 'च्छ्वोः शूडनुनासिके च' इति पूर्वसूत्रादनुनासिके चेत्यनुवर्तते । एवं चानुनासिकस्य मकारस्यात्र परतो विद्यमानत्वादूठ् स्यादेव । यद्वा ओतुरित्यादिशब्दानामकित्यपि बाहुलकत्वेनोठमङ्गीकृत्य वैयाकरणैः साधितत्वेन प्रकृतेऽकित्यप्यूठ् प्राप्तिरिति ध्येयम् । वस्तुतस्तु 'च्छ्वोः शूडनुनासिके च' इत्यनेनैवात्र धातुवकारस्योठि आद्गुण इति गुणे च कृते ओमिति रूपम् । अत्र 'एत्येधत्यूठ्सु' छान्दसत्वान्न भवति । अत्र चोङ्कारस्य वर्णत्रयात्मकत्वप्रसिद्धिरप्यनुकूला भवतीति ज्ञेयम् । अन्ये तु अवतेर्मन्प्रत्यये बाहुलकेन वकारस्य सम्प्रसारणे गुणे च सति ॐ इति सिद्ध्यतीत्याहुः । **उपपदाद्यभाव इति** । कर्त्रादिवाचकोपपदाभावेऽपीत्यर्थः । आदिपदेन तत्प्रापकवाक्यसमभिव्याहारोऽपि नेति ग्राह्यम् । **योग्यतयेति** ।





प्रमाणबाधेनेत्यर्थः। गुणानां कर्त्रादिभावेनान्वये प्रमाणविरोधो नेति भावः। **बृहतेर्वृद्ध्यर्थस्येति**। बृहवृद्धौ अस्मात् मन्प्रत्यये अमागमे ब्रह्मेति रूपमिति भावः।

**वं०प०— यद्यसौ कर्मणीति**। असाववधातुः। कर्मणि कर्तरि वा मन्प्रत्यये सति ॐ इति निष्पन्नश्चे-दित्यर्थः। **कर्तरीति**। प्रविष्ट इत्यर्थे इत्यर्थः। कर्मसाधनत्वेऽर्थमाह **गुणैरिति**। कर्तरि निष्पन्नत्वेऽर्थमाह **गुणान्वेति**। **पक्षद्वयेऽपि** गतिप्रवेशार्थद्वयेऽपीति वा कर्तृकर्मणोरन्यतरार्थनिष्पन्नत्वपक्षेऽपीति वेत्यर्थः।

**आनन्दः—** ओतत्ववाची हीति मूले हिशब्दस्य प्रसिद्ध्यर्थकत्वं प्रतीयते, तदयुक्तम्। ओतत्ववाचित्वस्य लोके अप्रसिद्धत्वात्। ओतत्वे उक्तेऽपि भेदासिद्धिश्चेत्यतो व्याचष्टे **हिशब्द इति**। ओतत्वस्येत्यस्य व्याख्या गत-त्वस्य प्रविष्टत्वस्य वेति। गतत्वादिरूपार्थवाचकत्वमस्य कुत इत्यत आह **गत्याद्यर्थस्येति**। अवगतौ अवप्रवेशने इति गतिप्रवेशनार्थस्येत्यर्थः। कथमवतेरेवं रूपं निष्पद्यत इत्यत्राह **अवतेष्टिलोपश्चेति सूत्रादिति**। अवतेर्धातोर्मन्प्रत्ययः मन्प्रत्ययस्य टिलोपश्चेत्यर्थः। एवं चावतेर्मन्प्रत्यये तस्य टिलोपे सति अव्-म् इति स्थिते ज्वरत्वरेत्यादिना वकारस्योपधाभूतस्याकारस्य ऊठि सति ऊमिति स्थिते सार्वधातुकेत्यनेन गुणे सति ओमिति रूपनिष्पत्तिरित्यर्थः। एवमोङ्कारव्याख्यानस्य प्रामाणिकैरकृतत्वादपव्याख्यानमेतदित्यत आह **ओमितीति**। तथापि गुणपूर्णत्वसिद्धिः कथमित्याशङ्क्याह **तथा चेति**। तथा चाव्यते गम्यते प्रवेश्यते इति वा अवति गच्छति प्रविशतीति वा कर्तरि कर्मणि वा निष्पन्नेनानेन गुणपूर्णत्वसिद्धिरित्यर्थः। **योग्यतयेति**। प्रकारान्तरेण पूर्णत्वासंभवात् गुणैरेव पूर्णत्वं वक्तव्यमिति भावः। **श्रुत्यन्तरबलात्**। अथ कस्मादुच्यते इति श्रुत्यन्तरबलात्। बृहवृद्धावित्यस्माद्धातोः बृंहेर्नोच्चेति सूत्रेण मन्प्रत्यये बृंहेत्यत्र नकारस्याकारे जाते यणादेशे सति ब्रह्मेति सिद्ध्यतीति भावः।

**कं०रा०— गत्याद्यर्थस्येति**। अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थ्ययाचनक्रिये-च्छादीत्यवात्यालिङ्गनहिंसादानभागवृद्धिष्विति धातुपाठाद्गत्याद्यर्थस्यावतेः ओमितिरूपं निष्पन्नमित्यर्थः। तत्कथ-मित्यत आह **अवतेष्टिलोपश्चेति**। अवतेर्मन्प्रत्ययो भवति तस्य प्रत्ययस्य टिलोपश्चेति सूत्रार्थः। तथा चावतेर्मन्प्रत्यये प्रत्ययस्य टिलोपे च अव्म् इति स्थिते प्रत्ययमकारस्य नेड्वशि कृतीति इट्प्रतिषेधे ज्वरत्वरस्र्व्य-विमवामुपधायाश्चेत्यनुनासिके परतोऽवतेरुपधाकारस्य वकारस्य चोठिकृते तस्य सार्वधातुकार्धधातुकयोरिति गुणे च कृते ओमिति रूपं प्रसिद्धमिति भावः। केचित्तु वकारस्योठि कृतेऽकारोकारयोर्गुणे च ओमिति रूपं निष्पन्नमित्याहुः। तन्न। ज्वरत्वरस्र्व्यविमवामुपधायाश्चेति सूत्रस्य काशिकायां ज्वरत्वरस्रिविअविमव् इत्येतेषामङ्गानां वकारस्योप-धायाश्च स्थाने ऊठित्ययमादेशो भवतीति व्याख्याततत्वेन वकारमात्रस्योठि क्रियमाणे तद्विरोधप्रसङ्गात्। श्रूः ऊः मूः इत्याद्युदाहरणानामसिद्धिप्रसङ्गेन तत्सूत्रस्य वकारमात्रस्योठादेशविधानपरत्वाभावाच्च। न च वाच्यं छ्वोः शूडनुनासिके चेत्यनेनात्रोठ्क्रियत इति। ज्वरत्वरेत्यादिविशेषसूत्रविहितकार्यस्यैवावश्यंभावात्। एत्येधत्यूठ्स्विति वृद्धिप्रसङ्गाच्च। अन्यथोक्तोदाहरणेषु अविसिविसिशुषिभ्यः किदिति अवतेर्मन्प्रत्यये निष्पन्नो य ऊमशब्दस्तत्र च छ्वोरिति सूत्रेण वकारमात्रस्योठादेशापत्त्याऽनिष्टरूपप्रसङ्गादिति। वस्तुतस्तु यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परमपुरुष-





मभिध्यायीतेति श्रुतौ, सोऽयमात्माध्यक्षरमोङ्कारोऽधिमात्रं पादा मात्रा अकार उकारो मकार इति श्रुत्यन्तरे, तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्त अकार उकार मकार इति । तानेकधा समभरत्तदेतदोमिति श्रुत्यन्तरे च ओङ्कारस्याकारोकारमकाररूपवर्णत्रयात्मकत्वोक्तेस्तद्विरोधे ज्वरत्वरेत्यादिसूत्रस्यात्राप्रवृत्तेश्छ्वोरिति सामान्यसूत्रस्यैव चोक्तश्रुत्यनुगुणस्य प्रवृत्तेर्वकारमात्रस्योठि कृते ओमिति श्रौतनिर्देशबलेन एत्येधत्यूठ्स्विति वृद्ध्यप्राप्तौ अकारोकारयोराद्गुण इति गुणे च ओमिति रूपं निष्पन्नम् । ऊः ऊम इत्यादौ श्रुतिविरोधाभावेन ज्वरत्वरेत्यादि-विशेषशास्त्रस्यैव प्रवृत्तेर्नानिष्टरूपप्रसक्तिश्चेति ध्येयम् । परमार्थतस्तु वकारस्य बहुलग्रहणात्संप्रसारणं व्युत्पाद्यम् । तेनाकारोकारमकार इति श्रौतनिर्देश उपपद्यत इति द्रष्टव्यम् । गतिकर्मा गतिरूपक्रियावाची । प्रवेशनकर्मा प्रवेशनरूपक्रियावाची । अनेन गतिप्रवेशनार्थादवतेर्निष्पन्न ओङ्कार ओतत्वस्य प्रविष्टत्वस्य वा वाचक इत्यत्र सम्मतिरुक्ता भवतीति द्रष्टव्यम् । असौ ओङ्कारः । **बृहेरिति** । आतो मनिन् क्वनिब्वनिपश्चेत्यस्मादुत्तरेणान्येभ्योऽपि दृश्यन्त इति सूत्रेण वृद्ध्यर्थबृहेर्मनिन्प्रत्यये दृशिग्रहणसामर्थ्याद्धातोरमागमे ऋकारस्य इको यणचीति यणादेशे च वृद्ध्यर्थस्य बृहेर्ब्रह्मेति रूपमिति भावः । बृहवृद्धावित्यस्य भौवादिकत्वेन श्तिपा निर्देशे शपि गुणावश्यंभावात् बृहतेरिति पाठश्चिन्त्यः ।

**श्रीनिधि०— गत्याद्यर्थस्येति** । आदिपदेन प्रवेशनं गृह्यते । **अवतेष्टिलोपश्चेति सूत्रादिति** । अवतेः अव गति प्रवेशनयोरिति धातोः कर्मणि कर्तरि वा मन्प्रत्ययो भवति । प्रत्ययस्य च टिलोपः न तु धातोः आनर्थक्यप्रसङ्गात् । तथाच मन्प्रत्यये मनष्टिलोपे अव्म्.. इति स्थिते 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' इति सूत्रेण उपधाभूताकारस्य चकारात् वकारस्य च ऊठि कृते 'अकः सवर्णे दीर्घः' इति एकादेशे दीर्घे सार्वधातुकार्धधातुक-योरिति गुणे च ओमिति निष्पत्तिरिति ज्ञेयम् । ननु ज्वरत्वरेति सूत्रे अवीतिरक्षणार्थको धातुर्गृहीत इति प्रसाद-मञ्जर्योः 'अनुनासिकस्य क्विझलोः क्ङिति' (६-४-१५) इत्यतः क्ङितीत्यनुवृत्तेः । प्रकृते च क्ङितोरभावात् कथमूठिति चेन्न । तथापि 'च्छ्वोः शूडनुनासिके चे'त्यतः अनुनासिक इत्यनुवृत्त्या ऊठः संभवात् प्रकृते चानुनासिकस्य म् इत्यस्य परतो विद्यमानत्वात् अथवा अवधातोर्मन्प्रत्यये तस्य च अलोपे अव्म् इति स्थिते 'च्छ्वोः शूडनुनासिके चे'ति वकारस्य अनुनासिके परे ऊठि कृते अऊम् इति स्थिते ओमाङोश्चेति प्रयोगबलेन एत्येधत्यूठ्सु इति वृद्धिं बाधित्वा आद्गुण इति गुणे कृते ॐ इति सिद्ध्यतीति ज्ञेयम् । **गतिकर्मेति** । कर्मशब्देन क्रियोच्यते तथा च गतिलक्षणक्रियार्थ इत्यर्थः । प्रवेशनकर्मा प्रवेशनलक्षणक्रियार्थकः । **अन्यत्र** महाभाष्ये । **असौ** ओङ्कारः **कर्मणि** निष्पन्न इति शेषः । **कर्तुरपेक्षाया**मितीत्यत्रापि संबन्धः । कर्तरि निष्पन्न इति शेषः । **उपपदं** समीपवर्तिपदं आदिपदेन प्रकरणम् । **श्रुत्यन्तरादिबलादिति** । ओतं जगद्यत्र स्वयं च पूर्णो वेदोक्तरूपोऽनुपचारतश्चेत्यादि श्रुतिः । ॐनामा भगवान् विष्णुरधिकोच्चगुणत्वत इति स्मृतिरादिपदार्थ इति ज्ञेयम् । **बृहतेर्वृद्ध्यर्थस्येति** । बृंहेरम् नलोपश्चेति सूत्रेण चकारान्मन्प्रत्ययो भवति । धातोरमागमे न लोपे च सति ब्रह्मेति रूपसिद्धिरिति ज्ञेयम् । बृहिधातुश्चेत् नलोपव्यतिरेकेण सर्वं द्रष्टव्यम् ।

**वा०चं०**— 'ओतत्ववाची'ति 'वक्त्यसौ तद्गुणोततामि'ति चोङ्कारस्य वाच्यद्वयकथनपरमिति भ्रान्तिं निवारयति **हि शब्द इति** । ओतत्ववाचीत्यस्य तद्गुणोततामित्यस्य च हिशब्दसूचितहेतुहेतुमद्भावं तथा चेत्यादिना





स्पष्टयितुं हेतुसिद्धिं तावदाह **ओङ्कार इति**। वक्ष्यमाणसाध्यप्रतिपादनापेक्षया तावच्छब्दः। **सूत्रादिति**। 'अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्' इत्यतोऽत्र मन् इत्यनुवृत्तेरवतेर्मन् तस्य च टेर्लोप इति सूत्रार्थः। (अवतेष्टिलोपश्च। मन्प्रत्ययस्यायं टिपोलो न प्रकृतेः। अन्यथा डिदित्येव ब्रूयात्। ज्वरत्वरेत्यूठौ। तयोर्दीर्घे कृते गुणः। चादिपाठादव्ययत्वमित्युज्वलदत्तः। तन्न। तेषामसत्त्वार्थत्वात्। वस्तुतस्तु स्वरादिपाठादव्ययत्वम्। अवतीत्योम्। ॐ प्रश्नेऽङ्गीकृतौ रोष इति विश्वः)। (ज्वरत्वरस्रिव्यविमवामुपधायाश्च। ज्वरादीनामुपधावकारयोरूठ् क्वौझलादावनुनासिकादौ च प्रत्यये। च्छ्वोः शूडनुनासिके च। सतुक्कस्य छस्य वस्य च क्रमात् श ऊठ् एतावादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति। अर्तीति सूत्रोदाहरणानि तु अर्मः चक्षूरोगः। स्तोमः सङ्घातः। सोमः। होमः। सर्मो गमनं। धर्मः। क्षेमम् कुशलम्। क्षोमम्। प्रज्ञाद्यणि क्षौमं च। भामः आदित्यः भामः। क्रोधे रवौ दीप्तौ। यामः। वामः शोभनदुष्टयोः। पद्मम्। यक्ष पूजायां यक्ष्मो रोगराजः। नेमः कीले। नेमः कीलेऽवधौ गर्ते प्राकारे कैतवेऽपि चेति मेदिनी। नेमस्त्वर्धे प्राकारगर्तयोः। अवधौ कैतवे चेति हेमचन्द्र इति द्रष्टव्यानि)। एवं च ज्वरत्वरेत्यत्र पूर्वसूत्रादनुनासिक इत्यस्यानुवृत्तेर्धातुवृत्तिकारादिभिर्व्याख्यातत्वात् उपधावकारयोरूठि गुणे च तद्रूपनिष्पत्तिरिति भावः। गतिकर्मेत्यादौ कर्मशब्दोऽर्थपर्यायविषयसमर्पक इति प्रसिद्धमेव। **यद्यसौ कर्मणीति**। 'कर्तरि कृदि'त्युक्तावपि 'उणादयो बहुलमि'त्युक्तबाहुलकाभिप्रायेणेदमुक्तमिति ध्येयम्। अत्र प्रविष्टत्वार्थानुसारेण कर्मणीति गत्यर्थानुसारेण कर्तरीति व्यवस्थयोक्तम्। यद्वोभयार्थत्वेऽप्युभयम्। प्रवेशो हि संबन्धविशेष इति गुणान्विशतीत्यपि युज्यत इति द्रष्टव्यम्। श्रुत्यादौ सतात्पर्यं गुणपरिपूर्णत्वप्रतिपादनाद्दोषादेश्च निषिद्धत्वाद्देशकालौतत्ववद्गुणौतत्वस्यापीति प्रतिपादनयोग्यत्वमित्याह **योग्यतयेति**। 'बृहन्तो ह्यस्मिन् गुणा इती'त्यादिवदत्रापि श्रुत्यन्तरमुन्नेयमिति भावः। आदिपदेन स्मृतिसङ्ग्रहः। योग्यतयेत्युक्तत्वादानन्दादिग्रहणम्। सङ्कोचे कारणाभावाभिप्रायेण अनन्तेत्युक्तम्। कर्मकर्त्रोः प्रत्ययोत्पत्तिपक्षद्वये गतिप्रवेशार्थकत्वरूपपक्षद्वयेऽप्यर्थे न कोऽपि विशेष इत्याह **पक्षेति**। **ब्रह्मेति**। या तद्गुणोततेति शेषः। 'उद्दिश्यमानप्रतिनिर्दिश्यमानयोरैक्यमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गभाञ्जि भवन्ती'त्युक्तत्वादर्थशब्दाभिप्रायेण स एवेति पुल्लिङ्गम्। **बृहतेरिति**। यद्यपि बृहेर्नोऽच्चेति बृहेर्मनिनि नकारस्याकारे च (नकारस्येति बृहेर्नकारस्येत्यर्थः) ब्रह्मशब्दो व्युत्पादितस्तथाऽपि बृहबृहिवृद्धाविति बृहतेरपि पाठादन्येभ्योऽपि दृश्यत इति मनिनि दृशिग्रहणसामर्थ्यादमागमेन तस्यैवैतद्रूपमित्यभिसन्धायैवमुक्तमिति ध्येयम्। (सर्वधातुभ्यो मनिन्। क्रियत इति कर्म। चर्म भस्म। शर्मेत्यादि। बृंहेर्नोच्च। नः। नकारस्याकारः। ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः। ब्रह्म तत्त्वं तपो वेदो न द्वयोः पुंसि वेधसि। ऋत्विग्योगभिदोः विप्रे इति मेदिनीत्यौणादिके चतुर्थपादे)। यद्यपि इदित् बृहे रूपाश्रयणेन दृशिग्रहणसामर्थ्यमाश्रयणीयं तथाऽपि बृहजातिजीवेति धात्वन्तरादप्येतद्रूपनिष्पत्तिरिति सूचनायैवमुक्तमिति द्रष्टव्यम्।

**वा०र०— वक्ष्यमाणसाध्येति**। गुणैर्गुणान्वोततां वक्तीति साध्येत्यर्थः। मूले **ओतत्वस्येत्यनूद्य गतत्वस्ये**त्यादिव्याख्यानद्वयम्। गतत्वादेरोतशब्दार्थतामुपपादयति **गत्याद्यर्थस्येति**। तथा धातुव्याख्यानादिति भावः। सूत्रार्थप्रतीतेराह अर्तिस्तुसुहुसृभिक्षुभायावापदियक्षिनीभ्यो मन्नित्यत इत्यादि। अर्त्यादिधातुभ्यो मन्विधायकात्सूत्रादित्यर्थः। अर्मः स्तोमः सोमः होमः सर्मः धर्मः क्षेमं क्षोमं भामः यामः पद्मं यक्ष्मः नेम





इत्युदाहरणानि। भायावापदीत्यौणादिकसूत्रपाठे तु वाम इत्युदाहरणं च ज्ञेयम्। प्रत्ययस्य डित्करणेनैव धातुटिलोपसिद्ध्या सूत्रे टिलोप इत्यस्य गुरुत्वापातादोमिति रूपसिद्धिविरोधित्वाच्च धातोष्टिलोप इत्यर्थानुपपत्तिरित्यभिप्रेत्यार्थान्तरमुक्तं **तस्य चेति**। मन्प्रत्ययस्येत्यर्थः। तथाच गत्यर्थकात्प्रवेशार्थकाद्वा अवतेर्मन्प्रत्यये मनश्च टिलोपे अव्म् इति स्थिते भवतीति सिद्धवत् कृत्या उपपादनसापेक्षत्वात् तमुपपादयितुमाह **एवं चेति**। **पूर्वसूत्रादिति**। छ्वोः शूडनुनासिके चेति पूर्वसूत्रादित्यर्थः। **अनुनासिक इत्यस्येति**। तत्र सूत्रे क्विझलोः क्ङितीत्यनुवृत्त्या क्वौ झलादौ च क्ङिति परे इत्यर्थलाभेन तस्मिन्परतो विद्यमान एव ज्वरत्वरेत्यनेनोठः प्राप्तावपि तदन्यत्र तदप्राप्त्या तस्मिन् परतस्तदतिरिक्तानुनासिके च परतः ऊठ्भवतीत्यर्थसिद्ध्यर्थं पूर्वसूत्रादनुनासिक इत्यस्यानुवृत्तेः काशिकादौ व्याख्याततत्वादुक्ताशयेनैव धातुवृत्तिकृतोठ आश्रयणेनोम्शब्दव्युत्पादनादन्यत्रापि तथोदाहरणाच्चेत्यर्थः। **उपधावकारयोरिति**। ज्वरत्वरस्रिव्यविमवामुपधायाश्चेति सूत्रेण ज्वरादिशब्दानां वकारस्य तदुपधायाश्चोठ्विधायकेनावतेर्वकारस्य तदुपधाकारस्य च मकाररूपानुनासिके परत ऊठि सवर्णदीर्घे सार्वधातुकार्धधातुकयोरित्यनेन गुणे ओमितिरूपमित्यर्थः। वक्ष्यति च। वकारस्य तदुपधाकारस्य चेति। एतेनावतेर्मन्प्रत्यये बाहुलकेन वकारस्य संप्रसारणे आद्गुण इति गुणे च सति ओमिति रूपमिति वदन्तो निरस्ताः। धातुवृत्त्यादिव्याख्यानानुसारेण ज्वरत्वरेत्यनेनैवोठ्संभवे बाहुलकेन संप्रसारणस्यानाश्रयणीयत्वात्। यत्ववतेर्मन्प्रयये छ्वोः शूडनुनासिके चेत्यनेन वकारस्योठि ओमिति रूपमिति कैश्चिद्व्युत्पादितम्। तदसत्। एत्येधत्यूठ्स्वित्यूठ्परत्वनिमित्तकवृद्धेः प्राप्त्या औमितिरूपप्रसङ्गात्। न च अउम् इति स्थिते उम् इत्यत्र प्रथमतः सार्वधातुकेति गुणः अ ओमिति च स्थितम्। तत्र ओमाङोश्चेति पररूपप्रसक्त्या ओमितिरूपाप्रतिहतिरिति वाच्यम्। मन्प्रत्ययकार्यभूतसार्वधातुकगुणापेक्षया प्रकृत्यवयववकारस्थानिकोठ्निमित्तकैत्येधत्यूठ्स्विति सूत्रप्राप्तवृद्धेरन्तरङ्गत्वेन अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवदिति न्यायेन प्रथमत ऊठ्निमित्तकवृद्धेरेव प्राप्त्या औमितिरूपापत्तेः दुर्वारत्वादित्येवमयं पक्षो गुरुचरणैः पृथगेव पराकृतोऽस्ति॥ यदप्यन्यैरवतेर्मन्प्रत्यये छ्वोः शूडनुनासिके चेति वकारस्योठि बाहुलकाद्वा ओमाङोश्चेति सौत्रप्रयोगबलाद्वेत्येधत्यूठ्स्वित्यूठ्निमित्तकवृद्ध्यप्राप्त्युपपत्त्या आद्गुण इति गुणे ओमिति रूपनिष्पत्तिरिति प्रतिपादितम्। तदप्यसत्। वृत्त्याद्यनुसारेण ज्वरत्वरेत्यनेनैव ऊठोऽङ्गीकारे बाहुलकानाश्रयणोपपत्त्या ओमाङोश्चेति सौत्रप्रयोगस्याप्युक्तरीत्योठमङ्गीकृत्यैवोपपादयितुं शक्यत्वेन च बाहुलकाश्रयणेन सौत्रयोगबलेन चोठि वृद्ध्यभावोपपादनायोगात्। एतेनान्यथाख्यातिरपि निरस्ता। निराकृता च गुरुचरणैर्विनोद इत्यलम्॥ **अन्यत्रापि निरुक्तत्वादिति** मूलस्य यास्कनिर्मितनिरुक्ते गतिकर्मेत्यादेः प्रतिपादनादित्यर्थः। तत्र कर्मपदार्थं वक्तुं तदर्थस्य प्रसिद्धत्वमेवाह **गतिकर्मेत्यादाविति**। ततश्च गतिकर्मेत्यादेर्गत्यर्थः प्रवेशनार्थ इत्यर्थो गत्यादिविषय इति यावदित्युक्तं भवति। हिशब्दसूचितहेतुहेतुमद्भावोपपादनाय प्रवृत्ते तथा चेत्यादिमूले यद्यसौ कर्मणीत्युक्तमुपपादयितुमाह **यद्यसौ इत्यादि**। बाहुलकात्कर्मण्यपि मन्प्रत्ययप्राप्तिरित्यर्थः। ताभ्यामन्यत्रोणादय इत्यनेन संप्रदानापादाने विहाय कर्मादावप्युणादीनां विधानात्कर्मण्यत्र कृदिति भाव इति गुरवः। असौ ओङ्कारो यदि कर्मणि प्रत्यये निष्पन्न इति योज्यम्। एवं कर्तरीत्यत्रापि। उपपदशब्द उपोच्चारितं पदमिति व्युत्पत्त्या ततःपूर्वमुच्चार्यमाणकर्त्रादिवाचिशब्दपरोऽत्र विवक्षितः। तेन तत्रोपपदं सप्तमीस्थमिति तृतीयधात्वधिकारे सप्तम्या निर्दिष्टस्यैवोपपदत्वात्कथमत्रोपपदत्वप्रसक्तिरिति शङ्कानवकाशः। अन्तरधिकरणादावधिकं निरूपयिष्यत इति





ज्ञेयम् । गतत्वस्य प्रविष्टत्वस्येति पूर्वग्रन्थानुसारेण कर्मणि कर्तरीत्यत्र गुणैरानन्दाद्यनन्तकल्याणगुणान्वोतता-मित्यत्रत्यगुणैरोततां गुणान्वोततामित्येतयोश्च गतत्वप्रविष्टत्वरूपार्थद्वयं क्रमेणेति प्रतीयते । न च तत्संभवति । गुणानां भगवत्प्रवेशोऽपि भगवतस्तत्प्रवेशायोगादित्यतोऽत्र यथाक्रमं संबन्धो नाभिमतः । किन्तु यथायोग्यमेव । तथाच गुणैः प्रविष्टतां गुणान् गततामित्येवार्थ इत्याशयेनाह **अत्र प्रविष्टत्वार्थेति** । अत्र पक्षे क्रमपरित्यागः कार्यः । भगवतो गुणान्प्रति प्रवेशस्यायोग इव तान्प्रति गतत्वस्याप्ययोग एवेत्यतो गतिर्नाम संबन्धविशेष इत्याश्रयणीयम् । तच्च प्रवेशार्थेऽपि समानमित्यनुशयं द्योतयन् यथा क्रमपक्षेऽपि विशेषान्तरं वदन् पक्षान्तरमाह **यद्वोभयेति** । **इत्यपि युज्यत इति** । उपलक्षणं चैतत् । गुणान् गत इत्यपि युज्यत इत्यपि द्रष्टव्यम् । गुणैः प्रविष्ट इत्यादेः सङ्ग्रहायेत्यपीत्यपिशब्दः । मूले कर्तुरपेक्षायां कर्मणोऽपेक्षायामित्येतयोरोङ्कारो वक्तीत्यन्तेनैवान्वयो वाच्यः । तत्र चोङ्कारेण गुणैर्गुणान्वोततताया वचने योग्यता श्रुत्यन्तरादिबलं चोदाहृतम् । तेन चोङ्कारेण गुणैरोतत्वादिप्रतिपादनं योग्यतयेति संबन्धसिद्ध्या गुणौतत्वस्य प्रतिपादनयोग्यत्वमिति लाभ इत्यभिप्रेत्य कथं तस्य प्रतिपादनायोग्यत्व-मित्यतस्तत्र साधकबाधकभावाभावौ वदन् दृष्टान्तं चाह **श्रुत्यादाविति** । अत्र च प्रतिपादनयोग्यतापर्यन्तं धावनमुक्तरीत्या अपेक्षायामित्यनेन संबन्धोपपत्तये एकवाक्यत्वोपपत्तये च कृतमपि फलतो गुणानां योग्यतावत्त्व-मभिप्रैति । तत एव तेषां कर्तृत्वेन कर्मत्वेन वा संबन्धो युक्त इति च सूचितम् । अत एव योग्यतयेत्युक्तत्वादिति वक्ष्यति । अन्यथैकवाक्यत्वानाश्रयणेऽपेक्षायामित्यनेन संबन्धार्थं योग्यतया श्रुत्यन्तरादिबलाद्वेत्यनन्तरं गुणानां संबन्धे प्राप्त इति शेषपूरणं कर्तव्यं स्यात् । न चोक्तरीत्यैकवाक्यत्वोपपत्तौ गुणानां चार्थतो योग्यताया लाभे सति प्रयोजनान्तराभावे च सति वृथा शेषपूरणं कल्पनार्हम् । एतेनैव गुणानां कर्त्रादिभावेनान्वये प्रमाणविरोधो नेति भाव इति योग्यतयेत्येतद्भाववर्णनमप्यन्यथाख्यातिस्थं परास्तम् । योग्यतयेत्यनन्तरमन्वयोपपत्त्यर्थं गुणानां संबन्ध इत्यध्याहारकल्पनापातात् । तच्चानावश्यकमिति प्रागेवोक्तमिति ज्ञेयम् । पक्षद्वय इत्यस्य द्वेधा अर्थं वदन्नव-तारयति **कर्मकर्त्रोरिति** । ब्रह्मशब्दस्यापि स एवार्थ इति बुद्ध्या विवेकमाश्रित्य स एवेति भाष्ययोजनाया मूले गुणपूर्णतैवोङ्कारस्यार्थ इति पूर्वमूलप्रकृतोङ्कारार्थस्य स इत्यनेन परामर्श इति भ्रान्तिवारणायाह **या तद्गुणोततेति शेष इति** । तद्गुणोततामिति पूर्वानुव्याख्याने द्वितीयान्तप्रकृतगुणोततताया एव स इत्यनेन परामर्शः । तथा चोङ्कारोक्ता या तद्गुणोतता स एवार्थ इति योज्यमिति भावः । नारायणपदोदित इत्युक्तभाष्यमूले तु ब्रह्मशब्दार्थ इति प्रकृतानुसारेणार्थं पुरस्कृत्य यो गुणपूर्णत्वाख्य इति वक्ष्यतीति न दोषः । ननु ब्रह्मशब्दस्य योऽर्थः या तद्गुणोततेति योजनापि न युक्ता । यत्तच्छब्दयोः समानविषयतया स्त्रीलिङ्गयच्छब्दानुसारेण तच्छब्दस्यापि स्त्रीलिङ्गस्यैव प्रयोक्तव्यत्वादित्यत आह **उद्दिश्यमानेति** । **उक्तत्वादिति** । अथ गौरित्यत्र कः शब्दः किं यत्सास्नालाङ्गूलककुदखुरविषाणार्थरूपं स शब्दो नेत्याहेति प्रथमभाष्यव्याख्यावसरे यत्तच्छब्दयोः समानविषयत्वादित्युक्तानुपपत्तिपरिहारायोपदिश्यमानेत्यादेः कैयटे परिभाषेयं नाधिकार इति इको गुणवृद्धी इत्येतत्सूत्रीयकाशिकामञ्जर्यां चोक्तत्वादित्यर्थः । सिद्धवत्कीर्तनमुद्देशः । प्रतिपाद्यतयाऽभिधानं प्रतिनिर्देश इति प्रदीपविवरणे व्याख्यातम् । एतदेव गूढार्थदीपिकायां विवृतम् । किञ्चित्कार्यं विधातुं कीर्त्यमानमुद्दिश्यमानम्, प्रतिपाद्यार्थप्रतिपादकं प्रतिनिर्दिश्यमानमिति । अनूद्यमानविधीयमानेति कुसुम विकासे चोक्तम् । तथा चोद्दिश्यमानप्रतिनिर्दिश्यमानयोः किञ्चित्कार्यं विधातुं कीर्त्यमानतत्प्रतिपाद्यमान-





रूपार्थपरत्वात् तयोश्चोद्देश्यविधेययोरैक्यस्य यस्ते पिता स एव मे गुरुरित्यादौ सर्वनामभ्यां प्रतिपादनदर्शनात्तदैक्य-प्रतिपादकसर्वनाम्नामुद्देश्यविधेयवाचिपदक्रमेण तत्तद्विशेषणत्वप्रयुक्ततत्तल्लिङ्गभाक्त्वमिति सिद्धत्वात् या तद्गुणो-ततेत्यादौ गुणोततारूपोद्दिश्यमानस्यार्थरूपप्रतिनिर्दिश्यमानस्य चैक्यमापादयतोर्यत्तच्छब्दयोर्वाक्यक्रमेण यच्छब्दे स्त्रीलिङ्गता तच्छब्दे तु पुल्लिङ्गम् । तद्विशेष्यभूतप्रतिनिर्दिश्यमानभूतार्थस्य पुल्लिङ्गत्वादित्यर्थः । वृत्तिविचार-स्थलीयान्यार्थो लक्ष्यते यत्सेत्यादिकाव्यसूत्रार्थकथनटीकायामाधारोऽधिकरणमित्यत्रत्यं य आधारस्तदधिकरणमिति व्याख्यानं निदर्शितं ज्योतिरधिकरणे । तत्रापि इदमेवोपपादनमभिप्रेतम् । **बृहतेर्विध्यर्थस्येति** मूले बृहधातोरेव मनिन्प्रत्ययाश्रयणमाश्रितम् । तत्प्रकारान्तरसंभवे निर्निबन्धनमित्याक्षिपति । यद्यपि **बृंहेर्नोऽच्चेतीति** । बृहि वृद्धावितीदितः बृहिधातोरिदित्वादिदितो नुम्धातोरित्यनेन नुमि सति इका निर्देशे बृहेरिति प्राप्नोति । अत्र च सूत्रे पूर्वसूत्रान्मनिनिति वर्तते । एतत्पूर्वं हि मनिनित्येव सर्वधातुभ्यो मनिन्विधायकं सूत्रम् । पाठान्तरे मनिन् सर्वधातुभ्य इति सूत्रम् । सिद्धान्तकौमुद्यां तु सर्वधातुभ्यो मनिनित्येव पठितम् । कथमपि मनिन्विधानमिति सिद्ध्यति । अत एवात्र बृंहेर्मनिन् इति नकारद्वयपाठ एव स्वरसः । तथाच बृंहेर्धातोर्मनिन् । नः नकारस्य चाकारो भवतीति सूत्रार्थात्प्रकृतेऽपि बृंहिधात्वाश्रयणे ब्रह्मेति रूपमौणादिकप्रत्ययाश्रयणेनैव संभवतीति तत्परित्यागेन प्रकारान्तराश्रयणेन बृहतेरूपाश्रयणं किमर्थमित्याशयः । सत्यमुक्तप्रकारेण बृंहिधात्वन्तरादपि ब्रह्मेति सिद्ध्यतीति । तथापि बृंहेरिव बृहतेरपि वृद्ध्यर्थतया पाठात् तद्धातोरप्युक्तप्रत्यये ब्रह्मेति रूपं सिद्ध्यतीति दर्शयितुं बृहधातूपादान-मिति प्रयोजनं दर्शयति । तथापि **बृहबृंहिवृद्धावितीति** । चतुर्थे ब्रह्मदृष्टिरुत्कर्षादित्येतत्सूत्रीयोत्कृष्टो ब्रह्म-शब्दार्थः पूर्णत्वं ब्रह्मता यत इति अनुव्याख्यानमूले वृद्ध्यर्थाद्बृहतेरित्यादिकमुक्तम् । तदेतत्प्रकारान्तरमत्राभि-प्रेत्य खल्वेतद्रूपमित्युक्तमित्यतः तत्प्रकारस्य स्वयं स्पष्टीकरणमन्येभ्योऽपीत्यादि । **अमागम इति** । मित्वा-दृकारात्परत्वेमनिचि सतीति ज्ञेयम् । ननूक्तप्रकारद्वयमध्ये बृहिधात्वाश्रयणपक्षस्य बृहतिधात्वाश्रयणापेक्षया स्वरसत्वेन साम्याभावात् स्वरसबृहेराश्रयणमेव व्याख्येयम् । न तूपपादनसापेक्षबृहतेः वृध्यर्थलाभस्याविशेषादिति शङ्कापि । उदितेति पाठः । ब्रह्मदृष्टिरुत्कर्षादितीत्यत्रत्यटीकायां तथैव पाठात् । यद्यपि इदित्बृहेरिति बृहेराश्र-यणेन इदित्वादेव नुमि नकारस्याकारेणैव विवक्षितसिद्धिरिति सूचनायेदितेति विशेषणम् । न प्रकृताभि-प्रायेणैवैतद्धातुप्रत्ययोपादानमपि तूक्तप्रकारेण प्रकृते वृद्ध्यर्थकब्रह्मशब्दनिष्पत्त्युपपादनसंभवेऽपि बृहजातीति धात्वन्तरादपि मनिन्प्रत्यये ब्रह्मेतिरूपसद्भावात् तत्र चामागमं विना निर्वाहायोगात् तदर्थं च दृशिग्रहणं सामर्थ्याश्रयणस्यावश्यकत्वात् तन्न्यायेनात्राप्युपपादनसंभवात् । सार्वत्रिकोऽयं प्रकार इति वस्तुस्थितिकथनाय एतत्प्राकाराश्रयणमिति भावेन समाधत्ते **तथापि बृहजातीति** । उपलक्षणं चैतत् । यद्यपि च बृंहेर्न लोपश्चेति सूत्रेण बृंहेर्नलोपः चशब्दादमागमश्चेति विधानमाश्रित्य ब्रह्मेति रूपसिद्धिस्तथापि बृहजातीत्यादीत्येवं शङ्कान्तर-तन्निरासावपि कर्तव्यौ । बृंहेर्नलोपश्चेति सूत्रस्येति प्रकरणे पाठमाश्रित्य बृहेरिति प्रत्यये बर्हिरिति रूपमि-त्याश्रित्याप्येतत्सूत्रस्यैव मनिन्प्रकरणे पाठमाश्रित्यापि काशीस्थयाजुषस्वरमञ्जरीकृतनलोपामागमौ व्याख्याय ब्रह्मेतिरूपसिद्ध्यर्थतायाः स्वीकृतत्वात् । ब्रह्मणे ब्राह्मणमालभते ।





**स०व्र०— अवतेष्टिलोपश्चेतिसूत्रादिति** । अवतेर्धातोर्मन्प्रत्ययस्तस्य च टिलोपो भवतीति सूत्रार्थः । तथाच गत्यर्थकात्प्रवेशार्थकाद्वा अवतेर्मन्प्रत्यये तस्य च टिलोपे अव्म् इति जाते 'छ्वोः शूडनुनासिके चे'ति पूर्वसूत्रस्थस्यानुनासिके चेत्यस्य ज्वरत्वरेत्यत्र धातुवृत्तिकारादिभिर्व्याख्यातत्वेन मस्यानुनासिकत्वेन ज्वरत्वरेत्यनेन वकारस्य लघूपधाकारस्य चोठि सवर्णदीर्घे 'सार्वधातुकार्धधातुकयो'रित्यनेन गुणे ओमिति रूपनिष्पत्तिः । नन्वत्र छ्वोः शूडनुनासिके चेत्यनेन वकारस्योठि जाते 'एत्येधत्यूठ्स्वि'ति ऊठ्परत्वनिमित्तप्राप्तवृद्ध्यपेक्षया अउम् इत्यत्र 'सार्वधातुकार्धधातुकयोरि'त्यनेन आदावेव गुणे पश्चादोमाङोश्चेति पररूपे ओमितिरूपनिष्पत्तिसंभवेन ज्वरत्वरेत्यत्रानुनासिके चेत्यस्य वृत्तिकाराद्यनुक्तानुवृत्त्याश्रयणेनोठ्करणमनुपपन्नमिति चेन्न । मन्प्रत्ययकार्यभूतसार्वधातुकगुणापेक्षया प्रकृत्यवयववकारस्थानिकोठ्निमित्तकैत्येधत्यूठ्स्विति सूत्रप्रापितवृद्धेरन्तरङ्गत्वेन तस्यामेव प्रथमतो जातायामौमितिरूपापत्त्या छ्वोः शूडिति सूत्रेणेठोऽसंभवात्तत्सूत्रस्थस्यानुनासिके चेत्यस्य ज्वरत्वरेत्यत्रानुवृत्त्याश्रयणस्यावश्यकत्वादिति । यद्वा अवतेर्मन्प्रयये बाहुलकेन वकारस्य सम्प्रसारणे गुणे च जाते ओमितिरूपनिष्पत्तिरिति द्रष्टव्यम् । **श्रुत्यन्तरादिबलादिति** । 'ओतं जगद्यत्र स्वयं च पूर्णो वेदोक्तरूपोऽनुपचारतश्चे'त्यादिश्रुत्या 'ॐनामा भगवान् विष्णुरधिकोच्चगुणत्वत' इत्यादिस्मृत्या चैवमेव प्रतिपादितमिति भावः ।

**कुण्डल०— गत्याद्यर्थस्येति** । अव रक्षणकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थ्ययाचनक्रियेच्छादीप्त्यव्याप्त्यालिङ्गनहिंसादानभागवृद्धिष्विति धातुपाठाद्गत्याद्यर्थस्यावतेर्धातोरोमित्येतद्रूपमित्यर्थः । तदेवोपपादयति **अवतेरिति** । अस्य सूत्रस्यायमर्थः । अवतेर्धातोर्मन्प्रत्ययो भवति प्रत्ययस्य टिलोपश्चेति । तथाचाव्म् इति स्थिते प्रत्ययमकारस्य नेड्वशिकृतीति इट्प्रतिषेधे । ज्वरत्वरस्रिव्यविमवामुपधायाश्चेत्यनेनानुनासिके परतः अवतेरुपधायावकारस्य चोठि कृते तस्य सार्वधातुकार्धधातुकयोरिति गुणे चोमिति रूपं सिद्ध्यतीति भावः । केचित्तु वकारस्योठिकृते अकारोकारयोर्गुणे चोमिति रूपमित्याहुः । तन्न । ज्वरत्वरेतिसूत्रव्याख्यानावसरे काशिकायां ज्वरत्वरस्रिविअविमव् इत्येषां अङ्गानां वकारस्योपधायाश्च स्थाने ऊठ् इत्ययमादेशो भवतीति व्याख्यातत्वेन वकारमात्रस्योठि तद्विरोधात् । जूः तूः स्रूः ऊः मूः इत्याद्युदाहरणानामसिद्धिप्रसङ्गेन एतत्सूत्रस्य वकारमात्रस्योठादेशविधानपरत्वाभावाच्च । न च वाच्यं च्छ्वोः शूडनुनासिके चेत्यनेनात्रोठ्क्रियत इति ज्वरत्वरेति विशेषसूत्रविहितकार्यस्यैवावश्यंभावात् । एत्येधत्यूठ्स्विति वृद्धिप्रसङ्गाच्च । अन्यथोक्तोदाहरणेषु । अविशिविशुषिभ्यः किदिति अवतेर्मन्प्रत्यये निष्पन्नोऽयं शब्दः तत्र च च्छ्वोरिति सूत्रेण वकारमात्रस्योठादेशापत्त्यानिष्टरूपप्रसङ्गात् । वस्तुतस्तु यः पुनरेतं त्रिमात्रेण ओमित्यनेनैवाक्षरेण परमपुरुषमभिध्यायीतेति श्रुतौ सोऽयमात्माध्यक्षरमोङ्कारोऽधिमात्रं पादा मात्रा अकार उकार मकार इति श्रुत्यन्तरे तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकारउकारमकार इति तानेकधा समभरत् तदेतदोमिति श्रुत्यन्तरे चोङ्कारस्याकारोकारमकाररूपवर्णत्रयात्मकत्वोक्तेस्तद्विरोधे ज्वरत्वरेत्यादिसूत्रस्याप्रवृत्तेः । च्छ्वोरिति सामान्यसूत्रस्येकोक्तश्रुत्यनुगुणस्य प्रवृत्तेः वकारमात्रस्योठिकृते ओमिति श्रौतनिर्देशबलेनैत्येधत्यूठ्स्विति वृद्ध्यप्राप्तौ अकारोकारयोः आद्गुण इति च गुणे ओमिति रूपसिद्धिः । ऊः ऊमित्यादौ श्रुतिविरोधाभावात् ज्वरत्वरेत्यादिविशेषशास्त्रस्यैव प्रवृत्तेर्नानिष्टरूपप्रसक्तिरिति । अथवा बहुलग्रहणेन वकारस्य संप्रसारणं तेनाकारोकारमकारा इति श्रौतनिर्देश उपपन्न इति द्रष्टव्यम् । **गतिकर्मेति** ।





गतिरूपक्रियावाची प्रवेशनक्रियावाचीत्यर्थः । अनेन गतिप्रवेशनार्थादवतेः निष्पन्न ओङ्कार ओतत्वस्य गतत्वस्य प्रविष्टत्वस्य च वाचक इत्यत्र संमतिर्दर्शिता । **असाविति** । ओङ्कार इत्यर्थः । **कर्मणीति** । व्युत्पन्न इति शेषः । **उपपदेति** । कर्त्रादिसमर्पकोपपदस्य आदिपदाद्वाक्यस्य चाभावेऽपि गुणानां कर्त्रादिभावेन ब्रह्मान्वययोग्यतयेत्यर्थः । **ओततामिति** । जिज्ञास्यस्य ब्रह्मणः कल्याणगुणैः प्रविष्टतां गुणान् प्रति गन्तृतां वा वक्तीत्यर्थः । **बृहेरिति** । आतो मनिन् क्वनिब्वनिपश्चेत्यस्मादुत्तरेण अन्येभ्योऽपि दृश्यन्ते इति सूत्रेण वृद्ध्यर्थस्य बृहेर्धातोर्मनिन्प्रत्यये दृशिग्रहण-सामर्थ्यात् धातोरमागमे ऋकारस्येको यणचीति यणादेशे च ब्रह्मेतिरूपमित्यर्थः । बृहवृद्धावित्यस्य भौवादिकत्वेन श्तिपानिर्देशे शपि गुणावश्यंभावात् बर्हतेरिति पाठः स्यात् । न तु बृहतेरिति । अतः बृहेरित्येव पाठः साधुः न तु बृहतेरिति ॥

**विठ्ठ०**— कथम् ओमित्यस्य प्रविष्टत्ववाचकत्वमित्यत आह **अवतेरिति** । अव गतिप्रवेशनयोरिति धातोः मन्प्रत्यये प्रत्ययस्य टेर्लोपश्चेत्युणादिसूत्रार्थः । तथाच अव्म् इति स्थिते ज्वरत्वरेत्यादिसूत्रेण अवधातो-रवकारयोरूठिकृते ऊऊम् इति स्थिते सवर्णदीर्घे सति ऊम् इति निष्पत्तौ सार्वधातुकेति गुणे ओं इत्येतत् रूपसिद्धि-रिति भावः । एवमेव महाभाष्येऽप्युक्तमित्याह **ओमिति** । **पुनरिति** । ओङ्कारस्य प्रविष्टार्थत्वेऽपि गुणपूर्त्यर्थकत्वं कथमित्यत आह **तथाच यद्यसौ कर्मणीति** । कर्तुः इत्यतःपरं अपेक्षायामित्यस्याकर्षः । उपपदाभावेऽपि कर्त्रादिवाचकसमीपस्थपदाभावेऽपि प्रापकवाक्यान्तरसमभिव्याहाराभावेऽपि ब्रह्मणो गुणपूर्णत्वयोग्यतया ओतं जगद्यत्र स्वयं च पूर्ण इत्यादिश्रुत्यन्तरबलाद्वा "ॐनामा भगवान् विष्णुरधिकोच्चगुणत्वतः" इत्यादिस्मृत्यन्तरबलाद्वा गुणानां संबन्धादोङ्कारस्य कर्मणि निष्पन्नत्वे जिज्ञास्यब्रह्मणः कर्मत्वात् कर्तृतया गुणसंबन्धे गुणैरयं ओत इति कर्तरि निष्पन्नत्वे जिज्ञास्यस्य कर्तृत्वेन कर्मतया गुणसंबन्धेन गुणानयम् ओत इति वक्तीति योज्यम् । **बृंहतेरिति** । बृहशब्दात् मप्रत्यये अमागमे च सति ब्रह्मेति रूपसिद्धिः ।

**चषकः— ओङ्कारस्तावदिति । गतत्वस्य प्रविष्टत्वस्येति** । गतिकर्तृत्वस्य गतिकर्मत्वस्य प्रवेशन-कर्तृत्वस्य तत्कर्मत्वस्य चेत्यर्थः । गत्यर्थाकर्मकेति तयोरेवेति चानुशासनात् । **गत्याद्यर्थस्येति** । अव रक्षणेत्यादिना धातोर्व्याख्यातत्वादिति हृदयम् । **अवतेष्टिलोपश्चेति** । उणादावाद्यपादे अवतेर्मन्प्रत्ययः । मन्प्रत्ययसंबन्धि-नष्टेर्लोपश्चेति सूत्रार्थः । तथा च अव्म् इति स्थिते 'छ्वोः शूडनुनासिके च' इति पूर्वसूत्रात् अनुनासिकेत्यंशस्य धातुवृत्तिकारादिप्रदर्शितानुवृत्तिकतयाऽनुनासिके परतो ज्वरत्वरेत्यादिनोपधाकारवकारयोरूठिसवर्णदीर्घे आर्ध-धातुकनिमित्तके गुणे नेड्वशि कृतीतीण्निषेधे च सति ॐ इति निष्पद्यत इति भावः । अङ्गपादे ज्वरत्वरेति सूत्रवृत्तौ क्वौ झलादौ क्ङिति परत ऊठ् भवतीत्येवाभिहिततयाऽनुनासिके परत इत्यनभिधानेऽप्युणादिवृत्तावोमिति रूपस्य ज्वरत्वरेत्यूठा निष्पादितत्वात् च्छ्वोरिति सूत्रादनुनासिकेत्यंशस्यानुवृत्तिर्ज्ञायत इत्याकरो दर्शितः । **गतिकर्मा** गति-रूपक्रियावचनः । **प्रवेशनकर्मा** प्रवेशनरूपक्रियावचनः । **असौ** मन्प्रत्ययः । **कर्मणीति** । उणादीनां धात्वधि-कारीयतया कृदतिङिति कृत्संज्ञतया 'कर्तरि कृद्' इति कर्तृसाधनतौचित्येऽपि 'उणादयो बहुलम्' इति बहुलग्रहणात्





कर्मसाधनताऽपि सङ्गच्छत इत्याशयेनेयमुक्तिरित्यवसेयम् । **उपपदाद्यभाव इति** । कर्त्रादिवाचकपदान्तरसमभि-व्याहाराभावेऽपीत्यर्थः । **योग्यतयेति** । देशकालौतत्वस्येव गुणौतत्वस्यापि श्रुत्याद्यबाधिततयेत्यर्थः । **पक्षद्वयेऽपि** प्रत्ययस्य कर्तृकर्मसाधनताकल्पद्वयेऽपि । बृहतेः भीमसेनधातुषु पठितस्य शब्विकरणकस्य एतद् रूपमिति । 'अन्येभ्योऽपि दृश्यत' इति सूत्रानुशिष्टमनिन्प्रत्यये दृशिग्रहणसामर्थ्यापादितामागमे चैतद्रूपं निष्पद्यत इति भावः ।

**गूढ०**— ओतत्ववाची हीति मूले हिशब्दस्य प्रसिद्ध्यर्थकत्वं प्रतीयते, तदयुक्तम् । ओतत्ववाचित्वस्य लोकेऽप्रसिद्धत्वात् । ओतत्वे उक्तेऽपि भेदासिद्धिश्चेत्यतो व्याचष्टे **हिशब्द इति** । ओतत्वस्येत्यस्य व्याख्या गतत्वस्य प्रविष्टत्वस्य वेति । गतत्वादिरूपार्थवाचकत्वमस्य कुत इत्यत आह **गत्याद्यर्थस्येति** । अव गतौ । अव प्रवेशने इति गतिप्रवेशनार्थस्येत्यर्थः । कथमवतेरेवं रूपं निष्पद्यत इत्यत्राह **अवतेष्टिलोपश्चेति सूत्रादिति** । अवतेर्धातोर्मन्-प्रत्ययः । मन्प्रत्ययस्य टिलोपश्चेत्यर्थः । एवं चावतेर्मन्प्रत्यये तस्य टिलोपे सति अव म् इति स्थिते ज्वरत्वरेत्यादिना वकारस्योपधाभूतस्याकारस्य च ऊठि सति ऊम् इति स्थिते सार्वधातुकेत्यनेन गुणे सति ओमिति रूपनिष्पत्तिरिति भावः । एवमोङ्कारव्याख्यानस्यान्यैः प्रामाणिकैरकृतत्वादपव्याख्यानमेतदित्यत आह **ओमितीति** । तथापि गुण-पूर्णत्वसिद्धिः कथमित्याशङ्क्याह **तथा चेति** । तथा चाव्यते गम्यते प्रवेश्यत इति वा अवति गच्छति प्रविशतीति वा कर्तरि कर्मणि वा निष्पन्नत्वादनेन पूर्णगुणत्वसिद्धिरित्यर्थः । **योग्यतयेति** । प्रकारान्तरेण पूर्णत्वासंभवात् गुणैरेव पूर्णत्वं वक्तव्यमिति भावः । **श्रुत्यन्तरबलात्** अथ कस्मादुच्यत इति श्रुत्यन्तरबलात् । बृह वृद्धावित्यस्माद्धातोः बृंहेर्नोच्चेति सूत्रेण मन्प्रत्यये बृंहेत्यत्र नकारस्य अकारे जाते यणादेशे सति ब्रह्मेति सिद्ध्यतीति भावः ।

**१३८ सु०— एतदुक्तं भवति । यौगिका हि शब्दाः नावश्यमर्थप्रत्यायने सङ्गतिग्रहण-मपेक्षन्ते । किं नाम निगमनिरुक्तव्याकरणबलेनावयवार्थावगमे सति तत्संसर्गसंभावनायां प्रसिद्धमन्यथाऽपूर्वमेवार्थमवगमयन्ति । वाक्यरूपत्वात् तेषाम् । यथाऽऽह 'श्रोत्रियं-श्छन्दोऽधीते' 'वाक्यार्थे पदप्रयोग' इति । न च वाक्यं सङ्गतिग्रहणापेक्षमर्थमवबोधयति । अधिगतार्थत्वप्रसङ्गादशक्यत्वाच्च ।**

**बिन्दुः— श्रोत्रियंश्छन्दोऽधीत इति** । छन्दोऽधीत इति विशिष्टेऽर्थे श्रोत्रियन् इति निपात्यते । नकारस्तु ञ्नित्यादिर्नित्यमित्याद्युदात्तस्वरार्थः । **अशक्यत्वादिति** । आनुपूर्वीवैचित्र्येण नानाविधकविनिर्मितविचित्रौत्प्रेक्षिकार्थग्रथनानामानन्त्यात् शक्तिग्रहासंभवादिति भावः ।

**परि०**— तदयुक्तमिवाभातीति कृतचोद्यस्य त्रिपाद्या कः समाधिरुक्त इत्यत उपोद्घातमाह **एतदुक्तमित्यादिना तदेताविति**पर्यन्तेन । **सङ्गतीति** । अवयवसङ्गतिग्रहणं विना पृथक्समुदायस्य सङ्गतिग्रहणं नापेक्षन्त इत्यर्थः । 'इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न' इत्यादिसङ्केतग्राहकवाक्यं निगमः । अग्र्यत्वमग्रनेतृत्वमित्यादिवैदिकाग्न्यादिशब्दनिरुक्तिपरवेदाङ्गरूपनिरुक्तसंज्ञग्रन्थः । प्रसिद्धमर्थ-





मवगमयन्तीत्यन्वयः । **अन्यथेति** । प्रसिद्धेऽर्थेऽवयवार्थसंसर्गसंभावनाया अभावे इत्यर्थः । **तेषां** यौगिकशब्दानां **वाक्यरूपत्वात्** वाक्यतुल्यत्वादित्यर्थः । यौगिकस्य वाक्यरूपत्वे पञ्चमाध्याय-द्वितीयपादपाणिनीयसूत्रसंमतिमाह **यथाऽऽहेति**। छन्दोऽधीते वेदाध्ययनकर्तरि श्रोत्रियन्निति नकारान्तः शब्दो निपात्यते । नकारः 'ञ्नित्यादिर्नित्यमि'त्याद्युदात्तस्वरार्थः । श्रोतृशब्दाद्घप्रत्यये तस्येयादेशे यणादेशे श्रोत्रिय इति रूपम् । कथमस्य वाक्यरूपतेत्यतो वृत्तिकारादिवचनमाह **वाक्यार्थ इति** । छन्दोऽध्ययनकर्तृरूपवाक्यार्थे श्रोत्रियपदप्रयोग इति । वाक्यरूपत्वेऽपि यौगिकस्य कुतो न सङ्गति-ग्रहणापेक्षेत्यत आह **न चेति** । **अधिगतेति** । सङ्गतिग्रहस्य संबन्धिज्ञानाधीनत्वेन प्रागेव वाक्यार्थ-रूपसंबन्धिनो ज्ञातत्वादिति भावः ॥ **अशक्यत्वाच्चेति** । वाक्ये शक्तेरभावेन तन्निष्ठशक्त्यविषय-त्वाच्चेत्यर्थः ।

**यादु०**— यौगिकानामेव रूढत्वे सङ्गतिग्रहणापेक्षा नास्तीत्यत उक्तम् **अवश्यमिति** । तथा च लोके योगरूढेषु तथाभावेऽपि न केवलं यौगिकेषु तदपेक्षा । अतो न नियमेन यौगिकेषु सङ्गतिग्रहणापेक्षेति भावः । **निगमनिरुक्तेति**। यथा सत्यादिशब्दानां 'तस्य वा एतस्य ब्रह्मणो नाम सत्यमिति तानि ह वा एतानि त्रीण्यक्षराणि सन्ति। सत् ति यमिति तद्यत्सत् तदमृतं अथ यत्ति तन्मर्त्यं अथ यद्यं तेनोभे यच्छती'त्यादिनिगमबलेनावयवार्थावगमो दृश्यते। क्वचित्तु निरुक्तबलेन' यथा आपो वा अर्क इत्यादौ अर्कादिशब्दानां 'उदकं सुखहेतुत्वात्कमित्येवाभिधीयते। तदेव ह्यर्चतो जातमतोऽर्कमिति कीर्तितम्' इत्यादिव्यासकृतनिरुक्तबलेनार्चतो जातं सुखसाधनं चेत्यर्क इत्याद्यवयवार्थावगमः । क्वचिद्व्याकरणबलेन । यथा पङ्कजादिशब्दानां 'सप्तम्यां जनेर्डे' इत्यादिव्याकरणबलेन पङ्के जायत इति अवयवार्थावगम इत्यर्थः। एवं च निगमशब्दो वेदविशेषे रूढः। निरुक्तव्याकरणशब्दावपि रूढ्या ग्रन्थ-विशेषपरावित्यवगन्तव्यम्। अन्ये तु निगमो नाम प्रसिद्धार्थतदवयवौ परित्यज्य शब्दस्य शब्दैकदेशानुगमेनार्थान्तरे वृत्तिः ।' अत्र तदवयवशब्देन तद्गुणोऽपि विवक्षितः। शब्दैकदेशानुगमेनेत्यस्य प्रकृतिलक्षणशब्दैकदेशान्तरेऽनुगमेन इत्यर्थः। अत्र शब्दस्यार्थान्तरे वृत्तिरित्येवोक्तौ प्रसिद्धार्थोपादानेन अर्थान्तरे वृत्तिरजहल्लक्षणा स्यात्तदेवावयवोपादानेन वृत्तौ जहदजहल्लक्षणा च स्यात्। तद्गुणोपादानेन अर्थान्तरे वृत्तिर्गौणी स्यादतः प्रसिद्धार्थतदवयवौ परित्यज्येत्युक्तम्। जहल्लक्षणात्वपरिहाराय शब्दैकदेशानुगमेनेत्युक्तमित्यवधेयम् । यथा देहात्मादिशब्दानामुपचितवस्तुसन्ततगमन-तत्पदार्थादावेकदेशानुगमेन अनुवृत्तिः । निरुक्तं नाम शब्दस्य सर्वावयवार्थानुगमेन प्रसिद्धार्थादर्थान्तरे वृत्तिः । यथा सोमशब्दस्य पार्वतीसहितेश्वरे वृत्तिः । व्याकरणं नाम प्रत्ययविधानसामर्थ्यादर्थनिश्चयः । यथा वादीति ताच्छील्ये प्रत्ययविधानसामर्थ्याद्वदनशीलो गम्यत इत्याहुः। **तत्संसर्गसंभावनायामिति**। तत्संसर्गस्य स्वावगतसंसर्गेष्वन्य-तमत्वसंभावनायामित्यर्थः। ननु पदानां कथमपूर्वार्थगमकत्वमित्यत आह **वाक्यरूपत्वादिति**। वाक्यस्येव रूपं येषां ते वाक्यरूपाः तेषां भावो वाक्यरूपत्वं तस्मादिति व्याख्यानमत्र विवक्षितम्। तेन वाक्यतुल्यत्वादित्यर्थः प्राप्नोति। अत एव चन्द्रिकायां 'वाक्यतुल्यत्वादि'त्येवोक्तम्। तेन विभक्त्यन्ता वर्णाः पदं पदसमूहो वाक्यं न च यौगिकानां





सर्वेषामुक्तपदसमूहरूपत्वमिति शङ्काऽनवकाश इति ध्येयम् । यौगिकानां शब्दानां वाक्यार्थप्रतिपादकत्वेन वाक्यतुल्यत्वेऽभियुक्तसंमतिमाह **यथाऽऽहेति** । 'श्रोत्रियंश्छन्दोऽधीत' इति सूत्रे 'वाक्यार्थं पदवचनम्' इति यद्वार्तिकं तस्यायमर्थानुवाद इति ज्ञेयम् । अत्र वाक्यार्थशब्देन तदाश्रयच्छन्दोऽध्यायी लक्ष्यते । पदार्थसंसर्गरूपवाक्यार्थस्य सत्त्वभूतार्थाभिधायिश्रोत्रियशब्दबोध्यत्वासंभवात् । तथा च छन्दोऽधीत इत्यस्य वाक्यस्यार्थो यः छन्दः कर्मकाध्ययनक्रियाकः संसर्गः कर्तृतया तदाश्रयो यस्तस्मिन्नभिधेये श्रोत्रियशब्दो निपात्यत इति वार्तिकवाक्यार्थः पर्यवस्यति । ततश्च श्रोत्रियपदस्य छन्दोऽधीत इति वाक्यप्रतिपादकत्वोक्त्या तत्तुल्यत्वं तस्य अत्राभिप्रेतमिति ज्ञातव्यम् । नन्वत्र विद्यमानप्रकृतिप्रत्ययविभागस्य रूढस्यैव श्रोत्रियशब्दस्योक्तवाक्यार्थे निपातोऽभिप्रेतः । अन्यथा 'छन्दसो वा श्रोत्रभावस्तदधीत इत्यर्थे घश्च' इत्युत्तरवार्तिकवैयर्थ्यप्रसङ्गात् । अतः कथं यौगिकानां शब्दानां वाक्यतुल्यत्वे इदमुदाहरणमिति चेन्न । उदाहृतोत्तरवार्तिकानुसारेण श्रोत्रियशब्दस्य वस्तुतो यौगिकत्वमप्यस्तीत्यभिप्रेतत्वात् । न च तदेव वार्तिकमत्र कुतो नोदाहृतमिति वाच्यम् । तेन यौगिकत्वलाभेऽपि स्पष्टवाक्यतुल्यत्वप्रतिपादनालाभात् । पदानामेव वाक्यतुल्यत्वे इदमुदाहरणं न तु यौगिकत्वांशेऽपीत्यप्याहुः । श्रोत्रियन्नित्यत्र नकारः स्वरार्थ इत्याहुः । **अशक्यत्वाच्चेति** । वाक्यार्थस्य प्रथममनुपस्थित्या तत्र शक्तिग्रहस्य अशक्यत्वादित्यर्थः ।

**आनन्दः**— नन्वेवमपि नोक्तशङ्कापरिहार इत्यत आह **एतदुक्तं भवतीति** । ॐब्रह्मशब्दयोर्यौगिकत्वस्योपपादितत्वेन ताभ्यां योगवृत्त्युक्तस्यार्थस्य प्रकारान्तरेणानुपपत्तेरुक्तत्वान्न जीवादिपरत्वमित्याह **यौगिकेति** । **तत्संसर्गेति** । प्रसिद्धार्थसंसर्गेत्यर्थः । कुत एतदित्यत आह **वाक्येति** । पदेन वाक्यार्थबोध इत्यत्र दृष्टान्तमाह **यथाहेति** । श्रोत्रियन्निति पदेन वेदाध्ययनकर्तृरूपो वाक्यार्थः प्रतीयते इति भावः । कुत एतदित्यतो महाभाष्ये एवमुक्तत्वादित्याह **वाक्यार्थ इति** । ननु वाक्यरूपत्वेऽपि सङ्गतिग्रहणाभावात् नार्थबोध इत्यत आह **न चेति** । **अशक्यत्वाच्चेति** । वाक्यार्थस्यापूर्वत्वेन सङ्गतिग्रहस्याशक्यत्वादित्यर्थः । अन्यथा वाक्यवैफल्यमेव स्यादिति भावः ।

**कं०रा०**— **तत्संसर्गेति** । अवयवार्थसंसर्गसंभावनायां प्रसिद्धमवगमयन्ति । अन्यथा प्रसिद्धेऽर्थे तत्संभावनाविरहे अपूर्वमेवार्थमवगमयन्तीत्यर्थः । **श्रोत्रियंश्छन्दोऽधीत इति** । श्रोत्रियन्निति निपात्यते छन्दोऽधीत इत्यर्थे । तदधीत इत्यर्थे छन्दःशब्दस्य श्रोत्रभावो घन्प्रत्ययश्च निपातितो भवति नकारः स्वरार्थ इति सूत्रार्थो द्रष्टव्यः । तत्सूत्रव्याख्यानावसरे छन्दोऽधीत इत्येतस्मिन्वाक्यार्थे श्रोत्रियपदप्रयोग इति वदन्महाभाष्यकारो यौगिकस्य प्रकृतिप्रत्ययसमुदायात्मकस्य शब्दस्य वाक्यरूपत्वमाहेत्यर्थः । यद्यप्यत्र महाभाष्ये वाक्यार्थे पदवचनमित्युक्तम् । तथाऽपि तत्रत्यवचनशब्दस्य प्रयोगार्थत्वमित्यभिप्रेत्य वाक्यार्थे पदप्रयोग इत्युक्तमिति ध्येयम् । ननु श्रोत्रियंश्छन्दोऽधीत इत्यत्र यदि छन्दःशब्दस्य श्रोत्रभावः घन्प्रत्ययश्च निपात्यते तर्हि कथं छान्दस इति रूपं स्यादिति चेत् । 'तावतिथं ग्रहणमिति लुग्वे'त्यतो वाग्रहणानुवृत्तेश्छान्दस इति रूपस्य संभवात् । **अशक्यत्वाच्चेति** । वाक्यार्थस्य प्रागनुपस्थितत्वेन तस्मिन्सङ्गतिग्रहणस्याशक्यत्वाच्चेत्यर्थः । यद्वा । वाक्यस्य वाक्यत्वेन रूपेण सङ्गतिग्रहणस्याकिञ्चित्करतया तत्तद्वाक्यत्वेन तत्तद्वाक्यार्थसङ्गतिग्रहणस्य वक्तव्यत्वात्तस्य च तत्तद्वाक्यव्यक्तीनामानन्त्येनाशक्यत्वाच्चेत्यर्थः । (वाक्यशक्तेरभावेन शक्त्यविषयत्वादिति श्रीस्वामिनः) ।





**श्रीनिधि०— तत्संसर्गसंभावनायाम्** अवयवार्थसंसर्गस्य लोके प्रसिद्धौ अस्य वाक्यस्य कल्पितम्। **प्रसिद्धम्** लोकसिद्धम्। **अपूर्वम्** अलौकिकम्। **वाक्यरूपत्वात्**। वाक्यस्य रूपमिव रूपं येषां तानि। आकाङ्क्षादिमत्पदकदम्बकस्यैव वाक्यत्वान्न मुख्यमुख्यत्वं वाक्यत्वमिति ज्ञेयम्। यौगिकपदस्य वाक्यकल्पत्वे शास्त्रान्तरसंमतिमाह **यथाहेति**। छन्दोऽधीत इत्यस्मिन्नर्थे श्रोत्रियन्निति निपात्यत इति सूत्रार्थः। तत्र नकार इदिति ज्ञेयम्। स्वरार्थम्। सूत्रतात्पर्यप्रतीतेः तत् तात्पर्यं वार्तिकेन ज्ञापयति **वाक्यार्थ इति**। इदं च वार्तिकं सूत्रानुवादेन तदर्थकथनपरमिति ज्ञेयम्। **पदप्रयोगो** यौगिकपदप्रयोगः। **अधिगतार्थत्वप्रसङ्गादिति**। तथानुवादकत्वं वाक्यस्य न स्यादित्यर्थः। **अशक्यत्वाच्चेति**। पदानामल्पत्वेऽपि वाक्यानां विन्यासभेदेन बहुत्वात् विलक्षणार्थप्रतिपादकत्वात्। व्याकरणाद्यननुशास्यत्वाच्च न तत्र सङ्गतिग्रहः शक्य इत्यर्थः। काशीस्थपुरुषवाक्येनानुगृहीतस्यैवार्थस्यानुभवेनानुभवविरोधश्चेति भावः।

**वा०चं०—** नन्वेवं निर्वचनकथनेन भाष्यकारेणोंब्रह्मशब्दयोर्यौगिकत्वसूचनेऽपि न प्राप्तशङ्कापरिहारः। अलौकिकार्थे तच्छब्दसङ्गतिग्रहणप्रकारानिरूपणादित्यतः सङ्गतिग्रहणप्रकारानिरूपणेऽपि यौगिकत्वेन सङ्गतिग्रहणानपेक्षासूचनान्नासङ्गतं भाष्यमित्यभिप्रेत्य कुतो यौगिकत्वेऽपि सङ्गतिग्रहणानपेक्षत्वमित्यतस्तदभिप्रायमाह **एतदुक्तं भवतीति**। अवश्यपदप्रयोगस्तु रूढानां यथा सङ्गतिग्रहणानपेक्षाऽऽवश्यकी न तथैतेषामिति रूढेरावश्यकत्वं सूचयितुं वैतेषामपि समुदायसङ्गतिग्रहणानपेक्षायामपि वक्ष्यमाणरीत्याऽवयवसङ्गतिग्रहणापेक्षावश्यकत्वं सूचयितुं वेति द्रष्टव्यम्। तर्हि यौगिकशब्दानां श्रवणमात्रेणापूर्वार्थप्रत्ययापत्तिः प्रसिद्धार्थप्रत्ययानापत्तिश्चेति शङ्कते **किं नामेति**। एवं वदतामस्माकं यौगिकेष्ववयवार्थसङ्गतिग्रहणापेक्षा न निषेध्या न वा तत्संसर्गसंभावनायां प्रसिद्धार्थबोधकत्वमपि निषेध्यमपि तु तेषु समुदायशक्तिग्रहापेक्षैव निषिध्यतेऽवयवार्थसंसर्गासंभावनायामपूर्वार्थपरत्वं च अभ्युपगम्यत इति न विरोध इत्यभिप्रेत्य समाधत्ते **निगमेति**। निगमो नाम प्रसिद्धार्थतदवयवतद्गुणान्परित्यज्यार्थान्तरे वृत्तिः। यथा देहात्मादिशब्दानामुपचितवस्तुसन्ततगमनवत्पदार्थादावेकदेशानुगमेन वृत्तिः। प्रसिद्धार्थोपादानेनार्थान्तरवृत्तावजहल्लक्षणा स्यात् तदवयवोपादानेनार्थान्तरे वृत्तौ जहदजहल्लक्षणा तद्गुणोपादानेनार्थान्तरे वृत्तौ तु गौणीति तद्व्यावर्तकं विशेषणत्रयमिति ज्ञेयम्। निरुक्तं नाम सर्वावयवार्थानुगमेन प्रसिद्धादर्थान्तरे वृत्तिः। यथा सोमशब्दस्य पार्वतीसहितमहेश्वरे वृत्तिः। व्याकरणं नामास्मिन्नर्थेऽयं प्रत्ययो भवतीति विधिसामर्थ्यादर्थनिश्चयः। यथा वादीति ताच्छील्ये णिनिप्रत्ययविधानसामर्थ्याद् वदनशीलो गम्यते। एवं च यत्र निगमादिबलादवगतावयवार्थसंसर्गः प्रसिद्धानेकेषु तत्र सन्निहितपदान्तरसमभिव्याहारोऽर्थविशेषग्रहणनियामकः अन्यत्र तु तत एव अपूर्वार्थलाभ इति द्रष्टव्यम्। ( सुप्यजातौ णिनिस्ताच्छील्ये। अजात्यर्थे सुपि धातोर्णिनिस्ताच्छील्ये द्योत्ये। उष्णभोजी। शीतभोजी। अजातौ किं ब्राह्मणानामन्त्रयिता। ताच्छील्यस्य विवक्षितत्वात्तृन्। अत एव ब्राह्मणानिति कर्मणि षष्ठी न कृता। ताच्छील्ये किम्? उष्णं भुंक्ते कदाचित्। इह वृत्तिकारेणोपसर्गभिन्न एव सुपि णिनिरिति व्याख्यायोत्प्रतिभ्यामाङि सर्तेरुपसङ्ख्यानमिति पठितम्। हरदत्तमाधवादिभिश्च तदेवानुसृतम्। एतच्च भाष्यविरोधादुपेक्ष्यम्। उक्तं हि भाष्ये। सुपीति वर्तमाने पुनः सुप्ग्रहणं किमर्थम्। अनुपसर्ग इत्येवं तदभूत्। इदं सुम्मात्रे यथा स्यात्। उदासारिण्यः प्रत्यासारिण्य इति। आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु।





क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलादिषु कर्तृषु बोध्याः शीलादीनां त्रयाणां विशेषणं समर्पयितुं निर्दिष्टैस्त्रिभिस्तच्छब्दैः प्रकृतिभूतधात्वर्थो निर्दिश्यते । तृन् । कर्ता कटान् ) । न हि पदं चक्षुरादिवदित्यादिना पूर्वपक्ष्युक्तपदत्वहेतुमन्यथयति **वाक्यरूपत्वादिति** । रूपशब्दः सदृशार्थः, यौगिकशब्दस्य वाक्यत्वाभावात् । अत एव चन्द्रिकायां वाक्यतुल्यत्वादित्युक्तम् । **यथाऽऽहेति** । यद्यपि वाक्यार्थे पदवचनमित्यत्र वाक्यार्थशब्देन तदाश्रयश्छन्दोऽध्यायी लक्ष्यते । अविद्यमानप्रकृतिप्रत्ययविभागः श्रोत्रियशब्दश्च तस्मिन्नेवाभिधेये निपात्यते क्रियारूपस्य संबन्धरूपस्य वा मुख्यस्य वाक्यार्थस्य सत्त्वभूतार्थाभिधायिश्रोत्रियशब्दबोध्यत्वासंभवात् । तथाऽपि तादृशवाक्यार्थविशिष्टतया तदाश्रयसमर्पणं श्रोत्रियपदस्य वाक्यतुल्यत्वाभावे नोपपद्यत इत्यभिप्रेत्य इदमुदाहृतमिति द्रष्टव्यम् । यद्यपि च यौगिकपदे प्रकृतिप्रत्ययविभागः श्रोत्रियपदे च तदभाव इति वैषम्यं तथाऽपि वाक्यार्थसमर्पणेन वाक्यतुल्यत्वेन साम्यमाश्रित्येदमुदाहरणम् । यद्यपि च वाक्यार्थे पदवचनमिति वृत्तिभाष्यादौ पाठो दृश्यते तथाऽपि वचनप्रयोगशब्दयोरैकार्थ्याद्वा तथैव पाठदर्शनाद्वा प्रयोग इत्युक्तम् । इदं च छन्दसः श्रोत्रभावो घंश्चेत्येतदपेक्षया सूत्रस्यार्थान्तरं प्रकृतोपयोगादिहोदाहृतं न तु द्वितीयं तस्य प्रकृतानुपयोगादिति द्रष्टव्यम् । **अशक्यत्वाच्चेति** । अनन्तपुरुषप्रयुक्तस्वस्वाभिप्रेतार्थप्रतिपादकतत्तत्पदावापोद्वापप्रयुक्तानन्तवाक्यानां तत्तदर्थानां च पदादिवदनुगतत्वाभावेनोपस्थित्यसंभवेन शक्तिग्रहस्याशक्यत्वमित्यर्थः ।

**वा०२०**— सत्यं ज्ञानमनन्तं ब्रह्मेत्याद्युदाहरणाच्चेति ज्ञेयम् । शङ्कापरिहाराभावे हेतुत्वेन शङ्काबीजानुद्धारं दर्शयति **अलौकिकार्थ इति** । अवश्यं सङ्गतिग्रहणं नापेक्षन्त इत्युक्ते तदपेक्षा नियमो नास्तीति प्रतिपादनमुखेन सङ्गतिग्रहणापेक्षा तु वर्तत इति प्रतिपादितं भवतीति प्रतीत्या प्रकृतोपयोगिसङ्गतिग्रहणानपेक्षत्वालाभ इत्यतस्तत्पदप्रयोगाभिप्रायमाह **अवश्येति** । यथा राज्ञो गमने गजतुरगादिकमावश्यकं तथा भिक्षुकस्य नावश्यकमित्यत्र वाक्यान्तरसमभिव्याहारेणावश्यकत्वविशिष्टापेक्षाभावप्रतिपादनप्रतीतिर्भिक्षोर्गत्यर्थं गजादि नावश्यकमित्येवोक्तेऽपि यथा राज्ञ अवश्यमपेक्षितं तथा नैतस्येति प्रतीत्या गत्यादेरप्रसक्त्या तदपेक्षाभावस्थले तन्नियमाभावप्रतिपादने अप्रसक्तनिषेधापत्त्या च भिक्षोरपेक्षाभाव एव । राज्ञस्त्ववश्यापेक्षेत्यवश्यपदफलस्यान्यत्र स्वीकार्यतया सर्वसिद्धत्वात्प्रकृतेऽपि रूढेषु सङ्गतिग्रहणावश्यकत्वरूपमवश्यपदप्रयोगफलं योगस्थले तदनपेक्षाया बुद्ध्यावारोहाय प्रतिपादितमिति भावः । अपेक्षासद्भावमङ्गीकृत्यापि समाधत्ते **एतेषामपीति** । **वक्ष्यमाणेति** । प्रयोगमात्रबाहुल्यं रूढिरित्यादिव्याख्यावसरे अन्ततः प्रकृतिप्रत्यययोस्तदर्थे रूढेराश्रयणीयत्वादित्यादिनेति शेषः । तत्संसर्गसंभावनायामिति मूलपाठानुसारेणानुवादः । संभावना चोत्कटैककोटिकज्ञानं संसर्गानन्तपाठे तु तथैव टीकापाठोऽपि । संसर्गसंभावनायामित्यस्यापि संसर्गविषयकोत्कटैककोटिकज्ञान इत्यर्थः । अत्रापीनन्तपाठान्तरम् । अन्यथेत्येतदर्थतोऽनूदितमनेन । तत्र निगमनिरुक्तव्याकरणमेवेति चतुर्थवर्णकपञ्चपादिकाविवरणगतनिगमो नामेत्यादिनोक्तनिगमादिलक्षणानुसारेण स्वयं तल्लक्षणान्याह **निगमो नामेत्यादिना** । विवरणे प्रसिद्धार्थतदवयवौ परित्यज्येत्येवोक्तावपि कृत्यकथनावसरे लक्षणागुणवृत्तिप्रसङ्गादित्युक्तत्वादत्र गुणवृत्तिव्यावर्तनाय तद्गुणानित्यधिकं प्रयुक्तम् । तत्त्वदीपनेऽपि लक्षणापदेन जहल्लक्षणा जहदजहल्लक्षणा चेति द्वयं गृहीत्वा प्रसिद्धार्थतदवयवपदयोः कृत्यं वर्णयित्वा लक्षणाया एव





मुख्यवृत्त्यन्यत्वेन गुणवृत्तित्वोक्तिरित्येकं समाधिमभिधाय तदवयवस्य तद्गुणस्योपादानेनान्यत्र वृत्तौ गुणवृत्तिरित्यर्थ इति प्रकारान्तरेण गुणवृत्तिव्युत्पादनकृतं तद्गुणवृत्तिपदानुसारेणावयवावित्युपलक्षणं तद्गुणावित्यपि द्रष्टव्यमिति व्याख्यानमात्रेण पूर्तौ प्रकारद्वयस्याप्ययोगादयुक्तमिति सूचनाय तद्गुणानिति स्वयं प्रथमतः वेदान्तपरिभाषानुसारेण पूरयित्वोत्तरत्र गुणवृत्तेर्व्यावर्त्यतयोक्तिः। शब्दैकदेशानुगमेनेत्यपि योज्यम्। उदाहरणे वक्ष्यमाणत्वात्। प्रकृतिलक्षण-शब्दैकदेशस्यार्थान्तरेऽनुगमेनेत्यर्थः । शब्दस्येत्यपि योज्यम् । शब्दानामित्यादेर्वक्ष्यमाणत्वात् । प्रत्ययविधान-सामर्थ्यादित्यस्य तत्त्वदीपनोक्तमर्थम् अनुवदन् व्याकरणलक्षणमाह **व्याकरणं नामेति**। वाक्यतात्पर्यमाह **एवं च यत्रेत्यादिना। पदत्वहेतुमिति**। सङ्गतिग्रहणसापेक्षार्थबोधकत्वरूपचक्षुरादिवैलक्षण्यसमर्पकतया पदत्वस्य प्रागभि-धानादेवमुक्तम् । **सदृशार्थ इति** । इति सदृशे प्रयोगादिति भावः । न त्वभेदार्थ इत्यर्थः । तदर्थत्वे बाधकमाह **यौगिकेति । तुल्यत्वादित्युक्तमिति** । ईक्षत्यधिकरण इति शेषः । **वाक्यतुल्यत्वेनेति** । तृतीयान्तस्यार्थानुवादो-ऽयमित्यदोषः । श्रोत्रियंश्छन्दोऽधीत इत्येतत्सूत्रीयभाष्ये किन् निपात्यते श्रोत्रियंश्छन्दोऽधीत इति । **वाक्यार्थे पदवचनम्** । छन्दः अधीत इत्यस्य वाक्यस्यार्थे श्रोत्रियन्नित्येतत्पदं निपात्यत इति प्रतिपादनेऽपि कैयट-मञ्जर्युक्तविशेषवचनमुखेन प्रकृतानुपयोगमाशङ्क्य परिहरति **यद्यपि वाक्यार्थ इति**। इत्यत्र इति भाष्यादिवाक्ये। छन्दोऽध्यायी उपचारादुच्यत इत्यस्य अनुवादो लक्ष्यत इति। तथाच वाक्यार्थे पदवचनमित्यस्य **वाक्यार्थाश्रये** पदवचनमित्यायाति। न त्वपूर्ववाक्यार्थ एव पदवचनमिति। येन प्रकृतोपयोगः स्यादिति भावः। **कुतो वाक्यार्थ-**पदस्य तदाश्रये लक्षणाश्रयणीया श्रोत्रियपदेन मुख्यवाक्यार्थस्यैवाभिधानोपपत्तेरित्यतोऽभिधायकाभिधेय**योर्विरुद्ध-**स्वभावत्वाभिधानेन मुख्यवाक्यार्थाभिधानासंभवं वाक्यार्थस्य संबन्धरूपस्य क्रियारूपस्य वेत्यादिकैयटाद्यनुसारेणाह **क्रियारूपस्येति** । वाक्यार्थस्येत्यनन्तरमसत्त्वभूतस्येति शेषः । स चासत्त्वभूत इति कैयटाद्युक्तेः । **यद्वा** सत्त्व-भूतार्थाभिधायिश्रोत्रियशब्देति प्रयोगबलादेव मुख्यवाक्यार्थोऽसत्त्वभूत इति लभ्यते । सत्त्वं च द्रव्यम् । **तथाच** वाक्यार्थः क्रियादिरूपतया द्रव्यरूपो न भवति । श्रोत्रियशब्दश्च द्रव्याभिधायी तत्कथं तेन पदेनोक्तवाक्यार्था-भिधानमित्यर्थः । तस्मादेतदुदाहरणं प्रकृतासङ्गतमिति शङ्काशेषः । न वयं मुख्यवाक्यार्थवाचकं पदमित्यर्थे एतदुदाहरणमिति ब्रूमः । येन तदभावप्रयुक्तासङ्गतिः शङ्क्येत किन्तु तर्हि प्रागनवगतस्याप्यर्थस्य पदेन ज्ञायमान-त्वादपूर्वार्थबोधकं पदमित्येतदर्थे एतदुदाहरणमित्येव ब्रूमः । न चैतदुदाहृते नास्ति लक्षणया वाक्यार्थाश्रयबोधक-तायास्त्वयैवोक्तत्वात् । तावतैव च प्रकृतोपयोगादित्याह तथापि **तादृशेति । नोपपद्यत इति** । वाक्यातिरिक्त-पदमात्रस्य सङ्गतिग्रहणसापेक्षतया तदनपेक्षाया वाक्यरूपत्वाश्रयणेनैवोपपाद्यत्वादित्यर्थः । अस्त्वेवं श्रोत्रियशब्द-स्यापूर्वार्थबोधकता । तथापि यौगिकपदानां तथात्वे तच्छब्ददृष्टान्तीकरणानुपपत्तिः । यौगिकपदे प्रकृतिप्रत्यय-विभागसत्त्वात् । श्रोत्रियशब्दे चाविद्यमानप्रकृतीत्यादिना तदभावस्य प्रागभिधानात् । ततो वैषम्याद् दृष्टान्त-दार्ष्टान्तिकभावायोग इति शङ्कते **यद्यपि च यौगिकेति**। येन रूपेण साम्यं विवक्षितं तत्साम्यमस्त्येव। अपूर्वार्थ-बोधकत्वेन साम्यस्य विवक्षितस्य भवताप्यङ्गीकारात्। येन च रूपेण वैषम्यं शङ्क्यते तेन साम्यं न विवक्षितम्। तादृशसाम्यस्य सर्वरूपेण साम्यरूपतया दृष्टान्तमात्रोच्छेदकत्वेनाविवक्षणीयत्वादित्याशयेन समाधत्ते **तथापि वाक्यार्थेति । पाठदर्शनाद्वेति** । भाष्यादावपि पुस्तकान्तरे तथैव पाठादिति भावः । **इत्येतदपेक्षयेति** । उक्तं च





भाष्यादौ । छन्दसो वा श्रोत्रभावः । तदधीत इत्यस्मिन्नर्थे घंश्चप्रत्यय इति । अत्र भाष्याद्यनुसारेण श्रोत्रेति पाठः । युक्तश्च हायनान्तयुवादिभ्योऽणित्येतत्पञ्चममञ्जर्यां यदा श्रोत्रियंश्छन्दोधीत इत्यत्र छन्दसः श्रोतृभाव इत्यादेर्निरूपणात् तदनुसारेण टीकायां श्रोत्रिति पाठोऽपि । अत्र च श्रोत्रशब्दाच्छ्रोतृशब्दाद्वा परस्य घन्प्रत्ययस्थस्यायनेयीनीयिय इत्यनेनेयादेशो श्रौत्रशब्दे यस्येति चेत्यकारलोपे श्रोतृशब्दे यणि श्रोत्रियन्निति नकारान्तप्रातिपदिकनिपातने उक्तेऽपि नित्करणसामर्थ्येनात्र स्वरप्राप्त्यर्थं नकारस्य प्रयोग इति व्याख्यानद्वयेऽपि प्रमेयान्तरमस्ति । तस्य वृत्त्याद्युक्तरीत्या सिद्धत्वादनुक्तिरिति ज्ञेयम् । इदं चार्थान्तरमिति संबन्धः । अविद्यमानप्रकृतिप्रत्ययविभागश्रोत्रियपदं छन्दोऽध्यायिबोधकमिति व्याख्यानानन्तरमेव छन्दसो वा श्रोत्रभाव इति व्याख्यानान्तरप्रवृत्तेरुक्तव्याख्यानद्वयस्य प्रथमत्वद्वितीयत्वे इति ज्ञेयम् । प्रकृतोपयोगात् । सङ्गतिग्रहणमनपेक्ष्यार्थप्रत्यायकत्वे श्रोत्रियशब्ददृष्टान्तलाभादित्यर्थः । **प्रकृतानुपयोगादिति** । यद्यपि समुदायसङ्गतिग्रहणापेक्षत्वमेतद्व्याख्यानेऽपि नास्त्येव । तथापि अवयवसङ्गतिग्रहणापेक्षत्वमत्र आयातीति सङ्गतिग्रहणसापेक्षमर्थबोधकत्वसामान्यमस्त्येवेति तदभावाभावात्प्रकृतानुपयोग इति भावेनेदमिति ज्ञातव्यम् । जिज्ञासाशब्दे वक्ष्यमाणरीत्या श्रोत्रियेति वाक्यतुल्ययौगिकपदे लक्षणादिविचारो ज्ञेयः । श्रोत्रियंश्छन्द इत्यादि मूलमुपलक्षणम् । क्षेत्रियच् परक्षेत्रे चिकित्स्य इत्येतत्सूत्रेऽपि परक्षेत्रे चिकित्स्य इत्यर्थे क्षेत्रियजिति निपातः । वाक्यार्थे पदवचनमित्यपि ज्ञेयम् । एवं वाक्यरूपत्वं सिद्धवत्कृत्य सङ्गतिग्रहणानपेक्षत्वमुपपादयति **न च वाक्यमिति** मूलम् । **अधिगतेति** । तथाच वाक्यवैयर्थ्यमिति भावः । **अशक्यत्वमित्यर्थ इति** । उपलक्षणं चेदम् । तदुपस्थितौ शक्तिग्रहः । तद्ग्रहे चोपस्थितिः । उपस्थापकान्तराभावादेवं चान्योन्याश्रय इत्यपि द्रष्टव्यम् ।

**स०व्र०**— नन्वेवमपि न समस्तगुणपूर्णे नारायणे संबन्धग्रहः प्रत्युतालौकिकार्थत्वमेव दृढीकृतमित्यत आह **एतदुक्तं भवतीति** । **निगमनिरुक्तेति** । निगमो नाम प्रसिद्धार्थतदवयवौ परित्यज्य शब्दैकदेशानुगमेनार्थान्तरे वृत्तिः । अत्र तदवयवशब्देन तद्गुणो विवक्षितः शब्दैकदेशानुगमेनेत्यस्य प्रकृतिलक्षणशब्दैकदेशानुगमेनेत्यर्थः । अत्र शब्दस्यार्थान्तरे वृत्तिरित्येवोक्तौ प्रसिद्धपदार्थोपादानेन अर्थान्तरे वृत्तिरजहल्लक्षणा स्यात् । तदवयवोपादानेन वृत्तौ जहदजहल्लक्षणा । तद्गुणोपादानेनार्थान्तरे वृत्तिः गौणी स्यादतः प्रसिद्धार्थतदवयवौ परित्यज्येत्युक्तम् । यथा देहात्मादिशब्दानां उपचितवस्तुसन्ततगमनावगमेन तत्पदार्थादावेकदेशानुगमेन वृत्तिः । निरुक्तं नाम शब्दस्य सर्वावयवार्थानुगमेन प्रसिद्धार्थादर्थान्तरे वृत्तिः । यथा सोमशब्दस्य पार्वतीसहितेश्वरे वृत्तिः । व्याकरणं नाम प्रत्ययविधानसामर्थ्यादर्थनिश्चयः । यथा वादीति ताच्छील्ये प्रत्ययविधानसामर्थ्यात् वदनशीलोऽवगम्यत इति विवेकः । यौगिकानां प्रमाणान्तराप्रसिद्धबोधकानां वाक्यरूपत्वात्सङ्गतिग्रहणानपेक्षत्वं द्रढयति **यथा आहेति** । छन्दोऽधीते इत्यस्मिन्वाक्यार्थे श्रोत्रियन्निति निपात्यते । नकारः स्वरार्थः । तदधीत इति घप्रत्ययश्छान्दसः श्रोत्रभावो वेत्यर्थः ।

**कुण्डल०**— नन्वस्तु ओमादिपदस्योक्तरीत्या यौगिकत्वं तथापि ओमादिपदस्यालौकिकार्थे अनवगतसङ्गतिकत्वादित्युक्तदूषणस्य अपरिहारात् कथमलौकिकगुणपूर्णवस्त्ववगमकत्वमित्यत आह **एतदुक्तं भवतीति** ।





**निगमेति**। क्वचिन्निगमेन पदार्थनिर्णयः यथा "तस्य वा एतस्य ब्रह्मणो नाम सत्यमिति। तान्येतानि त्रीण्यक्षराणि सत् तियमिति तद्यत् सत् तदमृतमथ यत्ति तन्मर्त्यमथ यद्यं तेनोभे यच्छती"त्यादिनिगमबलेन सत्यशब्दस्य मुक्तामुक्तनियामकत्वमर्थ इति निर्णीयते। क्वचिन्निरुक्तबलेन। यथा "हिरण्यगर्भः कः प्रोक्तः ईशः शङ्कर एव च। सृष्ट्यादिना वर्तयति तौ यतः केशवो भवान्" इत्यादौ केशवशब्दार्थः। क्वचिद्व्याकरणबलेन यथा साक्षाद्द्रष्टरि संज्ञायाम्। स्वामिन् ऐश्वर्ये। सप्तम्यां जनेर्डः। इत्यादिसूत्रैः साक्षिस्वामिपङ्कजादिशब्दानामर्थो निर्णीयत इति द्रष्टव्यम्। **तत्संसर्गेति**। अवयवार्थसंसर्गसंभावनायामित्यर्थः। **अन्यथेति**। प्रसिद्धेऽर्थे अवयवार्थसंसर्गस्य असंभावनायामित्यर्थः। **वाक्यरूपत्वादिति**। वाक्यतुल्यत्वादित्यर्थः। श्रोत्रियंश्छन्दोऽधीते इति श्रोत्रियन्निति निपात्यते छन्दोऽधीत इत्यर्थे। छन्दःशब्दस्य श्रोत्रभावः घन्प्रत्ययश्च निपातितो भवति नकारश्च स्वरार्थः इति सूत्रार्थः। एतत्सूत्रव्याख्यानावसरे छन्दोऽधीत इति वाक्यार्थे श्रोत्रियपदप्रयोग इति वदन् महाभाष्यकारः यौगिकस्य प्रकृतिप्रत्ययात्मकस्य शब्दस्य वाक्यरूपत्वमाहेत्यर्थः। यद्यप्यत्र महाभाष्ये वाक्यार्थे पदवाचनमित्युक्तम्। तथापि तत्र वचनशब्दस्य प्रयोगार्थत्वमभिप्रेत्य वाक्यार्थे पदप्रयोग इति उक्तम्। ननु श्रोत्रियंश्छन्दोऽधीत इत्यत्र यदि छन्दःशब्दस्य श्रोत्रभावः घन्प्रत्ययश्च निपात्येत कथं छान्दस इति रूपं स्यादिति चेल्लुग्वेत्यतः पूर्वसूत्रात् वा ग्रहणानुवृत्तेः छान्दस इति रूपसिद्धिः संभवति। **अशक्यत्वादिति**। वाक्यार्थस्य प्रागनुपस्थितत्वेन तत्र वाक्यस्य सङ्गतिग्रहणस्याशक्यत्वादित्यर्थः। यद्वा वाक्यव्यक्तीनामानन्त्यात्तदर्थानामपि तथात्वात् सङ्गतिग्रहणस्याशक्यत्वादित्यर्थः।

**विठ्ठ०**— अलौकिकार्थेनावगतसङ्गतिकस्योमादिपदस्य कथमर्थप्रत्यायकत्वं इति शङ्कायाः कः परिहारो जात इत्यत आह **एतदुक्तं भवतीति**। योगरूढानां कथञ्चित् सङ्गतिग्रहणसापेक्षत्वेऽपि केवलयौगिकानां तदभावमभिप्रेत्योक्तं **नावश्यमिति**। **निगमनिरुक्तेति**। अवयवार्थावगमिका श्रुतिः निगमः यथा 'तं यच्छतं वर्षाण्यभ्यार्चत् तस्माच्छतर्चिन' इत्यादि। 'मारयित्वा प्रभक्ष्यैव जरयत्यखिलं जगत्। अतो मार्जार उद्दिष्ट' इत्यादिव्यासनिरुक्तादिको ग्रन्थो निरुक्तम्। पङ्कशब्दे उपपदे सप्तम्यन्ताज्जनेर्ड इत्यादिपङ्कजादिशब्दार्थकथनपरं व्याकरणं प्रसिद्धमेवेत्याहुः। 'कोलं पूगीफलं प्रोक्तं फलं तांबूलपत्रकं' इत्याद्यखंण्डार्थाभिधायकवाक्यमात्रं निगमः। अवयवार्थकथनं निरुक्तम्। व्याकरणं प्रसिद्धमेवेत्यप्याहुः। **तत्संसर्गसंभावनायामिति**। निगमनिरुक्तादिबलेन ज्ञातार्थकावयवपदद्वयसंसर्गस्य दृष्टानुसारतया संभावितार्थत्वे तादृशपदद्वयसंसर्गविशिष्टाः शब्दाः प्रसिद्धार्थं बोधयन्ति। यथा पङ्कजादिशब्दाः प्रसिद्धार्थं बोधयन्ति यथा पङ्कजादिशब्दाः प्रसिद्धपद्मादिकम्। असंभावितार्थत्वे तु यथा निगमादिबलेन ज्ञातार्थकसर्वादिपदयुक्तसर्वेश्वरादिशब्दानां लोके कुत्राप्यदृष्ट्या असंभावितपदद्वयसंसर्गार्थाः अत एव निरभिधेयत्वायोगात् अपूर्वमेव नारायणाख्यमवगमयन्ति। तत्कथं तेषां वाक्यरूपत्वात्। वाक्यरूपमिव रूपं येषां ते तथोक्ताः। यन्न दुःखेन संभिन्नमित्यादिवाक्यतुल्यत्वादित्यर्थः। तत्र व्याकरणसूत्रं संवादयति **यथाहुरिति**। छन्दोऽधीते इति वाक्यार्थे श्रोत्रियपदप्रयोगः। श्रोत्रियपदस्य प्रकृतिप्रत्ययविभागेन तद्वाक्यतुल्यत्वादिति भावः। श्रोत्रियन्निति नकारस्तु सुखमुच्चारणार्थः। वाक्यतुल्यत्वेऽपि सङ्गतिग्रहणानपेक्षत्वं कुत इत्यत आह **न चेति**।





अधिगतार्थत्वेऽपि सङ्गतिग्रहणसमय एवार्थस्य गृहीतत्वाच्च तत्पदार्थानां अतिबहुत्वेनोपस्थित्यसंभवेन शक्तिग्रहस्य अशाक्यत्वाच्चेत्यर्थः।

**चषकः**— यौगिकाः अवयववृत्त्यैवार्थप्रत्यायकास्तेन रूढिविशेषितानां तादृशानामर्थप्रत्यापने सङ्गतिग्रहणापेक्षायामपि न क्षतिः। **निगमनिरुक्तेति**। 'इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न' इत्यादिसङ्केतग्राहकवाक्यं निगमः। वैदिकाग्न्यादिशब्दानामग्रयत्वाङ्गनेतृत्वादितात्पर्यकवेदाङ्गरूपनिरुक्तसंज्ञो ग्रन्थः। **अन्यथा** प्रसिद्धे अवयवार्थसंसर्गसंभावनाया अभावे **अपूर्वं** शक्तिग्रहाविषयं **वाक्यरूपत्वादिति**। स्वधर्मिकार्थनिरूपितशक्तिग्रहनैरपेक्ष्येण शाब्दधीजनकत्वनियन्त्रितवाक्यतुल्यताकत्वादित्यर्थः। तेन विभक्त्यन्तत्वरूपपदत्वविशेषितानेकव्यक्तिघटितसमुदायत्वस्य यौगिकपदेषु विरहेण तत्तुल्यतोक्तिः न सङ्गच्छत इति शङ्काऽनवकाशः। **तेषां** यौगिकपदानाम्। यौगिकपदानां दर्शितवाक्यतुल्यतायां पाणिनिकर्तृकाष्टलक्षणीघटकपञ्चमलक्षणीयद्वितीयचरणगतसूत्रसंमतिमभिधत्ते **यथाऽऽहेति**। छन्दःकर्मकाध्ययनक्रियारूपस्य तत्संसर्गरूपस्य वा वाक्यार्थस्य द्रव्यरूपसत्त्वाभिधायकश्रोत्रियपदप्रत्याय्यमानत्वस्य दुरुपगमतया 'वाक्यार्थे पदवचनम्' इति वार्तिकघटकवाक्यार्थपदेन लक्षणया छन्दःकर्मकाध्ययनक्रियाश्रयः प्रत्याप्यत इत्युपेत्य तादृशार्थविषयकप्रतीतौ जननीयायां प्रकृतिप्रत्ययविभागविनिर्मुक्तः श्रोत्रियशब्दो निपातित इति वाक्यतुल्यता श्रोत्रियपदस्य यद्यपि दुर्वचैव तथापि छन्दोऽधीत इति वाक्यप्रत्येतव्यतादृशक्रियासंसर्गान्यतररूपवाक्यार्थाश्रयप्रत्यापकतामात्रेणैवेयं वाक्यतुल्यतोक्तिः न तु पदसमुदायत्वाभिप्रायेणेति न क्षतिः। एवं यौगिकपदानां प्रकृतिप्रत्ययविभागवत्तया श्रोत्रियपदस्य चाव्युत्पन्नतया वैरूप्यसद्भावेऽपि दर्शिततुल्यताश्रयणेन वेयमुदाहृतिरित्यवसेयम्। न च 'छन्दसो वा श्रोत्रभावस्तदधीत इत्यर्थे घश्च' इति द्वितीयवार्तिकस्य प्रकृतिप्रत्ययविभागोपगमेन प्रवृत्तस्यैव उदाहार्यतौचिती न तद्विपरीतप्रथमवार्तिकस्येति वाच्यम्। तथा सति यौगिकतामात्रलाभेऽपि वाक्यतुल्यताया अलाभादिति स्थितम्। भाष्यवृत्त्यादिग्रन्थेषु वाक्यार्थे पदवचनमित्येव वार्तिकाक्षरानुपूर्वी श्रवणेऽपि वचनप्रयोगपदयोरैकार्थ्यादानुपूर्व्यन्तराश्रयणेऽपि सामञ्जस्यमिति मन्तव्यम्। 'ञ्नित्यादिर्नित्यमि'त्याद्युदात्तस्वरार्थः श्रोत्रियन्निति नकार इति पाणिनीयाः। **अशाक्यत्वाच्चेति**। नियतानुपूर्वीविशेषरूपशक्ततावच्छेदकोपरागेण पदानां तत्तत्प्रवृत्तिनिमित्तोपरागेणार्थानां च पूर्वं भङ्ग्यन्तरेणोपस्थिततया तत्र तन्निरूपितशक्तीनां सुग्रहत्वेऽपि पुरुषेच्छाभेदनियन्त्रितानुपूर्वीवैचित्र्यकारणकवाक्यानां तत्तदर्थानां चानुगमकधर्मोपरागेण पूर्वमनुपस्थित्या तत्र तन्निरूपितशक्तेर्दुर्ग्रहत्वादित्यर्थः।

**गूढ०**— नन्वेवमपि नोक्तशङ्कापरिहार इत्यत आह **एतदुक्तं भवतीति**। ॐब्रह्मशब्दयोर्यौगिकत्वस्योपपादितत्वेन ताभ्यां योगवृत्त्युक्तस्यार्थस्य प्रकारान्तरेणानुपपत्तेरुक्तत्वान्न जीवादिपरत्वमित्याह **यौगिकेति**। **तत्संसर्गेति**। प्रसिद्धार्थसंसर्गेत्यर्थः। कुत एतदित्यत आह **वाक्येति**। पदेन वाक्यार्थबोध इत्यत्र दृष्टान्तमाह **यथाहेति**। श्रोत्रियन्नितिपदेन वेदाध्ययनकर्तृरूपो वाक्यार्थः प्रतीयते इति भावः। कुत एतदित्यतो महाभाष्ये एवमुक्तत्वादित्याह **वाक्यार्थ इति**। ननु वाक्यरूपत्वेऽपि सङ्गतिग्रहणाभावात् नार्थबोध इत्यत आह **न चेति**। **अशाक्यत्वाच्चेति**। वाक्यार्थस्यापूर्वत्वेन सङ्गतिग्रहस्याशक्यत्वादित्यर्थः। अन्यथा वाक्यवैफल्यमेव स्यादिति भावः।





कुत एतदित्यत उक्तं महाभाष्ये एवमुक्तत्वादित्यत आह **वाक्यार्थ इति**। ननु वाक्यरूपत्वेऽपि सङ्गतिग्रहणाभावान्नार्थबोध इत्यत आह **न चेति**। **अशक्यत्वाच्चेति**। वाक्यार्थस्यापूर्वत्वेन सङ्गतिग्रहस्य अशक्यत्वादित्यर्थः। अन्यथा वाक्यवैफल्यमेव स्यादिति भावः।

**प्रदीपः**— न चैवमपि न समस्तगुणपरिपूर्णनारायणे संबन्धग्रहः प्रत्युत लौकिकार्थ एव दृढीकृत इत्यत आह **एतदुक्तं भवतीति**। यौगिकानां प्रमाणान्तराप्रसिद्धार्थबोधकानां वाक्यरूपत्वात्सङ्गतिग्रहणानपेक्षत्वं द्रढयति **यथाहेति**। छन्दोऽधीत इत्यस्मिन्वाक्यार्थे श्रोत्रियशब्दो निपात्यते छप्रत्यये छन्दसः श्रोत्रभावो वेत्यर्थः।

**१३९ सु०— तदेतावोङ्कारब्रह्मशब्दावपि यौगिकौ जिज्ञास्यमनन्तगुणपरिपूर्णं प्रतिपादयन्तौ जीवजडयोस्तदयोगात् तद्व्यतिरिक्तमेव किञ्चिद्गमयतः। तच्च अविदितत्वात् संभवति जिज्ञासाविषयः। न च तत्रापि गुणपूर्णता विरुद्धा। प्राक्प्रतीतेर्निराश्रयस्य विरोधिप्रत्ययस्य अनुत्थानात्। प्रतीत्या चैवमेव सिद्धत्वादिति।**

**परि०**— ततश्च किमित्यत आह **तदेताविति**। 'ॐ इत्येतदक्षरम्' इत्यत्र श्रुतोपासनाया अपि जिज्ञासारूपत्वाज्जिज्ञास्यमित्येवोक्तम्। तावता पूर्वपक्ष्युक्तविषयाभावशङ्का कथं निरस्तेत्यत आह **तच्चेति**। **तत्रापीति**। अपूर्वेऽप्यर्थे इति व्याख्यानं मायिनामिति योज्यम्। **प्रमाणविरुद्धमिति**। ओतं जगद्यत्रेति पूर्वोक्तश्रुतिस्मृतिरूपप्रमाणविरुद्धमोङ्कारव्याख्यानम्। अथ कस्मादुच्यत इत्यादिप्रमाणविरुद्धं ब्रह्मपदव्याख्यानमित्यर्थः। प्रमाणविरुद्धं चेत्यस्येति स्फुटमेवेत्याशयवता न व्याख्यानान्तरं दूषितमित्यन्वयः। **आप्तेरिति**। 'अकारः प्रथमा मात्रा आप्तेरादिमत्वाद्वा उकारो द्वितीया मात्रा उत्कर्षादुभयत्वाद्वे'ति माण्डूकोपनिषद्योङ्कारस्य व्याख्यानमिति संबन्धः। आप्तेः कामितावाप्तेर्हेतुत्वात्। प्राज्ञतैजसाख्यरूपद्वयादिमत्त्वाच्च इत्यर्थः। नित्येत्यादिरामानुजभाष्योक्तमविरोधीति स्फुटमेवेत्याशयवता द्वितीयव्याख्यानं न दूषितमनुमतं चेत्यर्थः।

**वं०प०**— **विरुद्धेति**। तथाच जीवजडातिरिक्तं यत्किञ्चिद्वस्तु तद्गुणपूर्णं न भवति चेतनत्वात् जीववदित्यनुमानविरुद्धेत्यर्थः। विरोधिप्रत्ययस्य विरुद्धत्वानुमानस्य आश्रयाज्ञानासिद्धेरित्याशयः। **एवमेवेति**। एवं च याभ्यामोङ्कारब्रह्मशब्दाभ्यां तद्वस्तु प्रतीतं ताभ्यां गुणपूर्णत्वेनैव प्रतीतमिति धर्मिग्राहकमानविरोध इति भावः। इति यद्व्याख्यानं तदप्रामाणिकं प्रमाणविरुद्धं चेति स्फुटमेवेत्याशयवता न दूषितम्।

**आनन्दः**— एवमपि किं प्रकृत इत्यत्राह **तदेताविति**। ननु जीवादाविव ब्रह्मण्यपि गुणपूर्णत्वं विरुद्धमित्यत आह **न चेति**। एवमपि बृह जातिजीवेत्यभिधानादन्यत्र ब्रह्मशब्दस्य रूढत्वाद्रूढिर्योगमपहरतीति न्यायेन योगापेक्षया





रूढेः प्राबल्याद्योगापहारेणान्यपरत्वमेव स्यादिति न वाच्यम् । तथापि केवलरूढ्यपेक्षया विद्वद्रूढेः प्राबल्यान्महायोगविद्वद्रूढिभ्यां ब्रह्मपरत्वं स्यादेवेति अस्याः शङ्काया उत्तरत्र निरस्यत्वाच्चेति भावः ।

**श्रीनिधि०— गुणपूर्णता विरुद्धेति** । अनुपलम्भविरुद्धेत्यर्थः । **प्राक्प्रतीतेः** प्रतीतेः प्राक् ।

**वा०चं०—** नन्वस्तु यौगिकानां सङ्गतिग्रहणानपेक्षार्थबोधकत्वम् । तथाऽपि निगमादिबलादवगतोङ्कारादिशब्दावयवार्थसंसर्गस्य प्रसिद्धे संभावनायां प्रसिद्धत्वादेव तस्याजिज्ञास्यत्वप्राप्तावोङ्कारब्रह्मशब्दोपादानेऽपि न विषयरूपविवक्षितार्थसिद्धिरित्याशङ्कां परिहरन्नुपपादितप्रमेयस्य प्रकृतोपयोगमाह **तदेतौ इति** । अन्यत्रासंभावितगुणपूर्णता प्रसिद्धवदप्रसिद्धेऽपि नाङ्गीकर्तुं शक्येत्याशङ्कते **न चेति** । तथात्वे वाक्यादप्यपूर्वार्थप्रतीतिर्न स्यादिति । बाधकमुत्तरत्र वक्ष्याम इत्यभिप्रेत्योपपादकमेवाह **प्रागित्यादिना** ।

**वा०र०—** संसर्गसंभावनायां प्रसिद्धमर्थमवगमयन्तीति प्रथमपक्षसंभवमत्राशङ्क्य तन्निरासपरतयोत्तरवाक्यमवतारयति **नन्वस्तु यौगिकानामिति** । **न विषयरूपेति** । प्रसिद्धत्वेन सन्दिग्धत्वाभावादित्यर्थः । **उत्तरत्रेति** । न चालौकिकिकार्थकल्पने गौरवादित्येतच्छङ्कापरिहारावसर इत्यर्थः ।

**कुण्डल०—** यौगिकपदानामपूर्वार्थविदकत्वादनुपपत्तेरभावात् युक्तं ओङ्कारब्रह्मशब्दपदयोरलौकिकगुणपूर्णवस्त्वावेदकत्वमित्याह **तदेताविति** । तत् तस्मादित्यर्थः । **तदविदितत्वादिति** । तत् जीवजडविलक्षणम् । अनन्तगुणपरिपूर्णं वस्त्वित्यर्थः । **प्राक्प्रतीतेरिति** । ओमादिपदसमर्पितवस्तुगोचरप्रतीतेः प्रागित्यर्थः ।

**गूढ०—** एवमपि किं प्रकृत इत्यत्राह **तदेताविति** । ननु जीवादाविव ब्रह्मण्यपि गुणपूर्णत्वं विरुद्धमित्याशङ्क्याह **न चेति** । एवमपि बृह जातिजीवेत्यभिधानादन्यत्र न ब्रह्मशब्दस्य रूढत्वात् रूढिर्योगमपहरतीति न्यायेन योगापेक्षया रूढेः प्राबल्यात् योगापहारेणान्यपरत्वमेव स्यादिति वाच्यम् । तथापि केवलरूढ्यपेक्षया विद्वद्रूढेः प्राबल्यान्महायोगविद्वद्रूढिभ्यां ब्रह्मपरत्वं स्यादेवेति अस्याः शङ्काया उत्तरत्र निरस्यत्वाच्चेति भावः ।

**१४० सु०— यत्पुनः 'अकारवाच्येन तत्पदार्थेनोकारवाच्यस्य त्वंपदार्थस्याभेदो मकारेण उच्यते । ब्रह्मशब्देन च सकलवस्त्वात्मकत्वलक्षणपूर्णताऽभिधीयत' इति व्याख्यानम् । तदप्रामाणिकं प्रमाणविरुद्धं च । यत्त्वाप्तेरादिमत्त्वाद्वेत्याद्योङ्कारस्य नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितमित्यादि ब्रह्मशब्दस्य व्याख्यानम्, तज्जीवादिव्यतिरिक्तवस्तुसाधनाविरोधीति स्फुटमेवेत्याशयवता न व्याख्यानान्तरं दूषितमनुमतं च ।**

**वं०प०**— नन्वोतत्ववाचीतिवदाप्तेरादिमत्त्वाद्वेति माण्डूकोपनिषत्कृतमोङ्कारव्याख्यानं कस्मादत्र न कृतमित्यत उक्तम् **यत्त्वित्यादि** । यत्त्वाप्तेरित्यादि यदोङ्कारब्रह्मशब्दव्याख्यानान्तरं तज्जीवादिव्यतिरिक्तवस्तुसाधनाविरोधीति स्फुटमेवेति हेतोस्तदस्माकमनुमतं संमतमतस्तदत्र नोक्तमित्यर्थः ।

**आनन्दः**— ननु भवद्भिरेव ॐब्रह्मशब्दौ व्याख्यातौ अन्यैस्त्वन्यथैव तयोर्व्याख्यानं कृतमेवं च कथं निर्णय इत्यतः परकीयव्याख्यानं दूषयितुमनुवदति **यत्पुनरिति । अप्रामाणिकं प्रमाणविरुद्धं चेति** । तत्पदार्थस्याकारवाच्यत्वे त्वंपदार्थस्य उकारवाच्यत्वे अभेदस्य मकारवाच्यत्वे ब्रह्मशब्दस्य च सकलवस्त्वात्मकत्ववाचकत्वे प्रमाणाभावेनाप्रामाणिकं भिन्नोऽचिन्त्य इत्यादि भेदग्राहकप्रमाणविरुद्धं चेति नादरणीयमित्यर्थः । तथापि व्याख्यानान्तरं परोक्तं किं न दूषितमत्राह **यत्त्विति** ।

**कं०रा०**— **यत्त्विति** । **आप्तेः** सर्वकामावाप्तेः । सर्वस्यादिमत्त्वाद्वेत्याद्योङ्कारस्य यद्व्याख्यानं यच्च नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितमित्यादिब्रह्मशब्दव्याख्यानं तज्जीवादिव्यतिरिक्तवस्तुसाधनाविरोधीति स्फुटमेवेत्याशयवताऽऽचार्येण तद्व्याख्यानान्तरं न दूषितमङ्गीकृतं चेत्यर्थः । एतदुपलक्षणम् । 'जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्रा । आप्तेरादिमत्वाद्वा । आप्नोति ह वै सर्वान्कामानादिश्च भवति । स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रा । उत्कर्षादुभयत्वाद्वे'त्यादिश्रुत्यनुसारित्वाच्च तदङ्गीकृतमिति ध्येयम् ।

**श्रीनिधि०**— **न व्याख्यानान्तरं दूषितमनुमतं चेति** । तत्राद्यं व्याख्यानान्तरं अप्रामाणिकं प्रमाणविरुद्धं चेति स्फुटमेवेति न दूषितम् । द्वितीयं जीवातिरिक्तवस्तुसाधनाविरोधीति स्फुटमेवेति नानुमतं चेति योज्यम् । अनुमतत्वेन न ज्ञापितमित्यर्थः ।

**वा०चं०**— ननु साङ्करीयस्याप्योंब्रह्मशब्दव्याख्यानस्य सत्त्वान्न भवदभिप्रेतार्थसिद्धिः । न च अप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्च न तद्विरोध इति वाच्यम् । तथा सति तस्य दूष्यत्वप्रसङ्गात् । किञ्चाप्तेरादिमत्वाद्वेत्याद्योङ्कारब्रह्मशब्दव्याख्यानान्तरस्यापि सत्त्वात्तद्विरोधः । न च जीवव्यतिरिक्तेश्वरसाधनाविरोधित्वात्तस्य न तद्विरोध इति वाच्यम् । तथा सति तद्व्याख्यानस्यानुमन्तव्यत्वप्रसङ्गादित्यत आह **यत्पुनरित्यादिना** । स्फुटमेवेत्यस्य प्रमाणविरुद्धं चेत्यनेनापि संबन्धः । नेत्यस्योभयत्रापि संबन्धः । दूषितमनुमतं चेत्यनयोर्यथायोग्यं संबन्ध इति द्रष्टव्यम् ।

**वा०र०**— **न भवदभिप्रेतेति** । तस्य भवद्व्याख्यानविरुद्धतया तत्स्वीकारायोगादस्वीकारे च भेदसाधकभवद्व्याख्यानमभेदसाधकव्याख्यानान्तरे विरोधिनि जागरूके सति न बुद्धौ स्थिरं भवतीति न भवदभिप्रेतजीवादिव्यावृत्त्यादिसिद्धिरित्यर्थः । इति स्फुटमित्येतद्व्यावर्त्यं वक्तुमाशङ्कते **न चेति** । न तद्विरोधः । तद्विरोधोऽकिञ्चित्करोऽतस्तस्मिन् सत्यपि अस्मद्व्याख्यानस्थैर्यमेवेत्याशयः । **दूष्यत्वप्रसङ्गादिति** । अप्रामाणिकत्वादिव्युत्पादनेनेति शेषः । तथाच तद्दूषणाभावे तद्व्याख्यानस्य विरोधकतया प्राप्तिः स्यादेवेति भावः । **व्याख्यानान्तरस्यापीति** । अत्राप्तेरादिमत्त्वाद्वेत्योङ्कारव्याख्यानान्तरं आप्तेरादिमत्त्वाद्वोत्कर्षादुभयत्वाद्वा मितेरपीतेर्वेति माण्डूकोपनिषदुक्तरीत्या

केनचित्कृतम् । नित्यं शुद्धं बुद्धेत्यादिब्रह्मशब्दव्याख्यानं पञ्चपादिकाकारस्य तथा भामतीकारस्यापीति विवेकः । अत्रापि इति स्फुटमित्येतद्व्यावर्त्यं वक्तुमाशङ्कते **न च जीवेति** । तस्येत्यस्य जीवेत्यादि पूर्वान्वयः । **अनुमन्तव्यत्वेति** । तत्प्रकारेणापि व्याख्यानस्य कर्तव्यत्वप्रसङ्गादित्यर्थः । **संबन्ध इति** । **प्रमाणविरुद्धं चेति** । स्फुटमेवेति संबन्ध इत्यर्थः । **उभयत्रापीति** । न दूषितं नानुमतमित्येवमुभयत्रापीत्यर्थः । **यथायोग्यमिति** । मूले **इत्याशयवता व्याख्यानान्तरमिति** व्याख्यानद्वयं व्याख्यानान्तरत्वरूपेण क्रोडीकृत्य तत्र दूषितत्वानुमतत्वाभावयोः प्रतिपादनात् तयोः व्याख्यानद्वयेऽप्यविशेष इति भाति । व्याख्यानद्वयमित्यादेरनुक्ततया यथाक्रमं संबन्धव्याख्यानस्य कर्तुमशक्यत्वात् । एतेन क्रमेण संबन्धं वदन्तोऽपि निरस्ताः । अतो व्याख्यानान्तरपदगृहीतव्याख्याद्वयदूषितत्वादेरुभयस्याप्येकैकत्र संबन्धं व्यावर्तयितुं व्यत्ययेन संबन्धं वा निरसितुं योग्यतया संबन्ध एव व्याख्येय इत्यतस्तथोक्तम् । एतेन व्याख्यानद्वये क्रमेणानयोः संबन्धावगमोपपत्तेर्यथायोग्यमित्ययुक्तमिति शङ्का गर्भस्रावपराकृता । व्याख्यानान्तरमिति विशेष्यपदेनैकीकृततया विवेकस्य प्रत्येतुमशक्यतया योग्यताश्रयणस्यावश्यकत्वात् । तथा चाकारवाच्येन तत्पदार्थेनेत्यादिव्याख्यानमप्रामाणिकं प्रमाणविरुद्धं चेति स्फुटमेवेति न दूषितम् । आप्तेरादिमत्वाद्वेत्यादिव्याख्यानं तु जीवादिव्यतिरिक्तवस्तुसाधनाविरोधीति स्फुटमेवेति नानुमतमिति योजना सूचिता ज्ञेया । तत्र नानुमतमित्यस्य तत्प्रकारेण स्वयमपि न व्याख्यातमित्यर्थः । नानुमतमित्यस्यानुमततया नोक्तमित्यर्थ इत्यन्यथाख्यातौ ।

**स०व्र०— आप्तेरादिमत्वाद्वेत्यादीति** । इदमकारव्याख्यानरूपमाण्डूकोपनिषद्गतवाक्यम् । आदिपदेन उत्कर्षादुभयत्वाद्वा मितेरपीतेर्वेति उकारमकारव्याख्यानरूपं तद्गतमेव वाक्यं ग्राह्यम् । **न दूषितमनुमतं चेति** । ओङ्कारब्रह्मशब्दयोराद्यव्याख्यानमप्रामाणिकं प्रमाणविरुद्धं चेति स्फुटत्वान्न दूषितम् । आप्तेरादिमत्वाद्वेत्योङ्कारस्य द्वितीयं व्याख्यानं प्रामाणिकत्वात् न दूषितमनुमतं च ।

**कुण्डल०—** नन्वोङ्कारब्रह्मशब्दयोः परकृतं व्याख्यानं भाष्यकृता कुतो न निराकृतमित्यतः कस्यचिद्व्याख्यानस्य स्फुटदूषणत्वादन्यस्य चानुमतत्वात् तदनुवादादिकं भाष्यकृता न कृतमित्याह **यत्पुनरित्यादिना** । **आप्तेरादिमत्वाद्वेत्यादीति** । 'जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्रा आप्तेरादिमत्वाद्वा । स्वप्नस्थानस्तैजसः उकारो द्वितीया मात्रा उत्कर्षादुभयत्वाद्वा । सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मितेरपीतेर्वा' इत्यादि श्रुत्यनुगृहीतत्वात् । आप्तेः सर्वकामावाप्तेः सर्वस्यादिमत्वादित्याद्योङ्कारव्याख्यानं नित्यशुद्धेत्यादिब्रह्मपदव्याख्यानं चानुमतमित्यर्थः ।

**विठ्ठ०— आप्तेरादिमत्वादित्यादीति** । इत्यादिश्रुत्यनुसारिव्याख्यानमिदमिति संबन्धः । **दूषितमनुमतं चेति** । अस्मदभिमतसाधनविरोधे दूषणीयम् आनुकूल्ये अनुमतिः कार्या नोभयमपि अतो न दूषितम् अनुमतं चेत्यर्थः । आद्यव्याख्यानं स्फुटदूषणत्वात् न दूषितं द्वितीयं अविरोधीत्यनुमतमित्यप्याहुः ।

**चषकः—** भाष्यकृतामोङ्कारब्रह्मशब्दयोः भाष्यान्तरीयव्याख्याद्वयस्याप्रत्याचिख्यासायां बीजमभिधत्ते **यत्पुनरित्यादिकेनानुमतं चेत्यन्तेन** ।

**गूढ०**— ननु भवद्भिरेव ॐब्रह्मशब्दौ व्याख्यातौ। अन्यैस्त्वन्यथैव तयोर्व्याख्यानं कृतम्। एवं च कथं निर्णय इत्यतः परकीयव्याख्यानं दूषयितुमनुवदति **यत्पुनरिति**। अप्रामाणिकं प्रमाणविरुद्धं चेति। तत्पदार्थस्याकारवाच्यत्वे त्वंपदार्थस्य उकारवाच्यत्वे अभेदस्य च मकारवाच्यत्वे ब्रह्मशब्दस्य च सकलवस्त्वात्मकत्ववाचकत्वे प्रमाणाभावेनाप्रमाणकं भिन्नोऽचिन्त्य इत्यादिभेदग्राहकप्रमाणविरुद्धं चेति नादरणीयमित्यर्थः। तथापि व्याख्यानान्तरं परोक्तं किं न दूषितमत्राह **यत्त्विति**।

**१४१ सु०— ननु 'गुणोततामि'ति कथम्। 'वृद्धिरेची'ति भवितव्यम्। मैवम्। 'ओमाङोश्च' इति चशब्देनान्यत्रापि पररूपत्वानुशासनात्।**

**परि०**— ओतत्ववाचीत्यत्रेवात्राप्योतशब्दं मत्वा आक्षिपति **ननु गुणोततामिति कथमिति**। **वृद्धिरेचीति भवितव्यमिति**। एजित्येकारौकारैकारौकाराणां नाम। अवर्णादिचि परतः पूर्वपरयोरेकादेशतया वृद्धिसंज्ञकादैचामन्यतमो वर्णो भवतीति पाणिनिसूत्रोक्त्या अत्रौकारे कृते गुणौततामिति स्यादिति भावः। **चशब्देनेति**। षष्ठस्याद्यपादे ओमाङोश्चेति सूत्रम्। अस्यार्थः। ओमि आङि च आत् परतः पररूपमेकादेशः स्यादिति, का ओमित्याह कोमित्याहेति। आ ऊढा ओढा अद्य ओढा अद्योढेति उदाहरणम्। अत्र महाभाष्ये। आ ऋश्यादित्यत्राङो ऋश्यशब्दे परतो गुणे कृते अर्श्यादिति रूपम्। एतस्मिन्परतः अद्यशब्दस्य पररूपनिवृत्त्या अद्यार्श्यादिति सवर्णदीर्घार्थं 'एङि पररूपम्' इति सूत्रादेङ्रूपे आङि परत इत्यर्थलाभायैङीत्यस्यानुवृत्त्यर्थश्चकार इत्यापाततः प्रयोजनमुक्त्वा नैतदस्ति चकारस्य प्रयोजनं अद्यर्श्यादित्यत्र पररूपस्यैवेष्टत्वेनानर्थकश्चकारोऽनधिकारादेङीत्यस्येति चकारः प्रत्याख्यातः। स च व्यर्थः सन्नोतशब्देऽपि परतः पररूपसमुच्चयार्थो ज्ञायत इत्यत्रापि पररूपता भविष्यति। सा च वृद्धेरपवाद इति भावः॥

ननु मञ्जर्यां मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरानिति पररूपं न सवर्णदीर्घस्य बाधकम्। अतोऽद्यर्श्यादित्यत्र पररूपस्येष्टत्वेऽपि न सवर्णदीर्घापवादकत्वमतश्चकारः पुनर्विधानार्थः सन् उत्तरस्यापि सवर्णदीर्घस्य अपवादनार्थो भविष्यतीति चकारस्यान्यदेव प्रयोजनमुक्तमिति चेत्। मैवम्। प्रतिपदविधेर्बलवत्त्वात्परोऽपि सवर्णदीर्घ ओमाङोश्चेत्यनेन बाध्यत इति कैयटोक्तदिशा सवर्णदीर्घबाधसंभवेन चकारस्य मञ्जर्युक्तप्रयोजनवत्त्वासिद्धेः चकारोऽधिकविधानार्थः। तेन शकन्ध्वादिषु पररूपं सिद्ध्यतीति न्याससोक्तेश्चेत्यास्तां तावत्॥





**यादु०— वृद्धिरेचीति** । आदेचि परे वृद्धिरेकादेशः स्यादिति सूत्रार्थः । उदाहरणं तु कृष्णैकत्वमित्यादि । **ओमाङोश्चेति** । ओमि आङि च आत् परे पररूपमेकादेशः स्यादिति सूत्रार्थः । उदाहरणं तु शिवायोन्नम इत्यादि । अत्र ओमाङोः परत्वाभावात्कथमनेन पररूपत्वमित्यत उक्तं **चशब्देन इति** । चकारोऽधिकविधानार्थः । तेन शकन्ध्वादिषु पररूपं भविष्यतीति न्यासकारेणोक्तत्वादिति भावः ।

**आनन्दः—** ननु अवतेर्धातोर्निष्ठातप्रत्यये छ्वोरिति सूत्रेण वकारस्योठि कृते गुणे सति ओत इति भवति । एवं च गुण ओततामित्यत्र वृद्धौ सत्यां गुणौततामिति स्याद्, गुणोततामिति कथमुक्तमित्याशयेन शङ्कते **नन्विति** । **मैवमिति** । तथाचात्रापि पररूपत्वमिति न कश्चिद्दोषः । नन्वत्रावतेः क्तप्रत्यये ज्वरत्वरेति अनेन वकारस्योपधाकारस्य वोठि समागते सवर्णदीर्घे च सति क्तस्य कित्वेपि ओमास इत्यादाववतेर्मनो अविसिविसिशुषिभ्यः कित् इत्यनेन कित्वेपि बाहुलकाद्गुणवत् ओतं प्रोतं इत्यादि बहुलमुपलंभाद् बाहुलकगुणसंभवेन ओतशब्दे निष्पन्ने तस्मिन्परतो गुणशब्दस्याकारान्ततया वृद्धिरेचीति वृद्धौ गुणौततामिति स्यान्न तु गुणोततामित्याशयेन शङ्कते **नन्विति** । अद्य आ ऊढा अद्योढेत्यादौ धातूपसर्गयोः कार्यमन्तरङ्गमिति पूर्वमाद्गुणे पश्चादद्यशब्देन संबन्धे वृद्धिरेचीति प्राप्तायाः वृद्धेः आङ्नाङोरेकादेशयोः कार्यमाङ्ग्रहणेन गृह्यत इति ओमाङोश्चेति पररूपस्य मध्येऽपवादन्यायेन बाधकत्वेऽपि अद्य आऋश्यात् अद्यर्श्यात् इत्यादौ प्राप्तसवर्णदीर्घत्वस्य परत्वेन पररूपस्य तद्बाधकत्वायोगेन कथमद्यर्श्या-दित्यादिकमित्याशङ्किते ओमाङोश्चेत्यत्र चकारस्याधिकविधानार्थत्वाद्युक्तं दीर्घत्वबाधकत्वमिति समाधानेन चकारस्यान्यत्रापि प्रयोगानुसारेण पररूपाभ्यनुज्ञापकत्वात् अस्यापि अभियुक्तप्रयोगत्वेन पररूपे युक्तं गुणोतता-मित्यपीत्यभिप्रायेण समाधत्ते **ओमाङोश्चेतीति** ।

**कं०रा०— चशब्देनेति** । अनुक्तसमुच्चयार्थेन चशब्देन ओतशब्देऽपि परतः पररूपत्वानुशासनादिति भावः ।

**श्रीनिधि०— गुणोततामिति** । ननु अवगतिप्रवेशनयोरिति धातोः कप्रत्यये अवत इति स्थिते ज्वरत्वरेति सूत्रेण ऊठ्द्वये सवर्णदीर्घे च कृते ऊत इति स्यात् । नन्वार्धधातुकस्येड्वलादेरिति इटि इको यणचीति यणि अचि श्नु धातु भ्रुवां य्वोरियङुवङाविति उवङिवावितेति ऊवितेति वा स्यादिति चेन्न । अनित्यमागमानुशासनमिति वचनात् । इटोऽप्राप्तेः । ननु सार्वधातुकार्धधातुकयोरिति गुणे ओतेति स्यादिति चेन्न । क्ङिति चेति प्रतिषेधात् । नन्वस्माद्धातोः कप्रत्यये सति च्छ्वोः शूडनुनासिके चेति ऊठि कृते अऊ इति स्थिते कित् परत्वात् उकारस्य गुणाप्राप्तावपि आद्गुण इति अकारऊकारयोः गुणे ओतेति स्यादिति चेन्न । एत्येधत्यूठ्सु इति सूत्रेण वृद्धिं विधाय गुणबाधनात् तथा चौतेत्येव स्यात् । ननु अकारानुबन्धं विधाय औणादिके तप्रत्यये पदमञ्जर्यां छ्वोः शूडिति सूत्रे अनुनासिकस्य क्विझलोः क्ङितीत्यस्मात् क्ङितीत्येतन्नानुवर्तयन्ति केचिदित्युक्तत्वेन झलादौ तप्रत्यये परे तकारस्य ऊठि कृते क्ङिति चेति प्रतिषेधाभावेन सार्वधातुकार्धधातुकयोरिति गुणे अतो गुणे इत्यनेनापदान्ताकाराद् गुणे परे पररूपैकादेशे च ओतेति भवतीति चेन्न । सार्वधातुकार्धधातुकयोरिति गुणे प्राप्ते अतो गुण इत्यस्यावकाशः स एव न संभवति । बहिरङ्गनिमित्तकत्वेन बहिरङ्गत्वात् गुणस्य एत्येधतीति, वृद्धेस्तु अन्तरङ्गनिमित्तत्वेन प्राबल्यात् गुणबाधात् । तथा च

ऊतेत्येव स्यात्। तथा चाद्ये गुण ऊत इति स्थिते आद्गुण इति गुणे गुणौतेति भवतीति शङ्कासमाधाने नोपपद्येते। द्वितीयतृतीययोस्तु यद्यपि शङ्कासमाधाने उपपद्येते, तथापि ओतत्ववाचीत्यनुसारेण ऊतेत्येव भाव्यम्। तच्चोक्तप्रकारेण नोपपद्यत इत्याशय इति चेन्मैवम्। 'ओतं प्रोतं पदवद्यत्र विश्वं, ओतं जगद्यत्र स्वयं च पूर्णः' इत्यादि बहुप्रयोगस्य दृष्टत्वेन तत्सामर्थ्येन क्ङिति चेति प्रतिषेधस्य अनित्यत्वाश्रयणेन गुणस्य वक्तव्यत्वात् द्वितीयपक्षानुसारेण एत्येधत्यूठ्सु इति वृद्धेरनित्यत्वाश्रयणेन वा गुणस्य वक्तव्यत्वाद् वा। तृतीये बहिरङ्गस्य प्राबल्याश्रयेण न गुणस्याश्रयणीयत्वाद्वा शङ्कासमाधाने उपपद्येते इति ज्ञेयम्। अवतेर्धातोरौणादिके तन्प्रत्यये ज्वरत्वरेति ऊठि कृते सवर्णदीर्घे सार्वधातुकार्धधातुकयोरिति गुणे ओत इति रूपं निष्पद्यत इति ज्वरत्वाभावेऽपि बहुलग्रहणात् ऊठीत्युक्तम् उणादिवृत्तौ। एवं च उणादयो बहुलमिति बहुलग्रहणेन क्ङितीत्यनुवृत्तिबाधात् अन्तरङ्गवृद्धिबाधस्यापि युक्तत्वात् समानन्यायत्वात्। न ह्यकारोकारमात्रेण विशेष इति। **ऊयतेरिति**। वेञ् तन्तुसन्तान इति धातोः क्तप्रत्यये वचिस्वपि यजादीनां कितीति यजादिष्वस्य काशिकावृत्तौ पठितत्वेन वस्य संप्रसारणे उत् उत इति स्थिते संप्रसारणाच्चेति पूर्वरूपत्वे ऊतेति सिद्ध्यतीति भाव इति केचित्। वयं तु ऊयी तन्तुसन्तान इति धातोरित्यर्थ इति ब्रूमः। अन्यथा वयतेरूपमित्यवक्ष्यत्। तथाच ऊ यित इति स्थिते लोपो व्योर्वलि इति यलोपे ऊत इति स्यादिति ज्ञेयम्।

**वा०चं०**— नन्वत्रावतेः क्तप्रत्यये छान्दसत्वादिडभावे च सति ज्वरत्वरेत्यनेन वकारस्य तदुपधाकारस्य चोठि सवर्णदीर्घे च सति क्तस्य कित्त्वेऽप्योमास इत्यादाववतेर्मनोऽविसिविसिशुषिभ्यः कित् इति कित्त्वेऽपि बाहुलकाद्गुणवदोतं प्रोतमित्यादिबहुलमुपलम्भाद्बाहुलकाद्गुणसंभवेनोतशब्दे निष्पन्ने तस्मिन्परतो गुणशब्दस्यावर्णान्ततया 'वृद्धिरेची'ति वृद्धौ गुणौततामिति स्यान्न तु गुणोततामित्याशङ्कते **नन्विति**। अद्य आ ऊढा अद्योढेत्यादौ 'धातूपसर्गयोः कार्यमन्तरङ्गमि'ति पूर्वमाद्गुणे पश्चादद्यशब्देन संबन्धे वृद्धिरेचीति प्राप्ताया वृद्धेराङ्नाङोरेकादेशयोः कार्यमाङ्ग्रहणेन गृह्यत इति ओमाङोश्चेति पररूपस्य मध्येऽपवादन्यायेन (मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरानिति न्यायेनेत्यर्थः) बाधकत्वेऽपि अद्य आ ऋश्यादद्यर्शादित्यादौ प्राप्तसवर्णदीर्घत्वस्य परत्वेन पररूपस्य तद्बाधकत्वायोगेन कथमद्यर्श्यादिकमित्याशङ्किते 'ओमाङोश्चे'त्यत्रत्यचकारस्याधिकविधानार्थत्वाद्युक्तं दीर्घत्वबाधकत्वमिति समाधानेन चकारस्यान्यत्रापि प्रयोगानुसारेण पररूपाभ्यनुज्ञापकत्वादस्याप्यभियुक्तप्रयोगत्वेन पररूपे युक्तं गुणोततामित्यपीत्यभिप्रायेण समाधत्ते **ओमाङोश्चेतीति**।

**वा०र०**— गुणोततामित्यत्र वृद्धिरेचीति वृद्धिप्राप्त्या गुणानुपपत्तिरिति शङ्कोपपत्तये ऊतशब्दस्य परत्वे एचः परत्वाभावादेव वृद्ध्यप्राप्तेरोतशब्दस्यैव परत्वमस्तीति प्रतिपादयन्नोतशब्दे प्रकृतिप्रत्ययविभागकथनेन गुणोपपत्तिं चोपपादयन् सूत्रे विवक्षितवृद्धिप्रापकसद्भावोक्त्या वृद्धिः स्यादित्याक्षेपपरतया नन्वित्युत्तरग्रन्थमवतारयति **नन्वत्रावतेरिति**। **क्तप्रत्यय इति**। गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्चेति सूत्रे क्तः कर्तरि चेत्यनुवृत्तेस्तेन गत्यर्थकेभ्यो धातुभ्यः कर्तरि यथाप्राप्तं भावकर्मणोश्च क्तप्रत्ययविधानाद्गतो देवदत्तो ग्रामं, गतो देवदत्तेन ग्राम इत्यादाविव गत्यर्थकादवतेः कर्तरि कर्मणि वा क्तप्रत्यय इत्यर्थः। वलादेरार्धधातुकस्य परतः सत्त्वादार्धधातुक-





स्येड्वलादेरित्यनेन सिद्धावतेरिटः प्राप्तावविततेति रूपापत्त्यौतेति रूपाप्रसङ्गः । इटः परतया झलादेः कितः परत्वाभावेन ऊठ एव प्राप्त्यनुपपत्तिश्चेत्यत ऊठमुपपादयितुमुक्तं **छान्दसत्वादिडभावे चेति** । बाहुलकादित्यर्थः । त्वोतासोन्यर्वता । इन्द्र त्वोता स इत्यादौ वक्ष्यमाणरीत्या बाहुलकादेवेडभावस्य क्लृप्तत्वेनेहापि बाहुलकात्तदभावे ओतेति रूपोपपत्तेः । इटा व्यवधानाद् झलादेः कितः परत्वं नेति शङ्कायाश्चानवकाश इति भावः । यद्यप्यौणादिक-तत्प्रत्ययाश्रयणे कित्परत्वाभावेन गुणनिषेधाप्रसक्त्या वक्ष्यमाणबाहुलककल्पनाश्रयणाभावस्तथापि तत्र पक्षे कितः परत्वाभावेन ज्वरत्वरेत्यनेनोठ एव प्राप्त्ययोगप्रसङ्गात्तदुपपत्त्यर्थं निष्ठा क्तप्रत्ययाश्रयणं स्वीकृत्योत्तरत्र बाहुलकेन गुणाश्रयणम् । विशदं चैतदग्रे करिष्यामः । **ज्वरत्वरेत्यनेनेति** । स्रिव्यविमवामुपधायाश्चेति सूत्रशेषः । क्तस्य कित्वेऽपि बाहुलकाद्गुणसंभवेनेति संबन्धः । अनुक्तबाहुलककल्पनामूलं प्रयोगमाह **ओतं प्रोतमित्यादीति** । ओतमित्यत्रापि प्रशब्दमात्राधिक्यम् । बाहुलकाश्रयणेन सार्वधातुकार्धधातुकयोरिति गुण इतीयं कल्पना न स्वमात्रस्येत्याह **ओमास इत्यादाविति** । अत्र वेदापभाष्यकारोक्तेति शेषः । तेनैवोमास इत्यत्र तथाभिधानात् । स्वपक्षे आसमन्तात् स्वीकृता मा इत्यादिभाष्योक्तरीत्या ओमास इत्यत्र मन आश्रयणाद्यभावात् वक्ष्यति चोत्तरग्रन्थानुसङ्गाते ग्रन्थकृतोऽप्येवमभिप्रायस्येति टीकान्तरयोजनादूषणावसरे । तेन मनः कित्वाश्रयणसमाधान-स्यान्यदीयत्वप्रतीतेः । अत्रावतेर्बाहुलकाद्गुणवदिति संबन्धः । यथास्थितगुणासंभवप्रदर्शनायोक्तं **मनोऽवीत्यादि** । अवतेरित्यावर्तनीयम् । तथा चावतेरुत्तरस्य मन्प्रत्ययस्याविसिविसिशुषिभ्यः किदिति सूत्रेण मन्विधानपूर्वकं तस्य कित्वस्यापि विधानात् तेन सूत्रेण प्राप्तस्य कित्वेऽपीत्यर्थः । मनोविसिवीत्यादिनेति पाठः । अविसि-विशुषिभ्य इत्येव सूत्रपाठवत् सिविसीत्येव पाठोऽपि क्वचित् । ऊमः स्यूमः सोमः (सेमः) शुष्ममित्युदाहरणात् । मनोविसुषीति लेखकपाठः । अवर्णान्ततयेति वृद्धिप्रापकाभिधानं स्पष्टत्वार्थम् । चशब्देनान्यत्रापि पररूपानुशासनं कुतो वैयाकरणैः कार्यम् । येन भवत्साधकं तत्स्यादित्यतश्च शब्दस्य तदर्थकत्वनिमित्तप्रदर्शनपूर्वकं तदर्थक-त्वोक्तिमभिधाय तावता तन्निमित्तस्थलेऽस्तु पररूपं प्रकृते तु कुत इत्याशङ्कापरिहाराय अभियुक्तप्रयोगसंरक्ष-णायैवाधिकविधानस्य चशब्देनाभिधानस्य व्याख्यायमानत्वात् प्रकृतस्याप्यभियुक्तप्रयोगत्वात्प्रकृतेऽपि पररूपं युक्तमित्याह **अद्य आ ऊढेत्यादिना** । धातूपसर्गयोरिति । पूर्वं धातुरुपसर्गेण संयुज्यते पश्चात्साधनेनेति मते धातूपसर्गयोः कार्यस्यान्तरङ्गत्वाश्रयणादिति भावः । एतच्च पूर्वं धातुः साधनेन युज्यते पश्चादन्येनेति मत इव धातूपसर्गकार्यं प्रथमतो नाङ्गीकृत्याद्य आ इत्येतयोः सवर्णदीर्घमेव प्रथमतः प्रवर्त्य ततो गुणे कृते सति अद्योढेति रूपं सिद्ध्यति । ततः किमनेन पररूपानुशासनेनेति शङ्कावारणायोक्तम् । मञ्जर्यामप्युक्तशङ्कानिरासायैवमेवोक्तमिति ज्ञेयम् । **पश्चादिति** । आद्गुणानान्तरमोढेति निष्पत्तौ सत्यामित्यर्थः । संबन्धे । सन्धौ कर्तव्ये प्राप्ताया वृद्धेरिति । तस्या गुणबाधकतया तत्रापि प्राप्तं गुणं बाधित्वा प्राप्ताया वृद्धेरित्यर्थः । वृद्धेरिति कर्मणि षष्ठी पररूपस्येति कर्तरि । ओमाङोश्चेति पररूपस्य वृद्धिबाधकत्वे विद्यमानेऽपीत्यर्थः । नन्वोढेति गुणे सति आङो निवृत्तत्वात् कथमाङ्-परत्वनिमित्तकपररूपप्रसङ्ग इत्यत उक्तम् **आङनाङोरिति** । अत्रैकः आदेशो ययोस्तावेकादेशौ । तादृशयो-राङनाङोर्ज्ञायमानं यत्कार्यमेकादेशाख्यमेव तदाङ्ग्रहणेन गृह्यत इत्यर्थः । **यो ह्युभयोः स्थान इति** न्यायेनैकादेशस्य चान्तादिवच्चेति सूत्रेण यथा पूर्वान्तउत्तरादिर्वा तदन्तर्भूतस्तद्ग्रहणेन गृह्यते एवमेकादेशोऽपि तदुभयग्रहणेन गृह्यते

इत्येवंरूपान्तवद्भावादिवद्भावयोर्विधानादोङ्कारस्य पूर्वान्तवत्त्वाच्चाङ्ग्रहणेन ग्रहणमुपपन्नमिति भावः । आङ्माङो-रेकादेशआङ्ग्रहणेनेति मञ्जर्यनुसारेण वक्तव्ये वास्तवमेकादेशत्वमुभयोः स्थानिनोरेकादेशत्वेन विधानाभावेऽपि तिष्ठत्येवेति तथाविधैकदेशोपादानप्रसङ्गवारणाय यस्तदुभयोरेकादेशत्वेन विहित इत्यर्थं सूचयितुमेकादेशयोः कार्यमिति कीर्तनमित्यदोषः । अत एव संहितैकपदे नित्या नित्या धातूपसर्गयोरित्युक्तत्वात् संहिताया नित्यत्वेऽपि आङ्प्रश्लेषाभिव्यक्तये अद्य आ ऊढेति प्रकृते । शिव आ इहि ब्रह्म आ उतमित्यादौ चान्यत्रालौकिकं प्रक्रियावाक्यं प्रदर्श्यत इति ज्ञेयम् । गृह्यत इतीत्यनन्तरं सिद्धत्वेनाङः परतया प्राप्तस्येति पूरणीयम् । **मध्येऽपवादेति** । मध्येऽपवादाः पूर्वानिव विधीन् बाधन्ते नोत्तरानिति न्यायेनेत्यर्थः । पररूपस्य वृद्धिबाधकत्वेऽपि सवर्णदीर्घबाधकत्वायोगेनेति विशिष्टार्थे मध्येऽपवादन्यायोपयोगाभिप्रायाद्वृद्धिबाधकस्य परत्वादेवोपपत्तेर्न न्यायापेक्षेति शङ्कानवकाशः । अत्रायं क्रमः । अद्योढेत्यत्र ओमाङोश्चेति वृद्धिबाधेन पररूपेऽपि अद्यश्यादित्यत्र सवर्णदीर्घप्राप्तावद्याश्यादित्येव प्राप्नोति । न चात्रापि सवर्णदीर्घबाधेन पररूपं स्यादिति युक्तमद्यश्यादिति रूपमिति वाच्यम् । सवर्णदीर्घस्य पररूपात्परत्वेन मध्येऽपवादस्य पररूपस्य मध्येऽपवादन्यायेन पूर्वभूतवृद्धिबाधकत्वेऽपि परभूतसवर्णदीर्घबाधकत्वायोग इति । **कथमद्यश्यादित्यादिकमित्याशङ्क्ति इति** । आ ऋश्यात् अश्यादिति गुणानन्तरमद्यशब्देन संबन्धे अकःसवर्णे दीर्घप्राप्तावुक्तरीत्या पररूपेण बाधायोगादद्याश्यादित्येव भवितव्यम् । एवं हि सौनागाः पठन्तीति भाष्योक्तेः आद्याश्यादिति सवर्णदीर्घपाठ एवेति वक्तुमशक्यत्वेन सवर्णदीर्घं विना अद्यश्यादिति रूपं कथमित्यर्थः । आदिपदेन राजर्षिरित्यादेः सङ्ग्रहः । अत एव सवर्णदीर्घपाठमङ्गीकृत्य तत्र पररूपप्रसङ्गवारणाय सौत्रचशब्दस्यैङीत्यनु-कर्षणार्थत्वमाश्रित्य चशब्दसार्थकतावादिनां मतं नैतदस्ति प्रयोजनं अद्यश्यादित्येव भवितव्यमित्यादिना भाष्ये निराकृतमिति भावः । **अधिकेति** । यत्रेदं पररूपमोमाङोः परत्वाभावेन वा परत्वेऽपि मध्येऽपवादन्यायेन प्राप्त्ययोगेन वा नायाति तत्रापि पररूपं भवतीति विधानार्थत्वादित्यर्थः । **समाधानेनेति** । अकः सवर्णदीर्घोऽपि बाध्यत इत्येतत्काशिकां व्याकुर्वता मञ्जरीकृता नैष दोषः । चकारोऽत्र क्रियते । स पुनर्विधानार्थो भविष्यतीत्युक्तत्वात् । चशब्दोऽधिकविधानार्थः । तेन शकन्ध्वादिषु पररूपं भविष्यतीति न्यासकारेणाप्युक्तत्वादिति भावः । **चकार-स्यान्यत्रापीति** । राजर्षिरित्यादावपीत्यर्थः । अतिप्रसङ्गवारणाय सङ्ग्राहकमाह **अभियुक्तेति** । इत्यपीत्यपि-पदेनाद्यश्यादित्यादिवदिति सङ्गृह्यते । चशब्दस्यैङीत्यनुकर्षणार्थत्वान्नान्यत्र पररूपाभ्यनुज्ञापकत्वमित्येतच्छङ्कापि प्रागुक्तरीत्या भाष्य एव परिहृतेति चानेन सूचितम् ।

**स०व्र०**— ननु 'गुणोततताम्' इत्यत्र अवतेः तदुपधाकारस्य चोठि सवर्णदीर्घे च सतीत्युक्तस्याऽकित्त्वेऽपि ओमास इत्यादाविव मनोऽविसिवीत्यादिना कित्त्वादार्थिकात् बाहुलकाद्गुणे ओतप्रोतमित्यादिबहुलमुपलम्भात् बाहुलकाद्गुणसंभवेन ओतशब्दे निष्पन्ने तस्मिन्परतो गुणशब्दस्य अकारान्ततया 'वृद्धिरेची'ति वृद्धौ गुणौततामिति स्यान्न तु गुणोततामितीत्याशयेन शङ्कते **नन्विति** । अद्य आ ऊढा आद्गुण इति अद्योढेत्यादौ धातूपसर्गयोः कार्यमन्तरङ्गमिति पूर्वमाद्गुणे पश्चादद्यशब्देन संबन्धे वृद्धिरेचीति प्राप्ताया वृद्धेराङ्नाङोरेकादेशयोः कार्यमाङ्ग्रहणेन गृह्यत इति ओमाङोश्चेति पररूपस्य मध्येऽपवादन्यायेन बाधकत्वेऽपि अद्य आऋश्यादद्यश्यादित्यादौ प्राप्तसवर्ण-





दीर्घत्वस्य परत्वेन पररूपस्य तद्बाधकत्वायोगेन कथमद्यश्र्यादित्यादिकमित्याशङ्कित ओमाङोश्चेत्यत्रत्यचकारस्याधिकविधानार्थत्वाद्युक्तं दीर्घत्वबाधकत्वमिति समाधानेन चकारस्यान्यत्रापि प्रयोगानुसारेण पररूपाभ्यनुज्ञापकत्वादस्याप्यभियुक्तप्रयोगत्वेन पररूपे युक्तं गुणोततामित्यपि इत्यभिप्रायेण समाधत्ते **ओमाङोश्चेतीति** ।

**कुण्डल०— चशब्देनेति** । ओमाङोश्चेति सूत्रव्याख्यानावसरे न्यासे चशब्दः अधिकविधानार्थः इत्युक्तत्वादनुक्तसमुच्चयार्थेन चशब्देन ऊतशब्देऽपि परतः पररूपत्वानुशासनादित्यर्थः ।

**विठ्ठ०—** ननु वृद्धिरेचि इति सूत्रेण गुणौततामिति भवितव्यं गुणोततामिति कथमिति शङ्कते **नन्विति** । ओमाङोश्चेति वृद्ध्यपवादकत्वेन पररूपादेशविधानात् गुणोततामिति युक्तमेवेति परिहरति **मैवमिति** । नन्वत्र ओकारस्य मान्तत्वाभावेन ओमाङोरन्यतरस्यापि परत्वाभावात् कथमनेन पररूपत्वमित्यत उक्तम् **चशब्देनेति** । चकारोऽधिकविधानार्थः न्यासकारेणोक्तः । चशब्दस्याधिकविधानार्थत्वात् अत्रापि पररूपत्वमनुशासितमेवेति भावः ।

**चषकः—** ओतत्ववाचीत्यत्र भावप्रत्ययस्येव गुणोततामित्यत्रापि तादृशप्रत्ययस्योतशब्दप्रकृतिकतां मन्वानः शङ्कते **नन्विति** । ओमि आङि च आत् परतः पररूपमेकादेशो भवतीति सूत्रार्थः । शिवायों नमः आ इहि एहि शिव एहि शिवेहीत्युदाहरणम् । वृत्तिव्याख्यानरूपन्यासकारेणैव चकारोऽधिकविधानार्थस्तेन शकन्ध्वादिषु पररूपं भविष्यतीत्यभिहितत्वादिति भावः ।

**गूढ०—** ननु अवधातोर्निष्ठातप्रत्यये छ्वोरिति सूत्रेण वकारस्योठि कृते गुणे सति ओत इति भवति । एवं च गुण ओत इत्यत्र वृद्धौ सत्यां गुणौततामिति स्यात् । गुणोततामिति कथमुक्तिरित्याशयेन शङ्कते **नन्विति** । **मैवमिति** । तथा चात्रापि पररूपत्वं भवतीति न कश्चिद्दोषः ।

**१४२ सु०— अथवा ऊयते रूपमेतत् । नन्वसौ तन्तुसन्ताने पठ्यते । अनेकार्थत्वाद्धातूनामित्यदोषः । कथं तर्ह्योतत्ववाचीति गुणः । तत्रावतिरूपाङ्गीकारात् । वैचित्र्यं तु धातुद्वयजत्वसूचनार्थम् ।**

**बिन्दुः—** ननु महाभाष्ये चकाराः सर्वे प्रत्याख्यायन्ते अन्तरेणापि चशब्दं तदर्थोपलम्भादित्युक्ततया कथं ओमाङोश्चेति चशब्दबलेनौतशब्देऽपि पररूपं सिद्ध्येत् । किञ्च अवतेर्निष्ठायामवितमिति रूपं स्यात् । ओतमित्यस्य सिद्ध्यर्थं तु आगमशासनस्य अनित्यत्वादिडभाव आश्रयणीयः । ततो झलादौ क्ङिति धातोर्ज्वरत्वरेति सूत्रेणोठादेशे कृते आङ् प्रश्लेषं कृत्वा एत्येधत्यूठ्स्विति प्राप्ताया वृद्धेरभावार्थं संज्ञापूर्वको विधिरनित्य इत्याश्रयणीयमिति महती कुसृष्टिरादरणीया स्यादित्यतः पक्षान्तरमाह **अथवा ऊयते रूपमेतदिति** । ऊयी तन्तुसन्तान इति भौवादिकस्येत्यर्थः । **कथं तर्हीति** । ऊयतेर्निष्ठायां





लोपो व्योर्वलीति यकारलोपे सार्वधातुकार्धधातुकयोरिति प्रसक्तस्य गुणस्य क्ङिति चेति निषेधात् ऊतमिति स्यान्न त्वोतमिति भावः। **अवतिरूपाङ्गीकारादिति**। नन्ववतेरपि कथमेतद्रूपं स्यात्। न च निष्ठायां लोपो व्योर्वलीति वकारलोपे प्राप्ते च्छ्वोः शूडनुनासिके चेति तस्य ऊत्वे आद्गुण इति गुणे च तत्सिद्धिरिति वाच्यम्। ज्वरत्वरेति सूत्रेण संपूर्णस्यैव धातो ऊड्विधानात्। अन्यथा आद्गुण इति गुणं बाधित्वा एत्येधत्यूठ्स्विति वृद्धिप्रसङ्गेन इष्टसिद्ध्यभावप्रसङ्ग इत्युक्तत्वात्। एवं च ऊत इति स्थिते क्ङितीति प्रतिषेधस्य सार्वधातुकार्धधातुकयोरिति प्रसक्ते गुणे निवारणासंभवात्। सर्वं चैतत् आगमशासनस्य अनित्यत्वमभ्युपेत्योक्तम्। वस्तुतस्तु आर्द्धधातुकस्येड्वलादेरित्यन्तरङ्गत्वात्परत्वाच्च इडागमे सति अवितमित्येव स्यात्। निष्ठाया इडादित्वेन झलादौ क्ङितिविहितस्य ऊठः प्रसक्त्यभावात्। न चैवं सति ऊम् इत्यपि सिद्ध्येत् तत्रापि मन्प्रत्ययस्य वलादित्वादिडागमः प्रसज्येतेति चेत्। मैवम्। नेड्वशि कृतीति शादौ कृत्प्रत्यये इडागमस्य निषिद्धत्वात् मकारस्य वश्प्रत्याहारान्तर्गतत्वात् निष्ठायाश्च तद्बहिर्भूतत्वेन प्रतिषेधाप्रसङ्गात्तस्मात्पूर्वोक्तकुसृष्ट्या इडागमस्यानित्यतां क्ङिति चेति प्रतिषेधस्य च नञा निर्दिष्टमनित्यमित्यनित्यतां चाश्रित्य कथञ्चित्समाधीयेतेत्यतो निर्दोषं पक्षमाह।

**परि०— ऊयतेरिति**। अत्रैके चोदयन्ति। यदि वेञ् तन्तुसन्तान इत्यस्येत्यर्थः तदा वयतेरिति निर्देशः स्यात्। यदि च विशेष्यनिघ्नवर्गे 'ऊतं स्यूतमुतं चेति त्रितयं तन्तुसन्ततावि'त्यमरोक्त्या ऊयी तन्तुसन्तान इत्यस्य रूपमित्यमरव्याख्यानबन्दिघटीयाद्युक्त्या च ईकारेत्संज्ञकयकारान्तधातोः निर्देशस्तदा तस्यात्मनेपदवर्ग एव भीमसेनधातुपाठे पठितत्वात्। तथैव धातुवृत्तौ व्याख्यातत्वात्। ऊयीङ् सेवन इति कविकल्पद्रुमे ङकारानुबन्धकरणाच्चात्मनेपदित्वेन तिपा निर्देशायोगः। तिपोऽत्र कर्त्रर्थकलादेशत्वाभावतया कर्तृवाचित्वाभावेन कर्तरि शबिति सूत्रविहितशब्विकरणयुक्तत्वेन निर्देशायोगश्चेति। अत्राहुः। अस्तु वेञ् तन्तुसन्तान इत्यस्य रूपमित्यर्थः। न चोयतेरिति निर्देशायोगः। तृतीयाध्यायतृतीयपादे 'रोगाख्यायां ण्वुल्बहुलम्' इति सूत्रे 'इक्श्तिपौ धातुनिर्देश' इति वार्तिके इक्तिपावित्यनुक्त्वा श्तिपाविति शित्वेन निर्देशस्य कर्तृकर्मादिवाचित्वाभावेऽपि तन्निबन्धनशबादिप्रत्ययादिरूपकार्यसिद्धिप्रयोजनार्थत्वोक्तेः। अत्रापि वेञः श्तिपा निर्देशे तस्य भावकर्मवाचित्वाभावेऽपि भावकर्मणोरित्यधिकारे 'सार्वधातुके यगि'ति सूत्रोक्तयक्प्रत्ययेन सह तिपा निर्देशे तस्य कित्वात् 'वचि स्वपि यजादीनां किती'ति सूत्रेण 'यजिर्वपिर्वहिश्चैव वेञ् व्येञौ श्वयतिस्तथा। वद्वसौ ह्वयतिश्चैव स्मृता नव यजादय' इति यजादित्वाद्वकारस्य संप्रसारणे 'संप्रसारणाच्च' इति एकारस्य पूर्वरूपत्वेऽकृत्सार्वधातुकयोरिति दीर्घे च ऊयतेरिति निर्देशोपपत्तेः। अत एव लीङ् श्लेषणे ली श्लेषण इत्यनयोः क्रमात् श्यन्श्नाविकरणयोर्धात्वोः





विलाय विलीयेत्यादिरूपसिद्ध्यर्थं ल्यबादावात्वविधायके 'विभाषा लीयतेः' इति षष्ठाद्यपादीयसूत्रे महाभाष्ये लीयतेरिति लीयतिलीनात्योर्यका निर्देश इत्युक्तम्। कैयटे मञ्जर्यां च श्तिपः शित्करणसामर्थ्यात् भावकर्मवाचित्वाभावेऽपि यग्भवति। यथा कर्तृवाचित्वाभावेऽपि शबादयो 'भवतेर' इत्यादिसौत्रनिर्देशेषु दृश्यन्त इत्युक्तम्। ऊयी तन्तुसन्तान इत्यस्य वा अयं निर्देशः। न चोक्तदोषः। लीङादेरिवात्मनेपदिनोऽपि 'विभाषा लीयतेरुपसर्गस्यायतौ नित्यं स्मयतेः' इत्यादौ तिपा निर्देशदर्शनादत्र शास्त्रेऽपीक्षति कर्मेत्यादिनिर्देशदर्शनाच्च तिपः कर्तृवाचित्वाभावेऽपि शपा निर्देशस्योक्तदिशोपपन्नत्वाच्चेति। न चाद्यपक्षे वयतेरित्येव कुतो नोक्तम्। मैवम्। वय गताविति भ्रान्तिनिरासाय वाऽन्यत्रापि तिपा निर्देशस्थले शबादिविकरणेन सह निर्देशो ज्ञेय इति ज्ञापनार्थत्वाय वा गुणोततामिति कर्मणि निष्पन्नताद्योतनाय वा वयतेरित्येव नोक्तम्। तथा च 'ईक्षतेर्नाशब्दम्' इत्यादिनिर्देशोपपत्तिरिति। एवं च वेञ् इत्यस्य क्तप्रत्यये यजादित्वात्संप्रसारणे पूर्वरूपे कित्वेन गुणाभावे च उतेति भवति। ऊयी इत्यस्य वा क्तप्रत्यये श्वीदितो निष्ठायामितीडभावे 'लोपो व्योर्वलि' इति यकारलोपे ऊतेति भवति। एवं च गुण उतेति वा गुण ऊतेति वा स्थिते आद्गुण इति गुणे गुणोततामिति स्यादिति भावः। **अनेकार्थत्वाद्धातूनामिति** 'क्रियावाचित्वसिद्ध्यर्थमेकैकोऽर्थः प्रदर्श्यते। प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातव' इत्युक्तेर्गत्यर्थोऽपि भविष्यतीति भावः। **कथं तर्हीति**। वेञ् तन्तुसन्तान इत्यस्य रूपत्वे उतत्ववाचीति स्यात्। ऊयी तन्तुसन्तान इत्येतद्रूपत्वे तु ऊतत्वेति स्यात्। उकारस्य ऊकारस्य वा गुणप्राप्तेः प्रत्ययकित्वेन 'क्ङिति च' इति बाधादिति भावः। **अवतिरूपेति**। ननु कथमेतत्। अवतेः क्तप्रत्यये इडागमे झलादित्वाभावात्। औणादिके तप्रत्यये च कित्वाभावादूठोऽप्राप्तेरिति चेत्। सत्यम्। बहुलग्रहणेन ऊठ्सवर्णदीर्घगुणानां संभव इत्येके। छ्वोः शूडिति सूत्रवृत्तौ केचिदत्र क्ङितीति नानुवर्तयन्तीत्युक्तत्वेन तत्पक्षे ज्वरेत्यत्रापि क्ङितीत्यस्याननुवृत्तेः अवतेरौणादिके तप्रत्यये 'तितुत्रतथसिसुसरकसेषु चे'ति इडभावे झलादौ प्रत्यये ज्वरत्वरेति ऊठि सवर्णदीर्घे गुणे च ओतेति रूपम्। अत एव धातुवृत्तौ उणादिवृत्तौ काशिकावृत्तौ चावतेरौणादिकतुन्प्रत्ययान्तस्य ओतुरिति रूपं प्रदर्शितमित्यन्ये। एतेन गुणोततामिति कथम्। वृद्धिरेचीति भाव्यमिति पूर्वतनशङ्काग्रन्थोऽपि समर्थितो ध्येयः। अवतेरोतेतिरूपस्योक्तदिशा संभवेन वृद्धिरेचीति भाव्यमिति पूर्वशङ्कोपपन्ना। ननु गुणोततामित्यत्र वेञो वा ऊयीति धातोर्वा रूपम्। ओतत्ववाचीत्यत्रावते रूपं कुत उपात्तं भाष्यकृतेत्यत आह **वैचित्र्यमिति**। ॐकारस्यावधातुजत्वमिव वेञ् तन्तुसन्तान इत्यादिधातुजत्वमप्यस्तीति सूचनार्थमित्यर्थः। 'उणादयो बहुलम्' इति बहुलग्रहणाद्वेञः कर्मणि क्मन्प्रत्यये यजादित्वात्संप्रसारणे बहुलग्रहणादेव गुणे च सति ॐ इति रूपस्य ऊयीत्यस्य वा मन्प्रत्यये





नेड्वशीतीडभावे वलिलोपे गुणे च ओमितिरूपस्य संभवात् । तथा च 'ओतमस्मिञ्जगत्सर्वम्' इत्यादिव्याख्यानं युक्तमिति भावः ।

**यादु०— ऊयते रूपमिति** । ऊयी तन्तुसन्ताने इत्यस्येदं रूपं न तु वेञः । तथा सति वयतेरिति वक्तव्यत्वात् । एवं चोयतेः क्तप्रत्यये लोपो 'व्योर्वली'ति यलोपे ऊतमिति रूपं सिद्ध्यति । ततश्चाद्गुण इति गुणे गुणोततामिति भविष्यतीति भावः । **कथं तर्ह्योतत्वेति** । उक्तरीत्या तत्रापि ऊयतिरूपाङ्गीकारे तत्पूर्वमकाराभावेन कथं गुणप्राप्तिः । तथा च ऊतत्ववाचीति स्यादिति भावः । **तत्रावतिरूपेति** । नन्विदमनुपपन्नमिवाभाति । अवतेः क्तप्रत्यये ज्वरत्वरेत्यादिनोपधाकारवकारयोरूठि कृते सवर्णदीर्घे गुणे च सति खल्वोतमिति भवेत् । न चात्रोठः प्राप्तिरस्ति । अवतेः सेट्कत्वेन झलादेः कितोऽभावात् । नापि गुणस्य क्ङिति निषेधादिति चेन्न । औणादिकस्य क्तप्रत्ययस्यात्र विवक्षितत्वात् । न चैवं गुणप्राप्तावप्यूठोऽप्राप्तिः । उणादयो बहुलमिति बहुलग्रहणात् झलादेः कितोऽभावेऽपि ऊठ्संभवात् तितुत्रेति सूत्रेणोठो निषेधात् झलादित्वोपपत्तेश्च । अत एवोतुरित्यत्रावतेः सितनीत्यनेन तुन्प्रत्यये बहुलग्रहणादकित्यपि ऊठ् भवतीत्युणादिवृत्तावुक्तमिति न किञ्चिदत्रानुपपन्नमिति । **धातुद्वयजत्वेति** । ओङ्कारस्येति शेषः ।

**आनन्दः— ऊयते रूपमेतदिति** । ऊयी तन्तुसन्तान इत्यस्य भौवादिकस्य ऊत इति रूपे गुणशब्देन सह सन्धौ गुणोततामिति भवति । तस्मादेव धातोः ओमित्यादिरूपमित्यर्थः । शङ्कते **नन्विति** । तथा चास्य प्रवेशनार्थत्वं कथमिति भावः । परिहरति **अनेकेति** । ऊयते रूपपक्षे ओतत्ववाचीत्यत्र न गुणः क्तप्रत्ययस्य कित्वेनगुणनिषेधादिति शङ्कते **कथमिति** । नन्वेवं कदाचिदवते रूपं कदाचिदूयते रूपमिति वैचित्र्यं किमर्थमाश्रीयते इत्यत आह **वैचित्र्यं त्विति** ॥ अस्मिन्पक्षे चशब्दार्थप्रतिपत्तिगौरवं हृदि निधाय लघुभूतं पक्षान्तरमाह **अथवेति** । ऊयते क्तप्रत्यये लोपो व्योर्वलीति यलोपे ऊतमिति रूपं द्रष्टव्यम् । अवते कित्यपि गुणे सति प्रयोगादर्शनिन न बाहुलककल्पनेऽपि ऊयतेः किति गुणे सति प्रयोगादर्शनिन बाहुलककल्पकः इत्याशयेन शङ्कते **कथं तर्हीति** । अत एव तथैव समाधत्ते **तत्रेति** । तर्हि अनेकधातुजत्वे सकृत्प्रयुक्तस्योतशब्दस्य अनेकधातुजत्वमन्याय्यं स्यादित्यतः प्रयोजनाभाव एव तत् । सति प्रयोजने न दोष इत्याह **वैचित्र्यं त्विति** । सूत्रकृत्प्रयुक्तस्य ओङ्कारस्येति शेषः । ननु ऊयी तन्तुसन्तान इत्यस्मादोमिति रूपनिष्पत्तिः कथमिति चेत् । न । अवतेष्टिलोपश्चेत्यत्र ऊयतेरुपसंख्यानं कर्तव्यम् । एवं च ऊय इत्यस्मान्मन्प्रत्यये तस्य टिलोपे लोपोव्योर्वलीति यलोपे सार्वधातुकेति गुणे च सति ओमिति सिद्ध्यति ।

**कं०रा०— अथवेति** । ऊयतेरित्यनेन भौवादिकस्य ऊयी तन्तुसतान इत्यस्य ग्रहणम् । तस्माच्च क्तप्रत्यये श्वीदितो निष्ठायामिति इटः प्रतिषेधे लोपोव्योर्वलीति यलोपे च निष्पन्न ऊतशब्दः । तद्गुण ऊततेति स्थिते आद्गुण इति गुणे तद्गुणोततेति रूपमिति भावः । केचित्तु वेञ् तन्तुसन्तान इत्यस्य ग्रहणमित्याहुः । तन्न । तथात्वे वयतेरिति निर्देशापत्तेः । ननु ऊयी तन्तुसन्तान इति धातुपाठेन ऊयतेरर्थान्तरवाचित्वात्ततो निष्पन्नस्योतशब्दस्य गतत्वप्रविष्टत्वार्थकत्वानुपपत्तिरित्याशयेन शङ्कते **नन्विति** । परिहरति **अनेकेति** । **कथं तर्हीति** । यद्यूयते रूपमिदं तर्हि तस्य





क्तप्रत्यये परतो यलोपे कृते क्ङिति चेति गुणप्रतिषेधादोतत्ववाचीत्यत्र गुणः कथमित्यर्थः । **अवतिरूपेति** । ओतत्ववाचीत्यत्र गत्याद्यर्थकस्यावते रूपाङ्गीकारादित्यर्थः । यद्यप्यवतेरुदात्तेत्वेनैकाच उपदेशेऽनुदात्तादिति इटः-प्रतिषेधाभावेन आर्धधातुकस्येड्वलादेरिति इडागमे कृतेऽवितेत्येव रूपेण भाव्यम् । न त्वोतत्वेति रूपं संभवति । तथाऽप्यवतेरौणादिकतप्रत्यये 'तितुत्रतथसिसुसरकसेषु चे'ति इट्प्रतिषेधकसूत्रे तेत्यनेन औणादिकतशब्दस्यैव ग्रहणं नान्यस्येति वृत्तिकारेणोक्ततया तस्येडागमाभावेन तस्मिन्परतो ज्वरत्वरेत्यादिनाऽवतेरुपधाया वकारस्य चोठि गुणे च कृते ओतेति रूपं निष्पन्नमिति द्रष्टव्यम् । ननु ज्वरत्वरेत्यत्र काशिकायां क्वौ झलादौ कितिपरत इत्युक्तत्वादौणादिकतप्रत्ययस्य च कित्वटित्वयोरभावादूठोऽप्राप्तिरिति चेन्मैवम् । वृत्तिकोशे क्वाचित्कस्य क्तिद्ग्रहणस्य संपातायातत्वात् । अन्यथा 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्नि'त्यवतेस्तुन्प्रत्यये ओतुरिति रूपं न स्यात् । तदुक्तं धातुवृत्तौ 'ज्वरत्वरेत्यत्र क्वचिद्वृत्तिकोशे क्वौ झलादौ ट्किंतीति पठ्यते । तत्र ट्किद्ग्रहणं संपातायातमि'ति । नन्वोतत्ववाचीत्यत्रावते रूपं तद्गुणोततामित्यत्र तूयते रूपमिति वैचित्र्यं किमर्थमाश्रीयत इत्यत आह **वैचित्र्यं त्विति** । ओमिति रूपमवतेरूयतेर्वा निष्पन्नमिति सूचनार्थं वैचित्र्यमाश्रितमित्यर्थः । ओमिति रूपस्या-वतेर्निष्पत्तिप्रकारः प्रागुक्तः । ऊयतेस्तन्निष्पत्तिप्रकारस्तु आङ्पूर्वादूयतेरौणादिकमन्प्रत्यये लोपो व्योर्वलीति यलोपे बहुलग्रहणादाङः ऊकारस्य च ह्रस्वत्वे गुणे च ओमिति भवतीति द्रष्टव्यम् ।

**श्रीनिधि०— वैचित्र्यमिति** । एकत्रावतिरूपत्वाङ्गीकरणं एकत्र ऊयतिरूपत्वाङ्गीकरणम् इत्येवं वैचित्र्यमित्यतःपरं ओङ्कारस्येति शेषः । अत्र च ऊयधातोरौणादिके मन्प्रत्यये तस्य टिलोपे निरुक्तत्वेन यकारलोपे सार्वधातुकेति गुणे ॐ इति रूपं ज्ञेयम् । **असौ** वयतिः ऊयतिर्वा । **अदोषः** ओतत्ववाची गुणोततामित्यत्र वैरूप्यदोषाभावः ।

**वा०चं०—** अस्मिन्पक्षे चशब्दार्थप्रतिपत्तिगौरवं हृदि निधाय लघुभूतं पक्षान्तरमाह **अथवेति** । ऊयतेः क्तप्रत्यये 'लोपो व्योर्वली'ति यलोपे ऊतमिति रूपं द्रष्टव्यम् । अवतेः क्विपि गुणे सति प्रयोगदर्शनेन बाहुलककल्पनेऽप्यूयतेः किति गुणे सति प्रयोगादर्शनेन न बाहुलककल्पक इत्याशयेन शङ्कते **कथं तर्हीति** । अत एव तथैव समाधत्ते **तत्रेति** । तर्हि सकृत्प्रयुक्तस्यौतशब्दस्यानेकधातुजत्वमन्याय्यं स्यादित्यतः प्रयोजनाभाव एव तत् सति प्रयोजने न दोष इत्याह **वैचित्र्यं त्विति** । व्याख्येयोङ्कारस्य धातुद्वयजत्वसूचनार्थं तद्व्याख्याने प्रयोगवैचित्र्यमिति भावः ।

**वा०र०— प्रतिपत्तिगौरवमिति** । चकार एङीत्यनुकर्षणार्थो न भवति । किन्तु व्यर्थ एवेति भाष्यमर्यादया प्राप्नोति । वृत्त्यादिरीत्या तु अधिकविधानार्थत्वं तस्यास्तीति प्राप्नोतीत्येवं प्रतिपत्तौ गौरवमित्यर्थः । **रूपमेतदिति** मूलम् । गुणोततामित्यत्र हि गुणशब्दादुत्तरं किञ्चित्पदमस्ति । तच्चेदूतेत्येवंरूपं तदा वृद्ध्यप्राप्त्या तत्प्राप्तिशङ्काकारिणा तत्पदमोतेति निष्पादितम् । तथाविधत्वमाश्रित्यैव च वृद्ध्यभाव उक्तः । वक्ष्यति च **तत्रावतीति** । तदेतदुत्तरपदमूयते रूपमिति योजनाश्रयणादेतत्पदपरामृष्टव्यमत्र किमिति शङ्कानुदय इति ज्ञेयम् । गुणपदादुत्तरपदत्वेनाभिमतस्य ऊयी





तन्तुसन्ताने इत्येतद्धातुजत्वाङ्गीकारे कथं तर्हीत्युत्तरमूलावतारटीकोक्तप्रकारस्योयतिरूपत्वोपपादकत्वस्यापि तन्त्रेण सत्त्वात् तत्प्रकारेण किति परतोऽपि गुणस्य कल्पकाभावेनाकल्प्यत्वादूतेत्येव रूपसिद्ध्या तस्मिन्परतो गुणशब्दस्थावर्णस्याद्गुणे विवक्षितरूपसिद्धिरिति भावेन यकारश्रवणप्रसङ्गवारणायाह **ऊयतेः क्तेति**। **अनेकार्थत्वादिति** मूलम्। कुर्दखुर्दक्रीडायामेवेति धातुपाठे एवकारेण कुर्दखुर्दान्यधातूनामर्थान्तरमस्तीति ज्ञापितम्। तथा मृषस्तितिक्षायामिति सूत्रे तितिक्षाग्रहणेन तितिक्षारूपार्थविवक्षायामिति प्रतिपादनेनार्थान्तरमस्तीति ज्ञापितम्। तथाच कस्यचिद्धातोरनेकार्थत्वाभावेऽपि प्रायः सर्वधातूनामनेकार्थत्वमिति सिद्ध्यति। अत एवोक्तम् 'क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्शितः। प्रयोगतोऽवगन्तव्या अनेकार्था हि धातव' इतीति भावः। कथं तर्हीति शङ्का न युक्ता। गुणोततामित्यत्रोपपत्तिरूपतां स्वीकुर्वता ओतत्वेत्यत्राप्यूयतिरूपतैवाङ्गीक्रियते। न चैवमूतत्वेति प्रसङ्गः। यथावतिरूपत्वाङ्गीकारे बाहुलकाद्गुणोपपादनमेवमूयतिरूपाङ्गीकारेऽपि बाहुलकादेव गुणोपपत्तेरित्यतः तथाविधबाहुलककल्पकप्रयोगसद्भावात्तत्कल्पनयावतिरूपत्वे गुणोपपत्तावप्युक्ततत्कल्पकाभावादूयतिरूपत्वे बाहुलककल्पनया गुणाप्राप्तिरित्येवं शङ्कोत्थापनमुपपादयति **अवतेः कित्यपीति**। **प्रयोगदर्शनेन**। ओतंप्रोतमिति प्रयोगदर्शनेन। **तथैवेति**। यद्रूपत्वाङ्गीकारे गुणोपपत्तिस्तथैवेत्यर्थः। **सकृत्प्रयुक्तस्येति**। एकस्मिन्नेव वाक्ये पर्यायेण प्रयुक्तस्येत्यर्थः। **ओतशब्दस्येति**। यद्यप्योतशब्दस्यैकत्रप्रयोगाङ्गीकारेऽप्यूतशब्दस्यैवान्यत्रप्रयोगाङ्गीकारेण नैकस्यैव प्रयोग इति तत्रान्यायशङ्कानवकाशः। तथाप्योतत्वगुणौतेति प्रयोगेणौत्सर्गिकशब्दैकत्वप्रत्यभिज्ञानात् तत्प्रत्यभिज्ञामनादृत्य सगुणनिर्गुणशब्दभेदाश्रयणमेवानुपपन्नमिति तदुपपादकतया धातुद्वयजत्वकल्पनमन्याय्यमित्यत्र तात्पर्याददोषः। अत एवं प्रयोगवैचित्र्यमिति वक्ष्यति। अथवा सगुणत्वनिर्गुणत्वविशेषमविवक्षित्वा उतशब्दत्वेन विवक्षायामेकस्यैव प्रयोगद्वयमायातीति ज्ञेयम्। **तदिति**। कल्पनमन्याय्यमित्यर्थः। दोष इति यावत्। दोष इति वक्ष्यमाणत्वात्। **सति प्रयोजन इति**। तदिति वर्तते। अनेकधातुजत्वकल्पनं प्रयोजने सति न दोष इत्यर्थः। **व्याख्येयोङ्कारस्येति**। नन्वोङ्कारस्यावतिरूपत्वाङ्गीकारेऽवतेष्टिलोपश्चेति सूत्रेण मनादिसंभवेऽप्यूयतिरूपत्वाङ्गीकारे मनःप्रापकाभावेनाप्रवृत्त्या तट्टिलोपस्यापि कल्पनानवकाशेनोमिति रूपप्रसङ्ग इति चेन्मैवम्। धातुद्वयजत्वेति वदता मूलकृतैव पूर्वोपात्तधातोरिवैतद्धातोरप्युक्तप्रत्यये ओमिति रूपमित्यस्याभ्यनुज्ञातत्वात्। एतावानेव विशेषो यत्पूर्वत्र मन्विधायकप्राप्तः उत्तरपक्षे तु बाहुलकप्राप्त इति। विहितमनन्तावतिरूपतां परित्यज्य बाहुलकलब्धमनन्तोयतिरूपत्वं कुतः स्वीकार्यमिति शङ्का नोदेति। अवतेरेव रूपमोतत्वगुणोततेत्येतदुभयमित्यङ्गीकारे वृद्ध्यभावाद्यनुपपत्तिभयेन प्रयोगवैचित्र्याश्रयणस्य प्रक्रमप्राप्त्यनन्तरमुक्तवैचित्र्यप्रयोजनाभावशङ्कायां व्याख्येयोङ्कारस्य धातुद्वयजत्वसूचनरूपप्रयोजने उक्ते तदुपपादकत्वेन बाहुलकान्मनःकल्पनायाः कृतत्वेनोंशब्दसाधनमात्रप्रसङ्गाभावेन शङ्काया असङ्गतत्वापातात्। धातुद्वयजत्वसूचनप्रयोजनाभावे तद्व्यर्थमित्याशयस्तु टीकाकृतैव पूर्वास्वरसतया वक्ष्यते। अवतेष्टिलोपादिकं व्युत्पाद्याप्यथवोयतेरिति वदता स्वव्युत्पादनस्य क्वाचित्कभाष्यानुसारित्वस्वीकारेऽप्यथवा आकारेति पक्षे सर्वथा भाष्याननुसारित्वं स्वव्युत्पादनस्याङ्गीकृतं भवतीति महतो दोषादबिभ्यतोऽवतिरूपत्वं स्वीकृत्याप्यूयतिरूपत्वास्वीकारे भयाभाववत् ओङ्कारस्योयतिरूपत्वमङ्गीकृत्य बाहुलकमनोऽङ्गीकारे भयाभावेन सुखेनाङ्गीकर्तुं शक्यत्वाच्चेत्यलम्।

**स०व्र०**— अस्मिन्पक्षे चशब्दार्थोऽनुमत इत्युक्तप्रतिपत्तिगौरवं हृदि निधाय लघुभूतं पक्षान्तरमाह **अथवेति**। ऊयी तन्तु सन्तान इत्यस्मात्क्तप्रत्यये 'लोपो व्योर्वली'ति यलोपे ऊतमिति रूपं द्रष्टव्यम्। अवतेः क्विपि गुणे सति प्रयोगदर्शने बाहुलककल्पनेऽपि ऊयतेः किति गुणे सति प्रयोगादर्शनेन बाहुलकमित्याशयेन शङ्कते **कथं तर्हीति**। अत एव समाधत्ते **तत्रेति**। ननु इदमनुपपन्नमिवाभाति अवतेः क्तप्रत्यये ज्वरत्वरेत्यादिनोपधाकार-वकारयोरूठिकृते सवर्णदीर्घे गुणे सति खल्वोतमिति भवेत्। न चात्रोठ्प्राप्तिरस्ति अवतेः सेट्कत्वेन झलादेः कितोऽभावात्। नापि गुणस्य क्ङिति चेति निषेधादिति चेन्न। औणादिकस्य क्तप्रत्ययाङ्गीकारात्। न च तस्य कित्वाद्गुणाप्राप्तौ ऊठोऽप्राप्तिः 'उणादयो बहुलम्' इति बहुलग्रहणादकित्यप्यूठः संभवात्। तितुत्रेति सूत्रेणोठो निषेधात् झलादित्वोपपत्तेश्च। ननु च नियामकाभावे कथं बहुलग्रहणमपि अकित्यप्यूठः सूचकमिति वाच्यं ओतुरित्यत्रावतेः सितनीत्यनेन तुन्प्रत्यये बहुलग्रहणादकित्यपि ऊठ् भवतीति उणादिवृत्तावेव उक्तत्वादिति न किञ्चिदनुपपन्नम्। अनेकधातुजत्वे सकृत्प्रयुक्तस्योतशब्दस्यानेकधातुजत्वमन्याय्यं स्यादित्यतः प्रयोजनाभाव एवैतद् दूषणं प्रयोजने तु नेत्याह **वैचित्र्यं त्विति**।

**कुण्डल०**— **अनेकार्थत्वादिति**। ''क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदृश्यते। प्रयोगतोऽवगन्तव्या अनेकार्था हि धातव'' इत्युक्तेरिति भावः। **ऊयतेरिति**। ऊयी तन्तुसन्तान इत्यस्माद्धातोः क्तप्रत्यये श्वीदितो निष्ठाया-मिति इट्प्रतिषेधे लोपो व्योर्वलीति यलोपे च निष्पन्न ऊतशब्दः ततश्च तद्गुण ऊत इति स्थिते आद्गुण इति गुणे तद्गुणोततेति रूपमिति भावः। केचित्तु वेञ् तन्तुसन्तान इत्यस्य ग्रहणमित्याहुः। तथात्वे वयतेरिति निर्देशापत्तिः। तद्गुणोततामित्यत्रोततामिति यदि ऊयते रूपं स्यात्तर्हि ऊयी तन्तुसन्तान इत्यस्मात् क्प्रत्यये इट्प्रतिषेधे यलोपे च सति सार्वधातुकार्धधातुकयोरित्यनेन प्राप्तगुणस्य क्ङिति चेति निषेधात् ऊतत्ववाचीति वक्तव्ये ओतत्ववाचीति कथमिति शङ्कते **कथं तर्हीति**। **अवतिरूपाङ्गीकारात् इति**। यद्यप्यवतेरुदात्तत्वेन एकाच उपदेशे अनुदात्तादिति इट्प्रतिषेधाभावेनार्धधातुकस्येड्वलादेरितीडागमे कृते अवितेति रूपेण भाव्यम्। **न त्वोतेति**। तथाप्यवते-रौणादिकतप्रत्यये तितुत्रतथसिसुसरकसेषु चेति इट्प्रतिषेधकसूत्रे ते इत्यनेनैव औणादिकतशब्दस्यैव ग्रहणम्। नान्यस्यैवेति वृत्तिकारेणोक्ततया तस्येडागमाभावेन तस्मिन् परतः ज्वरत्वरेत्यादिना अवतेरुपधायावकारस्य चोठि गुणे च कृते ओतेति रूपसिद्धेर्निष्कण्टकत्वात्। ननु ज्वरत्वरेत्यत्र काशिकायां क्वौ झलादौ कितिपरतः इत्युक्तत्वा-दौणादिकतप्रत्ययस्य च कित्वङित्वयोरभावात् ऊठः अप्राप्तिरिति चेत् न। वृत्तिकारोक्तस्य क्वाचित्कस्य क्ङिङिद्ग्रहणस्य संपातायातत्वात्। अन्यथा सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुनिति अवतेस्तुन्प्रत्यये ओतुरिति रूपं न स्यात् तदुक्तम् धातुवृत्तौ। ज्वरत्वरेत्यत्र क्वचिद्वृत्तिकोशे क्वौ झलादौ किति पठ्यते तत्र क्ङिद्ग्रहणं संपातायातमिति। **वैचित्र्यमिति**। ओतत्ववाचीत्यत्र ओतशब्दस्य ग्रहणलक्षणं तद्गुणोततामित्यत्रोतशब्दस्य च ग्रहणलक्षणं वैचित्र्यमित्यर्थः।

**स०ना०**— ननु ऊतत्ववाची ह्योङ्कार इति वक्तव्ये कथमोतत्ववाचीति विचित्रशब्दप्रयोग इत्यत आह **वैचित्र्यं त्विति**। ओङ्कारस्य गतिप्रवेशनार्थकावधातुजत्वसूचनार्थमित्यर्थः। इदमुक्तं भवति। यद्यप्यवधातुरेक एव





तथापि अव रक्षणगतितृप्तिअवगमप्रवेशस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिष्विति बह्व-र्थकत्वाभिधानेन विशिष्टभेदाद्भेदः। ततश्च रक्षणाद्यर्थकावधातोर्मन्प्रत्यये निष्पन्नस्य ॐशब्दस्य गुणपूर्त्यर्थकत्वा-भावाज्जिज्ञास्यस्य जीवाद्भेदो न सिद्ध्येदिति। ओङ्कारस्य गुणपूर्णत्ववाचितासिद्ध्ये ओतत्ववाचीत्युक्तम्। एवं च ओतमिति अव्युत्पन्नप्रातिपदिकस्य गतिप्रवेशनयोरेव रूढत्वात् मन्प्रत्ययविधायके अवतेष्टिलोपश्चेति सूत्रे गति-प्रवेशनार्थकावतेरेव ग्रहणं न तु रक्षणाद्यर्थस्येति ज्ञापनादोङ्कारस्य गुणपूर्णत्वाभिधायिता सिद्धेति।

**विठ्ठ०**— अत्र चशब्दस्यार्थप्रतिपत्तिगौरवाल्लघुभूतपक्षान्तरमाह **अथवेति**। ऊयतेः क्तप्रत्यये ककारलोपे लोपो व्योर्वलि इति यकारलोपे ऊतमिति रूपसिद्धौ गुणशब्दात्परस्य ऊतेत्यस्य आद्गुण इति गुणे गुणोततामिति भविष्यतीति भावः। ऊयी तन्तुसन्ताने इति धातुव्याख्यानात् कथमत्र प्रविष्टत्वार्थकत्वं इत्याशङ्क्य समाधत्ते **नन्विति**। नन्वेवमेव ओतत्ववाचीत्यत्रापि ऊयतिरूपत्वाङ्गीकारे तत्पूर्वमकाराभावेन कथं तत्र गुणप्राप्तिः, ततश्च ऊतत्ववाचीति स्यात् इत्याशङ्क्य तस्यावतिरूपत्वाङ्गीकारान्न दोष इत्याशयेनाह **कथमिति**। ननु ओतत्व-वाचीत्येकस्मिन् वाक्ये द्विरुच्चारितस्य ओतशब्दस्य धातुद्वयजत्वरूपवैचित्र्यकल्पनमन्याय्यम् अतः ओङ्कारस्य धातुद्वयजत्वरूपप्रयोजने सति नायं दोष इत्याशयेनाह **वैचित्र्यं त्विति**। एवं सूचनस्यापि प्रयोजनविशेषादर्शनात् पक्षान्तरमाह **अथवेति**। ओतत्ववाचीत्यस्याप्याकारोपसर्गकोयतिरूपत्वेन गुणे सति ओतत्वेति रूपसिद्धिरिति भावः।

**चषकः**— **ऊयतेरिति**। तन्तुसन्तानार्थकत्वेन व्याख्यातस्येत्यर्थः। **अनेकार्थत्वादिति**। बह्वर्था अपि धातवो भवन्तीत्यादि भाष्योक्तेरिति भावः। निष्ठाप्रत्ययस्य कित्त्वेन गुणनिषेधादिति भावः। **तत्रावतीति**। अथावतेः सेट्कतया झलादिकित्परत्वाभावो न ओठः प्राप्त्यभावेन निष्ठायाः कित्त्वेन गुणानिषेधेन चोतेति रूपनिष्पत्तेरसंभव-दुक्तिकत्वात्। अवतेरुपधाकारवकारयोर्ज्वरत्वरेत्यादिनोठि सवर्णदीर्घे गुणे च सति तत्स्यात्। तदेव दुर्निरूपमिति चेन्न। अत्र व्याकर्तारः औणादिकतशब्देनैव गुणस्य बहुलग्रहणादकित्त्वेऽपि ऊठश्च निर्वाहात्। वृत्त्यादिग्रन्थेषु अवतेस्तुनि ओतुरित्यादिरूपसाधनाच्च सामञ्जस्यमिति व्याचख्युः।

**गूढ०**— **ऊयते रूपमेतदिति**। ऊयी तन्तुसन्तान इत्यस्य भौवादिकस्य ऊत इति रूपे गुणशब्देन सह सन्धौ गुणोततामिति भवति। तस्मादेव धातोः ओमित्यादिरूपमित्यर्थः। शङ्कते **नन्विति**। तथा चास्य प्रवेशनार्थत्वं कथमिति भावः। परिहरति **अनेकेति**। ऊयतेरूपपक्षे ओतत्ववाचीत्यत्र न गुणः। क्तप्रत्ययस्य कित्त्वेन गुणविघातित्वादिति शङ्कते **कथमिति**। ननु कदाचिदवते रूपं कदाचिदूयतेरूपमिति वैचित्र्यं किमर्थमाश्रीयत इत्यत आह **वैचित्र्यं त्विति**। सूत्रकृत्प्रत्युक्तस्योङ्कारस्येति शेषः। ननु ऊयी तन्तुसन्तान इत्यस्मादोमिति रूपविनिष्पत्तिः कथमिति चेत्। न। अवतेष्टिलोपश्चेत्यत्रोयतेरुपसंख्यानं कर्तव्यम्। एवं च ऊय इत्यस्मान्मन्प्रत्यये समागते तस्य टिलोपे च लोपो व्योर्वलीति यलोपे सार्वधातुकेति गुणे च सति ओमिति सिद्ध्यतीति भावः।





**१४३ सु०— अथवाऽऽकारोपसर्गपूर्वकोऽसावित्यदोषः।**

**बिन्दुः— अथवा आकारोपसर्गपूर्वकोऽसावित्यदोष इति** । असौ ऊयतिः तथाच आङनाङोरेकादेशस्य अन्तादिवच्चेत्यादिवद्भावेन आङ्ग्रहणेन ग्रहणात् गुणोततामित्यत्र ओमाङोश्चे-त्यनेनैव पररूपे इष्टसिद्धेः ओतत्ववाची गुणोततामित्यत्र च एकस्यैव धातोरुपादानादैकरूप्यलाभाच्च न कोऽपि दोष इत्यर्थः। न चैवमपि आर्द्धधातुकस्येड्वलादेरितीडागमप्रसङ्गः। ऊयतेर्धातुपाठे उदात्ततया पठितत्वेन 'एकाच उपदेशेऽनुदात्तादि'तीण्निषेधाभावादिति वाच्यम् । 'श्वीदितो निष्ठायामि'ति सूत्रेण ईदित्वप्रयुक्तस्य निष्ठायामिण्निषेधस्योक्तत्वात् । तदेतत्सर्वमभिसन्धायोक्तम् **इत्यदोष इति**।

**परि०—** ऐकरूप्यमेवाह **अथवेति**। **आकारेति**। ओतत्ववाचीत्यत्र वेञो वा ऊयीत्यस्य वा रूपम् । आङ्पूर्वकत्वेन आ उतेति ऊतेति वा स्थिते गुणे च ओतत्ववाचीतिरूपमित्यप्रसिद्ध-तप्रत्ययकल्पनदोषो वैचित्र्यदोषो वा वृद्धिरेचीति भाव्यमिति दोषो वा नेत्यर्थः ।

**यादु०— अथवा आकारेति**। ओतत्ववाचीत्यत्रत्योतशब्द इत्यर्थः। तथा च तत्रापि ऊयतिरूपत्वमेव। आकारोपसर्गस्य तत्पूर्वं विवक्षितत्वाद्गुणोपपत्तिरिति भावः।

**आनन्दः—** अथवा ओतत्वेत्यत्राप्यूयतेरेव रूपम् । न च गुणाभावः । आङुपसर्गपूर्वकत्वादित्याह **अथवेति** । धातुद्वयजत्वसूचनस्यापि प्रयोजनविशेषाभावं मन्वान ओतत्ववाचीत्यत्रापि ऊयतिरूपत्वमङ्गीकृत्य अकारोपसर्गपूर्वकत्वाद्गुणोपयुक्त इत्यभिप्रेत्याह **अथवाकारेति** ।

**कं०रा०— अथवा** । ओतत्ववाचीत्यत्र ऊयतिरूपाङ्गीकारेऽपि नानुपपत्तिः । तस्य क्तप्रत्यये परतो यकारलोपे आकारोपसर्गपूर्वकत्वेन आद्गुण इति गुणे सति ओतेति रूपसंभवादित्याशयेनाह **अथवेति** ।

**वा०चं०—** धातुद्वयजत्वसूचनस्यापि प्रयोजनविशेषाभावं मन्वान ओतत्ववाचीत्यत्रापि । ऊयति-रूपत्वमङ्गीकृत्याकारोपसर्गपूर्वकत्वाद्गुणोऽपि युंक्त इत्यभिप्रेत्याह **अथवा आकारेति** । ननु वयत्यादि ( वेञ् सन्ताने वयति ) धात्वन्तरनिष्पन्नोतशब्दाभिप्रायेणानुभाष्यकारैः प्रयुक्ते गुणोततामित्यत्र वृद्धिशङ्कैव नोदेतीति कथमेतदिति चेत् । अवतिधातुवृत्तोङ्कारव्याख्यानस्य तद्वृत्तोतशब्देनैव संभवेन धात्वन्तराभिप्रायो भाष्यकृतामिति तादृशशङ्कोदयोपपत्तेः । न चैवं निष्ठान्तस्यावतेः किन्निष्ठानिमित्तगुणप्रतिषेधे ओतत्ववाचीत्यत्रौकारो न श्रूयेतेति वाच्यम् । निष्ठायाः कित्त्वेऽपि ऊठ्पक्षे बाहुलकाद्गुणेन 'बहुलमेतन्निदर्शनमि'त्येतद्बलेन यजादिषु पाठाश्रयणात्

सम्प्रसारणेन वा ओकारश्रवणोपपत्तेः । न चोठ्पक्षे ऊठ्निमित्तवृद्धेरेव प्राप्त्या 'वृद्धिरेची'ति प्रश्नासङ्गतिः । ( वृद्धिरेचि । आदेचिपरे वृद्धिरेकादेशः स्यात् । गुणापवादः । कृष्णैकत्वम् । गङ्गौघः । देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् ) । ऊठ्निमित्तवृद्धेः पररूपापवादकत्वेन तत्परिहारासङ्गतिश्चेति वाच्यम् । ऊठ्पक्षेऽपि 'एत्येधत्यूठ्स्वि'त्यत्र रूप-ग्रहणेनात्र च गुणेनोठो विकृतत्वात्तन्निमित्तवृद्धेरप्राप्त्युपपत्त्या उठ्निमित्तवृद्धेरेङि पररूपापवादकत्वेऽपि पुरस्तादिति न्यायेनोमाङोश्चेति पररूपानपवादकतया प्रश्नपरिहारयोः सङ्गतत्वात् । ( एत्येधत्यूठ्सु अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात् । पररूपगुणापवादः । उपैति । उपैधते । प्रष्ठौहः । एजाद्योः किम् । उपेतः । मा भवान् प्रेदिधत् । 'पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरानि'ति न्यायेनेयं वृद्धिरेङिपररूपस्यैव बाधिका न त्वोमाङोश्चेत्यस्य । तेनावैहीति वृद्धिरसाधुरेव । एत्येधत्यूठ्स्वित्यत्र एचीत्यनुवर्तते । तच्च एत्येधत्योः विशेषणम् । नाप्यूठः । असंभवात् । न च मा भवान् प्रेदिधदित्यत्र णौ ण्यन्तात्कर्तरि लुङि परे च्लेः णिश्रीति चङि 'णौ चङ्युपधाया ह्रस्व' इति ह्रस्वे कृते नायमेधतिरिति वाच्यम् । एकदेशविकृतस्यानन्यत्वात् । चङीति सूत्रेणाजादेर्द्वितीयस्येति धिशब्दस्य द्वित्वे चर्त्वे 'णेरनिटी'ति णिलोपे च सति प्रेदिधदिति रूपम् । चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यादिति सूत्रार्थः । चङि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्त अजादेर्द्वितीयस्येति च । माङ्योगादडभावः । प्रष्ठौह इत्यत्र वाह ऊठ् । भस्य वाहः सम्प्रसारणम् ऊठ् स्यात् । सम्प्रसारणाच्चेति पूर्वरूपम् ) । सम्प्रसारणपक्षे एतद्दोषाप्रसराच्च । न च बाहुलकं कल्पकशून्यं नापि ग्रन्थकृदभिमतमिति वाच्यम् । मनः क्त्वेऽप्योमास इत्यादौ गुणाश्रयणस्यैव तत्कल्पकत्वात् । ओतिरोतमवतेः क्तिरित्युत्तरग्रन्थानुसन्धाने ग्रन्थकृतोऽप्येवमभिप्रायस्य सुज्ञानत्वाच्च । एवं चैतद्दोषपरिजिहीर्षया भूवादिषु तन्तुसन्तानार्थस्योयतेरौणादिकतच्प्रत्ययान्तस्योतशब्द इत्याश्रित्य शङ्कापरिहारौ वयतिपक्षाश्रयणेन चाग्रिमपक्ष इति केषाञ्चिद्व्याख्यानं तद्यथास्थितपाठे परिहारादर्शिनिन पाठान्तरं कल्पनीयमित्यनादरणीयमित्यास्तां तावत् ।

**वा०र०**— अथवेतीति प्रतीकोपादाने कर्तव्ये आकारेतीति प्रतीकोपादानं पूर्वाथवेत्यनेन सङ्करपरिहारार्थम् । तथा चाकारेतीत्यस्याथवा आकारेतीत्यर्थान्न कश्चिद्दोषः । तरङ्गिणीकारादिभिराशङ्काविशेषपरिहाराय तदाशङ्का-विषयमभ्युपगम्य पाठान्तरं च परिकल्प्य समाधानान्तरमाचरितम् । तच्छङ्काया एवासङ्गतिः । आदिपदेनोयीतन्तु-सन्तान इति तन्तुसन्तानार्थ ऊयतिर्गृह्यते । वयतेः क्तप्रत्यये 'वचि स्वपियजादीनां किती'ति सूत्रेण वेञो यजादि-पाठात्संप्रसारणे संप्रसारणाच्चेति पूर्वरूपत्वे उत इति ह्रस्वादिरूपम् । ऊयी तन्तुसन्तान इत्यस्य तु पूर्वटीकोक्तरीत्या दीर्घोकाराद् ऊत इति रूपम् । ततश्च धात्वन्तरनिष्पन्नौ यावुतशब्दौ तदभिप्रायेणेति योज्यम् । उतशब्दावित्यत्र च ह्रस्वदीर्घाद्युतशब्दद्वयमुत शब्दत्वसामान्येन विवक्षित्वैकशेषेण व्यवहृतमित्यदोषः । **शङ्कैव नोदेतीति** । एचः परत्वाभावादिति भावः । न ह्यवतिधातुवृत्तोङ्कारार्थोऽवतिवृत्तौतशब्देनैव व्याख्यातव्य इति नियमोऽस्तीति व्याख्यात्रन्तरप्रयुक्तमेव समाधिं तद्दूषणं परिहरन्नाह **अवतिधात्विति** । शब्देनैव संभवे धात्वन्तराभिप्रायो न भाष्यकृतामिति संबन्धः । इतीत्यस्येत्याशयेनेत्यर्थः । नियमाङ्गीकारे अन्यथानिष्ठान्तस्येत्यादितदुक्तदूषणं





परिहर्तुमाशङ्कते **न चैवं निष्ठान्तस्येति** । एतेनावतिधातुवृत्तौ तेतिवृध्युपपादकगुणमङ्गीकृत्य नियमो नास्तीति प्राक्प्रतिपादनादन्यथेति गुणनिषेधादिप्रतिपादनमेतच्छङ्कानुसारेण परकृतं व्याहतमिति दूषणं सूचितम् । स्वयं तु तदुक्तप्रधानदूषणोद्धारेण क्तप्रत्ययपक्षमेव समर्थयमानः उपयुक्तमेवोक्तवान् । **ओतत्ववाचीत्यत्रेति** । यद्यपि गुणोततामित्यस्यैव विचार्यतया प्रसक्तत्वात् । तत्रैवोङ्कारश्रवणाभाव आपादयितुमुचितः न च तत्र तच्छ्रवण-मङ्गीकारार्हम् । वृद्धिप्रसङ्गस्य दुर्वारत्वात् । न त्वोतत्ववाचीत्यत्र तस्याप्रकृतत्वात् तथापि परोक्तदूषणपरिहारमात्रे भरेण टीकाकृतः प्रवृत्त्या तत्साधुत्वादिविचारमुपेक्ष्य यथास्थिततद्ग्रन्थानुवाद एव कृतः । यद्वा गुणोततामित्यत्रोकारो न श्रूयेतेति सत्येव दोषे दोषान्तरम् । तद्दोषोपलक्षणं वेति न दोषः । यद्यपि च आङुपसृष्टस्योतशब्दस्य गुणैकादेशे ओकारः श्रूयत इत्याशङ्क्य ज्वरत्वरेत्यादिना अवतेर्वोपधयोरूठि सवर्णदीर्घे एत्येधत्यूठ्निमित्तवृद्धौ सत्यामोकारश्रवणं स्यादित्यपि परेणोक्तम् । तथाप्यस्मदनभिमतपक्षनिराकरणं परकीयं यथा तथास्तु । स्वाभिमतपक्षदूषणं यथा नायाति तथा शङ्कासमाधानव्याजेन निरूपयामीति टीकाभिप्रायाददोषः । एवमुत्तरत्रापि ज्ञेयम् । **बाहुलकाद्गुणेनेति** । ओतंप्रोतमित्यादाविवेति भावः । **बहुलमेतदिति** । एतत्सूत्रस्य परस्मैपदादिविषयत्वेन व्याख्यातत्वादुक्तं **बलेनेति** । अभियुक्तप्रयोगनिर्वाहाय आकृतिगणत्वं स्वीकार्यमित्यर्थान्तरबललभ्यम् । तथा चावतेरपि यजादिषु पाठात् संप्रसारणोपपत्तिरित्यर्थः । **ओकारेति** । अकारोकारयोर्गुणे च सति ओकारेत्यर्थः । अत एव वृद्धिरेचीति वृद्ध्या भवितव्यमित्यसङ्गतम् । अवतिशब्दाश्रयणे ऊठ्निमित्तवृद्धेरेव प्राप्तत्वात् । ओमाङोश्चेत्यादिपरिहारोऽप्यसङ्गत इत्यादि परोक्तं निराकर्तुं स्वयमभिहिताद्यपक्षे अनुपपत्तिमाशङ्कते **न चोठ्पक्ष इति** । **पररूपापवादकत्वेनेति** । परानुक्तमपि शङ्काविषयतया वापरग्रन्थे उपलक्षणया अभिप्रेतत्वाद्वैतदाशङ्का । परग्रन्थे तु आङुपसृष्टत्वपक्षक्रमानुसारेणाङ्परत्वादेव पररूपसंभवाच्चकारबलोपन्यासायोग इत्यादिकमुक्तमप्यनभिमतपक्षनिराकरणत्वान्नाशङ्क्य निराकृतमिति प्रागेवोक्तं **रूपग्रहणेनेति** । एकदेशविकृतमनन्यवद्भवतीत्यङ्गीकृत्याप्योमाङोश्चेत्याद्युदाहरणे एहीत्यादावेकारादेराङ्त्वा-द्याश्रयणवदत्रोठो न विकृतरूपेणापि ग्रहणमभिमतमपि तु स्वरूपेणैव । अत एव वृद्धिरेचीत्यनुवृत्तावपि ऊठो न विशेषणमसंभवादित्यादि काशिकादावुक्तम् । तथा ऊठि आद्गुणापवादो वृद्धिरेत्येधत्योरेङि पररूपापवाद इत्यादि-काशिकाद्युक्तिश्चेति भावः । परिहारासङ्गतिं निरस्यति **ऊठ्निमित्तेति** । ओमाङोश्चेत्येतत्पररूपं न बाध्यत इत्यादेः काशिकादावुक्तेरिति भावः । **पुरस्तादिति न्यायेनेति** । पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति न्यायेनेत्यर्थः । **अनपवादकतयेति** । अनन्तरस्य बाधे निर्ज्ञाते तद्बाधया चरितार्थत्वादुत्तरेण सह स्पर्धायां परत्वात्तदेव भवतीति मञ्जर्युक्तेरूठ्निमित्तवृद्धिबाधया पररूपप्रवृत्तिसंभव इति भावः । एवमूठ्पक्षे प्रसक्तदोषनिरासं प्रदर्श्य स्वाभिहितयजादिसंप्रसारणपक्षस्य दोषप्रसक्तिशून्यत्वान्न तत्र तदभावोपपादनप्रयासोऽपीत्याह **संप्रसारणेति** । **आश्रयणस्यैवेति** । वेदभाष्यकारीयस्येति शेषः । तथाच अभियुक्ताश्रयणमेव कल्पकमित्युक्तं भवति । नापि ग्रन्थकृदित्युक्तं दोषमुद्धरति **ओतिरोतमित्यादि** । **उत्तरग्रन्थेति** । ज्योतिरुपक्रमेत्येतदधिकरणीयेत्यर्थः । उपलक्षणं चैतत् । 'ॐनामा भगवान् विष्णुस्तेन वा निर्मिता' इत्यादिव्याख्यानानुसारेणोमास इत्येतदुपपादयता ग्रन्थकृता ॐशब्दसमानार्थ ओशब्दः । ओशब्दः ओतवाची । अवतिरूपत्वात् । 'ओताः प्रविष्टा मानेषु ओता मा एष्वि'त्यादि-प्रतिपादनादोशब्दे मन् । ओशब्दे तु संज्ञासु धातुरूपाणीति वचनादौणादिकोऽधिकरणेऽपि क्विप् कित्परत्वादूठ्





सवर्णदीर्घगुणाः समा एव । नान्ततयोंशब्देऽव्ययत्वमधिकमित्यस्य सिद्धेस्तदनुसन्धानेऽपीत्यपि द्रष्टव्यम् । एवं व्याख्यात्रन्तरपरिकल्पितशङ्कां स्वयं निराकृत्य व्याख्यातृसमाधिं दूषयितुं तच्छङ्कानिरासे तत्समाधेरसङ्गतत्वं प्रतिपादयन्नुपसंहरति **एवं चेति** । उक्तरीत्या क्तप्रत्ययान्तावतिरूपतयौतशब्दाङ्गीकाराद्युपपत्त्येत्यर्थः । **एतद्दोषेति** । गुणानुपपत्तिर्वृद्धिशङ्कापरिहारयोरनुपपत्तिश्चेत्युक्तदोषेत्यर्थः । **औणादिकेति** । तत्प्रत्ययान्तस्योत्पत्तेरिति संबन्धः । **ओतशब्द इति** । ओतेतिशब्दः ऊतरूपोयतेर्निष्पन्न इत्याश्रित्येत्यर्थः । **शङ्कापरिहारौ** । वृद्ध्या भवितव्यत्व-शङ्कापररूपेणापवादरूपपरिहारश्चेत्यर्थः । तच्प्रत्यये तितुत्रसिसुसरकसेषु चेत्यनेनेट्निषेधे कित्परत्वाभावेन ते परत इव गुणनिषेधाप्रसक्तेर्गुणे च सति मलोपे चोतेति रूपे वृद्धिरेचीत्यस्यैव प्राप्त्युपपत्तेस्तद्वद्धेरोमाङोश्चेति पररूपेण वादोपपत्तेश्चेति भावः । **वयतिपक्षाश्रयणेनाग्रिमेति** । एवं वयतिधात्वङ्गीकरणरूपाग्रिमपक्षोऽपि सङ्गत इति ऊयतिपक्षाश्रयणेन शङ्कापरिहारयोरसङ्गतिमाशङ्क्यानुभाष्ये अवतिवृत्तौतशब्दस्यासंभवेन धात्वन्तरवृत्त एव स व्याख्यातव्य इत्यभिप्रायेण वयतिपक्षाश्रयणस्याग्रे वक्तव्यत्वेन प्रथममूयतिपक्षमाश्रित्य व्याचिख्यासुर्निरपवादां वृद्धिरेचीति वृद्धिमाशङ्क्य चकाराकृष्टपररूपेण परिजहारेति च तदुक्तेस्तैरथवा वयतेरूपमेतदिति पाठाश्रयणादिति भावः । **यथास्थितपाठ इति** । अवतिवृत्तौतशब्दाभिप्रायेण वृद्धिशङ्कापरिहारावथवोयतेरूपमिति पाठ इत्यर्थः । **परिहारादर्शनेन** । बाहुलकाद्गुणोपपत्तिरित्यादिपरिहारेत्यर्थः । कल्पनयेत्यतःपरं चशब्दः ततःपरं प्रवृत्तमिति च पूरणीयम् । उपलक्षणं चैतत् । अवतेः क्तप्रत्यये सेट्कतयार्धधातुकस्येतीटि झलादेः कितः परत्वं नायाति । कित्पर-त्वादेव गुणोऽपि नेत्यनुपपत्तिद्वयपरिहारायावतेरौणादिकतन्प्रत्ययान्तत्वमाश्रित्य गुणमुपपाद्योणादयो बहुलमिति बहुलग्रहणात् झलादेः कितः परत्वाभावेऽप्यूठ्संभवं चाश्रित्य तितुत्रेति सूत्रेणेण्णिषेधात् झलादित्वसंभवः । ओतुरित्यत्रावतेः सितनिगमिमसीत्यनेन तुन्प्रत्यये बाहुलकादकित्यपि ऊठ्भवतीत्युणादिवृत्तावुक्तेरिति व्याख्यान-मपि क्तप्रत्ययाश्रयणे परिहारादर्शनमूलकमित्यपि द्रष्टव्यम् । उक्तरीत्या छान्दसत्वादिडभावे झलादिकित्पर-त्वोपपत्तेः बाहुलकादेव गुणोपपत्तेश्च । कित्यपि गुणस्य बाहुलकादुपपादनस्यान्यसङ्गतेर्ग्रन्थकृत्सबाहुलका-दुपपादनस्यान्यसम्मतेर्ग्रन्थकृत्संमतेश्चेति दूषणसाम्यात् । उक्तप्रकारेणान्यथाख्यातिपक्षो वाक्यार्थविनोदे विशदतया निराकृतोऽस्तीति न तदर्थं प्रयतामहे । ननूक्तप्रत्ययाश्रयणे सेट्कतयेति झलादेः कितःपरत्वाभावेनेडभावोपपादकमेकं बाहुलकं गुणोपपत्त्यर्थमपरमितितद्वयाश्रयणाद्वरमौणादिकतन्प्रत्ययाश्रयणेन बाहुलकात् कित्यपि गुणोपपादनमिति चेन्न । हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तनिति तन्विधायकसूत्रेण हस्तः मर्तः गर्तः इत्यादाविव तनोत्राप्रास्त्या बाहुलकात्तुसेर्दीर्घश्च । तूस्तं पापमित्यादिवैयाकरणोक्त्यनुसारेणावतेरपि बाहुलकादेव तन आश्रयणीयतया तन्प्रत्य-यपक्षेऽपि बाहुलकद्वयसाम्यात् । भावकर्मणोरेव क्तप्रत्ययस्य तयोरेवेति नियमात्प्रकृते कर्तरि क्ताश्रयणे तृतीयं बाहुलकमायातीत्यपि तन्प्रत्ययस्य कृत्प्रत्ययतया कर्तरि कृदिति नियमानुसारेण कर्तर्येव कृत्प्रत्ययप्राप्तेः कर्मणि तदप्राप्त्यावतेः कर्मणि औणादिक तन्प्रत्ययाश्रयणेऽपि तत्त्रयसाम्यादयुक्तमेव । यदि च ताभ्यामन्यत्रोणादय इत्यनेन संप्रदानापादाने विहाय अन्यत्रोणादिविधानाङ्गीकारात्कर्मणि तदङ्गीकारे बाहुलकानपेक्षणान्न तत्त्रयमिति मन्यसे तर्हि तयोरेवेति नियमितस्यापि क्तस्य गत्यर्थाकर्मकश्लिषशीङिति प्रागुदाहृतसूत्रेण गत्यर्थादवतेः कर्तरि प्राप्त्युपपत्त्या तदर्थं बाहुलकस्यानाश्रयणीयतया तत्त्रयभावसाम्यमेव । यदि च तुन्प्रत्ययान्तौतुरिति शब्दे बाहुलकादकित्यपि ऊठ्दृष्ट इति

तद्वाहुलकं कल्पकयुक्तमित्यभिप्रायस्तर्हि किति गुणबाहुलकमपि मनः कित्त्वेऽपीत्यादिनान्यसंमतं ग्रन्थकृत्संमतं चेति कल्पकयुक्तमेवेति प्रागेवोक्तम्। प्रत्युतैतद्ग्रन्थकारसंमतत्वाद्गुण एव बाहुलकबलादाश्रयितुमुचित इत्याद्याशयेनाह इत्यास्तां तावदिति । इदमत्र निर्गलितं प्रमेयम् । ओँशब्दस्तावदवतिधातुवृत्त इत्यङ्गीकृतम् । तद्वदेवोयतेरपि बाहुलकान्मनि यलोपे गुणे चोयीधातुवृत्तोऽपि भवतीत्यपि वक्तुं शक्यम् । तथा वेञोऽपि बाहुलकान्मनि वचिस्वपीतिसंप्रसारणे पूर्वरूपे गुणे चोमिति तद्धातुवृत्तोऽपीति । तथाऽवतिपक्षेऽपि मनिज्वरत्वरेत्यनेनोठमनङ्गीकृत्य बाहुलकाद्वचिस्वपीति संप्रसारणे धात्वन्तर्गतकार्यतया अन्तरङ्गत्वात्सार्वधातुकेति गुणात्पूर्वमाद्गुणस्यैव प्राप्त्या गुणे चावतिवृत्त इत्यपि वक्तुं शक्यते। एवमोतशब्दोऽपि प्रागुक्तरीत्या क्तान्तावतेरूपम्। ऊयतेरपि क्तप्रत्यये बाहुलकाद्गुणे चोयतेरूपम्। वेञोऽपि क्तप्रत्यये संप्रसारणे पूर्वरूपत्वे बाहुलकादेव गुणे च वेञोऽपि रूपमिति स्वीकर्तुं शक्यते। सर्वेऽप्येते ओमोतशब्दयोः पक्षविशेषाः भाष्यमूलटीकासंमततया प्रत्येतुं शक्यन्ते। ऊयतेरित्यस्योपलक्षणतामाश्रित्य वयतेरित्यपि ज्ञातुं शक्यत्वात् । तथापि मूलकारस्यावति धातुवृत्तौ ओमोतशब्दावित्येव स्वरसतया संमतमिति स्पष्टप्रतिभासवत्पक्षान्तरस्य तथा प्रतिभासाभावादवतेः क्तिरिति अवतिरूपत्वादित्यादिस्थलान्तरीयग्रन्थानुसाराच्चावतिधातुवृत्तत्व एव भारष्टीकाकारस्येति॥ ओमोतशब्दसंबन्धिटीकैवं व्याकृता मया। ततो बुधानां प्रीतिः स्यात् तया प्रीतोऽस्तु मद्गुरुः॥

**स०व्र०**— धातुद्वयजत्वसूचनस्यापि प्रयोजनविशेषाभावं मन्वान ओतत्ववाचीत्यत्रोयतिरूपत्वं अङ्गीकृत्याकारोपसर्गपूर्वकत्वाद्गुणोऽपि युक्त इत्यभिप्रेत्याह **अथवेति**।

**कुण्डल०**— ओतत्ववाचीत्यत्रापि आकारोपसृष्टादूयतेः तप्रत्यये यलोपे आद्गुण इति गुणे च ओतशब्दस्य निष्पन्नत्वान्न वैचित्र्यप्रसक्तिरित्याह **अथवेति**। **असाविति**। ओतत्ववाचीत्यत्रत्यः ओतशब्द इत्यर्थः। रामचन्द्रतीर्थीये तु ओमिति रूपस्यावतेः निष्पत्तिप्रकारः प्रागुक्तः । ऊयतेस्तन्निष्पत्तिप्रकारस्तु आङ्पूर्वादूयतेरौणादिकमन्प्रत्यये लोपो व्योर्वलीति यलोपे बहुलग्रहणादाङः ऊकारस्य च ह्रस्वत्वे गुणे च ओमिति भवतीति। द्रष्टव्यमिति योजनान्तरं द्रष्टव्यम्।

**स०ना०**— वैचित्र्यमेव नास्तीति भावेनाह **अथवेति**। अस्त्वोङ्कारब्रह्मशब्दाभ्यामिति व्यवस्थयेति शेषः।

**चषकः**— एकप्रकृतिजन्यत्वोपगमेऽपि निर्वाह इति समाधत्ते **अथवेति**। ऊयतिजन्यत्वेऽप्याकारोपसर्गपूर्वकत्वाद्गुणोपपत्तिरिति भावः।

**गूढ०**— ओतत्वेत्यत्रापि ऊयतेरेव रूपम्। न च गुणासंभवः। आङुपसर्गपूर्वकत्वादित्याह **अथवेति**।





**१४४ सु०— अस्तु वोङ्कारब्रह्मशब्दाभ्यां जीवजडातिरिक्तस्य जिज्ञास्यस्य सिद्धिः। तथापि ईश्वरस्य किमायातमित्यत आह नारायणेति ॥**

## अनु०— स एव ब्रह्मशब्दार्थो नारायणपदोदितः ॥

**स एव इत्यनुवर्तते। न हि नाम्नि विप्रतिपत्तिरित्याशयः।**

**श्रीनिधि०— ईश्वरस्य किमायातमिति**। ईश्वरस्य जिज्ञास्यत्वं कथं प्राप्तमित्यर्थः। **स एवेति** इति यो गुणपूर्ण इत्यर्थः। नारायणेति ईश्वर इति च एकमिति भावः। ननु यो गुणपूर्णः स शिवादिनामैव न तु नारायण नामेत्यत आह **न हीति**। विषयाभावात् जिज्ञासा न संभवतीति वदन्तं प्रति विषयः समर्थितः। स च धर्मी नारायण इत्युक्तम्। तथा चोद्देश्ये सिद्धे नाम्नि विप्रतिपत्त्या नास्माकं कृत्यमित्याशय इति भावः।

**वा०चं०**— नन्वीश्वरस्य जिज्ञास्यत्वं प्रतिज्ञाय तदभावे शङ्किते जीवजडव्यतिरिक्तजिज्ञास्यब्रह्मसाधनं व्यधिकरणमित्याशङ्क्ते **अस्त्विति**। एवं सति वस्तुसिद्धिमङ्गीकृत्य तस्य परमेश्वरनामार्थत्वं नास्तीति शङ्कितं स्यात्। तच्चायुक्तमिति पदशब्दप्रयोगलब्धमाशयमाह **न हीति**।

**वा०र०— तदभावे शङ्कित इति**। परेणेति शेषः। साधनमोङ्कारब्रह्मशब्दाभ्यामिति शेषः। **व्यधिकरण-मिति**। जीवजडव्यतिरिक्तजिज्ञास्येश्वरसाधनस्यैव प्रतिज्ञया समानविषयत्वादिति भावः। **इत्याशङ्क्त इति**। इत्याशङ्कानिवर्तकतयोत्तरमूलमवतारयतीत्यर्थः। स एवेत्यनुवर्तत इति मूलम्। अनेन यो जीवादिव्यतिरिक्तः पदार्थः सिद्धः स नारायणनामक इत्यर्थः सूत्रितः। अत एवानाम्नीति वक्ष्यतीति ज्ञेयम्। उत्तरयोजनायां स एवार्थ इत्यनुवर्तत इति भावः। **वस्तुसिद्धिमिति**। जीवादिव्यतिरिक्तब्रह्मशब्दाभिहितपदार्थस्यैवास्मदभिलषितेश्वरत्वेनेश्वरस्य ततो भेदानङ्गीकारादीश्वरमेवोक्तरूपमङ्गीकृत्य तस्य किमायातमिति शङ्कानुदयादीश्वरमुक्तब्रह्मणः सकाशात् भिन्नत्वेन आग्रहात्स्वीकुर्वतापि जीवादिव्यावृत्तजिज्ञास्यब्रह्मरूपास्मदभिलषितवस्तुनस्तावदङ्गीकारात्। नाममात्रे च विवादा-योगात्। विवादे च मूर्खकलहप्रसङ्ग इत्येतावन्तं **पदशब्दप्रयोगलब्धमाशय**मित्यर्थः। ईश्वरस्य किमिति शङ्कानुसारेण नारायणेत्यस्य परमेश्वरेत्यनुवाद इति ज्ञेयम्।

**कुण्डल०— नारायणेतीति**। तथाच नारायणशब्दितस्य गुणपूर्णस्येश्वरतया तस्यैव च ओङ्कारब्रह्म-शब्दाभ्यामभिदधानानां नाममात्रे विवादायोगात् ईश्वरस्वरूपनिरूपणं कृतमेवेति भावः।





**१४५ सु०— अथवा सूत्रकारोक्तावोङ्कारब्रह्मशब्दावुपलक्षणमात्रम् । 'नारायणं महाज्ञेयं' इत्यादिश्रुतौ जिज्ञास्ये नारायणशब्दोऽपि श्रूयते । नारायणपदोदितश्चार्थः स एव यो गुणपूर्णत्वाख्यः । अतो नारायणशब्देनापि जिज्ञास्यं जीवादिव्यतिरिक्तं सिद्ध्यतीत्यनेनोच्यते ।**

**आनन्दः**— ननु नारायणपदोदित इत्ययुक्तम् । जिज्ञास्यस्य नारायणपदवाच्यत्वकथने प्रयोजनाभावात् । जीवव्यतिरिक्तत्वस्योंब्रह्मशब्दाभ्यामेव सिद्धत्वात् । न च प्राग्विषयत्वेनोक्तस्येश्वरस्य जिज्ञास्याभेदप्रतिपादनार्थं तत्कथनमिति वाच्यम् । तस्य केशवादिपदान्तरेणापि संभवेन नारायणपदप्रयोग एव प्रयोजनाभावात् इत्यतो नारायणपदोदित इत्यस्य व्याख्यानान्तरमाह **अथवेति** । ननु नारायणशब्दस्य साङ्केतिकत्वकथनेन कथं जिज्ञास्यस्य जीवव्यतिरिक्तत्वसिद्धिरित्यत आह **नारायणेति** ।

**वा०चं०**— अस्मिन्पक्षे जीवजडातिरिक्तजिज्ञास्यसिद्धिमात्रेण प्रकृतसिद्धेर्नारायणपदेति भाष्यस्य प्रयोजनविशेषाभावं मन्वानो जिज्ञास्यस्य जीवजडातिरिक्तत्वसाधकसमर्पणपरतयैव तद्भाष्यमवतारयति **अथवेति** ।

**वा०र०**— **प्रयोजनविशेषेति** । अभाव इति मन्वान इत्यर्थः । प्रयोजनविशेषाभावमित्यनेन नाममात्रविवादशङ्कानिराकरणातिरिक्तप्रयोजनाभावः प्रतिपाद्यते । तत्र किं तदतिरिक्तप्रयोजनेनोक्तमेव प्रयोजनं किं न स्यादित्यत उक्तम् । **जीवजडातिरिक्तजिज्ञास्यसिद्धिमात्रेणेति** । नाममात्रविवादस्य अयुक्तताया बहिरेव प्रत्येतुं शक्यतया तत्प्रयोजनत्वाङ्गीकारस्य सति प्रयोजनान्तरे आश्रयणायोगादिति भावः । प्राग्विषयत्वेनोक्तस्येश्वरस्य जिज्ञास्यभेदप्रतिपादनायेदं भाष्यमित्यप्यत एव निरस्तम् । तदभेदप्रतिपादनाय शब्दान्तरप्रयोगसंभवे जिज्ञासावाक्यस्थनारायणपदोपादानवैयर्थ्यात् ।

**कुण्डल०**— नन्वोमादिपदबोधितजीवजडविलक्षणस्य गुणपूर्णस्य च वस्तुन ईश्वरत्वे विवादायोगात् कथमियमाशङ्केत्यत आह **अथवेति** ।

**स०ना०**— **ओङ्कारब्रह्मशब्दाविति** । पाठभेदेनेति शेषः ।

**गूढ०**— ननु नारायणपदोदित इत्ययुक्तम् । जिज्ञास्यस्य नारायणपदवाच्यत्वकथने प्रयोजनाभावात् । जीवादिना व्यतिरिक्तत्वस्य च ॐब्रह्मशब्दाभ्यामेव सिद्धत्वात् । न च प्राग्विषयत्वेनोक्तस्येश्वरस्य जिज्ञास्याभेदप्रतिपादनार्थं तत्कथमिति वाच्यम् । तस्य केशवादिपदान्तरप्रयोगेणापि संभवेन नारायणपदप्रयोग एव प्रयोजनाभावादित्यतो नारायणपदोदित इत्यस्य व्याख्यानान्तरमाह **अथवेति** । ननु नारायणशब्दस्य साङ्केतिकत्वात्कथं तेन जिज्ञास्यस्य जीवादिव्यतिरिक्तत्वसिद्धिरित्यत आह **नारायणेति** ।





**१४६ सु०— एतदप्युपलक्षणम् । आत्मानन्तेश्वरादिशब्दा अपि ज्ञातव्याः । तेषामपि 'आत्मानमेव लोकमुपासीत' इत्यादौ जिज्ञास्ये श्रवणात् । गुणपूर्णत्वाभिधायित्वाच्च । न चालौकिकार्थकल्पने गौरवप्रसङ्गाद्वरं कथञ्चिदेषां शब्दानां जीवादिविषयताङ्गीकरणमिति वाच्यम् । यौगिकशब्दप्रयोगान्यथाऽनुपपत्तेरुक्तत्वेन कल्पनाभावात् । अन्यथा वाक्यादपि अलौकिकार्थप्रत्ययो न स्यात् । लौकिकार्थ एव कथञ्चिदर्थानुगमस्य वक्तुं शक्यत्वात् । किञ्च क्वचिन्मुख्यार्थ एव शब्दोऽनुपपत्त्या क्वचिदमुख्यार्थोऽनुगम्यते । न पुनरमुख्यार्थ एव । तथा च श्रौतं ब्रह्मादिशब्दं जीवादिविषयमङ्गीकुर्वाणेनापि निरवग्रहपूर्णतायुक्तं किञ्चिदभिधेयं मुख्यमङ्गीकरणीयमेव । ततश्चानेन किं कृतं स्यात् । जीव एवैतेमुख्यार्था-स्तदनुपलब्धिस्तु अविद्यावरणनिमित्तेति चेन्न । यतोऽत्राचार्यः स्वयमेव प्रतिवक्ष्यतीति ।**

**बिन्दुः—अन्यथा वाक्यादपीति**। 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदमि'त्यादिवाक्यादपि स्वर्गापूर्वाद्यलौकिकपदार्थसिद्धिर्न स्यादित्यर्थः। **लौकिकार्थ एव कथञ्चिदिति**। पूर्वतन्त्रे षष्ठाद्यपूर्वपक्षन्यायेन स्वर्गेण यागं भावयेदिति समानपदोपात्तत्वप्रत्यासत्या यागस्य भाव्यकोटिप्रक्षेपे स्रक्चन्दनवनितादिकमेव स्वर्गादिपदार्थः । तथैवात्रापि स्यादित्यर्थः । ननु ग्रामाधिपादावपीश्वरादिशब्दाः प्रयुज्यन्ते तत्कथमप्रसिद्धपदार्थ ईश्वरादिशब्द इति चेत् सत्यम् । न हि लोके अमुख्यवृत्त्या शब्दव्यवहारोऽस्तीति ब्रूमः । चित्रलिखितसिंहे माणवके च सिंहादिप्रयोगदर्शनात्। किं नाम मुख्यासंभवेऽमुख्यार्थोपादानं न्याय्यं, न च निरुपपदादीश्वरादिशब्दाज्जायमानाया निरवधिकै-श्वर्यादिप्रतीतेर्बाधकमस्तीत्याह **क्वचिन्मुख्यार्थ एवेति** ।

**परि०— इत्यादाविति**। 'स एष परोवरीयानुद्गीथः स एषोऽनन्त' इत्यादावनन्तशब्दः। 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्यादावीश्वरशब्दः 'त्वं बन्धदो मुक्तिदोऽतो मतो नस्त्वं ज्ञानदो-ऽज्ञानदश्चासि विष्णो' इत्यादौ विष्णुशब्दः । एतेन ब्रह्मपदेनैव विषयसिद्धौ ओमादिपदानर्थक्यमिति निरस्तम्। न केवलं ब्रह्मपदात् किन्त्वोमादिपदादपीति युक्त्यन्तरसूचनार्थत्वेन सार्थक्यात्। **अनेनेति**। जीवे गौणार्थाङ्गीकारेण किं कृतं स्यान्मुख्यार्थभूतापूर्वार्थस्यावश्यमङ्गीकृतत्वादिति भावः। **प्रतिवक्ष्य-तीति**। 'निर्विशेषे स्वयं भाते किमज्ञानावृतं भवेत्' इत्यादिनेत्यर्थः। यद्वैतदधिकरणान्ते हरेरेव ब्रह्मादि-पदमुख्यार्थत्वकथनेनेत्यर्थः।

**गु०दी०— आत्मानन्तेश्वरादिशब्दा अपि** इत्यत्र । "अनन्तमव्ययं कविमि"ति तत्प्रकरण एवोक्तानन्तपदं "यः परः स महेश्वर" इत्यत्रोक्तमीश्वरपदं चेत्यर्थः ।

**यादु०— कथञ्चिदिति** । लक्षणादिरूपामुख्यवृत्त्येत्यर्थः । **निरवग्रहेति** । निष्परिपन्थीत्यर्थः । **यतोऽत्र आचार्य इति** । 'निर्विशेषे स्वयं भाते किमज्ञानावृतं भवेत्' इत्यावरणखण्डन इत्यर्थः ।

**वं०प०— इत्यादाविति** । 'स एव परो वरीयानुद्गीथः स एषोऽनन्त' इत्यादावनन्तशब्दः । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्यादावीश्वरशब्दः । 'त्वं मुक्तिदो बन्धदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णो' इत्यादौ विष्णुशब्दः ।

**आनन्दः— एतदपीति** । न केवलं सूत्रकृत्प्रयुक्तौ ओङ्कारब्रह्मशब्दौ उपलक्षणम् । अपि तु नारायणपदोदित इत्यनेन नारायणशब्दस्य ब्रह्मशब्दसमानार्थकत्वमुक्तम्, एतदुपलक्षणम् । आत्मानन्तेश्वरादिशब्दा अपि ब्रह्मशब्दसमानार्था ज्ञातव्या इत्यस्यार्थस्येत्यर्थः । **गुणपूर्णत्वाभिधायित्वाच्चेति** । तथापि तैरपि जीवादिव्यतिरिक्तत्वसिद्धिरिति भावः । ननु ब्रह्मादिशब्दानामलौकिकपूर्णत्वाद्यर्थत्वे गौरवभिया कथञ्चित् रूढ्या जीवादिपरत्वमस्त्वित्याशङ्क्य निषेधति **न चेति** । ॐब्रह्मशब्दयोर्यौगिकत्वस्योपपादितत्वेन ताभ्यां योगवृत्त्युक्तस्यार्थस्य प्रकारान्तरेणानुपपत्तेरुक्तत्वान्न जीवादिपरत्वमित्याह **यौगिकेति** । **अन्यथेति** । गौरवभिया जीवादिपरत्वकथन इत्यर्थः । तथाच स्वर्गादि सिद्धिर्न स्यादित्यर्थः । एवं तर्हि तद्वाक्यं निरर्थकं स्यादित्यत्राह **लौकिकेति** । नन्वनयोर्यौगिकत्वेऽपि जीवादिपरत्वं मास्त्विति चेत् अत्र वक्तव्यम् । किममुख्यया वृत्त्या तत्परत्वमुत मुख्यया । नाद्य इत्याह **किञ्च क्वचिदिति** । **ततश्चानेनेति** । ब्रह्मादिपदजातस्य जीवपरत्वाङ्गीकरणेनेत्यर्थः । द्वितीयं शङ्कते **जीव इति** । ननु ब्रह्मादिशब्दार्थस्य जीवादावनुपलब्धेर्न तस्य मुख्यार्थत्वमित्यत्राह **तदनुपलब्धिश्चेति** । अभेदसिद्धावावरणनिमित्तत्वकल्पना । तस्यां च सत्यां अभेदसिद्धिरित्यन्योन्याश्रयत्वेन परिहरति **यत इति** ।

**कं०रा०— कथञ्चित्** अमुख्यया वृत्त्या । **यौगिकेति** । यौगिकशब्दप्रयोगस्यापूर्वमर्थं विना पर्यवसानाभावेन यौगिकशब्दप्रयोगबलादलौकिकार्थप्रतीतेरानुभविकत्वेन तत्कल्पनाभावादिति भावः ।

**श्रीनिधि०— यौगिकशब्दप्रयोगान्यथानुपपत्तेरिति** । अवयवशक्त्या प्रतिपादकानां ॐआदिशब्दानां गुणपूर्णत्वमर्थः । निरुपपदत्वेन मुख्यगुणपूर्तिरङ्गीकार्या । तथा च निरुपचरितानन्तगुणपूर्णत्वमेषामर्थः । अयं चार्थो अलौकिकार्थकल्पनेन विना नोपपद्यत इत्युक्तत्वेनेत्यर्थः । **वाक्यादपीति** । यन्न दुःखेन संभिन्नमित्यादिवाक्यादपीत्यर्थः । यत्किञ्चित्कालीनदुःखासंभिन्नत्वाद्यलौकिकसुखे अर्थानुगमस्य कर्तुं शक्यत्वादिति भावः । निरुक्तसुखसाधनलोकविशेषस्यापि प्रत्ययो न स्यात् । सुखसाधनत्वादिना चन्दनखण्डादावेवार्थानुगमस्य कर्तुं शक्यत्वादिति वा भावः । **निरवग्रहेति** । अप्रतिबन्धेत्यर्थः । निरवधिकेति यावत् । यद्यपि 'अवेग्रहोवर्षप्रतिबन्ध' इति अवग्रहशब्दः वृष्टिप्रतिबन्धे वर्तते । वृष्टिर्वर्षं तद्विघाते वग्रहावग्रहौ समावित्यभिधानात् । तथाप्यत्र प्रतिबन्धमात्रार्थत्वमभिप्रेतम् । अनेनामुख्यार्थाङ्गीकरणेनादोषश्चेति युक्तिवाक्याभासजनितविप्रतिपत्तिनिरासार्था मीमांसेति । निश्चितत्वादेव न विषयत्वमिति दोषः परिहरिष्यत इत्यर्थः ।





**वा०चं०**— अस्मिन्पक्षे नारायणशब्दस्यैव विशिष्योपादाने न किमपि कारणमतो नायं भाष्यकाराभिप्राय इत्यत आह **एतदपीति**। उपलक्षणे नियामकन्यायसाम्यमाह **तेषामपीत्यादि**। जीवजडव्यतिरिक्तजिज्ञास्य-साधकत्वेनोक्तयौगिकशब्दप्रयोगान्यथाऽनुपपत्तिरूपयुक्तेर्विपक्षे बाधकमुखेन उपपादनपुरःसरं तां युक्तिं पूर्वपक्ष्युक्तायां साधकान्यथासिद्धावपि व्यापारयितुं किञ्चेत्यादिना तत्रैव दूषणान्तरं वक्तुं तेषां कथञ्चिज्जीवविषयत्वोपपत्तेरिति पूर्वपक्ष्युक्तमनुवदति **न चालौकिकेति**। यद्वा नन्वेतावतोमादिपदानां योगमात्रोक्तावप्यलौकिकार्थे प्रमाणानुक्ते-स्तत्कल्पनैव स्यात्। न च यौगिकशब्दप्रयोगान्यथाऽनुपपत्तिरेव प्रमाणत्वेनात्राभिमतेति वाच्यम्। ओमादिशब्दानां क्लृप्तजीवविषयत्वेनोपपत्तौ तदन्यथाऽनुपपत्तेरेव अभावादिति शङ्कते **न चेति**। अभिमतं प्रमाणं तावदाह **यौगिकेति**। अन्यथोपपत्तिं प्रतिबन्द्या विघटयति **अन्यथेति**। यन्न दुःखेनेत्यादिवाक्यबलादपि स्वर्गादिशब्देभ्योऽपूर्वार्थप्रत्ययो न स्यादित्यर्थः। यद्वा वाक्यमात्रादप्यपूर्वप्रत्ययो न स्यादर्थवादादिवत् क्लृप्ते पदार्थमात्रे तात्पर्यस्य वक्तुं शक्यत्वा-दित्यर्थः। प्रतिबन्द्या विघटितान्यथोपपत्तिं स्वरूपेण विघटयति **किञ्चेति**। कथञ्चिदेषां शब्दानां जीवादिविषयत्व-मङ्गीकुर्वाणेन सर्वत्रैतेषाममुख्यार्थत्वमेव न कुत्रापि मुख्यार्थत्वममुख्यार्थश्च जीवादिरिति वा जीवव्यतिरिक्त-मुख्यार्थसद्भावेऽपि जिज्ञास्ये श्रुतब्रह्मादिशब्दानाममुख्यार्थजीवादिपरत्वमेवेति वा जीव एव मुख्यार्थस्तद्विषयत्व-मेवैषां शब्दानामिति वाऽङ्गीकरणीयम्। प्रकारान्तराभावात्। तत्राद्यं प्रतिक्षिपति **क्वचिदिति**। द्वितीयं प्रतिक्षिपति **तथा चेति**। **ततश्चेति**। अलौकिकार्थकल्पनागौरवभयाच्छ्रौतब्रह्मादिशब्दानां जीवादिविषयकतामङ्गीकुर्वताऽपि सर्वथाऽमुख्यार्थशब्दाभावेन अप्रसिद्धमुख्यार्थेऽवश्यमङ्गीकार्येऽलौकिकार्थकल्पनागौरवस्यापरिहारादेषां शब्दानां जीवविषयत्वाङ्गीकारेण किं कृतं न किमपीत्यर्थः। तृतीयं शङ्कते **जीव एवेति**। इयं च समुदायैक्यवादिनः शङ्केत्यवधेयम्। तर्हि कथं कथञ्चिदित्युक्तिरित्यत आह **तदनुपलब्धिस्त्विति**। **यतोऽत्रेति**। 'अशेषशक्ति युक्तश्चेत्स्वातन्त्र्याद्दोषवान्कथम्' इत्यनुव्याख्यानेनेत्यर्थः।

**वा०र०**— **साधकेति**। ओंब्रह्मशब्दतुल्यनारायणपदरूपेत्यर्थः। **विपक्षे बाधकेनेति**। अन्यथा वाक्यादपीत्यनेन तदभिधानम्। **साधकान्यथेति**। ईश्वरपदादिरूपसाधकस्येश्वरेणाङ्गीकृतेन विनापि शरीरादीशत्वे जीवमादायाप्युपपत्त्या अन्यथासिद्धिरित्यर्थः। **अन्यथासिद्धिपदं** तन्निरासोपलक्षणम्। **व्यापारयितुमिति**। अन्यथासिद्धिनिरासार्थतयापि योजयितुमित्यर्थः। किञ्चेत्यादिना चेति निर्देशार्थचशब्दप्रयोगेण योज्यम्। प्रागुक्तयुक्तौ जागरूकायामन्यथासिद्धिशङ्कायाः पुनरुत्थानासंभवं मन्वानस्तद्युक्त्युपन्यासोत्तरमपि प्राप्तानुपपत्तिकथनपरत्वेनोत्तर-ग्रन्थमवतारयति **यद्वेति**। **तावदाहेति**। अन्यथोपपत्तिनिरासापेक्षया तावच्छब्दः। **उक्तत्वेनेति** मूले किं नाम निगमनिरुक्तेत्यादिनेति शेषः। वाक्यशब्दस्य वाक्यान्तरेत्यर्थकत्वम् अलौकिकार्थेत्यस्य स्वर्गकामो यजेतेत्यादि-वाक्यविशेषगतस्वर्गादिपदजन्यापूर्वार्थपरत्वमिति मनसि कृत्वाह **यन्न दुःखेनेत्यादीति**। उक्तरीत्या वाक्यादिपदानां विशेषार्थनिष्ठत्वं कल्पनीयमत्र पक्षे भवतीत्यपरितोषात्पक्षान्तरमाह **यद्वा वाक्येति**। तर्हितद्वैयर्थ्यमित्यत-स्तद्वाक्यसार्थक्यं पूर्वपक्ष्युक्तरीत्या आपादनमुखेनाह **लौकिकार्थ एवेति** मूलम्। जीवा एवेति बहुवचनेन विकल्पस्य जीव एवैत इति मूलाननुसारित्वमिति शङ्कावारणाय मूलाशयमाह **इयं चेति**। **समुदायैक्येति**। इदं च मतं जीवेश-भेददृष्ट्यैवेति भक्तिपादीयानुव्याख्यानमूले स्पष्टीभविष्यति।





**स०व्र०— उपासीतेत्यादाविति** । अत्रादिपदेन 'अनन्तमव्ययं कविं' 'यः परः स महेश्वर' इति वाक्यद्वयं ग्राह्यम् । यदुक्तमप्रसिद्धार्थकल्पनस्याप्रामाणिकत्वात् (प्रसिद्धार्थकल्पनस्याप्रामाणिकत्वात्) प्रसिद्धार्थत्वं न्याय्यमिति तत्रार्थापत्तिः प्रमाणमित्याह **न चालौकिकेति** । अमुख्यार्थाभ्युपगमेऽपि मुख्यार्थावश्यंभाव इत्याह **किञ्चेति । तदनुपलब्धिः** निष्परिपन्थिपूर्णत्वानुपलब्धिः । **प्रतिवक्ष्यतीति ।** एवं वदतो हि जीवब्रह्मैक्यमभिमतम् । तदसंभवं 'यजमानप्रस्तरत्वम्' इत्यादिना वक्ष्यति इत्यर्थः ।

**कुण्डल०— कथञ्चिदिति** । अमुख्यवृत्त्येत्यर्थः । **यौगिकशब्देति** । यौगिकशब्दस्य वाक्यतुल्यतया प्रकृतस्य ओमादियौगिकशब्दस्यापूर्वगुणपूर्णमभिधेयं विना पर्यवसानाभावेन तदन्यथानुपपत्त्या लौकिकार्थस्यैवानुभवसिद्धत्वेन कल्पनागौरवशङ्कानवकाशात् । **निरवग्रहेति** । असङ्कुचितेत्यर्थः । **यत इति** । ओमादिशब्दादित्यर्थः । **प्रतिवक्ष्यतीति** । ''निर्विशेषे स्वयं भाते किमज्ञानावृतं भवेदि''त्यादिनेति शेषः ।

**विठ्ठ०—** तेषां कथञ्चिज्जीवविषयतोपपत्तेरिति प्रागुक्तं दूषयति **न चेति** । **उक्तत्वेनेति** । तदेतौ ओङ्कारब्रह्मशब्दौ इत्यत्रेत्यर्थः । **वाक्यादपीति** । 'यन्न दुःखेन संभिन्नमि'त्यादिवाक्यादपीत्यर्थः । **लौकिकार्थ एवेति** । ऐश्वर्यादिरूपलौकिकार्थ एव कथञ्चिदमुख्यतयेत्यर्थः । **निरवग्रहेति** । 'अवग्रहो वृष्टिरोधे प्रतिबन्धे' इति रत्नमालोक्तेः अत्र निरवग्रहेत्यस्य प्रतिबन्धकरहितेत्यर्थः । निरर्गलेति यावत् । **ततश्चानेनेति** । ततो मुख्यार्थस्य परब्रह्मणोऽवश्यमङ्गीकार्यत्वात् अनेनेश्वरादिपदानाम् अमुख्यार्थतया जीवविषयत्वाङ्गीकारेणापि किं साधितं स्यादीश्वरालाभादित्यर्थः । ननु कथम् ईश्वरादिशब्दाः जीवे मुख्यार्थाः सर्वैश्वर्यगुणपूर्णत्वादेः तेष्वदर्शनादित्यत आह **तदनुपलब्धिस्त्विति** । **प्रतिवक्ष्यतीति** । 'निर्विशेषे स्वयं भाते इत्यत्रे'त्यर्थः ।

**चषकः— निरवग्रहेति** । असङ्कुचितेत्यर्थः । **प्रतिवक्ष्यतीति** । 'निर्विशेषे स्वयं भात' इत्यादिना आवरणप्रत्याख्यानादिति भावः ।

**गूढ०— अन्यथेति** । गौरवभिया जीवादिपरत्वकल्पन इत्यर्थः । तथाच स्वर्गादिसिद्धिर्न स्यादित्यर्थः । एवं तर्हि तद्वाक्यं निरर्थकं स्यादित्यत्राह **लौकिकेति** । नन्वनयोर्यौगिकत्वेऽपि जीवादिपरत्वमस्त्विति चेत् अत्र वक्तव्यम् । किममुख्यया वृत्त्या तत्परत्वम् उत मुख्यया । नाद्य इत्याह **किञ्च क्वचिदिति** । **ततश्चानेनेति** । ब्रह्मादिपदजातस्य जीवपरत्वाङ्गीकरणेनेत्यर्थः । द्वितीयं शङ्कते **जीव इति** । ननु ब्रह्मादिशब्दार्थस्य जीवादावनुपलब्धेर्न तस्य मुख्यार्थत्वमित्यत्राह **तदनुपलब्धिश्चेति** । अभेदसिद्धावावरणनिमित्तत्वकल्पना तस्यां च सत्यामभेदसिद्धिरित्यन्योन्याश्रयत्वेन परिहरति **यत इति** ।

**प्रदीपः—** यदुक्तम् अप्रसिद्धार्थकल्पनस्याप्रामाणिकत्वात्तत्प्रसिद्धार्थता न्याय्येति तत्रार्थापत्तिः प्रमाणमित्याह **न चालौकिकेति** । **किञ्चेति** । अमुख्यार्थाभ्युपगमेऽपि मुख्यार्थावश्यंभावादतिगौरवात् । **तदनुपलब्धिः** निष्परिपन्थिपूर्णत्वानुपलब्धिः ।

सर्ववेदप्रमितस्य ईश्वरस्य जिज्ञासाविषयत्वसिद्धिः—

**अनु०— स एव भर्गशब्दार्थो व्याहृतीनां च भूमतः ॥**
**भावनाच्चैव सुत्वाच्च**

**१४७ सु०—** यदत्रोक्तमीश्वरः प्रमितो न वेति । तत्र प्रमित इत्युत्तरम् । तत्पक्षदोषश्च परिहरिष्यते । तथा च शास्त्रस्य विषयसंबन्धः समाहितो भवति ।

यत्पुनरत्रोक्तं केन प्रमाणेनेति । तत्र वेदेनेति वदामः । वेदस्येश्वरविषयता कुत इत्यतोऽप्योङ्कारः सूत्रकृता ब्रह्मणि प्रयुक्तः ।

तत्कथमस्यार्थस्योपपादकमित्याशङ्क्य इदमत्राकूतं सूत्रकारस्येत्याह **व्याहृतीनां चेति**।

**स एवार्थ** इति संबन्धः । ओङ्कारस्तावद्भगवत ईश्वरस्य वाचकः । 'ओमिति ब्रह्म' इत्यादिश्रुतेः । अतः स एव व्याहृतीनां च भूरादीनामर्थ इति गम्यते । 'प्रणवार्था व्याहृतय' इत्याद्यागमेन तिसृणां व्याहृतीनां वर्णत्रयात्मकोङ्कारव्याख्यानतया अवगतत्वात् । व्याख्यान-व्याख्येययोश्चैकविषयता सुप्रसिद्धेति । एवकारो व्याहृतीनामग्निवायुसूर्यदेवताकत्वप्रसिद्ध्या तत्प्रतिपादकत्वभ्रमं निवारयति । अग्न्यादीनामधिदेवतात्वेनापि प्रसिद्ध्युपपत्तेः । अन्यथोक्त-व्याख्यानव्याख्येयभावानुपपत्तिप्रसङ्गः ।

केन निमित्तेन व्याहृतीनां च स एवार्थ इत्यत आह **भूमत इति**।

**भूमा** पूर्णत्वं, ततो भूः । भवतेर्बहुत्वार्थस्य क्विपि रूपमेतत् । **भावनात्** जगत उत्पादनात्, भुवः । भवतेरेवान्तर्णीतण्यर्थस्य कप्रत्यये रूपम् । **सुत्वात्** सुखत्वात्स्वः । स्वःशब्दो हि सुखवाची प्रसिद्धः । चकारौ निमित्तान्तरसमुच्चये । यथोक्तम् । 'पूर्णो भूतिवरोऽनन्तसुखो यद्व्याहृतीरित' इति ॥ एतैरेव निमित्तैर्व्याहृतीनामर्थो न पुनर्लोकत्रया-त्मकत्वेन । तस्य प्रमाणविरुद्धत्वात् । 'भूरिति वा अयं लोक' इत्यादिश्रुतिरपि लोकत्रयान्तर्गत-भगवद्विषयैवेत्येवशब्दार्थः ।





**बिन्दुः— अग्न्यादीनामधिदेवतात्वेनेति**। अग्निवायुसूर्यप्रजापतीनां व्याहृत्यवान्तराभिमानिदेवतात्वादित्यर्थः । **भवतेर्बहुत्वार्थकस्येति** । धातूनामनेकार्थत्वादिति भावः । **भवतेरन्तर्णीतण्यर्थस्येति**। लक्षणया प्रयोजकव्यापाराभिधायिन इत्यर्थः। अन्यथा भावयतेः एरजित्यच्प्रत्ययापत्त्या भाव इति स्यादिति भावः । यद्यप्यत्र उवर्णान्तत्वात् ऋदोरबित्यप्प्रत्यये भव इति प्राप्नोति तथापि घञर्थे कविधानमिति वा उणादयो बहुलमिति बाहुलकत्वाद्वा कप्रत्ययः । तथाच कित्वाद्गुणप्रतिषेधे अचि श्नुधात्वित्युवङा इष्टसिद्धिरिति ध्येयम् । यथा तपस्शब्दस्य सकारान्तस्य तप इति प्रथमान्तं विसर्गान्तं रूपं पचाद्यजन्तस्य तपसेस्तप इत्यकारान्तव्युत्पादानेनापि तप इत्येव समानानुपूर्वीकं भवति तथा भुवस् इति व्याहृत्या सकारान्तायाः प्रयोगे श्रूयमाणस्य विसर्गान्तसकारान्ततव्युत्पादनेनापि साधितमिति बोध्यम्। यद्वा भवतेः कप्रत्यये भुव इति रूपमित्यस्यायमर्थः। कयुक्तः प्रत्ययः कप्रत्ययः ककारेत्संज्ञको वा प्रत्ययः कप्रत्यय इति मध्यमपदलोपिसमासाश्रयणेन कसुन्-प्रत्ययो लभ्यते अथवा प्रत्येति गच्छति इत्संज्ञको भूत्वा लभ्यत इति यावत्। असौ प्रत्ययः कः प्रत्ययो यस्येति कप्रत्ययः किदिति यावत्। तादृशे असुन्प्रत्यये सति भुव इति रूपं सिद्ध्यतीति। तथाच उणादिषु शाकटायनः सर्वधातुभ्योऽसुन् इत्यधिकृत्य भूरञ्जिभ्यां किदिति सूत्रेण भुवस्शब्दं रजस्शब्दं च व्युदपादयत् । स्वरादिनिपातमव्ययमिति सूत्रे च पाणिनिः स्वरादिगणे भुवस् इति पपाठ । तत्रैव गणवृत्तिकृतापि व्याख्यातम्। भूर्भुव इति पृथिव्यन्तरिक्षलोकपतेरिति भुवश्च महाव्याहृतेरिति सूत्रेण च भुवस् इति सकारस्य वैकल्पिकौ रुत्वरेफावनुशास्ति स्म। तत्रैव वृत्तिकारोऽप्युदाजहार भुवरित्यन्तरिक्षं भुव इत्यन्तरिक्षं भुवर्लोक इत्यादि सर्वमनवद्यम्। **स्वःशब्दो हीति**। यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदमित्यादौ प्रसिद्धः । तस्य निरुपपदत्वान्मुख्यार्थाभिधायित्वेन पूर्णत्वादिकं लभ्यत इत्यर्थः । **तथा चोक्तमिति** । ऋग्भाष्ये भगवत्पादैरित्यर्थः । **भूतिवर इति** भुवःशब्दव्याख्यानम् ।

**परि०— तत्पक्षदोषश्चेति** । निश्चितत्वान्न जिज्ञासितुं शक्यम् । सामान्यतो ज्ञातत्वस्य विशेषतोऽज्ञातत्वस्याभावादित्युक्तदोषो जिज्ञास्योऽयं विधीयत इत्येतद्व्याख्यानावसरे निरसिष्यत इत्यर्थः । **विषयसंबन्ध इति** । तन्निर्णयजनकत्वरूप इत्यर्थः । **इदमत्राकूतमिति** । व्याहृतिगायत्रीपुरुषसूक्तद्वारा सर्ववेदानां ॐकारव्याख्यानत्वादोङ्कारार्थस्य ब्रह्मण इति ब्रह्मण ॐकारार्थत्वोक्त्या सर्ववेदार्थत्वं तस्य सिद्ध्यतीत्यभिप्राय इत्याहेत्यर्थः । शब्दक्रमादर्थक्रमो बलीयानिति न्यायेन स एव भर्गशब्दार्थ इत्येतत्पश्चाद्व्याकुर्वन्व्याहृतीनां चेति प्रतीकग्रहणं कृतवान् । तैत्तिरीयभाष्योक्तस्मृतिमाह **प्रणवार्था इति** । **एवकार इति** । स एवेत्येवकार इत्यर्थः । **अग्नीति** । 'भूरिति वा अग्निः । भुव इति

वायुः । सुवरित्यादित्य' इति तैत्तिरीयश्रुत्युक्तदिशा अग्न्यादिदेवताकत्वप्रसिद्धेरित्यर्थः । **अधिदेवतात्वेनेति** । अभिमानिदेवतात्वेनापीत्यर्थः । **भूमा पूर्णत्वमिति** । 'बहोर्लोपो भू च बहोः' इति सूत्रे बहुशब्दस्य भावार्थे मन्नन्तस्य रूपत्वादिति भावः । **बहुत्वार्थस्येति** । धातूनामनेकार्थत्वस्य प्रागुक्तत्वादिति भावः । यद्वा भू बहाविति छान्दोग्यभाष्यादावुक्तेरेवमुक्तिः । **कप्रत्यय इति** । 'उणादयो बहुलम्' इति बहुलग्रहणात्कप्रत्यये कित्वाद्गुणनिषेधे उवङादेशे रूपमित्यर्थः । **निमित्तान्तरेति** । भूतिवरत्वानन्तसुखत्वरूपयोः क्रमाद्भुवरादिशब्दद्वयनिमित्तान्तरयोरित्यर्थः । **यथोक्तमिति** । ऋग्भाष्योपक्रमे उक्तमित्यर्थः । भूत्या ऐश्वर्येण वरो महैश्वर्यवानिति भुवः । भवतेरौणादिको डुप्रत्ययः । **वरशब्दस्यान्तलोपो** निरुक्तत्वात् । यथोक्तम् । 'पृषोदरादीनि यथोपदिष्टमि'त्यत्र वृत्तौ 'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तमि'ति । **एवमग्रेऽपि** ज्ञेयम् । शोभनं वः सुखं यस्य स्वः उकारलोपः । **एतैरेवेति** । उक्तनिर्वचनलभ्यनिमित्तैरेव इत्यर्थः । **प्रमाणेति** । 'पुरुषेणेदं सर्वं व्याप्तम्' । 'मया ततमिदं विश्वम्' । 'इदं हि विश्वं भगवानिवेतर' इत्यादिप्रमाणविरुद्धत्वादित्यर्थः ।

**गु०दी०— भवतेर्बहुत्वार्थस्य क्विपि रूपमेतत्** इत्यत्र "बहोर्लोपो भू च बहोरि"ति वचनात् भूधातुनिष्पन्नभूशब्दस्य बहुशब्दस्य चैकार्थत्वादिति भावः । **भवतेरन्तर्णीतण्यर्थस्य** इत्यत्र "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इति सूत्रात् उकारस्योवङादेशे सतीत्यपि द्रष्टव्यम् । सु शोभनं सुखमित्यर्थः तस्य भावः सुत्वमित्यभिसन्धायोक्तं **सुत्वात् सुखत्वात्** इति ।

**यादु०— तत्पक्षदोषश्चेति** । ईश्वरस्य प्रमितत्वे निश्चितत्वात्किं मीमांसयेति दोषः मीमांसाया युक्तिवाक्याभासजनितविप्रतिपत्तिप्रतिबन्धनिरासरूपप्रयोजनकथनेनाग्रे परिहरिष्यत इत्यर्थः । **ब्रह्मणि प्रयुक्त इति** । ब्रह्मशब्दोक्तस्य विष्णोर्विषयत्वसमर्थनार्थं प्रयुक्त इत्यर्थः । **अस्यार्थस्येति** । विषयत्वसमर्थनार्थस्येत्यर्थः । **अधिदेवतात्वेनापीति** । अभिमानिदेवतात्वेनापीत्यर्थः । **भवतेर्बहुत्वार्थस्येति** । भू बहाविति धातोः क्विबित्यर्थः । बहुः पूर्णतायामित्यप्युक्तेरिति भावः । **भवतेरेवेति** । कप्रत्ययानन्तरं अचिश्नुधात्वित्युवङादेशे चेत्यपि ग्राह्यम् ।

**वं०प०— अग्निवायुसूर्यदेवताकत्वप्रसिद्ध्येति** । 'भूरिति वा अग्निः । भुव इति वायुः । सुवरित्यादित्य' इति तैत्तिरीयश्रुतिप्रसिद्ध्येत्यर्थः ।

**आनन्दः— परिहरिष्यत इति** । जिज्ञास्योऽयं विधीयत इति मूलव्याख्यानावसरे एतेनैतदपि निरस्तमित्यादिनेति शेषः । नन्वत्रेश्वरः सर्ववेदार्थः ओङ्कारार्थत्वादिति फलितं तत्र हेत्वसिद्धिः । ओङ्कारार्थत्वेऽपि वेदार्थत्वं मास्त्वित्यप्रयोजकत्वं चेत्याशङ्क्ते **तत्कथमस्येति** । सूत्रकृता ओङ्कारस्य ब्रह्मणि प्रयोगकरणं





सर्ववेदप्रतिपाद्यत्वस्य कथमुपपादकमित्यर्थः । ननु व्याहृत्यर्थत्वमेव कुत इत्यत उक्तशङ्कां परिहरन् तात्पर्यमाह **ओङ्कार इति** । नन्वत्रैवकारस्य किं प्रयोजनमित्यत्राह **एवकार इति** । तर्हि भूरादिव्याहृतीनां अग्न्यादिदेवताकत्वप्रसिद्धिः कथमित्यत आह **अग्न्यादीनामिति** । **अधिदेवतात्वेन** अवान्तरदेवतात्वेन । **अन्यथेति** । अग्न्यादिदेवतानामेव तदर्थत्व इत्यर्थः । प्रणवार्था इत्यागमसिद्धस्य ओङ्कारस्य व्याहृतीनां च व्याख्यानव्याख्येयभावः । स विरुध्येत इत्यर्थः । **केन निमित्तेनेति** । केन प्रवृत्तिनिमित्तेनेत्यर्थः । भवतेरिति बहुत्वार्थकाद्भवतेर्भवति इति भूरिति कर्तरि निष्पन्नोऽयं शब्दः पूर्णत्वरूपप्रवृत्तिनिमित्तमादाय ब्रह्मणि प्रवर्तत इति भावः । ननु भावयतीति णिचि भुव इति रूपं कथमित्यत आह **भवतेरिति** । तथा च जगदुत्पादकत्वरूपप्रवृत्तिनिमित्तमादाय भुवःशब्दस्य ब्रह्मणि प्रवृत्तिरिति भावः । सुत्वादित्यस्य व्याख्या **सुखत्वादिति** । किं तन्निमित्तान्तरमित्यत संमतिश्लोकेन तदाह **यथोक्तमिति** । तथा च वरभूतित्वं भुव इत्यस्यानन्तसुखत्वं स्व इत्यस्य प्रवृत्तिनिमित्तमिति भावः । एवकारप्रयोजनमाह **एतैरेवेति** । तर्हि भूरादेर्लोकात्मकत्वरूपार्थप्रतिपादकस्य भूरिति वा अयं लोक इत्यादेः का गतिरित्यत आह **अयमिति** ।

**कं०रा०— बहुत्वार्थस्येति** । भूबहावित्युक्तेः । अदिशदिभूशुभिभ्यः क्रिन्निति भवतेर्निष्पन्नस्य भूरिशब्दस्य बह्वर्थत्वदर्शनाद्भवतेर्बहुत्वार्थत्वम् । बहुत्वं च पूर्णत्वरूपं बह्वन्नमित्यादौ बहुशब्दस्य पूर्णत्वे प्रयोगादिति भावः । **भवतेरिति** । भावयत्युत्पादयतीत्यन्तर्भावितण्यर्थस्य भवतेर्भुव इति रूपमिति संबन्धः । तत्कथमित्यतः कप्रत्यय इत्युक्तम् । तथा च भवतेः कप्रत्यये सति तस्य कित्वेन गुणाभावादकारस्याचिश्नुधात्वित्यादिना उवङादेशे भुव इति रूपं सिद्ध्यतीति भावः । **चकाराविति** । भावनाच्चैव सुत्वाच्चेति चकारौ भुवःस्वरित्यनयोर्व्याहृत्योर्भूतिवरत्वानन्तसुखत्वरूपप्रवृत्तिनिमित्तान्तरसमुच्चये वर्तेते इत्यर्थः । न तु सर्वासां व्याहृतीनां निमित्तान्तरसमुच्चय इत्यर्थः । सम्मतित्वेनोदाहृते पूर्ण इत्यादिऋग्भाष्यवाक्ये भूरिति व्याहृतेरत्रोक्तभूमशब्दितपूर्णत्वातिरिक्तनिमित्तकथनाभावात् । अत एव द्वितीयतृतीयव्याहृत्योरेव निमित्तान्तरसमुच्चयमभिप्रेत्यानुव्याख्याने भावनाच्चैव सुत्वाच्चेत्यत्रैव चकारावुपात्तौ । न तु भूमत इत्यत्रेति द्रष्टव्यम् ।

**श्रीनिधि०— अधिदेवतात्वेनापीति** । भगवदधिष्ठानदेवतात्वेनापीत्यर्थः । **तत इति** । पूर्णत्वादित्यर्थः । **क्विपि रूपमिति** । तस्य सर्वविहार(यव)लोपे भूरिति सिद्ध्यतीति भावः । कप्रत्यय इति मूलविभुजादित्वात् कः । अचिश्नु धात्विति उवङि च भुव इति सिद्ध्यतीति ज्ञेयम् । **सुत्वादिति** । सुशोभनं तत्त्वात्सुखत्वादित्यर्थः । सुखस्य शोभनत्वादिति भावः ।

**वा०चं०—** ननु स एव भर्गशब्दार्थ इत्यारभ्य स एव सर्ववेदार्थ इत्यन्तेन सूत्रोपात्तस्य तदुपलक्षितस्य वा पदस्याव्याख्यानादभाष्यत्वमित्यतो वेदस्येश्वरविषयतोपपादनायापि सूत्रकृतोङ्कारे प्रयुक्ते सूत्रकृदभिप्रेतं तदुपपादनप्रकारं प्रतिपादयतस्तस्य नाभाष्यत्वमित्यभिप्रेत्य सूत्रकृतो वेदस्येश्वरविषयतोपपादनमप्रयोजनं विषयस्य सन्दिग्धत्वोपपादनेनैव सिद्धेरित्यत ईश्वरस्य प्रमितत्वसिद्धिर्वेदस्य तत्र प्रमाणत्वसिद्धिश्च तत्प्रयोजनमित्यभिप्रेत्य प्रमितत्वसिद्ध्यादेरपि प्रयोजनं दर्शयन् प्रमितत्वोक्तिमात्रेण पूर्वपक्ष्युक्तदोषानुद्धृतिरित्याशङ्कां परिहरन्नेव तदुभयोक्ति-





निवर्त्यपूर्वपक्ष्युक्तशङ्कां दर्शयति **यदत्रेति** । **तत्पक्ष इति** । 'जिज्ञास्योऽयं विधीयत' इत्येतद्भाष्याभिप्रायकथनावसरे एतेन एतदपि निरस्तमित्यादिनेत्यर्थः। अत्र स एव भर्गशब्दार्थ इत्यस्य पूर्वपठितस्याप्याकाङ्क्षाक्रमेण निवेशो युक्त इति पश्चान्निवेशः। नन्वत्राभिप्रायकथनावसरे ओङ्कारस्य न कोऽपि संबन्धः प्रतीयतेऽतो न तस्य तदुपपादकत्वमित्यतो व्याहृत्यर्थत्वे ओङ्कारार्थत्वस्य हेतुतया संबन्धमभिप्रेत्योतत्ववाचीत्युक्तप्रकारेण तस्येश्वरवाचकत्वे सिद्धेऽपि श्रुत्या स्पष्टं तद्दर्शयन् हेतुं साधयति **ओङ्कार इति**। व्याहृतीनां तिसृणां वर्णत्रयात्मकोङ्कारव्याख्यानत्वं च यथायोग्यं द्रष्टव्यम्। 'बहोर्लोपो भू च बहोरि'ति बहुशब्दनिष्पन्नस्यापि भूमशब्दस्य 'बहुः पूर्णतायाम्' इति वचनानुसारेणार्थमाह **भूमेति**। **बहुत्वार्थस्येति**। भू बहाविति धातोरिति भावः। ( बहोः लोपो भू च बहोः। बहोः परयोरिष्ठे मेयसोर्लोपः स्याद्बहोश्च भूरादेशो भूमा । भूयान् । उगित्वान्नुम् । अत्रादेः परस्येति इमनिच इकारस्येयसुन ईकारस्य च लोपो बोध्यः । अञ्चञ्जियुजिभृञ्जिभ्यः कुश्च। एभ्योऽसुन्कवर्गश्चान्तादेशः। अङ्कश्चिह्नशरीरयोः। अङ्कः अङ्कसी अङ्कांसि। एवमुत्तरत्रापि रूपाणि। अङ्गः पक्षी। योगः समाधिः। भ्रस्ज पाके। 'भ्रस्जोरोपधयोरमन्यतरस्याम्'। 'भ्रस्जेरेफस्योपधायाः स्थाने रमागमो वा स्यात् आर्धधातुके मित्वादन्त्यादचः परः। स्थानषष्ठीनिर्देशात् रोपधयोर्निवृत्तिश्च भर्गस्तेज इत्यौणादिके चतुर्थे पाद उक्तम्) । ननु भूर्भुव इति च क्विपि केप्रत्यये च रूपे तर्हि भूरिति भुवर्लोक इति चान्यत्र भूरादीना-मित्यत्र च कथं व्यवहार इति चेत् । ऊकाराकारान्तयो रेफान्तयोश्च पर्यायित्वव्युत्पादनमेतदित्यदोषः । सुशब्दस्य शोभनार्थत्वात्सुखस्यैव मुख्यशोभनत्वाद्वा एकदेशग्रहणन्यायेन वा सुशब्दस्य सुखनामत्वमेवाभिप्रेत्य वा सुखत्वादिति व्याख्यानम् । भूर्भुवःशब्दयोर्योगमाश्रित्य स्वःशब्दे तु रूढिमाश्रित्यैतद्व्याख्यानमित्यभिप्रेत्याह **स्वःशब्द इति** । समुच्चयावधारणयोरेकत्र विरुद्धत्वादेवकारमनभिमतव्यावर्तकतया व्याख्यातुं चकारसङ्ग्राह्यं ऋग्भाष्यीयव्याख्यानं वक्तुमाह **चकाराविति**।

**वा०र०— सूत्रोपात्तस्येति**। ओतत्ववाचीत्यनेनेवेति भावः। **तदुपलक्षितस्य वेति**। नारायणपदोदित इत्यनेनेवेति भावः। **विषयस्य सन्दिग्धेति**। तदेतौ ओङ्कारेत्युक्तरीत्या ओङ्कारब्रह्मशब्दाभ्यामेव तदुपपादनादिति भावः। **प्रयोजनं दर्शयन्निति**। प्रयोजनाभावशङ्कावारणायेति शेषः। **इत्याशङ्कमिति**। इत्याशङ्क्य चेत्यर्थः। **उभयोक्तीति**। ईश्वरस्य प्रमितत्वोक्तिः वेदस्य तत्र प्रमाणत्वोक्तिश्चेत्येतदुभयेत्यर्थः। मूले **दोष इति**। प्रमितत्वादेव। जिज्ञास्यत्वमित्येवंरूप इत्यर्थः। **इत्यादिनेत्यर्थ इति**। तत्र युक्तिवाक्याभासजनितविप्रतिपत्तिप्रतिबन्धनिरासा-र्थत्वकथनादिति भावः। **तथा चेति**। प्रमितत्वेन बुद्ध्यावारोहादिसंभवादिति भावः। व्याहृतीनामित्यादि सुत्वाच्चे-त्यन्तव्याख्यानानन्तरं स एव भर्गशब्दार्थ इत्येतद्व्याख्यानकरणाद्भाष्यपाठक्रमस्य चातथात्वाद्भाष्यमूलयोर्विसंवाद इत्याशङ्कायां भाष्यकृता क्रमान्तरेणाभिधानेऽपि तत्क्रमस्याभिप्रायगतत्वाभावादोङ्कारार्थत्वादिप्रणाडिकोपपादकतया मध्ये गायत्र्यर्थत्वस्य वक्तव्यतयाभिप्रेतस्योपपादकतया क्रममविवक्षित्वा भाष्यकारेणाभिधानं स एव भर्गशब्दार्थ इत्यस्येति मनसि निधाय पाठक्रमव्यत्यासेन उपयोगक्रम इत्याह **अत्र स एवेति**। **ईश्वरविषयता कुत इति** मूलम्। प्राभाकररीत्या कार्यपरस्य वेदस्येश्वरविषयता कुतो मानादवसेयेत्यर्थः। **तत्कथमिति**। ओङ्काररूपसाधकस्य सर्ववेदार्थत्वाभावेऽप्युपपत्त्याऽप्रयोजकत्वेन सर्ववेदार्थतारूपार्थोपपादकत्वं तस्य न युक्तमित्याशयः। **इदमत्रा-कूतमिति**। परम्परया तदुपपादकत्वमभिप्रेतमित्यर्थः। **स एवार्थ इतीति** मूलम्। बुद्ध्या विवेकमाश्रित्य

संबन्धप्रदर्शनमेतदिति प्रागेवोक्तम्। ज्ञापकश्चायमर्थो न कारक इत्याशयेनाह **इति गम्यत इति** मूलम्। एवमुत्तरत्रापि ज्ञेयम्। **अभिप्रायकथनेति**। अनेन मौलमाकूतपदमभिप्रायार्थतया व्याख्यातं भवति। **ओङ्कारस्य न कोऽपीति**। ओङ्कारः सूत्रकृता ब्रह्मणि प्रयुक्त इत्यनेनोङ्कारादीश्वरो व्याहृत्यर्थ इति प्रयोगो वाच्यः, तत्रेश्वरस्योङ्कारेण संबन्धो न प्रतीयत इति हेतोः पक्षधर्मत्वायोग इति भावः। तथा हेतुत्वसमर्पकाभावादोङ्कारार्थत्वस्य हेतुतया संबन्धो न प्रतीयत इत्यप्यर्थः। **ओङ्कारार्थत्वस्येति**। प्रतिपाद्यत्वरूपार्थत्वमेव संबन्ध इति सूचितमनेन। हेतुतया संबन्धमभिप्रेत्येत्यनेनात इत्यध्याहारेण हेतुत्वसमर्पकतया योजितमिति सूचयता न कोऽपीत्यस्य द्वितीयार्थोऽपि निराकृत इति ज्ञेयम्। **वाचकत्वे सिद्धेऽपीति**। अनेन श्रुत्युपन्यासवैयर्थ्यं न शङ्कनीयमिति प्रतिपादितं भवति। यथायोग्यमिति अकारोकारमकारा हि वर्णत्रयम्। तदर्थाश्च "अकारेणाधिकं प्रोक्तमुकारेणोच्चमुच्यते। तथामितं सर्ववेदैर्मकारेणाभिधीयते। अधिकोच्चमिति ज्ञातमोमित्यस्यार्थ ईरित" इति छादोग्यभाष्ये। "प्रणवोऽपि त्रयात्मकम्। हरिमेव सदा वक्ति नैवान्यं कञ्चन क्वचित्। सृष्टिकर्ता ब्रह्मनामा योऽसृजच्चतुराननम्। अन्तर्यामी विरिञ्चस्य सोऽङ्कारार्थो जनार्दनः। वैकुंठलोके आस्ते स द्वितीयवपुषा हरिः। उकारवाच्यः स विभुर्नृसिंहो रुद्रनामकः। रौद्रत्वात्स शिवस्यापि स्रष्टा संहारकारकः। अन्तर्यामी शिवस्यापि मकारार्थः प्रकीर्तितः। एवं त्रयात्मकं विष्णुं प्रणवोऽयं त्रयात्मकः। एकं पृथगिवाचष्ट" इत्यैतरेये चोक्ताः। भूरादिव्याहृत्यर्थास्तु भूमतो भावनाच्चैव सुत्वाच्चेत्यत्र "भूर्नाम स्फूर्तिरूपत्वाद्भूरिवीर्यत्वतो भुवः। सुवः सुबलरूपत्वादि"ति तैत्तिरीये। "पूर्णो भूतिवरोऽनन्तसुख" इति ऋग्भाष्ये चोक्ताः। तत्र यद्व्याहृतेरोङ्कारगतयद्वर्णव्याख्यानता युक्ता तस्यास्तदर्थकत्वं स्वीकृत्योङ्कारव्याख्यानत्वमुपपाद्यमित्यर्थ इत्याहुः। वस्तुतस्तु वर्णत्रयात्मकेत्यत्र न भारः। टीकायां मूलानुवादमात्रस्यैव करणात्। तथा च व्याख्येयोङ्कारस्य पूर्णत्वाभिधायितया निरवधिकपूर्णत्वस्य तत्प्रतिपाद्यस्य भूरिति प्रथमव्याहृतिप्रतिपाद्यत्वेऽपि द्वितीयव्याहृत्या जगदुत्पादकत्वप्रतिपादनमुखेन सृष्ट्यादिकर्तृत्वपूर्णत्वस्य तृतीयव्याहृत्या च सुखत्वप्रतिपादनमुखेन सुखपूर्णत्वमात्रस्य प्रतीत्या सर्वपूर्णतायाः प्रतिपाद्यत्वाभावेन कथमोङ्कारार्थव्याख्यानतेत्यतः सत्यं नैकप्रकारेण व्याहृतित्रयस्य पूर्णत्वप्रतिपादकत्वमिति। किन्तु प्रथमादिषु भवदुक्तप्रकारेण यत्र यथा पूर्णत्वप्रतिपादकत्वं संभवति तथैव। समग्रपूर्णतायाः प्रथमव्याहृत्यैव प्रतिपादनेऽपि उत्तरयोर्द्वयोः पूर्णतैकदेशप्रतिपादकत्वेऽपि च पूर्णत्वप्रतिपादकत्वसामान्यरूपेणोङ्कारव्याख्यानतायास्त्रिष्वपि साम्यादिति यथायोग्यमित्यर्थः। अप्रयोजकत्वं परिहरति **व्याख्यानेति** मूलम्। ननु प्रसिद्धिप्राप्तत्यागे प्रसिद्धिविरोध इत्यतस्तस्या अन्यथोपपत्तिमाह **अग्न्यादीनामिति** मूलम्। **अधिदेवतात्वं** नाम अधिकृतदेवतात्वम्। अधिकृतत्वं च त्वमेतदधितिष्ठस्वेति दत्तस्वाम्यकत्वमिति ज्ञेयम्। नन्वधिदेवतात्वेन प्रसिद्धिमन्यथोपपाद्य किं भगवतो व्याहृत्यर्थत्वाग्रहेण; प्रसिद्ध्यनुसारेणाग्न्यादेरेव मुख्यार्थत्वं किं नाश्रीयत इत्यत आह **अन्यथेति** मूलम्। अग्न्यादीनामेव मुख्यप्रतिपाद्यत्व इत्यर्थः। भिन्नविषयत्वादिति भावः। **केन निमित्तेनेति** मूलम्। 'भूरिति वा अयं लोक' इत्यादिना लोकाभिधायित्वेन भूरादिव्याहृतिप्रतिपादनाद्भगवतश्च लोकत्रयात्मकत्वायोगान्निमित्तान्तरस्य चाप्रतिभासादिति भावः। **अत आहेति** मूलम्। निमित्तान्तरेणैव तदर्थ इत्याहेत्यर्थः। **बहुशब्दादिति**। अनेन बहोर्लोपो भू च बहोरिति सूत्रेण बहुशब्दात्परयोरिमन् ईयसुनोः प्रत्यययोरिकारस्य लोपः बहोर्भूरादेशश्चेति विधानाद्भावे पृथ्वादिभ्य इमनिज्वा इत्यनेनेमनिच्प्रत्ययान्तभूमशब्देन बहुत्वरूप एवार्थ आयाति।





अत एव बहुत्वार्थस्येति वक्ष्यति। तत्कथं भूमा पूर्णत्वमिति व्याख्यानं **युक्तमिति शङ्कां सूचयति**। अस्तु बहुत्वार्थत्वं भूमशब्दस्य तथापि बहुः **पूर्णतायामिति** ऋग्भाष्यटीकोक्तवैयाकरणवाक्यादस्य **पूर्णत्वार्थत्वं युक्तमिति समाधिं** वदन्नवतारयति बहुः **पूर्णतायामितीति**। **भूर्भुव इति चेति**। भू इति **क्विपि प्रत्यये रूपे** भुव इति केप्रत्यये च रूपम् इति संबन्धः। **रूपे तर्हीति**। रूपे इति यद्यङ्गीक्रियेते तर्हीत्यर्थः। **अन्यत्रेति**। भूरिति वा अयं लोक इत्यादि तैत्तिरीयोपनिषदादौ तत्त्वप्रकाशिकादौ बहुस्थले चेत्यन्यत्रेत्यर्थः। **व्यवहारः कथमिति संबन्धः**। **भूरादीनामित्यत्र चेति**। अत्र च मूले व्याहृतीनां चेत्येतद्व्याख्यावसरे **भूरादीनामिति व्यवहारः कथमिति योज्यम्**। **ऊकाराकारान्तयोरिति**। ऊकारान्त भूशब्दस्य रेफान्तभूशब्दस्य च पर्यायत्वेति **योज्यम्**। **एवमकारान्तभुवशब्दस्य** रेफान्ततच्छब्दस्य च पर्यायत्वेति योज्यम्। मूले भूमत इत्यादिहेतूनां **संबन्धोऽध्याहृतसाध्येनेत्याशयेन** तत इत्यनेन भूमत इत्यनूद्य भूरिति पूरितमेवमुत्तरत्रापि भुव इत्यादि पूरितमिति ज्ञेयम्। **भवतेः क्विपीति** मूलम्। सर्वधातुभ्यः सोपपदेभ्यो निरुपपदेभ्यश्च छन्दसि भाषायां च क्विप्विधायकेन क्विप् चेति **सूत्रेण** भवतेरपि **कर्तरि क्विपीत्यर्थः**। **केप्रत्यय इति** मूलम्। कित्वाद्गुणाभावे अचि श्नुधात्वित्यनेनोवङि सतीत्यपि ज्ञेयम्। **कप्रत्ययश्च अन्तर्णीतण्यर्थस्येति** मूलम्। चतुर्थप्रथमभूतटीकायामनेकार्थत्वाद्धातूनां लक्षणया वा जनिरेव ण्यर्थमप्यन्तर्भावयतीत्युक्ते प्रकृते लक्षणया ण्यर्थप्रतिपादकस्येत्यर्थः। एवमन्यत्रापि लक्षणया ण्यर्थो लभ्यत इत्यादिरूपेणैव तत्र तत्र **गुरुपादैरेव** विवृतं भविष्यति। मित्रं हुवे पूतदक्षमित्येतत् ऋग्भाष्यटीकाव्याख्याने च विवृतं तद्विवरणं चास्माभिः कृतमस्ति। सुत्वादित्यनेन उक्तार्थस्याप्रतीत्या स्वरित्येतद्व्याख्यानत्वायोग इत्याशङ्कापरिहाराय सुत्वादित्यनेन **सुखवत्त्वादी**त्यर्थलाभं द्वेधा दर्शयति **सुशब्दस्येति**। **एकदेशेति**। एकदेशव्युत्पादनपर ..... विशदमेतत्। **समुच्चयावधारणयोरिति**। भावनाच्चैवेत्यत्र चैवशब्दयोः पाठात्तयोश्च समुच्चयावधारणरूपार्थकत्वादेकत्रैवान्येन समुच्चयस्यान्यव्यावृत्तिफलकावधारणस्य च विरोधादयोगेनोभयोरप्येकत्र संबन्धायोगात्तदुपपत्तये चशब्दस्य समुच्चयार्थतामेवाश्रित्यैवकारस्याव्यवस्थयेतरव्यावर्तकतामनाश्रित्य नरं च नारायणमेव चादावित्यादाविवानभिमतव्यावृत्त्यर्थकतया तं व्याख्यातुमित्यर्थः। व्याख्यातुं एतैरेवेत्यादिनैवशब्दार्थ इत्यन्तेनेत्यर्थः। ऋग्भाष्यीयेत्यनेन यथोक्तमित्यत्र ऋग्भाष्य इति शेषः पूरणीय इति सूचितम्। मूले **पूर्णो भूतिवरोऽनन्तेति** वाक्यात्ते इति पाठः स्वरसः। आदिपदाभावे वा तदर्थपूरणेन व्याख्येयम्। तेन भावनाच्चेत्यादावर्थद्वये चशब्दद्वयस्य निमित्तान्तरं समुच्चयार्थतया व्याख्यानात्पूर्ण इत्यादि ऋग्भाष्ये च सुव इति पाठानुसारेण शोभनत्वार्थकसुशब्दस्य वशब्दोक्तसुखेन संबन्धेऽनन्तसुखलाभवर्णनानुसारेणैव प्रकृतेऽपि यो वै भूमा तत्सुखं नाल्पे सुखमस्तीत्युक्तत्वादनन्तसुखस्यैव लाभोपपत्त्याऽनन्तसुखत्वं च न सुखत्वापेक्षया निमित्तान्तरमिति सिद्धेर्भूतिवरत्वमात्रांश एव भुवःशब्दार्थे समुच्चये वाच्ये तत्रत्य चशब्दसार्थक्यलाभेऽपि द्वितीयचकारस्य वैयर्थ्यं निमित्तान्तरेति त्रितयसाधारण्येनोक्तेरयोगश्चेति शङ्का नोदेति। आदिपदोक्तभूर्नामा स्फूर्तिरूपत्वादित्यादितैत्तिरीयभाष्योक्तस्फूर्तिरूपत्वभूरिवीर्यत्वसुबलत्वरूपनिमित्तत्रयस्य शब्दत्रये ज्ञातुं शक्यत्वादिति ज्ञेयम्।





**स०व्र०**— तर्हि प्रमितत्वे तु निश्चितत्वादेव जिज्ञासानुपपत्तिरित्युक्तदोषः स्यादित्यत आह **तत्पक्ष-दोषश्चेति** । 'जिज्ञास्योऽयं विधीयत' इत्येतद्व्याख्यानदशायामेतेनेत्यादिना विप्रतिपत्तिसद्भावात् तन्निरासार्थं जिज्ञासोपपत्तिरिति परिहरिष्यत इत्यर्थः । **तथा चेति** । ततश्चेश्वरस्य प्रमितत्वेन बुद्ध्यारोहसंभवाज्जिज्ञासोपपत्तिः । अनेन च न बुद्धावनारूढं शक्यं जिज्ञासितुमिति शङ्का निरस्ता भवति । **अधिदेवतात्वेनापीति** । व्याहृतिप्रतिपाद्य-भगवदधिष्ठानत्वेनापीत्यर्थः ॥

**कुण्डल०— तत्र इति** । ईश्वरः प्रमित इति पक्षे ईश्वरस्य प्रमितत्वात् तन्मीमांसाया आनर्थक्यमिति दोषश्च । मीमांसायाः युक्तिवाक्याभासापादितविप्रतिपत्त्यादिलक्षणप्रतिबन्धकनिरासादिप्रयोजनकथनेनाग्रे परिहरिष्यत इत्यर्थः । **अधिदेवतात्वेनेति** । अभिमानिदेवतात्वेनेत्यर्थः । अपिपदेनावान्तरतात्पर्यविषयतया अग्न्यादीनां परम-मुख्यया वृत्त्या व्याहृतिवाच्यत्वं समुच्चिनोति । **भवतेर्बहुत्वार्थस्येति** । अदिशदिभूशुभिभ्यः क्रिन्निति सूत्रशिष्ट-क्रिन्प्रत्ययान्ताद्भूधातोर्निष्पन्नस्य भूरिशब्दस्य बह्वर्थत्वाद्भवतेर्बहुत्वार्थत्वम् । बहुत्वार्थत्वं च पूर्णत्वरूपम् । बह्वन्नमित्यादौ बहुशब्दस्य पूर्णत्वे प्रयोगादिति भावः । अन्ये तु भूबहाविति धातोः क्विप्प्रत्ययः बहुपूर्णताया-मित्युक्तेरित्याहुः । **भवतेरेवेति** । भावयत्युत्पादयतीत्यन्तर्णीतण्यर्थात् भूसत्तायामित्यस्माद्धातोः कप्रत्यये तस्य कित्वेन गुणाभावादुकारस्याचिश्नुधातुभ्रुवां य्वोरियङुवङौ इति सूत्रेणोवङादेशे च सति भुव इति रूपं सिद्ध्यती-त्यर्थः । **चशब्दाविति** । भावनाच्चैव सुत्वाच्चेति चशब्दौ भुवः स्वः इत्यनयोः व्याहृत्योः पूर्णत्वभूतिवरत्वरूप-निमित्तान्तरसमुच्चये वर्तेते इत्यर्थः । न तु प्रथमव्याहृत्यर्थसमुच्चये । तस्य पूर्णत्वस्यात्रैव भूमत इत्यनेनाभिधानात् ।

**विठ्ठ०— परिहरिष्यते** । जिज्ञास्योऽयं विधीयते इत्येतदभिप्रायकथनावसर इति शेषः । **इदमाकूतमिति** । ओङ्कारमादौ प्रयुञ्जतः सूत्रकारस्यायमभिप्राय इत्यर्थः । **अधिदेवतात्वेन** अभिमानिदेवतात्वेन । **ततो भूरिति** । पूर्णत्वाद्भूरिति व्याहृतिप्रतिपाद्य इति भावः । तदुपपादयति **भवतेरिति** । भू बहाविति भूधातोः बहुत्वार्थतया व्याख्यानात् बहुपूर्णतायामिति बहुधातोः पूर्णार्थकतया व्याख्यानाच्च पूर्णत्वार्थकभूधातोः क्विपि कृते क्विपः लोपे सुपि च भूरिति रूपम् । **भवतेरिति** । सत्तार्थकादन्तर्णीतण्यर्थात् भूधातोः कप्रत्यये उवङादेशे च सति भावनात् असतः सत्तासंपादनात् उत्पादनात् भुव इति व्याहृतिप्रतिपाद्य इति भावः । सुशब्दस्य शोभनार्थत्वात् सुखस्यैव परमशोभनत्वात् सुखशब्दस्य नामैकदेशो नामग्रहणमिति न्यायेन वा सुत्वात् सुखरूपत्वादित्युक्तमिति ज्ञेयम् । नात्र पूर्ववद्योगः किन्तु वैदिकप्रसिद्धेरेव स्वरित्यस्य सुखार्थकत्वमित्याह **स्वःशब्द इति** ।

**चषकः— परिहरिष्यत इति** । ईश्वरकर्मकनिश्चयाभ्युपगमे मीमांसासाध्यफलस्य निर्वृत्तत्वादेव तदान-र्थक्यरूपो दोषः मीमांसायाः प्रभाणाभासोत्पादितप्रतिपत्त्यादिप्रतिबन्धनिरसनौपयिकत्वाभिधानेन प्रतिविधास्यत इत्यर्थः । **अधिदेवतात्वेन** अभिमानिदेवतात्वेन । 'बहोर्लोपो भू च बहोरि'ति सूत्रे बहुशब्दप्रकृतिकेमनिजवय-वेकारलोपस्य बहुशब्दस्य भूरादेशस्य च विहितत्वादिति भावः । **बहुत्वार्थस्येति** । भू बहौ पूर्णतायामित्युक्तेरिति भावः । **यथोक्तमिति** । ऋग्भाष्य इति पूरणीयम् ।

**गूढ०— परिहरिष्यत इति** । जिज्ञास्योऽयं विधीयत इति मूलव्याख्यानावसरे एतेनैतदपि निरस्तमित्यादिनेति शेषः । नन्वत्र ईश्वरः सर्ववेदार्थः ओङ्कारार्थत्वादिति फलितम् । तत्र हेत्वसिद्धिः । ओङ्कारार्थत्वेऽपि वेदार्थत्वमस्त्वित्यत्राप्रयोजकत्वं चेत्याशङ्कते **तत्कथमस्येति** । सूत्रकृता ओङ्कारस्य ब्रह्मणि प्रयोगकरणं सर्ववेदप्रतिपाद्यत्वस्य कथमुपपादकमित्यर्थः । ननु व्याहृत्यर्थत्वमेव कुत इत्यत उक्तशङ्कां परिहरन् तात्पर्यमाह **ओङ्कार इति** । नन्वत्रैवकारस्य किं प्रयोजनमित्यत आह **एवकार इति** । तर्हि भूरादिव्याहृतीनामग्न्यादिदेवताकत्वप्रसिद्धिः कथमित्यत आह **अग्न्यादीनामिति** । **अधिदेवतात्वेन** अवान्तरदेवतात्वेन । **अन्यथेति** । अग्न्यादिदेवानामेव तदर्थत्व इत्यर्थः । प्रणवार्था इत्यागमसिद्धस्योङ्कारस्य व्याहृतीनां च व्याख्यानव्याख्येयभावः स विरुध्येतेत्यर्थः । **केन निमित्तेनेति** । केन प्रवृत्तिनिमित्तेनेत्यर्थः । **भवतेरिति** । बहुत्वार्थकाद् भवतेः भवतीति भूरिति कर्तरि निष्पन्नोऽयं शब्दः पूर्णत्वरूपप्रवृत्तिनिमित्तमादाय ब्रह्मणि प्रवर्तत इति भावः । ननु भावयतीति भुव इति रूपं कथमित्यत आह **भवतेरिति** । तथा च जगदुत्पादकत्वरूपप्रवृत्तिनिमित्तमादाय भुवःशब्दस्य ब्रह्मणि प्रवृत्तिरिति भावः । सुत्वादित्यस्य व्याख्या सुखत्वादिति । किं तन्निमित्तान्तरमित्यतः सम्मतिश्लोकेन तदाह **यथोक्तमिति** । तथाच वरभूतित्वं भुव इत्यस्य, अनन्तसुखत्वं स्वइत्यस्य प्रवृत्तिनिमित्तं इति भावः । एवकारप्रयोजनमाह **एतैरेवेति** । तर्हि भूरादेर्लोकात्मकत्वरूपार्थप्रतिपादकस्य भूरिति वा अयं लोक इत्यादेः का गतिरित्यत आह **अयमिति** ।

**१४८ सु०— किमतो न हि व्याहृतय एव वेद इति चेत् । व्याहृत्यर्थतया तावत्परमेश्वरस्य गायत्रीप्रतिपाद्यता अवगम्यते । त्रिपदायाः गायत्र्याः व्याहृतित्रयव्याख्यानत्वस्यागमसिद्धत्वात् । ननु गायत्र्यां 'यो भर्गो नोऽस्माकं धियः प्रचोदयात् प्रेरयेत्, तस्य सवितुर्देवस्य तत् वरेण्यं रूपं धीमहि चिन्तयाम' इति भर्गनामकः सविता प्रतिपाद्यो दृश्यते । तत्कथं भगवत्परत्वमित्यत आह स एव भर्गशब्दार्थ इति ।**

**परि०— त्रिपदा गायत्र्या इति** । ऋग्वाचिनस्त्रिपदा इत्यस्य टाबृचीति टाबन्तस्याभाषितपुंस्कत्वान्न पुंवद्भावः । क्वचित् त्रिपदाया इति पाठः । **आगमेति** । 'नारायणाष्टाक्षराच्च व्याहृतित्रिगुणात्पुनः । वेदमाता तु गायत्री'ति तन्त्रसारोक्तेरित्येके । तच्चिन्त्यम् । तत्र व्याहृतिशब्दस्य व्याहरणार्थत्वात् । किन्तु पञ्चरात्रागमसिद्धत्वादित्यर्थ इत्यन्ये । तस्य स्पष्टमाचार्यैः क्वाप्यनुक्तत्वादिहाप्यनुक्तिरिति । **यो भर्ग इति** । ऋग्भाष्यटीकायां तु सकारान्तनपुंसकमुपेत्य भर्गोरूपमित्युक्तम् । तच्चाद्युदात्तत्वसिद्ध्यर्थमिति ज्ञेयम् । यस्य भर्गाख्या तच्चिन्तयामीति मैत्रायणीयश्रुत्यादावकारान्तताश्रवणादत्र अकारान्त उक्तः । तथात्वे रूढ्या रुद्रः स्यादिति न शङ्क्यम् । आगमविरोधात् । चुद प्रेरण इत्यस्माल्लेटि रूपमित्युपेत्य आह **प्रेरयेदिति** । ध्यै चिन्तायामित्यस्य संप्रसारणं विकरणलोप आत्मनेपदं च छान्दसम् । व्यत्ययो बहुलमिति वचनादित्युपेत्यार्थमाह **चिन्तयाम इति** ।





**यादु०—आगमसिद्धत्वादिति** । 'व्याहृतित्रिगुणात्पुनः वेदमाता तु गायत्री' इत्याद्यागमसिद्धत्वात् इत्यर्थः।

**कं०रा०— भर्गशब्दार्थ इतीति**। ऋग्भाष्यटीकायां भादीप्तौ रमुक्रीडायां गम्लृगताविति धातुसमुदाया-दसुन्निति भर्गःशब्दस्य व्युत्पादितत्वेऽपि भर्गनामकसविता प्रतिपाद्यो दृश्यत इति पूर्वपक्षिणोक्तत्वात्तदनुसारेण भर्गशब्दोपादानम्।

**श्रीनिधि०— त्रिपदाया इति**। व्याख्येयव्याहृतीनां त्रित्ववत् तद्व्याख्याने भागत्रयदर्शनाय त्रिपदेत्युक्तम्। **भर्गनामकसवितेति**। स्वव्याख्यानानुसारेण, वाद्यन्तरेण तु सवितृनामको भर्ग इत्युच्यते।

**वा०चं०**— स एव गायत्र्यर्थ इति वक्तव्ये स एव भर्गशब्दार्थ इत्युक्तमयुक्तमित्यतो नेदं व्याहृतीनां चेत्यादिरिव साक्षाद्गायत्र्यर्थत्वप्रतिपादकमपि तु व्याहृत्यर्थत्वेन साधनीयतया बहिरेवाभिप्रेते गायत्र्यर्थत्वे प्राप्तानुपपत्तिपरिहारकमित्यभिप्रेत्य तदभिप्रेतं वक्तुं शङ्कामुत्थापयति **किमत इति** ।

**वा०र०— व्याहृतित्रयव्याख्यानत्वस्यागमेति** मूलम्। प्रणवार्था व्याहृतय इत्यतःपरं तैत्तिरीयभाष्ये व्याहृत्यर्था ऋगादय इत्युदाहरणेऽपि 'व्याहृतित्रिगुणात्पुनः। वेदमाता तु गायत्री' इति तन्त्रसारसङ्ग्रहे गायत्र्याः व्याहृतिव्याख्यानत्वस्योक्तत्वादिति भावः । 'प्रणवार्था व्याहृतयो व्याहृत्यर्था ऋगादय इति तैत्तिरीयभाष्ये तन्त्रसारसङ्ग्रहे चोदाहरणेऽपि प्रणवार्था व्याहृतयो व्याहृतित्रिगुणात्पुनः। वेदमाता च गायत्री'ति स्मृत्यन्तरसत्त्वा-त्तदनुरोधेन आगमसिद्धत्वोक्तिरिति ज्ञेयम् । **व्याहृतीनां चेत्यादिरिवेति** । इत्यादेर्यथा साक्षाद्व्याहृत्यर्थत्व-प्रतिपादकत्वमेवं स एव भर्गेत्यस्य न साक्षाद्गायत्र्यर्थत्वप्रतिपादकत्वमिति योज्यम् । व्याहृत्यर्थत्वप्रतिपादक-व्याहृतीनां चेत्यादिकं यथा साक्षादेव तत्प्रतिपादकमेवं स एव भर्गेत्येतन्न साक्षाद्गायत्र्यर्थत्व प्रतिपादकमिति यावत्। इत्यादेरिति इत्यादिकमिति प्रथमार्थे षष्ठीत्यप्याहुः । असुन् प्रत्यय इति सर्वधातुभ्योऽसुन्विधायकेनासुनिति सूत्रेणा सुनित्यर्थः। कथं धातुद्वयादसुन्। परश्चेत्युक्तेरित्यत उक्तमुणादय इति। 'संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः पर' इत्यादिभाष्यवचनादिति भावः । उपलक्षणं चैतत् । मायामात्रमित्येतदुपपादनपरप्रकृत्यधिकरणीय-मूलोक्तरीत्या अदि भूभ्यां ड्डुतच्प्रत्ययो दृष्ट इति ज्ञेयम्। प्रत्ययसन्नियोगेन बिभर्त्तेर्गुणो गमेश्च टिलोप इति ज्ञेयम्। धातुद्वयादेकप्रत्ययोपपादनं मायामात्रपदव्युत्पादनावसरे उक्तस्थलीयमूलटीकायां तत्प्रपञ्चे च भविष्यति । ननु मूलादौ भर्ग इति असुन्प्रत्ययान्तं चेद्भर्गः शब्दार्थ इत्यापत्त्या भर्गशब्दार्थ इति भाष्यप्रयोगादिकं कथम् । ऋग्भाष्यटीकायामसुनुक्तावपि भर्ग इत्यस्य वरेण्यं भर्गो रूपमिति नपुंसकविशेषणतया योजनान्नानुपपत्तिः। परन्तु भर्गो ध्येय इत्यत्र पुल्लिङ्गप्रायपाठानुपपत्तिरस्त्येवेति चेन्न। उणादयो बहुलमिति सूत्रगतबहुलवचनस्य बहुविषयत्वेन तेन टीकोक्तधातुद्वयात्प्रत्ययादिसिद्धिवत्सकारलोपस्यापि विकल्पेन सिद्ध्या ग्रन्थद्वयस्यापि सुघटत्वादिति भाति। ततश्च बिभर्ति गच्छतीति व्युत्पत्त्या भरणगमनकर्तृत्वाद्भर्गशब्दार्थ इति मूलाशय इति सूचितम् ।





**स०व्र०— त्रिपदाया इति** । 'व्याहृतित्रिगुणात्पुनः वेदमाता तु गायत्री' इत्यागमेन त्रिपदाया गायत्र्याः व्याहृतित्रयव्याख्यानत्वस्यावगमादित्यर्थ इत्याहुः ।

**कुण्डल०— आगमसिद्धत्वादिति** । "व्याहृतित्रिगुणात्पुनः । वेदमाता च गायत्री"त्यागमसिद्धत्वादित्यर्थः । **भर्गशब्दार्थ इतीति** । यद्यपि ऋग्भाष्यटीकायां भारतिज्ञानरूपत्वात् भर्गो ध्येयोऽखिलैर्जनैरिति निरुक्तानुसारेण भा दीप्तौ रमु क्रीडायां गम्लृ गताविति धातुसमुदायादसुनिति सकारान्तो भर्गः शब्दः निष्पादितः । तथाऽप्यत्र पूर्वपक्षिणः भर्गनामकसविता भर्गपदेनोच्यत इत्यभिमतत्वात्तदनुसारेणाकारान्तो भर्गशब्दोऽत्र गृहीत इति भावः । **भरणेति** । भृधातोर्गमेश्चाप्रत्यये गमेः टिलोपे भृञो गुणे रपरत्वे च भर्गेति रूपसिद्धिरिति द्रष्टव्यम् । एतेन ऋग्भाष्यटीकायां भारतिज्ञानरूपत्वात् भर्ग इति स्मृत्यनुसारेण धातुसमुदायादसुन्प्रत्ययमङ्गीकृत्य भर्गशब्दव्युत्पादनावसरे अदिभूभ्यां डुतजिति यथेत्युक्तं तदयुक्तम् । अदिभुवोडुतजित्येव गणसूत्रपाठात् धातुसमुदायात्प्रत्ययस्याननुशासनादिति चोद्यं निरस्तम् । प्राचीनपुस्तकेषु । उणादिसूत्रे अद्भुतमिति व्युत्पादनावसरे अदिभूभ्यां डुतजिति पाठस्य दर्शनात् । व्याकरणान्तराभिप्रायेण वा तदुक्त्युपपत्तेः । अस्तु वा अदिभुवोडुतजित्येव पाठस्तथापि नानुपपत्तिः ॥ अदि भुवो डुतजित्येतत् अदि भूभ्यां डुतजित्येवं व्याख्येयमित्याशयेन तथोक्तत्वात् । न च वाच्यमद्युपपद इति व्याख्यायत इति । अदेः क्विपि निष्पन्नस्य अत इति शब्दस्य लाक्षणिकतया कृतसंप्रसारणस्य क्रपकृपायामित्यस्य कृपेः कृपो रोल इत्यत्रेव ग्रहणायोगेन लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्राह्यत्वमिति न्यायेनादिधातोरेव स्वीकार्यतया धातुसमुदायात्प्रत्ययस्येव धातूपपदाद्धातोः प्रत्ययस्यैवादर्शनि समानेप्येवमेव व्याख्येयमिति नियमस्यायोगात् । विधानसामर्थ्याद्भवतीत्यस्य पक्षद्वयेऽपि समानत्वादुपपदार्थान्वयाभावेन तत्पक्षस्य असामञ्जस्याच्च । अद्यतेऽनुभूयते भाव्यते चेत्यर्थानुगमस्यास्मत्पक्षे एव विद्यमानत्वाच्च । ऐतिह्यमित्यत्र 'अनन्तावसथेतिहभेषजाञ्ञ्यः' इति विहितस्य इति हेति निपातसमुदायात् ञ्यप्रत्ययस्येव धातुसमुदायादुक्तस्मृतिबलेन प्रत्ययस्योपपत्तेः । "देवस्य सवितुस्तस्य धियो यो नः प्रचोदयात् । भर्गो वरेण्यं तद्ब्रह्म धीमहीत्यर्थ उच्यते" इति गायत्रीव्याख्यानरूपे विश्वामित्रवचने । तथा "यो देवः सविताऽस्माकं धियो धर्मादिगोचराः । प्रेरयेत्तस्य यद्भर्गस्तद्वरेण्यमुपास्महे ॥" इत्यगस्त्यवचने च सकारान्तस्य भर्गस्शब्दस्योपादानात् सकारान्तत्वेन भर्गस्शब्दो व्युत्पादितः । अत्र तु प्रागुक्तरीत्या अकारान्तो भर्गशब्दो व्युत्पादित इति न काचिदनुपपत्तिः । केचित्तु अत्र डुभृञ्भरणे गम्लृगतौ आभ्यामसुन्प्रत्यय इत्याहुः ।

**विठ्ठ०— किमत इति** । अस्त्वेवं व्याहृतिप्रतिपाद्यत्वं हरेः अतोऽपि वेदप्रतिपाद्यत्वे किमायातमित्यर्थः ।

**चषकः— आगमसिद्धत्वादिति** । 'व्याहृतित्रिगुणात्पुनः । वेदमाता तु गायत्री'त्यागमसिद्धत्वात् इत्यर्थः ।

**१४९ सु०— भरणगमनयोगादिति शेषः । उपलक्षणं चैतत् । जगत्प्रसवहेतुत्वात्सवितेत्यपि द्रष्टव्यम् ॥ न तु सूर्यः । तथात्वे गायत्र्या व्याहृत्यर्थत्वानुपपत्तेः । 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायण' इत्याद्यागमविरोधाच्चेत्येवार्थः ।**





**परि०— भरणेति** । भृञ् भरणे गम्लृ गतौ धातुद्वयादौणादिको डन्प्रत्ययः । 'अदिभूभ्यां डुतजि'तिवत् । भृञो गुणो गमेष्टिलोप इति भावः । तेन डनो नित्वात् ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वं सिद्धं ज्ञेयम् । षूङ्प्राणिप्रसव इत्यस्मात्तृजित्युपेत्याह **जगदिति** । **आगमेति** । ऐतरेयभाष्योक्तादित्यपुराण-रूपागमेत्यर्थः । एतेन मूले स एव भर्गशब्दार्थ इति व्याहृतिव्याख्यानात्पूर्वं गायत्र्यर्थोक्तेर्बीजं प्रकटितं भवति ।

**यादु०— भरणगमनयोगादिति** । डुभृञ् भरणे गम्लृ गतौ आभ्यां असुन् प्रत्ययो ङिच्च । तथा च भरणगमनकर्तृ भर्ग इत्यर्थः ।

**कं०रा०— भरणगमनेति** । भृञो गमेश्च डप्रत्यये भर्गेति रूपमिति भावः । **जगदिति** । सवितृशब्दस्य षूङ्प्राणिप्रसव इत्यस्मादुत्पन्नत्वेन जगत्प्रसवहेतुत्वं तच्छब्दप्रवृत्तिनिमित्तमिति भावः । तदुक्तमन्यत्र, 'गुणैस्ततः प्रसविता वरणीयो गुणोन्नतेः' इति ।

**आनन्दः**— भर्गशब्दार्थत्वे निमित्तमाह **भरणेति** । तथा च बिभर्ति गच्छतीति भर्गः । एवं भृ गम् इत्यस्मादौणादिके डप्रत्यये ङित्त्वाट्टिलोपे सति गुणे भर्ग इति सिद्ध्यतीति भावः । ननु न गायत्र्या भगवत्परत्वं सूर्यपरसवितृशब्दसद्भावादित्यत आह **उपलक्षणमिति** । कुतो नेत्यत आह **तथात्व** इति । ननूभयोरप्यस्तु तदर्थत्वमित्यत आह **ध्येय इति** ।

**वा०चं०— भरणेति** । डुभृञ्भरणे गम्लृ गतौ आभ्यामसुन्प्रत्ययो ङिच्च । उणादयो बहुलमित्युक्तत्वात् । ऋग्भाष्ये 'भारतिज्ञानरूपत्वादि'ति व्याख्यानेऽप्यन्यथाशेषपूरणं ऋग्भाष्यापेक्षया प्रकारान्तरेण व्याख्यानस्य व्याहृतीनां चेत्यादौ प्रस्तुतत्वात् तत्प्रायपाठेनात एव 'सु पूर्णत्वात्पुमान्नामे'ति ऋग्भाष्योक्तावपि स्वयं पूर्णत्वादिनेत्यादिशब्दं प्रयुज्यानेकार्थप्रतिपादकश्रुतिमेवोदाजहारेति द्रष्टव्यम् । अस्त्वित्यादेः पूर्ववत्सङ्गतिर्द्रष्टव्या । (स एव पुरुषसूक्तार्थ इति वक्तव्ये सोऽयं पुरुष इत्यपीत्युक्तमयुक्तमित्यतो नेदं व्याहृतीनां चेत्यादिरिव साक्षात्पुरुषसूक्तार्थत्वप्रतिपादकमपि तु गायत्र्यर्थत्वेन साधनीयतया बहिरेवाभिप्रेते पुरुषसूक्तार्थत्वे प्राप्तानुपपत्ति-परिहारकमित्यभिप्रेत्य तदभिप्रेतं वक्तुं शङ्कामुत्थापयति । अस्त्वित्यादिनेति पूर्ववद्गमनिका द्रष्टव्येत्यर्थः ।)

**वा०र०**— उक्तदोषपूरणसूचितव्याख्यानं ऋग्भाष्याननुमतमित्याशङ्कां ऋग्भाष्योक्तप्रकारापेक्षया अस्य प्रकारान्तरत्वान्न तदनुसरणमत्रेति परिहरन् प्रकारान्तरस्यात्राभिधानमित्यत्र साधकं दर्शयति **ऋग्भाष्य इति** । प्रायपाठेन शेषपूरणमिति संबन्धः । प्रकारान्तरतामाश्रित्य प्रवृत्तेर्मूलेऽभिप्रेतत्वे ज्ञापकमाह **अत एवेति** । सवितृशब्दस्यापि विरोधिनः सत्त्वान्न गायत्र्यर्थत्वोपपत्तिरित्यत आह **उपलक्षणं चैतदिति** मूलम् । **पूर्ववत्सङ्गतिरिति** । स एव गायत्र्यर्थ इति वक्तव्य इत्यादि पूर्वोक्तप्रकारेण स एव पुरुषसूक्तार्थ इति वक्तव्य इत्यादिरूपेण सङ्गतिरित्यर्थः ।





**कुण्डल०— जगत्प्रसवेति** । षूङ्प्राणिप्रसवे इत्यस्माद्धातोः ण्वुल्तृचाविति कर्तरि तृच्प्रत्यये आर्धधातुकस्येड्वलादेरिति इडागमे सार्वधातुकार्धधातुकयोरिति गुणे अवादेशे च सति निष्पन्नस्य सवितृशब्दस्य जगत्प्रसवहेतुत्वार्थकत्वादित्यर्थः। उक्तं चैतत् ऋग्भाष्ये 'गुणैस्ततः प्रसविता वरणीयो गुणोन्नतेरि'ति।

**गूढ०**— भर्गशब्दार्थत्वे निमित्तमाह **भरणेति** । तथाच बिभर्ति गच्छतीति भर्गः । एवं भृ गम् अस्मात् औणादिके डप्रत्यये डित्त्वाट्टिलोपे सति गुणे भर्ग इति सिद्ध्यतीति भावः। ननु न गायत्र्या भगवत्परत्वं, सूर्यपरसवितृशब्दसद्भावात् इत्यत आह **उपलक्षणमिति**। कुतो नेत्यत आह **तथात्व इति** । ननूभयोरप्यस्तु तदर्थत्वमित्यत आह **ध्येय इति** ।

**१५० सु०— अस्तु गायत्र्यर्थो नारायणः किमेतावताऽपि। गायत्र्यर्थत्वात्पुरुषसूक्तार्थोऽपि स एवेति सिद्ध्यति । वर्गत्रयात्मकस्य तस्य त्रिपदागायत्रीव्याख्यानत्वेन 'तद्वेदः पौरुषं सूक्तमि'त्याद्यागमसिद्धत्वात्। ननु पुरुषसूक्ते पुरुषस्य पशोर्हिरण्यगर्भस्य वा प्रतिपादनात्कथं नारायणः प्रतिपाद्यत इत्यत आह सोऽयमिति।**

**अनु०— सोऽयं पुरुष इत्यपि ॥**

**पूर्णत्वादिनेति शेषः। तथा च श्रुतिः 'स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतम्' इति। अन्यथोक्तयुक्तिविरोधः। वक्ष्यते चैतत्।**

**परि०**— शङ्कोत्तरमाह **गायत्र्यर्थत्वादिति** । **इत्याद्यागमेति** । 'तद्वेदः पौरुषं सूक्तं वेदाः पुरुषसूक्तगा' इति तन्त्रसारोक्तागमसिद्धत्वादित्यर्थः। 'स पूर्णत्वात्पुमान्नामे'ति ऋग्भाष्योक्तेराह **पूर्णत्वादिनेति**। पॄ पालनपूरणयोरित्यस्मात् 'पुरः कुषन्' इति कुषन्प्रत्यये 'उदोष्ठ्यपूर्वस्ये'त्युत्वम्। अत्र विवक्षितबहिरन्तर्व्याप्तत्वरूपपूर्णत्वाख्यनिमित्ते आदिपदोपात्तनिमित्तान्तरे च काण्वश्रुतिमाह **तथा चेति**। सर्वासु पूर्षु वर्तमान इत्यनुवादेन 'स वा अयं पुरुष' इति पुरुषशब्दवाच्यत्वविधानं पुरिशय इति तस्य व्याख्यानम्। आवरणमन्तर्व्याप्तिः। संवरणं बहिराच्छादनमिति व्याख्यातैषा श्रुतिरष्टमे गीताभाष्यव्याख्यायाम्। **उक्तेति**। आगमसिद्धव्याख्यानत्वरूपयुक्तिविरोध इत्यर्थः॥ **वक्ष्यते चैतदिति**। विष्णोः पुरुषसूक्तप्रतिपाद्यत्वं 'सूक्तेन पौरुषेणैनं यजन्त्यध्यात्मकोविदाः इति पैङ्गिश्रुतिश्चाह' इत्यानन्दमयनये। तथोपासनापादे 'विद्यैव तु निर्धारणात्' इत्यत्र 'नान्यः पन्था इति ह्युक्तं पुरुषज्ञानतः श्रुतौ' इत्यादौ च वक्ष्यत इत्यर्थः । उत्तरमाह **सर्ववेदार्थत्वमेवेति** ।





**यादु०— पुरुषस्य पशोरिति** । 'अबध्नन्पुरुषं पशुमि'त्युक्तत्वादिति भावः । 'स वा अयं पुरुष' इति वाक्यस्य सर्वासु पूर्षु वर्तमान इति स्वरूपानुवादेन पुरुष इति विधेयम् । तस्य व्याख्यानं पुरिशय इत्यादि । आवरणमन्तर्व्याप्तिः संवरणं बहिराच्छादनमिति गीताभाष्यटीकानुसारेणार्थो द्रष्टव्यः । **अन्यथोक्तयुक्तीति** । व्याख्यानव्याख्येयभावरूपयुक्तिविरोध इत्यर्थः । नन्वस्त्वेवं पुरुषशब्दस्य कथञ्चिद्यौगिकत्वम् । तथाऽपि न पुरुषसूक्तं तत्परम् । अत्र पुरुषशब्दस्य पशौ रूढत्वात् । रूढिबाधकस्य विष्णुपरताप्रापकस्याभावाच्च । विष्णुपरत्वे 'पुरुष एवेदं सर्वम्' इत्युक्तसर्वात्मकत्वायोगाच्च । न हि विष्णुः सर्वात्मकः । पशोस्तु देहयोगवशाद्भूतत्वादिकं युज्यते । एतद्बलात्पुरुषसूक्तस्य गायत्रीव्याख्यानत्वं तु कयाचिद्विवक्षया नेयमित्यत आह **वक्ष्यते चैतदिति** । 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधी'त्यादिनोपासनापादे विष्णौ विद्वद्रूढ्या निरवकाशलिङ्गादिना चोक्तबाधकपरिहारेण विष्णुपरत्वं वक्ष्यत इत्यर्थः ।

**आनन्दः—** पुरुषान्तरवदस्य प्रतिपादनं किमित्यत आह **पूर्णत्वादिनेति** । वसूयते वसूनामितिवत् **पूर्षु पुरिशय इति** । एनेन किञ्चन अनावृतं न किन्तु वृतमेव । वैनेन किञ्चन असंवृतं न किन्तु संवृतमेव । एवं चान्तर्बहिश्चेति श्रुत्यनुसारेणान्तर्बहिर्व्याप्तत्वोक्त्या पूर्णत्वमुक्तं भवति । **अन्यथोक्तयुक्तिविरोध इति** । पुरुषसूक्तस्य विष्णुपरत्वाभावे गायत्र्याः पुरुषसूक्तस्य चागमसिद्धव्याख्यानव्याख्येयभावरूपो युक्तिविरोध इत्यर्थः । **वक्ष्यते चैतदिति** । तृतीयाध्याये तृतीयपादे विद्यैव तु निर्धारणादित्यधिकरणे एवं पुरुषशब्दश्च, पुरुष एवेदं सर्वं, मुक्तामुक्तपरेशत्वं इत्याद्यनुव्याख्याने पुरुषसूक्तं विष्णुपरमेव न तु पशुहिरण्यगर्भपरमिति वक्ष्यतीति भावः ।

**कं०रा०— तद्वेद इति** । 'वेदमाता च गायत्री द्विगुणा द्वादशाक्षरात् । चतुर्विंशन्मूर्तयोऽस्याः कथिता वर्णदेवता' इति पूर्ववाक्यप्रकृतगायत्रीं तच्छब्देन परामृश्य सा गायत्री भिद्यते व्याख्यायतेऽनेनेति व्युत्पत्त्या तद्वेदशब्दो गायत्रीव्याख्यानात्मकत्वं पुरुषसूक्तस्य वक्तीति भावः । **नैनेन किञ्चनेति** । श्रुतौ एनेन परमात्मना किञ्चिदपि वस्त्वनावृतं न । एनेन किञ्चिदप्यसंवृतं नेति नारायणस्य सर्ववस्तुष्वन्तर्व्याप्तिबहिर्व्याप्ती उच्येते । **अन्यथेति** । पुरुषसूक्तस्य नारायणविषयत्वाभावे उदाहृतागमसिद्धनारायणप्रतिपादकगायत्रीव्याख्यानात्मकत्वरूपयुक्तिविरोधः । व्याख्यानस्य व्याख्येयसमानविषयत्वनियमादित्यर्थः ।

**श्रीनिधि०— पूर्णत्वादिना** निमित्तेन । पुरुषसूक्तगतपुरुष इतिपदेनापि सोऽयमेवोच्यते । यो गायत्र्यर्थो नारायणः स एव भर्गशब्दार्थ इत्यतः एवेत्यनुवृत्तेः । अपिशब्द एवार्थो वा । अत्र पक्षे न पुरुषपदेनान्वयः । पुरुषशब्दस्य नारायणपरत्वे प्रमाणमाह **तथाच इति** । सर्वासु पूर्षु वर्तमानः स वा अयं पूर्वोक्तः पुरुषः पुरुषशब्दवाच्य इति पुरुषशब्दवाच्यत्वं विधाय तत्र निमित्तमुच्यते **पुरिशय इति** । आवरणं अन्तराच्छादनम् । सर्वान्ततस्तस्य प्राप्तेः । संवरणं तु बहिराच्छादनमिति । **वक्ष्यते चैतत् इति** । 'सूक्तेन पौरुषेणैनं यजन्त्यध्यात्मकोविदा' इत्यादिनेति शेषः ।

**वा०चं०— पूर्णत्वादिनेति** । पॄ पालनपूरणयोरित्यतः 'पुरः कुषन्नि'ति कुषन्प्रत्ययः (पॄ उष इति स्थिते उदोष्ठ्यपूर्वस्य अङ्गावयवौष्ठ्यपूर्वो यर्ऋत् तदन्ताङ्गस्य उत्स्यात् । रपरत्वं पुरुषः) पुरिशय इति व्याख्याने तूपपदस्य





सप्तम्या अलुक् तस्य चेकारस्योकारो धातुशकारस्य षकारो निर्वचनत्वात् । अधिकरणे शेतेः अन्येष्वपि दृश्यत इति डः ॥ **उक्तयुक्तीति** । व्याख्यानव्याख्येयभावानुपपत्तिप्रसङ्गरूपोक्तयुक्तीत्यर्थः । ननु पुरुषशब्दस्य पशुविषयत्वे पशोर्देहयोगवशाद्भूतत्वादेरुपपत्त्या पुरुष एवेदमित्युक्तसर्वात्मकत्वस्याबाधकत्वेऽपि भगवत्पक्षे तस्य बाधकत्वात्तद्भेद इत्यागमस्यान्यथाव्याख्येयतया नोक्तयुक्तिविरोध इत्यत आह **वक्ष्यते चैतदिति** । 'मुक्तामुक्तपरेशत्वमिति तस्याह सा श्रुतिः' इत्याद्यनुव्याख्यान इति शेषः ।

**वा०र०— पुरः कुषन्निति** । विदिपुरोः कुषन्निति सूत्रपाठेऽपि प्रकृतोपयोगाभिप्रायाद्वा तथैव पाठान्तराद्वा गीताभाष्यटीकायां विदिपुरोरित्युक्तावपि ऋग्भाष्यटीकायां पुरःकुषन्नित्येवोक्तत्वात्तदनुसारेणोक्तिः । अत एव पृ पालनेति धातोः पुरः कुषन्निति कुषन्निति धातुवृत्तौ पुरुषशब्द उक्तः । कुषन्प्रत्यये कित्वाद्गुणनिषेधे उदोष्ठ्यपूर्वस्येति ॠत उत्वे रपरत्वे च पुरुष इति भवतीति भावः । पूर्णत्वादिनेत्यादिपदेन पुरिशयत्वादिनिमित्तान्तरस्याभिप्रेतत्वात् पुरिशय इत्येतद्व्याख्यानपक्षे पुरुषशब्दनिष्पत्तिं-गीताभाष्यटीकोक्तप्रकारेणाह **पुरिशय इतीति** । गिरिश इतिवत् शकारश्रवणप्रसङ्गं वारयितुमाह **धातुशकारस्येति** । श इत्येतद्रूपं साधयति । **अधिकरण इति** । एतत्प्रकरणे ऋग्भाष्यगीताभाष्यटीकाव्याख्यानानुसारेणाधिकं प्रमेयं बोध्यम् । **भूतत्वादेरिति** । भव्यत्वमादिपदार्थः । यद्युक्तबाधकान्न पुरुषसूक्तस्य गायत्र्यर्थता तर्हि तद्भेदः पौरुषमिति पुरुषसूक्तस्य गायत्रीव्याख्यानत्वप्रतिपादकप्रमाणविरोध इत्यत उक्तं **तद्भेद इत्यागमस्येति** । तस्माद्भेदो विषयादिकृतो यस्येत्येवंरूपेण व्याख्येयतयेत्यर्थः । **अनुव्याख्यान इति** । तृतीयाध्यायतृतीयपाद इति शेषः ।

**स०व्र०— तथा च श्रुतिरिति** । सर्वासु पूर्षु वर्तमान इति स्वरूपानुवादेन 'स वा अयं पुरुष' इति पुरुषशब्दवाच्यत्वं विधीयते । **पुरिशय इति** । तत्र निमित्तम् । निमित्तान्तरमाह **नैनेनेति** । आवरणमन्तर्व्याप्तिः । संवरणं बहिराच्छादनमिति श्रुत्यर्थः । **वक्ष्यते चैतदिति** । 'सूक्तेन पौरुषेणैनं यजन्त्यध्यात्मकोविदा' इत्यादिनेति शेषः ।

**कुण्डल०— तद्भेद इति** । "वेदमाता च गायत्री द्विगुणा द्वादशाक्षरात् । चतुर्विंशन्मूर्तयोऽस्याः कथिता वर्णदेवता" इति पूर्वत्र प्रकृतगायत्री तच्छब्देन परामृश्य सामगायत्री भिद्यते । व्याख्यायतेऽनेनेति व्युत्पत्त्या तद्भेदशब्दः गायत्रीव्याख्यानात्मकत्वं पुरुषसूक्तस्य वक्तीत्यर्थः । **पूर्णत्वादिनेति** । पूर्णत्वादिना निमित्तेन पुरुषशब्दवाच्य इत्यर्थः । **पुरिशय इति** । पूर्ववाक्यस्यैव व्याख्यानरूपम् । **नैनेनेति** । एनेन प्रकृतेन परात्मना किञ्चन किञ्चिदपि वस्तु अनावृतमनाच्छादितं न सर्वमपि वस्तु परमात्मनावृतमेवेत्यर्थः । अनेन भगवतो बहिर्व्याप्तिरुक्ता भवति । एतेन परमात्मना किञ्चन किञ्चिदपि असंवृतं अन्तर्व्याप्तिरहितं न, सर्वमपि तेनान्तर्व्याप्तमेवेत्यर्थः । **अन्यथेति** । पुरुषसूक्तस्य विष्णुपरत्वाभावे पुरुषसूक्तस्य नारायणपरगायत्रीव्याख्यानात्मकत्वस्यागमसिद्धस्य अयोगेन व्याख्यानव्याख्येययोरेकार्थत्वनियम इति उक्तयुक्तिविरोध इत्यर्थः । ननु पुरुषशब्दस्य योगेन विष्णुपरत्वेऽपि रूढ्यान्यपरत्वस्यापि संभवात्पुरुषसूक्तस्य न विष्णुपरत्वाध्यवसायः संभवति । गायत्रीव्याख्यानात्मकत्वं तु कथञ्चिन्नेयमित्यत आह **वक्ष्यते चैतदिति** । उपासनापादे 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधी'त्यादिना विष्णौ विद्वद्रूढ्या निरवकाशलिङ्गादिना च बाधकोद्धारपुरःसरं पुरुषसूक्तस्य विष्णुपरत्वं वक्ष्यत इत्यर्थः ।





**विठ्ठ०**— पूर्णत्वादिनेत्यादिशब्दवाच्यशरीरावस्थानादिग्रहणम्। स वा अयमिति श्रुतेरयमर्थः। स वा अयं भगवान् पुरुष उच्यते कुतः सर्वासु पूर्षु अधिकरणसप्तमीबलात् विद्यमानत्वादिति लक्ष्यते। एतदेव पुरुषशब्दनिर्वचनं अक्षरारूढं करोति **पुरिशय इति**। पुरीति जात्येकवचनम्। पॄ पालनपूरणयोरित्यस्माद्धातोः पुरुषशब्दो निष्पन्नः। अन्तर्बहिः सर्वत्र पूर्णत्वात् पुरुषः। सर्वपूर्णत्वमुपपादयति **नैनेनेति**। आवरणमन्तर्व्याप्तिः संवरणं बहिराच्छादनम्। **अन्यथेति**। पुरुषसूक्तस्य नारायणाप्रतिपादकत्वे तदर्थकगायत्र्यर्थकत्वानुपपत्तिः। तथात्वे गायत्र्याः व्याहृत्यर्थतानुपपत्तिरिति अनेनोक्तप्रायत्वादुक्तयुक्तीत्युक्तम्। ननु पुरुषशब्दस्य भगवत्परत्वे पुरुष एवेदं सर्वं इत्युक्तसर्वात्मकत्वायोगः। पुरुषपशुपरत्वादौ पश्वादेर्नानादेहयोगवशात् भूतत्वादिकं युज्यते अतो बाधकसद्भावान्नोक्तम्। युक्तिविरोध इत्यत आह **वक्ष्यते चैतदिति**। उपासनापादे— "पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्। उतामृतत्वस्येशानो यदन्नेनातिरोहति॥" **मुक्तामुक्तपरेशत्वमिति**। पुरुषशब्दस्य भगवत्परत्वमुक्तबाधकपरिहारेण वक्ष्यते इत्यर्थः।

**गूढ०**— पुरुषान्तरवदस्य प्रतिपादनं किमित्यत आह **पूर्णत्वादिनेति**। वसूयते वसूनामितिवत्। **पूर्षु पुरिशय इति**। एनेन किञ्चन अनावृतं न किन्तु वृतमेव। एनेन किञ्चन असंवृतं न किन्तु संवृतमेव। एवं चान्तर्बहिश्चेति श्रुत्यनुसारेणान्तर्बहिर्व्याप्तत्वोक्त्या पूर्णत्वमुक्तं भवति। **अन्यथोक्तयुक्तिविरोध इति**। पुरुषसूक्तस्य विष्णुपरत्वाभावे गायत्र्याः पुरुषसूक्तस्य चागमसिद्धव्याख्यानव्याख्येयभावरूपो युक्तिविरोध इत्यर्थः। **वक्ष्यते चैतदिति**। तृतीयाध्याये तृतीयपादे विद्यैव तु निर्धारणादित्यधिकरणे एवं पुरुषशब्दश्च, पुरुष एवेदं सर्वं, मुक्तामुक्तपरेशत्वमित्याद्यनुव्याख्याने पुरुषसूक्तं विष्णुपरमेव न तु पशुहिरण्यगर्भपरमिति वक्ष्यतीत्यर्थः।

**१५१ सु०— सिद्धे च पुरुषसूक्तार्थत्वे विष्णोः किं स्यात्। सर्ववेदार्थत्वमेव सिद्धम्। 'वेदाः पुरुषसूक्तगा' इत्यागमेन सर्ववेदानां पुरुषसूक्तार्थतयाऽवगतत्वादित्याह स एवेति।**

## अनु०— स एव सर्ववेदार्थो

**एवशब्दः कार्यादिव्यावृत्त्यर्थः। 'सर्वे वेदा यत्पदमामनन्ति' इत्यादिश्रुतिसिद्धमपि भगवतः सर्ववेदार्थत्वं न्यायेनोपपादयितुमयं प्रयत्नः सूत्रकारस्य।**

**परि०**— कार्यादीत्यादिपदेन प्रकृतिदेवतादिपरिग्रहः। **न्यायेनेति**। "भगवान्सर्ववेदार्थः तद्व्याख्येयपुरुषसूक्तप्रतिपाद्यत्वात् सामान्यव्याप्त्या संमतवत्। भगवान्पुरुषसूक्तार्थः। तद्व्याख्येयगायत्र्यर्थत्वात्। भगवान् गायत्र्यर्थः। तद्व्याख्येयव्याहृत्यर्थत्वात्। भगवान् व्याहृत्यर्थः। तद्व्याख्येयप्रणवार्थत्वात्। न चासिद्धिः। सर्वत्र व्याख्यानव्याख्येयभावस्यागमसिद्धत्वात्। ॐकारवाच्यत्वादौ 'तस्योपव्याख्यानम्। तद्ब्रह्म (ओमिति ब्रह्म)' इत्यादिश्रुतेः। न चाप्रयोजकत्वम्। सर्वत्र विपक्षे





व्याख्यानव्याख्येयभावव्याघातस्योक्तत्वात्'' इति प्रबलानुमानरूपन्यायेनेत्यर्थः ॥ **अयं प्रयत्नः** ॐकारोच्चारणरूपप्रयत्नः । **इत्यादिश्रुत्येति** । छन्दोगश्रुत्येत्यर्थः ।

**वं०प०— किं स्यादिति** । न हि पुरुषसूक्तमेव वेद इति भावः ।

**आनन्दः— ** ननु सर्वे वेदा इत्यादि श्रुत्यादिनैव सर्ववेदार्थत्वस्य सिद्धत्वाद्व्यर्थोऽयं सूत्रकारस्य यत्न इत्यत आह **सर्वे इति** ।

**कं०रा०— वेदा इति** । व्याख्यानव्याख्येयभावेन पुरुषसूक्तं गच्छन्तीति पुरुषसूक्तगा इत्यनेन सर्ववेदानां पुरुषसूक्तव्याख्यानत्वोक्त्या तदर्थताया अवगतत्वादिति भावः ।

**वा०चं०—** स एव सर्ववेदार्थ इत्यस्य पूर्ववन्न बाधकपरिहारात्मकत्वं किन्तु साक्षाद्विवक्षितार्थप्रतिपादकत्वमेवेत्यभिप्रेत्य तदुपपादयति **सिद्धे चेति** । कार्यादीत्यादिशब्देनाखण्डब्रह्मपरिग्रहः । नन्वेवं प्रयत्नं कुर्वतः सूत्रकारस्य सर्ववेदार्थत्वे श्रुतिसिद्धताऽभिमता न वा । आद्ये लघूपायेन सिद्धत्यर्थे प्रयत्नगौरवमाश्रयतः सूत्रकारस्यानौचिती । (गुणवचनब्राह्मणादिभ्यः कर्मणि च । ष्यञ् । चाद्भावे जडस्य कर्म भावो वा जाड्यम् । मौढ्यं ब्राह्मण्यम् । ब्राह्मणादेराकृतिगणत्वात् ष्यञ् । हलस्तद्धितस्येति यलोपः । औचिती । याथाकामी । ष्यञः षो ङीषर्थः । उचितस्य कर्म भावो वा औचिती न औचिती अनौचिती ) । द्वितीये च 'इत्याहोपनिषत्परे'ति ऋग्भाष्यं 'घोषाः सर्वेऽपि वेदाश्च' इत्याद्यनुव्याख्यानं चायुक्तं स्यादित्यत आह **सर्व इति** । श्रुतिबोधितार्थनिर्णायकन्यायसूचकग्रन्थकर्तुः सूत्रकारस्य इति हेतुगर्भं विशेषणम् ।

**वा०र०— पूर्ववदिति** । स एव भर्गेत्यनेन गायत्र्यर्थत्वे सोऽयं पुरुष इत्यनेन च पुरुषसूक्तार्थत्वे बाधकपरिहारात्तदुभयवत्सर्ववेदार्थ इत्यनेन कस्मिंश्चिदर्थेऽभिप्रेते प्राप्तानुपपत्तिपरिहाराय सर्ववेदार्थत्वकथनमिति नेत्यर्थः । **साक्षादिति** । व्याहृतीनां एवार्थ इत्यस्येवेति शेषः । **अनौचितीति** । अनौचित्यमित्यर्थः । औचितीशब्दस्य प्रागुपपादनं कृतम् । **अयुक्तं स्यादिति** । श्रुतिसिद्धतायाः सूत्रकारानभिमतत्वे तदनभिमतार्थप्रतिपादनाय श्रुत्युदाहरणमयुक्तमिति भावः । **श्रुतिबोधितेति** । अत्र सूत्रकारस्येति हेतुगर्भविशेषणमिति भावेन प्रतिज्ञायां कथमस्य हेतुसूचकत्वमित्यतस्तदुपपादनाय श्रुतिबोधितार्थेत्यादिकं सूत्रकारस्येति पदार्थकथनम् । अत्र निर्णायकन्यायेति पाठः । मूलकोशे तथा लिखनाय प्रवृत्तेन निर्णेत्यत्र पङ्क्तिसमाप्तौ द्वितीयपंक्त्यारम्भे यकारमात्रलिखनानन्तरं यकन्येत्यन्तस्य पूर्वपंक्त्यन्ते लिखितत्वं मत्वा सूचकेत्यादि लिखितम् । लेखकेन तु यकारोपरि ककारमात्रं पूरितमिति ज्ञेयम् । तथाचोक्तविधग्रन्थकर्तृत्वात् न्यायेनोपपादनं नानौचित्यापादकमिति भावः ।

**कुण्डल०— पुरुषसूक्तगा इति** । व्याख्यानव्याख्येयभावेन पुरुषसूक्तं गच्छन्तीति पुरुषसूक्तगा इत्यर्थः । **कार्यादीति** । स एव सर्ववेदार्थ इत्यत्रत्य एवशब्दः नारायण एव सर्ववेदार्थः न पुनः प्राभाकरादिरीत्या **कार्यादिरिति** । कार्यादिव्यावृत्त्यर्थ इत्यर्थः ।





**चषकः— न्यायेनेति** । ईश्वरः सकलवेदप्रतिपाद्यस्तद्व्याकर्तव्यपुरुषसूक्तप्रतिपाद्यत्वादिति फलीभूतानुमाने सामान्यव्याप्तिमूलकेऽसिद्धिशङ्कानिरसनौपयिके तत्पक्षकदर्शितहेतुसाध्यकतद्व्याकर्तव्यगायत्र्यर्थत्वलिङ्गकतादृशव्याप्तिमूलकानुमानेऽपि तच्छङ्काव्युदसनहेतुभूततद्धर्मिकोक्तहेतुसाध्यकतद्व्याख्येयव्याहृत्यर्थत्वहेतुकतादृशानुमानेऽपि तादृशशङ्कापहस्तकतद्धर्मिकोक्तसाध्यकतद्विगीर्यमाणप्रणवप्रतिपाद्यत्वलिङ्गकव्याकर्तव्याकृतिभावावगमकागमनिरस्तासिद्धिशङ्कानुमानेनेत्यर्थः ।

**गूढ०**— ननु सर्वे वेदा इति श्रुत्यादिनैव सर्ववेदार्थत्वस्य सिद्धत्वात् व्यर्थोऽयं सूत्रकारस्य यत्न इत्यत आह **सर्वे इति** ।

**१५२ सु०— स्यादेतत् । 'ईश्वरः सर्ववेदार्थस्तद्व्याख्येयोङ्कारार्थत्वात् । यो यद्व्याख्येयार्थः स तदर्थो यथा संप्रतिपन्न' इति वा 'सर्वो वेद ईश्वरपरस्तत्परोङ्कारव्याख्यानत्वादि'ति वा साक्षादेवानुमानं किं न व्याख्यायते । 'तद्यथा सर्वाणि पर्णानि शंकुना सन्तृण्णान्येवमोङ्कारेणैव सर्वा वाक् सन्तृण्णा' इत्यादिश्रुत्या हेत्वर्थसमर्थनं भविष्यति, किमनेन परम्पराव्याख्यानेन । सत्यम् । तथाऽपि वाक्यान्तरबलेन न सर्वा वागोङ्कारव्याख्यानं साक्षात्, किं नामोक्तप्रकारेण परम्परयैवेति ज्ञापयितुमित्थं व्याख्यानमित्यदोषः ।**

**बिन्दुः— तद्यथा सर्वाणि पर्णानीति** । छन्दोगोपनिषदि श्रूयते—''प्रजापतिर्लोकानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयी विद्या संप्रास्रवत् तामभ्यतपत्तस्या अभितप्ताया एतान्यक्षराणि संप्रास्रवन्त भूर्भुवः स्वरिति तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ओङ्कारः संप्रास्रवत्तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येवमोङ्कारेण सर्वा वाक् सन्तृण्णोङ्कार एवेदꣳसर्वमि''ति । अत्र च प्रजापतिना सर्ववेदार्थविचारे क्रियमाणे तावदर्थप्रतिपादिकाः व्याहृतयो लब्धास्तदर्थप्रतिपादकश्चोङ्कारो लब्ध इति प्रतीयते । तप आलोचन इति धातोः अभ्यतपदिति रूपम् । शङ्कुना शलाकादिरूपेण सर्वाणि पर्णानि सन्तृण्णानि छिन्नानि ओतप्रोतानीति यावत् । यथा पर्णमात्रेऽन्तश्शङ्कोरवयवाः सर्वतः प्रविष्टा एवमोङ्कारार्थः सर्वाक्षरेषु प्रविष्ट इति तात्पर्यार्थः । **सत्यं तथापीति** । उक्तप्रनाडीपरम्परया व्याख्यानव्याख्येयभावज्ञानस्य मोक्षहेतुत्वादिति भावः ।

**परि०— वाक्यान्तरेति** । 'प्रणावार्था व्याहृतय' इत्याद्युदाहृतवाक्यान्तरबलेनेत्यर्थः । एतेन ॐकारो जिज्ञासागुणभूतब्रह्मविशेषणम् । कृन्मेजन्त इत्यव्ययात् षष्ठ्यन्तस्याप्योमित्येव रूपमिति सूचितम् ।

**यादु०**— **सन्तृण्णानि** सम्बद्धानि।

**आनन्दः**— ननु भगवत ओङ्कारार्थत्वेन व्याहृत्यर्थत्वं तस्माच्च गायत्र्यर्थत्वं ततश्च पुरुषसूक्तार्थत्वं ततश्च सर्ववेदार्थत्वमित्येवं परम्पराश्रयणं साक्षादेवानुमानसंभवेऽयुक्तमिति शङ्कते **स्यादेतदिति**। नन्वत्र हेत्वसिद्धिरित्यत आह **तद्यथेति**। **वाक्यान्तरबलेनेति**। 'प्रणवार्था व्याहृतयः। तद्वेदः पौरुषं सूक्तं वेदाः पुरुषसूक्तगा' इत्युदाहृत-वाक्यान्तरबलेनेत्यर्थः। नन्वयं विधीयत इत्येतद्भाष्यं ब्रह्मजिज्ञासेतिसूत्रस्थपदव्याख्यानरूपत्वाभावात्।

**कं०रा०**— ननु तद्व्याख्येयोङ्कारार्थत्वात्तत्परोङ्कारव्याख्यानत्वादिति हेतुद्वयमसिद्धम्। सर्ववेदानामोङ्कारस्य च व्याख्यानव्याख्येयभावे मानाभावादित्यत आह **तद्यथेति**। सर्वाणि पर्णानि यथा शंकुना संबद्धान्येवमोङ्कारेण सर्वा वाक् संबद्धेत्यर्थप्रतिपादिकयाऽनया श्रुत्या सर्ववाचामोङ्कारस्य च संबन्धान्तराभावेन व्याख्यानव्याख्येयभावरूप-संबन्धसिद्धेर्हेतुद्वयासिद्धिर्नेत्यर्थः। वाक्यान्तरबलेन प्रणवार्था व्याहृतय इत्याद्युदाहृतवाक्यान्तरबलेन।

**श्रीनिधि०**— ईश्वरः सर्ववेदार्थ इति प्रमेयपक्षकमनुमानम्, सर्वो वेद ईश्वरपर इति प्रमाणपक्षकमिति भेदः। .... संबन्धेति यावत्।

**वा०चं०**— एवं सूत्रकारीयामनौचिर्ती परिहृत्योङ्कारार्थत्वेन साक्षात्सर्ववेदार्थत्वानुमानसंभवेऽपि परम्परा-श्रयणेन प्रयत्नगौरवरूपभाष्यकारीयानौचिर्ती परिहर्तुं शङ्कते **स्यादेतदिति**।

**वा०र०**— **संभवेऽपि परम्पराश्रयणेनेति**। ओङ्कारार्थत्वेन साक्षात्सर्ववेदार्थत्वानुमानासंभव एव हि परम्पराश्रयणमर्थवदिति भावः। संभवेऽपि यत्परम्पराश्रयणं तेनेति योज्यम्। **वाक्यान्तरेति** मूलम्। 'प्रणवार्था व्याहृतयं' इत्यादि प्रागुदाहृतवाक्यान्तरेत्यर्थः।

**कुण्डल०**— ननूक्तं हेतुद्वयमसिद्धमित्यतः श्रुत्या द्रढयति **तद्यथेति**। **सन्तृण्णानि** संबद्धानि। **सन्तृण्णा** संबद्धा। **वाक्यान्तरेति**। 'प्रणवार्था व्याहृतय' इत्यादिवाक्यान्तरबलेनेत्यर्थः। **उक्तप्रकारेणेति**। पुरुषसूक्तगायत्री-व्याहृतिद्वारेणेत्यर्थः।

**विट्ठ०**— सर्ववेदस्योङ्कारार्थत्वरूपहेतुरसिद्ध इत्यत आह **तद्यथेति**। **सन्तृण्णानि** प्रोतानि। वेदस्योङ्का-रार्थत्वं न साक्षात् किन्तु परम्परयैवातो न साक्षादनुमानममुख्यमित्याशयेनाह **सत्यमिति**।

**चषकः**— **सन्तृण्णानि** संबद्धानि। **अदोष इति**। उक्तदिशा साक्षादेवानुमानेऽसिद्धिप्रसङ्गेन युक्तं पारम्पर्याश्रयणमिति भावः।

**गूढ०**— ननु भगवत ओङ्कारार्थत्वेन व्याहृत्यर्थत्वं तस्माच्च गायत्र्यर्थत्वं ततश्च पुरुषसूक्तार्थत्वं ततश्च सर्ववेदार्थत्वमित्येवं परम्पराश्रयणं साक्षादेवानुमानसंभवेऽयुक्तमिति शङ्कते **स्यादेतदिति**। नन्वत्र हेत्वसिद्धिरित्यत आह **तद्यथेति**। **वाक्यान्तरबलेनेति**। 'प्रणवार्था व्याहृतयः। तद्वेदः पौरुषं सूक्तं वेदाः पुरुषसूक्तगा' इत्युदाहृत-वाक्यान्तरबलेनेत्यर्थः। नन्वयं विधीयत इत्येतद्भाष्यं ब्रह्मजिज्ञासेतिसूत्रस्थपदव्याख्यानरूपत्वाभावात्।





**१५३ सु०— ननु चेश्वरे प्रमाणं पृष्टवत ओङ्कारब्रह्मशब्दावेव कस्मान्नोक्तौ किं वेदानुमानेन । न च पदस्याप्रमाणतेति वाच्यम् । यौगिकपदप्रामाण्यस्य उक्तत्वात् । मैवम् । मीमांसानुग्राह्यप्रमाणस्य पृष्टत्वात् । न चोङ्कारादिमात्रं तथा विवक्षितम् । किं नाम समस्तो वेद एवेति ।**

**परि०—** अत एव वेदस्येश्वरविषयता कुत इत्यतोऽप्योङ्कारो ब्रह्मणि प्रयुक्त इति पूर्वमुक्त्वा इयता प्रबन्धेन तद्विवरणं कृतम् । **वेदानुमानेनेति** । ब्रह्मणि प्रमाणतया वेदानुमानेन किमित्यर्थः । **आकाङ्क्षिताध्याहारमिति** । कर्तव्यपदाध्याहारमित्यर्थः ॥ **निश्चिततयेति** । तादृशस्यापि विषयत्वं युक्तिवाक्याभासेत्यादिग्रन्थेनाग्रे व्यक्तीकरिष्याम इत्यर्थः । **शक्येति** । मीमांसया इति योज्यम् ।

**कं०रा०—** **किं वेदेति** । परम्परयोङ्कारव्याख्यानत्वेन वेदानामोङ्कारार्थभगवद्विषयत्वानुमानेन किमित्यर्थः ।

**श्रीनिधि०—** **वेदानुमानेनेति** । वेदार्थत्वानुमानेनेत्यर्थः । **समस्तो वेद एवेतीति** । ईश्वरस्य सर्ववेदार्थत्वे अनुमिते सर्वो वेद अनुग्राह्यं प्रमाणमित्यर्थात् सिद्ध्यतीति भावः ।

**वा०चं०—** एवं सर्ववेदानुमानमङ्गीकुर्वतोद्भावितामनौचिर्ती परिहृत्य तदनङ्गीकुर्वताऽभिप्रायमजानानेनोद्भावितां तां परिहर्तुं शङ्कते **ननु चेति** ।

**वा०र०—** सर्ववेदानुमानमङ्गीकृत्य साक्षात्तदनुमानं वक्तव्यमित्याक्षेपकारिणा किं वेदानुमानेनेत्याक्षेपकरणे पूर्वविरोध इत्यतः पूर्वोत्तरवादिभेदान्न विरोध इत्याह **एवं सर्ववेदेति** । **तथा विवक्षितमिति** मूले तथेत्यस्य मीमांसानुग्राह्यप्रमाणत्वेनेत्यर्थः ।

**स०ब्र०—** **वेदानुमानेनेति** । वेदानां भगवत्परत्वानुमानेनेत्यर्थः ।

**कुण्डल०—** **वेदानुमानेनेति** । वेदस्येश्वरविषयत्वानुमानेनेत्यर्थः । **समस्तो वेद एवेति** । तथा चेश्वरः प्रमितो नेति पक्षेऽनुग्राह्यप्रमाणाभावात् मीमांसा नारम्भणीयेति चोद्यं निरस्तम् ।

**विठ्ठ०—** **वेदानुमानेन** वेदानामीश्वरपरत्वानुमानेनेत्यर्थः । **पदस्य** ओमादिपदस्येत्यर्थः । **वेद एवेत्यतः**-परम् अतो वेदानुमानं युक्तमिति ग्राह्यम् ।

**१५४ सु०— किमतो यद्येवमीश्वरः सर्ववेदार्थ इति चेत्। विषयसंबन्धसंभवाज्जिज्ञासायाः कर्तव्यता शास्त्रस्य चारम्भणीयत्वं सिद्धमित्याशयवान् साकाङ्क्षस्य वाक्याभासस्याप्रतिपादकत्वात् आकाङ्क्षिताध्याहारं सूचयन् सूत्रवाक्यार्थमाह जिज्ञास्य इति ॥**

**अनु०— जिज्ञास्योऽयं विधीयते ॥**

**अयम् इति उक्तविधया जीवजडात्मकात्प्रपञ्चात् अत्यन्तविविक्तत्वेन निश्चिततया विषयभूतः सर्ववेदार्थतया शक्यप्रतिपादनश्चेत्यर्थः ।**

**बिन्दुः— आकाङ्क्षिताध्याहारं सूचयन्निति ।** जिज्ञास्योऽयं विधीयत इत्युक्त्या एतत्कर्मिका जिज्ञासा विधेयेति समानसंवित्संवेद्यतया लभ्यते तथाच सूत्रे कर्तव्येति पदाध्याहारः कर्तव्य इति सूचितं भवतीति भावः।

**यादु०— निश्चिततयेति ।** जीवाभिन्नत्वे ह्यहमिति स्वप्रकाशत्वेन निश्चिततया विषयत्वं न स्यादिति भावः । **सर्ववेदार्थतयेति** । सर्ववेदविज्ञेयार्थतयेत्यर्थः । **शक्यप्रतिपादनः** शक्यजिज्ञासः । ततश्च प्रमितो नेति पक्षेऽनुग्राह्यप्रमाणाभावः न च बुद्धावनारूढं शक्यं जिज्ञासितुमिति यद्दूषणद्वयमुक्तं तन्नेति भावः।

**आनन्दः—** किञ्चास्तु सर्ववेदार्थत्वं ततोऽपि प्रकृते किमायातम् । अयमिति सर्वनामप्रयोगोऽपि न युक्तः। स हि प्रत्यक्षवस्तुनि प्रयुज्यते जिज्ञास्यस्य चाप्रत्यक्षत्वादित्यत आह **किमत इति** । वाक्याभासस्यापि यथाकथञ्चिदर्थप्रतिपादकत्वादयुक्तमेतदित्यत उक्तं **साकाङ्क्षस्येति** । तथाच साकाङ्क्षत्वं वाक्याभासस्याप्रतिपादकत्वहेतुरिति भावः । **अयमितीति** । तथा च बुद्धिसन्निहितत्वेनायमिति निर्देशोपपत्तिः ।

**कं०रा०— साकाङ्क्षस्य** आकाङ्क्षाशामकपदरहितस्य।

**श्रीनिधि०— किमत इति** । यद्येवमीश्वरस्सर्ववेदार्थः किमत इति चेदिति योज्यम् । **उक्तविधया** ओतत्ववाचीत्याद्युक्तविधया । जीवजडात्मकात् प्रपञ्चात् अत्यन्तविविक्तत्वेन प्रमितः विषयभूत इत्यत्र हेतुः **निश्चिततयेति** । वादिविप्रतिपत्त्यादिनेति भावः । उक्तविधयेत्येतत् शक्यप्रतिपादनश्चेदित्यत्रापि संबध्यते ।

**वा०चं०—** अयमितीदमा पूर्वप्रकृतं परामृश्य जिज्ञास्य इति तस्य जिज्ञासाविषयत्वोक्त्या लब्धमाशयं कथयन्नेव विधीयत इत्यंशस्याध्याहारसूचकत्वमध्याहारनियामककथनपूर्वकं कथयन्नेवोत्तरवाक्यमवतारयति **किमत इति** । उक्ताशयलाभप्रकारं दर्शयितुमयमित्यस्यार्थमाह **अयमितीति** ।





**वा०र०— विषयसंबन्धेति** मूलम् । वक्ष्यमाणरीत्येति शेषः । **साकाङ्क्षस्य वाक्याभासत्वादिति** मूलम् । निराकाङ्क्षपदान्येव वाक्यमिति तृतीये वक्ष्यमाणत्वादिति भावः ।

**कुण्डल०— साकाङ्क्षस्येति** । आकाङ्क्षापूरकपदरहितस्येत्यर्थः । **आकाङ्क्षिताध्याहारमिति** । आकाङ्क्षानुसारेण योग्यमध्याहारमित्यर्थः ।

**चषकः— सर्ववेदार्थतयेति** । सर्ववेदजनितज्ञानविषयतयेत्यर्थः । **शक्यप्रतिपादनः** शक्यजिज्ञासः । तथाच ईश्वरः प्रमितो नेति कल्पेऽनुग्राह्यप्रमाणवैधुर्यबुद्ध्यनारूढतानियन्त्रितजिज्ञास्यताऽनुपपत्तिरूपोक्तदूषणद्वयाऽनवकाशः ।

**गूढ०—** किञ्चास्तु सर्ववेदार्थत्वं ततोऽपि प्रकृते किमायातम् । अयमिति सर्वनामप्रयोगो न युक्तः । स हि प्रत्यक्षे वस्तुनि प्रयुज्यते । जिज्ञास्यस्य चाप्रत्यक्षत्वादित्यत आह **किमत इत्यादि** । वाक्याभासस्यापि यथाकथञ्चिदर्थप्रतिपादकत्वादयुक्तमेतदित्यत उक्तं **साकाङ्क्षस्येति** । तथाच साकाङ्क्षत्वं वाक्याभासस्याप्रतिपादकत्वे हेतुरिति भावः । **अयमितीति** । तथाच बुद्धिसन्निहितत्वेनायमिति निर्देशोपपत्तिः ।

**१५५ सु०— ननु वेदानामीश्वरप्रतिपत्तिजनकत्वाद् भवतु तद्विषयत्वम् । शास्त्रं तु तेषामीश्वरप्रतिपादनानुसरणोपायन्यायविषयं कथमीश्वरपरमुच्यते । मैवम् । वेदानामीश्वरमवबोधयतामितिकर्तव्यता हि मीमांसा । तेनोपकारकत्वाद् भवति तद्विषया । तद्वारा शास्त्रमपि । न हि बीजस्यांकुरं जनयतः सहकारिणो जलादेरंकुरो न कार्यम् ।**

**परि०—** सूत्रसन्दर्भरूपशास्त्रस्येश्वरविषयकत्वमाक्षिप्य समाधत्ते **नन्वित्यादिना** । **न्यायविषयं** न्यायप्रतिपादकम् । **इतिकर्तव्यता हि मीमांसेति** । सहकारिरूपं हि न्यायानुसन्धानमित्यर्थः ।

**यादु०— न्यायविषयमिति** । न्यायग्रथनात्मकत्वादिति भावः ।

**आनन्दः—** ननु न शास्त्रस्येश्वरविषयत्वम् । न्यायोपपादकत्वेन न्यायविषयत्वादिति शङ्कते **नन्विति** । **वेदानामिति** । तथा चोपकार्योपकारकयोरेकविषयत्वान्मीमांसाया उपकारकत्वेनेश्वरविषयत्वात् तत्प्रतिपादकशास्त्रस्यापि तद्वारा ईश्वरविषयत्वमिति भावः । ननूपकार्योपकारकयोरेकविषयत्वं क्वोपलब्धमित्यत आह **न हीति** ।

**वा०चं०—** अत्र जिज्ञासाया विषयसंबन्धसिद्धौ शास्त्रस्यापि तत्संबन्धसिद्धिरित्याशयेन जिज्ञास्योऽयमिति ब्रुवता भाष्यकारेण शास्त्रस्य न स्वातन्त्र्येण ब्रह्मरूपविषयसंबन्धोऽपि तु जिज्ञासाद्वारैवेत्यर्थसूचनात्तन्निवर्त्यां शङ्कां दर्शयति **नन्विति** । नन्वनेन सूत्रेणैव शास्त्रस्यापि ब्रह्मविषयकत्वमेवोक्तमित्यतोऽप्रतिभासात्तदुक्तमप्ययुक्त-





मित्यभिप्रेत्याह **शास्त्रं त्विति** । तुशब्दो विचारशास्त्रत्वरूपविशेषद्योतकः । करणेतिकर्तव्यतयोरेकप्रयोजनकत्वनियमादर्थकर्मरूपप्रयाजाद्यङ्गानां संस्कारकर्मरूपप्रोक्षणाद्यङ्गानां च षड्यागजन्यप्रधानापूर्वजन्यपरमापूर्वद्वारेण स्वर्गसिद्धिरूपैकप्रयोजनत्ववच्छब्दशक्तितात्पर्यविचारस्य संस्कारकर्मवच्छब्दप्रमाणस्वरूपोपकारितयाऽर्थस्वरूपब्रह्मविचारस्य च प्रयाजादिवद्ब्रह्मावगमफलोपकारितया कारणीभूतवेदादिनैकप्रयोजनकत्वादवगम्यमानब्रह्मविषयकत्वमुभयविधविचारस्य युज्यत इति तद्वारा शास्त्रस्यापि तद्विषयत्वोपपत्तेर्नानुपपत्तिरित्याशयेन समाधत्ते **मैवमिति** । उपकार्योपकारकयोरेकप्रयोजनकत्वं लोकसिद्धं चेत्याह **न हीति** ।

**वा०र०— तन्निवर्त्याशङ्कामिति** । परमाख्यविद्येत्येतद्व्याख्यानावसरे वेदादीतिकर्तव्यतारूपस्यास्य पृथक्प्रामाण्यानभ्युपगमादित्युक्तमुपपादयितुमिति पूरणीयम् । **अनेन सूत्रेणैवेति** । **अनेनोच्यत इति** मूले अनेन सूत्रेणेति शेषः पूरणीय इति सूचितम् । तथाच सूत्रकारोक्तिं मूलीकृत्य शङ्क्येमिति सूचयता शास्त्रस्येश्वरविषयत्वसामान्याक्षेपो न भवति । किन्तु सूत्रकारोक्तमपि तस्य तद्विषयत्वं न युक्तमिति विशिष्टाक्षेप इति प्रतिपादितं भवति । एतेनैव शास्त्रोपस्थितेरेवाभावात् नन्वनेनेति टीकास्थावतारायोग इति शङ्का चानवकाशहता । शास्त्रस्य सूत्रेणेश्वरविषयकत्वमुक्तमस्तीति तदङ्गीकार इति तु न युक्तमिति विशिष्टाक्षेपस्येह प्रवृत्तेः स्पष्टतया मध्ये सूत्रेणोक्तिशङ्काया अनवकाशत्वात् । आवश्यकत्वे वैतद्विशिष्टाक्षेपान्यथानुपपत्त्या मध्ये ज्ञातुं शक्यत्वाच्चेत्यवधेयम् । न्यायविषयमित्यनेन न्यायानामेव विषयताप्रतिभासोऽस्ति न तु ब्रह्मण इत्युक्तं, तदेतदाह **अप्रतिभासादिति** । **विचारशास्त्रत्वेति** । वेदादिशास्त्रासाम्यनिरासार्थमिति शेषः । **तेषामीश्वरेत्यादि** मूलम् । तेषामिति कर्तरि षष्ठी । तैर्वेदैः क्रियमाणे ईश्वरप्रतिपादने अनुसरणमुपायतया येषां न्यायानामिति विग्रहः । यद्वाऽन्यपरत्वेन प्रतीयमानानामीश्वरप्रतिपादनस्य यदनुसरणं तत्रोपाया ये न्याया इति योज्यम् । तद्विषयम् । तद्ग्रथनात्मकं वेदार्थनिर्णायकन्यायग्रथनात्मकमिति यावत् । तथाविधस्य चेश्वरप्रतिपत्तिहेतुत्वाभावात्प्रतिपत्तिद्वारैव विषयतानिर्वाह्यत्वादिति भावः । **करणेतिकर्तव्यतयोरिति** । इदमत्र अभिप्रेतम् । करणेतिकर्तव्यतयोरेकं प्रयोजनमिति हि नियमः । काष्ठैः पचतीत्यादावधिश्रयणफूत्कारादीतिकर्तव्यतायाः करणभूतकाष्ठादिप्रयोजनभूतपाकादिलक्षणप्रयोजनवत्त्वदर्शनात् । तथा च तद्बलेन ये आग्नेयोऽष्टाकपाल इत्याद्युक्ताः षड्यागास्ते दर्शपूर्णमासाभ्यामिति तृतीया श्रुतिसंयोगात् करणीभूताः तेषां च करणीभूतषड्यागानां प्रयाजादीनि प्रोक्षणादीनि च यान्यङ्गानि तेषामङ्गानां पृथक्फलाश्रवणात् क्वाचित्कतच्छ्रवणस्य चार्थवादत्वात् सर्वथा नैष्फल्ये च विधानानर्थक्यात्करणीभूताग्नेयादियागजन्यस्वर्गरूपैकप्रयोजनकत्वमिति कल्प्यते । कथं विरूपाणामङ्गानामेककार्यनिर्वाहकत्वमुपपाद्यमित्यत उक्तम् **अर्थकर्मरूपेत्यादि** । अयमर्थः । अङ्गानि द्विविधानि । अर्थकर्माणि संस्कारकर्माणि च । तत्र द्रव्यद्वारं विनावान्तरापूर्वद्वारा फलोपकारीणि आरादुपकारीणीत्युक्तानि प्रयाजादीनि अर्थकर्माणीत्युच्यन्ते । यानि च द्रव्यद्वारेण यागोपकारितया सन्निपत्योपकारिशब्दितानि प्रोक्षणादीनि तानि संस्कारकर्माणीत्युच्यन्ते । तदेवमुभयविधाङ्गानां षड्यागजन्यप्रधानापूर्वजन्मपरमापूर्वसिद्धिद्वारा स्वर्गार्थत्वम् । प्रधानयागेन प्रधानापूर्वे जननीये प्रोक्षणादेर्द्रव्यद्वारा यागस्वरूपोपकारितयोपयोगेन तद्वारा परमापूर्वेऽप्युपयोगात् । प्रयाजादिजन्यावान्तरापूर्वाणां प्रधानापूर्वेण परमापूर्वजनने उपयोगेन तद्वारा





प्रयाजादेरपि परमापूर्वे उपयोगात् । तथा चोभयविधाङ्गानां परमापूर्वद्वारेण स्वर्गसिद्धिरूपैकप्रयोजनकत्वमितीति । एवं करणेतिकर्तव्यतयोरेकप्रयोजनकत्वे दृष्टान्तमभिधाय तद्दृष्टान्तेन प्रकृतेऽपि तयोरेकप्रयोजनकत्वमुपपादयति **शब्दशक्तितात्पर्येति** । अनेनेदमुक्तं भवति । मीमांसा हि द्विविधा । प्रमाणमीमांसा प्रमेयमीमांसा चेति । तत्र निर्णीतशक्तितात्पर्यविशिष्टशब्दस्यैव करणत्वेन शक्तितात्पर्यनिर्णयस्य च तद्विचाराधीनत्वेन तद्विचाररूपाद्य-मीमांसायाः संस्कारकर्मप्रोक्षणादेर्यागस्वरूपनिष्पादकतया यागं प्रतीव प्रमाणस्वरूपोपकारकतया प्रमाणजन्य-ब्रह्मावगमाङ्गत्वम् । प्रमेयमीमांसायाश्च संभावनाविपरीतभावनानिवृत्तिद्वारेण ब्रह्मावगमरूपफलोपकारितया तादृश-प्रयाजाद्यर्थकर्माङ्गस्य प्रधानापूर्वोपकारकतया यागं प्रतीव प्रमाणजन्यब्रह्मावगमरूपफलोपकारकतया वेदादि-जन्यावगमाङ्गत्वम् । तथाच ब्रह्मावगमरूपैकप्रयोजनकत्वं वेदादिना द्विविधमीमांसाया अपि युक्तमिति । एतत्प्रमेयमूलस्य विवरणग्रन्थानुसारित्वात् । ननु करणेतिकर्तव्यतयोरित्यादिविवरणग्रन्थानुसारेणोपयोगात् स्वीकृतम् । **लोकसिद्धं चेति** । बीजस्याङ्कुरजननसामर्थ्यसंपादकस्यापि जलस्य तादृशबीजद्वारा अङ्कुरसाधन-त्वादिति भावः । अनेन न हीत्यादेः प्रकृते उपयोग उक्तो भवति ।

**स०व्र०**— ओङ्काराद्यखिलवेदस्येश्वरविषयकत्वात् शास्त्रस्य न्यायविषयकत्वात्कथमनेन शास्त्रस्य विषय-प्रतिपत्तिरिति शङ्कते **ननु वेदानामिति**।

**कुण्डल०**— **तद्वारेति**। विचाररूपमीमांसाद्वारेत्यर्थः।

**विठ्ठ०**— **तेनोपकारकत्वादिति**। ईश्वरावबोधकवेदेतिकर्तव्यत्वेन तदर्थावगमे उपकारकत्वात् तदर्थभूते-श्वरपरत्वं भवतीति मीमांसा तद्वारा मीमांसाशास्त्रमपीत्यर्थः।

**चषकः**— **न्यायविषयमिति** । न्यायावबोधकपदघटितत्वादिति भावः । **इतिकर्तव्यतेति** । व्यापार इत्यर्थः। **उपकारकत्वात्** प्रमाणाभासजनितविप्रतिपत्त्यादिप्रतिबन्धनिरासौपयिकत्वात्। **तद्विषया** ईश्वरविषया।

**गूढ०**— ननु न शास्त्रस्येश्वरविषयत्वं न्यायोपपादकत्वेन न्यायविषयत्वादिति शङ्कते **नन्विति**। **वेदाना-मिति** । तथाचोपकार्योपकारकयोरेकविषयत्वान्मीमांसाया उपकारकत्वेनेश्वरविषयत्वात्तत्प्रतिपादकशास्त्रस्यापि तद्वारेश्वरविषयत्वमिति भावः। ननूपकार्योपकारकयोरेकविषयत्वं क्वोपलब्धमत आह **न हीति** ।

**प्रदीपः**— ननु वेदानामितीश्वरस्योङ्काराद्यखिलवेदविषयत्वस्य न्यायविषयत्वात् कथमनेन शास्त्रस्य विषयप्रतिपत्तिः वेदेतिकर्तव्यताभूतमीमांसाद्वारा तदङ्गन्यायनिबन्धनमपि तद्विषयमित्याह **वेदानामिति** । **न हीति** । बीजस्याङ्कुरजननसामर्थ्यसंपादकस्यापि जलस्य तादृशबीजद्वारा अङ्कुरसाधनत्वादन्यथा जलस्य बीजानुत्पादकत्वान्मीमांसाया न्यायनिबन्धनाभावेऽनुत्थानमेवेति वैषम्यप्रसङ्गात् ।





**१५६ सु०— ननु मीमांसाऽपि संभावनादिविषया कथमीश्वरविषया भवति । मैवम् । द्विविधं खलु कर्म कारकं भवति । किञ्चिदव्यवधानेन व्यापारजन्यातिशययोगि, यथोद्यमन-निपतनव्यापारजन्योर्ध्वाधोदेशसंयोगविभागातिशयविशिष्टः कुठारः कर्तृव्यापारस्याव्यव-धानेन कर्म भवति । किञ्चिदुद्देश्यफलसंबन्धितया करणव्यापारव्यवधानेन, यथा द्वैधीभाव वान् वृक्षः । तत्र कर्तृव्यापारस्य करणव्यापारव्यवधानेन वृक्षकर्मतेव मीमांसाव्यापारस्यापि प्रमाणादिसंभावनाद्वारेण ईश्वरावबोध एवोद्देश्य इति भवति तत्कर्मता ।**

**बिन्दुः— संभावनादिविषयेति** । अणुत्वमहत्वादीनि भगवति कथं वेदेनापि सिद्ध्येयुः, यदि न्यायेन विचित्रसामर्थ्योपपादनद्वारा अयोग्यतानिश्चयो न शिथिलीक्रियेतेति प्रमाणसंभावना मीमांसा कार्येति भावः ।

**परि०— संभावनादीति** । प्रमाणतद्विषयगोचरासंभावनाविपरीतसंभावनानिरासेन एतदर्थ-प्रतिपादने इदं योग्यम् इदं चैतत्प्रमाणवेद्यमित्येवं योग्यत्वादिविषयिकेत्यर्थः । मीमांसायास्तर्कानुसन्धान-रूपत्वात्तर्कस्य संभावनाविषयकत्वादिति भावः । विवरिष्यते चैतद्भक्तिपादे सन्ध्ये सृष्टिरित्यधिकरणे 'स्वन्यायैस्साधनं कार्यं परन्यायैश्च दूषणम्' इत्येतदवतारिकायाम् । **करणव्यापारेति** । कुठारदारु-संयोगादिरूपेत्यर्थः ॥ **मीमांसेति** । कर्तृभूतेति योज्यम् ।

**यादु०— संभावनादिविषयेति** । प्रमाणविषयेऽसंभावनाशङ्काविच्छेदकत्वेन संभावितत्वं संपादयती-त्यर्थः । विषये प्रमाणप्रवृत्त्यनुज्ञापकत्वमादिशब्दार्थः ।

**वं०प०— संयोगविभागातिशयेति** । तद्रूपफलेत्यर्थः । **कर्तृव्यापारस्य** उद्यमननिपतनरूपस्य । **व्यवधानेन** कर्तृव्यापारस्य कर्म भवतीति वर्तते । **यथेति** । देवदत्तः कुठारेण दारु छिनत्तीत्यत्रोद्देश्यफलं द्वैधीभाव-स्तत्संबन्धी वृक्षः कुठाररूपकरणस्य यो व्यापारः कुठारदारुसंयोगस्तद्व्यवधानेन उद्यमननिपतनरूपकर्तृव्यापारस्य कर्म भवति ॥ एवमुद्देश्यं यत्फलमवबोधः । विषयतया तत्संबन्धीश्वरः । विचारापरपर्यायमीमांसारूपकर्तृव्यापारस्य । प्रमाणं प्रमाकरणभूतो वेदः । वेदेन करणात्मनेति वचनात् । तद्व्यापारोऽसंभावनाविपरीतभावनाशङ्कापरिहारेण संभावनादिः प्रमाणविषयाभ्यनुज्ञानं तद्द्वारा विषयः । मीमांसाया असंभावनाशङ्कानिरासे सति वेदादिप्रमाणेनेश्वरज्ञानं जायत इति यावदित्याह **तत्रेति** । **प्रमाणादिसंभावनाद्वारेण** करणव्यापारव्यवधानेन । **ईश्वरेति** । उद्देश्यफलसंबन्धित्वेनेश्वरः कर्मेत्यर्थः । **भवतीति** । मीमांसायास्तत्कर्मकता ईश्वरकर्मकता परम्परया भवतीत्यर्थः ।

**आनन्दः— संभावनादिविषयेति** । आदिशब्देन युक्तत्वपरिग्रहः । मीमांसा हि इदमेवं संभावितं इदमेवं युक्तमिति संभावनादिविषयेति भावः । न च संभावनादेर्मीमांसासाध्यत्वेन संभावनाद्वारा मीमांसायाः

संभावनाविषयेश्वरविषयकत्वं भविष्यतीति वाच्यम् । अत्र साक्षाद्विषयत्वस्यैव वक्तव्यत्वात् । अन्यथा तत्साध्यत्वेन तद्विषयविषयकत्वे स्वर्गसाधनताज्ञानसाध्यानुष्ठानविषयस्यापि साधनताज्ञानविषयत्वापत्तेरिति । परम्पराविषयत्व-माश्रित्य सिद्धान्तयति **द्विविधमिति** । यत्रोपकार्योपकारकभावः । तत्रैव तत्साध्यत्वेन तद्विषयविषयकत्वं साधनज्ञानस्य तु अनुष्ठानजनकत्वमेवेति न तत्रातिप्रसङ्ग इति भावः ।

**श्रीनिधि०— संभावनादिविषयेति** । संभावनेत्यतःपूर्वं प्रमाणानामिति शेषः । अलौकिकार्थे दृष्टेऽपि असंभावनाविपरीतसंभावनाशङ्कायां प्रसक्तायां मीमांसाप्रवृत्तौ असंभावनाविपरीतसंभावनाशङ्कानिरासद्वारा प्रतीतार्थे प्रमाणानां संभावनाबुद्धिर्भवति । अतः संभावनाविषया मीमांसा कथमीश्वरविषयेति भावः । संभावना नाम युक्तता । **अव्यवधानेनेति** । कर्तृव्यापारस्येति शेषः । **कर्म भवति** कुठारं उद्युङ्क्ते इत्यादाविति भावः । **करणव्यापारव्यव-धानेने**त्यतःपरं कर्तृव्यापारस्य कर्म भवतीति शेषः । **उद्देश्येति** सकलकर्मानुगतधर्मोक्तिः । **वृक्ष इति** । देवदत्तः कुठारेण वृक्षं छिनत्तीत्यादाविति भावः । व्यापारो नाम क्रियेति ज्ञेयम् । **मीमांसाव्यापारस्य** मीमांसाया व्यापारस्य । प्रमाणबलाबलादिनिर्णायकस्य । अत्र च करणस्य व्यापारद्वयं ज्ञातव्यम् । प्रमाणादिसंभावनेत्यत्रादिपदेन तात्पर्य-संभावना । **तत्कर्मता** । सः ईश्वरः कर्म यस्य मीमांसाव्यापारस्य तत्कर्मा । तस्य भावः । अथवा इति हेतोः तस्य ईश्वरस्य कर्मता । व्यापारं प्रतीति वा ।

**वा०चं०—** अत्र जिज्ञास्योऽयमिति जिज्ञासाया ब्रह्मरूपविषयसंबन्धोक्त्या सूचितं तत्रत्यानुपपत्तिपरिहारं वक्तुं जिज्ञासाया ब्रह्मविषयकत्वेऽनुपपत्तिं शङ्कते **नन्विति** । प्रमाणप्रमेयसंभावनाबुद्धिहेतुतया तद्विषयकोभयविध-विचारस्य ब्रह्मावगमजनकतया तद्विषयत्वेऽन्यविषयकव्यापारस्याप्यन्यविषयकतापत्तिरित्यर्थः । दृष्टत्वान्नेद-मनिष्टापादनमित्याशयेन समाधत्ते **द्विविधं हीति** । **कर्तृव्यापारस्येति** । उद्यमनिपतनलक्षणस्येत्यर्थः । **मीमांसा-व्यापारस्येति** । मीमांसारूपव्यापारस्य इत्यर्थः । प्रमाणादीत्यादिपदेन प्रमेयग्रहणम् ।

**वा०र०— प्रमाणेति** । अनेन संभावनेति संमुग्धं विवृतम् । विषयत्वोपपादनं **बुद्धिहेतुतयेति** । मूले **संभावनादीत्यादि**पदेन विपरीतभावनानिवृत्तिपरिग्रहः । **संभावनाद्वारेणे**त्युत्तरमूले आदिपदं ग्राह्यम् । **अन्यविषयक-व्यापारस्येति** । प्रमाणादिविषयकमीमांसारूपव्यापारस्य ब्रह्मविषयकत्वे किञ्चिद्विषयकस्य तदन्यविषयकत्व-प्राप्तेरिति भावः । **दृष्टत्वादिति** । अन्यविषयकस्य साक्षात्तदन्यविषयकत्वाभावेऽपि परम्परया तद्विषयकत्वं संभवत्येव तथा दर्शनादिति भावः । कर्तृव्यापारस्येतीति स्थलद्वयमपि तन्त्रेणोपात्तम् । **ईश्वरावबोध एवेति** मूलम् । तथा च अवगमहेतोरवगम्यविषयतानियमाद्ब्रह्मविषयकत्वमुपपन्नमिति भावः ।

**कुण्डल०— संभावनादीति** । प्रमाणविषये असंभवानानिरसनद्वारा संभावितत्वादिसंपादकेत्यर्थः । **तत्कर्मतेति** । ईश्वरकर्मतेत्यर्थः ।

**विठ्ठ०— संभावनाविषयेति** । वाक्यार्थे असंभावनाशङ्काविच्छेदद्वारा तत्सत्त्वसंभावनाविषयेत्यर्थः । **कुठारः** । **कर्तृव्यापारस्येति** । देवदत्तः कुठारमुद्यम्य पातयतीत्यत्र कुठारस्य कर्मत्वं कर्तृव्यापारस्याव्यवधानेन फलशालितयेति भावः । **वृक्षकर्मतेति** । देवदत्तो वृक्षं छिनत्तीत्यत्र वृक्षस्य कर्तृसमवेतक्रियाजन्यद्वैधीभावरूप-

फलशालित्वरूपकर्मत्वं कुठारव्यवधानेनेत्यर्थः । इदमुक्तं भवति— "युक्तमेवेश्वरस्य मीमांसाविषयत्वं परन्तु न साक्षात् किन्तु मीमांसारूपकर्तृव्यापारस्य यानि करणभूतानि प्रमाणादीनि तेषां यो व्यापारोऽर्थसंभावना तद्वारा ईश्वरविषयत्वं युज्यते । कर्तृव्यापारातिशययोगित्वं हि कर्मत्वम् । अतिशयश्चोद्देश्यफलम् । प्रकृते त्वीश्वरावबोध एव उद्देश्यं तद्योगित्वं ईश्वरस्य प्रमाणादिसंभावनाद्वारेणात्रापि अस्ति यथा देवदत्तव्यापारस्योद्यमननिपतनरूपस्य कर्मत्वं वृक्षस्योर्ध्वाधोदेशसंयोगरूपकुठारव्यापारव्यवधानेन द्वैधीभावलक्षणातिशययोगित्वात्" इति ।

**चषकः—** **संभावनादिविषयेति** । प्रमाणतद्विषयगोचरासंभावनाविपरीतभावनानिरासेन. एतदर्थप्रतिपादनेन संभावितत्वं संपादयतीत्यर्थः । प्रमाणप्रवृत्तिनिर्वाहकत्वमादिपदेनोपादेयम् । **कर्तृव्यापारस्य** उद्यमननिपतनलक्षणस्य । **उद्देश्यफलसंबन्धितया** अवयवविभागात्मकप्रवृत्त्युद्देश्यभूतद्वैधीभावरूपफलाश्रयतया । **मीमांसाव्यापारस्य** मीमांसारूपव्यापारस्य ।

**गूढ०—** **संभावनादिविषयेति** । आदिशब्देन युक्तत्वपरिग्रहः । मीमांसा हि इदमेवं संभावितं इदमेवं युक्तमिति संभावनादिविषयेति भावः । न च संभावनादेर्मीमांसासाध्यत्वेन संभावना द्वारा मीमांसायाः संभावनाविषयेश्वरविषयकत्वं भविष्यतीति वाच्यम् । अत्र साक्षाद्विषयत्वस्यैव वक्तव्यत्वात् । अन्यथा तत्साध्यत्वेन तद्विषयविषयकत्वे स्वर्गसाधनताज्ञानसाध्यानुष्ठानविषयस्यापि साधनताज्ञानविषयत्वापत्तेरिति । परम्पराविषयत्वमाश्रित्य सिद्धान्तयति **द्विविधमिति** । यत्रोपकार्योपकारकभावः तत्रैव तत्साध्यत्वेन तद्विषयविषयकत्वम् । साधनज्ञानस्य तु अनुष्ठानजन्यत्वमेवेति न तत्रातिप्रसङ्ग इति भावः ।

**प्रदीपः—** **नन्विति** । मीमांसाया ईश्वरविषयत्वे शास्त्रस्यापि तद्वारा तद्विषयत्वं स्यात् तदेव नास्तीति । **मैवमित्यादि** । वृक्षादीनां साक्षात्कर्तृव्यापारव्याप्तत्वाभावेऽपि साक्षात्कर्तृव्यापारव्याप्तकुठारादिव्यापारविषयत्वेन विषयविषयित्वात्कर्तृव्यापारोद्देश्यत्वाद्वा कर्तृव्यापारकर्मत्वमिवेश्वरस्यापि साक्षान्मीमांसाव्यापारविषयत्वाभावेऽपि आहत्य संभावनाविषयत्वेन विषयविषयित्वात् मीमांसोद्देश्यत्वाद्वा संभावनाविषयंमीमांसाविषयत्वं युक्तमिति । स्यादेतत् किञ्चिदुपकाराजनकत्वेऽङ्गत्वायोगान्मीमांसाया निर्णयाहेतुत्वं स्यादिति चेन्न । न च निर्णयानङ्गस्यापि प्रतिबन्धापनयनहेतुत्वमात्रेणेतिकर्तव्यतारूपत्वं मीमांसाया निर्णायकत्वं वेदस्य स्वतःप्रामाण्यं च स्यादिति प्रतिबन्धापगमनस्य निर्णयाङ्गत्वात्तद्धेतुभूतमीमांसाया अपि प्रणाड्या तथात्वात् ।

**१५७ सु०— स्यादेतदेवम् । यदि वेदेतिकर्तव्यताविचारः स्यात् । न चैवम् । विनाऽपि विचारेण शब्दोपलब्धिसमयग्रहणतत्स्मरणसहकृताच्छब्दादेवार्थावगमदर्शनात् । न च मन्तव्यं शक्तितात्पर्याज्ञानविपर्ययदोषाच्छब्दः संशयविपर्ययावुत्पादयति । तत्र दोषापनयनेन संशयादिव्युदासाय शक्तितात्पर्यविचारोऽङ्गं भवतीति । यतस्तत्रापि शब्दो विना विचारेण तत्त्वज्ञानस्येष्टे । किं नाम प्रतिबन्धमात्रं विचारेणापनीयते । न हीतिकर्तव्यतैवम् । तत्कथं वेदेतिकर्तव्यता जिज्ञासा । कथन्तरां चेश्वरविषया । कथन्तमां च शास्त्रस्य तद्विषयतेति ।**





**बिन्दुः— वेदेतिकर्तव्यताविचारः स्यादिति** । करणेन फले जननीये प्रतिबन्धकनिवर्तक-स्येतिकर्तव्यतात्वादर्शनात् । अन्यथा उत्तेजकस्य वा अन्यस्य (नेह प्रति) श्वैत्यसाक्षात्कारप्रतिबन्धकीभूतकामलादिदोषनिवर्तकत्वेन तस्य चक्षुःप्रति चेतिकर्तव्यतात्वं स्यादिति भावः । **शब्दः संशय-विपर्ययाविति** । रत्नकोशकारमते संशयरूपानुमितिवत् शब्देनापि संशये बाधकाभावान्न संशयः प्रत्यक्षप्रमाणमिति भावः । नन्वेवमपि कोटिद्वयभासकप्रतिपक्षस्थल एव तन्मते संशयरूपानुमितिः नत्वन्यत्र, तथाच विप्रतिपत्तिवाक्यस्थले कोटिद्वयोपस्थापकशब्दसंभवादस्तु तत्रैव तादृशशाब्दबोधः । तत्कथमत्र वेदवाक्यात्संशय इति चेत् । न । प्राभाकरमतरीत्या शाब्दे बोधे पदार्थोपस्थितित्वेन हेतुत्वं लाघवान्न तु पदजन्यपदार्थोपस्थितित्वेन गौरवात् । अत एव तन्मते इषेत्वा, संयज्ञपतिराशिषेत्यादौ छिनत्ति गच्छतामित्याद्यध्याहारो नेति सिद्धान्तः । एवमेव प्रकृतेऽपि विचारप्रवृत्तपुरुषबुद्धिविषयनानापदार्थ-कोटिकः संशय इति मन्यते । यद्वा उत्तरभावी मानस स इति दिक् ।

**परि०— शक्तितात्पर्याज्ञानेति** । युक्त्याद्याभासनिमित्तेति योज्यम् । **तत्रापि इति** । दोषोप-निपातस्थलेऽपि स्वगतशक्त्यैवेष्ट इत्यर्थः । अन्यथा प्रामाण्यस्य परतस्त्वापत्तेरिति भावः ॥ **न हीति** । किन्तु कार्योत्पादिकैवेति योज्यम् ।

**यादु०— न हीतिकर्तव्यतैवमिति** । स्वातन्त्र्येण सहकारिण एवेतिकर्तव्यतारूपत्वात् इति भावः ।

**वं०प०— विचारो** मीमांसा । **विचारोऽङ्गमिति** । तथा च मीमांसारूपो विचारो वेदेतिकर्तव्यता भवत्येवेत्यर्थः । तर्हि विचारस्य वैयर्थ्यमेव स्यादित्याशङ्क्य परिहरति **किं नामेत्यादिना** ।

**आनन्दः**— ननु विचारे सति वेदार्थबोधः । अन्यथा तु नेत्यन्वयव्यतिरेकाभ्यां विचारस्येति-कर्तव्यतात्वमित्यत आह **विनापीति** । **शक्तीति** । शक्त्यज्ञानविपर्यययोः तात्पर्याज्ञानविपर्ययाविति प्रत्येकं संबन्धः । एवमुत्तरत्रापि । **यत इति** । तथा च प्रतिबन्धनिरासस्यैव कारणत्वात्तदुपयुक्त विचारस्य सुतरां नेतिकर्तव्यतात्वमिति भावः । **न हीति** । प्रतिबन्धनिरासातिरिक्तोपकारिण्येवेतिकर्तव्यता प्रकृते तु न तथेति भावः ।

**कं०रा०— न हीति** । इतिकर्तव्यता एवं प्रतिबन्धनिरासोपक्षीणा न हि भवतीत्यर्थः ।

**श्रीनिधि०— तत्रापीति** । शक्तितात्पर्याज्ञानविपर्ययादिदोषा यत्र वाक्ये तत्रापीत्यर्थः ।

**वा०चं०—** नन्वागमान्वयव्यतिरेकयोरितिकर्तव्यताप्रमाणतया प्रयाजादीनामागमात् षड्यागाङ्गत्वेऽपि मृज्जलादीनां कर्तृव्यापारस्य चान्वयव्यतिरेकाभ्यामङ्कुरद्वैधीभावाङ्गत्वेऽपि विचारस्य ब्रह्मावगमाङ्गत्वे आगमा-





भावादन्वयव्यतिरेकयोश्च व्यतिरेकव्यभिचारेणासंभवेन प्रमाणाभावान्नाङ्गत्वसंभव इति शङ्कते **स्यादेतदेवमिति** । पूर्वोक्तमुपकारकत्वं विवृण्वन्नेव व्यतिरेकव्यभिचारपरिहारं शङ्कते **न चेति** । एवं विचारस्याङ्गत्वं वदतः किं दोषसहितशब्दस्यान्यथाज्ञानजनकत्वं विचारस्य च दोषनिरासेन प्रमितिजनकत्वमभिमतमुत सम्यग्ज्ञानजनकत्वं शब्दस्वभावो दोषाच्च अन्यथाज्ञाने समुत्पन्ने विचारेण च निवृत्ते शब्दादेव निर्णय इत्यभिमतम् । नाद्यः । शब्दस्य विचारसापेक्षस्य प्रमितिहेतुत्वे प्रामाण्यस्य स्वतस्त्वभङ्ग इत्याशयेनाह **यतस्तत्रापीति** । तर्हि द्वितीयो ऽङ्गीकार्यः किमित्याशङ्कते **किं नामेति** । अङ्गीकारेण समाधत्ते **प्रतिबन्धेति** । ननु तावतैव विचारस्याङ्गत्व-सिद्धिरित्यतोऽवगमप्रतिबन्धकनिवर्तकस्य नावगमहेतुत्वं येनावगमहेतोरवगम्यमानविषयकता स्यात् । लोके प्रतिबन्धकनिवर्तकस्य हेतुत्वादर्शनादित्याह **न हीति** ।

**वा०र०—** **स्यादेतदेवमिति** मूले विचारस्य वेदेतिकर्तव्यतायामन्वयव्यतिरेकाख्यप्रमाणदूषणाय व्यतिरेकव्यभिचारप्रतिपादनं क्रियते । तदसङ्गतम् । प्रमाणान्तरेणापि वेदेतिकर्तव्यतासिद्धिसंभवेनान्वयव्यतिरेक-मात्रप्रमाणकत्वं सिद्धवत्कृत्य तदसंभवप्रतिपादनायोगादित्यतः इतिकर्तव्यतात्वे प्रमाणसंख्यां सोदाहरणं प्रदर्शयन् प्रमाणान्तरस्यात्रासंभवः स्पष्टत्वान्मूलकृतोपेक्षित इति च सूचयन् स्वयं तं दर्शयन्नेवान्वयव्यतिरेकप्रमाण-कत्वपक्षमात्रनिरासकतया स्यादेतदिति ग्रन्थप्रवृत्तिरिति दर्शयति **नन्वागमान्वयव्यतिरेकयोरिति** । आगमश्चान्वय-व्यतिरेकौ च तयोरेवेत्यर्थः । (अत्र अन्वयेन सहितो व्यतिरेकोऽन्वयव्यतिरेक इति मध्यमपदलोपिसमासं विधाय आगमश्चान्वयव्यतिरेकश्च तयोरित्यर्थो ज्ञातव्यः । अन्यथा बहुवचनापत्तेरिति ध्येयम् ।) अन्वयव्यतिरेकयोरिति-कर्तव्यतात्वगमकत्वोदाहरणद्वयं **मृज्जलादीनामित्यादि** । **कर्तृव्यापारस्य** उद्यमननिपतनरूपव्यापारस्य । **अंकुर-द्वैधीभावेति** । मृज्जलादीनामङ्कुराङ्गत्वेऽपि कर्तृव्यापारस्य वृक्षद्वैधीभावाङ्गत्वेऽपीति योज्यम् । ननु विचारेण विना कथमवगमसंभवः । शब्दस्य करणतया यत्किञ्चित्सहकार्यपेक्षत्वावश्यंभावादित्यतोऽस्त्यत्रापि विचारातिरिक्त-सहकार्यन्तरमित्युक्त**शब्दोपलब्धीत्यादि** मूलम् । **शक्तितात्पर्यज्ञानेति** मूलम् । शक्तितात्पर्ययोरज्ञानं विपर्ययश्च । तल्लक्षणदोषात् । शक्तितात्पर्याज्ञानतन्मिथ्याज्ञानाख्यदोषादिति यावत् । अज्ञानादेः स्वाभाविकत्वात्तन्निरासायोग इत्यत उक्तं **तत्र दोषेति** मूलम् । शक्तितात्पर्यविचारजनितविज्ञानस्य तदज्ञानादिविरोधित्वात् तन्निवृत्तौ तन्मूलसंशयविपर्यययोरपि निरासो युक्त इति भावः । इतीत्यस्य न च वक्तव्यमिति पूर्वेणान्वयः । **दोषनिरासेन प्रमितीति** । विचारस्य चेति पाठे शब्दसहकारितयेति शेषः । शब्दस्य विचारसापेक्षस्येत्येतत्पक्षदूषणावसरे वक्ष्यमाणत्वात् । शब्दस्वभाव इत्युत्तरविकल्पानुसारेण प्रतीतेश्च । **विचारसहितस्येति** पाठस्तु सुगम एवेति ज्ञेयम् । **विना विचारेणेति** मूले कुतो नेष्ट इति प्राप्तामाशङ्कामाशयकथनेन निवर्तयन्नवतारयति **शब्दस्य विचारेति** । **तावतैवेति** । प्रतिबन्धनिरासकत्वमात्रेणेत्यर्थः । **अङ्गत्वेति** । प्रमितिजनकत्वेत्यर्थः । तथाच ब्रह्मावगमजनकतया ब्रह्मविषयकत्वं प्रागुक्तं स्यादेवेति भावः । **न हीतीति** । स्वातन्त्र्येण सहकारिण एवेतिकर्तव्यतात्वादिति भावः । हेतुत्वाभावेऽपि निर्णयप्रयोजकत्वादिति हेतुत्वस्यानन्यथासिद्धनियतपूर्वभावित्वरूपत्वेऽपि प्रयोजकत्वस्य कारण-तत्कारणसाधारणतत्प्रागभावव्याप्यप्रागभावप्रतियोगित्वरूपत्वेन तदङ्गीकारोपपत्तेरित्याशयः ।





**कुण्डल०— न हीति**। इतिकर्तव्यताप्रतिबन्धनिरोधोपक्षीणा न हि भवति। किन्तु स्वतन्त्रसहकारिण्येवेति भावः।

**विठ्ठ०— न हीतिकर्तव्यतैवमिति**। इतिकर्तव्यताप्रतिबन्धकनिरासमात्रोपक्षीणा न भवति, अनन्यथासिद्धतया स्वातन्त्र्येण सहकारिण एवेतिकर्तव्यतारूपत्वादिति भावः।

**चषकः— समयग्रहणेति**। शक्तिलक्षणासङ्केतान्यतमग्रहणेत्यर्थः। **शक्तीति**। दर्शितान्यतमेत्यर्थः। **न हीतिकर्तव्यतैवमिति**। दाहादिप्रतिबन्धकमण्यादिनिवर्तकस्य दाहादिहेतुत्वानुपगमेन प्रकृतावगतिविरोधिनिरसनमात्रौपयिकजिज्ञासायास्तादृशावगतित्वावच्छिन्ननिरूपितहेतुताकत्वविरहेण व्यापाराभिमतचक्षुःसन्निकर्षादितुल्यकक्ष्यापन्नताविरहादिति भावः।

**गूढ०—** ननु विचारे सति वेदादर्थबोधः अन्यथा नेत्यन्वयव्यतिरेकाभ्यां विचारस्येतिकर्तव्यतात्वमित्यत आह **विनापीति**। **शक्तीति**। शक्त्यज्ञानविपर्यययोः तात्पर्याज्ञानविपर्ययाविति प्रत्येकं संबन्धः। एवमुत्तरत्रापि। **यत इति**। तथाच प्रतिबन्धनिरासस्यैवाकारणत्वादुपयुक्तविचारस्य सुतरां नेतिकर्तव्यतात्वमिति भावः। **न हीति**। प्रतिबन्धनिरासातिरिक्तोपकारिण्येवेतिकर्तव्यता प्रकृते तु न तथेति भावः।

**१९८ सु०— अत्रोच्यते। सत्यमेवम्। तथापि प्रतिबन्धनिवृत्तौ सत्यामेव निर्णय इति प्रतिबन्धकनिरासहेतोरपि विचारस्योपचारेण निर्णयहेतुत्वादुपपन्नमीश्वरविषयत्वम्।**

**बिन्दुः— सत्यमिति**। यद्यपि समिद्यागादौ करणोपकारसंपादकतया यागेतिकर्तव्यतात्वरूपप्रवृत्तिनिमित्तसत्त्वान्मुख्यवृत्त्या इतिकर्तव्यताशब्दवाच्यत्वमिव प्रकृते तन्न संभवति, तथापि फलव्यतिरेकप्रयोजकव्यतिरेकप्रतियोगित्वरूपगुणयोगान्माणवकेऽग्न्यादिशब्दवद्गौण्या वृत्त्या मीमांसायामितिकर्तव्यताशब्दः, ब्रह्मविषयता तु अस्यास्तादृशपरम्परासंबन्धेन सुघटैवेति संमतः।

**श्रीनिधि०— उपचारेणेति**। यत्र प्रतिबन्धकसद्भावः तत्र विचारस्यापेक्षितत्वेऽपि सर्वत्र प्रतिबन्धकनियमाभावेन सर्वत्र विचारस्यानपेक्षितत्वात्। साक्षाद्धेतुत्वाभावेन च एवमुक्तम्। **उपपन्नमिति**। ननूक्तमत्र इतिकर्तव्यताभावे कथन्तरां ईश्वरविषयतेति चेन्न। कर्तृव्यापारेणोद्देश्यफलसंबन्धित्वलक्षणव्यापारकर्मत्वस्यैवमप्यहानेरित्येवमभिप्रायात्।

**वा०चं०—** प्रतिबन्धकनिरासहेतोर्निर्णयहेतुत्वाभावेऽपि निर्णयप्रयोजकत्वान्निर्णयप्रयोजकत्वरूपस्यैव निर्णयोपकारकत्वस्य प्रकृते विवक्षितत्वात्तावतैव निर्णेयविषयत्वं युक्तमित्याशयेन समाधत्ते **अत्रोच्यत इति**।

**वा०र०— तावतैवेत्यादि**। निर्णेयविषयकत्वे निर्णयप्रयोजकत्वातिरिक्ततद्धेतुत्वस्यावश्यकत्वाभावादिति भावः।





**विठ्ठ०— उपचारेणेति**। विचारजनितप्रतिबन्धनिवृत्तेरपीश्वरप्रतिपत्तिरेव फलमित्युपचारेणेत्यर्थः।

**चषकः— उपचारेणेति**। तथाच गौणोपकारकताया एव प्रकृतेऽभिप्रेततया तावतैव निर्णयविषयविषयकता सङ्गच्छत इत्याशयः।

**१५९ सु०— एतेनैतदपि निरस्तम्। ईश्वरस्य वेदप्रमाणकत्वे तत एव निश्चितत्वात् किं मीमांसयेति। युक्तिवाक्याभासजनितविप्रतिपत्तिप्रतिबन्धस्य उक्तत्वात्॥ तथा हि। वेदप्रामाण्यमेव अनङ्गीकुर्वाणाः केचिदीश्वर एव नास्तीति प्रतिपन्नाः। अपरे तु तदङ्गीकृत्यापि तद्वाचिनां पदानां जीवादिविषयतां व्याकुर्वन्तस्तदभावमास्थिताः। अन्ये तु पुनरस्तीश्वरः किन्तु परमार्थतो निर्गुण एवेति सङ्गिरन्ते। एके तु सगुणोऽपि न जगतः कारणमपि तूदासीन एवेत्यातिष्ठन्ते। केचित्कारणत्वेऽप्युपादानमित्यभ्युपयन्ति। निमित्तमात्रत्वेऽपि कतिपयगुणं गुणेभ्यो भिन्नमन्ये मन्यन्ते। इतरे तु भिन्नाभिन्नमुपगतवन्तः। केचिद्विग्रहवन्तम् इत्येवमाद्यास्वनेकासु विप्रतिपत्तिषु सतीषु तत्त्वज्ञानकरणादपि वेदात्तदनुत्पत्तौ तदपनोदनद्वारेण वेदेतिकर्तव्यतारूपा जिज्ञासा कर्तव्येति।**

**बिन्दुः—तथा हीति**। तथा च अविरोधाध्यायस्य अनया प्रणाड्या ब्रह्ममीमांसात्वमिति भावः।

**परि०— युक्तिवाक्याभासेति**। युक्त्याभासवाक्याभासेत्यर्थः।

**वं०प०— विग्रहवन्तं** प्राकृतदेहवन्तम्।

**आनन्दः**— एतदपीत्यस्यार्थमाह **ईश्वरस्येति**। एतेनेत्यस्यार्थमाह **युक्तीति**। विप्रतिपत्तीरेव दर्शयति **तथा हीति**। **केचित्**। बौद्धचार्वाकादयः। **अपरे** मीमांसकाः। **अन्ये** मायावादिनः। **एके** सेश्वरसांख्याः। **केचित्** मायिनः। **अन्ये** तार्किकाः। **इतरे** मायिनामेकदेशिनः।

**कं०रा०— कतिपयगुणं** ज्ञानेच्छाप्रयत्नसंख्यापरिमाणपृथक्त्वसंयोगविभागगुणकम्। **विग्रहवन्तं** जडदेहवन्तम्।

**श्रीनिधि०— विप्रतिपत्तिप्रतिबन्धस्येति**। विप्रतिपत्तीनां प्रतिबन्धः मीमांसया तस्य फलत्वात्। विप्रतिपत्तिभिः प्रतिबन्धः वेदवाक्यस्य स्वार्थनिश्चायकत्वप्रतिबन्धः। तथा च तन्निरासार्थं मीमांसेति वार्थः। **अपरे त्विति**। प्राभाकरा इत्यर्थः। **विग्रहवन्तमिति**। रामानुजीयाः।

**वा०चं०**— अत्र निर्णयप्रतिबन्धकनिरासहेतुत्वरूपं निर्णयप्रयोजकत्वमेव तद्धेतुत्वमभिप्रेत्य जिज्ञासाया ब्रह्मविषयकत्वं वदता जिज्ञास्योऽयमिति वाक्येन वेदेन स्वार्थनिर्णये प्रतिबन्धस्य जिज्ञासया तन्निवृत्तेश्च सूचनात्प्रमितत्वपक्षोक्तदोषः परिहृतो भवतीत्यभिप्रेत्य तत्पक्षदोषश्च परिहरिष्यत इत्युक्तं वक्तुमाह **एतेनेति**। युक्तिवाक्यानीवाभासन्त इत्याभासपदमुभयेन संबध्यते। एतासु विप्रतिपत्तिष्वतिविरोधित्वक्रमेण निर्देशोऽयम्। वेदप्रामाण्यमेवेत्यनेन प्रमाणाभावरूपयुक्त्याभाससूचनपूर्वं 'न विलक्षणत्वा'धिकरणव्यावर्त्यस्यापरे त्वित्यनेन वेदस्येश्वरे प्रमाणत्वाभावेन प्रमाणाभावरूपतत्सूचनपूर्वकमोङ्कारादिव्यावर्त्यस्यान्य इत्यनेन केवलो निर्गुणश्चेति वाक्याभासबलात्परमेश्वरगुणेषु वेदस्य तत्त्वावेदकप्रमाणत्वाभावसूचनपूर्वकमोङ्कारादिसमन्वयाध्यायव्यावर्त्यस्यैक इत्यनेन वेदस्य सगुणत्वे तत्त्वावेदकप्रमाणत्वेऽपि कूटस्थत्वबोधकवाक्याभासबलाज्जगत्कारणत्वे प्रमाणत्वाभाव-सूचनपूर्वमन्यत्राभावाच्चेत्याद्यधिकरणव्यावर्त्यस्य केचिदित्यनेन वेदस्य जगत्कारणत्वे तादृशप्रमाणत्वेऽपि 'येनाश्रुतं' 'बहु स्याम्' इत्यादिवाक्याभासबलान्निमित्तमात्रत्वे प्रमाणत्वाभाव इति 'अधिकं तु भेदनिर्देशात्' इत्यादिसूत्र-व्यावर्त्यस्य निमित्तमात्रत्वेऽपीत्यनेन वेदस्य निमित्तमात्रत्वे प्रमाणत्वेऽपि गुणकतिपयत्वादियुक्त्याभासाश्रयणेन अनन्तगुणत्वे गुणाभेदे च प्रमाणत्वाभाव इति 'उभयव्यपदेशात्' इत्याद्यधिकरणव्यावर्त्यस्येतरे त्वित्यादिना च तद्व्यावर्त्यस्यैव पुनः केचिदित्यनेनारूपवदित्याद्यधिकरणव्यावर्त्यस्य विप्रतिपत्तिविशेषस्य कथनमिति द्रष्टव्यम्।

**वा०र०**— **अत्र निर्णयेत्यत्र** अत्रेत्यस्य अनुव्याख्यान इत्यर्थः। **प्रयोजकत्वमेव तद्धेतुत्वमिति**। प्रयोजकत्वरूपमेवेत्यर्थः। नत्वनन्यथासिद्धत्वगर्भमिति भावः। **प्रतिबन्धस्येति**। सूचनादिति संबन्धः। **इत्युक्तं वक्तुमिति**। इत्यनेन दोषपरिहारस्योत्तरत्र कर्तव्यत्वमुक्तम्। तमिदानीं कर्तुं तद्व्यावर्त्यां शङ्कां स्मारयतीत्यर्थः। युक्तिवाक्याभासजनितेत्यत्र युक्तिश्च वाक्याभासश्चेति प्रतीतिनिरासं कुर्वन् युक्त्याभासवाक्याभासलाभायाह **युक्तिवाक्यानीवेति**। युक्तिश्च वाक्यानि च युक्तिवाक्यानि। तानीवाभासन्तेति युक्तिवाक्याभासाः युक्त्याभासा वाक्याभासाश्चेत्युभयसंबन्धलाभादिति भावः। तत्पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वेत्यादिशङ्कानिरासकतया स्वरीत्या विशेषविप्रतिपत्तिनिरूपणावसरे शङ्करेण युक्तिवाक्यतदाभासाश्रया इति व्यवहारात्तद्व्याख्यावसरे युक्तियुक्त्या-भासवाक्यवाक्याभासेति भामत्यां योजनेऽपि तत्रैव वचनयुक्त्याभासेति पाठ इति परिमलोक्तेर्मूले युक्त्याद्याभासमात्रमुक्तमिति ज्ञातव्यम्। एतासु विप्रतिपत्तिष्वित्यतः प्राक् तामेव विप्रतिपत्तिं दर्शयति **तथा हीत्यादिनेति**। पूरणीयमिति सूचयन् निमित्तमाह **एतास्विति**। वेदप्रामाण्यमेवानङ्गीकुर्वाणा इत्यादि-विप्रतिपत्तिष्वित्यर्थः। **तेनैतास्विति** प्रकृतपरामर्शोपपत्तिः। यद्वा बुद्धिसन्निहितपरामर्शादितासु वक्ष्यमाणास्वयं बुद्धिनिर्देशः। एतत्क्रमेण सङ्कीर्तनमिति यावत्। अतिविरोधित्वक्रमेण कृतमित्यर्थः। एतासु विप्रतिपत्तिषु का विप्रतिपत्तिः किंमूला किंनिवर्त्येति तत्तत्स्वरूपजिज्ञासायामाह **वेदप्रामाण्यमेवेत्यादिना**। अत्रैतासु विप्रतिपत्तिष्विति वर्तते। तत्र वेदेति पाठश्चेत्तत्रेत्यस्य विप्रतिपत्तिष्वित्यर्थः। आद्यमतद्वये ईश्वरा भावस्य साम्यं वेदप्रामाण्याभावतद्भावाभ्यां तु विशेष इति प्रतिपादनेऽपि ईश्वरविषये तत्प्रामाण्यानङ्गीकारः पूर्वमत इवोत्तरमतेऽपि समान इति कथमयं विशेष इत्यतो वेदप्रामाण्यस्यैवाभावान्नेश्वरे किञ्चित्प्रमाणमित्यस्मात्पक्षात् प्रमाणमपि वेदो नेश्वरे प्रमाणं किन्तु जीव इति पक्षे भेदावगमस्य स्पष्टत्वादित्याद्याशयेन पक्षभेदप्रदर्शनं **प्रमाणाभावरूपेत्यादि**। अत





एवोभयत्रैकैव पूर्वपक्षयुक्तिः कथिता । अत्र प्रकरणे तत्तत्सूत्रीयानुव्याख्यानमूलानुसारेण शङ्कायास्तद्व्यावृत्तेश्च स्पष्टत्वात्तत एव तदुभयं ज्ञातव्यम् । **ओङ्कारादीति** । ओङ्कारमारभ्य समस्तसमन्वयाध्यायेत्यर्थः । **सगुणत्व इति** । तद्विषय इत्यर्थः । **कूटस्थत्वेति** । ईश्वरस्येति शेषः । **तादृशेति** । तत्त्वावेदकेत्यर्थः । **निमित्तमात्रत्व** इत्यादौ ब्रह्मण इति शेषः । **व्यावर्त्यस्येति** पूर्वशब्दस्य विप्रतिपत्तिविशेषस्य कथनमित्यनेन संबन्धः । तेन धर्मजिज्ञासेत्यस्य सङ्ग्रहः इति वा ।

**कुण्डल०**— एतच्छब्दितहेतुमाह **युक्तीति** । **कतिपयेति** । ज्ञानेच्छाप्रयत्नसंख्यापरिमाणपृथक्त्वसंयोग-विभागगुणमित्यर्थः । **विग्रहवन्तं** जडशरीरवन्तमित्यर्थः ।

**गूढ०**— एतदपीत्यस्यार्थमाह **ईश्वरस्येति** । एतेनेत्यस्यार्थमाह **युक्तीति** । विप्रतिपत्तीरेव दर्शयति **तथा हीति** । **केचिद्** बौद्धचार्वाकादयः । **अपरे** मीमांसकाः । **अन्ये** मायावादिनः । **एके** सेश्वरसांख्याः । **केचिन्** मायिनः । **अन्ये** तार्किकाः । **इतरे** मायिनामेकदेशिनः ।

**प्रदीपः**— दोषाभावापेक्षत्वमात्रेण स्वतःप्रामाण्यप्रतिबद्धा शङ्का कथन्तरां तन्निरासद्वारा विचारस्याङ्गत्वं कथन्तमां ईश्वरविषयतेत्यत आह **एतेनेति** । उपलक्षणमेतत् । प्रतिबन्धासंभवात् तन्निरासानुपपत्तेश्चेति द्रष्टव्यम् । यद्वा पूर्वपक्षोक्तनिर्विषयत्वाशङ्कानिरासार्थतयैतद्योज्यम् । तत्पक्षदोषश्च परिहरिष्यत इति ह्युक्तं तास्ता विप्रतिपत्तयो याभिर्ज्ञानमात्रोत्पत्तावपि निश्चितत्वज्ञानं प्रतिबध्यत इति । अत आह **तथा हीति** । एता अपि तत्र तत्र विचारयिष्यन्ते ।

**१६० सु०— तत्र तावद् ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति षष्ठीसमासो न पुनर्धर्माय जिज्ञासेतिवत् चतुर्थीसमासः । तादर्थ्यसमासे प्रकृतिग्रहणं कर्तव्यमिति वार्तिककृता प्रकृतिविकारभाव एव चतुर्थीसमासस्य नियमितत्वात् । तथैवोदाहरणं 'यूपाय दारु यूपदार्वि'ति । प्रकृतिविकारभावरहितेषु चाश्वघासादिषु अश्वघासादयः षष्ठीसमासा भवन्तीति प्रतिविहितम् । न चात्र प्रकृतिविकारभावः अस्ति ॥ षष्ठीसमासेऽपि केचिच्छेषे षष्ठीति प्रतिपन्नाः । केचित्कर्मणीति । तत्र कर्मणि षष्ठीपरिग्रहाय जिज्ञास्य इत्युक्तम् । कृत्यानां कर्मणि स्मरणात् । अन्यथा जिज्ञासास्येत्यवक्ष्यत् । जिज्ञासा खलु कर्मापेक्षा, विना कर्मणा न ज्ञातुं शक्या ॥ न तु संबन्धिनं विनेति कर्मणः प्राधान्यात्तदेव वक्तव्यम् । संबन्धिसामान्योक्तावर्थात्कर्मापि लभ्यत इति चेन्न । साक्षात्प्रतीतपरित्यागेनार्थलभ्यस्वीकारस्य वैयर्थ्यात् । एवं सति लक्षणादिजिज्ञासाऽपि प्रतिज्ञाता स्यादिति चेन्न । तस्या विनाऽप्यभिधानेन लाभात् ।**

**न हि लक्षणादिजिज्ञासामन्तरेण ब्रह्मजिज्ञासाऽस्ति । अन्यथाऽनेकविषयत्वेन शास्त्रभेद-प्रसङ्गः । निर्विषयताशङ्कापनोदार्थं प्रयुक्तं पदमिदं कर्माभिधाय्येव युक्तम् । तद्विजिज्ञासस्वे-त्यादिश्रुत्यर्थानुगतं चैवं सति सूत्रं स्यात् ।**

**बिन्दुः— तत्र तावदिति** । षष्ठीसमासेऽपि वक्ष्यमाणविशेषापेक्षस्तावच्छब्दः । **षष्ठीसमास इति** । यद्यपि यूपदारु अश्वघास इति समस्तप्रयोगद्वयमपि साध्वेव तदर्थं चतुर्थीसमासे विकृतिग्रहण-मप्यनर्थकम् । अश्वघासादिव्युदासश्च सिद्धान्तेऽपि नेष्यत एव । न च तत्र षष्ठीसमास एवेष्यते चतुर्थी-समासस्तु व्युदस्यत इति वाच्यम् । फले विशेषाभावेन व्युदासवैयर्थ्यात् । तथापि षष्ठे 'चतुर्थी तदर्थ' (६-२-४३) इति सूत्रेण समासे चतुर्थ्यन्तपूर्वपदस्य प्रकृतिस्वरत्वानुशासनात् फले वैलक्षण्यसिद्ध्यर्थ-मुक्तयत्नस्यावश्यकत्वमेव अन्यथा यूपदार्वित्यादाविवाश्वघास इत्यत्रापि पूर्वपदप्रकृतिस्वरत्वमापद्येत । उच्यते च समासस्येत्युत्सर्गसूत्रेण समासान्तोदात्तस्वर इति भावः । अत्र बहुप्रपञ्चनीयमपि विस्तरभयेन उपरम्यते । **कृत्यानां कर्मणि स्मरणादिति** । भावकर्माधिकारे तयोरेव कृत्यक्तखलर्था इति सूत्रादिति भावः । **विना कर्मणा न ज्ञातुं शक्येति** । यद्यपि ज्ञानेच्छादीनां ससंबन्धिकानां प्रत्यक्षभानमेव संबन्धिविषयकतज्ज्ञानसापेक्षं च न तु शाब्दबोधोऽपि, तथा च प्रकृते जिज्ञासायाः सकर्मकत्वेऽपि शब्दा-त्तज्ज्ञानेन कर्मभानापेक्षा तथापि तादृशक्रियाणां कर्मणि उत्थितोत्कटाकाङ्क्षतया तत्पूरणम.......मुपपदेन कर्तव्यम् । अत एव यजेतेत्यादौ किं केन कथमिति क्रमेण साध्यसाधनेतिकर्तव्यतारूपांशत्रयाकाङ्क्षासु प्रथमतो भाव्याकाङ्क्षानिवर्तनार्थं समानपदोपात्ततया प्रत्यासन्नमपि यागं परित्यज्य भिन्नपदोपात्ततया विप्रकृष्टेनापि पुरुषार्थरूपस्वर्गेणान्वयं वदन्तीति भावः । **निर्विषयताशङ्केति** । विषयस्य आप्यरूपकर्म-विशेषत्वादिति भावः ।

**परि०—** 'जिज्ञासाऽस्य विधीयत' इति वक्तव्ये जिज्ञास्योऽयं विधीयत इत्युक्तेः कृत्यं वक्तुमाह **तत्र तावदित्यादिना** । तत्र सूत्र इत्यर्थः । सा च कर्मणीति पश्चाद्वक्ष्याम इति तावच्छब्दः । **षष्ठीसमास इति** । षष्ठीति सूत्रेणेति भावः । वृत्तिकारादिमतं निराह **न पुनरिति** । **इतिवदिति** । 'अथातो धर्मजिज्ञासा' इति जैमिनिसूत्रे तद्भाष्यकारादिभिरुक्तदिशेति भावः । इतिवदिति दृष्टान्तोक्तिः वक्ष्यमाणगतार्थता-शङ्कोपयोगायेति ज्ञेयम् । कुतो नेत्यत आह **तादर्थ्येति** । 'चतुर्थीतदर्थार्थबलिहितसुखरक्षितैः' इति चतुर्थ्यन्तं तदर्थादिभिः समस्यत इति चतुर्थीसमासविधायकसूत्रे वार्तिकं तादर्थ्येत्यादि । तस्यार्थः । तदर्थमिदमित्येतदर्थवाचकयोः पदयोः समासेऽभिमते प्रकृतिग्रहणं कर्तव्यं उपादानग्रहणं कर्तव्यम् । उपादानोपादेयभावापन्नार्थवाचिनोरेव समास इत्यवगन्तव्यमिति । कथं तर्हि अश्वाय घासोऽश्वघास इति





समास इत्यतो भाष्यकाराद्युक्तिमेवाह **प्रकृतीति**। **प्रतिविहितमिति**। प्रतिविधानं निषेधः। चतुर्थीसमासो निषिद्ध इत्यर्थः। अत एव तन्त्रवार्तिके धर्मजिज्ञासयोः यूपदार्वादिवत् प्रकृतिविकृतिभावाभावात् चतुर्थीसमासविरोधमाशङ्क्य फलितप्रदर्शनपरतया शाबरभाष्यं भट्टेन व्याख्यातमिति भावः। **न चात्रेति**। ब्रह्मजिज्ञासेत्यत्रेत्यर्थः। **केचिच्छेषेति**। 'षष्ठी शेष' इति सूत्रेण कारकप्रातिपदिकार्थव्यतिरिक्ते संबन्धसामान्ये विवक्षिते षष्ठी भवतीति विहितषष्ठ्यन्तस्य समास इत्यर्थः। **कर्मणीति**। 'कर्तृकर्मणोः कृती'ति कर्मणि षष्ठीत्यर्थः। ब्रह्मजिज्ञासेत्यत्र कर्मणि षष्ठीसमास इत्यत्र जिज्ञास्य इति भाष्यं कथं ज्ञापकमित्यत आह **कृत्यानामिति**। सन्प्रत्ययान्तजिज्ञासशब्दात् 'अचो यत्' इति सूत्रेण यत्प्रत्यये 'अतो लोप' इति सूत्रेणाकारलोपे जिज्ञास्य इति निष्पन्नत्वात्। यत्प्रत्ययस्य च 'कृत्याः प्राङ्ण्वुल' इति सूत्रेण कृत्यसंज्ञकत्वात्। कृत्यसंज्ञकप्रत्ययानां च 'तयोरेव कृत्यक्तखलर्थाः' इति सूत्रेण भावकर्मणोर्विधानादित्यर्थः। तथा च जिज्ञास्यः जिज्ञासाकर्मेत्यर्थो लभ्यत इति भावः। कर्मणि षष्ठीसमासग्रहे का युक्तिरित्यत आह **जिज्ञासा खल्विति**। **एवं सतीति**। शेषे षष्ठीसमासग्रहे सति लक्षणप्रमाणसाधनफलानामध्यायचतुष्टये वक्ष्यमाणानामपि जिज्ञासा प्रतिज्ञाता स्यात्। अन्यथाऽप्रतिज्ञातकीर्तनमग्रेतनं स्यादित्यर्थः। तस्या इति। लक्षणादिजिज्ञासाया इत्यर्थः। ब्रह्मजिज्ञासयैव नान्तरीयकतया तल्लाभं व्यनक्ति **न हीति**। **अन्यथेति**। ब्रह्मजिज्ञासयैव लक्षणादिजिज्ञासाया अलाभे स्वातन्त्र्येण जिज्ञास्यत्व इत्यर्थः। कर्मणि षष्ठीग्रहे युक्त्यन्तरद्वयं निर्विषयताशङ्केत्यादि तद्विजिज्ञासस्वेति च। **पदमिदमिति**। सौत्रब्रह्मपदमित्यर्थः। **श्रुत्यर्थेति**। श्रुतौ तत्पदस्य द्वितीयान्तत्वादिति भावः।

**यादु०**— ननु धर्मजिज्ञासेत्यादाविवात्रापि चतुर्थीसमासाश्रयणमेव युक्तम्। तथा हि। चतुर्थी तदर्थर्थेत्यत्र वार्तिकम्। 'चतुर्थी तदर्थमात्रेणेति चेत्तर्हि सर्वप्रसङ्गोऽविशेषात्। प्रकृतिविकृत्योः इति चेत् अश्वघासादीनामुपसङ्ख्यानम्' इति। अस्यार्थः। सर्वप्रसङ्गः सर्वस्य चतुर्थ्यन्तस्य तदर्थमात्रेण समासप्रसङ्गः। रन्धनाय स्थाली अवहननायोलूखलमित्यादावपि समासः प्रसज्येतेत्यर्थः। यदि विकृतिवाची चतुर्थ्यन्तशब्दः प्रकृतिवाचिना समस्यत इति विशिष्यते तदा सर्वप्रसङ्गः परिहृतो भवति। तथाच अश्वाय घासोऽश्वघास इति समासो न प्राप्नोति। प्रकृतिविकारभावाभावात्। अतस्तत्सङ्ग्रहार्थमुपसंख्यानं यत्नान्तरं कर्तव्यमिति। तथा चैतद्वार्तिकानुसारिणा शबरेण धर्माय जिज्ञासेत्येव विग्रहः प्रदर्शितः। अतोऽत्रापि तत्रेव चतुर्थीसमासप्रदर्शनमेव कार्यं न षष्ठीसमासप्रदर्शनमित्यत आह **न पुनर्धर्मायेति**। 'तादर्थ्यसमासे प्रकृतिग्रहणं कर्तव्यम्' इत्युक्तवार्तिकार्थानुवादोऽयमिति द्रष्टव्यम्। वार्तिककृतेत्युपलक्षणम्। भाष्यकारेणापीत्यपि द्रष्टव्यम्। तथाहि भाष्यम्। 'यदि हि तदर्थसमासः तदर्थमात्रविषयः स्यात्कुबेराय बलिः कुबेरार्थो भवति। अश्वाय रक्षितमश्वार्थं भवतीति। कुबेरबलिरश्वरक्षितमिति समासयोस्तदर्थसमासविधिनैव सिद्धेः पृथग्बलिरक्षितग्रहणं कर्तव्यं न स्यात्। तत्कृतं ज्ञापयति तदर्थसमासः





प्रकृतिविकृतिमात्रविषय' इति । नन्वेवं चेत्कथमश्वघासादीनामुपसङ्ख्यानमिति वार्तिकमित्यत आह **प्रकृतिविकारभावरहितेष्विति** । प्रतिविहितं भाष्यकृतेति शेषः । 'अश्वघासादिषु षष्ठीचतुर्थीसमासयोः स्वरवैषम्याभावेन षष्ठीसमासस्यैवोपपत्तेः इति भाष्यकारेण वार्तिककारीयमुपसङ्ख्यानं प्रत्याख्यातम् । अतो न तदाश्रयेणेह चतुर्थीसमासाश्रयणं युक्तमित्यर्थः । नन्वश्वघासादिषु स्वरवैषम्याभावे षष्ठीसमास एवाश्रयणीय इत्यत्र किं नियामकं चतुर्थीसमासाश्रयणेऽपि बाधकाभावादित्यत उक्तं **प्रकृतिविकारभावरहितेष्विति** । अश्वघासादिषु चतुर्थीसमासो हि तादर्थ्ये वक्तव्यः । तदर्थसमासे च सर्वत्र प्रकृतिविकार आवश्यक इत्युपपादितम् । न चासावश्वघासादिष्वस्ति । अतः षष्ठीसमास एवात्रेति नियम्यत इत्ययुक्तमुपसङ्ख्यानमिति भावः । अत एवेदं भाष्यकारीयं वार्तिकप्रत्याख्यानमालोच्य भट्टाचार्येण धर्माय जिज्ञासेति शबरवचनं 'षष्ठीसमासबललब्धार्थिकार्थप्रदर्शनपरम् । न तु विग्रहप्रदर्शनपरम् । तस्य ज्ञातुमिच्छेति निगमनवाक्येन षष्ठीसमासविधानात्' इति व्याख्यातमिति । **कृत्यानां कर्मणीति** । 'तयोरेव कृत्यक्तखलर्थाः' इति वचनादिति भावः । **न तु संबन्धिनं इति** । जिज्ञास्यवस्त्वज्ञाने यथा जिज्ञासाया न ज्ञानमेवं संबन्धिसामान्याज्ञाने न जिज्ञासाज्ञानविलंब इति भावः । **विनाऽप्यभिधानेनेति** । प्रधाने जिज्ञासाकर्मणि गृहीते यावतां जिज्ञासां विना ब्रह्म जिज्ञासितं न भवति तावतां जिज्ञासाऽप्यर्थाल्लभ्यत एवातो न तानि पृथक् सूत्रयितव्यानि । यथा राजाऽसौ गच्छतीत्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति तद्वदित्यर्थः । **अन्यथेति** । उक्तरीत्या लक्षणादीनां ब्रह्मजिज्ञासायामपेक्षितत्वेनाजिज्ञास्यत्वे स्वातन्त्र्येण जिज्ञास्यत्वे चेत्यर्थः । **श्रुत्यर्थानुगतमिति** । श्रुतौ तदिति कर्मत्वार्थकद्वितीयाप्रयोगादिति भावः ।

**वं०प०**— ननु धर्माय जिज्ञासेतिवदत्रापि चतुर्थीसमास एव किं न स्यादित्यत आह **तादर्थ्येति** । 'चतुर्थी तदर्थार्थे'त्यादिसूत्रेण तादर्थ्ये चतुर्थीसमासो वाच्यः । तादर्थ्यमित्यस्य प्रकृतिविकृतिभाव एवार्थो विवक्षितः । 'प्रकृतिरुपादानम् । प्रकृतिविकृतिभाव एवेष्टिः' इत्युक्तत्वात् । यूपाय दार्वित्यत्रोपादानोपादेयभावसद्भावादश्वाय घासोऽश्वघास इत्यत्र प्रकृतिविकारभावाभावात् कथं चतुर्थीसमास इत्याशङ्क्य षष्ठीसमास एव तत्र विहितः । एवं चात्र प्रकृतिविकारभावाभावात् चतुर्थीसमासो न युक्त इत्याशयः ।

**आनन्दः**— ननु जिज्ञास्योऽयमित्यत्र ब्रह्मणो जिज्ञासाकर्मत्वकथनमयुक्तं, ब्रह्मजिज्ञासापदेन कर्मत्वस्यानुक्तत्वात् । ननु ब्रह्मणो जिज्ञासेति षष्ठीसमासाश्रयणेन कर्मत्वमभिप्रेतमिति वाच्यम् । ब्रह्मणे जिज्ञासेति चतुर्थीसमासोपपत्तेः इत्यत आह **तत्रेति** । षष्ठीपक्षेऽपि शेषषष्ठीनिराकरणाभिप्रायेण तावदित्युक्तम् । न पुनर्धर्मायेतिवदिति व्यतिरेकदृष्टान्तः । तथाच यथात्र न चतुर्थीसमासस्तथा प्रकृतेऽपीत्यर्थः । नियामकाभावात्कुतो न चतुर्थीसमास इत्यत आह **तादर्थ्येति** । ननु प्रकृतिविकारभावरहितेष्वपि चतुर्थीसमासस्योक्तत्वात् कथमेतदित्यत आह **प्रकृतीति** । **न चेति** । ब्रह्मणो जिज्ञासाविकारत्वासंभवादिति भावः । तर्ह्यत्र कस्याः परिग्रह इत्यत आह **तत्रेति** । ननु जिज्ञास्य इत्युक्तेऽपि कथं कर्मषष्ठीपरिग्रहः सूचित इत्यत आह **कृत्यानामिति** । तयोरेव कृत्यक्तखलर्था इत्यनेनेति भावः । यत्प्रत्यये समागते एतद्रूपं सिद्ध्यतीति भावः । **अन्यथेति** । कर्मषष्ठीपरिग्रहस्यानभिप्रेतत्व इत्यर्थः । ननु कर्मषष्ठीपरिग्रहो न युक्तः । तथा सति लक्षणादिजिज्ञासाया अप्रतिज्ञातत्वप्रसङ्गात् । शेषषष्ठीपक्षे तु





तत्प्रतिज्ञापि सिद्ध्यति । तथाच बाधकसद्भावात्साधकाभावाच्च न कर्मषष्ठीपरिग्रहो युक्त इत्यतः साधकं तावदाह **जिज्ञासेति** । **अर्थादिति** । अनुपपत्तेरित्यर्थः । जिज्ञासां प्रति ब्रह्मणः करणत्वाद्यसंभवात्कर्मत्वमेव लभ्यत इति भावः । **एवं सतीति** । शेषषष्ठीपरिग्रहे सतीत्यर्थः । **अन्यथेति** । लक्षणादिजिज्ञासायाः ब्रह्मजिज्ञासाभिन्नत्व इत्यर्थः । अत्रैव युक्त्यन्तरं चाह **निर्विषयतेति** ।

**कं०रा०— न पुनरिति** । धर्माय जिज्ञासा धर्मजिज्ञासेति यथा चतुर्थीसमासस्तथा ब्रह्मणे जिज्ञासा ब्रह्मजिज्ञासेति चतुर्थीसमासोऽत्र न भवतीत्यर्थः । यद्यपि धर्मस्य जिज्ञासा धर्मजिज्ञासेति षष्ठीसमास एव तत्रोक्तस्तथाऽपि 'अथातो धर्मजिज्ञासासूत्रमाद्यमिदं कृतम् । धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनमि'त्यत्र वार्तिके धर्माख्यं विषयं धर्माख्यं प्रयोजनं च वक्तुमथातो धर्मजिज्ञासेत्याद्यं सूत्रं कृतमित्युक्तत्वादज्ञातरूपस्य धर्मस्य मीमांसाविषयत्वं ज्ञातस्य तु प्रयोजनतेत्याश्रयणीयतया प्रयोजनत्वख्यापनार्थं धर्माय जिज्ञासा धर्मजिज्ञासेति चतुर्थीसमासोऽपि तत्र विवक्षित इति कैश्चिदाश्रितत्वादेवमुक्तमिति द्रष्टव्यम् । ब्रह्मणे जिज्ञासा ब्रह्मजिज्ञासेति चतुर्थीसमासः कस्मान्न भवतीत्यत आह **तादर्थ्यसमास इति** । चतुर्थी तदर्थार्थबलिहितसुखरक्षितैरित्यत्र 'तादर्थ्यसमासे प्रकृतिग्रहणं कर्तव्यम् । चतुर्थ्यन्ता विकृतिस्तदर्थया प्रकृत्या समस्यत' इति वदता वार्तिककृता प्रकृतिविकारभावे सत्येव चतुर्थीतदर्थसमासो नान्यथेति नियतत्वादित्यर्थः । **तथैवेति** । यूपाय दारु यूपदार्वि-त्युदाहरणम् । तथैव प्रकृतिविकारभावापन्नत्वादिति भावः । ननु अश्वाय घासोऽश्वघास इत्युपादानोपादेयभावा-भावेऽपि चतुर्थीसमासदर्शनाद्वार्तिककृता कृतो नियमः कथमुपपद्यत इत्यत आह **प्रकृतीति** । आदिशब्देन श्वश्रूसुरमित्यादेर्ग्रहणम् । तथा चाश्वघासादिशब्दानामश्वस्य घासोऽश्वघासः श्वश्वाः सुरा श्वश्रूसुरमित्यादिरूपेण षष्ठीसमासत्त्वान्नोक्तनियमानुपपत्तिरिति भावः । **न चेति** । न चात्र ब्रह्मजिज्ञासयोः प्रकृतिविकारभावोऽस्ति येन चतुर्थीसमास उपपन्नः स्यादिति भावः । वस्तुतस्तु धर्माय जिज्ञासेति चतुर्थीसमासो यथा न भवति तथा ब्रह्मणे जिज्ञासेति चतुर्थीसमासोऽत्र न भवतीत्येतदर्थपरत्वेन न पुनर्धर्माय जिज्ञासेतिवच्चतुर्थीसमास इति वाक्यं व्याख्यायोभयत्रापि चतुर्थीसमासः कस्मान्न भवतीति शङ्कापरिहारार्थत्वेनोत्तरं वाक्यं व्याख्येयम् । अन्यत्पूर्वोक्तरीत्या सुगमम् । न चात्र प्रकृतिविकारभावोऽस्तीति वाक्यं तु धर्मजिज्ञासयोर्ब्रह्मजिज्ञासयोश्च न हि प्रकृतिविकारभावोऽस्ति येनोभयत्र चतुर्थीसमास उपपन्नः स्यादित्यर्थपरत्वेन व्याख्यातव्यम् । न च वाच्यं तादर्थ्यसमासे प्रकृतिग्रहणं कर्तव्यमिति वार्तिकस्य कार्यकारणभावमात्रपरत्वाद्धर्मजिज्ञासया धर्मतत्त्वज्ञाने सति धर्मस्यानुष्ठीयमानतया धर्मजिज्ञासयोः कार्यकारणभावमात्रस्य सत्त्वात् धर्माय जिज्ञासेति चतुर्थीसमास उपपन्न इति । अवहननायोलूखल-मित्यादौ कार्यकारणभावमात्रे सत्यपि चतुर्थीसमासाभावेन चतुर्थ्यन्ता विकृतिः प्रकृत्या समस्यत इति वार्तिके प्रकृतिविकृतिशब्दयोरुपादानोपादेयपरत्वात् तद्भावस्य च धर्मजिज्ञासयोरभावात् तत्रापि चतुर्थीसमासानुपपत्तेः । ननु विचारापरपर्यायधर्मजिज्ञासया धर्मतत्त्वनिश्चये सति धर्मस्य क्रियमाणतया धर्मजिज्ञासाया धर्मार्थत्वाच्चतुर्थी तदर्थेत्यादिना धर्मजिज्ञासेत्यत्र चतुर्थीसमासप्रसक्तावपि ब्रह्मजिज्ञासेत्यत्र जिज्ञासाया ब्रह्मार्थत्वाभावेन चतुर्थी-समासाप्रसक्तेस्तन्निषेधानुपपत्तिरिति चेन्न । ब्रह्मजिज्ञासया ब्रह्मज्ञाने सति ब्रह्मणः प्रसादाख्यव्यापारविशिष्टत्वेन





क्रियमाणतयेहापि जिज्ञासाया ब्रह्मार्थत्वेन चतुर्थीसमासप्रसक्तौ तन्निषेधोपपत्तेः । प्रसादरूपव्यापारविशिष्टतया भगवतः क्रियमाणत्वं च 'सिद्धं साधनं च भगवानिति मुमुक्षुणा सव्यापारीकरणीयः । व्यापारश्च प्रसन्नतैवे'त्याकर एव स्फुटम् । ननु विशिष्टवेषेण भगवतः साध्यत्वेऽपि न तादर्थ्यं जिज्ञासाया वक्तुं शक्यम् । स्वर्गादिस्वरूपसाधक एव यागादौ स्वर्गाद्यर्थत्वदर्शनादिति चेन्नैवं मंस्थाः । व्रीहीन्प्रोक्षतीत्यत्र स्वरूपेण व्रीहीणां प्रोक्षणासाध्यत्वेऽपि प्रोक्षणाहितसंस्कारविशिष्टवेषेण तेषां तत्साध्यतया प्रोक्षणस्य व्रीह्यर्थत्वदर्शनेनोक्तनियमाभावात् । प्रोक्षणेन व्रीहीन्भावयेदिति खल्वत्र वचनव्यक्तिः । तया च प्रोक्षणस्य व्रीह्यर्थत्वं स्फुटं प्रतीयत इति न किञ्चिदनुपपन्नम् । **कृत्यानामिति** । तयोरेव कृत्यक्तखलर्था इति सकर्मकधातोरुत्पन्नानां कृत्यानां कर्मणि स्मरणादित्यर्थः । ज्ञाधातोः सनि सन्प्रयुक्तद्वित्वादिके सन्नन्तादचो यदिति यत्प्रत्यये अतो लोप इत्यकारलोपे च निष्पन्नो जिज्ञास्यशब्दः । तत्र यत्प्रत्ययः कृत्याः प्राङ्ण्वुल इति कृत्यसंज्ञ इति भावः । अनुत्पन्न एवार्धधातुके बुद्धिस्थे अतो लोपे कृते सन्प्रत्यये हलन्त इति ण्यत्स्यात् । अज्ग्रहणात्तु भूतपूर्वमजन्तत्वमाश्रित्य यद्भवतीति विशेषः पदमञ्जर्युक्तो द्रष्टव्यः । **अन्यथेति** । कर्मणि षष्ठीपरिग्रहस्यानभिप्रेतत्वे जिज्ञासाऽस्य विधीयत इति वक्तुं शक्यत्वादाचार्यस्तथैव निर्देशं कुर्यादित्यर्थः । **त्सदेवेति** । कर्मैव षष्ठ्या निर्देष्टव्यं न संबन्धीत्यर्थः । **एवं सतीति** । संबन्धिसामान्योक्तौ ब्रह्मसंबन्धिनी जिज्ञासा ब्रह्मजिज्ञासेत्यर्थलाभेन ब्रह्मलक्षणजिज्ञासा ब्रह्मप्रमाणजिज्ञासा ब्रह्मज्ञानसाधनजिज्ञासा ब्रह्मज्ञानफलजिज्ञासा ब्रह्मस्वरूपजिज्ञासेत्येवं सर्वाऽपि जिज्ञासा साक्षात्परम्परया वा ब्रह्मसंबन्धिनीति ब्रह्मजिज्ञासा कर्तव्येत्यनेन प्रतिज्ञाता स्यात् । कर्मोक्तौ तु ब्रह्मकर्मकजिज्ञासैव प्रतिज्ञाता स्यान्न लक्षणादिजिज्ञासेत्याशयः । ब्रह्मकर्मकजिज्ञासामात्र-प्रतिज्ञानेऽपि तस्या लक्षणादिजिज्ञासां विना अयोगेन पृथग्लक्षणादिजिज्ञासाया अनुक्तावपि लाभान्न कोऽपि दोष इत्यभिप्रेत्य परिहरति **नेति** । **अन्यथेति** । प्राधान्येन ब्रह्मकर्मकजिज्ञासायां प्रतिज्ञायमानायामार्थिकत्वेन लक्षणादिजिज्ञासालाभ इत्यनङ्गीकृत्य ब्रह्मजिज्ञासातुल्यतया लक्षणादिजिज्ञासाया अपि प्रतिज्ञाङ्गीकार इत्यर्थः । **निर्विषयेति** । निर्विषयत्वाज्जिज्ञासा न कर्तव्येति शङ्कानिरासार्थं प्रयुक्तं लुप्तषष्ठ्यन्तं ब्रह्मपदं कर्मप्रतिपादक-मित्येवाङ्गीकर्तुमुचितम् । न तु संबन्धिसामान्यप्रतिपादकमित्यङ्गीकर्तुमित्यर्थः । **श्रुत्यर्थेति** । तद्विजिज्ञासस्व तद्ब्रह्मेति विषयवाक्ये द्वितीयान्तेन ब्रह्मशब्देन ब्रह्मणः कर्मत्वं प्रतीयते । तथा च सूत्रे कर्मणि षष्ठीपरिग्रहे श्रुतिसूत्रयो-रर्थानुगमो भवति । शेषषष्ठीपरिग्रहे तु स न स्यादिति भावः ।

**श्रीनिधि०— प्रकृतिग्रहणमिति** । प्रकृतिविकारभाव एव तादर्थ्यसमासो भवतीत्यर्थः । **प्रकृतिविकार-भाव इति** । उपादानोपादेयभाव इत्यर्थः । ननु प्रकृतिविकारभावरहितेषु अश्वघासादिषु तादर्थ्यसमासस्योपसङ्ख्येय-त्वेन वार्तिककृतोक्तत्वात्, अश्वघासादेराकृतिगणत्वात् अत्रापि चतुर्थीसमासो भविष्यतीत्यत आह **प्रकृति-विकारभावरहितेष्विति** । **प्रतिविहितः** षष्ठीसमासः । तादर्थ्यसमासं बाधित्वा महाभाष्ये कृत्यानां कर्मणीति जिज्ञासाशब्दादचो यदिति यत्प्रत्यये जिज्ञास्य इति रूपं यत्प्रत्ययस्य कृत्प्रत्ययत्वात् । तयोरेव कृत्यक्तखलर्था इति सूत्रेण तस्य कर्मणि स्मरणादिति भावः । **एवं सतीति** । शेषे षष्ठीति पक्ष इत्यर्थः । **लक्षणादीति** । ब्रह्मलक्षण-जिज्ञासाया अपि ब्रह्मसंबन्धित्वादिति भावः । **अन्यथेति** । लक्षणादिजिज्ञासाव्यतिरेकेण ब्रह्मजिज्ञासायाः सत्त्वे ।

**वा०चं०**— एवं ब्रह्मणो जिज्ञासाविषयत्वानुपपत्तिपरिहारसूचकत्वेन जिज्ञास्योऽयमिति भाष्यं व्याख्याय जिज्ञास्य इति कर्मप्रत्ययान्तनिर्देशस्य सूत्रे कर्मणि षष्ठीपरिग्रहसूचकत्वं वक्तुं धर्मजिज्ञासेत्यादिवद्ब्रह्मजिज्ञासेत्यत्र चतुर्थीसमासाश्रयणे षष्ठीपरिग्रहायोगात् षष्ठीसमासं तावदुपपादयति **तत्रेति** । वक्ष्यमाणषष्ठीविशेषप्रतिपादनापेक्ष-स्तावच्छब्दः । **चतुर्थीसमास इति** । वृत्तिकारान्तरोक्त इति शेषः । चतुर्थीसमासाभावे हेतुमाह **तादर्थ्येति** । 'चतुर्थी तदर्थमात्रेण चेत्सर्वप्रसङ्गोऽविशेषात्' इति वार्तिकलब्धार्थकथनमेतदिति द्रष्टव्यम् । उपलक्षणं चैतत् । भाष्योक्तज्ञापकबलतोऽपि तत्सिद्धिरित्यपि द्रष्टव्यम् । प्रकृतिविकृतिभाव एव तादर्थ्यचतुर्थीसमासाश्रयणेऽश्व-घासादिषु तादर्थ्यसमासो न स्यादित्यतो वार्तिककृता 'विकृतिः प्रकृत्येति चेदश्वघासादीनामुपसंख्यानम्' इत्यश्वघासादीनामुपसंख्यान उक्तेऽपि तदर्थमात्रेण समासस्य सूत्रकाराभिमतत्वे भूतबलिरित्यादावपि तदर्थेत्यनेनैव समाससिद्धेर्बलिरक्षितग्रहणं पृथक् न कर्तव्यं स्यादिति तत्करणरूपाचार्यप्रवृत्तिरूपज्ञापकाश्रयेण प्रकारान्तरेणैव वार्तिकप्रयोजनसिद्ध्या विकृतिः प्रकृत्येति वार्तिकं प्रत्याचक्षाणेन भाष्यकारेणाश्वघासादयः षष्ठीसमासा भविष्यन्ति इति समासान्तरविधानान्नानुपपत्तिरित्याह **प्रकृतीति**। भाष्यकृतेति शेषः। ( चतुर्थी तदर्थार्थेत्यत्र वार्तिकम्। चतुर्थी तदर्थमात्रेणेति चेत्तर्हि सर्वप्रसङ्गोऽविशेषात् विकृतिः प्रकृत्येति चेदश्वघासादीनामुपसङ्ख्यानमिति। अस्यार्थः। सर्वस्य चतुर्थ्यन्तस्य तदर्थमात्रेण समासप्रसङ्गः । रन्धनाय स्थाली अवहननायोलूखलमित्यादावपि समासः प्रसज्येत विशेषज्ञापकाभावात् । यदि विकृतिवाची चतुर्थ्यन्तशब्दः प्रकृतिवाचिना समस्यत इति विशिष्यते तदा सर्व-प्रसङ्गः परिहृतो भवति । किन्त्वश्वाय घासोऽश्वघास इति समासो न प्राप्नोति । प्रकृतिविकाराभावात् । अतस्तत्सङ्ग्रहार्थमुपसङ्ख्यानं यत्नान्तरं कर्तव्यमिति। तथा चैतद्वार्तिकानुसारेण शबरेण धर्माय जिज्ञासेत्येव विग्रहः प्रदर्शितः। चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः। चतुर्थ्यन्तार्थाय यत्तद्वाचिनाऽर्थादिभिश्च चतुर्थ्यन्तं समस्यते वा स तत्पुरुषः। तदर्थेन प्रकृतिविकृतिभाव एव। बलिरक्षितग्रहणाज्ज्ञापकात्। यूपाय दारु यूपदारु। नेह रन्धनाय स्थाली। अश्वघासादयस्तु षष्ठीसमासाः। अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्। द्विजायायं द्विजार्थः सूपः। द्विजार्था यवागूः। द्विजार्थं पयः। भूतबलिः। गोहितम्। गोसुखम्। गोरक्षितम् )। एवं चाश्वघासादयः षष्ठी-समासा भविष्यन्तीति वाचस्पतिग्रन्थस्यावतरणं कात्यायनेनैव समासान्तरमुपसङ्ख्यातमित्याहेति कल्पतरुकृतं तदज्ञानमूलकमिति द्रष्टव्यम् । एवं च भाष्यकृन्मतमनाश्रित्य यथास्थितपाणिनिमतमेव वाऽश्वघासादिष्वस्यापि निवेशमभ्युपेत्याश्वघासादिषु चतुर्थीसमासोपसङ्ख्यानपरवार्तिककृन्मतं वाऽऽश्रित्य प्राचि तन्त्रे चतुर्थीसमास-प्रदर्शनम्। भाष्यकृदुक्तरीत्या तन्मतयोरस्वारस्याद्भाष्यकृन्मतमेवाश्रित्य न पुनर्धर्माय जिज्ञासेतिवच्चतुर्थीसमास इति स्वयं तन्निषेधः कृतः। भाष्यकृदुक्तिभयादेव भट्टवार्तिके 'धर्माय जिज्ञासेत्यर्थप्रदर्शनं भाष्ये, षष्ठीसमास एव युक्त' इत्युक्तमिति ध्येयम् । एवं षष्ठीसमासं सिद्धवत्कृत्य विवक्षितमर्थमाह **षष्ठीति** । **कृत्यानामिति** । 'तयोरेव कृत्यक्तखलर्थाः' इति स्मरणादित्यर्थः। ननु शेषषष्ठीपरिग्रहस्यापि संभवे कर्मषष्ठ्या एव परिग्रहे न बीजमित्यतो जिज्ञासाया ज्ञानं विना ज्ञानस्य च सकर्मकतया कर्म विना प्रतिपत्तुमशक्यतया प्रतिपत्त्यनुबन्धित्वात्कर्मणो जिज्ञासायास्तदपेक्षावदतादृशसंबन्धिमात्रापेक्षाभावेन कर्मणः प्राधान्यात्कर्मषष्ठीपरिग्रहो युक्त इत्याशयेनाह **जिज्ञासेति** । ननु शेषषष्ठीपरिग्रहेऽपि तस्याः संबन्धिसामान्यार्थकत्वेऽपि सामान्यस्य व्यवहारानुपयोगितया





अन्यतमविशेषविषयकत्वेऽवश्याश्रयणीये प्रकरणोपपदरूपविशेषान्तरज्ञापकाभावे जिज्ञासारूपक्रियोपादानेन क्रियाकारकत्वसंबन्धाश्रयणे च सकर्मकक्रियायाः कर्माभ्यर्हितमिति कर्मतया ब्रह्म लभ्यत इति कर्मषष्ठीपरिग्रहो व्यर्थ इत्याशङ्कते **संबन्धीति**। अपिशब्दस्योक्तावपीति संबन्धः। अत्र संबन्धिसामान्योक्तावित्यनेनेदं ध्वनितम्। 'षष्ठी शेष' इत्यत्र न कर्मादिभ्योऽन्यः स्वस्वाम्यादिः शेषो विवक्षितो येन षष्ठ्या कर्मालाभः। तस्य 'यद्येवं शेषो न कल्प्यते न हि कर्मादिभ्योऽन्येऽर्था' इत्यादिना भाष्ये निराकरणादपि तु कर्मादीनामविवक्षा शेष इत्युक्तरीत्या संबन्धसामान्यमतो नानुपपत्तिरिति। उभयत्र षष्ठीविधानाविशेषे कर्मषष्ठीसमासपक्षाश्रयणेन स्वाभिमतकर्मरूपार्थस्य साक्षात्प्रतीतिसंभवेऽप्यर्थान्तरमुपादाय तन्मुखेन स्वाभिप्रेतार्थं प्रतिपद्यमानस्य वृथा प्रयासः स्यादित्याह **साक्षादिति**। ननु न कर्ममात्रलाभाय शेषषष्ठीपरिग्रहो येनोक्तरीत्या वैयर्थ्यं किन्तु येन जिज्ञासितेन विना न ब्रह्म जिज्ञासितं भवति तस्य सर्वस्य ब्रह्मसंबन्धिनो जिज्ञास्यत्वेन प्रतिज्ञानाय सः। कर्मापि तदन्तर्भूतमित्येवातो नानुपपत्तिः शेषषष्ठीपरिग्रहपक्षे इत्याशङ्कते **एवं सतीति**। अत्र ब्रह्मकर्मकजिज्ञासायाः तल्लक्षणप्रमाणादिजिज्ञासाव्यतिरिक्ताया अभावात्तज्ज्ञानसाधनफलादिजिज्ञासायास्तद्व्यतिरिक्तत्वेऽपि ज्ञानेनाप्तुमिष्टतमत्वेन प्रधानभूते ब्रह्मणि जिज्ञासाकर्मणि परिगृहीते यैर्जिज्ञासितैर्विना ब्रह्मजिज्ञासा न सम्पूर्यते तज्जिज्ञासाया अर्थाक्षिप्ततया लाभेनाभिधानानावश्यकतया वैयर्थ्यमेवेत्याशयेनाह **तस्या इति**। अत एव न हीत्युत्तरग्रन्थो लक्षणप्रमाणजिज्ञासामन्तरेण तज्जिज्ञासैव नास्ति तज्ज्ञानसाधनफलादिजिज्ञासामन्तरेण ब्रह्मजिज्ञासा न सम्पूर्णा भवतीत्युभयथा व्याख्येयः। **अन्यथेति**। लक्षणादिजिज्ञासाया ब्रह्मजिज्ञासापूर्त्यर्थत्वमनङ्गीकृत्य स्वातन्त्र्याभ्युपगम इत्यर्थः। **निर्विषयतेति**। अनेन स्वमतावष्टम्भेन कर्मषष्ठीपरिग्रहे हेतुविशेषमभिदधता परमते ब्रह्मणो ज्ञानकर्मत्वासंभवात्कर्मषष्ठीपरिग्रहोऽनुपपन्न इति सूचितम्। अत एव भामतीविवरणयोर्जिज्ञासापदेनैव विषयसूचनमभ्युपेतमिति द्रष्टव्यम्।

वा०र०— **जिज्ञासाविषयत्वानुपपत्तीति**। अनुग्राह्यप्रमाणाभावे सामान्यतो ज्ञातत्वाभावापत्त्या तत एव विशेषतः सन्दिग्धत्वाभावेन बुद्ध्यनारूढस्य जिज्ञासाविषयत्वानुपपत्तिरित्यर्थः। **कर्मप्रत्ययेति**। सन्नन्तधातुजिज्ञासशब्दादचो यदिति कर्मणि यत्प्रत्ययादिति भावः। **धर्मजिज्ञासेत्यादिवदिति**। इत्यादाविवेति सप्तम्यर्थे वतिः। मूले धर्माय जिज्ञासेत्यतःपरं धर्मजिज्ञासेति पूरणीयम्। इतिपदं चाद्यर्थकम्। धर्मजिज्ञासेति शाबरभाष्ये विगृहीतत्वादिति भावः। **चतुर्थीसमासेति**। ब्रह्मणे जिज्ञासेति चतुर्थ्यन्तसमासे हि चतुर्थ्यन्तमेव ब्रह्मपदमायातीति तत्र षष्ठीपरिग्रहस्यैवाभावप्राप्त्या विशेषविचारानवकाशापत्त्या षष्ठीपरिग्रहपूर्वकतद्विशेषविचारोपपत्तये षष्ठीसमासं तावद्वदन् तमुपपादयतीत्यर्थः। चतुर्थीसमासनिराकरणरूपोपपादनापेक्षया तावच्छब्दः। **षष्ठीविशेषेति**। कर्मषष्ठीत्यर्थः। षष्ठ्यां सिद्धायामेव तत् विशेषविचारावसरादिति भावः। **वृत्तिकारान्तरोक्त इति**। ब्रह्मजिज्ञासेति व्याकुर्वद्भिश्चिरन्तनैर्भाष्यकारान्तरैरुक्त इत्यर्थः। ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति ब्रह्मण इति कर्मणि षष्ठी न शेषे इति च शाङ्करीयसमासव्युत्पादनसत्त्वात् तथा षष्ठीसमासप्रदर्शनेन प्राचां वृत्तिकृतां ब्रह्मणे जिज्ञासेति चतुर्थीसमासः परास्तो वेदितव्यः। तादर्थ्यसमासे प्रकृतिविकृतिग्रहणं कर्तव्यमिति कात्यायनीयवचनेनेत्यादिभामतीतत्कल्पतरुग्रन्थसत्त्वाच्च तदनुसारेण प्रवृत्ते मूलटीकाग्रन्थे चतुर्थीसमासवादी शेषषष्ठ्यभ्युपगन्ता वा न शङ्कराभिमतः। किन्तु ततःपूर्व-

प्रवृत्तभास्करादय एव तथाभूता इति ज्ञातव्यम् । तादर्थ्यसमास इत्यादिरूपेण वार्तिकपाठाभावादाह **चतुर्थी तदर्थेति** । मूले **प्रकृतिविकृतीति** पाठः । भामत्यनुसारादुत्तरग्रन्थानुसाराच्चेति ज्ञेयम् । एतद्वार्तिकार्थकथनपरत्वाभावादुक्तं **लब्धार्थेति** । अयमाशयः । चतुर्थीतदर्थार्थबलिहितसुखरक्षितैरिति सूत्रस्य ह्ययमर्थः । चतुर्थ्यन्तःशब्दः प्रकृतत्वात्तदिति परामृश्यते । सामर्थ्यादनेन तदर्थो लक्ष्यते । तथाच तदर्थेत्यनेन यत्तदर्थार्थ इति लभ्यते । यूपायेति चतुर्थ्यन्तार्थभूतयूपार्थं यद्दारु तत्तदर्थपदेन प्राप्नोति । तद्वाचिना अर्थादिभिश्च चतुर्थ्यन्तं समस्यत इति । अत्र वार्तिकं चतुर्थी तदर्थमात्रेण चेत्सर्वप्रसङ्गोऽविशेषादिति । यद्यप्यस्य चतुर्थी तदर्थमात्रेण चेत्सर्वप्रसङ्गः । सर्वस्य चतुर्थ्यन्तस्य तदर्थमात्रेण सह प्रयोगो भवति । समासः प्राप्नोति । अनेनापि प्राप्नोति रन्धनाय स्थाली । अवहननायोलूखलमिति । किं कारणमविशेषात् । न हि कश्चिद्विशेष उपादीयते । एवंजातीयकस्य चतुर्थ्यन्तस्य तदर्थेन सह समासो भवतीति । अनुपादीयमाने विशेषे सर्वप्रसङ्ग इति भाष्योक्तव्याख्यानान्नास्य प्रकृतिविकृतिभावस्थले तदर्थसमास इत्येतत्परत्वमिति तल्लब्धार्थकथनपरत्वोक्तिः कथमित्याभाति । तथापि विकृतिः प्रकृत्येति चेदश्वघासादीनामुपसंख्यानमिति तद्वार्तिकोत्तरवार्तिकपर्यालोचनया पूर्ववार्तिके प्रकृतिविकृतिभावानाश्रयणेन तदर्थमात्रविवक्षायां सर्वाविशेषप्रसङ्गः आयाति । यदि पुनर्विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यत इत्येतल्लक्षणं क्रियत इति भाष्योक्तेर्विशेषलक्षणाश्रयणे स नायातीति मात्रग्रहणबलेन सूचनादुक्तार्थलाभोऽनेन वार्तिकेनेत्यभिप्रायेण तथोक्तिरिति न दोषः । अत एव विकृतिः प्रकृत्येति चेदश्वघासादीनामुपसंख्यानं कर्तव्यमित्यत्र पूर्ववार्तिकलब्धार्थानुवादेनाश्वघासादिषु समासाप्रसङ्गशङ्कावारणायोपसंख्यानमात्रमुक्तम् । अत एव चैतद्वार्तिकद्वयप्रमेयं विकृतिः प्रकृत्येति वक्तव्यम् । अश्वघासादीनामुपसंख्यानमित्येतत्प्रमेयद्वयतया भाष्ये तत्तर्हीदं बहु वक्तव्यमित्यादिग्रन्थे उक्तम् । अविशेषादित्यनन्तरं विकृतिः प्रकृत्येति चेदित्यस्यापि पाठात्तल्लाभ इत्यप्याहुः । इति वार्तिकेत्यत्रेतिशब्दस्य प्रकारार्थत्वादाद्यर्थत्वाद्वा तदुत्तरवाक्यशेषग्रह इत्यप्याहुः । **उपलक्षणं चैतदिति** । वार्तिककृता नियमितत्वादित्येतदुपलक्षणमित्यर्थः । **भाष्योक्तज्ञापकेति** । वक्ष्यमाणपृथग्बलिरक्षितग्रहणरूपसूत्रकारीयज्ञापकेत्यर्थः । **अश्वघासादिष्विति** । प्रकृतिविकृतिभावरहितेष्विति शेषः । आदिपदेन विभाषा सेनासुरेत्याद्युदाहरणभूतश्वश्रूसुराहस्तिविधाऽनड्वच्छालेत्यादेः परिग्रहः । (श्वश्रूभ्यः सुरा हस्तिभ्यो विधा, विधान्नविशेष इति मञ्जरी ।) अश्वघासादिषु समासानुपपत्तिपरिहाराय वार्तिकोक्तोपसंख्यानं परित्यज्य षष्ठीसमासविधानं किमर्थमित्यत उक्तं **विकृतिः प्रकृत्येति चेदित्यादि** । यद्यप्यश्वघासादीनामुपसंख्यानमित्येतावानेवांश उदाहार्यस्तथापि प्राक्तच्छेषस्यानुदाहृतत्वाद्वा संपूर्णवार्तिकस्वरूपप्रतिपत्तये वा प्रागुक्तरीत्या विकृतिः प्रकृत्येति चेदिति वार्तिके प्रतिपाद्यतया विकृतिः प्रकृत्येति वक्तव्यमिति अश्वघासादीनामुपसंख्यानमिति च प्रमेयद्वयस्य भाष्यकारेणोक्तत्वात् तदुभयस्य प्रत्येकं निराकरणाच्च तदनुसारेणात्रोभयं निराकर्तुं प्रमेयद्वयानुवादलाभाय वा विशिष्टोदाहरणम् । अत्र टीकायामुपसंख्याने उक्तेऽपि भाष्यकारेणाश्वघासादयः षष्ठीसमासा भविष्यन्तीति समासान्तरविधानान्नानुपपत्तिरिति संबन्धः । अनयोक्त्यैव तदुपसंख्यानं प्रत्याख्यातमिति सूचनादश्वघासादय इत्यस्योपसंख्यानं वार्तिकप्रत्याख्यानत्वमिति लाभेनोपसंख्यानं प्रत्याचक्षाणेन समासान्तरविधानादिति विन्यासः सिद्ध्यति । विकृतिः प्रकृत्येति चेदित्यंशोक्तप्रमेयनिराकरणमपि भाष्यकृता कृतमस्तीति प्रतिपादनाय भाष्यकारविशेषणं **तदर्थमात्रेणे**त्यारभ्य **प्रत्याचक्षाणेने**त्यन्तम् ।

प्रत्याख्यानोपायकथनं प्रयोजनसिद्ध्येत्यन्तेन कृतम् । यद्यपि पृथगेव वार्तिकद्वयनिराकरणं दर्शनीयम् । तथापि प्रकृतिविकृतिभाव एव तादर्थ्यसमास इत्याश्रयणं रन्धनाय स्थालीत्यादौ समासनिराकरणाय वार्तिककारीयं भाष्यसंमतमेव । बहिस्तद्वक्तव्यत्वमात्रमेव वार्तिककृदुक्तं भाष्यकारो निराकृतवानित्येव विशेषः । उपसंख्यानं तु सर्वथैव निराकृतम् । केनाप्युपायेन चतुर्थीसमासस्य भाष्यकारेणास्वीकारात् । षष्ठीसमासस्यैव स्वीकाराच्च । तथाच वार्तिकद्वयप्रमेयद्वये एकदेशाङ्गीकारसंपूर्णानङ्गीकाररूपवैषम्यं सूचयितुं संपूर्णानङ्गीकारस्थलनिरासमेव प्रधानतया प्रतिपाद्य प्रथमस्थलनिरासं कुर्वता भाष्यकारेणेति तद्विशेषणमात्रकरणमुखेन तदपि निराकृतमिति सूचितमित्येव-मवतारविशेषसूचनाय विकृतिः प्रकृत्येति वार्तिकं प्रत्याचक्षाणेन समासान्तरविधानादिति विन्यास इत्यदोषः । **भूतबलिरित्यादावपीति** । आदिना बलिपदोपेतस्य भाष्याद्युदाहृतस्य महाराजबलिः इत्यादेः रक्षितपदोपेतस्य चाश्वरक्षितं गोरक्षितमित्यादेः सङ्ग्रहः । भूतेभ्यो बलिर्भूतार्थो भवति महाराजाय बलिर्महाराजार्थो भवति । अश्वादिभ्यो रक्षितमश्वाद्यर्थं भवतीति तत्रापि तदर्थेत्यनेनैव चतुर्थीसमाससिद्धेरित्यर्थः । **बलिरक्षितग्रहणमिति** । हितसुखग्रहणं तु न ज्ञापकम् । हितसुखयोगे चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैरिति सूत्रेण विहितचतुर्थ्याः प्रतिपद-चतुर्थीत्वेन तदर्थचतुर्थीत्वाभावादिति भावः । आचार्यप्रवृत्तीति सूत्रकारीयप्रवृत्तीत्यर्थः । **ज्ञापकाश्रयणेनेति** । प्रकृतिविकृतिभाव एव तादर्थ्यसमासस्य ज्ञापकमाश्रित्येत्यर्थः । प्रकारान्तरेणेति विकृतिश्चतुर्थ्यन्ता प्रकृत्या समस्यत इति सूत्रार्थबलेनैवेत्यर्थः । वार्तिकप्रयोजनं रन्धनाय स्थालीत्यादौ समासनिवृत्तिरूपम् । प्रकारान्तरेण या वार्तिकप्रयोजनसिद्धिस्तयेति तत्प्रतिपादनेनेत्यर्थः । तदेवं भाष्यकारविशेषणस्यान्यार्थत्वेनोपसंख्यानवार्तिक-निरासकत्वेन भाष्यकारस्वरूपाभिधायकत्वानङ्गीकारादस्य विशेषणस्यात्रानुपयोग इति शङ्कानवकाशः । अत एव भाष्योक्तज्ञापकबलतोऽपीति सामान्येनैव प्रागभिहितम् । अत एव च विकृतिः प्रकृत्येति वार्तिकं प्रत्याचक्षाणेनेत्यत्र तावदेकदेशस्यैव ग्रहणम् । तावतैव तादर्थ्यसमासे प्रकृतिविकृतिभावो विवक्षणीय इत्यस्य प्रागुक्तरीत्या प्राप्तेः । उपसंख्याने उक्तेऽपि समासान्तरेति वचनविन्यासादेवोपसंख्यानं निराकर्तुमिति लाभादिति तु प्रागेवोक्तम् । तथाहि तन्निराकरणप्रकारः । यदप्युच्यते **अश्वघासादीनामुपसंख्यानमिति** । न कर्तव्यम् । अश्वघासादयः षष्ठीसमासा भविष्यन्ति । यद्धि यदर्थं भवति । अयमपि तत्राभिसंबन्धो भवत्यस्येदमिति । तद्यथा गुरोरिदं गुर्वर्थमिति । ननु स्वरभेदो भवति । चतुर्थीसमासे सति पूर्वपदप्रकृतिस्वरत्वेन भवितव्यम् । षष्ठीसमासे पुनरन्तोदात्तत्वेन । नास्ति भेदः । चतुर्थीसमासे सत्यपीत्यादि । अयमपीति भाष्यवाक्यं चैवं कैयटे विवृतम् । तादर्थ्यं संबन्धविशेषः । विशेषे च सामान्यमवश्यं भवतीतिवन्मात्रविवक्षायां षष्ठी प्रवर्तत इति नानुपपत्तिरिति । अश्वघासादिषु तादर्थ्यसमासो न स्यादित्यनुपपत्तिर्नास्तीत्यर्थः । वार्तिककारस्य तृतीयान्ततया प्रकृतत्वात् कर्त्राकाङ्क्षायाः उक्ततृतीयान्तेनैव पूर्तिरिति भ्रमनिरासायाह **भाष्यकृतेति शेष इति** । उक्तशेषपूरणस्य प्रयोजनान्तरमाह **एवं चेति** । अत एव परिमलेऽपि कात्यायनग्रहणमनादरेण शब्दाभियुक्तमात्रोपलक्षणं भाष्यकाराभिप्रायमिति कल्पतरुगतिः कृतेति भावः । ननु विकृतिश्चतुर्थ्यन्ता प्रकृत्येति सूत्रार्थनिर्णये भाष्यरीत्या प्राप्ते सति कथं तद्विरुद्धं प्राचि तन्त्रे चतुर्थीसमासाश्रयण-मित्यत आह **एवं च भाष्यकृदिति** । तर्हि पूर्वतन्त्रोक्तप्रकारो मूलकृतापि कुतो नाश्रित इति मन्दाशङ्कानिरासाय वस्तुस्थितिकथनाय वा आह **भाष्यकृदुक्तरीत्येति** । स्वयं तन्निषेधः कृतः । भाष्यकृदुक्तिभयादेवेति पाठः ।





**जिज्ञासेतीति** । शबरवचनमिति शेषः । **अर्थप्रदर्शनमिति** । षष्ठीसमासलब्धार्थिकार्थप्रदर्शनपरमित्यर्थः । **षष्ठीसमास एवेति** । तस्य ज्ञातुमिच्छेति निगमनवाक्येन षष्ठीसमासविभावनादिति भावः । आत्मनेपद-परस्मैपदशब्दयोः प्रकृतिविकृतिभावाभावेऽपि तादर्थ्यसमासस्तु वैयाकरणाख्यायां चतुर्थ्या इति षष्ठतृतीयसूत्रेणालुक् विधानसामर्थ्यात् । बलिरक्षितग्रहणवैयर्थ्यापत्त्योक्तज्ञापकादेव सर्वत्र तादर्थ्यसमास इत्यस्य वक्तुमशक्यत्वादिति वदन्ति । यत्त्वन्यथाख्यातौ ननु धर्माय जिज्ञासेत्यादाविवेत्यादिना न षष्ठीसमासप्रदर्शनमित्यन्तेन न पुनर्धर्मा-येत्येतदवतारादिकम् । यच्च तादर्थ्यसमासे प्रकृतीत्यस्य उक्तवार्तिकद्वयानुवादत्ववचनादि । तत्सर्वं वाक्यार्थविनोदे सविवरं गुरुचरणैरेव निराकृतम् । अधिकं तत्र तत्रोच्यते । यदपि वार्तिककृतेत्युपलक्षणं भाष्यकारेणापीत्यपि द्रष्टव्यमित्यभिधाय तथाहि भाष्यं यदि हीत्यादिविषय इतीत्यन्तमुक्तम् । तत्तु परिमले अत्रेदं भाष्यकारीयं वार्तिक-प्रत्याख्यानमित्यादिग्रन्थे यदि हि तदर्थेत्यादि ग्रन्थोऽस्ति स भाष्यग्रन्थरूप इति भ्रान्तिमूलम् । अर्थानुवाद-त्वाभिमाने वा प्रकृतिविकृतियत्नस्तावन्न कर्तव्यः । सूत्रे बलिरक्षितग्रहणेन ज्ञापकेन तदर्थसिद्धेरिति प्रतिपाद्य तदुपपादनाय यदि हीत्यादिग्रन्थस्य परिमले सत्त्वेन तदनुसारेण प्रकृतीत्यादेरपि प्रथमतो वक्तव्यतया यदि हीत्या-देरेव भाष्यग्रन्थत्ववचनायोगः । भाष्यग्रन्थस्तु यत्तावदुच्यते **विकृतिः प्रकृत्येति वक्तव्यमिति** । न वक्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यत इति । यदयं बलिरक्षितग्रहणं करोतीत्यादिर्द्रष्टव्यः । भाष्यकृता तदर्थचतुर्थीसमासस्य प्रकृतिविकृतिभावेन नियमस्य सूत्रकारीयज्ञापकबलादेव सिद्ध्या बहिः प्रकृति-विकृतिभावो न वक्तव्य इति वार्तिके प्रत्याख्यानकरणेऽपि स्वयं प्रकृतिभावस्थले तदर्थसमास इति नियमाकरणेन भाष्यकृतापीति समुच्चयायोगाच्चेत्यास्ताम् । यदपि नन्वेवं चेत्कथमश्वघासादीनामुपसंख्यानमिति वार्तिकमित्यत आह **प्रकृतिविकृतिभावरहितेष्विति** । प्रतिविहितं भाष्यकृतेति शेष इत्यादि वर्णितम् । तत्रैवं चेदित्यस्य कोऽर्थः । प्रकृतिविकृतिभाव एव चतुर्थीसमासनियमस्वीकार इत्यर्थ इति चेत्तर्ह्यश्वघासादिषु प्रकृतिविकृतिभावराहित्यात् कथं चतुर्थीसमास इत्येतच्छङ्कापरिहारायोपसंख्यानवार्तिकस्य प्रवृत्तेरित्यस्य स्पष्टतयोपसंख्यानकथंताशङ्काया अनुत्थानापातात् । भाष्यकारेण वार्तिककारीयमुपसंख्यानं प्रत्याख्यातमतो न तदाश्रयणेनेह चतुर्थीसमासाश्रयणं युक्तमित्यर्थ इति भवतोत्तरत्र मूलार्थकथनात्तदनुसारेणोपसंख्यानाश्रयणेन चतुर्थीसमासाश्रयणं ब्रह्मजिज्ञासेत्यत्र कुतो न कृतमिति शङ्कावाक्यार्थप्राप्त्या पूर्वशङ्कितप्रकारस्य परिहारवाक्ये निराकरणप्रतीत्यभावेन च पूर्वोत्तरग्रन्थयोरपरामर्श-मूलकत्वप्राप्तेश्च । परिहारग्रन्थानुरोधेन प्रकृतिविकृतिभाव एव चतुर्थीसमासनियमे उपसंख्यानाश्रयणं कुतो न कृतमित्येव शङ्कार्थो विवक्षित इति चेन्न । भाष्यवार्तिककाराभ्यां प्रकृतिविकृतिभाव एव चतुर्थीसमासनियमना-त्तदङ्गीकारश्चेत् ब्रह्मजिज्ञासापदस्य प्रकृतिविकृतिभावशून्यस्याश्वघासादिषूपसंख्यानं कुतो न कृतमित्यस्यासङ्गत्य-प्रतीतेः । चतुर्थीसमासो हि तादर्थ्ये वक्तव्य इत्यादि भवद्वक्ष्यमाणप्रकारेण भाष्यकारीयप्रत्याख्यानप्रकारप्राप्त्या तद्व्यावर्त्यतया प्रकृतिविकृतिभावाभावेऽपि तद्भावाश्रितमुपसंख्यानमस्त्विति शङ्कनस्य व्याहतत्वाच्च । अथैवं मन्यसे प्रकृतिविकृतिभावनियमेऽश्वघासादिषु तदभावेन चतुर्थीसमासप्राप्त्यसंभवात् तत्संभवायोपसंख्यानवार्तिकं कथम् । बलिरक्षितग्रहणरूपभाष्योक्तज्ञापकविरोधात् । अत एवैवं चेदित्यस्य भाष्योक्तज्ञापकाश्रयण इत्यर्थ इति । तदप्यसत् । स्वोपलक्षितोपरि प्राप्तशङ्कापरिहाराय मूलावतारस्याश्रयणीयत्वापातात् । उत्तरमूलेन भाष्यकृता तद्वार्तिकं प्रत्याख्यात-





मेवेति । न तत्साधुत्वविचारेण कृत्यमिति कथञ्चित्परिहारप्रतीतिकल्पनोपपत्तावपि भवता, अतो न तदाश्रयणेनेह चतुर्थीसमासाश्रयणं युक्तमिति व्याख्यानेन शङ्कापरिहारयोरनानुगुण्यापत्तेश्च । समासद्वये स्वरवैषम्याभावाच्चतुर्थीसमाससिद्ध्यर्थमुपसंख्यानं वार्तिके कुतः कृतम् । षष्ठीसमास एव कुतो न स्वीकृत इति परिहारार्थकथनं चातितरामसङ्गतम् । भवदुक्तशङ्काया अन्यविषयत्वादित्यलं शोध्यस्वरूपविकल्पमात्रफलकेन कुसूलक्षालनायासेन । यदपि प्रकृतिविकृतिभावरहितेष्वित्येतद्विशेषणव्यावर्त्यशङ्कोत्थापनम् । तदपि न । भवदुक्तैवं चेदित्यस्य प्रकृतिविकृतिभाव एव चतुर्थीसमासनियम इत्यर्थकत्वेन तन्नियमस्य प्रागुपपादनेन च तन्नियममङ्गीकृत्य बाधकाभाववचनस्य पूर्वापरामर्शमूलकत्वात् । प्रकृतिविकृतिभावरहितेष्वित्येतस्यैव शङ्काबीजतया तदाश्रयणेन शङ्काप्रवृत्तिसिद्ध्या वार्तिकप्रत्याख्यानं मध्ये उपवर्ण्य पश्चाद्बाधकाभावशङ्कापरिहाराय प्रकृतीत्येतद्विशेषव्यापारवर्णनायोगश्च । यदपि चतुर्थीसमासो हि तादर्थ्ये वक्तव्य इत्यादि । तदप्यपरामर्शमूलम् । तदर्थमात्रेण समासे रन्धनाय स्थालीत्यादावपि तत्समासप्रसक्तिवारणाय प्रकृतिविकृतिभावाश्रयणे कृते तथा सत्यश्वघासादौ कथमिति शङ्कायां तत्परिहारायोपसंख्याने वार्तिककृतोक्तेऽपि तदसहमानेन भाष्यकारेण संबन्धमात्राश्रयणेन षष्ठीसमासे संभवति वृथोपसंख्यानाश्रयणायोगात् । स्वरवैषम्याभावेन तद्विशेषस्य फलत्वमाश्रित्य चतुर्थीसमासाग्रहस्यायोगाच्चेति प्रतिपादिते वैषम्याभावे चतुर्थीसमासोऽपि किन्न स्यादिति शङ्काया एवानुत्थानात् । तादर्थ्यसमासस्यैव वक्तव्यतया तस्य च प्रकृतिविकृतिभावस्थल एव नियमितत्वेनाश्वघासादिषु च तदभावेन तादर्थ्ये चतुर्थीसमासायोगेन तत्समासार्थमुपसंख्यानमयुक्तमिति तदयुक्तत्वेन परिहारकरणस्य चायुक्तत्वात् । न हीदानीं वार्तिकोक्तमुपसंख्यानं वार्तिकोक्तप्रकृतिविकाराभावाश्रयणेनैव दूषयितुं मूलप्रवृत्तिः । उपसंख्यानवादिना तादर्थ्यानुपपत्तावपि बलिहितादिसमकक्षतया घासादियोगेऽपि समास इत्यभिहिते तादर्थ्ये वक्तव्य इत्यस्याज्ञानमूलकत्वाच्च । भवतैव न पुनर्धर्मायेत्येतदवतारावसरे चतुर्थीतदर्थमात्रेण चेदित्यादिवार्तिकार्थो यदोक्तस्तदा अश्वाय घासोऽश्वघास इति समासो न प्राप्नोति । प्रकृतिविकारभावाभावात् । अतस्तत्सङ्ग्रहार्थम् उपसंख्यानं यन्नान्तरं कर्तव्यमिति व्याख्यातत्वेन स्वोक्तिविस्मरणापातश्च । उपसंख्यानं नाम तादर्थ्य एवोपसंख्यानमिति स्वभ्रान्तिप्रतिपन्नार्थस्योपसंख्यानकर्तर्यारोपयितुमशक्यत्वाच्च । वार्तिककृतैव तादर्थ्ये चतुर्थीसमासे प्रकृतिविकृतिग्रहणं व्याख्याय अश्वघासादिषु च तदसंभवेन तादर्थ्यचतुर्थीसमासाभावमाशङ्क्य तत्र तदुपपत्तये तादर्थ्य एव तस्य उपसंख्यानं स्वीकृतमिति कल्पनायाः स्वपाण्डित्यप्रदर्शनमात्रत्वाच्च । उपसंख्यानस्य त्वदुक्तरीत्या भाष्ये प्रत्याख्यानाभावेन तत्प्रत्याख्यातप्रकारोपरि त्वदीयोक्तचर्चस्य वृथैवावतरणाच्च । एतेनैव तादर्थ्यचतुर्थीसमासे प्रकृतिविकृतिभावपरिग्रहे अश्वघासादीनां तत्समासे कथमुपसंख्यानं वार्तिककृतोक्तमिति शङ्कावाक्यस्य परमार्थतोऽर्थ इति कल्पनं च परास्तम् । वार्तिकं स्वरवैषम्याभावेन प्रत्याख्यातमित्यादेस्तदुत्तरत्वाभावात् । पूर्वोक्तदूषणावारणाच्च । यदप्यत एवेदं भाष्यकारीयमित्यादिना शबरवचनस्य भट्टाचार्यैर्गतिः कृतेत्युक्तमपि निरस्तम् । उक्तप्रकारेण वार्तिकप्रत्याख्यानादेरभावादित्यास्ताम् । यत्तु नारायणपण्डिताचार्यैर्यद्यपि यूपदारू-अश्वघासा इति समस्तप्रयोगद्वयमपि साध्वेव । तदर्थं चतुर्थीसमासे विकृतिग्रहणमप्यनर्थकम् । अश्वघासादिव्युदासश्च सिद्धान्ते नेष्यत एव । न च तत्र षष्ठीसमास एवेष्यते । चतुर्थीसमासस्तु व्युदस्यत इति वाच्यम् । फले विशेषाभावेन व्युदासवैयर्थ्यात् । तथापि षष्ठी, चतुर्थी तदर्थ इति सूत्रेण चतुर्थीसमासे चतुर्थ्यन्तपूर्वपदस्य





प्रकृतिस्वरत्वानुशासनात्फले वैलक्षण्यसिद्ध्यर्थमुक्तयन्नस्यावश्यकत्वमेव । अन्यथा यूपदार्वित्यादाविवाश्वघास इत्यत्रापि पूर्वपदप्रकृतिस्वरत्वमापद्यते । इष्यते च समासस्येत्युत्सर्गसूत्रेण समासोदात्तस्वर इतीति व्युत्पादितम् । तदसत् । वृत्तिभाष्ययोः रन्धनाय स्थालीत्यादौ समासप्रसङ्गवारणाय प्रकृतिविकारग्रहणे उक्तेऽपि तदर्थमित्युक्ताश्वघास इत्यत्र तदभावाय तद्ग्रहणानुक्त्या तद्वैयर्थ्यशङ्काया अयोगात् । यूपदार्विति समासार्थमित्यर्थस्तु तदर्थमित्यस्यायुक्तः । न हि यूपदार्वित्यत्र तादर्थ्यचतुर्थीसमासानुपपत्तिप्रसक्तौ प्रकृतिविकृतिग्रहणेन तदुपपत्तिराकरे कृता । अपि चाश्वघास इत्यत्र चतुर्थीसमासनिवृत्त्यर्थं विकारग्रहणमनर्थकमित्युक्त्यनन्तरमश्वघासादिव्युदासश्चेति सामान्याकारेणोक्तिरयुक्ता । न च तत्र षष्ठीति विशेषशङ्का च नावकाशमर्हति । फले विशेषाभावेन व्युदासवैयर्थ्यादिति स्वयमेवोक्ताङ्गीकार-सूचकतथापीत्येतन्निर्देशपूर्वकवैषम्योपपादनायोगः । शङ्काया निर्दलत्वप्रसङ्गश्च । किं च प्रकृतिविकृतिभावाश्रयणेन रन्धनाय स्थालीत्यादौ समासनिषेधे तदभावेनैवाश्वघास इत्यादावपि समासाभावप्रसङ्ग इति शङ्कायां वार्तिककृता बलिहितादियोगे भूतबलिरित्यादौ समासस्येव घासशालादियोगेऽपि समासस्याश्वघासो अश्वशालेत्यादौ सिद्ध्यर्थं घासादिपदानामुपसंख्यानमात्रं वर्णितम् । भाष्यकारेण तु प्रकृतिविकृतिभावेनैव तादर्थ्यचतुर्थीसमासनियममाश्रित्य रन्धनाय स्थालीत्यादौ समासं व्युदस्य, तर्हि अश्वघासादौ कथमित्याशङ्कापरिहारस्य अश्वघासादिषु संबन्धसामान्य-विवक्षया षष्ठीसमासेनैवोपपत्तेर्न चतुर्थीसमाससिद्ध्यर्थमुपसंख्यानं कर्तव्यमिति उपसंख्यानपक्षं प्रदूष्य स्वाभिमत-षष्ठीसमासाभिधानं समासाभिधानं च कृतमिति भाष्यग्रन्थतः स्पष्टं प्रतीयते । सति चैवं यद्यपीत्यादिशङ्कायाः कथमवकाशः । भाष्ये अश्वघासादौ स्वरवैषम्याभावेन वार्तिके प्रत्याख्याते स्वरवैषम्यमुपपाद्य वार्तिकारम्भसमर्थनस्यैव शङ्कनीयत्वाच्च । अश्वघास इत्यत्र यूपदार्वित्यत्रेव पूर्वपदप्रकृतिस्वरस्य वस्तुतोऽभावेन तत्स्वरोपपादनेन वार्तिका-रम्भसमर्थनायोग इत्यङ्गीकारे वा पूर्वप्रनाड्या स्वरवैषम्याभावेन भाष्योक्तं प्रत्याख्यानं स्वीकृत्य तत्राधिकयुक्त्या स्वरवैषम्याशङ्कनपूर्वकं तत्परिहारस्य वा वक्तव्यतया भाष्यकारीयस्य चतुर्थीसमासपरित्यागपूर्वकषष्ठीसमासा-श्रयणस्य तेनैवाशङ्क्य निराकृतस्वरवैषम्यं मूलीकृत्य यदुपपादनं तस्यासङ्गतत्वाच्च । अश्वघासादिषु चतुर्थीसमास-निवृत्त्यर्थं प्रकृतिग्रहणमिति भ्रान्तिमूलत्वं तूक्तमेव । अत एव तदर्थसमास एव पूर्वपदप्रकृतिस्वरत्वमन्यत्र नेति विकृतिश्चतुर्थ्यन्तेत्यादिना भाष्ये प्रतिपादितम् । किञ्चैवं स्वाङ्गीकृतषष्ठीसमासे स्वरवैषम्यरूपफलवैषम्यहेतुतया अभिप्रेत्य वार्तिकोक्तोपसंख्यानस्य स्वरवैषम्याभावेन दूषणं भाष्यकारेण कृतमित्यङ्गीकृतं स्यात् । तथा च भाष्यकारस्यानवधेयवचनता स्वीकृता स्यादिति साधुसमर्थितो भाष्याभिमानः । तस्मादेवं मन्यामहे यत्स्वरवैषम्यं भाष्योक्तपक्षे अनुकूलमिति भ्रान्तिमूलकमेवेदं व्युत्पादनमिति । अपि च उपसंख्यानं हि न तावत्तादर्थ्यसमास एवेति अभ्युपगन्तुं युक्तं तादर्थ्यसमासे प्रकृतिविकृतिग्रहणं स्वयमभिधाय प्रकृतिविकृतिभावशून्याश्वघासादीनां तत्रैवोप-संख्यानप्रतिपादनस्यासङ्गतत्वापातात् । तस्माद्बलिहितादियोग इव घासादियोगेऽपि चतुर्थीसमासमात्रे उपसंख्यानं वार्तिककृता कृतमिति वाच्यम् । अस्मिंश्च पक्षे चतुर्थीसमासमात्रमायाति । न तु पूर्वपदप्रकृतिस्वरोऽपि तत्समास-प्रयुक्त आयाति । स हि चतुर्थ्यन्ताभिधेयार्थं यत्तद्वाचिन्युत्तरपदे चतुर्थ्यन्तार्थस्य प्रकृतिभावविधायकेन चतुर्थी तदर्थ इति षष्ठाध्यायगतस्वरसूत्रेण वाच्यः । तत्र च सूत्रे प्रकृतिविकारभावे चायमिष्यत इति वृत्तिकारोक्तेस्तादर्थ्यसमास-त्वादेव प्रकृतिविकृतिभावप्राप्त्या तत्रैव पूर्वपदप्रकृतिस्वर इति नियमसिद्ध्या अश्वघास इत्यादावतथाभूते तत्स्वराप्राप्तेः ।





उक्तं च भाष्ये। चतुर्थीसमासे सत्यप्यन्तोदात्तत्वेनैव भवितव्यम्। कथम्। आचार्यप्रवृत्तिर्ज्ञापयति। विकृतिश्चतुर्थ्यन्ता प्रकृतिस्वरा भवति । न चतुर्थीमात्रमिति । यदयं चतुर्थी तदर्थे अर्थोक्ते चेत्यर्थग्रहणं च करोति । कथं कृत्वा ज्ञापकमित्यादि । तथाच तद्भाष्योक्तरीत्या अर्थे क्ते चेत्युत्तरसूत्रयोरर्थपदोक्ते चोत्तरपदे सति पूर्वपदं चतुर्थ्यन्तं प्रकृतिस्वरं भवतीति विधानान्मात्रर्थं गोहितमित्याद्युदाहरणाच्च तत्सूत्रभाष्यमपि तादर्थ्य एव स्वरविधानमिति प्राप्त्या तत्र तत्स्वरस्य च चतुर्थी तदर्थ इति प्रथमसूत्रेणैव सिद्धचोत्तरसूत्रयोर्वैयर्थ्यमेव प्राप्नोतीति तत्सार्थक्याय प्रथमसूत्रे प्रकृतिविकृतिभावापन्नयोरेव तादर्थ्यसमासोऽयं तत्र तत्र चतुर्थ्यन्तपूर्वपदेनाभिधेयं यद्यूपादि तदर्थं यद्दार्वादि तद्वाचिन्युत्तरपदे चतुर्थ्यन्तपूर्वपदस्य प्रकृतिस्वरो भवतीति विधाननियमस्याङ्गीकार्यतया चतुर्थ्यन्तविकृतेरेव प्रकृतिस्वरविधानसिद्ध्याऽश्वघास इत्यादौ च यूपदार्वित्यत्रेव चतुर्थ्यन्तविकृतेरभावान्न तस्याः प्रकृतिस्वरापत्तिरिति कथं पूर्वपदप्रकृतिस्वरत्वस्य चतुर्थीसमासत्वमात्रेण प्राप्तिः स्यात्। तदभावे च समासद्वये स्वरवैषम्यरूपफलवैषम्य-माश्रित्य चतुर्थीसमासप्रयुक्तपूर्वपदप्रकृतिस्वरनिवृत्त्यर्थमन्तोदात्तत्वार्थं च षष्ठीसमासयत्नाश्रयणं सार्थकमिति यद्भवद्भि-र्वर्णितं तत्पामरजनमोहनायैवेति सिद्ध्यतीत्यलम्। सिद्धे शब्दार्थसंबन्ध इत्येतत्संबन्धिमहाभाष्ये लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियम इत्याद्युक्त्वा किमिदं धर्मनियम इति धर्माय नियमो धर्मनियम इत्यादि विकल्पप्रदर्शनम्। तत्कैयटे च धर्मायेत्यत्र चतुर्थ्या तादर्थ्यं प्रतिपाद्यते। संबन्धसामान्ये तु षष्ठीं विधाय समासः कर्तव्यः। चतुर्थीसमासस्य प्रकृतिविकारभाव एव विधानादित्युक्तम्। तदुपपादनीयमस्ति। ननु तथापि भाष्योक्तः षष्ठीसमासो नाश्रयितुं युक्तः। तथा सति रन्धनाय स्थालीति चतुर्थीविषयेऽपि रन्धनस्थालीति षष्ठीसमासप्रसङ्गात् । न च कैय्यटोक्तरीत्या विग्रहवाक्यात्प्रतीयमानस्यार्थस्य समासेनानभिधानान्न रन्धनस्थाल्यादयः षष्ठीसमासा भवन्तीति वाच्यम्। यथा हि संबन्धविशेषरूपे तादर्थ्ये सति संबन्धसामान्यमवश्यंभावीति तन्मात्रविवक्षायां षष्ठीमङ्गीकृत्याश्वघासादिकं व्युत्पाद्य रन्धनस्थालीत्यादिकमनभिधानान्न भवतीति समाधीयते तथा तदर्थचतुर्थीसमासविधावपि तादर्थ्यमात्रमेवाङ्गीकृत्य यूपाय दारू यूपदार्वित्यादिकं व्युत्पाद्य रन्धनाय स्थालीत्यादौ तादर्थ्यसमासप्रसङ्गश्चानभिधानान्न भवतीति समाधानस्य कर्तुं शक्यत्वेन तत्समासनिवृत्तये प्रकृतिविकृतिग्रहणस्यानावश्यकत्वापातात् । अत एव मञ्जर्यामपि बलिरक्षित-ग्रहणस्य ज्ञापकत्वादिनिरासेन प्रकृतिविकारभाव एव समास इत्यस्य तु प्रयोजनं चिन्त्यमिति प्रतिपादितमिति चेत्सत्यम् । तथापि भाष्यकृता बलिरक्षितग्रहणज्ञापकेन तादर्थ्यसमासे विकृतिग्रहणसिद्धिनिरूपणात् तदनुसारेणैव अत्रोपसंख्यानप्रत्याख्यानप्रतिपादनाभिप्रायेणैव भाष्यकृतेति शेष इति टीकायामुक्तत्वात् भाष्यकारोक्तपक्षे बलिरक्षितग्रहणस्य ज्ञापकताश्रयणाभिधानादिना प्रकृतिविकारभावनियमे प्राप्तेर्वर्णनादिना संबन्धस्य संबन्धत्वं तादर्थ्यत्वरूपभिन्नप्रकारकबोधस्यानुभवसिद्धस्य त्यक्तुमशक्यतया अश्वघासादिषु संबन्धत्वरूपेण संबन्धप्रतीत्या षष्ठीसमासाश्रयणोपपत्तावपि रन्धनायेत्यादौ प्रतीतसंबन्धस्य तादर्थ्यत्वरूपेणैव बोधेन संबन्धत्वसामान्येन बोधाभावेन अश्वघासादिवैषम्येन षष्ठीसमासापत्तेरभावात् । न हि विशेषे सामान्यं संभवतीत्युक्ते यूपदार्वादावपि सामान्यं विवक्षणीयमिति विवेकी शङ्कितुमर्हति। येन रन्धनायेत्यादावतिप्रसङ्गः। अत एव न माषाणामश्नीयात्। दाशरथाय मैथिलीत्यादिप्रयोगा अप्युपपन्नाः। अत एव च पूर्वसदृशसमोनार्थेति सदृशशब्देन तृतीयासमासाभिधायकसूत्रीय-भाष्ये सदृशप्रतिरूपयोः सादृश्य इति षष्ठगतस्वरसूत्रीयभाष्ये च सदृशग्रहणे उक्तम्। किमुक्तम्। सदृशग्रहणमनर्थक-





मित्यादि प्रतिपादनानुसारेण कैयटादिभिरपि यत्प्रतिपादितम् । सादृश्यवाचिनि तत्पुरुषे सदृशप्रतिरूपयोरुत्तरपदयोः पूर्वपदं प्रकृतिस्वरं भवतीत्यर्थकसदृशेति सूत्रे सदृशग्रहणं किमर्थम् । न च मातृसदृशः पितृसदृश इत्यादौ पूर्वपदप्रकृतिस्वरार्थमिति वाच्यम् । सदृशशब्दयोगे हि तुल्यार्थैरतुलेति सूत्रेण तृतीयायां पूर्वसदृशसमेति सूत्रेण तृतीयासमासे तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीया कृत्या इति स्वरसूत्रेण तुल्यार्थतृतीयान्तस्य पूर्वपदस्य प्रकृतिस्वरविधानेन तेनैव मातृसदृश इत्यादावपि स्वरसिद्धेः । न च तुल्यार्थैरिति सूत्रेऽन्यतरस्यां ग्रहणेन षष्ठ्या अपि विधानात् षष्ठीपक्षे षष्ठीति सूत्रेण समाससिद्धावप्युक्तस्वराप्राप्तेस्तत्प्राप्त्यर्थं सदृशग्रहणमर्थवदिति वाच्यम् । तर्हि तत्रत्यसदृशग्रहणस्योक्तप्रयोजनकत्वेऽपि दास्याः सदृश इत्यादावलुक्समासे स्वरसिद्ध्यर्थत्वेऽपि च पूर्वसदृशेति सूत्रे सदृशग्रहणं त्वनर्थकमेव । मातृसदृश इत्यादावपि षष्ठीसमासतृतीयासमासयोः रूपे विशेषाभावात्स्वरेऽप्युक्तरीत्या विशेषाभावात् षष्ठीसमासमेवाश्रित्य सदृशेति सूत्रेण च पूर्वपदप्रकृतिस्वरोपपत्तौ पूर्वसदृशेति सूत्रीयसदृशग्रहणस्यानर्थक्यादित्यादि । तत्र च प्रतिपादितेऽर्थे अस्तु नाम स्वरे रूपे वा विशेषाभावस्तथाप्यस्ति शाब्दबोधवैलक्षण्यम् । पित्रा सदृशः पितुः सदृश इत्येतयोः पितृनिरूपितसादृश्याधिकरणत्वपितृगतसादृश्यनिरूपकत्वरूपार्थद्वयस्यैव क्रमेण प्रतीत्योक्तसमासयोरविशेषाभावात् तृतीयार्थनिर्वाहाय तृतीयासमासोऽप्यावश्यक इति कर्तव्यमेव सदृशग्रहणमिति केचिद्वर्णयन्तीत्यास्तां प्रपञ्चः । **विवक्षितमिति** । षष्ठीसमासव्युत्पादनस्य षष्ठीसामान्यपरिग्रहद्वारा षष्ठीविशेषपरिग्रहसूचकत्वप्रतिपादनोपयुक्तत्वात् विशेषपरिग्रहसूचकत्वं विवक्षितमिति भावः। जिज्ञास्य इत्युक्त्यापि कथं कर्मषष्ठीपरिग्रहलाभ इत्यतः **कृत्यानामिति** मूलम् । तत्र कर्मणि स्मरणं दर्शयति **तयोरेवेति** । **अन्यथेति** मूलम् । कर्मषष्ठीपरिग्रहसूचनाभिप्रायाभाव इत्यर्थः । जिज्ञास्यापेक्षत्वाज्जिज्ञासाया इत्येतच्छाङ्करभाष्यव्याख्यानरूपेच्छायाः प्रतिपत्त्यनुबन्धो ज्ञानं ज्ञानस्य च ज्ञेयं ब्रह्म । नो खलु ज्ञानं ज्ञेयं विना निरूप्यते । न च जिज्ञासाज्ञानं विनेति प्रतिपत्त्यनुबन्धात्प्रथमं जिज्ञासाकर्मैवापेक्षत इत्येतद्भामती मनसि कृत्वाह **जिज्ञासाया ज्ञानं विनेति** । ननु जिज्ञासाशब्दस्य विचारे रूढेरेव स्वपक्षतया यदि च जिज्ञासाशब्दो मीमांसाशब्दवदित्युत्तरमूलव्याख्यावसरे च स्वपक्षतायाष्टीकाकृताप्युपपादनेन च जिज्ञासाया ज्ञानेन विनेत्याद्यसङ्गतमिति चेन्न । एतच्छङ्कापरिहाराय विचारे रूढेरेव स्वपक्षत्वेऽपि जिज्ञासाशब्दात् विचारे ज्ञानसाधनत्वरूपप्रकृतप्रमेयस्य रूढिरूपस्वपक्षेणेव परपक्षभूतलक्षणयापि निर्वाहात्परीत्यापि प्रकृतोपपादनसंभवे किमिदानीं स्वपक्षाग्रहेणेत्यभिप्रेत्य परसिद्धलक्षणापक्षस्यानूदितत्वेनाविरोधादिति टीकाकृतोत्तरत्र प्रतिपादनेन तन्न्यायेनात्रापि परीत्याश्रयणेनैव तद्व्युत्पादनमित्यदोषात् । भक्तिमन्विच्छन्तः ब्रह्मजिज्ञासेत्यादिगीताभाष्येऽपीच्छार्थत्वाश्रयणगतिः परीत्येति ज्ञेयम् । प्रतिपत्तुमशक्यतया प्रतिपत्त्यनुबन्धित्वादित्यनेन येन विना यत्प्रतिपत्तुं न शक्यते तत्तस्य प्रतिपत्त्यनुबन्धीत्युच्यते। प्रतिपत्तावनुबध्यते नियमेन बध्यते इति व्युत्पत्तेः । अधिकमुभयविधविषयतानिरूपणपरग्रन्थेऽस्मदुक्तं ज्ञेयम् । ज्ञानं विनेत्यस्य प्रतिपत्तुमित्याद्युत्तरेण संबन्धः । ततश्चेच्छां प्रति ज्ञानं प्रतिपत्त्यनुबन्धीति शेषः । कर्म विनेत्यस्यापि ज्ञानस्य कर्मप्रतिपत्त्यनुबन्धीति फलम् । **कर्मण इति** । परम्परयेति शेषः । अत्र च पक्षे प्रतिपत्तिव्यापारानुबन्धितारूपेण द्विविधविषयतामध्ये प्रतिपत्त्यनुबन्धित्वपदोक्तसाक्षाद्विषयतायाः कर्मनिष्ठत्वाभावाज्ज्ञानस्य च सकर्मकतयेति पूर्वोक्त्यनुसाराच्च प्रतिपत्तौ विशेषणत्वेनानुबध्यत इति प्रतिपत्त्यनुबन्ध इत्यर्थो विवक्षणीयः । स्वरूपेण निरूपितायां





जिज्ञासायां पश्चात्संबन्ध्यपेक्षा। ब्रह्म च ज्ञानद्वारा जिज्ञासास्वरूपनिरूपकमिति प्रथमोत्पन्नाकाङ्क्षावशेन ब्रह्मजिज्ञासया कर्मत्वेन संबध्यत इत्यर्थो ज्ञातव्यः। एवमेवोदाहृतभामतीव्याख्यावसरे कल्पतरावुक्तेः। **अतादृशसंबन्धीति**। प्रतिपत्त्यनुबन्धिसंबन्धीत्यर्थ इति न कश्चिद्दोषः। वस्तुतस्तु भामतीवाक्यानुकरणेऽपि प्रकारान्तरेणैवार्थः। तथाहि जिज्ञासाया ज्ञानं विनेति जिज्ञासाशब्दस्यानुसन्धानरूपविचारार्थकतायाः स्वपक्षत्वात् ज्ञानं विना ज्ञानरूपतां विना जिज्ञासाशब्दार्थस्य प्रतिपत्तुमशक्यत्वात् जिज्ञासाया ज्ञानरूपत्वादिति यावत् इति लभ्यते। तथा कर्म विनेत्यस्य कर्मणः ज्ञानं प्रति साक्षान्निरूपकत्वेन तज्ज्ञानाभावे ज्ञातुमशक्यत्वादित्यर्थः। एवं च प्रतिपत्त्यनुबन्धित्वमपि कर्मणो यथाश्रुतमेव। साक्षादेव ज्ञानरूपजिज्ञासानिरूपकत्वस्य ब्रह्मणि सत्त्वात्। अत एव जिज्ञासारूप-क्रियोपादानेन क्रियाकारकत्वसंबन्धाश्रयणं चेत्युत्तरग्रन्थोऽपि सङ्गतः। **जिज्ञासा खलु कर्मापेक्षेति** मूलमपि यथाश्रुतमेवेति विवेचनीयम्। **संबन्धमात्रापेक्षेति**। संबन्धिमात्रं विनापि ज्ञानस्य सति कर्मणि निरूपणात्। न हि चन्द्रमसमादित्यं वोपलभ्य कस्यायमिति संबन्धान्वेषणा भवति। ज्ञानमित्युक्ते तु किंविषयमिति विषयान्वेषणा भवतीति भावः। जिज्ञासायाः न्यायविषयत्वमेव। साक्षादित्येतत्तु वेदादीतिकर्तव्यतया पृथक्प्रामाण्यानभ्युप-गमादिति पूर्वत्र वेदादीनामीश्वरमवबोधयतामित्यव्यवहितमूले च समाहितमिति ज्ञेयम्। **ब्रह्म लभ्यत इति**। तस्य करणत्वादिना संबन्धासंभवात्कर्मतयैव लाभ इत्याशयः। **येन षष्ठ्येति**। कर्मादिभ्योऽन्य इत्युक्त्या संबन्धसामान्यं शेषपदोक्तं न कर्मादिरूपं संभवतीत्यतोऽत्र संबन्धिसामान्येत्युक्तावपि कर्मलाभो न संभवतीति येन स्यादित्यर्थः। **तस्येति**। कर्मादिभ्योऽन्यस्य शेषपदार्थस्येत्यर्थः। **यद्येवं शेषो न प्रकल्प्यत इति**। अयमर्थः। भाष्ये हि कः शेषो नामेति प्रश्नवाक्यम्। न तावत्। 'शेषः परार्थत्वादि'ति जैमिनिसूत्रादप्रधाने रूढेरत्राप्रधानं शेषः। सर्वकारकाणां क्रियार्थत्वादप्राधान्येन तेभ्योऽपि षष्ठ्यापातात्। नाप्युपयुक्तादन्यः शेषः। कर्मादिप्रातिपदिकार्थपर्यन्तानामुप-युक्ततया कर्माद्यनन्तरं शेष इति शब्द उच्चार्यमाणः कर्मादिभ्योऽन्यमर्थं प्रतिपादयतीति युक्तम्। कर्मादेः सर्वत्र सद्भावेन तदन्यत्वनिरूपणायोगादिति तदर्थः। अथ द्वितीयं पक्षमवलम्ब्य विशेषविवक्षुणा भाष्यकारेण कर्मादिभ्योऽन्ये येऽर्था इति शेषपदार्थ उक्तः। ते चार्थाः। स्वस्वामिभावादयः संबन्धाः। तदुक्तं हरिकारिकायां "संबन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः। श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयत" इति। तत्राश्रुतायां क्रियायां राज्ञः पुरुष इत्यादौ क्रियाकारकसंबन्धपूर्वकः कारकेभ्योऽन्यः स्वस्वामिभावादिः संबन्धः प्रतीयते। मातुः स्मरतीत्यादौ तु श्रूयमाणे क्रियाशब्दे सदपि कर्मत्वमविवक्षित्वा मातृसंबन्धिस्मरणमित्येवं स्मरणं प्रति मातुर्विशेषणत्वमेव प्रतिपाद्यते इति ज्ञेयम्। अथ स्वाभिप्रायाविष्कारार्थं प्रागुक्तं दोषमाशङ्कते **यद्येवमित्यादिना**। शेषपदार्थो यद्येवं कर्मादिभ्योऽन्य इत्युक्तप्रकारेणोच्यते तर्हि स न प्रकल्पते। वक्तुं शक्य इत्यर्थः। आदिपदेन न हि कर्मादिभ्योऽन्येऽर्थाः सन्ति। इह तावत् राज्ञः पुरुषः इति राजा कर्ता पुरुषः संप्रदानमित्यादि ग्राह्यम्। तदर्थस्तु। परस्परविलक्षणानामयःशलाका-कल्पानां पदार्थानां क्रियामन्तरेण संबन्धासंभवात् सर्वत्र तस्याः संबन्धोपपादकत्वेनावश्यंभावात्तन्निमित्तस्य च कर्मादेरवश्यंभावान्न कर्मादिभ्योऽन्येऽर्थाः सन्ति। तथाहि। राज्ञः पुरुष इत्युक्ते राजा पुरुषाय ददातीति संप्रत्ययाद्राजा कर्ता पुरुषः संप्रदानम्। वृक्षस्य शाखेत्यादौ वृक्षः शाखाया अधिकरणम्। चैत्रस्य गौरित्यत्र चैत्रः प्रतिग्रहीता क्रेता विनिमाता अपहर्ता चेति प्रतिग्रहादौ कर्ता प्रतीयते। तदेवं सर्वत्र कारकप्रतीतेर्न क्वापि संबन्धमात्रं विभक्तमस्तीति।





**निराकरणादिति** । शङ्काव्याजेन निराकरणादित्यर्थः । **इत्युक्तरीत्येति** । उक्तं च भाष्ये । एवं तर्हि कर्मादीनामविवक्षाशेषः । कथं पुनः सतो नामाविवक्षा भवति । सतोऽप्यविवक्षा भवति । तद्यथाऽलोमिका एडिका अनुदरा कन्येतीति । अयमाशयः । क्रियाकारकभावोऽपि यद्यपि सर्वत्रास्ति । तथापि प्रतिग्रहक्रियादिजन्यस्य स्वस्वामिभावादेर्लोकसिद्धसंबन्धस्य दुरपह्नवतया तस्यैव च विवक्षायां क्रियाकारकसंबन्धाविवक्षया कारकविभक्त्यभावोपपत्तेः संबन्धसामान्यमभिधातुं षष्ठीविभक्त्युपपत्तेश्च संबन्धसामान्यमेव शेषपदार्थ इति । **नानुपपत्तिरिति** । कर्मलाभायोगरूपानुपपत्तिर्नेत्यर्थः । **उभयत्रेति** । कर्मणि संबन्धिसामान्ये चेत्युभयत्रेत्यर्थः । संभवेऽपीत्यनन्तरं तत्त्यागेनेति शेषः । गम्यमानत्वादप्रयोगः । **साक्षात्प्रतीतीति** । अपरोक्षतः प्रतीतीत्यर्थः । **प्रतिपद्यमानस्येति** । परोक्षतो जानत इति यावत् । वृथा व्यर्थ इत्यर्थः । न व्यर्थः । ब्रह्माश्रिताशेषप्रतिज्ञानार्थत्वादिति चेदित्यादि शाङ्करोक्त्यनुसारि । **एवं सतीत्यादि** मूलं तट्टीका चेति ज्ञेयम् । **तदन्तर्भूतमित्येवेति** । तदन्तर्भूतत्वनिमित्तेनैव प्राधान्यात्तदेव वक्तव्यमिति वक्तव्यत्वेन प्रागुक्तमिति शेषः । न हि लक्षणादीति वाक्ये लक्षणादिजिज्ञासाव्यतिरिक्ता ब्रह्मजिज्ञासा नास्तीति प्रतिपादनमयुक्तम् । लक्षणादिजिज्ञासाया ब्रह्मकर्मकजिज्ञासारूपब्रह्मजिज्ञासानतिरिक्तत्वेऽपि ब्रह्मज्ञानसाधनफलादिजिज्ञासारूपब्रह्मजिज्ञासाभिन्नत्वेनाभेदोक्त्ययोगात् । अत एव च तदुपपादनबलेनाभिधानेनालाभवर्णनमयुक्तमित्यतो ब्रह्मजिज्ञासाया द्विरूपत्वानुसारेण लाभेऽपि द्विरूप एवाभिमत इति न दोष इत्याशयेन तस्याः विनाऽप्यभिधानेन लाभादिति वाक्यं ब्रह्मजिज्ञासाया द्विरूपत्वमुपपादयन्नभिधानेन विनापि लाभं द्विधा दर्शयन् व्याख्याति **अत्र ब्रह्मकर्मकेति** । **व्यतिरिक्ताया अभावादिति** । तथा च ब्रह्मकर्मकजिज्ञासाग्रहणेन साक्षादेव लक्षणादिजिज्ञासाया लाभेनाभिधानानावश्यकतया वैयर्थ्यमेवेत्युत्तरेण संबन्धः । **प्रधानभूते ब्रह्मणीति** । प्रधानभूते जिज्ञासाकर्मणि ब्रह्मणीति प्राधान्यं कर्मविशेषणम् । प्रधानकर्मणीत्यस्योपपादकं **ज्ञानेनेति** । शाङ्करे यैर्जिज्ञासितैर्विना ब्रह्म जिज्ञासितं न भवति तान्यर्थाक्षिप्तान्येवेति यत् प्रतिपादितं तदप्ययुक्तम् । लक्षणादिजिज्ञासायाः ब्रह्मकर्मकजिज्ञासाव्यतिरिक्ताया अभावेन साक्षादेव लाभसंभवे अर्थाक्षेपस्य लक्षणाद्यंशे वर्णनायोगादित्यप्यनेन सूचितम् । अत एव ब्रह्म न जिज्ञासितं भवतीत्येव तद्भाष्ये उक्तेऽपि ब्रह्मज्ञानसाधनफलादिजिज्ञासाया एवार्थाक्षेपवर्णनौचित्यमिति प्रतिपादयितुं न संपूर्यत इत्याद्येव टीकाकृतोक्तम् । राजासौ गच्छतीत्युक्ते सपरिवारस्य राज्ञो गमनोक्त्यवगमादिति भावः । 'न हि लक्षणादि' इत्युपपादकवाक्ये द्विरूपत्वं जिज्ञासादेः प्रागुक्तं न प्रतीयते इत्यत आह **अत एव न हीत्युत्तरेति** । लक्षणादिजिज्ञासाया ब्रह्मकर्मकजिज्ञासाव्यतिरिक्ताया अभावेऽपि साधनादिजिज्ञासायास्तद्व्यतिरिक्तत्वेन तद्व्यतिरिक्तसामान्याभाववचनायोगेन विवेकेनैव व्याख्यातव्यत्वादेवेत्यर्थः । **लक्षणादिजिज्ञासाया इति** । अत्रादिपदेन साधनादेरपि परिग्रहाल्लक्षणप्रमाणादिजिज्ञासायाः ब्रह्मज्ञानसाधनफलादिजिज्ञासायाश्चेत्यर्थः । **ब्रह्मजिज्ञासापूर्त्यर्थत्वमिति** । अत्र ब्रह्मजिज्ञासात्वं तत्पूर्त्यर्थत्वं वेति ब्रह्मजिज्ञासापूर्त्यर्थत्वमित्यनेनार्थद्वयप्रतिपादनात्प्रागुक्तरीत्या ब्रह्मकर्मकजिज्ञासात्वं लक्षणादिजिज्ञासाया अनङ्गीकृत्येति ब्रह्मजिज्ञासापूर्त्यर्थत्वं च साधनादिजिज्ञासाया अनङ्गीकृत्येति योजनायाः स्पष्टत्वान्न पूर्वोत्तरग्रन्थयोरसङ्गतिशङ्कावकाश इति ज्ञेयम् । **स्वातन्त्र्याभ्युपगम इति** । ब्रह्मजिज्ञासावल्लक्षणादिजिज्ञासापि लक्षणादीनां स्वप्राधान्येनैव क्रियत इत्यङ्गीकार इत्यर्थः । **हेतुविशेषमिति** । निर्विषयताशङ्कापरिहाराय प्रयुक्तपदेन कर्माभिधानस्य





आवश्यकत्वरूपहेतुविशेषमित्यर्थः । अनेनैव कर्मषष्ठीपरिग्रहे हेत्वन्तरमाहेत्येवं मूलावतारोऽपि सूचितः । ज्ञानकर्मत्वस्यैव विषयत्वरूपत्वेन कर्मषष्ठीपरिग्रहे विषयत्वलाभादिति भावोऽपि सूचितः । **परमत इति** । शङ्करेणापि शेषषष्ठीं पराकृत्य कर्मषष्ठी परिगृहीता । उपपादनं च बहु । कृतम् । परन्तु तत्सर्वं तस्य व्यर्थम् । कर्मषष्ठीं व्याचक्षाणेन विषयसमर्पणाय प्रयुक्तेन षष्ठ्यन्तब्रह्मपदेन विचारजन्यज्ञानकर्मत्वसमर्पणमुखेन विषयसिद्धेरेष्टव्यतया ब्रह्मणश्च कर्मत्वानङ्गीकारेण विषयसिध्यप्राप्तेः । अन्यस्य च निर्विषयत्वशङ्कानिरासकस्याभावात् । अस्मन्मते च ब्रह्मणो ज्ञानकर्मत्वात्कर्मषष्ठीपरिग्रहफलविषयलाभरूपं युक्तमिति सूचितमिति भावः । कर्मषष्ठीं यत्नेन प्रतिपादयतोऽपि ब्रह्मण इति कर्मषष्ठ्यैव विषयलाभो न संमत इत्यत्र ज्ञापकमाह **अत एव भामतीति** । कर्मषष्ठीपरिग्रहेण ब्रह्मणः कर्मत्वप्राप्त्या ज्ञानकर्मत्वरूपविषयत्वप्राप्तिरित्यस्य तद्भाष्यकाराभिप्रेतत्वाभावादेवेत्यर्थः । **अभ्युपेतमिति** । भामतीविवरणग्रन्थौ निष्कास्य लेखनीयौ स्तः ।

**स०व्र०— विनाप्यभिधानेनेति** । प्रधाने जिज्ञासाकर्मणि परिगृहीते यैर्जिज्ञासितैर्विना ब्रह्म जिज्ञासितं न भवति तान्यर्थाक्षिप्तान्येवेति न पृथक् सूत्रयितव्यानि यथा राजाऽसौ गच्छतीत्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति तद्वदिति भावः । **अन्यथेति** । ब्रह्मजिज्ञासाया लक्षणादिजिज्ञासानपेक्षत्वे स्वप्राधान्येन लक्षणादीनां जिज्ञास्यत्वे चेत्यर्थः । **निर्विषयतेति** । विषयाद्यभिधानार्थत्वात् सूत्रस्य अन्यथाऽनपेक्षिताभिधानं स्यादित्यर्थः । किं च 'यतो वा इमानि भूतानि जायन्त' इत्याद्याः श्रुतयः 'तद्विजिज्ञासस्व तद्ब्रह्मे'ति प्रत्यक्षमेव ब्रह्मणो जिज्ञासाकर्मत्वं दर्शयन्ति । अतस्तदनुगमार्थं सूत्रे ब्रह्मण इति कर्मणि षष्ठी परिग्राह्येत्याह **तदिति** ।

**कुण्डल०— न पुनरिति** । धर्माय जिज्ञासा धर्मजिज्ञासेति यथा चतुर्थीसमासस्तथा ब्रह्मणे जिज्ञासा ब्रह्मजिज्ञासेति चतुर्थीसमासो न भवति इत्यर्थः । यद्यपि धर्मस्य जिज्ञासा धर्मजिज्ञासेति षष्ठी ......................

**विठ्ठ०—** जिज्ञास्य इति कर्मप्रत्ययान्तनिर्देशः षष्ठीपरिग्रहसूचक इति वक्तुं षष्ठीसमासं दर्शयति **तत्र तावदिति** । वक्ष्यमाणषष्ठीविशेषप्रतिपादनापेक्षया तावच्छब्दः । चतुर्थीसमासाभावे हेतुमाह **तादर्थ्येति** । तादर्थ्यसमासे प्रकृतिग्रहणं कर्तव्यमित्येतच्चतुर्थी तदर्थमात्रेति चेत् सर्वप्रसङ्गोऽविशेषादिति वार्तिकस्य अर्थानुवादः एतस्य चायमर्थः तदर्थमात्रेण चतुर्थी समस्यते इति चेदङ्गीक्रियते तर्हि सर्वस्य चतुर्थ्यन्तस्य समासप्रसङ्गः तदर्थत्वाविशेषात् । तथा चावहननायोलूखलमित्यादावपि समासप्रसक्त्या भिन्नपदत्वं न स्यात् तस्मात् यत्र प्रकृतिविकारभावः तत्रैव समासो नान्यत्रेति । यूपायेति यूपस्य दारुविकारत्वादिति भावः । ननु प्रकृतिविकृत्योरिति चेत् अश्वघासादीनामुपसङ्ख्यानमिति तेनैव वार्तिककृता प्रकृतिविकाररहितेष्वपि अश्वघासादिषु केषुचित् चतुर्थीविधानात् कथं प्रकृतिविकाराभ्याम् एव चतुर्थीसमासस्य नियमितत्वमित्यतो भाष्यकारेण अश्वघासादिषष्ठीसमासविधानपूर्वकमस्य वार्तिकस्य प्रतिषिद्धत्वात् उक्तनियमो युक्त इत्याह **प्रकृतिविकारेति** । अत एव भाष्यकारीयवार्तिकप्रत्याख्यामालोच्य शाबरभाष्यव्याख्याने भट्टेन धर्माय जिज्ञासेति शाबरभाष्यं समालब्धार्थिकार्थप्रदर्शनपरं न तु विग्रहप्रदर्शनपरमिति व्याख्यातम् । जिज्ञास्य इत्युक्तमिति जिज्ञासाकर्मण एव प्राधान्यं दर्शितमित्यर्थः । कथमनेन कर्मप्राधान्यसूचनमित्यतो जिज्ञास्य इत्यस्य कृत्यप्रत्ययान्तत्वादित्याशयेनाह **कृत्यानामिति** । तयोरेव कृत्यक्तखलर्थाः इति





सूत्रादिति भावः। तयोर्भावकर्मणोरित्यर्थः। अन्यथा कर्मणि षष्ठीसूचकस्य विवक्षितत्वे कर्मणि षष्ठीपरिग्रह एव कुतः यज्ज्ञापनार्थं जिज्ञास्य इत्युक्तिरित्यत आह **जिज्ञासा खल्विति। न तु संबन्धिनं विनेति**। जिज्ञासाविषयाज्ञाने यथा न तज्जिज्ञासा ज्ञातुं शक्या न तथा संबन्धिसामान्याज्ञाने इति भावः। **अर्थादिति**। कर्मणोऽपि संबन्धित्वादिति भावः। लक्षणादिजिज्ञासायाः ब्रह्मजिज्ञासान्तर्भूतत्वमनङ्गीकृत्य पृथक्स्वातन्त्र्येण जिज्ञास्यत्वाभ्युपगमे इत्यर्थः। **श्रुत्यर्थेति**। श्रुतौ कर्मत्वार्थकतदितिद्वितीयाप्रयोगादिति भावः।

**चषकः**— जिज्ञास्य इति कर्मसाधनकृत्यान्तनिर्देशेन समासावयवभूतब्रह्मपदप्रकृतिका 'कर्तृकर्मणोः' इति लक्षणलक्षिता कर्मणि षष्ठ्येव सुपो धात्वित्यनेन लुप्यते न चतुर्थीति ध्वन्यत इत्यभिधित्समानः चतुर्थीसमासं प्रतिविधित्सते **तत्र तावदिति**। प्रकृत्यंशेन सर्वनाम्ना प्रकृतसूत्रं परामृश्यते तत्प्रकृतिकसप्तम्या च समासान्वयिनी घटकतोच्यते। अथ चतुर्थीतदर्थमात्रेणेति चेत्तर्हि सर्वप्रसङ्गोऽविशेषात्प्रकृत्योरिति चेदश्वघासादीनामुपसङ्ख्यानमिति भाष्ये रन्धनाय स्थाली अवहननायोलूखलमित्यादावपि सर्वत्र समासापत्त्या विकृतिवाचकचतुर्थ्यन्तशब्द एव प्रकृतिवाचिना समस्यत इति विवक्षायां दर्शितापत्तिविधूननेऽप्यश्वाय घास इत्यत्र चतुर्थ्यन्तस्य विकृतिवाचकताविरहेण चतुर्थीसमासानिर्वाहप्रसङ्गापनुत्तये यत्नान्तरमेवानुष्ठेयमिति वार्तिककृन्मतमभ्यधाद्भाष्यकार इति तादृग्वार्तिकमनुरुन्धानः शबरोऽपि धर्मजिज्ञासेतिसमासवाक्यस्य धर्माय जिज्ञासेत्येव विग्रहवाक्यं प्रादर्शयदिति तद्दिशा प्रकृतेऽपि चतुर्थीसमास एवाश्रयणीय इत्यत आह **न पुनरिति। वार्तिककृतेति**। भाष्यकृता चेत्यपि पूरणीयम्। यदि हि तदर्थसमासस्तदर्थमात्रविषयः स्यात्कुबेराय बलिः कुबेरार्थो भवति। **अश्वाय** रक्षितमश्वार्थं भवतीति कुबेरबल्यश्वरक्षितयोस्तदर्थसमासविधिनैव सिद्धेः पृथग्बलिरक्षितग्रहणं न कर्तव्यं स्यात्तत्कृतं ज्ञापयति तदर्थसमासः प्रकृतिविकृतिमात्रविषय इति भाष्याक्षरानुपूर्व्याः सत्त्वात्। **प्रतिविहितमिति**। भाष्यकृतेति पूरणीयम्। षष्ठीचतुर्थीसमासयोः स्वरवैषम्याभावेन अश्वघासादिषु षष्ठीसमासस्यैवोपपत्तिरिति भाष्यदृग्वार्तिकं प्रत्याचख्याविति न तच्छङ्कावकाश इत्यर्थः। अत एव तादृशप्रत्याख्यातिप्रतिसंहितिमान् दर्शितशबरवचनं व्याचक्षाणोऽपि षष्ठीसमासलब्धार्थककथनपरतयैव तादृग्वचनं निनायेति मन्तव्यम्। **प्रतिपन्ना इति**। प्रतिपत्तिनिरूपिताश्रयतारूपकर्तृत्वविशेषिता इत्यर्थः। 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्चे'ति कर्तरि गत्यर्थकप्रकृतिकनिष्ठाया अनुशासनात्। **कृत्यानां कर्मणीति**। 'तयोरेव कृत्यक्तखलर्थाः' इति स्मृतेरिति भावः। **प्राधान्यादिति**। सविषयकाणां विषयविनिर्मोकेण भानानुपगमेन विषयितया विषयविशेषितज्ञानविशेषितेच्छाविषयकावगतित्वावच्छिन्नं प्रति विशिष्टप्रतियोगिकवैशिष्ट्यावगाहिज्ञाने विशेषणतावच्छेदकप्रकारकनिर्णयविधया तादृशप्रत्यासत्त्या विषयप्रकारज्ञानस्य हेतुतावत्संबन्धित्वावच्छिन्नावगाहिज्ञानस्य कयाऽपि विधया हेतुत्वाभावेन विषयविशेषितज्ञानविशेषितेच्छाविषयिताघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतविषयितासंसर्गावच्छिन्नप्रकारतापन्नत्वरूपप्राधान्यादिति भावः। **कर्मापि लभ्यत इति**। निरूपितत्वप्रत्यासत्त्या प्रकृत्यर्थब्रह्मविशेषितषष्ठ्युपस्थाप्यतावच्छेदकीभूतसंबन्धत्वावच्छिन्नवृत्तिविषयतायाः संबन्धत्वाक्रान्तकर्मत्ववृत्तित्वानपायेन तादृशकर्मत्वाश्रयस्यापि शाब्दधीविषयता सङ्गच्छत इति भावः। **साक्षादिति**। कर्मत्व-





त्वरूपविशेषधर्मोपरागेणान्वयबोधे भानमनादृत्य तद्व्यापकसंबन्धत्वोपरागेण भानोपगतेः अनौचित्यादिति भावः । **एवं सतीति** । दर्शितसामान्यधर्मोपरक्तभानोपगम इत्यर्थः । **प्रतिज्ञातेति** । लक्षणजिज्ञासाया अपि ब्रह्मसंबन्धित्वाक्षतेरिति भावः । **विनाप्यभिधानेनेति** । यावतोऽनुयायिवर्गस्य गमनमन्तरेण राज्ञो गमनं न सङ्गच्छते तावद्गमनं यथा राजाऽसौ गच्छतीति वाक्यात्प्रतीयते तद्वत् यावतां जिज्ञासामन्तरेण ब्रह्मजिज्ञासा न घटते तावज्जिज्ञासायाः ब्रह्मजिज्ञासापदेनैव प्रतीतेरिति भावः । **अन्यथेति** । स्वातन्त्र्येण लक्षणजिज्ञास्यतायाम् । **श्रुत्यर्थानुगतमिति** । श्रुतौ सर्वनामप्रकृतिकायाः कर्मणि द्वितीयेत्यनुशिष्टायाः कर्मत्वार्थकद्वितीयायाः समभिव्याहारादिति भावः ।

**गूढ०**— ननु जिज्ञास्योऽयमित्यत्र ब्रह्मणो जिज्ञासाकर्मत्वकथनमयुक्तम् । ब्रह्मजिज्ञासापदेन कर्मत्वस्यानुक्तत्वात् । न च ब्रह्मणो जिज्ञासेति षष्ठीसमासाश्रयेण कर्मत्वमभिप्रेतमिति वाच्यम् । ब्रह्मणे जिज्ञासेति चतुर्थीसमासस्योपपत्तेरित्यत आह **तत्रेति** । षष्ठीपक्षेऽपि शेषषष्ठीनिराकरणाभिप्रायेण तावदित्युक्तम् । न पुनर्धर्मायेतिवदिति व्यतिरेकदृष्टान्तः । तथाच यथात्र न चतुर्थीसमासस्तथा प्रकृतेऽपीत्यर्थः । नियामकाभावात् कुतो न चतुर्थीसमास इत्यत आह **तादर्थ्येति** । ननु प्रकृतिविकारभावरहितेष्वपि चतुर्थीसमासस्योक्तत्वात् कथमेतदित्यत आह **प्रकृतीति** । **न चेति** । ब्रह्मणो जिज्ञासाविकारत्वासंभवादिति भावः । तर्ह्यत्र कस्याः परिग्रह इत्यत आह **तत्रेति** । ननु जिज्ञास्य इत्युक्तेऽपि कथं कर्मषष्ठीपरिग्रहः सूचित इत्यत आह **कृत्यानामिति** । तयोरेव कृत्यक्तखलर्था इति सूत्रेणेति भावः । यत्प्रत्यये समागते एतद्रूपं सिद्ध्यतीति भावः । **अन्यथेति** । कर्मषष्ठीपरिग्रहस्य अनभिप्रेतत्व इत्यर्थः । ननु कर्मषष्ठीपरिग्रहो न युक्तः । तथा सति लक्षणादिजिज्ञासाया अप्रतिज्ञातत्वप्रसङ्गात् । शेषषष्ठीपक्षे तु तत्प्रतिज्ञाऽपि सिद्ध्यति । तथाच बाधकसद्भावात्साधकाभावाच्च न कर्मषष्ठीपरिग्रहो युक्त इत्यतः साधकं तावदाह **जिज्ञासेति** । **अर्थादिति** । अनुपपत्तेरित्यर्थः । जिज्ञासां प्रति ब्रह्मणः करणत्वाद्यसंभवात् कर्मत्वमेव लभ्यत इति भावः । **एवं सतीति** । शेषषष्ठीपरिग्रहे सतीत्यर्थः । **अन्यथेति** । लक्षणादिजिज्ञासाया ब्रह्मजिज्ञासाभिन्नत्व इत्यर्थः । अत्रैव युक्त्यन्तरं चाह **निर्विषयतेति** ।

**प्रदीपः**— तत्रेत्यादि धर्माय जिज्ञासेत्यपि चतुर्थीसमासकथनमज्ञानमूलमित्याशयः । **तत्रेति** । ब्रह्मण इति कर्मणि षष्ठी न शेषे जिज्ञासापेक्षत्वात् जिज्ञासाया जिज्ञास्यान्तरनिर्देशाच्चेति । **संबन्धीति** । शेषे षष्ठीपरिग्रहेऽपि ब्रह्मणो जिज्ञासाकर्मत्वं न विरुध्यते संबन्धसामान्यस्य विशेषनिष्ठत्वान्न साक्षादिति । एवमपि प्रत्यक्षं ब्रह्मणः कर्मत्वं उत्सृज्य सामान्यद्वारेण परोक्षं कर्मत्वकल्पनं व्यर्थप्रयासः स्यात् । **एवं सतीति** । ब्रह्माश्रिताशेषप्रतिज्ञानार्थत्वान्न व्यर्थ इति च तस्या इति प्रधानपरिग्रहे तदपेक्षितानां अव्यर्थाक्षिप्तत्वाद्ब्रह्मविज्ञानेनाप्तुमिष्टत्वात् प्रधानं तस्मिन्प्रधाने जिज्ञासाकर्मणि परिगृहीतैः जिज्ञासितैर्विना ब्रह्म जिज्ञासितं न भवति तान्यर्थाक्षिप्तान्येवेति न पृथक् सूत्रयितव्यानि । यथा राजासौ गच्छतीत्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति तद्वत् । **अन्यथेति** । ब्रह्मजिज्ञासायाः लक्षणादिजिज्ञासानपेक्षितत्वे स्वप्राधान्येन लक्षणादीनां जिज्ञास्यत्वे-चेत्यर्थः । **निर्विषयतेति** ।





विषयाद्यभिधानार्थत्वात् सूत्रस्य अन्यथानपेक्षिताभिधानं स्यादिति । तदिति 'यतो वा इमानि भूतानि जायन्त' इत्याद्याः श्रुतयः 'तद्विजिज्ञासस्व तद्ब्रह्मे'ति प्रत्यक्षमेव ब्रह्मणो जिज्ञासाकर्मत्वं दर्शयन्ति तच्च कर्मणि षष्ठीपरिग्रहे सूत्रेणानुगतं भवति । तस्माद्ब्रह्मण इति कर्मणि षष्ठीत्यर्थः । ननु चेति कर्मणि चेति षष्ठ्याः समासो निषिध्यते निषेधश्चोभयप्राप्तौ कर्मणीति विहिताया एव षष्ठ्या यदि च या काचन कर्मणि षष्ठी गृह्येत कर्तरि चेति प्रतिषेधं न कुर्यात् अनेनैव सिद्धत्वात्तेन कर्मणीत्युच्चार्य या षष्ठी विधीयते न समस्यत इत्यर्थः । न कृदिति । कर्तृकर्मणोः कृतीति कृच्छब्दोपादानेन या विहिता सा कृद्योगा ब्रह्मविचारचोदनायां कर्तृविशेषस्याविवक्षिततत्वात् उभयप्राप्त्यभावान्नोभयप्राप्तौ कर्मणीति षष्ठी । अपि तु कर्तृकरणयोः कृतीत्यनेन कृति कर्मणि चेति समास-प्रतिषेधाप्रसङ्गादिध्मव्रश्चनवत्समासः ।

**१६१ सु०— ननु च 'प्रतिपदविधाना षष्ठी न समस्यत' इति कर्मणि षष्ठ्याः समासः प्रतिषिद्ध्यत इति चेन्न । 'कृद्योगलक्षणा च षष्ठी समस्यत' इति प्रतिप्रसवात् ।**

**बिन्दुः— कृद्योगलक्षणा षष्ठी समस्यत इति** । अयमत्र सूत्रप्राप्तिक्रमः । ब्रह्मणो जिज्ञासेत्यत्र कर्तृकर्मणोः कृतीति षष्ठ्यां ब्रह्मजिज्ञासेति कर्मषष्ठ्या षष्ठीसमासे कर्तव्ये प्रतिपदविधाना षष्ठी न समस्यत इति प्रतिषेधापवादकेन कृद्योगलक्षणा षष्ठी समस्यत इति प्रतिप्रसवेन समासः । ननु तथापि कर्मणि चेति समासनिषेधः कस्मान्न भवति । तत्र कर्मणि चेति चशब्द इति । शब्दार्थे तेन कर्मणीति सूत्रमारभ्यते ततश्च न वेति विभाषेत्यत्रेवेतिशब्दस्य पदार्थविपर्यासकारित्वात् शब्दपदार्थकतया कर्मणीत्यनेन शब्देन विहिता उभयप्राप्तौ कर्मणि या षष्ठी सा न समस्यत इत्यर्थस्य स्थितत्वात् । न चात्र चित्रं गवां दोहोऽगोपे-नेत्यादाविव उभयप्राप्तिरस्ति, कर्तृपदाश्रवणात् । अत एव अथशब्दानुशासनमित्यत्र कर्तृपदप्रयोगाभावात् उभयप्राप्त्यभावेन षष्ठीसमासनिषेधो नेति कैयटः । यत्तु कर्तव्या मुमुक्षुणा ब्रह्मजिज्ञासेति सिद्धमित्यादि टीकावाक्यं, तत्र यद्यपि उभयप्राप्तौ कर्मणीति षष्ठी प्राप्नोति तथापि जिज्ञासाशब्दस्य स्त्रियामित्यधिकारे विहितेन अप्रत्ययादिति सन्नन्तात्कृत्प्रत्ययान्तात् टापि निष्पन्नत्वेन 'स्त्रीप्रत्यययोरकाकारयोः प्रयोगे न' इति वार्तिकमिति कर्मषष्ठीनियमनिषेधवाक्येन तत्प्रतिषेधः । न चैवं सति भेदिका बिभित्सा वा रुद्रस्य जगत इत्यादाविवोभयत्र षष्ठीप्रसङ्गः । तत्र कर्मत्वस्याविवक्षिततत्वान्न कर्मणि षष्ठी किन्तु शेषषष्ठ्येव तया च समासे न किञ्चिद्बाधकम् । वस्तुतस्तु मुमुक्षुणेति कर्ता न जिज्ञासान्वयी किन्तु कर्तव्येतिपदोपात्त-क्रियान्वयी तेन नात्रोभयप्राप्तिरिति बोध्यम् । न च तत्रापि कर्तव्येति कृद्योगलक्षणा षष्ठी कर्तरि स्यादिति कथं मुमुक्षुणेति तृतीयानिर्देश इति वाच्यम् । कृत्यानां कर्तरि वेति षष्ठीविकल्पात् । ननु तथापि ब्रह्मजिज्ञासेत्यत्र कर्तृपदप्रयोगाभावेऽपि कर्तुर्गम्यमानत्वात् अन्तर्द्धौ येनादर्शनमिच्छतीत्यादौ कर्मणो





गम्यमानत्वात् कर्तरि तृतीयेव कर्मणि षष्ठी किं न स्यादिति चेत् । न । तत्र सूत्रकारनिर्देशादेव तृतीयायाः साधुत्वं न तु कर्मणि षष्ठ्याः नियतत्वेन । अन्यथा व्यासकृतिः भारतश्रवणमित्यादौ वृत्तिकृदुदाहृतेऽपि कर्मणः कर्तुश्च गम्यमानत्वात्तत्रापि षष्ठीसमासनिषेधः प्रसज्येत । शिष्टानुशासनमित्यत्रापि कर्तुर्गम्यमानतया नियमप्रसङ्गेन समासनिषेधप्रसक्त्या कर्तृपदाश्रवणादिति कैयटोक्तिः विरुद्ध्येत । व्यासस्य कृतिरित्यादौ वाक्येऽध्यस्तस्थलेऽपि अन्तर्द्धौ येनेत्यादाविव कर्मणो गम्यमानत्वात् षष्ठी न स्यात् । तस्मात् अन्तर्द्धौ येनेत्यत्र गम्यमानत्वात् कर्मणस्तृतीया युक्तेति हरदत्तोक्तिश्चिन्त्या । अत एव व्याख्यानतो विशेषप्रतिपत्तिरिति परिभाषावृत्तौ कर्तृपदाश्रवणात् कर्मणीति समासनिषेधो नेत्युपपादितम् । अथवा स्त्रीप्रत्यययोरकाकारयोरिति प्रागुदाहृतवार्तिकेनैवात्रापि भेदिका बिभित्सा वा रुद्रस्य जगत इत्यादाविव गम्यमाने कर्तरि श्रूयमाणे कर्मणि चोभयत्रापि षष्ठ्येव ततश्च निषेधाभावात् समासः इति सर्वं सुस्थम् ।

**परि०— प्रतिपदेति** । यत्किञ्चित्पदनिमित्तेन विधानवती या षष्ठी 'ज्ञोऽविदर्थस्य करण' इत्यादिषष्ठी तदन्तं पदं तेन निमित्तभूतपदेन न समस्यते । यथा सर्पिषो ज्ञानमित्यादीति द्वितीये न निर्धारण इति सूत्रे वार्तिककृता निषिद्धत्वादित्यर्थः । इयं च वक्ष्यमाणदिशा प्रतिपदविहितेति भावः । **कृद्योगेति** । कृत्प्रत्यययोगनिमित्तेत्यर्थः । ज्ञाऽवबोधन इत्यस्माद्धातोः 'कर्मणः समानकर्तृकादिच्छायां वा'इतीच्छार्थे सन्प्रत्यये 'सन्यङोः' इति द्विर्वचने हलादिः शेषे ह्रस्व इति सूत्रेण पूर्वस्य ह्रस्वत्वे सन्यत इतीत्वे जिज्ञास इति स्थिते सनस्तृतीयधात्वधिकारविहितत्वेनाकृत्त्वेऽपि 'अः प्रत्ययादि'ति सूत्रेण प्रत्ययान्ताद्धातोः अप्रत्ययो भवतीत्यकारप्रत्यये अजाद्यतष्टाबिति टाप्प्रत्यये सवर्णदीर्घे च जिज्ञासेति सिद्ध्यति । 'कृदतिङ्' इति प्राप्तकृत्संज्ञकाकारप्रत्ययस्य स्थाने स्त्रीप्रत्ययस्य स्थाने च प्राप्तसवर्णदीर्घस्याप्यन्तादिवच्चेति सूत्रेण पूर्वस्यान्तवद्भावेन कृत्संज्ञकतया तदन्तजिज्ञासाशब्दयोगे 'कर्तृकर्मणोः कृति' इति सूत्रेण प्राप्तषष्ठ्यन्तत्वाद्ब्रह्मपदस्य कृद्योगेति वार्तिके प्रतिप्रसवात्समास इत्यर्थः । प्रतिप्रसवो नाम सामान्यतो निषिद्धस्य विषयविशेषेऽभ्यनुज्ञानम् । यत्तु कर्मणि चेति सूत्रेण कर्मणि षष्ठ्याः समासनिषेध इति । तन्न । 'उभयप्राप्तौ कर्मणि' इति सूत्रेण कर्तृकर्मणोर्योगे कर्मणि षष्ठीतिविहितषष्ठ्यन्तस्यैव कर्मणि चेति सूत्रेण समासनिषेधो नान्यस्य । यथाऽऽश्चर्यो गवां दोहोऽगोपालेनेत्यादौ । न चेह षष्ठी तत्सूत्रप्राप्ता । सूत्रे कर्मणो ब्रह्मण उपादानेऽपि जिज्ञासायाः कर्तुः सूत्रेऽनुपादानेन प्राप्त्यभावात् । किन्तु 'कर्तृकर्मणोः कृति' इत्यनेनैवेति । अन्यत्तु चन्द्रिकाव्याख्यानेऽवसेयम् ।





**यादु०— प्रतिपदविधानेति**। पदं पदं प्रति विहिता प्रतिपदविधाना। 'ज्ञोऽविदर्थस्य करण' इत्यादिना विहिता षष्ठी। 'षष्ठी शेष इति विहितां शेषषष्ठीं विहायान्येन विहिता सर्वैव षष्ठी प्रतिपदविधानेत्यर्थः। इयं च षष्ठी 'कर्तृकर्मणोः कृती'त्यनेन विहितेति प्रतिपदविधानैवेति भावः। **कृद्योगलक्षणा चेति**। कृत्प्रत्ययस्य योगो लक्षणं निमित्तं यस्याः सा कर्तृकर्मणोः कृतीत्यादिना कृतेत्यर्थः। ननु तृतीयाध्याये धात्वधिकरण एव विहितानां कृत्त्वात्सनश्चातथात्वात्कथं जिज्ञासाशब्दस्य कृदन्तत्वमिति चेत्। उच्यते। 'अःप्रत्ययात्' इति सन्नन्तादप्रत्ययस्य विहितत्वात्तस्य 'कृदतिङ्' इति सूत्रेण कृत्संज्ञकत्वात् जिज्ञासाशब्दस्य कृदन्तत्वोपपत्तेः काऽत्र कथन्तेति। ननु कृद्योगलक्षणाषष्ठीषु अपि कर्मणि या षष्ठी तस्याः समासो (न) कर्मणि चेति सूत्रेण प्रतिषिद्ध इति चेन्न। 'कर्मणि च' इति सूत्रेण कर्मणि षष्ठीमात्रस्य समासप्रतिषेधो न भवति। तथा सति 'कर्तरि च' इति सूत्रवैयर्थ्यप्रसङ्गात्। तेन हि सूत्रेण कर्तरि यौ तृजकौ ताभ्यां सह कर्मणि षष्ठ्याः समासो निषिध्यते। अपां स्रष्टा ओदनस्य भोजक इत्यादौ। न च कर्मणि षष्ठीमात्रस्यात्र समासप्रतिषेधे तत्सफलं भवेत्। अतः 'कर्मणि च' इति सूत्रे चकार इति नकारार्थः। कर्मणीति शब्दमुच्चार्य या षष्ठी नियमिता सा न समस्यत इति तदर्थः। ततश्च 'उभयप्राप्तौ कर्मणि' इति सूत्रेण कर्मणीति शब्दमुच्चार्य नियमिता षष्ठी तस्य समासस्य प्रतिषेधविषयो न तु 'कर्तृकर्मणोः कृति' इति सूत्रविहिता कर्मणि षष्ठी। नन्विहाऽपि उभयप्राप्तिसूत्रनियमितैव कर्मणि षष्ठी। तस्य हि सूत्रस्यायमर्थः। कर्तृकर्मणोरुभयोः षष्ठीप्राप्तिर्यत्रैकस्मिन् कृति भवति तस्मिन्कृति सति कर्मण्येव षष्ठी न कर्तरीति। यथाऽऽश्चर्यो गवां दोहोऽगोपालकेन इति। तथा चात्र साधनचतुष्टयसंपन्नः कर्ता यदि श्रूयेत तदा तस्मिन्नपि कर्मणीव कर्तृकर्मणोः कृतीति सूत्रेण षष्ठ्याः प्राप्तौ निमित्तं संभवति। जिज्ञासेति कृत्प्रत्ययः। तथा चास्याप्युभयप्राप्तसूत्रविषयत्वात् कर्मणि चेति समासप्रतिषेधः स्यादेवेति चेत्। अत्राहुः। 'कृत्वोऽर्थप्रयोगे कालेऽधिकरण' इति व्यवहितपूर्वसूत्रात्प्रयोग इत्यनुवर्तते। तच्च कर्तृकर्मगत-किञ्चिदतिशयविवक्षासामर्थ्यात् कर्तृकर्मोभयप्रयोगावश्यंभावपरम्। एवं चाश्चर्यो गवां दोह इत्यादिरेवोभयप्राप्ति-सूत्रविषयः। तत्र ह्याश्चर्यशब्दसूचितकर्तृगताकौशलरूपातिशयोपपादनोपयोगितया दुर्दोहित्वरूपाजादिवैलक्षण्य-सूचनाय गोत्वेन दोहनकर्मणामपेक्षितमुपादानम्। तथा तद्दोहासामर्थ्यसंभावनासूचनायाशिक्षितत्वादिना दोहकर्तु-श्चोपादानमपेक्षितं कृतम्। न चेह तथा किञ्चिदतिशयविवक्षया कर्तुरुपादानं कृतमस्तीति नात्रोभयप्राप्तिसूत्रेण कर्मणि षष्ठी किन्तु कर्तृकर्मणोः कृतीत्यनेनैव अतो ब्रह्मजिज्ञासेत्युपपन्नः समास इति। तच्चिन्त्यम्। उभय-प्राप्तिसूत्रे कर्तृकर्मोभयप्रयोगनियमाभावस्य सूत्रकृतैवान्यत्र प्रदर्शितत्वात्। तथाहि 'अन्तर्धौ येनादर्शनमिच्छति' इत्यत्रान्तरङ्गप्रत्यासत्त्या गम्यमानेऽपि स्वात्मरूपे कर्मण्युभयप्राप्तिसूत्रेण कर्तरि षष्ठ्याः प्रतिषेधमभिप्रेत्य तृतीयाप्रयोगः कृतः। अन्तर्द्धिनिमित्तं यत्कर्तृकदर्शनाभावं स्वात्मन इच्छति तस्यापादानसंज्ञाऽनेन विधीयते। यथा चोपाध्यायादन्तर्धत्ते इत्यत्र पञ्चमी भवति। न च कर्मणि गम्यमान एवोभयप्राप्तिसूत्रप्रवृत्तिर्न कर्तरि गम्यमान इति विशेषः शङ्कनीयः। कर्तृकर्मोभयोपादाननियमभङ्गे सत्यस्य विशेषस्याप्रयोजकत्वादिति। वस्तुतस्तु 'अका-कारयोः प्रतिषेधो नेति वक्तव्यम्। 'शेषे विभाषा' इति भाष्यकारेणोभयप्राप्तौ कर्मणीति कर्तरि षष्ठीप्रतिषेधस्य अके अकारे च कृति नित्यमप्रवृत्तिः स्त्रीप्रत्ययरूपे कृति तद्व्यतिरिक्तकृन्मात्रे वा विकल्पेनाप्रवृत्तिश्चोक्ता। उदाहृतं च। भेदिका देवदत्तस्य काष्ठानाम्। चिकीर्षा विष्णुमित्रस्य कटस्येति। शोभना खलु पाणिनेः सूत्रस्य कृतिः। शोभना खलु

पाणिनिना सूत्रस्य कृतिरिति च । तस्मादिह जिज्ञासेत्याकारप्रत्यययोगान्नोभयप्राप्तिसूत्रविषयत्वशङ्कावकाश इति समाधानमवधेयम् ।

**वं०प०— प्रतिपदेति** । 'शेषे षष्ठी' इति सूत्रेण संबन्धसामान्ये विहिता षष्ठी, तां षष्ठीं विहाय सूत्रान्तरैः विहिता षष्ठी प्रतिपदविधानेत्युच्यते । तद्यथा । 'ज्ञोऽविदर्थस्य करणे' 'सर्वनाम्नस्तृतीया च' 'षष्ठी हेतुप्रयोगे' 'कर्तृकर्मणोः कृती'ति सूत्रविहिता षष्ठी प्रतिपदविधाना । सर्पिषो जानीते । कस्य हेतोरन्नस्य हेतोर्वसतीत्यादि । इयं च षष्ठी प्रतिपदविधाना । 'इच्छायां सन्' इति विहितसन्प्रत्ययस्य कृत्त्वाज्जिज्ञासाशब्दस्य सन्नन्तत्वेन कृदन्तत्वात्तद्योगे कर्तृकर्मणोः कृतीति विहिता **षष्ठी** प्रतिपदविधाना । अतः सा न समस्यते । तथाच ब्रह्मणो जिज्ञासेत्येव वाक्यवृत्तिः स्यादिति भावः । **कृद्योगलक्षणा चेति** । प्रतिपदविधानषष्ठीनां मध्येऽपि कर्तृकर्मणोः कृतीति सूत्रविहितायाः कृद्योगलक्षणायाश्चेति प्रतिप्रसवात्समासोपपत्तिरिति भावः ।

**आनन्दः— ननु प्रतिपदविधानेति** । कर्मणि चेति सूत्रेण उभयप्राप्तौ कर्मणीति विहितायाः षष्ठ्याः समासः प्रतिषिद्ध्यते । यदि च या काचन षष्ठी गृह्यते । तदा कर्तरि चेति निषेधानुपपत्तिः । अनेनैव सिद्धत्वात् कर्मणीति उच्चार्य या षष्ठी विधीयते सा न समस्यत इत्यर्थः । तथाच ब्रह्मजिज्ञासेत्यत्रापि उभयप्राप्तौ कर्मणीति षष्ठी विधीयत इति तस्याः कर्मणि चेति निषेधात्समासो न प्राप्नोतीत्यर्थः । **कृद्योगलक्षणा चेति** । कर्तृकर्मणोः कृतीति कृच्छब्दोपादानेन या विहिता सा कृद्योगा । तथाच ब्रह्मजिज्ञासायां कर्तृविशेषस्याविवक्षितत्वादुभय-प्राप्त्यभावान्नोभयप्राप्तौ कर्मणीति षष्ठी । अपि तु कर्तृकर्मणोः कृतीत्यनेनेति कर्तरि चेति समासनिषेधप्रसङ्गात्, इध्मप्रव्रश्चनः पलाशशातन इत्यादिवत्समास इत्यर्थः ।

**कं०रा०—** ननु कर्मणि षष्ठीपरिग्रहे ब्रह्मजिज्ञासेति समासोऽनुपपन्नः । 'का पुनः षष्ठी ? प्रतिपदविधान-त्वात्प्रतिपदविधानां शेषलक्षणां वर्जयित्वे'ति महाभाष्योक्त्या कर्तृकर्मणोः कृतीति कृद्योगे विहितायाः कर्मषष्ठ्याः प्रतिपदविधानत्वात्प्रतिपदविधानायाश्च षष्ठ्याः प्रतिपदविधाना षष्ठी न समस्यत इति समासप्रतिषेधात् । शेषलक्षणषष्ठीपरिग्रहे तु नेयमनुपपत्तिरित्याशयेन शङ्कते **नन्विति** । **कृद्योगेति** । कृच्छब्दोपादानेन विहिता षष्ठी समस्यत इति प्रतिपदविधाना षष्ठी न समस्यत इति निषेधापवादेन प्रतिप्रसवादित्यर्थः । तथा च ब्रह्मजिज्ञासेत्यत्र जिज्ञासाशब्दस्याप्रत्ययादिति कृत्संज्ञकाकारप्रत्ययान्तत्वेन कृद्योगनिमित्तत्वाद्ब्रह्मण इति षष्ठ्याः समासोपपत्तिरिति भावः । नन्वेवं प्रतिपदविधाना षष्ठी न समस्यत इत्यस्य को विषय इति चेन्न । सर्पिषो ज्ञानमित्यादेस्तद्विषयत्वात् । तत्र हि ज्ञोऽविदर्थस्य करण इति विहिता षष्ठी प्रतिपदविधानेति न किञ्चिदवद्यम् ।

**श्रीनिधि०— प्रतिपदविधानेति** । पदान्तरसंबन्धं निमित्तीकृत्य विहितेत्यर्थः । ब्रह्मणः जिज्ञासेत्यत्र कर्तृकर्मणोः कृतीत्यनेन कृद्योगे कर्तरि कर्मणि च षष्ठीति कृदन्तपदसंबन्धं निमित्तीकृत्य विहितेति भावः । **कृद्योगलक्षणेति** । कृद्योगनिमित्तेत्यर्थः । ननु कर्मणि चेति सूत्रेण कर्मणि षष्ठीसमासनिषेधात् कथमेतदिति चेन्न ।





उभयप्राप्तौ कर्मणीति सूत्रेण उभयोः कर्तृकर्मणोः प्राप्तौ कर्मणि षष्ठीति विहितकर्मणि षष्ठीसमासस्यैव निषेधात्। अत्र कर्तृप्रापकपदाभावेन उभयप्राप्त्यभावात्। कर्तृकर्मणोः कृतीत्यनेनैव षष्ठी। तथाच कर्मणि चेति न समास-निषेधः। ननु कर्तृप्रापकपदाभावेऽपि अधिकारिणः अथशब्देन सूचनात् कर्तृप्राप्तिरस्तीति चेन्न। **सर्वनाम्नो** हेतुप्रयोगे इति सूत्रात् प्रयोगग्रहणस्यानुवृत्तेः। प्रकृते च न कर्तुः प्रयोगोऽस्तीति। अथवा अस्त्रीप्रत्यययोः अकका-राकारयोः योगे न इति (अकाराकारयोः प्रतिषेधो नेति वक्तव्यम्) वाच्यमिति वार्तिकेण कर्मणि चेति निषेधस्य निषेधात्। प्रकृते च जिज्ञासापदस्य अप्रत्ययादिति सूत्रेण विहितअकारप्रत्ययान्तत्वान्न कश्चिद्दोषः।

**वा०चं०**— नन्वस्याः शेषषष्ठीत्वमनभ्युपगम्य कर्मषष्ठीत्वाभ्युपगमे 'कर्तृकर्मणोः कृति' इति प्राप्तषष्ठ्या अपि प्रतिपदविधानत्वात्समासानुपपत्तिरित्याशङ्कते **नन्विति**। षष्ठी शेष इत्येतदतिरिक्ता प्रतिपदविधानेत्यर्थः। (प्रतिपदविधाना षष्ठी न समस्यत इति वाच्यम्। सर्पिषो ज्ञानम्)। कृतीति कृच्छब्दोपादानेन विहितस्वरूपषष्ठ्याः प्रतिप्रसवान्नानुपपत्तिरित्याह **कृद्योगेति**। (कृद्योगा च षष्ठी समस्यत इति वाच्यम्। इध्मप्रव्रश्चनः)। एतच्छङ्कासमाधाने च वार्तिकद्वयारम्भमभ्युपेत्य यदा तु 'ज्ञोऽविदर्थस्य करणे, इत्यादिप्रकरणे षष्ठी शेष इत्यतः शेषग्रहणानुवृत्तेर्न माषाणामश्नीयादित्यादिवत् ज्ञोऽविदर्थस्येत्यादिविषयेऽपि षष्ठी शेष इत्यनेनैव षष्ठीसिद्धेः षष्ठीप्रकरणारम्भवैयर्थ्ये प्राप्ते षष्ठी भवत्येव श्रूयत एव न लुप्यत इति समासप्रयुक्तलोपनिषेधेन समासनिवृत्तिफलकनियमार्थत्वान्न प्रकरणवैयर्थ्यमिति प्रकरणारम्भसामर्थ्यादिव सर्पिषो ज्ञानमित्यादौ समासनिषेधस्य लाभात्प्रतिपदविधानेति वार्तिकानारम्भः तत एव कृद्योगवार्तिकानारम्भश्च तदा ज्ञोविदर्थस्येत्यादौ शेषग्रहणानुवृत्तावपि 'कर्तृकर्मणोः कृती'त्यत्र शेषग्रहणाननुवृत्त्या कारकषष्ठ्या लक्षणान्तराप्राप्ताया एवानेन विधानादेतत्प्रतिषेधाप्रसक्तेर्न काऽप्यनुपपत्तिरिति द्रष्टव्यम्। नन्वत्रा-प्यनुपपत्त्यन्तरमस्त्येव। तथा हि। कर्तृकर्मणोः कृतीत्यस्या अनभिहिताधिकारविहितत्वादनभिहिताधिकार-विहितद्वितीयापवादकत्वाच्चाकर्मकेभ्योऽनभिहितकर्तृमात्रे सकर्मकेभ्यश्च कर्तृकर्मणोर्यदनभिहितं तत्र प्रवृत्तेः सकर्म-केभ्यो भावे कृत्युभयोरनभिहिततया उभयत्रापि षष्ठीप्रसक्तौ कर्तरि तृतीयैव न षष्ठीत्युभयत्र प्रसक्तषष्ठीनियमार्थं प्रवृत्तेनोभयप्राप्तौ कर्मणीत्यनेन 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति कर्तृकर्मणोः कृतीति प्राप्तषष्ठ्या एवोभयप्राप्तिविषये कर्मण्येव षष्ठीति नियमनात्। ब्रह्मजिज्ञासेत्यत्र च कर्त्रनिर्देशेऽपि मुमुक्षुरूपकर्तु-र्गम्यमानत्वादुभयप्राप्तौ कर्मणीत्यत्र चोभयस्मिन्निति वक्तव्ये प्राप्तिग्रहणेन कर्तृकर्मणोरप्रयोगेऽपि गम्यमानत्वेनापि प्रसक्तिमात्रस्य सूचितत्वादन्तर्धौ येनादर्शनमित्यत्र कर्मतयाऽऽत्मन इत्यस्य गम्यमानत्वादुभयप्राप्तिव-त्प्रकृतेऽप्युभयप्राप्तेः संभवेनैतत्सूत्रप्रापितषष्ठ्याः समासस्य कर्मणि चेति प्रतिषेधात्समासानुपपत्तिस्तदवस्थैवेति चेन्न। अकाराकारयोः प्रयोगे प्रतिषेधो नेति वार्तिकेनोभयप्राप्तौ कर्मणीति नियमलब्धकर्तृषष्ठीप्रतिषेधस्य निराकरणेनाकारप्रयोगे उभयप्राप्तावित्यस्याप्राप्तेश्चिकीर्षा देवदत्तस्य कटस्येत्यादाविव ब्रह्मजिज्ञासेत्यत्रापि जिज्ञासा-शब्दस्य अःप्रत्ययादित्यप्रत्ययान्तत्वेनोभयप्राप्तावित्यस्याप्राप्तौ ब्रह्मणः कर्मत्वस्य च विवक्षितत्वात् कर्तृकर्मणोः कृतीति प्राप्तषष्ठीसमासस्य निरपवादत्वात्। न च कर्मणि चेत्येव कर्तृकर्मणोरिति प्राप्तषष्ठ्या अपि समासापवाद इति वाच्यम्। कर्मणि चेत्यत्र किञ्चित्कर्मषष्ठीग्रहणेऽपां स्रष्टेत्यादावप्यनेनैव षष्ठीसमासप्रतिषेधसिद्धेः यौक्तमते





'तृजकाभ्यां कर्तरि' इत्यस्य जयादित्यमते 'कर्तरि च' इत्यस्य वैयर्थ्यापत्त्या निपातानामनेकार्थत्वादितीत्यर्थकचशब्देन कर्मणीत्युच्चार्य या षष्ठी विधीयते सा न समस्यत इत्यर्थलाभात् 'कर्मणि च' इत्यनेनोभयप्राप्ताविति प्राप्तषष्ठीसमासनिषेधसिद्धावपि 'कर्तृकर्मणोः कृती'ति प्राप्तसमासनिषेधासिद्धेः । एवं च शेषग्रहणानुवृत्तिलब्धनियमप्रयुक्तस्य वा कर्मणि चेत्येतत्प्रयुक्तस्य वा समासनिषेधस्याप्रसक्तेर्धर्मजिज्ञासा देवदत्तस्य शिष्यस्याचार्यशुश्रूषेत्यादिवद्ब्रह्मजिज्ञासेत्यपि समासो युक्त एवेति दिक् । ( षष्ठी शेषे । कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः शेषस्तत्र षष्ठी । राज्ञः पुरुषः । कर्मादीनामपि संबन्धमात्रविवक्षायां षष्ठ्येव । सतां गतम् । सर्पिषो जानीते । मातुः स्मरति । एधोदकस्योपस्कुरुते । भजे शंभोश्चरणयोः । फलानां तृप्तः । ज्ञोऽविदर्थस्य करणे । जानातेरज्ञानार्थकस्य करणे शेषत्वेन विवक्षिते षष्ठी स्यात् । सर्पिषो ज्ञानम् । कर्तृकर्मणोः कृति । कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात् । कृष्णस्य कृतिः । जगतः कर्ता कृष्णः । कृति किं तद्धिते मा भूत् । कृतपूर्वी कटम् । उभयप्राप्तौ कर्मणि । उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी स्यात् । आश्चर्यो गवां देहोऽगोपेन । स्त्रीप्रत्यययोरकाकारयोर्नायं नियमः । भेदिका बिभित्सा वा रुद्रस्य जगतः । शेषे विभाषा स्त्रीप्रत्यय इत्येके । विचित्रा जगतः कृतिर्हरेर्हरिणा वा । केचिदविशेषेण विभाषामिच्छन्ति । शब्दानामनुशासनमाचार्येणाचार्यस्य वा । अन्तर्धौ येनादर्शनमिच्छति । व्यवधाने सति यत्कर्तृकस्य आत्मनो दर्शनस्याभावमिच्छति तदपादानं स्यात् । मातुर्निलीयते कृष्णः । अन्तर्धौ किम् । चोरान्न दिदृक्षते । इच्छतिग्रहणं किम् । अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात् । अःप्रत्ययात् । प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारप्रत्ययः स्यात् । चिकीर्षा पुत्रकाम्या । कर्मणि च । उभयप्राप्तौ कर्मणीति या षष्ठी सा न समस्यते । आश्चर्यो गवां देहोऽगोपेन । कर्त्रर्थतृजकाभ्यां षष्ठ्या न समासः । अपां स्रष्टा । वज्रस्य भर्ता । ओदनस्य पाचकः । जयादित्यमते कर्तरि चेति सूत्रार्थस्तु कर्तरि यौ तृजकौ ताभ्यां सह कर्मणि षष्ठी न समस्यत इति यादुपत्ये प्रदर्शितः । कौमुद्यां तु कर्तृषष्ठ्या अकेन न समासः । भवतः शायिका । नेह तृजनुवर्तते । तद्योगे कर्तुरभिहितत्वेन कर्तृषष्ठ्या अभावादित्युक्तम् । तृजकाभ्यां कर्तरीति सूत्रमनोरमायां तु । इह कर्तरीत्यकस्यैव विशेषणं न तु तृचः । अव्यभिचारात् । तथाऽप्युपरञ्जकमात्रमभिप्रेत्याह **कर्त्रर्थेति** । जयादित्यस्तु कर्तृषष्ठ्या इति व्याचष्टे । तन्मते तु तृजुत्तरार्थ इति कल्प्यं स्यात् । किञ्च कर्तृग्रहणं तृजकयोरेव विशेषणमिति युक्तम् । तयोः श्रुतत्वान्न तु षष्ठ्या इति भाव इत्युक्तम् । ) इमे च टीकोक्ते शङ्कासमाधाने उक्तशङ्कासमाधानयोरुपलक्षणे इति द्रष्टव्यम् ।

**वा०र०— अनभ्युपगम्येति** । प्रधानभूतकर्मलाभार्थमिति शेषः । प्राप्तषष्ठ्या इत्यनन्तरं अस्या इति वर्तते । अस्याः षष्ठ्या अपीति योजना । सर्पिष इत्यादिदृष्टान्तसङ्ग्रहायापिपदम् । **प्रतिपदविधानत्वादिति** । तस्याश्च प्रतिपदविधानेति वार्तिकेन समासप्रतिषेधादिति मूलेनान्वयः । यद्वा **प्रतिषिध्यत** इत्यन्तमूलानन्तरं शेषपूरणेन सङ्गत्यप्रतिपादनं **कर्तृकर्मणोरित्यादि** । तेन मूले अस्तु नाम प्रतिषेधः । प्रकृते किमायातमिति शङ्का निराकृता भवति । **समासेति** । सर्पिषा करणेन प्रवृत्तिरित्यर्थसर्पिषो ज्ञानमित्यादाविवेति शेषः । अत एव प्रागपिपदेन सर्पिष इत्यादि षष्ठी समुच्चयः कृतः । तत्र हि ज्ञोऽविदर्थस्य करण इत्यनेन प्रवृत्तिरूपा विदर्थकरणत्वनिमित्तकषष्ठीविधानादिति ज्ञेयम् । पदं पदं तत्तद्योग इति यावत् । विहिता या षष्ठी सा प्रतिपदविधानेत्यर्थं मनसि कृत्वाह **षष्ठी शेष इत्येतदिति** ।





विशेषसूत्रविहिता षष्ठीति फलितोऽर्थः। कृद्योगेति मूलं साकाङ्क्षत्वादपेक्षितं पूरयन् योगेति व्याकुर्वन्नवतारयति **कृतीति कृच्छब्देति**। स्वरूपषष्ठ्यामित्यनेन प्रथमतस्तावदियं षष्ठी प्राप्ता तदनन्तरं प्रतिपदेति वार्तिकेन निवर्तिता ततः कृद्योगेति वार्तिकेन निवर्तकस्यापि निवृत्तौ सैव अवस्थिता भवतीति सूचयति षष्ठ्यामिति विषयसप्तमी। **प्रतिप्रसवादिति**। लक्षणेन विहितस्य बाधकेन चापोदितस्य पुनरभ्यनुज्ञानं प्रतिप्रसवशब्दार्थः। **कृद्योगेतीति**। सन्नन्तजिज्ञासाशब्दाद:प्रत्ययादिति सूत्रेणाकारप्रत्यये तस्य कृदतिङिति कृत्त्वादस्त्यत्र कृद्योग इति भावः। **वार्तिकद्वयेति**। ज्ञोऽविदर्थस्येत्यादि सूत्रोदाहरणे सर्पिषो ज्ञानमित्यादौ समासाभावसिद्ध्यर्थे प्रतिपदविधानेति वार्तिकारम्भं उक्तवार्तिकादेव व्यासकृतिरित्यादावपि समासो न स्यादित्याशङ्कापरिहारायोत्सर्गतः प्राप्तषष्ठीसमासस्य यन्निवर्तकं पूर्ववार्तिकं तस्यापि अन्येन निवर्तनाद्युक्तः समास इति प्रतिपादनाय कृद्योगेति वार्तिकारम्भं चेत्यर्थः। कृते इति शेषः। प्रतिपदविधानेति वार्तिकारम्भमभ्युपेत्य शङ्का कृता। कृद्योगेति वार्तिकारम्भमभ्युपेत्य समाधानं कृतमिति विवेकः। यदि पूर्ववार्तिकमारम्भणीयं तर्हि तद्बलाद्व्यासकृतिरित्यादावपि समासनिषेधे प्राप्ते तद्वारणाय कृद्योगेत्युत्तरवार्तिकारम्भो युज्यते। यदा तु पूर्ववार्तिकप्रयोजनस्य सर्पिषो ज्ञानमित्यादौ समासाभावस्य प्रकारान्तरेण सिद्धेस्तदनारम्भस्तदा तद्बलेन समानविषयतया व्यासकृतिरित्यादावपि समासाभावप्राप्त्यभावात्तन्निवर्तकतयो-त्तरवार्तिकमप्यनारम्भणीयमेव। तथा च पूर्ववार्तिकमनुसृत्यात्र समासानुपपत्तिशङ्काया एवाभावात्तन्निवृत्तये वार्तिकान्तरानुसरणमनावश्यकमिति भावेनाद्यवार्तिकारम्भसापेक्षद्वितीयवार्तिकस्याद्यवार्तिकानारम्भेणानारम्भं वक्तुं प्रथमस्य तावदनारम्भं प्रयोजनान्यथासिद्ध्या प्रतिपादयति **यदा तु ज्ञोऽविदर्थस्येति**। इत्यादीत्यादिपदेनाधीगर्थ-दयेशां कर्मणि। कृञः प्रतियत्ने। रुजार्थानामित्यादिकं शेषानुवृत्तियुक्ततया वृत्त्यादौ वर्णितं सूत्रसप्तकं ग्राह्यम्। मध्ये दिवस्तदर्थस्येत्यादिसूत्रेषु शेषग्रहणाननुवृत्तेर्मर्यादामुक्तत्वात्। **न माषाणामित्यादिवदिति**। इत्यादौ यथा संबन्धसामान्यविवक्षया शेषषष्ठी तथेत्यर्थः। **विषयेऽपीति**। सर्पिषो ज्ञानमित्यादावित्युत्तरत्रोक्ते इत्यर्थः। **षष्ठीप्रकरणेति**। ज्ञोऽविदर्थस्येत्यादिप्रकरणेत्यर्थः। **वैयर्थ्ये प्राप्त इति**। तत्परिहारायेति पूरणीयम्। नियमार्थत्वा-दित्युक्तनियमस्वरूपप्रदर्शनं षष्ठी भवत्येवेत्यादि। समासे सत्येव सुपो धातुप्रातिपदिकयोरिति तल्लोपप्रसक्तेरिति भावः। न प्रकरणवैयर्थ्यमित्यतः पदमर्यादौ समाहितत्वेनेति पूरणीयम्। प्रकरणं तु नियमार्थमस्मिन्विषये षष्ठी भवत्येवेत्यादेस्तत्रोक्तत्वादिति भावः। **सर्पिषो ज्ञानमित्यादाविति**। ज्ञोऽविदर्थस्येत्यादि विषय इति वर्तते। वार्तिकानारम्भ इत्येतत् द्वयमपि वार्तिकमनारम्भणीयमित्यर्थः। तत एव समासनिषेधकवार्तिकरूपप्रसञ्जका-भावादेव। तदेत्यस्यैतत्प्रतिषेधाप्रसक्तेर्न काप्यनुपपत्तिरित्युत्तरेणान्वयः। एतत्प्रतिषेधाप्रसक्तेः। प्रतिपदविधानेति प्रतिषेधाप्रसक्तेः। काऽप्यनुपपत्तिः निषेधप्रसक्तिसाध्यसमासानुपपत्तिरूपा वा समासानुपपत्तिपरिहाराय कृद्योगेति वार्तिकानुसरणरूपा वाऽनुपपत्तिरित्यर्थः। नन्वाद्यानुपपत्तेः परिहारेऽपि द्वितीयाया अपि प्रतिपदेत्येतद्वार्ति-काख्यप्रसञ्जकनिमित्तेनाप्रसरेऽपि प्रकारान्तरेणास्ति प्रसरः। प्रकारान्तरेणैव समासानुपपत्तिप्रसरात्तन्निवर्तनाय तदनुसरणस्यावश्यकत्वात्। तथाहि। अभ्युपगतं हि प्रतिपदेति वार्तिकानारम्भोपपादनाय शेषग्रहणानुवृत्तिलब्धः समासनिवृत्तिफलको नियमोऽस्तीति। तथा चोक्तरीत्या ज्ञोऽविदर्थस्येत्यष्टसूत्र्या शेषग्रहणेन नियमार्थत्वप्राप्तिवत् कर्तृकर्मणोः कृतीति षष्ठीविधायके विशेषग्रहणानुवृत्तेस्तस्य चोक्तरीत्यैव तत्सूत्रवैयर्थ्यपरिहाराय षष्ठी भवत्येवे-





त्यादिरूपनियमार्थमिदं सूत्रमिति समासनिवृत्तिफलकनियमार्थत्वप्राप्त्या व्यासकृतिरित्यादावपि समासनिषेधस्यैतत्सूत्रादेव प्राप्तेस्तत्प्रतिप्रसवाय कृद्योगेति वार्तिकस्यारम्भणीयतया प्रकृतेऽपि कर्तृकर्मणोरिति सूत्रप्रतिषिद्धे समासे तत् प्रतिप्रसवाय कृद्योगेति वार्तिकानुसरणमवर्जनीयमेव । तत्कथं न कापीत्युक्तमित्यत उक्तं **ज्ञोऽविदर्थस्येत्यादौ शेषेति** । अयमर्थः । अधीगर्थदयेषां कर्मणीति सूत्रे शेषग्रहणानुवृत्तेः कर्मसंबद्धं शेषग्रहणम् । यदि पुनः कर्तृकर्मणोरिति योगेऽपि शेषग्रहणानुवृत्तिस्तर्हि तत्संबद्धकर्मग्रहणमप्यनुवर्तत एवेति कर्तरि च कृतीत्येव सूत्रविन्यासेऽपि चकारेण कर्मणीत्यस्यानुकर्षे चाश्रिते विवक्षितार्थसमर्पणोपपत्तेः पुनः कर्मग्रहणं व्यर्थमेवापद्येत । ततस्तद्ग्रहणसामर्थ्येन शेषग्रहणाननुवृत्तिमङ्गीकृत्य तत्संबद्धकर्मग्रहणनिवृत्तिश्चाश्रयणीयेति ज्ञापनात् कर्तृकर्मणोरिति सूत्रेण कारकषष्ठ्येव लक्षणान्तराप्राप्ता विधीयत इत्यङ्गीकार्यमिति । ततश्च कर्तृकर्मणोरित्यस्य नियमार्थत्वाभावात्तत्सूत्रेण समासप्रतिषेधाप्राप्तेस्तत्प्रतिषिद्धप्रसवायापि कृद्योगेति वार्तिकस्यानारम्भणीयत्वात्प्रकृतेऽपि सूत्रप्रतिषिद्धसमासप्रतिप्रसवाय कृद्योगवार्तिकस्यानुसरणाप्रास्त्या तदनुसरणरूपानुपपत्तिरुक्तसमासानुपपत्तिरूपप्रकारान्तरप्राप्तापि नास्तीति युक्तमुक्तं न कापीतीति भावः । अत एवोपसंहारे वक्ष्यति **एवं च शेषग्रहणानुवृत्तिलब्धेति** । विद्यैवेत्येतदधिकरणीय'घटते मुक्तिदृष्टिस्तु पुरुषेण महीयसे'त्यनुव्याख्यानमूले तट्टीकायामस्मदीये तत्प्रपञ्चने च स्पष्टमेतत् । **अत्रापीति** । कारकषष्ठीविधानपक्षेऽपीत्यर्थः । **अनुपपत्त्यन्तरमिति** । शेषानुवृत्तिलब्धनियमप्रयुक्तसमासानुपपत्तिरूपानुपपत्तेस्तदनुपपत्तिपरिहाराय कृद्योगेति वार्तिकानुसरणरूपानुपपत्तेश्चान्या कर्मणि चेत्यनेन समासरूपानुपपत्तिरस्त्येवेत्यर्थः । कर्तृकर्मणोः कृतीति सूत्रस्य ह्ययमर्थः । कृत्प्रयोगे कर्तरि कर्मणि च षष्ठीविभक्तिर्भवतीति । तत्र च कृत्प्रत्ययस्य कर्तरि कर्मणि वा विधानप्रास्त्यङ्गीकारे तेन कृतैव कर्तृकर्मणोरभिहिततया अनभिहिताधिकारविहिता षष्ठी न युज्यते । अतः कर्तृकर्मणोरभिहितत्वमुपपादयितुं तस्य सकर्मकाकर्मकधातूत्तरकृद्भेदेनाभिन्नप्रकारत्वात्तं विशेषं च वदन् सूत्रविषयमाह **कर्तृकर्मणोः कृतीत्यस्या इति** । युक्त्यन्तरमाह **अनभिहिताधिकारविहितद्वितीयेति** । एतादृशद्वितीयापवादेन प्रवृत्ता षष्ठ्यपि तथाविधैव युक्ता । तयोः समानविषयत्वाभावे पूर्वापवादेनोत्तरप्रवृत्त्यनुपपत्तेरिति भावः । अतः कर्तृकर्मणोः कृतीत्यस्याः षष्ठ्याः अनभिहितकर्तृमात्रादौ प्रवृत्तेरिति संबन्धः । अयमर्थः । कर्तृकर्मणोरित्यनेन हि कृद्योगा षष्ठीति तावदङ्गीकृतम् । सा च षष्ठी यत्र कृता कर्त्रादिरनभिधानं तत्रैव । तत्रापि विशेषोऽस्ति । कृत्प्रत्ययो ह्यकर्मकेभ्यो धातुभ्यः कर्मण्यसंभवात्कर्तृमात्रे भावे वा भवति । सकर्मकेभ्यश्च कर्तरि कर्मणि भावे च भवति । ततश्च कृत्प्रत्ययान्तेभ्योऽप्यकर्मकेभ्यो धातुभ्यः भावे विधानादेव कृतः कर्तुरनभिधायकतया भवतः शायिकेत्यादि भावार्थककृत्प्रत्ययान्ताकर्मकधातुभ्योऽनभिहितकर्तृमात्रे षष्ठी भवति । सकर्मकेभ्यो धातुभ्यस्तु कर्तरि चेत् कृत्प्रत्ययः तर्हि कर्मणोऽनभिहितत्वम् । यदि च कर्मणि तर्हि कर्तुरनभिधानमिति कृत्प्रत्ययान्तसकर्मकधातुभ्योऽनभिहितकर्तृकर्मणोरन्यतरस्मिन् अपां स्रष्टेत्यादौ षष्ठी भवति । तथा चाकर्मकेभ्य उत्तरकृता भावाभिधानस्थले कर्तुरनभिधानादनभिहितकर्तृमात्रे षष्ठी भवति । सकर्मकेभ्यस्तूत्तरकृता कर्तृकर्मणोरन्यतराभिधानस्थलेऽन्यतरस्यानभिधानादनभिहितेऽन्यतरस्मिन् षष्ठी भवतीत्येवं स्थलद्वये प्रवृत्तेरिति । अकर्मकेभ्य इत्यनन्तरं भावे कृतेति शेषः । सकर्मकेभ्यश्चेत्यनन्तरं कर्तृकर्मणोरन्यतरस्मिन्नर्थे प्राप्तकृतेति शेषः । एवमुभयप्राप्तावित्येतत्सूत्रविषयव्यावृत्ततया





कर्तृकर्मणोरित्येतत्सूत्रविषयं प्रदर्श्योत्तरसूत्रविषयेऽपि कर्तृकर्मणोरित्येतत्प्राप्त्यनन्तरमेव तेन नियमकरणमिति दर्शयति **सकर्मकेभ्यो भावे कृतीति**। सकर्मकेभ्यो भावे कृतीत्यादि मञ्जर्यनुसारेणेदं तद्विषयप्रदर्शनम्। तदाक्षिप्ततया कर्तृकर्मणोरित्यस्यापि विषयो विवेकाय दर्शित इति ज्ञेयम्। सकर्मकेभ्यो भावे कृति सति तेन कृता भावाभिधानेऽपि कर्तृकर्मणोरनभिधानेनानभिहितयोस्तयोरुभयोरपि नियामकाभावेनान्यतरनिषेधायोगात् षष्ठीप्रसक्तावित्यर्थः। सकर्मकेभ्यश्च कर्तृकर्मणोर्यदनभिहितमित्यनेनान्यतरानभिधानस्थल इवोभयानभिधानस्थलेऽपि कर्तृकर्मणोरित्यस्य प्रवृत्तेरिति पूर्ववाक्यार्थस्य ज्ञातुं शक्यत्वादत्रोभयोः प्राप्त्युक्तौ न पूर्वविरोध इति ज्ञेयम्। कर्त्रिति पूर्वसूत्रार्थे नियमप्रकारं दर्शयति **कर्तरि तृतीयैवेति**। पूर्वं कर्तुरनभिधानाय भावे कृदाश्रयणात्कर्तुरभिधानादेव षष्ठ्यभावोपपत्तौ षष्ठ्यपकर्षणार्थनियमानर्थक्यमिति शङ्कानवकाश इति ज्ञेयम्। **उभयत्रेति**। कर्मणि तु षष्ठ्येवेत्यपि ज्ञेयम्। वक्ष्यति च **कर्मण्येवेति**। उभयप्राप्तावित्यस्य कर्त्रित्येतत्पूर्वसूत्रमेव नियम्यं कुत इत्यतस्तत्र युक्तिमाह **अनन्तरस्य विधिर्वा भवतीति**। कर्तरि विप्रकृष्टशेषषष्ठीनिषेधे हेत्वभावादिति भावः। **उभयप्राप्तिविषय इति**। आश्चर्यो गवां दोहोऽशिक्षितेनागोपालकेनेत्यादावित्यर्थः। अनेनोभयोः प्राप्तिर्यस्मिन्कृति सोऽयमुभयप्राप्तिस्तादृशकृतिकर्मण्येव षष्ठी। न कर्तरीति सूत्रार्थसूचनमपि जातमिति ज्ञेयम्। गवां दोह इत्यत्र दोहनं दोह इति भावे घञ्। तथाच भावे कृति उभयोरनभिधानेन गोशब्दादिवागोपालकादपि षष्ठ्यां प्राप्तायां कर्तरि तृतीयैवेत्यादिनियमकरणमिति भावः। अत्रोदाहरणे आश्चर्यं प्रतिपाद्यम्। तदुपपादनाय गवामित्यनेन दुर्दोहत्वरूपाजादिवैलक्षण्यं प्रतिपादितं तथा अजादिपालकत्वादगोपालकस्य दोहासामर्थ्यं संभावितमिति वक्तुमप्यशिक्षितत्वरूपागोपालकत्वोक्तिरिति ज्ञेयम्। नन्वस्तु यत्कृति उभयप्राप्तिस्तत्रायं नियमः। प्रकृते च कर्मणः प्रयोगेऽपि कर्तुरप्रयोगेणोभयोः प्राप्त्यभावात्कथमुभयप्राप्तिविषयतेत्यत आह **ब्रह्मजिज्ञासेत्यत्र चेति**। **गम्यमानत्वादिति**। अधिकारानन्तरमित्यर्थकेनाथशब्देन गम्यमानत्वादित्यर्थः। ननु प्राप्तिशब्देन प्रयोगस्यैव विवक्षणात्कथमेतदित्यतो मञ्जर्युक्तरीत्याह **उभयप्राप्ताविति**। प्राप्तिशब्दस्य प्रसक्तिमात्रपरतया प्रसक्तेश्च प्रयोगेणेव गम्यमानत्वेनापि संभवान्नानुपपत्तिरित्यर्थः। प्रयोगाभावेऽपि गम्यमानतया प्रसक्तिमात्रेणोभयप्राप्तावित्यस्य प्रवृत्तिरित्यत्र सूत्रकारीयं ज्ञापकमाह **अन्तर्धाविति**। व्यवधानमन्तर्द्धिः येनेति कर्तरि तृतीया अन्तर्द्धि निमित्तं येनादर्शनमात्मन इच्छति तत्कारकमपादानसंज्ञं भवतीति सूत्रार्थः। उपाध्यायादन्तर्धत्ते इत्युदाहरणम्। एवं च शिष्यः स्वात्मनः कर्मणो येनोपाध्यायेनादर्शनं तत्कर्तृकदर्शनाभावमन्तर्द्धिनिमित्तकमिच्छतीत्यर्थोपयोगितया आत्मन इत्यस्य प्रयोगाभावेऽपि गम्यमानत्वेन तस्य लाभमाश्रित्यात्मनो येनादर्शनमिति सूत्रविन्यासेऽङ्गीकृतेऽदर्शनमिति कृतिर्येनेत्युक्तस्य कर्तुरात्मन इत्युक्तकर्मणश्च प्राप्तिमाश्रित्योभयप्राप्तौ कर्तरि तृतीयैव कर्मणि षष्ठ्येवेति च नियममाश्रित्यैव सूत्रे येनेति तृतीयानिर्देशस्य क्रियमाणतया तन्निर्देशेनैव तत्रोभयप्राप्तेः कर्मणो गम्यमानत्वप्रयुक्तत्वावगमादिति भावः। एतेनैतदपि पराकृतम्। उभयप्राप्ताविति सूत्रे हि षष्ठी हेतुप्रयोग इति बहुव्यवहितात्कृत्वोऽर्थप्रयोग इत्यल्पव्यवहिताद्वा सूत्रात्प्रयोग इत्यस्यानुवृत्तिरस्ति। तत्प्रयोगपदं च यत्र सामर्थ्यप्राप्तमुभयोरुपादानं स उभयप्राप्तावित्यस्य विषय इत्यादिन्यासानुसारेण यत्र कृति कर्तृकर्मणोः सामर्थ्यात्प्राप्तमुपादानं तत्रैवायं नियम इत्यादिशेष्याद्यनुसारेण च कर्तृगतोत्कर्षप्रतिपादनाविनाभूतत्वेन कर्तृकर्मोभयोपादानावश्यंभावपरम्। अत एवाश्चर्यो गवां दोहोऽशिक्षितेन





अगोपालकेनेत्यादिरेव तद्विषयः । तत्र ह्याश्चर्यपदोक्तकर्तृगतोत्कर्षोपपादनोपयोगिभूतं दुर्दोहत्वरूपाजादिवैलक्षण्यं दोह्यकर्मणां गोत्वेन प्रतिपादनमस्ति । दोहासामर्थ्यसंभावनाय अगोपत्वाशिक्षितत्वादिना गोपात् वैलक्षण्यं च कर्तुः प्रतिपादितमस्ति । तदुभयप्रतिपादनाय तदुभयोपादानस्यावश्यकस्य तत्र सत्त्वात् । ब्रह्मजिज्ञासेत्यत्र च कर्तृगतातिशयप्रतिपादनायोभयोरुपादानाभावान्नोभयप्राप्तावित्येतद्विषयत्वमिति । अन्तर्द्धौ येनेति सूत्रे गम्यमान-कर्मोपादायोभयप्राप्तिं स्वीकृत्य येनेति तृतीयास्वीकारोऽस्ति । तत्र च कर्तृगतातिशयप्रतिपादनायोभयो-पादानाभावात् तदर्थकोभयोपादानस्य विवक्षया असार्वत्रिकत्वेन प्रकृतेऽपि तथाविधातिशयार्थकोभयोपादाना-भावेऽपि कर्तृकर्मोभयप्राप्तिमात्रेणोभयप्राप्तावित्येतद्विषयत्वोपपत्तेः । न्यासाद्युक्तिस्तु प्रायिकाभिप्रायेति न दोषः । ये तु प्रयोगपदमुभयप्रयोगावश्यंभावार्थकमाहुस्तेषामुभयप्राप्तिपदार्थापर्यालोचनं मूलम् । येनेति सौत्रतृतीयायोगश्च तत्पक्षे पूर्वोक्तरीत्या आयातीति ज्ञेयम् । यत्तु परिमले प्रयोगपदं कर्तृगतं किञ्चिदतिशयविवक्षासामर्थ्यात् कर्तृ-कर्मोभयप्रयोगावश्यंभावपरं एवं चाश्चर्यो गवामित्यादि प्रतिपादितम् । यदपि तदनुवादरूपेणात्राहुः । कृत्वोऽर्थप्रयोगे कालेऽधिकरण इति व्यवहितपूर्वसूत्रात्प्रयोग इत्यनुवर्तत इत्यादि अस्य विशेषस्याप्रयोजकत्वादित्यन्तमन्यथा-ख्यातौ प्रतिपादितम् । तदुभयमज्ञानमूलम् । उभयप्राप्तावित्येतदर्थपरिज्ञानेनैव कर्तृकर्मणोरुभयोः प्रयोगो नावश्यक इत्येतस्य प्रत्यायनेन प्रयोगावश्यकत्वशङ्काया एवानुदयात् । सामर्थ्यप्राप्तमुभयोपादानमित्यादिन्यासानुसारेण कल्पतरावपि यस्तु कर्मणि चेति कर्मणि षष्ठ्याः समासप्रतिषेधः स उभयप्राप्तौ कर्मणीति या कर्तृकर्मणोरुभयोरपि सामर्थ्यादुपादानप्राप्तौ कर्मण्येवेति नियमिता षष्ठी तद्विषयः । यथाश्चर्यो गवामित्याद्युक्तम् । न चैतावता कल्पतरु-कारस्य प्राप्तिपदोक्तोपादानातिरिक्तः प्रयोगो विवक्षितो गम्यते । प्रस्तुते ब्रह्मकर्मत्वमेवोपादीयते न कर्तृगतोऽतिशय इत्युत्तरत्राप्यतिशयाभावेनेव सामर्थ्यप्राप्तोभयोपादानाभाव एव वर्णितः । कर्तृगतातिशयस्य यदुपादानाभावे लाभायोगस्तदुभयोपादानमेव सामर्थ्यप्रयुक्तमिति तेनाङ्गीकृत्य प्रकृतेऽतिशयाभावेनोभयेति सूत्राप्रवृत्तेर्वर्णने सति टीकाकारंमन्येन प्रयोगावश्यकत्वपर्यन्तं धावनमकृत्वोपादानमात्रमेव प्राप्तिपदोक्तं पुरस्कृत्य अतिशयाभावादिवर्णनस्य कर्तव्यतयाऽधिकवचनस्य कथं नाज्ञानमूलकता । प्रयोगानुवृत्तिफलतया प्रयोगावश्यंभावमेव कैश्चिदुक्तमत्राशङ्क्य भवद्वक्ष्यमाणरीत्या तत्परिहारोऽपि पृथगेव कार्यः । अतिशयाभावेन सूत्रप्रवृत्तेः प्रकृतेऽसंभवप्रतिपादककल्पतरुग्रन्थे प्रयोगाभावेनाप्राप्त्युपलक्षणा वा वर्णनीया । तयोः पृथग्युक्तित्वेनैकीकारायोगात् । युक्तिद्वयपरतया मद्वाक्यं व्याख्येयमित्यभिप्राये च ननु यत्रेत्युत्तरशङ्काविरोधः । तत्रापि अतिशयाभावोपलक्षणायामुभयप्राप्तावित्यत्रत्य-प्राप्तिपदार्थाज्ञानं त्वाश्रितमेव भवेत् । तत्पदार्थकथनमात्रेण व्यावर्त्यशङ्काया अस्वरसत्वेनोत्त्ययोगश्चानिवार्यः । ननु यत्रेत्यस्वरसोऽपि प्राप्तिपदार्थं स्वीकृत्यातिशयाभावमात्रविषयतया व्याख्येय इति चेत् । तर्हि विमलमेतत्पाण्डित्यं यत्स्वयं व्याख्यानाय प्रवृत्तः स्वमूलाननुसारी मूलमनुसर्तुं प्रतिपदं स्वव्याख्यानस्यान्यैः कर्तव्यत्वमिच्छतीति । तदेवं परिमलोक्तप्रयोगपदभारमनादृत्य कल्पतर्वविरोधेन उभयप्राप्ताविति सूत्रार्थमर्यादया च कृत्वोऽर्थप्रयोग इत्यारभ्य नियमनमित्यर्थ इत्यन्तोऽयं ग्रन्थः कथञ्चिद्योजयितुं शक्यते । परन्तु ननु यत्र कर्तृकर्मोभयप्रयोगो नास्ति तत्र गम्यमानेऽपि कर्मण्युभयप्राप्तिसूत्रेण कर्तरि षष्ठ्याः प्रतिषेधमित्यादिरुत्तरग्रन्थो विरुध्यत एव । तत्र प्रयोगा-वश्यकत्वेनोभयप्राप्तिसूत्रविषयत्वाभावे पूर्वमुक्ते सति तदनावश्यकत्वस्य सूत्रकारसंमत्या प्रतिपादनमुखेन





ब्रह्मजिज्ञासेत्यत्रोभयप्रयोगाभावेऽपि उभयप्राप्तिसूत्रविषयत्वं संभवतीति शङ्क्यत इति प्रतीतेः। अन्यथा तच्छङ्कानवकाशात्। तस्मात्सामर्थ्यादुभयोपादानेति कल्पतरूपरि सूत्रकारीययेनेति निर्देशज्ञापितसामर्थ्यमप्रयोजकमुभयोपादानमात्रमावश्यकमिति वैयाकरणमर्यादया प्राप्तो योऽस्वरसस्तं प्रदर्श्य अकादियोगे प्रतिषेध इत्यादि वार्तिकव्याख्यानभाष्यानुसारेण परिहारं चाभिधास्यामीति हृदि कृत्वा प्रवृत्तः कृत्वोऽर्थप्रयोग इत्यतोऽनुवृत्तप्रयोगपदस्य कल्पतरुकर्तृगतातिशयविवक्षासामर्थ्यात् तदुभयोपादानं यथार्थतया संमतम्। तथा प्रयोगोऽप्यर्थतया संमत इति भ्रान्त्या प्रयोगावश्यंभावेत्यादि व्याख्यातवान्। ननु यत्रेत्यादिशङ्कामुत्थापितवांश्चेति सकलसुधीभिराकलयितुं शक्यमेव। अन्यथाख्यातिकारैस्तु प्रागुदाहृतकल्पतरुव्याख्यानरूपकृत्वोऽर्थप्रयोग इत्यादि ननु यत्रेत्येतत्पर्यन्तपरिमलानुसारेणात्राहुरित्यादितच्चिन्त्यमित्येतत्पर्यन्तमुक्त्वा ननु यत्रेत्यादि अप्रयोजकत्वादितीहापरितोषश्चेदेवं परिहारो द्रष्टव्यः। अकाकारयोरित्यादिकं तच्चिन्त्यमित्यादिना यथाग्रन्थमनूदितम्। तत्र मूलम् अज्ञानभ्रान्त्यादीति सुधियां स्पष्टमेव। परिमलानुवादत्वेन तत्पक्षे प्रोक्तदूषणग्रस्तता च। परिमले साधनचतुष्टयसंपन्न इत्यादि वक्तुमुचितम्। तेनोत्तरमूलेऽनूद्यमानविवरणोक्तसूत्रार्थस्वीकारात्। अस्मन्मते हरिभक्तिपूर्वकाध्ययनादिरूपाधिकारस्य पृथगेव स्वीकारात्। आश्चर्यस्य कर्तृगततया कर्तृकर्मोभयगतातिशयेत्युक्त्ययोगः कर्तृगताकौशलेति चायुक्तम्। परिमलानुक्तप्रतिपादनेन स्वाज्ञानाविष्कारमात्रं कृतं भवतीत्यादि। तस्मात्परिमलग्रन्थस्तदनुवादरूपेण अन्यथाख्यातिग्रन्थश्च कथं प्रवृत्त इति सुधीभिर्विचार्यम्। **एतत्सूत्रप्रापितेति**। उभयप्राप्तावित्येतत्सूत्रेत्यर्थः। अनेनेदं सूचितम्। कर्मणि चेति सूत्रे उभयप्राप्तौ कर्मणीति तस्याः षष्ठ्या इदं ग्रहणमित्यादि वृत्त्यादिग्रन्थानुसारेण तत्सूत्रस्योभयेति सूत्रप्रापितषष्ठ्या एव समासप्रतिषेधकत्वमिति। कर्मणि चेत्यत्रेत्युत्तरग्रन्थे स्पष्टमेतत्। **तदवस्थैवेति**। समासानुपपत्तिमात्रे तादवस्थ्यम्। उपपादनभेदस्तु संमत एवेति न दोषः। इति चेन्नेत्यत्रेतीत्यावर्तते। तत्राद्यस्यानुपपत्त्यन्तरमस्त्येवेति पूर्वेण संबन्ध इति ज्ञेयम्। **इति वार्तिकेनेति**। उभयप्राप्तौ कर्मणि षष्ठ्याः प्रतिषेधेऽकादिप्रयोगेऽप्रतिषेधः। उभयप्राप्तौ कर्मणि षष्ठ्याः प्रतिषेधेऽकादिप्रयोगे प्रतिषेधो न भवतीति वक्तव्यमिति भाष्योक्तेः। **षष्ठ्याः प्रतिषेध इति**। नियमेनानेन कर्तुः षष्ठी प्रतिषिध्यत इत्यभिप्रेत्येतदुक्तमिति कैयटोक्तेश्च तदुभयानुसारेणोभयप्राप्तावित्यादिवार्तिकार्थानुवादोऽयम्। अत एवाह **नियमलब्धकर्तृषष्ठीप्रतिषेधस्य निराकरणेनेति**। अत एव वार्तिकानुवादरूपकाशिकायामकारयोः प्रयोगे नेति वक्तव्यमिति व्यवहृतम्। अकाकारयोः स्त्रीप्रत्यययोरिह ग्रहणादित्युत्तरकाशिकानुसारात् स्त्रीप्रत्यययोरिति शेषः। स्त्रीप्रत्ययत्वं च स्त्रियां क्तिनित्यधिकारेण विहितत्वम्। ततश्च स्त्रियामित्यधिकारेण विहितयोरकाकारयोः प्रयोगे उभयप्राप्तौ कर्मण्येव षष्ठी न कर्तरीति प्रतिषेधो नास्तीत्यर्थः। **इत्यस्याप्राप्तेरिति**। भेदिका देवदत्तस्य काष्ठानामित्यादौ भाष्याद्युदाहृत इति शेषः। अस्त्वन्यत्र तदप्राप्तिः। प्रकृते तु कथमित्यतो भाष्याद्युदाहृतमुदाहरणैकदेशं प्रकृतेऽन्वितं दृष्टान्तीकृत्याह **चिकीर्षेत्यादाविवेति**। कृञः सन्नन्तादप्रत्ययादित्यकारः प्रत्ययः। स्त्रियां टाप्। तथा चाप्रत्ययान्तचिकीर्षाशब्दयोगे देवदत्तस्य कटस्येत्युभयत्रापि तृतीया न भवतीति दर्शनेन ब्रह्मजिज्ञासेत्यत्रापि जिज्ञासाशब्दस्य सन्नन्तस्याकारप्रत्ययान्तत्वेनोभयप्राप्तावित्यस्याप्राप्तेस्तेन कर्मण्येव षष्ठीति नियमस्याप्राप्तावित्यर्थः। यदप्यकाकारयोः प्रतिषेधो नेति वक्तव्यं शेषे विभाषेति भाष्यकारैरुभयप्राप्तावित्यादि परिमले यश्च तदनुवादरूपे वस्तुतस्त्वकाकारयोः प्रतिषेधो नेति





वक्तव्यं शेषे विभाषेति भाष्यकारेणोभयेत्याद्यन्यथाख्यातौ चाकाकारयोः प्रयोगे प्रतिषेधो न भवतीति वक्तव्यमिति वार्तिकपरित्यागेन अपर आह 'अकाकारयोः प्रयोगे प्रतिषेधो नेति वक्तव्यं शेषे विभाषे'ति भाष्योक्तपक्षान्तरमनूद्य स्थलद्वयस्थभाष्यं वाऽनूद्योभयेति प्रतिषेधस्याकेऽकारे च कृति नित्यमप्रवृत्तिः स्त्रीप्रत्ययरूपे कृतितद्व्यतिरिक्त-कृन्मात्रे वा विकल्पेनाप्रवृत्तिश्चोक्तेत्यादिकमुक्तम् । तदप्यसाधु । अकाकारयोः स्त्रीप्रत्यययोरेव ग्रहणस्य सिद्धत्वेन नित्यमप्रवृत्तिविषयेऽपि स्त्रीप्रत्ययरूपे अकेऽकारे चेत्येव वक्तव्यतया केवलाकाकारयोर्वार्तिकार्थतया वचनायोगात् । अत एवोक्तं काशिकायाम् । अकाकारयोः स्त्रीप्रत्यययोरिह ग्रहणात् तदपेक्षया शेषः स्त्रीप्रत्यय एव गृह्यत इति । प्रक्रियायामपि स्त्रीप्रत्यययोरकाकारयोरित्येव स्पष्टमुक्तिः । भाष्ये स्त्रीप्रत्ययत्वस्य पूर्वत्रैवोत्तरत्राप्यनुक्तेश्च । परन्तु भेदिका देवदत्तस्य काष्ठानामित्यादि स्त्र्यधिकारविहितपर्यायार्हणोत्पत्तिषु ण्वुच्, अःप्रत्ययादिति विहित एव ण्वुजादिप्रयोगस्यैवोदाहरणेन स्त्रीप्रत्यययोरित्यस्याकाकारविशेषणत्वेनाभिप्रेतताया वक्तुं शक्यत्वाच्च । प्रथमतः स्त्रीत्वाविशिष्टाकाकारोदाहरणस्य प्रदर्शनीयतया तत्प्रदर्शनाभावस्य त्वत्पक्षे भाष्यादावयोगाच्च । भवता वा तदुदाहरणस्य प्रदर्शनीयतया भाष्योक्तभेदिकेत्यादेरेवोदाहृतं चेति प्रतिज्ञायोदाहरणानुपपत्तेश्च शेषे विभाषेत्यत्र ह्यकाकारभिन्ने स्त्रीप्रत्ययरूपक्तिनादिकृत्प्रत्यये विभाषा तृतीयानिषेध इत्यर्थानुसारेणैव शोभना खलु पाणिनेः सूत्रस्य कृतिः पाणिनिना सूत्रस्य कृतिरित्यादेर्भाष्ये उदाहरणेन पूर्वोत्तरोदाहरणयोः स्त्रीप्रत्ययत्वेऽविशेषाच्च । नित्यमप्रवृत्ति-विकल्पेनाप्रवृत्त्योः स्त्रीप्रत्यययोग एव भाष्ये उदाहरणाद्भवतापि तावन्मात्रोदाहरणात्केवलकृन्मात्रे विकल्पप्रवृत्ति-विषयस्य शब्दानामनुशासनमाचार्येणाचार्यस्य वेत्यस्य भाष्ये उपलक्षणया व्याख्येयतया व्याख्यातेऽपि स्वयमेव वोदाहर्तव्यतया तत्परित्यागायोगश्चेत्यलम् । कथं तर्हि ब्रह्मजिज्ञासेत्यत्र कर्मणि षष्ठीति निर्णय इत्यतः प्रागुक्तं स्मारयति **ब्रह्मणः कर्मत्वस्य चेति** । शेषत्वेन विवक्षायां कर्मत्वप्राप्त्ययोगेऽपि कर्मत्वेन विवक्षायां कर्मत्वप्राप्त्या कर्तृकर्मणोरिति सूत्रेण कर्मणि षष्ठीप्राप्त्युपपत्त्या तत्समासस्य चापवादाभावेन सुखेनाङ्गीकर्तुं शक्यत्वमिति भावः । एवं ब्रह्मजिज्ञासेत्यत्रापि उभयप्राप्तावित्यनेनैव षष्ठीप्राप्तिरित्यभ्युपगम्य कर्मणि चेति तत्समासनिषेधमाशङ्कितुः शङ्कायाः परिहारः कृतः । अथ मास्तूभयप्राप्तिसूत्रेण षष्ठी । तथापि तत्समासनिषेधककर्मणि चेति सूत्रेणाविशेषा-त्कर्तृकर्मणोरित्येतत्सूत्रप्राप्तषष्ठ्या अपि समासनिषेधे बाधकाभावः । उभयप्राप्तावित्येतद्विषयकत्ववचनस्य युक्त्य-नुपन्यासेन वचनमात्रत्वाच्चेति वादिनः शङ्कां परिहर्तुमाशङ्कते **न च कर्मणि चेत्येवेति** । अपिपदमुभयप्राप्ता-वित्येतत्प्राप्तषष्ठीसमुच्चायकम् । **अनेनैवेति** । कर्मणि चेत्यनेनैवेत्यर्थः । कर्तरि चेति सूत्रे कर्तरि यौ तृजकौ ताभ्यां सह षष्ठी न समस्यत इत्यर्थो न युक्तः । तृजकाभ्यामित्यत्र कर्तरीत्यस्य साक्षाच्छ्रवणेन तृजकविशेषणतयोक्तार्थस्य तत्सूत्रविषयत्वात् । तथाच कर्तरि या षष्ठी सा तृजकाभ्यां न समस्यत इत्यर्थादपां स्रष्टेत्यादौ च कर्तरि षष्ठ्यभावान्न कर्तरि चेत्यनेन समासनिषेध आयातीत्यत उक्तं **जयादित्यमते कर्तरि चेत्यस्येति** । तन्मतसाधुत्वविचारेण कृत्याभावाद्यथाश्रुततन्मतानुसारेण मञ्जर्यादाविवास्माकं व्यवहार इत्याशयः । यौक्तमत इति साक्षाच्छ्रुतत्वात् तृजकयोरेव कर्तरीति विशेषणमिति मत इत्यर्थः । इदं च मतद्वयं सविवरं मोक्षादिदातृत्वस्येति तृतीयस्य तृतीयानुव्याख्यानमूलटीकायां प्रतिपादयिष्यते । तद्विवरणं च तद्व्याख्यावसरे अस्मदीये द्रष्टव्यम् । अनेकार्थत्वा-न्निपातानामित्यादिमञ्जर्यनुसारेणाह **निपातानामित्यादि** । **शेषग्रहणानुवृत्तीति** । कर्तृकर्मणोरित्यत्र ज्ञोऽविदर्थस्ये-





त्यादाविव शेषग्रहणानुवृत्तौ षष्ठी शेष इत्यनेनास्य वैयर्थ्यपरिहाराय षष्ठी भवत्येवेत्यादिरूपनियमपरत्वे समासनिवृत्तिफलकतया कर्तृकर्मणोरिति सूत्रेणैव समासप्रतिषेधलाभादिति भावः । दिगर्थस्तूक्तरीत्या प्रयोगस्यातिशयस्य चोपादानेनात्रोभयेति सूत्राप्राप्तिं वदतां पक्षो निराकार्य इति । यद्वा भाष्योक्तरीत्या अकाकारयोः प्रयोगे प्रतिषेधो नेति वक्तव्यमित्येतद्वार्तिकं प्रमाणीकृत्य प्रकृते उभयप्राप्तीत्यस्याप्राप्तिर्वर्णिता । तद्विषय एव कैयटकाशिकोदाहृतकेचिदविशेषेण विभाषामिच्छन्ति । शब्दानुशासनमाचार्येणाचार्यस्य वेति मतान्तरेऽपि ब्रह्मजिज्ञासेत्यत्रोभयप्राप्त्यभावपक्षे तन्नियमितषष्ठीत्वाभावात्कर्मणि चेत्यस्याप्रसङ्ग इत्याशयेनाह **दिगिति** । अत्र पक्षे नियमो नास्ति पूर्वत्र तु सोऽभिप्रेत इति भेदः । शेषग्रहणानुवृत्तिलब्धनियमप्रयुक्ता वा कर्मणि चेत्येतत्प्रयुक्ता वा समासानुपपत्तिरपि ननु प्रतिपदेत्यादिरूपेणैवाशङ्क्य मूले कुतो न परिहृतेत्यतो ननु प्रतिपदेत्यादिशङ्कासमाधानग्रन्थे उपलक्षणयैतच्छङ्कासमाधानयोरभिप्रेतत्वान्नानुपपत्तिः । अत एव 'घटते मुक्तिदृष्टिस्तु पुरुषेणे'ति पूर्वोदाहृतस्थलीयानुव्याख्यानमूले पुरुषेणेति तृतीयोपपादनायोक्तम् । ननु कर्तृकर्मणोः कृति इति अत्र षष्ठ्या भवितव्यम् । कथं तृतीया । शेषविवक्षायां षष्ठी विहिता । न चात्र शेषविवक्षेति चेन्न । अस्मिन्योगे शेषग्रहणस्य निवृत्तत्वादित्यादीति भावेनाह **इमे चेति** । न तु प्रतिपदविधानेत्यादिशङ्कासमाधाने इत्यर्थः । **उक्तशङ्कासमाधानयोरिति** । नन्वत्राप्यनुपपत्त्यन्तरमस्त्येवेत्यारभ्य दिगित्यन्तग्रन्थे उक्ते ये शङ्कासमाधाने शेषग्रहणानुवृत्तिलब्धनियमादिप्रयुक्ते षष्ठीसमासानुपपत्तिशङ्काया अकाकारयोः प्रयोगे प्रतिषेधाभावादिना समाधानस्य चोपलक्षणे इत्यर्थः । कल्पतर्वनुसारादिति भावः । अत्र टीकातो न्यूनाधिकं शोध्यमस्ति ।

**स०व्र०— ननु चेति** । कर्मणि चेति षष्ठ्याः समासो निषिद्ध्यते । निषेधश्चोभयप्राप्तौ कर्मणीति विहितायाः षष्ठ्याः । यदि च या काचन कर्मणि षष्ठी गृह्यते तदा कर्तरि चेति प्रतिषेधं न कुर्यात् । कर्त्रर्थकतृजकाभ्यां तदनभिहिते कर्मणि षष्ठीसमासप्रतिषेधस्यानेनैव सिद्धत्वात् । तेन कर्मणीत्युच्चार्य या षष्ठी विधीयते सा न समस्यत इत्यर्थः । **न कृदिति** । कर्तृकर्मणोः कृतीति कृच्छब्दोपादानेन या विहिता सा कृद्योगा । ब्रह्मविचारचोदनायां कृतीति विशेषस्याविवक्षितत्वात् उभयप्राप्त्यभावान्नोभयप्राप्तौ कर्मणीति षष्ठी अपि तु कर्तृकर्मणोः कृतीत्यनेनेति कर्मणि समासप्रतिषेधाप्रसङ्गादिध्मप्रव्रश्चनवत्समास इत्यर्थः । ननु जिज्ञासाशब्दस्य सन्नन्तत्वेन कृदन्तत्वाभावात्कथं कर्तृकर्मणोः कृतीति सूत्रेण षष्ठीप्राप्तिरिति चेन्न । अःप्रत्ययादिति सूत्रेण सन्नन्ताज्जिज्ञासाशब्दादकारप्रत्ययस्य कृतो विहितत्वात्कृदन्तत्वोपपत्तेरिति ।

**वि॒ठ०—** ननु शेषे षष्ठीत्यनभ्युपगम्येति प्रतिपदविधाना षष्ठी न समस्यते इत्युक्तेः कर्तृकर्मणोः कृतीति प्राप्तषष्ठ्या अपि प्रतिपदविधानत्वात् समासानुपपत्तिरित्याशङ्कते **नन्विति** । पदे पदे प्रतिविहिता प्रतिपदविधाना षष्ठी शेषे इत्येतदतिरिक्तेति यावत् । कृद्योगे प्रतिपदविधानापि समस्यते इत्यस्यापवादस्योक्तत्वात् अत्र सूत्रे कृतीति कृच्छब्दोपादानात् नानुपपत्तिरिति समाधत्ते **नेति** । कृत्प्रत्ययस्य योग एव लक्षणं निमित्तं यस्याः सा कृद्योगलक्षणा षष्ठी ।





**चषकः— प्रतिपदविधानेति**। पदं पदं प्रति विहिता तत्पदं निमित्तीकृत्य विधानकर्मीकृता 'ज्ञोऽविदर्थस्य करण' इत्यादिनाऽनुशिष्ट 'षष्ठी शेष' इति लक्षणलक्षितषष्ठीतोऽतिरिच्यमाना निखिलैव षष्ठी प्रतिपदविधानेति-पदाभिधेयेति भावः । इयं च षष्ठी 'कर्तृकर्मणोः कृती'ति लक्षणलक्षितेति कृदन्तपदसमभिव्याहारनिमित्तकत्वा-त्प्रतिपदविधानैवेति हृदयम् । **कृद्योगलक्षणा चेति** । कृदन्तपदसमभिव्याहारं निमित्तीकृत्य कर्तृकर्मणोरित्यनेन विधीयमानेत्यर्थः । तृतीयधात्वधिकाराविहिततया सनः कृत्त्वाभावेऽपि सन्नन्तस्य सनाद्यन्ता इति धातुत्वेन तत्प्रकृतिकस्य 'अःप्रत्ययात्' इत्यनुशिष्टाकारप्रत्ययस्य कृत्त्वेन जिज्ञासापदस्य कृदन्ततताया निरर्गलत्वात् । **प्रतिप्रसवादिति**। प्रतिषेधप्रतिषेधादित्यर्थः। न च 'कर्मणि च' इति सूत्रेण कर्मणि षष्ठ्या स प्रतिषिद्ध इति वाच्यम्। एकस्मिन् वाक्ये कर्तृकर्मवाचकपदसमव्यवहारे कर्मणि षष्ठ्येव प्रयोक्तव्या कर्तरि तु तृतीया षष्ठी वेति प्रत्यायकेन 'उभयप्राप्तौ कर्मणि' इति सूत्रेण विहितषष्ठ्यन्तस्यैव 'कर्मणि च' इत्यनेन समासः प्रतिषिद्ध्यते । यथाऽऽश्चर्यो गवां दोहोऽगोपेन गोपस्य वा शब्दानामनुशासनमाचार्येणाचार्यस्य वेत्यादौ । प्रकृते तु कर्मीभूतब्रह्मण उपादानेऽपि जिज्ञासाकर्तुरनुपादानादुभयप्राप्तावित्यस्याप्रवृत्त्या कर्तृकर्मणोः कृतीत्यनेनैव षष्ठ्याः विहिततया कर्मणि इति शब्द-मुच्चार्य विहिततया क्षत्यभावात्। प्रपञ्चितं चैतच्चन्द्रिकाभावदीधितावस्माभिरिति तत एव अवसेयम्।

**गूढ०— ननु प्रतिपदविधानेति**। कर्मणि चेति सूत्रेण उभयप्राप्तौ कर्मणीति विहितायाः षष्ठ्याः समासः प्रतिषिद्ध्यते। यदि च या काचन षष्ठी गृह्येत तदा कर्तरि चेति निषेधानुपपत्तिः। अनेनैव सिद्धत्वात्। कर्मणीत्युच्चार्य या षष्ठी विधीयते सा न समस्यत इत्यर्थः। तथाच ब्रह्मजिज्ञासेत्यत्रापि उभयप्राप्तौ कर्मणीति षष्ठी विधीयत इति तस्याः कर्मणि चेति निषेधात् समासो न प्राप्नोतीत्यर्थः। **कृद्योगलक्षणा चेति**। कर्तृकर्मणोः कृतीति कृच्छब्दोपादानेन या हि विहिता सा कृद्योगा । तथाच ब्रह्मजिज्ञासायां कर्तृविशेषस्योभयप्राप्त्यभावान्नोभयप्राप्तौ कर्मणीति षष्ठी । अपि तु कर्तृकर्मणोः कृतीत्यनेनेति कर्तरि चेति समासनिषेधप्रसङ्गात्, इध्मप्रव्रश्चनः पलाशशातन इत्यादिवत् समास इत्यर्थः।

**१६२ सु०— अथवा ब्रह्मणः कर्मत्वेनाप्राधान्यशङ्कां निवर्तयितुं जिज्ञास्य इति कर्मप्राधान्यं सूचितम् । ज्ञानविधौ हि ब्रह्मणोऽप्राधान्यं स्यात् । तज्ज्ञानोद्देशेन जिज्ञासाविधाने कुतः अप्राधान्यम्।**

**बिन्दुः— अथवेति** । सूत्राक्षरेभ्यो हि ब्रह्मकर्मकं जिज्ञासानामकं श्रवणादिरूपं ज्ञानं अधिकारिणा मोक्षार्थं संपादनीयमिति प्रतीयते। तत्र च विधेयविशेषणीभूतस्य ब्रह्मणोऽप्राधान्यं प्रतीयते इत्यतः समानसंवित्संवेद्यतया सूत्रतात्पर्यविषयं तद्विजिज्ञासस्व श्रोतव्यो मन्तव्यइत्यादिश्रुत्यानुगुण्य-लब्धमर्थं जिज्ञास्य इति कृत्प्रत्ययान्तनिर्देशेन भगवान् भाष्यकारः सूचयतीत्यर्थः। ननु उभयथापि ब्रह्मणः कर्मत्वानपायात्कथमिमौ चोद्यपरिहाराविति चेत्। इत्थम्। न हि वयं विधेयभूतश्रवणादिरूपज्ञानकर्मत्व-





मभिदध्महे किन्तु फलत्वेनोद्देश्यभूतसाक्षात्कारकर्मत्वं तथाच उद्देश्यशरीरघटकत्वेन प्रविष्टस्य ब्रह्मणः प्राधान्यमक्षतमेव । अत एव ग्रहं संमार्ष्टीत्यत्र ग्रहस्य उद्देश्यत्वेन विधेयसंमार्गं प्रति प्राधान्यं तथाच प्रतिवचनानुरोधेन गुणावृत्तेर्न्याय्यतया प्रतिग्रहं संमार्गः सिद्ध्यतीत्यवेहि । तदेतदाह **ज्ञानविधौ ब्रह्मणः अप्राधान्यं स्यादिति** । मोक्षोद्देश्यकजिज्ञासारूपब्रह्मकर्मकश्रवणादिरूपज्ञानविधावित्यर्थः । **तज्ज्ञानोद्देशेनेति** । ब्रह्मकर्मकापरोक्षज्ञानोद्देशेन वेदवाक्यार्थविचाररूपजिज्ञासाविधान इत्यर्थः । तथाच जिज्ञासाया आप्यरूपं कर्म ब्रह्मेति जिज्ञास्यशब्देनोक्तं भवति । तच्च ग्रामादेर्गमनजन्यपुरुषग्रामसंयोगभाक्त्वरूपमाप्यकर्मत्वलक्षणं प्राधान्यं सूपपन्नमेवेति भावः । अत एव तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षेत्यत्र शब्दतो गुणभूतस्यापि पयसो दध्यानयने आप्यतया प्रधानकर्मत्वं यथा प्रयाजशेषेण हवींष्यभिघारयतीत्यतः शेषशब्दमहिम्ना प्रयाजशेषरूपस्यास्यैवेदं अभिघारणरूपं प्रतिपत्तिरूपसंस्कारकर्म, प्रतिपत्तेराकाङ्क्षितत्वान्न तु हविःसंस्कारकर्माभिघारणं नाम । हविःसंस्कारस्यानाकाङ्क्षितत्वात्तेन प्रयाजशेषहविष्षु क्षारयेदिति वचनव्यक्त्या श्रवणेन प्रयाजशेषस्य तृतीयाश्रुत्या श्रूयमाणं करणत्वमुक्त्वा द्वितीयान्तपदोपस्थाप्यतया कर्मत्वेन प्राधान्यं हविषां च द्वितीयान्तगेन(?) सप्तम्यन्तपदोपस्थितत्वेन कृष्णविषाणं चात्वाले प्रास्यतीत्यत्र चात्वालस्य कृष्णविषाणप्रतिपत्तिरूपप्रक्षेपाधिकरणत्वमिव प्रयाजशेषप्रक्षेपाधिकरणत्वं तथात्रापि तप्ते पयसीति यथाश्रुतवचनव्यक्तिभङ्गे वा दध्यानयने तप्तं पयः (दधि) कुर्यादिति वचनव्यक्तिमाश्रित्य पयस एव द्वितीयान्तपदोपस्थापितत्वात्कर्मत्वेन प्राधान्यं तथाच पयोविकारत्वमामिक्षाया न तु दधिविकारत्वमतोऽत्र स्रुङ्मुखेन होम इत्यादय.......... धर्मा एव भवन्तीति पूर्वतन्त्रे स्थितम् । उक्तं च भट्टवार्तिके 'पय एव घनीभूतमामिक्षेत्यभिधीयत' इति । एवमत्रापि जिज्ञास्योऽयं विधीयत इति वचनव्यक्त्याश्रयणेन ब्रह्मणः कर्मतया प्राधान्यं व्याख्यातम् । यद्वा कर्तव्येति पदाध्याहारमन्तरा सूत्रवाक्यस्य साकाङ्क्षस्यापर्यवसानादवश्यं कर्तव्येत्यध्याहृतेन कर्तव्यता प्रतीता । तस्याश्च साध्यसाधनेतिकर्तव्यतारूपांशत्रयाकाङ्क्षायां स्वर्गकामो यजेतेत्यत्र स्वर्गस्येव अत्रापि अतःशब्दोक्तमोक्षरूपफलस्यान्वयेन साध्याकाङ्क्षानिवृत्तौ साधनाकाङ्क्षापूरणार्थं यागादेरिव ब्रह्मजिज्ञासाऽन्वेतीति प्रतीयते । तथाच साधनत्वं विशेष्यभूताया जिज्ञासाया एव ब्रह्म तु कर्मतया साधनव्यावर्तकत्वाद्दण्डत्वादिवत्कारणतावच्छेदकमात्रमिति प्रतीयते । न च तद्युक्तम् । ब्रह्मण एव मुख्यकारणत्वात् । वक्ष्यति च सूत्रकार एव फलमत उपपत्तेरिति । उक्तं च भाष्यकृतापि । 'नर्ते त्वत्क्रियते किञ्चिदित्यादेर्न हरिं विना । ज्ञानस्वभावतोऽपि स्यान्मुक्तिः कस्यापि हि क्वचिदि'ति । वक्ष्यति चैतट्टीकाकृदपि इदमुक्तं भवतीत्यादिनैतत्प्रघट्टकतात्पर्यार्थनिरूपणप्रस्तावे अनुपदमेव । मोक्षसाधनं च





साक्षात् भगवानेव ''बन्धको भवपाशेन भवपाशाच्च मोचक'' इति वचनात् इति । तस्मात् ब्रह्मण एव प्राधान्यलाभाय विशेषणविशेष्यभावव्यत्यासः प्रदर्शितः । तथाच जिज्ञास्यं ब्रह्मैव मोक्षसाधनत्वेन विधीयते । तत्र च जिज्ञासाकारणतावच्छेदिका । जिज्ञासाविषयीभवनरूपसव्यापारीकरणज्ञापनार्थं चोपात्ता । अत एव वक्ष्यति । द्विविधं हि साधनम् । सिद्धमसिद्धं च । तत्रासिद्धं यागादिकमुत्पाद्यम् । अन्यत्तु सव्यापारीकर्तव्यमिति । एवं च यागेन स्वर्गं भावयेदितिवत् । जिज्ञास्येन ब्रह्मणा मोक्षं भावयेदित्यर्थो लभ्यते । तत्र च विशिष्टस्य ब्रह्मणः साधनकोटिप्रवेशो विशेषणस्यापि तत्र प्रवेशः तथाऽपि प्राधान्यं विशेष्यस्यैव । यथा ''अग्निहोत्रं जुहुयात्स्वर्गकाम'' इत्यग्निहोत्रनामकेन होमेन स्वर्गं भावयेदिति वाक्यार्थः । तत्र होमस्य साधनत्वेन तु विशेषणीभूतयागस्य । देवतोद्देशेन द्रव्यत्यागो हि यागः । त्यक्तस्य प्रक्षेपश्च होमः । तत्र च विशिष्टस्य साधनत्वेऽपि विशेष्यमेव प्रधानम् । तथा प्रकृतेऽपि तदिदमाह **ज्ञानविधाविति** । ज्ञानस्य जिज्ञासारूपस्य विशेष्यत्वेन विधावित्यर्थः । तज्ज्ञानोद्देशेन जिज्ञासाविधौ तु तस्य ब्रह्मणो यज्ज्ञानं साधनत्वेन तदुद्देशेन साधनीभूतब्रह्मपरिचायकत्वेन जिज्ञासाया उपादाने तु ब्रह्मणः कुतोऽप्राधान्यं किन्तु जिज्ञासाया एव तत्स्यादित्यर्थः । एवं च सूत्रकारनिर्देशस्तु इन्द्रियार्थसन्निकर्षः प्रत्यक्षमित्यादिवत् व्यापारप्राधान्यविवक्षयेति भावः ।

**परि०**— भाष्यनिर्देशस्य फलान्तरं चाह **अथवेति** । राजपुरुष इत्यादौ षष्ठ्यन्तराजपदनिर्दिष्टस्य राज्ञ इवेहाप्यप्राधान्यशङ्कायां तां कर्मत्वोक्त्या निवारयितुमित्यर्थः । यद्वा विधीयमानजिज्ञासां प्रति ब्रह्मणः कर्मत्वेनाप्राधान्यशङ्कायामित्यर्थः । स्वर्गाद्युद्देशेन यागादिविधिस्थले स्वर्गादिरुद्देश्यस्याप्राधान्येन विधीयमानयागादेरप्राधान्यवदिहापि मोक्षादिफलोद्देशेन विधीयमानजिज्ञासाया अप्रधानत्वेन तद्विशेषणस्यापि विधेयविशेषणत्वेन अप्राधान्यशङ्का स्यादतः जिज्ञास्योऽयमिति प्राधान्येन कर्मकारकभूतं ब्रह्म निर्दिष्टमिति भावः । तावता कथं सूत्रे प्रतीतविधेयविशेषणत्वप्राप्ताप्राधान्यशङ्कानिरास इत्यत आह **ज्ञानविधाविति** । ब्रह्मज्ञानं संपाद्यमिति वा ब्रह्मजिज्ञासा कर्तव्येति वा न सूत्रवचनव्यक्तिः किन्तु ब्रह्मज्ञानाय सकलवेदार्थविषयकजिज्ञासा कर्तव्येत्येव वचनव्यक्तिः । उक्तं हि न्यायामृते तृतीयपरिच्छेदे । 'ब्रह्मज्ञानाय ब्रह्मविचारः कर्तव्य इति न वचनव्यक्तिः । तथात्वे ब्रह्मणो विधेयविशेषणतया गुणत्वापातात् । किन्तु ब्रह्मज्ञानाय वेदविचारः कर्तव्य इत्येव वचनव्यक्तिः' इत्यादि । अत्रापि ग्रन्थेऽग्रे बन्धमिथ्यात्वमित्येतदवतारिकायां परमतानुवादप्रस्तावे स्पष्टीभविष्यति । तथा चोद्देश्यज्ञानविशेषणत्वेन ब्रह्मणोऽप्युद्देश्यकोटिप्रवेशात्प्राधान्यलाभ इति भावः ।





**गु०दी०— अथवा ब्रह्मणः कर्मत्वेन** इत्यत्र ब्रह्मजिज्ञासा कर्तव्येति प्रयोगे हि कर्तव्यपदोक्तेष्टसाधनता, अन्नभोजनं कर्तव्यमित्यत्र त्वन्नभोजनस्येव जिज्ञासाया एवेति प्रतीयते। कर्मभूतब्रह्मणस्त्वन्नस्येव व्यावर्तकत्वरूपोपसर्जनत्वमात्रं प्रतीयते। अतः कर्मभूतब्रह्मण्यप्यप्राधान्यशङ्का स्यात्। अयं जिज्ञास्यः जिज्ञासाविषयः कर्तव्य इति प्रयोगे तु कर्तव्यपदोक्तेष्टसाधनत्वस्य "अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्च सः" इति वचनादिष्टत्वेन ज्ञानिनामपेक्षितज्ञानमोक्षयोरसाधारणकारणे भगवत्येव प्रतीत्या तस्यैव प्राधान्यं सिद्ध्यति। अतो ब्रह्मजिज्ञासा कर्तव्येति वदत्सूत्रश्रुत्योरपीदमेव तात्पर्यमिति भावः। इष्टसाधनादप्युद्देश्यस्यैव प्राधान्यमिति पक्षेऽपि नास्माकमनिष्टमित्याह **ज्ञानविधौ हि** इति। ब्रह्मज्ञानं कर्तव्यमिति ज्ञानविधौ विधिकोटौ प्रविष्टस्य ब्रह्मण उद्देश्यकोटावप्रवेशादप्राधान्यम्। ब्रह्मज्ञानोद्देशेन जिज्ञासाविधाने ब्रह्मण उद्देश्यकोटौ प्रवेशात्कुतोऽप्राधान्यम्। ननु वेदान्तविषयकजिज्ञासेति वदतां स्यादयं परिहारः। ब्रह्मविषयकजिज्ञासा कर्तव्येति मते विधिकोटावपि ब्रह्मणः प्रवेशादप्राधान्यमिति चेत्तर्हि, उद्देश्यकोटौ प्रविष्टस्यापि ब्रह्मणः उपसर्जनतया कुतो नाप्राधान्यम्। यथाकथञ्चिदुद्देश्यकोटौ प्रवेशान्नाप्राधान्यमिति तु समं परस्यापि। वस्तुतस्तु कर्तव्यपदोक्तेष्टसाधनताया अन्यगामित्वे स्यादप्राधान्यशङ्का, उद्देश्यकोटावप्रवेशेनाप्राधान्यप्रसङ्गस्तु "आत्मा वा अरे द्रष्टव्य" इति श्रुत्या मोक्षोद्देशेन विहितज्ञानविधावुपसर्जनीभूतात्मन एव स्यादिति "दत्तेऽप्यौषधे न रोगः शान्तः परस्य"। अतः साधूक्तं जिज्ञास्योऽयं विधीयत इत्यनेनैवाप्राधान्यशङ्कापरिहारः स्यादिति।

**यादु०— कर्मत्वेनाप्राधान्यशङ्कामिति**। ब्रह्म तावज्जिज्ञासाकर्मतया प्रतीयते। जिज्ञासा च विधेयत्वेन गुणभूताऽतस्तद्विशेषणीभूतब्रह्मणोऽपि गुणत्वेनाप्राधान्यमेव प्राप्तमित्यर्थः। कर्मप्राधान्ये सूचितेऽपि कथमुक्तशङ्कापरिहार इत्यत आह **ज्ञानविधौ हीति**। सत्यम्। ब्रह्म जिज्ञासाशब्दार्थविशेषणमिति। तथाऽपि न विचाररूपे तदर्थे साक्षात्कर्मतया विशेषणं किन्तु प्रकृत्यर्थभूते ज्ञान एव। एवं च यदि जिज्ञासाशब्दलब्धोऽर्थः सर्वोऽपि विधेयतयाऽत्र विवक्षितः स्यात् तदा ब्रह्मणो विधेयनिष्ठज्ञानविशेषणतयाऽप्राधान्यशङ्का स्यात्। न ह्येवम्। किन्तु तत्र प्रकृत्यर्थभूतं यज्ज्ञानं ब्रह्मकर्मकं तदुद्देश्यमेव। विचारमात्रं तु प्रत्ययार्थभूतं विधेयमिति ह्यत्र विवक्षितम्। तथा चोद्देश्यस्य ज्ञानस्य फलतया प्राधान्यात्तद्विशेषणीभूतब्रह्मणोऽपि प्राधान्यमेव। विधेयभूतविचारस्य च साक्षात्कर्म वेद एव। उद्यमननिपतनादिरूपकर्तृव्यापारस्य कुठार इव। तथा च श्रुतिः। 'तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेत्' इति। न चैवं कर्मणि षष्ठीपरिग्रहाय जिज्ञास्य इत्युक्तमित्यनेन विरोधस्तेन ब्रह्मणि जिज्ञासाकर्मताप्रतीतेरिति वाच्यम्। कर्तृव्यापारस्य करणव्यापारव्यवधानेन वृक्षकर्मतेव मीमांसाव्यापारस्यापि प्रमाणादिसंभावनाद्वारेणेश्वरावबोध एवोद्देश्य इति भवति तत्कर्मतेत्युक्तन्यायेन परम्परया ब्रह्मकर्मताया अपि सत्त्वात्। एवं च ब्रह्मज्ञानाय वेदान्त(वेद)विचारः कर्तव्य इति सूत्रवाक्यार्थः पर्यवस्यति। सति चैवं क्वाप्राधान्यशङ्का ब्रह्मण इति। यद्वा कर्मत्वेनाप्राधान्यशङ्कामित्यस्य जिज्ञासाविधायकेषु वाक्येष्विच्छाया अविधेयत्वेनेष्यमाणं ज्ञानमेव विधेयम्। एवं च विधेयस्य ज्ञानस्य क्रियारूपस्य नियोगनिवर्तकतयाऽप्राधान्यात्कर्मतया तद्विशेषणस्य ब्रह्मणोऽप्यप्राधान्यमित्यर्थः। अनेन कथमुक्तशङ्कापरिहार इत्यत आह **ज्ञानविधौ हीति**। स्यादेवं ब्रह्मणो-





ऽप्राधान्यशङ्का यद्युक्तविधया ज्ञानं विधेयं स्यात् । न चैवम् । इच्छाविषयत्वेनोद्देश्यस्य प्राधान्ये तद्विरोधिविधेयत्वासंभवात् । न हि स्वर्गकामपदेनेच्छाविषयतया प्रतीतः स्वर्गो विधेयः । किन्तु विचार एव विधीयते । तस्य च साक्षात्कर्मतया विशेषणं वेद एव । तत्साध्यं ज्ञानं तूद्देश्यतया प्रधानमेवातस्तद्विशेषणं ब्रह्मापि प्रधानमेवेति नोक्तशङ्केत्यर्थः ।

**वं०प०— अप्राधान्येति** । ब्रह्मजिज्ञासा नाम ब्रह्म ज्ञातुमिच्छा । तस्याः कर्तव्यत्वं न विधातुं युक्तम् । इच्छाया अविधेयत्वात् । अतो ज्ञानेच्छान्तर्णीतो विचारो लक्ष्यते इति वदिष्यति । इच्छया विचारे सति ज्ञानं संपद्यते । तथा च वेदान्तविचारेण ब्रह्मकर्मकं ज्ञानं संपाद्यमिति । तथा चात्र ब्रह्मज्ञानं विधेयम् । यदुद्देश्यं तत्प्रधानम् । यद्विधेयं तदन्यथा (तदप्रधान) इति मीमांसकमतम् । एवं सति ब्रह्मजिज्ञासा कर्तव्येत्यस्य वेदान्तविचारेण ब्रह्मज्ञानं संपाद्यमित्यर्थः स्यात् । तथा च ज्ञानस्य विधेयतयाऽप्रधानत्वेन तद्विशेषणीभूतस्य ब्रह्मणोऽप्यप्राधान्यं प्राप्तमित्यर्थः । कथमनेनोक्तशङ्कापरिहार इत्यत आह **ज्ञानविधौ हीति** । नात्र जिज्ञासाशब्दलब्धोऽर्थः सर्वोऽपि विधेयतयाऽभिप्रेतो येन विधेयनिष्ठज्ञानविशेषणतया ब्रह्मणोऽप्राधान्यशङ्का स्यात् । (न चैवम्) किं नाम ज्ञातुमिच्छेत्यत्र ज्ञा अवबोधन इति धातोर्ज्ञाधात्वर्थभूतं यज्ज्ञानं ब्रह्मकर्मकं तदुद्देश्यमेव न विधेयम् । सन्प्रत्ययार्थभूतेच्छालक्ष्यविचारो विधेय इति ह्यत्र विवक्षितम् । तथा च ब्रह्मज्ञानाय वेदान्तविचारः कर्तव्य इति । तथा चोद्देश्यस्य ज्ञानस्य फलत्वेन प्राधान्यात्तद्विशेषणीभूतब्रह्मणोऽपि प्राधान्यमेवेत्याशयः । अत एवोक्तम् । आत्मा द्रष्टव्यस्तदर्थं श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति ।

**आनन्दः— जिज्ञास्य इत्यस्य प्रयोजनान्तरमाह **अथवेति** । **अप्राधान्यशङ्कामिति** । ननु कर्मषष्ठीपरिग्रहो न युक्तः । तथा सति ज्ञानस्य विधेयत्वेनाप्राधान्याद्ब्रह्मणश्च ज्ञानकर्मतया विधेयत्वेन अप्रधानीभूतज्ञानविशेषणत्वेन अप्राधान्यापत्तिः । विधेयस्याप्राधान्यनियतत्वादिति न कर्मषष्ठीपरिग्रहो युक्त इति शङ्कामित्यर्थः । नन्वेवमपि कथमप्राधान्यपरिहार इत्यत आह **ज्ञानविधौ हीति** । यदि ह्ययं ब्रह्मकर्मकज्ञानविधिः स्यात् तदा विधेयविशेषणत्वेन ब्रह्मणोऽप्राधान्यं स्यादिति शङ्कनीयं न चैवमित्यर्थः । किं तर्हि विधीयत इत्यत आह **तज्ज्ञानोद्देशेनेति** । तथा चोद्देशत्वस्य प्राधान्यनियतत्वाद्ब्रह्मज्ञानस्य चोद्देश्यतया प्रधानत्वेन तद्विशेषणतयोद्देश्यकोटिनिविष्टस्य कुतो अप्राधान्यम्, अपि तु प्राधान्यमेवेत्यर्थः ।

**कं०रा०— अथवेति** । जिज्ञासाऽस्य विधीयत इत्युक्ते ब्रह्मणो विधीयमानजिज्ञासाकर्मत्वेन विधिकोटिनिविष्टतयाऽप्राधान्यशङ्का स्यात् । तन्निवारणाय जिज्ञास्य इति ब्रह्मणो ज्ञातुमेष्टव्यत्वोक्त्या तज्ज्ञानस्योद्देश्यतालाभादुद्देश्यकोटिनिविष्टत्वेन कर्मभूतब्रह्मणः प्राधान्यं सूचितमित्यर्थः । एतदेव दर्शयति **ज्ञानविधाविति** । उपलक्षणमेतत् । यद्यत्र ब्रह्मज्ञानं तत्कर्मकजिज्ञासा वा विधीयेत तर्हि विधेयकोटिनिविष्टत्वेन ब्रह्मणोऽप्राधान्यं स्यात् । ब्रह्मज्ञानोद्देशेन न्यायानुसन्धानरूपविचारविधौ कुतोऽप्राधान्यं ब्रह्मणः । उद्देश्यकोटिनिविष्टत्वेन प्राधान्यस्यैव लाभादिति भावः । यद्यपि ब्रह्मकर्मकजिज्ञासाविधावित्येव वक्तव्यम् । तथाऽपि ज्ञानविधावित्येतद्वचनं यन्मत इष्यमाणं तर्करूपं ब्रह्मज्ञानं विधेयं, तन्मते ब्रह्मणोऽप्राधान्यं स्यादिति दूषणं सूचयितुम् ।





**श्रीनिधि०— ज्ञानविधाविति** । ब्रह्म जानीयादित्यादिरूपेण ज्ञानविधौ ब्रह्मणः साक्षात् कर्मत्वाभावेन अप्राधान्यं स्यादिति भावः । **तज्ज्ञानोद्देशेनेति** । तथा च उद्देश्यफलसंबन्धितया साक्षात् कर्मतया प्राधान्यमिति भावः । अत एवोक्तं द्विविधं खलु कर्मकारकमित्यादि । तथा च ब्रह्मज्ञानाय वेदविचारः कर्तव्य इत्यर्थः । न तु ब्रह्मज्ञानाय ब्रह्मविचारः कर्तव्य इति । तथात्वे विधेयविशेषणत्वेन ब्रह्मणोऽप्राधान्यापत्तेः । ब्रह्मणः उद्देश्य-कोटिप्रविष्टत्वे तु नाप्राधान्यम् । यद्यपि ब्रह्मणः प्रतीतितोऽप्राधान्येऽपि स्वरूपप्राधान्यस्य वा न काचित् क्षतिः । तथापि प्रतीतितोऽपि प्राधान्यसंभवेन प्राधान्याश्रयणं युक्तमिति तज्ज्ञापनार्थमियं चिन्तेति ध्येयम् ।

**वा०चं०—** ननु ब्रह्मणो विषयत्वोपपादनसूचनस्य कर्मषष्ठीपरिग्रहसूचनस्य च ब्रह्मकर्मकजिज्ञासेत्येव-माकारकव्याख्यानेनापि संभवे सूत्रे जिज्ञासां प्रति गुणतया निर्दिष्टस्य ब्रह्मणो जिज्ञासाविशेष्यत्वेन निर्देशे न प्रयोजनं पश्याम इत्यतस्तन्निवर्त्यं शङ्काविशेषं तेन तत्परिहारप्रकारं च दर्शयितुं पक्षान्तरमन्वाचिनोति **अथवेति** । **कर्मत्वेनाप्राधान्यमिति** । अव्यवधानेन कर्तृव्यापारजन्यातिशययोगिकुठारवदव्यवधानेन जिज्ञासाव्यापारजन्या-तिशययोगित्वरूपमप्रधानकर्मत्वमित्यर्थः । **शङ्कामिति** । सूत्रे जिज्ञासाविशेषणतया निर्देशेन प्रसक्तामिति शेषः । **जिज्ञास्य इति** । जिज्ञासां प्रति विशेष्यतया निर्देशेनेत्यर्थः । **कर्मप्राधान्यमिति** । करणव्यापारव्यवधानेनोद्देश्यफल-संबन्धिवृक्षवत्प्रमाणादिसंभावनाद्वारेणोद्देश्यतया प्रधानभूतब्रह्मावबोधरूपफलसंबन्धित्वरूपं प्रधानकर्मत्वमित्यर्थः । नन्वस्त्वनेन तत्सूचनं तथाऽपि ब्रह्मणः कुठारवदप्रधानकर्मत्वमेव किं न स्यात् । वृक्षस्याव्यवधानेन कर्तृव्यापार-जन्यातिशययोगित्वरूपाप्रधानकर्मत्वासंभवस्येव प्रकृते तदसंभवाभावादित्यतो ब्रह्मज्ञानविधौ ब्रह्मणः साक्षात्कर्तृ-व्यापारजन्यातिशययोगित्वेनाप्रधानकर्मत्वेऽप्यव्यवधानेन जिज्ञासाव्यापारजन्यातिशययोगित्वस्य प्रमाणादावेव सत्त्वेन ब्रह्मणस्तदभावादुद्देश्यब्रह्मज्ञानरूपफलसंबन्धित्वरूपमेव कर्मत्वं युक्तम् । अत एव धर्मज्ञानाय वेदवाक्यानि विचारयेदितिवद्ब्रह्मज्ञानाय वेदान्तवाक्यानि विचारयेदित्येव सूत्रार्थ इत्याशयेन आह **ज्ञानविधौ हीत्यादिना** । एवं च सूत्रस्य ब्रह्मणः कर्मत्वमात्रे तात्पर्यं न तु तदुपसर्जनत्व इत्युक्तं भवति । अन्ये तु कर्मत्वेनेत्यावृत्त्या योज्यं जिज्ञासाया इति शेषः । तदन्वये च कर्मत्वेनेत्यस्य क्रियात्वेनेत्यर्थः । ब्रह्मान्वये च क्रियारूपजिज्ञासोपसर्जनत्वेने-त्यर्थः । तथा च कर्तव्यपदोपस्थापितनियोगस्यैव प्राधान्याद्विधेयभूतजिज्ञासाया नियोगनिवर्तकतया नियोगोप-सर्जनत्वेन तदुपसर्जनीभूतब्रह्मणोऽपि सुतरां गुणभूतत्वमित्याशङ्का सूत्रानुसारेण जिज्ञासाऽस्य विधीयत इति वक्तव्ये जिज्ञासां प्रति विशेष्यत्वेन निर्देशेन प्राधान्यसूचनान्निरस्तेत्यर्थः । जिज्ञासाविधौ ब्रह्मणो गुणत्वाभावं दर्शयितुं युक्तिसूचनाय ज्ञानविधौ गुणत्वं तावदाह **ज्ञानविधौ हीति** । ज्ञानविधौ हि 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोः प्रत्ययः प्राधान्येने'ति न्यायेन प्रत्ययार्थनियोगस्यैव प्राधान्यात्प्रकृत्यर्थस्य क्रियारूपस्य विधेयज्ञानस्य नियोग-निवर्तकतया तदुपसर्जनत्वात्तदुपसर्जनब्रह्मणोऽपि सुतरामुपसर्जनत्वं स्यादित्यर्थः । जिज्ञासाविधावपि ब्रह्मणो दर्शनं प्रति गुणत्वं तुल्यमित्यत आह **तज्ज्ञानोद्देशेनेति** । ब्रह्मज्ञानाय वेदवाक्यानि विचारयेदिति फलत्वेन प्रधानं ब्रह्मदर्शन-मुद्दिश्य विचारविधौ न कोऽपि दोषः । स्वप्रधानभूतफलदर्शनं प्रति विषयभूतस्य ब्रह्मणो गुणत्वानापत्तेः । जिज्ञासाया वेदवाक्यविषयकत्वं ब्रह्मणश्च उद्देश्यफलसंबन्धितया जिज्ञासाकर्मत्वं चोक्तमनुसन्धेयमिति भाव इत्याहुः ।





वा०र०— **विषयत्वोपपादनसूचनस्येति**। ननु वेदानामीश्वरप्रतिपत्तीत्यादिशङ्कापरिहारेण विषयत्वोपपादनसूचनादिति भावः। उक्तं च वेदानामित्यादि ग्रन्थावतारे टीकायाम्। अत्र जिज्ञास्योऽयमिति जिज्ञासाया ब्रह्मरूपविषयसंबन्धोक्त्या सूचितं तत्रत्यानुपपत्तिपरिहारं वक्तुमित्यादि। तत्र तावद्ब्रह्मणो जिज्ञासेत्येतदवतारे एवं ब्रह्मणो जिज्ञासाविषयत्वानुपपत्तिपरिहारसूचकत्वेनेत्यादि चोक्तमिति ज्ञेयम्। **संभव इति**। ब्रह्मकर्मकजिज्ञासेत्युक्त्यैव ब्रह्मणः कर्मत्वस्यैव जिज्ञासाया विषयसंबन्धस्याप्युक्तिलाभादिति भावः। **गुणतयेति**। ब्रह्मणो हि जिज्ञासायामन्यकर्मकत्वव्यावृत्त्यर्थकतया भेदकत्वरूपविशेषणत्वेन गुणत्वप्राप्तेरिति भावः। **विशेष्यत्वेनेति**। तदा च कीदृशं ब्रह्मेत्याकाङ्क्षाव्यावृत्त्यर्थं जिज्ञास्यमिति ब्रह्मण्यजिज्ञास्यत्वव्यावर्तकजिज्ञासाया विशेषणत्वेन अप्राधान्यप्राप्तेरिति भावः। प्रयोजनं न पश्याम इति संबन्धः। इत्यतः इति पूर्वपक्षेऽस्वरसं मत्वेति यावत्। तन्निवर्त्यः विशेष्यत्वेन ब्रह्मणो निर्देशव्यावर्त्यः। **पक्षान्तरमन्वाचिनोतीति**। जिज्ञास्य इति कर्मणि यत्प्रत्ययान्तपदप्रयोगस्याभिप्रायान्तरमाहेत्यर्थः। कर्मत्वेनाप्राधान्ये शङ्किते सति कथं पुनः कर्मणः प्राधान्यसूचनमित्यतः द्विविधं खलु कर्म कारकमिति पूर्वमूलं मनसि कृत्वा कर्मण्यवान्तरविशेषाभिधानपूर्वकं कर्मत्वेनाप्राधान्यं तावद्दृष्टान्ते प्रदर्शयन्दार्ष्टान्तिकेऽपि निर्वक्ति **अव्यवधानेनेति**। उद्यमननिपतनादिरूपकर्तृव्यापारजन्योर्ध्वाधोदेशसंयोगविभागातिशयविशिष्टकुठारवदित्यर्थः। कर्मत्वेनाप्राधान्यमिति न यथाश्रुतमिति दर्शयितुं द्विविधकर्ममध्ये यदप्रधानं कर्म तस्य भावोऽप्रधानकर्मत्वेनैव तत्त्वेनाभिहितम्। अनेन पारिभाषिकमिदमप्रधानकर्मत्वमिति सूचितम्। एवमुत्तरत्र पारिभाषिकमेव प्रधानकर्मत्वं निर्वक्ष्यति। तेन कर्मण्येव प्राधान्याप्राधान्ये कथमिति शङ्का च निराकृता भवतीति ज्ञेयम्। **जिज्ञासाव्यापारेति**। जिज्ञासारूपकर्तृव्यापारजन्यज्ञानरूपातिशयेत्यर्थः। **विशेषणतयेति**। विशेष्यस्यैव क्रियान्वयितया प्रधानत्वेन तद्विशेषणमप्रधानमिति सर्वसंमतेरिति भावः। **विशेष्यतयेति**। विशेष्यस्योक्तरीत्या प्रधानत्वादिति भावः। **करणव्यापारेति**। उद्यमनादिकर्तृव्यापारं प्रति कुठारस्य कर्मत्वेऽपि तद्व्यवधानेन द्वैधीभावरूपोद्देश्यफलसंबन्धिवृक्षस्य कर्तृव्यापारं प्रति कर्मतास्ति। वृक्षगतं द्वैधीभावरूपं फलमुद्दिश्यैव कुठारे उद्यमनादिव्यापारकरणात्। अत एव देवदत्तः कुठारेण वृक्षं छिनत्तीति वृक्षे द्वितीया युक्तेति भावः। **प्रमाणादिसंभावनाद्वारेणेति**। जिज्ञासारूपस्य कर्तृव्यापारस्य प्रमाणादिरूपकरणे संभावनाजनकतया तद्व्यवधानेनोद्देश्यतया प्रधानभूतो यो ब्रह्मावबोधस्तद्रूपं यत्फलं तत्संबन्धित्वेत्यर्थः। ब्रह्मसंबन्ध्यवगमरूपफलमुद्दिश्यैव प्रमाणादिसंभावनार्थककर्तृव्यापाररूपजिज्ञासाकरणात्। अत एव प्रमाणतो ब्रह्मावगच्छतीति द्वितीया युक्तेति भावः। एवं च यत्राव्यवधानेन क्रियाकर्मैकमेव घटं जानातीत्यादिस्थले घटादिकम्। तत्र प्रधानाप्रधानभेदाभावेऽपि यत्र कुठारेण वृक्षं छिनत्तीत्यादिस्थले कर्मद्वयप्रसक्तिस्तत्र प्रधानाप्रधानभेदेन कर्मद्वैविध्यात् तत्रापि यत्साक्षात्कर्तृव्यापारजन्यातिशययोगितदप्रधानं कर्मेति कुठारादौ दृष्टत्वाद्ब्रह्मणोऽप्यत्र विशेषणतया निर्देशेन कुठारवदप्रधानकर्मत्वमेवेति शङ्का स्यात्। तच्छङ्कापरिहाराय वृक्षवदुद्देश्यफलसंबन्धित्वेन प्रधानकर्मत्वमेवेति सूचयितुं विशेष्यतया निर्देश इति फलितं भवतीति ज्ञेयम्। **अनेनेति**। विशेष्यतया ब्रह्मणो निर्देशेनेत्यर्थः। ननु वृक्षदृष्टान्तेन प्रधानकर्मतोक्तेति कथमप्रधानकर्मकुठारदृष्टान्तेनाप्रधानकर्मत्वशङ्केत्यत आह **वृक्षस्येति**। तत्र कर्तृव्यापारभूतोद्यमनादिनाऽतिशयस्य साक्षात्कुठार एवोत्पत्तावपि वृक्षे तदुत्पत्त्ययोगादिति भावः। **प्रकृत इति**। जिज्ञासारूपकर्तृव्यापारेण ब्रह्मणोऽन्यत्रातिशयस्योत्पत्तेरप्रमितत्वेन ब्रह्मण्येव तदुत्पत्तेः संभवेन





तदसंभवाभावादिति भावः । जिज्ञासास्येति प्रयोगमकृत्वा जिज्ञास्य इति प्रयोगमात्रेण प्रधानकर्मत्वसूचने-ऽप्यप्रधानकर्मत्वासंभव एव तस्याङ्गीकार्यतयाऽप्रधानकर्मणश्चान्यस्याप्रतीतेर्ब्रह्मणो जिज्ञासां प्रत्यप्रधानकर्मत्वमेवेति यदुक्तं तन्न युज्यते । उद्यमनादिव्यापारेण साक्षात्कुठार एवोर्ध्वाधोदेशसंयोगादिरूपातिशयस्योत्पादवत् जिज्ञासा-रूपकर्तृव्यापारेण साक्षात्प्रमाणादावेव संभावनादिरूपातिशयोत्पादनसत्त्वात् ऊर्ध्वाधोदेशसंयोगादिरूपातिशयस्य वृक्षेऽनुत्पादवत् संभावनादेर्ब्रह्मण्यनुत्पादाच्च न साक्षात्कर्तृव्यापारजन्यातिशययोगित्वसंभव इति वृक्षसाम्यमेव ब्रह्मणः । यस्तु ब्रह्मण्यवबोधरूपोऽतिशय उत्पद्यते स तु छेदनवत्करणव्यापारव्यवधानेनैव साध्यः । तथाच न साक्षात्कर्तृव्यापारभूतजिज्ञासासाध्यातिशययोगित्वेनाप्रधानकर्मत्वं ब्रह्मण आयाति । अत एव तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षुरिति साक्षाद्विचारकर्मता वेदेष्वेवोक्ता । तर्हि ब्रह्मजिज्ञासाशब्दित-स्तद्विचारः कर्तव्य इति सूत्रार्थायोग इत्यपि न शङ्क्यम् । यतो नैवं सूत्रार्थोऽत्राभिमतः । ब्रह्मणः साक्षाद्विचार-कर्मत्वाभावात् । किन्तु ब्रह्मज्ञानाय वेदान्तवाक्यानि विचारयेदित्येव सूत्रार्थः उक्तश्रुतेरेव । ततो नानुपपत्तिरिति समाधातुं भवेदेवं यदि प्रमाणविचार एव विधेयः । ब्रह्मावबोधस्तूद्देश्य एवातो ब्रह्म न साक्षात्कर्तृव्यापारविषय इति स्यान्न चैवम् । किन्तु ब्रह्म विज्ञातव्यमिति ब्रह्मावबोधस्यैव विधेयत्वे ब्रह्मणः साक्षादेवावबोधानुकूल-प्रयत्नविषयत्वोपपत्त्योक्तप्रयत्नरूपकर्तृव्यापारजन्यावबोधरूपातिशययोगित्वस्यापि प्राप्तेरिति शङ्कापरिहाराय तद्विध्य-भावप्रतिपादनाभिप्रायेण प्रवृत्तं **ज्ञानविधौ हीति** मूलम् । तद्वाक्यतात्पर्यं तावदाह **ब्रह्मज्ञानविधावित्यादिना** । अक्षरार्थस्तु । मूले ज्ञानविधावित्यत्र ब्रह्मेति प्रकृतत्वाद्वा शेषतया वा पूरणीयम् । तथाच ब्रह्मज्ञानविधौ तद्विधिसत्त्वे । यदि तद्विधिरपि विद्येतेति यावदिति । तदेतन्मूले हिशब्दः प्रतिपादयति । तद्विधिपक्षे कुतो प्रधानकर्मत्व-मित्यतस्तदुपपादयति **साक्षादिति** । ब्रह्म विज्ञातव्यमिति प्रमाणं पुरस्कृत्य साक्षाज्ज्ञानस्यैव विधानं यदि स्यात्तदा किल ब्रह्मावबोधानुकूलप्रयत्नविशेषस्य ब्रह्मविषयस्यैवाङ्गीकार्यतयोक्तप्रयत्नेन च साक्षादेव ब्रह्मण्यति-शयोत्पादप्राप्त्या कुठारवदप्रधानकर्मत्वं प्राप्येतेत्यर्थः । अत्र टीकायां अप्रधानकर्मत्वेऽपीत्यनन्तरं तज्ज्ञानोद्देशे-नाजिज्ञासाविधावव्यवधानेनेत्यादिरूपः पाठः । तज्ज्ञानेत्यादिमूलोक्तपक्षपरिग्रहार्थकतज्ज्ञानोद्देशेन जिज्ञासाविधा-वित्यंशस्य शोधसमुदायपत्रे शोधितस्यात्र सत्त्वाज्ज्ञानेन लेखकेन परित्यागकरणात् । एतेन ज्ञानविधावित्यादे-रप्रधानकर्मत्वेऽपीत्यन्तस्याव्यवधानेनेत्यारभ्य विचारयेदित्येव सूत्रार्थ इत्यन्तस्य च परस्परविरुद्धस्य ज्ञानविधि-पक्षे कथनासङ्गतिरिति शङ्कानवकाशः । ज्ञानोद्देशेन विचारविधिपक्षे एवाव्यवधानेनेत्यादिमूलोपपादनस्य स्वीकारेण ज्ञानविधावप्यस्योपपादनस्यानङ्गीकारात् । एवं योजनान्तरविवक्षया जिज्ञासाव्यापारजन्येत्येतत्पूर्ववाक्ये जिज्ञासेत्यतः प्राक् विधेयतयाऽप्रधानभूतेति ब्रह्मावबोधेत्यतः प्राक्तया प्रधानभूतेति च पूर्वं शोधितमभूत् । पश्चात्तदुभय-घटितयोजनां परित्यज्य यथास्थितपांक्तयोजनामेव स्वीकृत्य शोधद्वयमपीत्युक्त्वा लेखनीयमित्याज्ञप्तेन लेखकेन जिज्ञासेत्यतः प्राक्तनः शोधः परित्यक्तः । उद्देश्यतया प्रधानेति द्वितीयस्त्वनवधानाद्यथापङ्क्ति लिखितः । अतस्त-च्छोधनावश्यकत्वशङ्कापि न कार्या । अत एवोपसंहारे **उद्देश्यब्रह्मज्ञानरूपे**त्येव पाठ इति ज्ञेयम् । **ज्ञानविधौ हीति** मूलेऽर्थतस्तद्विधिस्तु नास्तीति लाभाशयेन टीकायामपि तथैव व्यवहारात्तत्रापि तदाशयेनैव ज्ञानविधिस्तु नास्तीति मुखतो नोक्तमिति न दोषः । ततश्चाप्रधानकर्मत्वेऽपि तत्प्राप्तावपीति यावत् । तज्ज्ञानोद्देशेन जिज्ञासाविधौ





तद्विधिपक्ष इति यावत् । **जन्यातिशयेति** । संभावनादिरूपातिशयेत्यर्थः । **तदभावादिति** । जिज्ञासाव्यापारजन्य-संभावनादिरूपातिशयस्याभावादित्यर्थः । ज्ञानरूपातिशयस्य च ब्रह्मगतत्वेऽपि न तस्य साक्षाज्जिज्ञासा-व्यापारजन्यतेति भावः । **उद्देश्येति** । करणव्यापारव्यवधानेनेति शेषः । **धर्मेति** । उक्तानुपपत्तिपरिहाराय पूर्वतन्त्रेऽप्युद्देश्यफलसंबन्धितया कर्मत्वात् प्रधानकर्मत्वं धर्मस्येति प्रतिपादनाय तथा सूत्रार्थकथनादिति भावः । तर्हि ब्रह्मजिज्ञासा कर्तव्येति सूत्रस्य यथाश्रुतार्थायोगः प्राप्तस्तदर्थानुसारेण विशेषणत्वेनोपसर्जनत्वप्राप्तेरित्यत आह **एवं चेति** । **कर्मत्वमात्र इति** । साक्षात्परम्परासाधारणकर्मत्व एव तात्पर्यं न तु जिज्ञासां प्रति विशेषणत्वेनोपसर्जनत्व इत्यर्थः । अत्र पक्षे कर्मत्वेनाप्राधान्यमित्यत्र तृतीयार्थमविवक्षित्वाऽप्रधानकर्मत्वमिति कर्मणः प्राधान्यमित्यत्र च षष्ठ्यर्थमविवक्षित्वा प्रधानकर्मत्वमिति चार्थः स्वीकार्यो भवतीत्यपरितोषं मनसि कृत्वा तृतीयार्थषष्ठ्यर्थविवक्षा-मनुसृत्य प्रकारान्तरेण व्याकुर्वतां व्याख्यानप्रकारमनुवदति **अन्ये त्विति** । कर्तव्येत्युक्तप्रेरणापरपर्यायनियोगस्य स्वर्गकामो यजेतेत्यादिस्थलीयनियोगस्य क्रियाविषयत्वदर्शनानुसारेण क्रियाविषयत्वमेव वाच्यमित्याशयेन जिज्ञासाया नियोगविषयभूतायाः क्रियात्वं वक्तुं कर्मत्वेनेत्यस्यावृत्तिमाह **कर्मत्वेनेत्यावृत्त्येति** । आवर्तितस्य संबधित्वेन विवक्षितमाह **जिज्ञासाया इति शेष इति** । कर्मत्वेनेत्यस्य जिज्ञासान्वये प्रकृतोपयोग्यर्थमाह **तदन्वये चेति** । तस्य ब्रह्मान्वये विवक्षितमर्थमाह **ब्रह्मान्वये चेति** । ब्रह्मजिज्ञासाविशेषणम् । जिज्ञासाक्रियारूपा तद्विशेषणत्वं चैतदुपसर्जनत्वम् । ततश्च क्रियारूपेत्यादिरर्थो लब्ध इति ज्ञेयम् । जिज्ञासोपसर्जनत्वेनाप्राधान्यमित्युक्ते जिज्ञासैव प्रधानमिति भ्रान्तिः स्यात्तन्निवृत्त्यर्थं कर्तव्यपदाध्याहारेण सूत्रयोजनायाः सिद्धत्वात्कर्तव्येत्यनेनोक्तनियोगस्यैव च प्राधान्यात्कर्मत्वेनेत्यावृत्त्याश्रयणलब्धविशेषणप्रणाड्या ब्रह्मणोऽप्राधान्यप्राप्तिरिति विशदयन्विशिष्टमूलतात्पर्यमाह **तथा च कर्तव्येति** । परम्पराश्रयणफलं **सुतरामिति** । अप्रधानत्वमित्येतत् गुणत्वमित्यनूदितम् । शङ्केत्यस्य निरस्तेत्युत्तरेणान्वयः । प्रकृते जिज्ञासाविधेरेव सत्त्वेन तत्र गुणत्वाभावस्यैवोपपादनाय तया ज्ञानविधौ गुणत्वप्राप्तिप्रतिपादनमसङ्गतमित्यतस्तत्सङ्गमयति **जिज्ञासाविधाविति** । **युक्तीति** । ज्ञानविधौ गुणत्वप्राप्ति-प्रकारस्य जिज्ञासाविधिपक्षे प्रसराभावरूपयुक्तीत्यर्थः । जिज्ञासाविधौ गुणत्वाभावप्रतिपादनापेक्षया तावच्छब्दः । **प्रकृतिप्रत्ययाविति** । क्रिया हि प्रधानं तच्छेषभूतं च कारकम् । गुणानां च परार्थत्वादसंबन्धः । समत्वात्स्यादिति तृतीयस्य द्वितीयगतजैमिनिसूत्रे तथा निरूपणात् । तथा च प्रकृतिप्रत्ययौ प्रत्ययार्थक्रिया प्रधानं यथा स्यात्तथा प्रत्ययार्थं प्रकृत्यर्थेन सह ब्रूत इति न्यायार्थः । उदाहरणं तत्स्थलीयं प्रथमपद्यसंबन्धि अत्र कार्यतावादे नियोगस्य प्रधानत्वे स्वर्गकामस्याप्रधानतागर्भदासस्वामिन्यायेन नायातीत्यादिप्रतिपादनं न्यायमकरन्दतट्टीकादावस्ति । स न्यायो स्वामिभूतब्रह्मविषये योज्यः । मूलव्याख्यानोपपादनावसरे निष्कासितं ज्ञेयम् । तथा च प्रत्ययार्थस्य प्रधानत्वात्प्रकृतेऽपि तथाभूतनियोगस्यैव प्राधान्यात्तदुपसर्जनत्वं तन्निवर्तकज्ञानस्येत्यादि प्राप्तं भवतीत्यर्थः । **जिज्ञासाविधावपीति** । ब्रह्मज्ञानार्थब्रह्मविचारविधावपीत्यर्थः । **दर्शनं प्रतीति** । ज्ञानोपसर्जनत्वं तु ब्रह्मणः प्राप्तमेवेत्यर्थः । ब्रह्मज्ञानोद्देशेन विचारविधानपक्षे नियोगनिर्वर्तकतया तदुपसर्जनत्वं वेदवाक्यानामेव प्राप्नोति । ज्ञानोपसर्जनत्वमात्रं तु न दोषाय । ज्ञानस्य स्वप्रधानतयोद्देश्यफलभूतस्य गुणत्वाभावेन तन्निमित्तकतद्विषय-ब्रह्मणोऽपि गुणत्वाप्राप्तेः । सुतरां गुणत्वस्यैव प्रागाशङ्कनात् । ज्ञानस्यैव विधेस्त्वनङ्गीकारादिति भावः । ननु





ब्रह्मज्ञानाय वेदवाक्यानि विचारयेदित्यर्थाश्रयणेऽपि ब्रह्मणो विचारकर्मता यदि नाभ्युपेयते तर्हि ब्रह्मजिज्ञासा कर्तव्येति सूत्रासङ्गतिः स्यात् । ततो वेदवाक्यविषयकविचारं प्रत्यपि ब्रह्मणः कर्मत्वे स्वीकार्येऽप्राधान्यं प्राप्तमेव भवति । वेदवाक्यानां ब्रह्मणश्चेति द्वयोः कर्मता चैकत्रादृष्टा कल्पनीयेत्यत आह **जिज्ञासाया वेदेति** । **उक्तमिति** । द्विविधं खलु कर्म कारकमित्यत्रोक्तं कुठारवदव्यवधानेन कर्मत्वं वेदवाक्यानाम् । वृक्षवदुद्देश्यफलसंबन्धितया कर्तृव्यापार-व्यवधानेन कर्मत्वं तु ब्रह्मण इत्यनुसन्धेयमित्यर्थः । एवं कर्मत्वेनेत्यस्यावृत्त्याश्रयणेन कर्मत्वेनाप्राधान्यमिति यथाश्रुतार्थयुक्तत्वाभिप्रायेण व्याकुर्वतापि तज्ज्ञानोद्देशेनेति वाक्यपर्यवसितार्थतया वेदवाक्यब्रह्मणोरुभयोरपि विचारकर्मत्वप्राप्तौ तन्निर्वाहायाप्रधानकर्मत्वं प्रधानकर्मत्वमित्यत्रैव पर्यवसानाश्रयणादस्मदुक्तसमाधानमेवान्ते स्वीकृतमिति वृथा आवृत्त्याद्याश्रयणप्रयास इत्याशयेनाह **इत्याहुरिति** । अत्र पत्रान्तरे प्रकारान्तरेण व्याख्यानद्वयं लिखितमस्ति । तत्रापि टीकोक्तपक्षपर्यवसाने प्रकारान्तराश्रयणं वृथेति भाति ॥ छ ॥

श्रीपांडुरंगग्रामे प्रतिष्ठाननारायणपण्डिताचार्यैरथवेति ग्रन्थव्याख्यानं स्वकृतत्वेन गुरुभ्यः प्रदर्शितम् । तथाहि । कर्तव्येति पदाध्याहारे सति ब्रह्मजिज्ञासा कर्तव्येति सूत्रार्थः प्रतीयते । तत्र ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र लिङा प्रतीयमानभावनायाः स्वर्गविषयत्वावधारणाज्ज्योतिष्टोमेन यागेन स्वर्गं भावयेदित्यर्थं वदतः शब्दोक्तफलस्य भाव्यतया संबन्धाद्ब्रह्मजिज्ञासाया फलं भावयेदिति सूत्रस्य निर्गलितोऽर्थः । तत्र घटस्य ज्ञानमित्यादौ घटस्येव ब्रह्मजिज्ञासायाः साधनत्वेन विधाने ब्रह्मणो व्यवच्छेदेनाप्राधान्यशङ्का स्यात् तत्परिहारार्थं जिज्ञास्य इति कर्मणि प्राधान्यं सूचितमित्याह **अथवेति** । **कर्मत्वेन** । अवच्छेदकत्वेनेत्यर्थः । स्यादेतदेवं यद्यत्र ब्रह्मविशेषणकजिज्ञासायाः साधनत्वं विधीयेत । न चैवम् । विशेषणविशेष्यभावव्यत्यासेन जिज्ञासाविशिष्टब्रह्मण एव साधनत्वेन विधानात् । तदेतदाह **ज्ञानविधौ हीति** । ज्ञानस्य जिज्ञासारूपस्य ब्रह्मविशेषणकजिज्ञासाया इति यावत् । साधनत्वेन विधाने दण्डत्वस्येव ब्रह्मणो विशेषणत्वेनाप्राधान्यं स्यादित्यर्थः । **तज्ज्ञानोद्देशेनेति** । तस्य ब्रह्मणः ज्ञानोद्देशेन ज्ञानरूपफलार्थं जिज्ञासाविधाने विशेष्यत्वेनेति शेषः । तथा च सति ब्रह्मणः कुतोऽप्राधान्यम् । ब्रह्मणो विशेष्यत्वाभ्युपगमेन विशेषणत्वाभावेन तत्प्रयुक्ताप्राधान्याभावादिति । तत्र गुरुभिर्दूषणमभ्यधायि । साधनकोटौ विशेषणतया प्राप्तं ब्रह्माप्राधान्यशङ्कायास्तत्कोटौ विशेष्यत्वाभ्युपगमेन कथञ्चित्परिहारेऽपि विधेयत्वस्याप्राधान्यव्याप्तत्वेनोद्देश्य-त्वस्य च प्राधान्यव्याप्तत्वेन जिज्ञासाविशिष्टब्रह्मणः साधनत्वेन विधानस्वीकारेऽपि विधेयत्वेन तत्प्रयुक्ताप्राधान्या-परिहारात् । अस्य नियमस्य च पूर्वमीमांसासिद्धत्वेन तदभाववचनायोगात् । किं चात्र साधनत्वेन ब्रह्म विधानं वा स्यात् । जिज्ञासाविशिष्टब्रह्मविधानं वा स्यात् । नाद्यः । प्रसिद्धस्यैव विधेयत्वेन ब्रह्मणश्च नित्यसिद्धत्वेन विधेयत्वायोगात् । न द्वितीयः । सविशेषणे विधिनिषेधौ विशेषणविशेष्यान्यतरदुपसंक्रामतः सति विशेष्यबाध इति न्यायेन विशेष्यभूतब्रह्मविधाने उक्तप्रकारेण बाधस्य विद्यमानत्वेन विशेषणीभूतजिज्ञासामात्रविषयत्वावश्यंभावा-ज्जिज्ञासामात्रविधाने च ब्रह्मणो नियोगनिवर्तकतया विशेषणतयाऽप्राधान्यतादवस्थ्यादित्युपपाद्यावच्छेदकत्वेनेति कर्मत्वेनेत्यस्य व्याख्याने योगरूढिलोकप्रसिद्धिव्याकरणसंमत्यादिसाधकाभावः । ज्ञानविधौ हीत्येतज्ज्ञानस्य जिज्ञासारूपस्येत्यादिरूपेण व्याख्याय तज्ज्ञानोद्देशेनेत्यत्र तस्य ब्रह्मणः ज्ञानोद्देशेन ज्ञानरूपफलार्थमिति





व्याख्यानकरणे पूर्वोत्तरस्थलयोर्ज्ञानिजिज्ञासापदयोरेकार्थत्वाप्रास्त्योद्देश्यविधेयभावायोगः । ज्ञानजिज्ञासापदयोरसमानार्थत्वे तु ब्रह्मविशेषणकजिज्ञासाविधानपक्षे ब्रह्मणोऽप्राधान्यप्राप्तेर्भवतैवोक्त्या जिज्ञासाविशेषणकब्रह्मविधानपक्षमुपादाय ब्रह्मणः प्राधान्यं वाच्यम् । न च तत्संभवति । तावता हि जिज्ञासारूपफलापेक्षया जिज्ञासाविशेषणकब्रह्मरूपसाधनस्य प्राधान्यमुक्तं स्यात् तच्चायुक्तम् । यागश्रवणादिसाधनानां स्वर्गमोक्षादिफलापेक्षया प्राधान्यादर्शनिन प्रकृतेऽपि साधनभूतब्रह्मणः प्राधान्यायोगादित्यादिना तद्वाक्यार्थदूषणं च कृतम् । तदनन्तरमेतत्पत्रिका तैः पण्डितैः प्राप्ता । तां सम्यगपरामृश्यैव स्वकीयरामाख्यशिष्यनाम्ना तदुत्तर मलेखि यथेष्टं गालीप्रदानपूर्वकमुपहासशास्त्राभ्यां सफलतया तदुपन्यासपूर्वकं च । कश्चिदेवं वदति स्म । एतावता हि साधनभागे विशेषणतया प्राप्ता प्राधान्यस्य विशेष्यत्वेन साधनकोटौ निवेशेन कथञ्चिदप्राधान्यपरिहारेऽप्यप्राधान्यं स्यादेव । विधेयत्वस्याप्राधान्यव्याप्तत्वेनोद्देश्यत्वस्य च प्राधान्यव्याप्तत्वेन विशेष्यतया ब्रह्मणः साधनत्वेऽपि विधेयत्वेन अप्राधान्यतादवस्थ्यादिति । तदेतदतिव्यधिकरणमित्यादि जल्पितमित्यन्तमुक्त्वा यावता साधनांश एव जिज्ञासाविशेषणत्वेन ब्रह्मणोऽप्राधान्यप्राप्तौ जिज्ञास्योऽयमिति प्राधान्यमात्मनः स्फुटं प्रतीयते । तथा चाप्राधान्यशङ्कनं निरक्षरकुक्षेरित्यादिगाली । किं चोक्तव्याप्यव्यापकभावः कथं किं च तत्रोदाहरणमिति स्वजीवितं सफलीकुर्वन्स एव जानातु मीमांसकंमन्यः । किञ्चेत्यादिवाक्यार्थानुपपत्त्यादिग्रन्थश्चानुवादानर्ह इत्यतो स्वोपहास एवोचित इति प्रतिज्ञाय यथेष्टमुपहासशास्त्रोपन्यासान्तम् । तदुत्तरस्य गुरुपादनिकटे प्रास्त्यनन्तरं गुरुभिर्लिखितम् । ब्रह्मणोऽप्राधान्यमनिष्टं मत्त्वा साधनकोटौ विशेष्यत्वेन निवेशस्वीकारेऽपि विधेयत्वप्रयुक्ताप्राधान्यस्यापरिहार एवेति दूषणे दत्ते जिज्ञास्योऽयमिति प्राधान्यं स्फुटं प्रतीयत इत्युक्तिमात्रमनवबोधनिबन्धनं कथं व्याप्यव्यापकभाव इत्यस्य किंप्रमाणक इत्यर्थकत्वेऽव्यभिचरितसंबन्धस्यैव नियामकत्वेन तत्र प्रमाणान्तरानपेक्षेत्युत्तरम् । किंप्रयोजनक इत्यर्थस्तु न संभवति । प्रमाणप्रमिते प्रयोजनापेक्षायां तस्यापि कस्यचित्कल्पनीयत्वात् । उदाहरणं तु ज्योतिष्टोमेनेत्यादिवाक्योक्तयागस्वर्गादिकमेवेत्युदाहरणम् । किमिति वचनं चायुक्तम् । किञ्चेत्यादिग्रन्थश्चानुवादानर्ह इति वचनमात्रं च शास्त्रमर्यादानभिज्ञताज्ञापकम् । उपहासशास्त्रोपन्यसनं चैहिकामुष्मिकपुरुषार्थसाधनत्वबुद्ध्या देशान्तरगमनपूर्वकं बहुभ्यो बहुवारं तच्छास्त्राभ्यासं कृत्वा कृतार्थतां मन्यमानैस्तच्छास्त्रस्य तदधिकारिस्वकीयान्प्रत्येवोपदेष्टव्यतया सच्छास्त्ररूपपुरुषार्थसाधनान्तराभ्यासवतः प्रति तदुपन्यासायोगादित्यादिरूपेणेति ज्ञेयम् । प्रकृतमनुसरामः ।

**स०व्र०**— ननु कथं ब्रह्मणः कर्मत्वे अप्राधान्यशङ्का कथं च जिज्ञास्य इति कर्मप्राधान्यसूचनेन अप्राधान्यशङ्कानिरास इत्यत आह **ज्ञानविधौ हीति** । यद्यत्र श्रुतिसूत्रयोः ब्रह्मविचारत्वेन जिज्ञासा विधीयेत तदा विधेयस्याप्राधान्यनियमाद्विधेयविशेषणत्वेन ब्रह्मणोऽप्राधान्यं स्यात् । न च व्रीहीनवहन्तीत्यादौ कर्मणोऽपि प्राधान्यदर्शनात्कथमेतदिति वाच्यम् । वितुषाणामुद्देश्यतया प्राधान्येऽपि सतुषाणां विधेयावघातविशेषणत्वेन अप्राधान्यात् । न च कर्मणोऽप्राधान्ये सक्तून् जुहोतीत्यादौ द्वितीया श्रुतिप्रतीतसक्तुप्राधान्यपरित्यागेन सक्तुभिर्जुहोतीतिं विभक्तिविपरिणामोक्तिविरोध इति वाच्यम् । तत्रापि विधेयहोमविशेषणताप्रयुक्ताप्राधान्यस्या-





ङ्गीकारात् उद्देश्यत्वप्रयुक्तप्राधान्यस्यैव च विभक्तिविपरिणामेन परिहारादिति । **तज्ज्ञानेति** । ब्रह्मज्ञानाय वेदान्तविचारः कर्तव्य इत्येवं वेदविचारत्वेन जिज्ञासाविधान इत्यर्थः । यद्यपि ब्रह्मज्ञानमुद्दिश्य वेदविचार-विधानेऽपि ब्रह्मणोऽप्राधान्यं तदवस्थमेव । तथापि न ब्रह्मपरवेदविचाररूपेण विधानम् । किं नाम वेदविचाररूपेण । तथाच श्रुतिः 'तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेत्' इति । अयं भावः । द्विविधं खलु कर्म कारकं भवतीत्यादि पूर्वोक्तरीत्या कुठारेण वृक्षं द्वैधीकुर्यादित्यत्र वृक्षस्याकर्मकत्वेऽपि कुठारव्यापारद्वारा कर्तृव्यापारस्य कर्मत्वात्प्राधान्यवत् प्रकृतेऽपि प्रमाणादिसंभावनारूपकरणव्यापारद्वारेश्वरावबोधस्यैवोद्देश्यत्वादीश्वरस्योद्देश्यफल-संबन्धितयैव कर्मत्वेन कुठारवदव्यवधानेन मीमांसाकर्मत्वाभावेऽपि नाप्राधान्यम् । अत एव सक्तून् जुहोतीत्यत्र सक्तूनामुद्देश्यसंबन्धित्वेन प्रधानकर्मत्वासंभवादप्रधानकर्मत्वोक्तिरिति न कश्चिद्दोषः ।

**विठ्ठ०**— ननु ब्रह्मणो विषयत्वसूचनस्य षष्ठीपरिग्रहसूचनस्यापि ब्रह्मजिज्ञासा विधीयते इति कथनेऽपि उक्तव्याकरणमर्यादया संभवेन जिज्ञासाया व्यावर्तकत्वेन गुणतया निर्दिष्टस्य ब्रह्मणो जिज्ञासा व्यावर्त्यतया प्राधान्येन निर्देशे किं प्रयोजनमिति शङ्कापरिहारायाह **अथवेति** । कर्मणि षष्ठीति सूचनं प्राक् प्रयोजनमित्युक्तं अधुना तु कर्मभूतब्रह्मप्राधान्यसूचनं प्रयोजनमिति भेदः । ब्रह्मजिज्ञासेत्यत्र जिज्ञासाकर्मतया ब्रह्म प्रतीयते । एवं सति जिज्ञा-सायाः कर्तव्यतया विधेयत्वेन गुणभूतत्वात् तद्विशेषणीभूतब्रह्मणोऽपि विधेयकोटिप्रवेशेनाप्राधान्यप्रतीतौ तां निराकर्तुं कर्मप्राधान्यसूचनाय जिज्ञास्यते इति निर्देशो युक्त इति भावः । अस्त्वेवं तथाप्युक्तब्रह्माप्राधान्यशङ्कायाः कथं परिहार इत्यत आह **ज्ञानविधाविति** । ब्रह्म ज्ञातव्यमिति ज्ञानविधौ विधेयज्ञानव्यावर्तकतया विधेयकोटिप्रविष्टत्वेन ब्रह्मणो-ऽप्राधान्यं शब्दतः प्रतीतं स्यात् न ह्यत्र ज्ञानं विधीयते किन्तु ब्रह्मज्ञानोद्देशेन जिज्ञासैव कर्तव्यतया विधीयते । न हि वेदकर्मकविचारापरनामकविधेयजिज्ञासायाः व्यावर्तकं किं नामोद्देश्यतया प्रधानस्य ज्ञानस्येव व्यावर्तकं ब्रह्म तथाच तस्य गुणभूतविधेयकोटिप्रवेशाभावात् प्रत्युतोद्देश्यतया प्रधानब्रह्मज्ञानसंबन्धित्वात् प्राधान्यमेवेति भावः ।

**चषकः**— तादृग्विन्यासस्य फलान्तरं दर्शयति **अथवेत्यादि** । उद्देश्यविधेयभावेनान्वयबोधस्थले उद्देश्यस्य प्राधान्यं विधेयस्याप्राधान्यमित्यस्य स्वर्गोद्देश्यकयागादिविधेयकान्वयबोधविषयीभूतस्वर्गयागयोर्दर्शनिन प्रकृतेऽपि विषयिताप्रत्यासत्त्या ब्रह्मावच्छिन्नजिज्ञासावृत्तिविधेयताकमोक्षवृत्त्युद्देश्यताकान्वयबोधोपगमे अप्रधान-भूतविधेयतापन्नजिज्ञासाविशेषणीभूतब्रह्मणोऽपि अप्राधान्यमेव प्रासाङ्क्षीदित्यर्थः । **कर्मप्राधान्यमिति** । करण-व्यापारव्यवधानेनोद्देश्यफलसंबन्धिवृक्षादिवत्प्रमाणादिसंभावनाद्वारेणोद्देश्यतया प्रधानभूतावबोधरूपफलसंबन्धितया प्रधानकर्मतेति । कर्मविशेष्यकशाब्दबोधौपयिकप्रथमान्तपदसमभिव्याहाराश्रयणेऽपि कथमुक्तशङ्कापनोद इत्यत आह **ज्ञानविधौ हीति** । बन्धमिथ्यात्वमित्येतदवतरणिकायां पूर्ववादिमतानुवाददशायां ब्रह्मज्ञानाय विचारः कर्तव्य इति सूत्रवाक्यस्य श्रौतार्थः संपद्यत इत्यात्मीयाशयस्फुटीकरणेन न्यायामृते तृतीयपरिच्छेदे 'ब्रह्मज्ञानाय ब्रह्मविचारः कर्तव्य इति न वचनव्यक्तिस्तथात्वे ब्रह्मणो विधेयविशेषणतया गुणत्वापातात् । किन्तु ब्रह्मज्ञानाय वेदविचारः कर्तव्य इत्येव वचनव्यक्तिरि'त्यादिना सौधतात्पर्याविष्कृत्या, स्वविषयिताप्रत्यासत्त्या ब्रह्मावच्छिन्नज्ञानवृत्त्युद्देश्यताकवेद-विचारत्वावच्छिन्नविधेयताकान्वयबोधोपगमेन विधेयतावच्छेदकघटकतानापन्नब्रह्मण उद्देश्यतावच्छेदकघटक-त्वोपगमेन प्राधान्यमेव सेत्स्यति नाप्राधान्यमित्याशयः ।





**गूढ०**— जिज्ञास्य इत्यस्य प्रयोजनान्तरमाह **अथवेति । अप्राधान्यशङ्कामिति** । ननु कर्मषष्ठीपरिग्रहो न युक्तः । तथा सति ज्ञानस्य विधेयत्वेनाप्राधान्यात् । ब्रह्मणश्च ज्ञानकर्मतया विधेयत्वेनाप्रधानीभूत-ज्ञानविशेषणत्वेनाप्राधान्यापत्तिः । विधेयस्याप्राधान्यनियतत्वादिति न कर्मषष्ठीपरिग्रहो युक्त इति शङ्कामित्यर्थः । नन्वेवमपि कथमप्राधान्यपरिहार इत्यत आह **ज्ञानविधौ हीति** । यदि ह्ययं ब्रह्मकर्मकज्ञानविधिः स्यात्तदा विधेयविशेषणत्वेन ब्रह्मणोऽप्राधान्यं स्यादिति शङ्कनीयम् । न चैवमित्यर्थः । किं तर्हि विधीयत इत्यत आह **तज्ज्ञानोद्देशेनेति** । तथा चोद्देशत्वस्य प्राधान्यनियतत्वात् । ब्रह्मज्ञानस्य चोद्देश्यतया प्रधानत्वेन तद्विशेषण-तयोद्देश्यकोटिनिविष्टस्य कुतोऽप्राधान्यम्, अपि तु प्राधान्यमेवेत्यर्थः ।

**प्रदीपः**— **ज्ञानविधौ हीति** । विधेयज्ञानस्य क्रियारूपस्य नियोगनिवर्तकतया विशेषणत्वात् ज्ञानविशेषणं ब्रह्मणोऽपि विशेषणं स्यादित्यर्थः । **तज्ज्ञानेति** । ज्ञानस्य विचारं वेत्युद्देश्यत्वेन प्राधान्यात्तद्विशेषणस्यापि ब्रह्मणः प्राधान्यमेवेत्यर्थः ।

**पूर्वतन्त्रतः आपादितायाः गतार्थताशङ्कायाः निरसनम्**—

**१६३ सु०— विधीयत इत्यनेन कर्तव्येति पदाध्याहारं सूचयति ॥ ननु भवतीति स्वतः सिद्धम् । मैवम् । तथा सत्यनुवादत्वप्रसङ्गात् ।**

**परि०**— वाचस्पतिमतमाशङ्कते **नन्विति । स्वत इति** । यत्नेन विना 'अस्तिभवत्योः सर्वत्राध्याहार' इति न्यायादित्यर्थः ।

**यादु०**— **ननु भवतीति स्वतःसिद्धमिति** । भवतीत्यध्याहारः स्वत एव व्याख्यातृव्यापार-मनपेक्ष्यैव सिद्धमित्यर्थः । विधिनिषेधाववधूय प्रत्ययायोगात्तत्रापि विधेरेवाधिकार्यादीतरपदार्थान्वितत्वेन योग्य-त्वादिति भावः । **अनुवादत्वेति** । श्रोतृप्रवृत्तिनिवृत्त्यनुपयुक्तसिद्धार्थबोधकत्वप्रसङ्गात् इत्यर्थः ।

**वं०प०**— **अनुवादत्वेति** । सिद्धार्थबोधकत्वेन प्रवृत्तिनिवृत्त्यनुपयुक्तत्वादित्यर्थः ।

**आनन्दः**— नन्वाकाङ्क्षिताध्याहारं सूचयन्नित्युक्तम् । तत्र कथमाकाङ्क्षिताध्याहारः कृत इति तत्राह **विधीयत इति** ।

**कं०रा०**— नन्वस्तिभवत्योः सर्वत्राध्याहार इति न्यायेन भवतीत्यादिपदं स्वत एव प्राप्तम् । किं कर्तव्यपदाध्याहारेणेति शङ्कते **नन्विति । तथा सतीति** । उत्सर्गप्राप्तभवतिपदाध्याहारेऽस्य सूत्रस्य अनुवादत्वं स्यात् । न विधायकत्वम् । तथा चेदं सूत्रं प्रेक्षावत्प्रवृत्त्यनुपयुक्तं विषयवाक्याननुगुणं च स्यादिति भावः ।





**श्रीनिधि०— अनुवादत्वप्रसङ्गादिति**। तथाच प्रवृत्त्युपयोगित्वं न स्यादिति भावः।

**वा०चं०—** नन्वत्र विधीयत इति सूत्रशेषसमर्पणं वा सूत्रेण विधीयत इति भाष्यकारीयं सूत्रप्रतिपाद्यकथनं वा। आद्येऽपि विपूर्वदधातेः करोत्यर्थत्वात्क्रियत इत्यर्थो वा रूढिमाश्रित्य कर्तव्यतया बोध्यत इति वा तस्यार्थः। नाद्यः। **अनुवादत्वप्रसङ्गादिति**। वक्ष्यमाणदूषणस्यात्रापि प्रसक्तेः। न द्वितीयः। सूत्रोक्तविषयादिमत्त्वस्य कर्तव्यतां प्रत्येव हेतुत्वेन तद्बोधे हेतुत्वासंभवेनासङ्गत्यापत्तेः। न च विषयादिमत्त्वात् श्रुत्या कर्तव्यतया बोध्यत इति सूत्रार्थ इति वाच्यम्। श्रुतिसमानार्थकसूत्रे श्रुत्यर्थं साध्यतया निर्दिश्य तत्र हेतोः कथनीयतया बोध्यस्याप्यकथनीयत्वात्। नापि द्वितीयः। कृत्यानां विधौ स्मरणाज्जिज्ञास्य इत्येतावतैव विधिलाभसंभवे विधीयत इत्यस्य वैयर्थ्यापत्तेरित्यतः कृत्यानामर्हर्थेऽपि स्मरणेन सावकाशतया नियमेन कर्तव्यपदाध्याहारसूचकत्वासंभवाद्भाष्यकारीयं तत्प्रतिपाद्यकथनमुपपन्नम् इत्याशयेन आह **विधीयत इति**। अनुवादत्वे सिद्धार्थबोधकत्वप्रसङ्गादिति। तस्य च वैयर्थ्यादित्याशयः।

**वा०र०— इत्यर्थो वेत्यत्र** तस्येति वक्ष्यमाणमाकृष्यते। **वक्ष्यमाणेति**। भवतीत्येव स्वतःसिद्धमित्येतच्छङ्कापरिहारावसरे तथा सत्यनुवादत्वप्रसङ्गादिति वक्ष्यमाणेत्यर्थः। **कर्तव्यतां प्रत्येवेति**। विषयाद्यभावाज्जिज्ञासा न कर्तव्येति पूर्वपक्षनिरासाय प्रकृतसूत्रे उक्तस्य विषयादिमत्त्वस्य जिज्ञासा कर्तव्येत्यत्रैव हेतुत्वं संभवति। कर्तव्यतया बोध्यत इत्यत्र तु न तस्य हेतुत्वसंभवः। विषयाद्यभावेन कर्तव्यतया बोध्या न संभवतीति पूर्वपक्षाभावात्। तत्कर्तव्यत्वाभावस्यैव शास्त्रानारम्भप्रयोजकत्वेन तद्बोध्यत्वाभावस्य तदप्रयोजकत्वाच्चेति भावः। **श्रुत्येति**। यद्यपि कर्तव्यतया बोध्यत इति पक्ष इव श्रुत्येत्यधिकपूरणेऽपि विषयादिमत्त्वस्य कर्तव्यतां प्रत्येव हेतुत्वेनेत्युक्तदूषणस्यानुद्धारान्न पुनस्तदाशङ्का युक्तेति भाति। तथापि पूर्वदूषणेन परिहृताया अपि शङ्कायाः श्रुतिसमानार्थेति वक्ष्यमाणाधिकदूषणेनापि दूषणं कर्तुं पुनराशङ्केत्यदोषः। विषयादिमत्त्वात्कर्तव्यतया बोध्य इति प्रथमार्थे सूत्रोक्तन्यायस्य सूत्रेण कर्तव्यतया बोधोपपादकत्वमुच्यत इत्यर्थस्यापि प्राप्त्या श्रुतिनिर्णायकत्वाभावप्रसङ्गोऽपि पूर्वत्रायाति तद्दूषणस्यात्राप्रसङ्ग इति भावेन पुनरत्राशङ्कोपपत्तिश्च। एवं च श्रुतिसमानार्थेति वक्ष्यमाणं दूषणं विषयादिमत्त्वात्कर्तव्यतया बोध्यत इति प्रथमार्थेऽपि योज्यम्। श्रुतिनिर्णायकत्वाभावरूपपूर्वदूषणस्य एतच्छङ्कायामप्रसर इति विशेषस्तु स्पष्ट इति ज्ञेयम्। **द्वितीय इति**। सूत्रेण विधीयत इति भाष्यकारीयं सूत्रं प्रतिपाद्यकथनमित्याद्यविकल्पद्वितीय इत्यर्थः। **कृत्यानामिति**। कृत्याः प्राङ्ण्वुल इति तव्यदादीनां कृत्यसंज्ञा। **विधाविति। विधीयत इत्यस्येति**। अनुव्याख्यानगतस्येति शेषः। **अर्हार्थेऽपीति**। अर्हे कृत्यतृचश्चेति स्मरणादिति भावः। आद्यद्वितीयं कल्पमेवाङ्गीकृत्य तत्र प्राप्तदोषमुद्धरन् तत्पक्षाङ्गीकारपरतया मूलमवतारयति **कृत्यानामर्हेति**। अत्र टीकायामनुवादत्वं सिद्धार्थबोधकत्वमित्यनुवादपूर्वकं प्रथमान्ततया व्याख्याय तत्र तत्र स्थल इवावच्छेदमकृत्वा प्रसङ्गादितीति मूलप्रतीकमुपादाय तस्य च वैयर्थ्यादित्याशय इत्युक्तम्। लेखकेन तु अवच्छेदाभावं ज्ञात्वैकवाक्यतां विज्ञायानुवादत्वे सिद्धार्थबोधकत्वप्रसङ्गादिति पाठः कल्पित इति ज्ञेयम्। **वैयर्थ्यादिति**। अधिकविधाननिषेधरूपप्रयोजने सत्येव तस्य सार्थक्यात् प्रकृते च तदभावादिति भावः।





**स०व्र०**— **विधीयत इतीति** । निरर्थकसिद्धबोधकवाक्यमनुवादशब्दार्थः । सर्वज्ञबादरायणप्रणीतत्वान्नैरर्थक्यानुपपत्तेरध्याहारेणापि सूत्रं योजनीयम् । स च योग्यस्यैव । योग्यं च पुरुषप्रवृत्तिहेतुत्वात् कर्तव्येति पदमेवेत्यर्थः ।

**विठ्ठ०**— नन्वेवं सति ब्रह्मकर्मकजिज्ञासा ब्रह्मजिज्ञासेति कर्मणि षष्ठीपरिग्रहाय जिज्ञास्य इत्युक्तमिति पूर्वोक्तस्य विरोधः स्यादिति चेन्न । न हि ब्रह्मणो जिज्ञासाकर्मत्वं साक्षादुक्तं किन्तु जिज्ञासाव्यापारस्यापि प्रमाणादिसंभावनाद्वारेणेश्वरावबोध एव उद्देश्य इति भवति तत्कर्मतेत्युक्तेः परम्परया ज्ञानद्वारकत्वेनैवोक्तमिति कुतो विरोध इति । **स्वतस्सिद्धमिति** । व्याख्यातृव्यापारमनपेक्ष्यास्तिभवत्योः सर्वत्र संबन्ध इत्युक्तेः स्वतस्सिद्धमित्यर्थः । **अनुवादत्वेति** । अनुवादस्यात्र व्यर्थत्वादिति भावः ।

**चषकः**— कृत्यानामर्हार्थेऽपि स्मृत्या नियमेन जिज्ञास्य इति निर्देशध्वनितत्वस्य कर्तव्यपदाध्याहारे असंभवेऽपि विधीयत इति निरवकाशनिर्देशध्वनितत्वस्यैव तादृक्पदाध्याहारेऽनुवादकत्वनियन्त्रितसिद्धार्थबोधकत्वापादितानर्थक्यपरिजिहीर्षया सूपगमत्वादित्यभिधत्ते **विधीयत इति** । भामतीदिशा शङ्कते **नन्विति** । **स्वत इति** । व्याकर्तृप्रयत्नमन्तरेणैवास्तिभवत्योः सार्वत्रिकाध्याहारस्य निखिलतान्त्रिकसिद्धत्वादित्यर्थः ।

**गूढ०**— नन्वाकाङ्क्षिताध्याहारं सूचयन्नित्युक्तम् । तत्र कथमाकाङ्क्षिताध्याहारः कृत इति तत्राह **विधीयत इति** ।

**प्रदीपः**— **विधीयत इति** निरर्थकसिद्धबोधकवाक्यत्वमनुवादत्वशब्दार्थः । सर्वज्ञबादरायणप्रणीतत्वात् नैरर्थक्यानुपपत्तेरध्याहारेणापि सूत्रं योजनीयम् । स च योग्यस्यैव योग्यं, योग्यं च पुरुषप्रवृत्तिहेतुत्वात्कर्तव्यपदमेवेत्यर्थः । 'प्रवृत्तिर्वा निवृत्तिर्वा येन शब्देन जन्यते । स चोदनोच्यते यद्वा प्रवर्तनफला मतिः ।' इति चोदनाशब्दार्थस्तत्र केचिदित्येवमर्थः । 'चोदनालक्षणोऽर्थो धर्म' इति विधिपरत्वेन सर्ववेदस्य प्रामाण्याद्वेदगतवाक्येषु सदेव सौम्येत्यादिषु विध्यश्रवणादात्मा द्रष्टव्य इत्यादिषु कृत्यानां विधौ स्मरणेऽपि कर्मप्राधान्येन भावार्थप्राधान्याभावादात्मानमुपासीतेत्यादावात्मनः कर्मत्वावगतेस्तस्य च नित्यत्वेनानुत्पाद्यत्वादविकारित्वेन विकार्यत्वाभावान्नित्याप्तत्वेनानाप्तत्वात्कर्मान्तरेऽनुपयोगित्वेनासंस्कार्यत्वात् उत्पाद्यविकार्यसंस्कार्याणामेव व्रीह्यादीनां व्रीहीनवहन्ति तण्डुलान्पिनष्टि गां दोग्धि स्रुचः सम्मार्ष्टीत्यादिषु कर्मत्वात् सक्तून् जुहोतीत्यत्र सक्तूनां कर्मत्वेन प्राधान्येऽपि भस्मीभूतानां कर्मान्तरेऽनुपयोगित्वेऽङ्गित्वाद्विनियोगभङ्गेन व्रीहीनवहन्तीत्यादिवत् गुणकर्मत्वं परित्यज्य व्रीहिभिर्यजेतेतिवत् सक्तुभिर्जुहोतीति प्रधानकर्माश्रयणं तद्वदिहाश्रवणेऽप्युपासनाद्यपरिज्ञानाद्गुणकर्मत्वज्ञानमुपासनमात्माविषय इत्यङ्गीकारेऽपि आत्मनो ज्ञानेनाप्यर्थप्रसङ्गान्नित्याप्तस्य तदयोगात् । तस्माद्विध्याद्यभावेन वेदाङ्गनामानर्थक्यमित्यभ्यधिकाशङ्का ।





**१६४ सु०— अत्रैके चोदयन्ति । सिद्धैव ननु ब्रह्मजिज्ञासा । अथातो धर्मजिज्ञासेति सकलवेदार्थविचारस्योदितत्वात् । ब्रह्मज्ञानस्य चोदनालक्षणत्वेन धर्मस्वरूपत्वादभ्यधिकाशङ्काऽभावादिति ।**

**परि०— सिद्धैव नन्विति** । नन्वित्यस्य खल्वित्यर्थो ध्येयः । तथा च अनुवादकत्वं न दोषायेति भावः । ननु धर्माय सर्ववेदविचारः कार्य इति जैमिनीसूत्रस्य तद्भाष्येऽर्थ उक्तः । न च ब्रह्मज्ञानं धर्मः येन ब्रह्मज्ञानाय वेदविचारः कार्य इत्यर्थोऽपि लब्धः स्यात् । तथा च सकलवेदार्थविचारस्योदितत्वादित्युक्तिरयुक्तेत्यत आह **ब्रह्मज्ञानस्येति** । पूर्वतन्त्रे अथातो धर्मजिज्ञासेत्युक्तौ किं धर्मस्वरूपं यदर्थं विचारः कार्य इति शङ्कायां 'चोदनालक्षणोऽर्थो धर्म' इति द्वितीयसूत्रे धर्मस्वरूपमुक्तम् । तस्यायमर्थः । चोदनेति विधिवाक्यमात्रमिति प्राभाकरमतम् । मन्त्रार्थवादनामधेयसहितं विधिवाक्यमिति भाट्टमतम् । लक्षणशब्दः प्रमाणवचनः । यश्चोदनाप्रमाणकोऽर्थरूपश्च स धर्म इति । शत्रुवधहेतुश्येनयागादेरपि श्येनेनाभिचरन्यजेतेति चोदनाप्रमाणकत्वेन धर्मत्वप्राप्तिनिरासायार्थ इति विशेषणोक्तिः । श्येनयागादेरनर्थत्वादिति । तथाच जैमिनिसूत्रोक्तदिशा ब्रह्मज्ञानस्यापि 'आत्मन्येवात्मानं पश्येद्विज्ञाय प्रज्ञां कुर्वीत' इत्यादि चोदनाप्रमाणकत्वेन धर्मस्वरूपत्वादित्युक्तम् ।

**यादु०— ननु सिद्धैवेति** । वेदान्तानामर्थनिर्णयार्थमपेक्षितो न्यायकलापो अथातो धर्मजिज्ञासेत्यादिसूत्रैः सूचित इत्यर्थः । ननु विधिवाक्यार्थनिर्णय एव प्रवृत्तो न ब्रह्मवाक्यार्थनिर्णयोऽतः प्रमेयभेदात् न्यायभेदोऽप्यावश्यक इत्यत आह **सकलवेदार्थविचारस्योदितत्वादिति** । लोके सकलपदानां कार्यपरतया सङ्गतिग्रहणात्कार्यमेव वेदार्थः । तस्य च तत्र निरूपितत्वात् । किमपरमवशिष्टं यद्विचाराय पुनरारम्भा इत्यर्थः । ननु न सर्वस्य वेदस्य कार्यपरत्वं युक्तम् । वेदान्तानामुपक्रमादिभिर्ब्रह्मपरत्वावगमात् । कार्यं च वेदान्तैरनवगम्यमानं न तद्वाक्यप्रमेयमिति तत्राह **ब्रह्मज्ञानस्येति** । वेदान्तेष्वप्यात्मा द्रष्टव्य इत्यादौ ज्ञानविधिरुपलक्ष्यते । तदपेक्षितार्थप्रतिपादकानि चेतराणि वाक्यानि । तत्कथमकार्यनिष्ठत्वं वेदान्तानामिति भावः । ननु प्रतिपत्तव्यस्य ब्रह्मणो न तावत्प्रत्यक्षादिना सिद्धिः । 'नेन्द्रियाणि नानुमानम्' इत्यादिश्रुतेः । नाप्यागमेन तस्य कार्यमात्रपरत्वादतो ब्रह्मणोऽसिद्धत्वात्तत्प्रतिपत्तिविधिरेवानुपपन्नार्थतया न संभवतीति न ब्रह्मज्ञानं धर्मस्वरूपमित्याशङ्कायां तन्निराकरणायेदमारभ्यत इति तत्राह **अभ्यधिकाशङ्केति** । अयमर्थः । यथा यूपं तक्षति यूपमष्टाश्रीकरोति खादिरो यूपो भवतीत्यादिवाक्यपर्यालोचनया तक्षणादिसंस्कारविशेषविशिष्टो दारुविशेषो यूपोऽलौकिकोऽप्याम्नायाद्विधिपरान्निश्चीयते । यथा वाऽलौकिकोऽप्याहवनीयोऽग्नीनादधीतेत्यादिवाक्यात्संस्कृताग्निरिति निश्चीयते तथा विधिपरादपि सत्यादिवाक्याद्ब्रह्मसिद्धिः । प्रत्यक्षादिविरोधादाम्नायतस्तदसिद्धौ वाचं धेनुमुपासीतेत्यादाविवारोपितब्रह्मोपास्तिसंभवान्न तद्विध्ययोग इति नोक्ताऽभ्यधिकाशङ्का युक्ता । अतो युक्तमुक्तं ब्रह्मज्ञानस्य धर्मस्वरूपत्वमिति न तदर्थकमिदं शास्त्रमारम्भणीयमिति ।





**वं०प०**— ननु ब्रह्मजिज्ञासायाः कथं धर्मत्वं येन पूर्वमीमांसयैव ब्रह्मज्ञानस्य सिद्धत्वादियं ब्रह्ममीमांसा व्यर्था स्यादित्यत आह **ब्रह्मज्ञानस्येति** । **चोदनालक्षणत्वेनेति** । 'तद्विजिज्ञासस्व' 'आत्मा वा अरे द्रष्टव्य' इत्यादिविधिवाक्यबोध्यत्वेनेत्यर्थः । **धर्मेति** । 'चोदनालक्षणोऽर्थो धर्म' इति धर्मलक्षणस्योक्तत्वादित्यर्थः ।

**आनन्दः**— स एव भर्गशब्दार्थ इत्यादेरर्थान्तरं वक्तुं तन्निवर्तनीयां शङ्कामुत्थापयति **अत्रैक इति** । **सिद्धैव ननु ब्रह्मजिज्ञासेति** । वेदान्तानामर्थनिर्णयापेक्षितन्यायकलापः अथातो धर्मजिज्ञासेत्यादिसूत्रैः सूत्रित इत्यर्थः । ननु विधिवाक्यार्थनिर्णयः न प्रवृत्त इत्याशङ्क्याह **सकलवेदार्थेति** । वेदस्य कार्यमात्रपरत्वादित्यर्थः । ननु वेद-तात्पर्याद्ब्रह्मावगम्यते न कार्यम्, अनवगम्यं च न वाक्यप्रमेयमिति तत्राह **ब्रह्मज्ञानस्येति** । ननु क्रियाविधि-कलापो निरूपितस्तत्र ज्ञानविधिनिरूपणायेदमारभ्यत इति नेत्याह **सिद्धैवेति** । उत्पत्तिविनियोगप्रयोगाधिकाराणां विध्यपेक्षितरूपाणां क्रियाप्रतिपत्त्योरविशेषेण निरूपितत्वादित्यर्थः । ननु यथा प्रथमेऽध्याये वेदस्य प्रामाण्यं निरूपितम् । द्वितीये कर्मोत्पत्तिविधिभेदः । तृतीये विहितानामङ्गाङ्गिभावो निरूपितः । चतुर्थे क्रतुपुरुषार्थ-प्रयुक्तानुष्ठेयपरिमाणम् । पञ्चमेऽनुष्ठानक्रमः । षष्ठे विध्यपेक्षिताधिकारनिर्णयः । इति पूर्वषट्केन प्रकृतिविध्यपेक्षितो विचारः कृतः । समग्राङ्गसंयुक्तो विधिः प्रकृतिः । विकलाङ्गसंयुक्तो विकृतिरित्युच्यते । तत्र सप्तमे प्रकृत्युप-दिष्टानामङ्गानां विकृतावतिदेशो निर्णीतः । अष्टमे त्वाग्नेयोऽष्टाकपाल इत्यादिप्रकृत्युपदिष्टानामङ्गानां सौर्यं चरुं निर्वपेदिति विकृतौ द्रव्यदेवतादिसामान्यद्वारेण विशेषातिदेशो निरूपितः । नवमे तु प्रकृत्युपदिष्टमन्त्रसामसंस्कार-कर्मणां विकृतावतिदिष्टानां प्रकृतिविकृत्योर्द्रव्यदेवताभेदे सति प्रकृतिगतद्रव्यादिशब्दान् विहाय विकृतिगतद्रव्यादि-शब्दाद्याहारलक्षण ऊहो दर्शितः । यथाऽग्नये जुष्टमिति मन्त्रस्य विकृतौ सूर्याय जुष्टमिति पदप्रक्षेपः । दशमे तु विकृतावतिदिष्टानामङ्गानां प्रकृतौ सावकाशानां विकृतिगतविशेषाङ्गोपदेशादिना बाधो दर्शितः । यथा प्रकृते-र्विकृतावतिदेशप्राप्तानां बर्हिषां शरमयं बर्हिरिति विकृतौ विशेषोपदेशेन बाधः । एकादशे त्वनेकशेषिविधिप्रयुक्तस्य सकृदनुष्ठानादेव सर्वशेषिणामुपकारसाम्यं तन्त्रं नामोक्तम् । यथाऽग्नेयोऽष्टाकपाल उपांशुयाजमन्तरा यजत्यग्नी-षोमीयमेकादशकपालमिति च पौर्णमासकर्मत्रयप्रयुक्तस्य प्रयाजादेः सकृदनुष्ठानादेव शेषिरूपोपकार इति । द्वादशे शेषिप्रयुक्तस्य शेषानुष्ठानस्य अप्रयोजकसामर्थ्ययुक्ते शेष्यन्तरेऽप्युपकारः प्रसङ्गो नाम दर्शितः । यथा पशुविधिप्रयुक्तानामङ्गानां पशुपुरोडाशेष्वप्युपकारः । तदेवं प्रत्यध्यायं शङ्कान्तरनिराकरणेन विध्यंशभेदो निरूपितः । तथा प्रतिपत्तव्यस्य ब्रह्मणः प्रत्यक्षादिभिः असिद्धत्वात्प्रतिपत्तिविध्ययोगाशङ्कायां तन्निराकरणायेदमारभ्यत इति तत्राह **अभ्यधिकाशङ्काभावादिति** । यूपाहवनीयादिवद्ब्रह्मणः सिद्धिरसिद्धौ चारोपितरूपेणैवोपासनासिद्धिरित्यर्थः ।

**कं०रा०**— नन्वथातो धर्मजिज्ञासेत्यादौ वेदार्थरूपधर्मस्य विचारितत्वेऽपि न ब्रह्मविचारस्तत्र वृत्तः । अतो न पूर्वतन्त्रेण तस्य शास्त्रस्य गतार्थत्वमित्यत आह **ब्रह्मेति** । चोदनालक्षणोऽर्थो धर्म इति सूत्रे चोदना लक्षणं प्रमाणं यस्येति चोदनाप्रमाणकस्य धर्मस्वरूपत्वोक्तेर्ब्रह्मज्ञानस्याप्यात्मन्येवात्मानं पश्येदित्यादिचोदनाप्रमाणकत्वेन धर्मस्वरूपत्वाद्ब्रह्मज्ञानरूपधर्मविचारस्य तत्र वृत्तस्यावश्यंभावेन तद्विशेषणब्रह्मविचारोऽपि तत्रैव वृत्त इति भावः ।





**श्रीनिधि०**— नन्वथातो धर्मजिज्ञासेत्यादौ धर्मप्रतिपादकवाक्यविचारः कृतः । न तु ब्रह्मप्रतिपादकवाक्यविचार इत्यत आह **ब्रह्मज्ञानस्येति** । **चोदनालक्षणत्वेनेति** । चोद्यते प्रेर्यते पुरुषोऽनेनेति चोदना विधिः तत्प्रमाणकत्वेनेत्यर्थः ।

**वा०चं०**— स एव भर्गशब्दार्थ इत्यादिकं प्रकारान्तरेण व्याख्यातुं स एव सर्ववेदार्थ इत्यनेनांशभेदव्यावर्त्यगतार्थताशङ्कातत्समाधानं पञ्चपादिकोदाहृतमनुवदति **सिद्धैव नन्विति** । ब्रह्मप्रतिपादकवाक्यान्युदाहृत्य अविचारेऽपि वेदान्तानामर्थनिर्णयापेक्षितन्यायसन्दर्भस्य अथातो धर्मजिज्ञासेत्यादिसूत्रैः सूचितत्वात्पूर्वतन्त्रेण अस्य गतार्थतेत्याशयः। (अथातो धर्मजिज्ञासेत्युक्तौ किं तद्धर्मस्वरूपमित्याकाङ्क्षायां चोदनालक्षणोऽर्थो धर्म इति द्वितीयसूत्रे धर्मस्वरूपमुक्तम् । तस्यायमर्थः । चोदनेति विधिवाक्यमिति प्राभाकरमतं मन्त्रार्थवादनामधेयसहितं तदिति भाट्टमतम् । लक्षणशब्दः प्रमाणशब्दः । यश्चोदनाप्रमाणकोऽर्थरूपः स धर्म इति । श्येनयागादौ प्राप्तिनिरासायार्थ इति । तस्यानर्थसाधनत्वादिति । तथा च तद्वदात्मन्येवात्मानं पश्येदिति चोदनाप्रमाणकत्वेन ज्ञानस्य धर्मस्वरूपत्वादित्यर्थः) । ननु विधिवाक्यनिर्णयार्थं प्रवृत्तपूर्वतन्त्रेण सिद्धपरवाक्यार्थनिर्णयार्थप्रवृत्तैतत्तन्त्रस्य विषयभेदान्न गतार्थता युक्तेत्यतः सकलपदानां कार्य एव गृहीतसङ्गतित्वेन कार्यस्यैव पदार्थतया वेदस्य कार्यमात्रपरत्वात्तस्य च तत्रैव निरूपितत्वेन निरूपणेऽनवशेषात् पुनरारम्भो न युक्त इत्याशयेनाह **सकलेति** । ननु येन यत्प्रमीयते तस्य तत्परत्वाद्वेदान्तेभ्यश्चोपक्रमादितात्पर्यलिङ्गैर्ब्रह्मण एव प्रमीयमाणत्वेन तेषां तत्परत्वेन पूर्वोत्तरतन्त्रयोर्विषयभेदः स्यादेवेत्यतो वेदान्तेष्वपि 'आत्मा वा अरे द्रष्टव्य' इत्यादिज्ञानविध्युपलम्भादितरेषां च तदपेक्षितार्थप्रतिपादकत्वेन वेदान्तानामकार्यनिष्ठत्वानुपपत्तेः विधिभेदेऽपि विध्यपेक्षितरूपाणामुत्पत्तिविनियोगप्रयोगाधिकाराणां क्रियाप्रतिपत्त्योरविशेषेण निरूपितत्वेन न्यायसाम्यान्नास्य पुनरारम्भो युक्त इत्याशयेनाह **ब्रह्मज्ञानस्येति** । ननु प्रथमेऽध्याये वेदप्रामाण्यस्य द्वितीये कर्मोत्पत्तिविधिभेदस्य तृतीये विहितानामङ्गाङ्गिभावस्य चतुर्थे क्रतुपुरुषार्थप्रयुक्तानुष्ठेयपरिमाणस्य पञ्चमेऽनुष्ठानक्रमस्य षष्ठे विध्यपेक्षिताधिकारस्य सप्तमे प्रकृत्युपदिष्टानामङ्गानां विकृतावतिदेशस्याष्टमे त्वाग्नेयोऽष्टाकपाल इत्यादिप्रकृत्युपदिष्टानामङ्गानां सौर्यं चरुमित्यादिविकृतौ द्रव्यदेवतादिद्वारेण विशेषातिदेशस्य नवमे प्रकृत्युपदिष्टमन्त्रसामसंस्काराणां विकृतावतिदिष्टानां प्रकृतिविकृत्योर्द्रव्यदेवताभेदे सति प्रकृतिगतद्रव्यादिशब्दं विहाय विकृतिगतद्रव्यादिशब्दाध्याहारलक्षणोहस्य दशमे तु विकृतावतिदिष्टाङ्गानां प्रकृतौ सावकाशानां. विकृतिगतविशेषाङ्गोपदेशादिना बाधस्यैकादशे त्वनेकशेषिविधिप्रयुक्तस्य सकृदनुष्ठानादेव सर्वशेष्युपकारकत्वसाम्यलक्षणतन्त्रस्य द्वादशे त्वेकशेषिप्रयुक्तशेषानुष्ठानस्याप्रयोजकशेष्यन्तरोपकारलक्षणप्रसङ्गस्य निरूपणमिति पूर्वतन्त्रे तत्तदाशङ्कापरिहाराय विध्यंशभेदानां निरूपणार्थं तत्तदध्यायारम्भवद्वेदान्तानां विधिपरत्वेन तत्रैव प्रामाण्ये सिद्धेऽपि प्रतिपत्तव्यस्य ब्रह्मणः प्रत्यक्षानुमानागम्यत्वादाम्नायस्य क्रियार्थत्वात्प्रमाणाभावेन प्रतिपत्तव्यस्यैवाभावात्प्रतिपत्तव्याभावे च प्रतिपत्तिविध्ययोगान्न तेषां प्रामाण्यमिति विशेषशङ्कापरिहाराय ब्रह्मनिरूपणार्थमेतदारम्भः किं न स्यादित्यतस्तक्षणादिसंस्कारविशिष्टदारुविशेषरूपालौकिकयूपस्य यूपं तक्षतीत्यादिविधिपरादपि वाक्यात् सिद्धिवदलौकिकाहवनीयस्याग्नीनादधीतेत्यादिविधिवाक्यादेव सिद्धिवत्स्वर्गकामपदसमभिव्याहारादपूर्वसिद्धिवच्च विधिपरादपि





ब्रह्मसिद्ध्युपपत्तेर्द्वैतग्राहिप्रत्यक्षादिविरोधादसिद्धौ वाऽऽरोपित(वाचं धेनुमुपासीत इत्यादिवत्)रूपेणोपासनोपपत्तेर्नेयं पूर्वतन्त्रतोऽभ्यधिकाशङ्केत्याशयेनाह **अभ्यधिकाशङ्काऽभावादिति**।

**वा०र०— प्रकारान्तरेणेति**। ओङ्कारार्थो ब्रह्म भवतीति ओङ्कारव्याख्यानरूपव्यावृत्त्यर्थकथनरूपगायत्री-व्याख्यानभूतपुरुषसूक्तद्वारा सर्ववेदार्थतया प्राप्तमित्येवंप्रकारेण वेदानां ब्रह्मसूत्रविषयस्य च संबन्धप्रतिपादकत्वेन पूर्वव्याख्यातत्वात् तदतिरिक्तप्रकारेणेत्यर्थः। **अंशभेदेति**। सर्ववेदार्थ इत्येकोंऽशः। तत्रापि सर्वेत्यपरोंऽशः। स एवेत्यन्योंऽश इत्यंशभेदेनेत्युत्तरमूले स्पष्टम्। व्यावर्त्यत्वं च निरस्यत्वम्। तथा च केनचिदंशेन व्यावर्त्या या गतार्थताशङ्का केनचिदंशेन व्यावर्त्यं यत्तत्समाधानं तदुभयं पञ्चपादिकोदाहृतमिति योज्यम्। अनेनैके पञ्चपादिका-काराः चोदयन्ति गतार्थतां शङ्कते इति मूलं व्याख्यातं भवति। अत एव शङ्कातत्समाधानमिति द्वन्द्वैकवद्भावः। तथाच पञ्चपादिकाकारीयगतार्थताशङ्का तत्समाधाननिरासपरतयाऽपि स एव भर्गेत्यादि व्याख्यातुं तदीयशङ्कादिक-मनुवदति **अत्रैक इत्यादिना**। **सिद्धैव नन्विति**। ब्रह्मप्रतिपादकेत्यादीति फलितमिति ज्ञेयम्। धर्मजिज्ञासेत्यत्र ब्रह्मजिज्ञासायाः सिद्धिः कथम्। धर्मप्रतिपादकवाक्यान्युदाहृत्य तद्विचारेऽपि ब्रह्मप्रतिपादकवाक्यान्युदाहृत्य तद्विचाराभावेन व्यधिकरणत्वादित्यत आह **ब्रह्मप्रतिपादकेति**। वेदान्तानामर्थनिर्णयेत्यादिविवरणतत्तत्त्व-दीपनानुसारेणेदम्। एवमुत्तरत्रापि तत्तदनुसारेण व्याख्यानादिकम्। न्याय उपक्रमादिः श्रुत्यादिश्च सूत्रितत्वाद्ब्रह्म-जिज्ञासाया कृत्यान्तराभावादिति योज्यम्। **विषयभेदादिति**। पूर्वोत्तरमीमांसयोर्भिन्नप्रमेयत्वेन निर्णायकन्यायोऽपि भिन्न एवेति भावः। सकलेत्यतः प्राक् लोक इति पूरणीयम्। **वेदस्य**। वेदस्यापि। तस्य चेत्यनेन बुद्ध्या विवेकेन कार्यं परामृश्यते। **ब्रह्मण एवेति**। न तु कार्यस्य प्रमीयमाणत्वं ततो न वेदान्तानां कार्यपरत्वमिति भावः। **पूर्वोत्तरतन्त्रयोरिति**। उक्तरीत्या धर्मब्रह्मपरयोरिति योज्यम्। **वेदान्तेष्वपीति**। कर्मकाण्डे ज्योतिष्टोमेनेत्यादि क्रियाविध्युपलम्भवदिति योज्यम्। **इतरेषां चेति**। विधिप्रत्ययरहितानां सत्यं ज्ञानमित्यादीनां ज्ञानविध्युप-युक्तात्मस्वरूपादिप्रतिपादकत्वेनेत्यर्थः। कर्मकाण्डे विधिरहितार्थवादादिवाक्यवदिति योज्यम्। ननु पूर्वतन्त्रे क्रियाविध्यपेक्षितरूपाणां प्रतिपादनात्कथं ज्ञानविनिर्णयोऽपि तत्र सिद्ध इत्याह **विधिभेदेपीति**। तत्र निरूपितो विधिः क्रियाविधिः ज्ञानविधिस्त्वात्मेत्यादिरिति क्रियाज्ञानविषयत्वाभ्यां विध्योः स्वरूपभेदेऽपीत्यर्थः। **विध्य-पेक्षितेति**। विधिर्नियोगः साधारण्येन विधिमात्रे अपेक्षितानां रूपाणामित्यर्थः। **उत्पत्तीत्यादि**। कर्मस्वरूपमात्रे बोधको विधिरुत्पत्तिविधिः। यथाऽग्निहोत्रं जुहोतीत्यादिः। अङ्गाङ्गिभावबोधको विधिर्विनियोगविधिः। यथा दध्ना जुहोतीत्यादिः। साङ्गे प्रधाने कर्मण्यनुष्ठानबोधको विधिः प्रयोगविधिः प्रयाजादिभिरुपकृत्य दर्शपूर्णमासाभ्यां यजेतेत्यादिः। कामनाजीवनादिनिमित्तवतः कर्मण्यैश्वर्यबोधको विधिः अधिकारविधिः। स्वर्गकामो यजेतेत्यादिः। त एते विधयः क्रियायां निरूपिताः ज्ञानेऽपि यथायोगमुत्प्रेक्षितुं शक्या एव। अन्यथा क्रियामेकामुदाहृत्य निरूपितास्ते क्रियान्तरेऽपि पुनः प्रतिपादनीयाः स्युरिति भावः। न्यायसाम्यात्। क्रियाया विध्यपेक्षितन्यायानां ज्ञानविधावपि साम्यात्। **चोदनालक्षणत्वेनेति** मूलम्। चोदना लक्षणं प्रमाणं यस्येति तथोक्तम्। चोदनालक्षणोऽर्थो धर्म इति द्वितीयसूत्रे चोदनाप्रमाणकश्चोदनाविहित एव धर्म इति तल्लक्षणकथनादात्मेत्यादिविधिविहितत्वेन धर्मस्वरूपत्वा-





दित्यर्थः। अत एव वेदार्थचन्द्रे यो धर्मः स चोदनालक्षण इति वचनव्यक्तौ चोदनाप्रमाणकत्वप्रतिज्ञायां धर्मत्वादिति हेतुः प्रतीयते । शूद्रकृतस्य धर्मत्वाभावाच्चोदनाप्रमाणकत्वाभावात् । तथा यश्चोदनालक्षणः स धर्म इति । वचनव्यक्तौ धर्मस्वरूपप्रतिज्ञायां चोदनाप्रमाणकत्वादिति हेतुः प्रतीयते । ततश्चैत्यवन्दनादेश्चोदनाप्रमाणकत्वाभाव इत्युभयसूत्रार्थात् इत्युक्तम् । वक्ष्यते चायं विभागोऽनुपदमेवास्माभिः । वेदान्तानां विधिपरत्वेऽप्यभ्यधिकाशङ्का- निराकरणायाध्यायान्तरवच्छास्त्रान्तरस्याप्यारम्भसंभव इति प्रत्यवतिष्ठते **ननु प्रथम इत्यादिना** । **वेदेति** । लोके वाक्यस्य प्रमाणान्तरदृष्टार्थबोधकत्वनियमादविशिष्टस्तु वाक्यार्थ इति न्यायाद्वेदस्यापि तथात्वे वाच्ये वेदविषय- धर्मादिश्च मानान्तरागोचरत्वेन वेदस्य तथात्वाभाव इत्यादिन्यायमालम्ब्य अप्रामाण्यपूर्वपक्षे पूर्ववाक्यस्यायं स्वभावो यन्मानान्तरसिद्धबोधित्वम् । त्रय्याश्च पुंबुद्धिरचितत्वसाधकमानानिरूपणादनपेक्षता । तदर्थे बाधानुपलब्धेरवि- संवादित्वं संवादकाभावादनुवादकतेत्यादि न्यायमाश्रित्यैव वेदस्य प्रामाण्यं युक्तमिति वेदाप्रामाण्यं स्यात् तथा धर्माबोधकार्थवादादीनां विध्यपेक्षितप्राशस्त्यादिसमर्पकत्वेन प्रामाण्यस्य च निरूपणमित्युत्तरेणान्वयः । **कर्मो- त्पत्तीति** । कर्मविषयोत्पत्तिविधीनां भेदः कर्मोत्पत्तिभेद इति विग्रहः । वेदादेव श्रेयःसाधनताद्यवच्छिन्नभावनादि- बोधात्प्रवृत्त्यादिसिद्धेः । किमपरमवशिष्टमिति शङ्कानिरासाय तत्र तत्रोपलभ्यमानकर्मणामेकत्वमुत नानात्वमिति जिज्ञासायां यत्र कर्मभेदकं शब्दान्तराभ्याससंख्यागुणप्रक्रियानामधेयाद्यन्यतमत्प्रमाणमुपलभ्यते तत्र भेदो नेतरत्रेति कर्मविषयोत्पत्तिविधिव्यापारनिरूपणेनानुष्ठानविशेषसिद्ध्यर्थं कर्मभेदो निरूपितः । तत्र यजति जुहोतीत्यादौ शब्दान्तरात् समिधो यजतीत्यादावभ्यासात्सप्तदशप्राजापत्यानित्यादौ संख्यया वाजिभ्यो वाजिनमित्यादौ गुणात् मासमग्निहोत्रं जुहोतीत्यादौ प्रकरणान्तरात् अथैष ज्योतिरित्यादौ नामधेयादित्येवं शब्दान्तराद्युदाहरणं द्रष्टव्यम् । भेदस्येत्यादि षष्ठ्यन्तानां निरूपणमित्युत्तरेण संबन्धः । **विहितानामिति** । विहितानां कर्मणां केषाञ्चिदङ्गत्वं केषाञ्चिदङ्गित्वमित्यस्येत्यर्थः । तदध्याये विनियोगविधेरङ्गाङ्गिभावलक्षणसंबन्धबोधनरूपव्यापारनिरूपणेन श्रुति- लिङ्गवाक्यप्रकरणस्थानसमाख्याभिः शेषशेषिभावो निरूपितः। तत्रैन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र श्रुत्या बर्हिर्देवसदनं दामीत्यादौ लिङ्गात् यस्य पर्णमयी जुहूरित्यादौ वाक्यात् प्रयाजादेः प्रकरणात् काम्येष्टियाज्यानुवाक्या युगलादीनां स्थानात् । आध्वर्यवसंज्ञकानां मन्त्राणामाध्वर्यवसंज्ञके कर्मणि समाख्यया विनियोग इति विवेकः । अङ्गाङ्गि- भावस्येत्युपलक्षणम् । श्रुतिलिङ्गादीनां परस्परविरोधे पूर्वपूर्वेणोत्तरोत्तरबाधस्येत्यपि ज्ञेयम् । यथा गार्हपत्योपस्थाने विनियोजिकाया ऐन्द्र्येति श्रुतेः कदाचन स्तरीरसीति मन्त्रलिङ्गस्येन्द्रोपस्थाने विनियोजकस्य च विरोधे श्रुत्या लिङ्गबाध इति ज्ञेयम् । अत्रोत्तरत्र चाधिका शङ्का आकरोक्तरीत्या ज्ञेया । **चतुर्थे क्रत्विति** । क्रतुप्रयुक्तमनुष्ठेयं प्रयाजादि । पुरुषप्रयुक्तानुष्ठेयं गोदोहनादि । उभयप्रयुक्तानुष्ठेयं यूपाद्याश्रितखादिरत्वादीत्येवं तत्तत्प्रयुक्तानुष्ठेयस्येदमेतावदिति यत्परिमाणं तस्येत्यर्थः । **पञ्चमेऽनुष्ठानेति** । दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति श्रौतः क्रमः । एवमर्थपाठ- स्थानमुख्यप्रवृत्तिलक्षणप्रमाणैः क्रमो ज्ञेयः । तदेवं चतुर्थपञ्चमयोः प्रयोगविधिव्यापारनिरूपणेन क्रत्वर्थपुरुषार्थयोः क्रमस्य च निरूपणमिति ज्ञेयम् । **षष्ठे विधीति** । अधिकारविधिव्यापारनिरूपणेन कामनाजीवनादिनिमित्तवतो- ऽधिकारस्येत्यर्थः । एवं पूर्वषट्कस्य प्रकृतिविध्यपेक्षितविचारपरत्वाद्विकृतिविध्यपेक्षितविचारपरोत्तरषट्केन हेतुहेतुमद्भावसङ्गतेस्तत्सङ्गत्योत्तरषट्कारम्भः । उपदिष्टसर्वाङ्गोपेतो विधिः प्रकृतिविधिः । यथा दर्शपूर्णमासाभ्यां





स्वर्गकामो यजेतेत्यादिः । इदमित्थं कुर्यादित्युपदेशः । अतिदिष्टाङ्गयुक्तो विधिर्विकृतिविधिः । यथा सौर्यं चरुं निर्वपेदित्यादिः । तद्वत्कुर्यादित्यतिदेश इति सिद्धं कृत्वा सप्तमप्रतिपाद्यं तावदाह **सप्तमे प्रकृतीति** । सेतिकर्तव्यताकानामेव करणानामुपकारकत्वदृष्टेरनुपदिष्टेतिकर्तव्यताकसौर्यादियागानामितिकर्तव्यताकाङ्क्षितया वैदिकाग्नेयादीनामुपकारकत्वेन वैदिकप्रयाजादीनां क्लृप्तत्वादिति न्यायेन विधिभेदोपपादनेच्छया वैदिकानामेवाङ्गानामतिदेश इत्येवं सामान्यातिदेशस्येत्यर्थः । **अष्टमे त्विति** । दर्शपूर्णमासाख्येष्टिलक्षणप्रकृतावाग्नेयोऽष्टाकपाल इत्युक्तायाः पुरोडाशप्रकृतिद्रव्यभूतव्रीहीणां ये निर्वापावघातप्रोक्षणादयो धर्मा उपदिष्टास्ते विकृतिभूतसौर्यचरौ व्रीहिद्रव्यसारूप्यद्वारेण चरुप्रकृतिभूतव्रीहिष्वप्यतिदिश्यन्त इत्येवं विशेषातिदेशस्येत्यर्थः । अक्षरार्थस्तु । आग्नेयोऽष्टाकपाल इत्यादिनोक्तषड्यागात्मकप्रकृतौ तत्संबन्धिपुरोडाशप्रकृतिभूतव्रीहिरूपद्रव्यसंबन्धितयोपदिष्टानामवघाताद्यङ्गानां सौर्यं चरुमित्यादिनोक्तविकृतौ चरुप्रकृतिभूतव्रीहिरूपद्रव्यद्वारेण विशेषातिदेशस्येति । एवं देवताद्वारेणातिदेशोऽपि ज्ञेयः । तदुक्तम् । सप्तमेनातिदेशेन धर्माः सन्तीति साधितम् । ततोऽष्टमेन यो यस्य यतश्चेति निरूपितमिति । **नवमे प्रकृतीति** । विधिव्यापारभेदनिरूपणार्थं प्रवृत्ते नवम इति योज्यम् । उपदिष्टा ये मन्त्राः सामानि संस्काराश्च तेषामित्यर्थः । अतिदिष्टानामतिदेशतः प्राप्तानाम् । तत्राग्नये त्वा जुष्टमिति मन्त्रस्य विकृतावतिदेशप्राप्तस्यापि असमवेतार्थतया प्रसरानुपपत्तौ प्रकृतिगताग्निपदपरित्यागेन विकृतिगतसूर्यपदप्रक्षेपो मन्त्रोहः गिरा गिरा च दक्षस इत्यत्र न गिरा गिरेति ब्रूयात् ऐरं कृत्वोद्गेयमिति गकारपरित्यागेनैराषदगानं कर्तव्यमिति विधिना गकारत्यागे उर्वरितस्येकारमात्रस्य स्थाने अधिभावे सति आयीरीति सामोहः यथा कयानश्चित्र इत्यत्रत्यस्येकारस्य स्थाने आयीभावेश्चायीति । व्रीह्यादिसंबन्ध्यवघातादेर्नीवारादावूहः संस्कारोह इति विवेकः । अध्याहारलक्षण इत्यनेन अध्याहारस्तर्क ऊह इति प्रसिद्ध्यनुसारादध्याहार एव मुख्य ऊहस्तद्विषयत्वान्मन्त्रादेरन्यथात्वमप्यूह इत्यादि चन्द्रिकोदाहृतग्रन्थसंमतिसिद्धोऽर्थो दर्शितः । **दशमे त्विति** । प्रयोगविधिव्यापारनिरूपणार्थमेव प्रवृत्ते दशमे प्रकृतितो विकृतावतिदिष्टानामतिदेशतः प्राप्तानामङ्गानाम् । विकृतावेव विशेषाङ्गोपदेशादिना बाधस्येत्यर्थः । तेषामात्यन्तिकबाधे शास्त्राप्रामाण्यप्राप्तावपीह तदनभ्युपगमान्नातिदिष्टाङ्गोपदेशकशास्त्राप्रामाण्यमित्याशयेन प्रकृतौ सावकाशानामित्युक्तम् । तद्यथा प्रकृतितो विकृतावतिदेशतः प्राप्तानां वेद्यास्तरणादिसिद्ध्यर्थं कुशमयबर्हिषाम् । विकृतावेव शरमयं बर्हिरिति विशेषोपदेशेनाननुष्ठानरूपबाधस्येति ज्ञेयम् । वेद्यास्तरणादिरूपोपकारस्य शरमयबर्हिभिरिव सिद्ध्या द्वारलोपात् । तथा कृष्णलांच्छ्रपयेदिति विहिते विकृतिभूतकृष्णलपाके प्राकृतव्रीह्यादिसंबन्ध्यवघातादीनां सुवर्णशकलरूपकृष्णलेषु अतिदेशतः प्राप्तानां तुषविमोक्षादिरूपोपकारलक्षणद्वारबाधेनानुष्ठानरूपबाधस्येत्यादि ज्ञेयम् । उपदेशादिनेत्यादिपदेन निषेधपरिग्रहः । तेन न तौ पशौ करोतीति निषेधात्पशावतिदेशप्राप्त्याज्यभागयोर्बाधस्येति प्राप्तमिति ज्ञातव्यम् । **एकादशे त्विति** । प्रयोगविधिभेदप्रदर्शनार्थमारब्धे एकादशे अनेकानि यानि शेषिभूतानि प्रधानभूतानि तद्विधिप्रयुक्तस्य तत्प्रधानोपकारकतया विधिप्राप्तस्याङ्गजातस्य सकृदनुष्ठानादेव सर्वतच्छेष्युपकारकत्वरूपस्य तन्त्रस्येत्यर्थः । अनेकप्रधानानामेकफलसाधनतया वैकप्रयोगतया वा युगपदनुष्ठानोपपत्तिः । यथा दर्शपूर्णमासपदोक्तषड्यागानां मध्ये पूर्णमासपदोक्ताग्नेयाष्टाकपालोपांशुयाजाग्नीषोमीयप्रधानत्रिकोपकारकतयाऽनुष्ठेयप्रयाजादेः सकृदनुष्ठानादेव त्रितयोपकारकत्वम् । एवं

दर्शपदोक्ताग्नेयाष्टाकपालैन्द्रदध्यैन्द्रपयोलक्षणप्रधानत्रिकेऽपि ज्ञेयम् । **द्वादशे त्विति** । विधिव्यापारभेदनिरूपणार्थं प्रवृत्ते द्वादशेऽध्याये एकप्रधानप्रयुक्ताङ्गानुष्ठानस्य अप्रयोजकं यच्छेष्यन्तरं प्रधानान्तरं तदुपकारकत्वरूपप्रसङ्गस्येत्यर्थः । अप्रयोजकेत्यनेन यत्प्रयुक्तं प्रयाजादि तत्प्रयोजकमित्युच्यते तत्सामर्थ्ययुक्तमप्रयोजकं प्रयाजादिप्रयोजकं न भवतीति यावत् । तादृशं प्रधानान्तरमिति प्रतिपादितम् । अत एव विवरणेऽप्रयोजकसामर्थ्ययुक्तशेष्यन्तरेत्युक्तम् । जामात्रर्थस्थापितस्य प्रदीपस्यान्योपकारकत्ववत् । तद्यथाऽग्नीषोमीयं पशुमालभेतेत्येष पशुविधिः । तत्प्रयुक्तानि यानि प्रयाजादीन्यङ्गानि तेषां पशुपुरोडाशाख्येऽपि कर्मण्युपकारकत्वमिति । **तत्तदाशङ्केति** । वेदादेव श्रेयःसाधनताद्यवच्छिन्नभावनादिबोधात्प्रवृत्त्यादिसिद्धेः किमपरमवशिष्टमित्यादिप्रागुक्तद्वितीयादिव्यावर्त्यतत्तच्छङ्केत्यर्थः । **विध्यंशभेदानाम्** । द्वितीये कर्मोत्पत्तिविधिभेदस्य तृतीयादिषूक्तरीत्या विनियोगप्रयोगाधिकारविधीनां व्यापारनिरूपणार्थमित्यर्थः । आरम्भवदित्यस्यैतदारम्भ इत्युत्तरेण संबन्धः । आरम्भोपपादकविशेषशङ्काप्रदर्शनं वेदान्तानामित्यादि । विधिपरत्वं चात्मा वा अरे द्रष्टव्य इति ज्ञानविध्युपलम्भादितरेषां च तदपेक्षितार्थप्रतिपादकत्वादिति पूर्वटीकायां व्यक्तम् । **तत्रैव** । कार्य एव । प्रामाण्ये सिद्धेऽपीत्यादिना नायं सर्वथा प्रामाण्याक्षेपः । अपि तु ज्ञानविधित्वेन प्रामाण्यमुक्तमपि न ब्रह्मविषये तत्संभवतीति विशेषशङ्काविषयो दर्शितो भवति । प्रतिपत्तव्यस्याभावे निष्प्रमाणकत्वं हेतुमभिप्रेत्य प्रत्यक्षादिप्रमाणानां ब्रह्मण्यप्रवृत्तिवर्णनं प्रत्यक्षेत्यादिना कृतम् । आम्नायस्येत्यत्रात्मा वा अर इत्याद्यतिरिक्तस्येति पूरणीयम् । आत्मा वेत्याद्यागमस्येवकारपरस्यापि ब्रह्मणि प्रामाण्यं संभवति । न चान्यपरत्वविरोधः । अन्यपरत्वेऽपि तद्वाक्येन ब्रह्मसिद्ध्युपपत्तेरिति सदृष्टान्तमाह **तक्षणादीति** । आदिपदेनाष्टास्रीकरणाञ्जनादिग्रहः । अलौकिकेत्यनेन यूपस्य प्रत्यक्षाद्यसिद्धत्वेऽपीत्युक्तं भवति । यूपस्येत्यनन्तरं यूपे पशुं बध्नातीति वाक्ये पशुबन्धनाय नियुक्तस्येति पूरणीयम् । तक्षतीत्यादीत्यादिपदेन यूपमष्टास्रीकरोति यूपमनक्ति खादिरो यूपो भवतीति वाक्यानां ग्रहणम् । **विधिपरात्** । विनियोगपरात् । **आहवनीयस्यापीति** । आहवनीये जुहोतीत्यत्र होमाधारतया नियुक्तस्येति पूरणीयम् । आदिपदेनार्धोदिते सूर्ये आहवनीयमादधातीति वाक्यपरिग्रहः । कार्यतावादनयनप्रसादिन्यां तदुदाहरणात् । **स्वर्गेति** । एतच्च स्वर्गापूर्वदेवतादीति पूर्वमूलटीकायां स्पष्टम् । **विधिपरादपीति** । आत्मा वाऽरे द्रष्टव्यः सत्यं ज्ञानमित्यादि वाक्यादित्यर्थः । ननु द्वैतग्राहिप्रत्यक्षादिविरोधादाम्नायोऽन्यपरस्तत्कथं ब्रह्म साधयितुं क्षमः स्यादित्यत आह **द्वैतग्राहीति** । उपलक्षणं चैतत् । यूपं तक्षतीत्यादौ न यूपमुद्दिश्य तक्षणादि विधीयते येन यूपाकारस्य लोकप्रसिद्धिरपेक्ष्येत । किं तर्हि खादिरो यूपो भवतीत्यादिनाऽवगतम् । खादिरादिप्रकृतिद्रव्यं तक्षति यूपं कर्तुमित्यलौकिकयूपाकारस्य साध्यत्वं प्रतीयते । स चाकारो यूपे पशुं बध्नातीति विनियोगदर्शनाद्विशेषतोऽवगम्यते । तक्षणादिपरिनिष्पन्नः पशुबन्धाधारः काष्ठविशेषो यूप इति । एवमाहवनीयादयोऽपि । न च तथा ब्रह्मणः किञ्चिन्निश्चायकमस्ति । इत्येवं निश्चायकाभावादसिद्धौ वेत्यपि ग्राह्यम् । ब्रह्मणोऽसिद्धौ च तत्सिद्ध्यर्थमुत्तरमीमांसारम्भः संभवतीति भावः । **आरोपितेति** । ब्रह्मसिद्धिमन्तरेणैव वाचं धेनुमुपासीत योषा वाव गौतमाग्निरित्यादाविव आरोपितरूपेण ब्रह्मोपासनोपपत्त्या प्रतिपत्तिविध्युपपत्तेरित्यर्थः ।





**स०व्र०— ननु सिद्धैवेति** । वेदार्थनिर्णायकन्यायग्रथनात्मकमिदं शास्त्रं नारम्भणीयम् । अथातो धर्मजिज्ञासेति मीमांसायामेव वेदान्तानामर्थनिर्णयापेक्षितन्यायकलापस्योक्तत्वेन वेदार्थनिर्णायकन्यायानुसन्धानरूप-जिज्ञासाया एव अकर्तव्यत्वादित्यर्थः । ननु कार्यपरवेदभागस्यैव तत्र विचारितत्वेन तदतिरिक्तसिद्धपरवेदनिर्ण-यार्थम् उक्तविचारस्य कर्तव्यत्वादित्यत्राह **सकलेति** । वृद्धव्यवहाराद्यनुरोधेन सर्वस्यापि वेदस्य कार्यपरत्वा-दिति भावः । उपक्रमादिलिङ्गैनार्थनिर्णये क्रियमाणे कार्यस्याप्रतीयमानत्वेन ब्रह्मस्वरूपस्यैव च प्रतीयमानत्वेन तत्स्वरूपनिरूपणार्थं तद्विचारोऽप्यावश्यक इत्यत आह **ब्रह्मज्ञानस्येति** । 'आत्मा वा अरे द्रष्टव्य' इत्यादिवाक्ये ब्रह्मस्वरूपस्य बोध्यत्वेन धर्मस्वरूपत्वात् तस्य च पूर्वमेव विचारितत्वादस्य वैफल्यमिति भावः । प्रवृत्तिर्येन शब्देन जन्यते स चोदनाशब्दार्थः ।

**वि०ठ०— स एव भर्गशब्दार्थ इत्यादिकं प्रकारान्तरेण व्याख्यातुं शङ्कामुत्थापयति **अत्रैके इति** । ननु कार्यपरवाक्यार्थनिर्णय एव तत्र कृतः अत्र तु सिद्धपरवेदभागविचार इति न गतार्थता इत्यत उक्तम् **सकलवेदार्थेति** । सकलशब्दानामपि कार्य एव गृहीतसङ्गतिकत्वेन सर्वोऽपि वेदः कार्यपर एवेति सर्ववेदविचारस्तत्रैव लब्ध इति भावः । धर्मशास्त्रे धर्मपरवेदविचार एव कृतः उत्तरमीमांसायां तु वेदान्तादिभागविचारः क्रियते अतो न गतार्थता इत्यत आह **ब्रह्मज्ञानस्येति** । चोदनालक्षणत्वेन आत्मा वाऽरे द्रष्टव्य इत्यादितव्यप्रत्ययादिबोध्यतया विधिरूपत्वेन धर्मस्वरूपत्वात् ब्रह्मज्ञानस्यापि धर्मान्तर्भाव एवेति भावः ।

**चषकः**— पञ्चपादिकोक्तां गतार्थताशङ्कां तत्समाहितिं च प्रतिविधित्समानो अनुवदति **सिद्धैव नन्विति** । तथा च अनुवादकत्वं न क्षतिमावहतीति भावः । ननु धर्मोद्देशेन निखिलवेदविचारकर्तव्यतायाः पूर्वतन्त्रभाष्यभाषिततया ब्रह्मज्ञानस्य चातदात्मकतया तदुद्देशेन वेदविचारकर्तव्यतारूपैतत्तन्त्रार्थस्य तदलब्ध-तयोदितत्वादित्यन्तोक्तिः न साधीयसीत्यत आह **ब्रह्मज्ञानस्येति** । 'आत्मा द्रष्टव्य' 'आत्मन्येवात्मानं पश्येत्' 'विज्ञाय प्रज्ञां कुर्वीते'त्यादिज्ञानविधीनां वेदान्तवाक्येषूपलम्भेन लिङ्लोट्तव्यप्रत्ययपञ्चमलकाररूपविधिप्रत्यय-विनिर्मुक्तानामपि तादृग्वाक्यानां विधेयार्थप्रतिपत्त्यनुकूलकर्मकारकादिस्वरूपप्रतिपत्तिजनकतया कार्यतात्पर्यकता सेधिष्यतीति भावः । अथ पूर्वतन्त्रे तत्तदाशङ्कापरिहाराय विध्यंशभेदानां निरूपणार्थं तत्तदध्यायारम्भवत् वेदान्तानां विधिपरत्वेन तत्रैव प्रामाण्ये सिद्धेऽपि प्रतिपत्तव्यस्य ब्रह्मणः प्रत्यक्षानुमानागम्यत्वादाम्नायस्य क्रियार्थत्वा-त्प्रामाण्याभावेन प्रतिपत्तव्यस्यैव अभावात्प्रतिपत्तिविध्ययोगान्न तेषां प्रामाण्यमिति विशेषशङ्कापरिहाराय ब्रह्मनिरूपणार्थमेतदारम्भः किं न स्यादित्यतस्तक्षणादिसंस्कारविशिष्टदारुविशेषरूपालौकिकयूपस्य यूपं तक्षती-त्यादिविधिपरादपि वाक्यात् सिद्धिवदलौकिकाहवनीयस्याप्यग्नीनादधीतेत्यादिविधिवाक्यादेव सिद्धिवत्स्वर्गकाम-पदसमभिव्याहारादपूर्वसिद्धिवद्विधिपरादपि ब्रह्मसिद्ध्युपपत्तेरसिद्धौ वाऽऽरोपितरूपेणोपासनोपपत्तेः न पूर्वतन्त्रतो-ऽधिकाशङ्केत्याशयेनाह **अभ्यधिकाशङ्काऽभावादिति** ।

**गूढ०**— स एव भर्गशब्दार्थ इत्यादेरर्थान्तरं वक्तुं तन्निवर्तनीयां शङ्कामुत्थापयति **अत्रैक इति** । **सिद्धैव ननु ब्रह्मजिज्ञासेति** । वेदान्तानामर्थनिर्णयापेक्षितो न्यायकलापः अथातो धर्मजिज्ञासेत्यादिसूत्रैः सूत्रित इत्यर्थः ।





ननु विधिवाक्यार्थनिर्णयस्तु न प्रवृत्त इत्याशङ्क्याह **सकलवेदार्थेति** । वेदस्य कार्यमात्रपरत्वादित्यर्थः । ननु वेदतात्पर्यात् ब्रह्मावगम्यते न कार्यम्, अनवगम्यं च न वाक्यप्रमेयमिति तत्राह **ब्रह्मज्ञानस्येति** । ननु क्रियाविधिकलापो निरूपितस्तत्र ज्ञानविधिनिरूपणायेदमारभ्यत इति नेत्याह **सिद्धेवेति** । उत्पत्तिविनियोगप्रयोगाधिकाराणां विध्यपेक्षितरूपाणां क्रियाप्रतिपत्त्योरविशेषेण निरूपितत्वादित्यर्थः । ननु यथा प्रथमेऽध्याये वेदस्य प्रामाण्यं निरूपितम् । द्वितीये कर्मोत्पत्तिविधिभेदः । तृतीये विहितानामङ्गाङ्गिभावो निरूपितः । चतुर्थे क्रतुपुरुषार्थप्रयुक्तानुष्ठेयपरिमाणम् । पञ्चमेऽनुष्ठानक्रमः । षष्ठे विध्यपेक्षिताधिकारनिर्णयः । इति पूर्वषट्केन प्रकृतिविध्यपेक्षितो विचारः कृतः । समग्राङ्गसंयुक्तविधिः प्रकृतिः । विकलाङ्गसंयुक्तविधिः विकृतिरित्युच्यते । तत्र सप्तमे प्रकृत्युपदिष्टानामङ्गानां विकृतावतिदेशो निर्णीतः । अष्टमे त्वाग्नेयोऽष्टाकपाल इत्यादिप्रकृत्युपदिष्टानामङ्गानां सौर्यं चरुं निर्वपेदिति विकृतौ द्रव्यदेवतादिसामान्यद्वारेण विशेषातिदेशो निरूपितः । नवमे तु प्रकृत्युपदिष्टमन्त्रसामसंस्कारकर्मणां विकृतावतिदिष्टानां प्रकृतिविकृत्योर्द्रव्यदेवताभेदे सति प्रकृतिगतद्रव्यादिशब्दान्विहाय विकृतिगतद्रव्यादिशब्दाध्याहारलक्षण ऊहो दर्शितः । यथाग्नये जुष्टमिति मन्त्रस्य विकृतौ सूर्याय जुष्टमिति पदप्रक्षेपः । दशमे तु विकृतावतिदिष्टानामङ्गानां प्रकृतौ सावकाशानां विकृतिगतविशेषाङ्गोपदेशादिना बाधो दर्शितः । यथा प्रकृतेर्विकृतावतिदेशप्राप्तानां बर्हिषां शरमयं बर्हिरिति विकृतौ विशेषोपदेशेन बाधः । एकादशे त्वनेकशेषिविधिप्रयुक्तस्य सकृदनुष्ठानादेव सर्वशेषिणां उपकारसाम्यं तन्त्रं नामोक्तम् । यथाग्नेयोऽष्टाकपाल उपांशुयाजमन्तरा यजत्यग्नीषोमीयमेकादशकपालमिति च पौर्णमासकर्मत्रयप्रयुक्तस्य प्रयाजादेः सकृदनुष्ठानादेव शेषिरूपोपकारः इति । द्वादशे शेषिप्रयुक्तस्य शेषानुष्ठानस्य अप्रयोजकसामर्थ्ययुक्ते शेष्यन्तरेप्युपकारः प्रसङ्गो नाम दर्शितः । यथा पशुविधिप्रयुक्तानामङ्गानां पशुपुरोडाशेऽप्युपकारः । तदेवं प्रत्यध्यायमाशङ्कान्तरनिराकरणेन विध्यंशभेदो निरूपितः । तथा प्रतिपत्तव्यस्य ब्रह्मणः प्रत्यक्षादिभिरसिद्धत्वात् प्रतिपत्तिविध्ययोगाशङ्कायां तन्निराकरणायेदमारभ्यत इति तत्राह अभ्यधिकाशङ्काभावादिति । यूपाहवनीयादिवत् ब्रह्मणः सिद्धिः असिद्धौ चारोपितरूपेणैवोपासनासिद्धिरित्यर्थः ।

**१६९ सु०— तत्र केचिदभ्यधिकाशङ्कां प्रदर्शयन्तो ब्रह्मजिज्ञासां पृथगारभन्ते । अपरे तु कार्यनिष्ठ एव वेदभागो विचार्यत्वेन तत्र प्रक्रान्तो विचारितश्च । न वस्तुतत्त्वनिष्ठ इत्यतो वस्तुतत्त्वनिष्ठं वेदभागं विचारयितुमिदमारभ्यत इत्याहुः ॥ सेयं गतार्थताशङ्का तत्समाधानं च नोपपद्यते। सर्ववेदानामीश्वरैकनिष्ठत्वेन सर्ववेदार्थस्यात्रैव जिज्ञास्यत्वात्। धर्मजिज्ञासाशास्त्रं तु वेदैकदेशामुख्यार्थधर्मविचाराय प्रवृत्तमित्याशयेन वा 'स एवभर्गशब्दार्थ' इत्याद्युक्तम् । तत्र 'सर्ववेदार्थ' इत्यनेन गतार्थताशङ्कानिरासः । स एव न तु कार्यशेषतयेत्याद्यं समाधानं, सर्वेति द्वितीयं च, निरस्तम् । तदुपपादनाय पूर्ववाक्यम् । जिज्ञास्य इति साध्यनिर्देशः । वक्ष्यति च एतद्विस्तरेण कार्यता चेत्यादिना ।**

**बिन्दुः— अभ्यधिकाशङ्कामिति** । ननु सत्यज्ञानादिवाक्यानि न जिज्ञासनीयानि । अप्रमाणत्वात् । तथाहि । स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिना तस्य मन्त्रब्राह्मणरूपस्याम्नायस्य कार्ये तात्पर्यमवधारितम् । तत्र च लिङादीनां साक्षात्कार्यपरता यथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादौ । तत्र साध्याद्याकाङ्क्षानिवर्तकत्वेन स्वर्गयागसमिद्यागादिवाक्यानामुपयोगः इत्युचितं तेषां जिज्ञास्यत्वम् । न चैतावता सत्यं ज्ञानमित्यादीनि यतो वेत्यादीनि वा काञ्चनाकाङ्क्षां पूरयितुमीशते । कर्मविध्यसन्निधानात् । न च तत्रापि जिज्ञासाविधयः सन्तीति वाच्यम् । सन्तु नाम । न हि जिज्ञासेतिकर्तव्यतापरतैतेषां सङ्घटीति । अक्रियाकारित्वात् । तस्माज्जपाद्यर्थत्वेन पारायणोपयोगित्वेन वा केवलादृष्टार्थतेति न जिज्ञास्यत्वमित्यभ्यधिकाशङ्का । उत्तरं तु । स्यादेतत् । यदि केवलसिद्धार्थपरस्य अनितिकर्तव्यतारूपत्वेन कार्यानन्वयात् तद्बोधकस्याप्रामाण्यं हन्त तर्हि वायुक्षेपिष्ठत्वादिवाक्यानामपि तत्स्यात् । सत्यज्ञानादिवाक्याविशेषात् । ननु तेषां वायव्यं श्वेतमालभेत भूतिकाम इति सन्निधौ श्रूयमाणविधिविषयीभूतदेवतास्तुतिद्वारा कर्मणि प्राशस्त्यसमर्पकत्वेन कार्यशेषतयैव प्रामाण्यं सङ्गच्छत इति चेत् । समं प्रकृतेऽपि । अत्रापि सन्निधौ श्रूयमाणजिज्ञासाविधिविषयीभूतब्रह्मस्तुतित्वेन विधेयजिज्ञासायां प्राशस्त्यसमर्पकतया कार्यशेषत्वस्यैवेष्टत्वात् । तस्मात्कर्तव्या जिज्ञासेति स्थितमिति । अमुमेवार्थमनुपदमेव दूषणग्रन्थे स्फुटीकरिष्यति 'स एव न तु कार्यशेषतयेत्याद्यं समाधानमि'त्यत्र । **अभ्यधिकाशङ्कामिति** । तथा चोक्तं भामत्यां सत्यपि स्वाध्यायाध्ययनविधिना स्वाध्यायपदवाच्यस्थवेदराशेः फलवदर्थावबोधपरतामापादयता कर्मविधिनिषेधानामिव वेदान्तानामपि स्वाध्यायशब्दवाच्यानां फलवदर्थावबोधपरत्वमापादितम् । यद्यपि चाविशिष्टस्तु वाक्यार्थ इति न्यायान्मन्त्राणामिव वेदान्तानामर्थपरत्वमौत्सर्गिकम् । यद्यपि च वेदान्तेभ्यश्चैतन्यानन्दघनः कर्तृत्वरहितो निष्प्रपञ्च एकः प्रत्यगात्मावगम्यते । तथापि कर्तृत्वभोक्तृत्वदुःखशोकमोहमयमात्मानमवगाहमानेनाहंप्रत्ययेन सन्देहबाधविरहिणा विरुध्यमाना वेदान्ताः स्वार्थात्प्रच्युता उपचरितार्था वा जपमात्रोपयोगिनो वेत्यविवक्षितस्वार्थाः । तथाच तदर्थविचारात्मिका चतुर्लक्षणीशारीरकमीमांसा नारब्धव्या । न च सर्वजनीनाहमनुभवसिद्ध आत्मा सन्दिग्धो वा सप्रयोजनो वा येन जिज्ञास्यः सन् विचारं प्रयुञ्जीतेति पूर्वः पक्षः । सिद्धान्तस्तु भवेदेतदेवं यद्यहंप्रत्ययः कर्तृत्वभोक्तृत्वादिविशिष्टपरानात्मविषयकः । न त्वेवम् । तस्मादुक्तक्रमेण संभावितदोषस्यापौरुषेयत्वादिना निर्दोषश्रुत्यादिबाधकत्वानुपपत्तेः । श्रुत्यादिभिश्च समस्ततीर्थकरैः प्रामाण्यानभ्युपगमादध्यासत्वम् । एवं च वेदान्ता नाविवक्षितार्थाः । नाप्युपचरितार्थाः निरुक्तलक्षणः प्रत्यगात्मैव तेषां





मुख्योऽर्थः । तस्य च वक्ष्यमाणेन क्रमेण सन्दिग्धत्वात् सप्रयोजनत्वाच्च युक्ता जिज्ञासेत्याशयवान् सूत्रकारस्तज्जिज्ञासामसूत्रयत् **अथातो ब्रह्मजिज्ञासेतीति** । इत्याशयेन वेति प्रथमकल्पाक्षेपोऽपि कल्प्यः । नन्वस्मिन् कल्पे **स एव भर्गशब्दार्थ इत्यादिना** स एव सर्ववेदार्थ इति समर्थितम् । जिज्ञास्योमित्यस्य तु कथमन्वय इत्यत आह **जिज्ञास्य इति** । तस्मात् सर्ववेदार्थः अतो जिज्ञास्य इति समर्थितस्य सर्ववेदार्थत्वरूपहेतोः साध्यमनेन निर्दिश्यत इत्यर्थः । नन्वेतावत्प्रतिज्ञामात्रेण वेदस्य कार्यपरतां ब्रह्मणश्च तच्छेषतां व्याचक्षाणाः कथं निराकृता भवन्तीत्यत आह **वक्ष्यति चेति** ।

**परि०— केचिदिति** । 'व्युत्पत्त्यभावः प्रतिपत्तिदौस्थ्यमन्येन सिद्धत्वमथाफलत्वम् । एतानि वै सूत्रचतुष्टयेन नारम्भमूलानि निराचकार' इति वदन्तो रामानुजीयादयः सिद्धेऽर्थे व्युत्पत्त्यभावेन वेदान्तानां ब्रह्मण्यमानत्वान्न तद्विचार आरभ्य इत्यादिरूपाभ्यधिकाशङ्कां दर्शयन्त इत्यर्थः । यद्वा केचिदिति मायावाद्येकदेशिन इत्यर्थः । तैरपि सिद्धेऽर्थे व्युत्पत्त्यभावाद्यभ्यधिकाशङ्कां प्रदर्श्य कार्यशेषे ब्रह्मणि व्युत्पत्त्यादेरुक्तत्वात् । **अपरे त्विति** । मायावादिन इत्यर्थः । **आद्यमिति** । स्वप्रधाने प्रामाण्यायोगेऽपि उपासीतेत्यादिलिङाद्युक्तकार्यशेषे ब्रह्मणि प्रामाण्ययोगात्तद्विचारः कार्य इति समाधानमित्यर्थः । निरस्तमित्यन्वयः । **द्वितीयं चेति** । कार्यनिष्ठ एवेत्यादिनोक्तमित्यर्थः । **तदिति** । सर्ववेदार्थत्वोपपादनाय ओतत्ववाचीत्यादिपूर्ववाक्यमित्यर्थः । यद्वा स एव भर्गशब्दार्थ इत्यादिपूर्ववाक्यमित्यर्थः । **साध्येति** । स एव सर्ववेदार्थ इत्यनेन कृतस्य गतार्थताशङ्कासमाधिनिरासस्य जिज्ञासाविधिरूपं फलं जिज्ञास्योऽयमिति पादेन निर्दिश्यत इत्यर्थः । अत्र सङ्ग्रहः— मङ्गलास्रवणे युक्तिविशेषद्योतनं तथा । मीमांसानुग्राह्यमानकीर्तनं पूर्वतन्त्रतः ॥ १ ॥ अगतार्थतासूचनं चेत्येवं पञ्चप्रयोजनः । सौत्रप्राथमिकोङ्कारः श्रुतिसिद्धोऽवधारितः ॥ २ ॥

**गु०दी०—** ब्रह्मज्ञानमपि धर्मतयैव वेदार्थ इति वदता सकलवेदार्थोऽपि धर्म एवेत्युक्तं स्यात् । तच्च न घटत इति भावेन मूलं योजयति **तत्र सर्ववेदार्थ इति** । **गतार्थताशङ्का** धर्म एव वेदार्थः न त्वन्यत् । धर्मश्च विचारित इति शङ्का । **साध्यनिर्देश** इति वदता सप्रमाणकं "जिज्ञासोत्थज्ञानजाततत्प्रसादादि"त्युत्तरवाक्योक्तं प्रमेयं हेतुरिति सूचितम् । यस्माज्जिज्ञासैव आदिमं कारणं तस्मात्स एव जिज्ञास्य इति योजनाऽपि सूचिता ।

**यादु०— तत्र केचिदभ्यधिकाशङ्कामिति** । चोदनालक्षणोऽर्थो धर्म इति ब्रुवता विधिपरत्वेन सर्ववेदानां प्रामाण्यं प्रदर्शितम् । अत्र केषुचिद्वाक्येषु विधिरेव न श्रूयते सदेव सोम्येत्येवमादिषु । यत्रापि श्रूयते 'आत्मा वा अरे द्रष्टव्य' इत्यादिषु तत्रापि विधेरनुपपत्तिः । भावकर्मणोः विहितानामपि कृत्यानां 'कृत्याश्च' इत्यविशेषेण विधौ स्मरणेऽपि यो भावाभिधायी प्रत्ययः स गन्तव्यमित्यादाविव क्रियाप्रधानत्वात्क्रियायां पुरुषं नियोक्तुं शक्नोति । अयं तु





न प्राधान्येन भावाभिधायी। अपि तु कर्माभिधाय्येव। ननु कर्माभिधायितव्यप्रत्ययादपि धात्वर्थविषयो विधिरवगम्यते स्वाध्यायोऽध्येतव्य इति। तद्वदत्रापि किं न स्यादिति चेत्। अत्र प्रष्टव्यम्। किं स्वतन्त्रफलाय कर्मगुणतया धात्वर्थो विधीयते। उत कर्मकारकगतफलाय। न तावदाद्यः। स्वतन्त्रफलाय द्रव्ये गुणभूतक्रियाविधानस्य अनुचितत्वात्। न द्वितीयः। कर्मकारकगतं फलं क्वचिदुत्पादः। यथा व्रीहीनवहन्तीत्यत्रावहननक्रियया वितुषव्रीहीणां उत्पादः। क्वचिद्विकारः। यथा तण्डुलान् पिनष्टीत्यत्र तण्डुलानां पेषणेन पिष्टीभावः। न चेदं प्रकारद्वयं प्रकृते संभवति। आत्मनो नित्यत्वेनानुत्पाद्यत्वादविकार्यत्वाच्च। क्वचित्क्रियया आप्तिः। यथा गां दोग्धीत्यत्र गोर्दोहनक्रियया आप्तिः। न चेयं प्रकृते युक्ता। आत्मनो ज्ञानक्रियया नित्याप्तत्वात्। क्वचित्संस्कारः। यथा स्रुचः संमार्ष्टीत्यत्र संमार्जनक्रियया स्रुक्संस्कारः। न चायमपि प्रकार आत्मनि युक्तः। अन्यत्र तस्य विनियोगाभावात्। संस्कार्यस्यान्यत्र विनियोगनियमात्। तस्मान्न केनापि प्रकारेण आत्मनः कर्मत्वमुपपद्यत इति तत्कर्मकविधेरनुपपत्तिरेव। स्वाध्यायोऽध्येतव्य इत्यत्र तूक्तप्रकारेष्वन्यतमः प्रकारः संभवतीति न तत्रानुपपत्तिः। अर्थज्ञानादिरूपस्य फलस्य तत्र संभवात्। एतेनात्मानमुपासीतेति विधिरपि प्रत्याख्यातो वेदितव्यः। तत्राप्यात्मनः कर्मत्वस्योक्तविधयोपपादयितुमशक्यत्वात्। ननु यथा सक्तून् जुहोतीत्यत्र भस्मीभूतानां सक्तूनां क्रतौ विनियोगाभावात्संस्कारकर्मत्वं परित्यज्य सक्तूनिति प्राधान्यं विहाय सक्तुभिरिति गुणभावेन होमप्राधान्यमुपादाय स्वतन्त्रफलार्थता निरूपिता तथेहाप्यात्मानमिति श्रुतप्राधान्यं विहायात्मनः उपासीतेति गुणत्वोपगमेन स्वतन्त्रफलायैवोपासनं प्राधान्येन विधीयतामिति चेन्न। तत्र यथा होमप्राधान्येऽपि सकर्मकत्वाद्धातोः सक्तव एव कर्मकारकतया भस्मीक्रियन्ते एवमवगमस्यापि सकर्मकत्वात्कर्मपेक्षायामात्मनः शब्दतः करणत्वेऽप्यर्थतः कर्मत्वमेव वाच्यम्। तच्चोक्तरीत्या न संभवतीति न निष्कर्मकं ज्ञानं स्वतन्त्रफलाय विधातुं शक्यमित्यतो विध्यसंभवादविवक्षितार्था वेदान्ता इति धर्मजिज्ञासानन्तरं स्नानं प्राप्तमित्यधिकां शङ्कां प्रदर्शयन्त इत्यर्थः। कर्माभिधायिनोऽपि प्रत्ययान्नियोगसंप्रत्ययान्न नियोजकत्वं तस्य निराकर्तुं शक्यते। कटस्त्वया कर्तव्यो ग्रामस्त्वया गन्तव्य इतिवत्। यत्तूक्तं तथात्वे प्रयोजनाभावादानर्थक्यं नियोगस्येति। तदसत्। अविद्योच्छेदस्योपलभ्यमानत्वात्। अविद्या च संसारहेतुभूताऽतस्तदुच्छेदः पुरुषार्थः। स एव चात्मनः क्रियाजन्यः संस्कारः। न च संस्कृतस्यान्यत्र विनियोगापेक्षा। स्वयमेव पुरुषार्थत्वात्। अपुरुषार्थसंस्कारस्यैवान्यत्र विनियोगापेक्षत्वादतो विधिसंभवाद्ब्रह्म जिज्ञासितव्यमेव न ज्ञातव्यमिति पृथगारभन्त इत्यर्थः। **आद्यं समाधानमिति**। विधिसंभवात्कर्मतयोपासनविध्यन्वितं ब्रह्म जिज्ञासितव्यमिति समाधानमित्यर्थः। **द्वितीयमिति**। वस्तुतत्वनिष्ठवेदभागं विचारयितुमिदमारभ्यत इति समाधानमित्यर्थः।

**वं०प०— तत्र केचिदित्यादि**। सर्ववेदान्तानां विधिपरत्वेन प्रामाण्यमुक्तम्। तत्र वेदान्तेषु कुत्रचिद्वाक्ये विधिरेव न श्रूयते। 'सदेव सोम्येदमग्र आसीत्' इत्यादौ। यत्र श्रूयते 'तद्विजिज्ञासस्व' इत्यादौ तत्रापि विधेरनुपपत्तिः। तथाहि धात्वर्थभूता या क्रिया सा स्वतन्त्रफलाय कर्मणि विधीयते उत कर्मकारकगतफलाय वा। नाद्यः। स्वतन्त्रफलाय द्रव्ये गुणभूतक्रियाविधानस्यानुचितत्वात्। द्वितीये कर्मकारकगतं फलं क्वचिदुत्पादो दृष्टः। यथा





व्रीहीनवहन्तीत्यत्रावहननक्रियया वितुषव्रीहीणामुत्पादः । क्वचिद्विकारः । यथा तण्डुलान् पिनष्टीत्यत्र तण्डुलानां पेषणेन पिष्टीभावः । न चेदं प्रकारद्वयं ब्रह्मणि संभवति । तस्य नित्यत्वेनानुत्पाद्यत्वादविकार्यत्वाच्च । क्वचिच्च संस्कारः यथा स्रुचं संमार्ष्टीत्यत्र संमार्जनक्रियया स्रुक्संस्कारः । अयमपि प्रकारो नात्मनि युक्तः । संस्कृतस्यान्यत्र होमादौ विनियोगदर्शनात् । आत्मनश्चान्यत्र विनियोगाभावात् । अत आत्मकर्मकविधेरसंभवात् अविवक्षितार्था वेदान्ता इति धर्मजिज्ञासाऽनन्तरं स्नातकव्रतमेव कर्तव्यतया प्राप्तं न ब्रह्मजिज्ञासेत्यभ्यधिकाशङ्कां दर्शयन्तो मायावादिन इत्यर्थः । **पृथगारभन्त इति** । यदुक्तं प्रयोजनाभावाद्ब्रह्मजिज्ञासाविधेरनुपपत्तिरिति । तदसत् । कर्मकारकगतसंस्काररूपफलाय विधीयत इत्यभ्युपगमात् । कर्मकारकभूतात्मगतः क्रियाजन्यः संस्कारस्तु अविद्योच्छेद एव । अविद्या हि संसारहेतु-भूता । अतस्तदुच्छेदः पुरुषार्थो भवत्येव । अविद्याया ब्रह्माश्रितत्वेन तदुच्छेदस्यापि कर्मकारकभूतात्मगतत्वात् । न च संस्कृतस्यान्यत्र विनियोगदर्शनादत्र च तदभावादित्युक्तमिति वाच्यम् । स्वयमेवापुरुषार्थरूपसंस्कारस्यैव अन्यत्र विनियोगापेक्षा न तु स्वयमेव पुरुषार्थरूपस्य । प्रकृते चाविद्योच्छेदरूपस्य संस्कारस्य स्वयमेव पुरुषार्थरूपत्वान्नान्यत्र विनियोगापेक्षा । तथाच ब्रह्मजिज्ञासाविधिसंभवाद्धर्मजिज्ञासानन्तरं ब्रह्मजिज्ञासैव कर्तव्या । न स्नातकव्रतं कर्म कार्यमिति पृथगारभन्त इत्यर्थः । तथा च विधिसंभवादुपासनादिविधौ कर्मतया कार्यशेषत्वेन ब्रह्म प्रतिपाद्यत इत्यर्थः । **कार्यनिष्ठ एवेति** । लिङ्लोट्तव्यप्रत्ययपञ्चमलकारप्रतिपाद्यं यत्कृतिसाध्यत्वे सति कृत्युद्देश्यत्वरूपं कार्यं तत्प्रतिपादक एव वेदभाग इत्यर्थः । **वस्तुतत्वनिष्ठ इति** । कार्यानन्वितः कार्यातिरिक्तोऽर्थः सिद्धोऽर्थो वस्तुतत्वपदे-नोच्यते । तत्प्रतिपादक इत्यर्थः । **गतार्थताशङ्केति** । धर्ममीमांसाशास्त्रविचार्यवेदभागस्यापि मुख्यतो भगवत्प्रतिपाद-कत्वेन ब्रह्ममीमांसयैव विचार्यतया धर्ममीमांसया ब्रह्ममीमांसागतार्थत्वशङ्का नास्तीति भावः । **कार्यशेषत्वेनेति** । उपासनाविधौ कर्मकारकतया कार्यशेषत्वेनेत्यर्थः । **आद्यमितीति** । ब्रह्मजिज्ञासां पृथगारभन्त इत्युक्तं समाधानं निरस्तमिति संबन्धः । **द्वितीयमिति** । अपरे त्वित्यादिनोक्तमित्यर्थः । भगवत एव सर्ववेदार्थत्वोक्त्या त्वदुक्त-कार्यस्यैवाप्रामाणिकत्वेन तत्परत्वं वेदभागस्य नास्तीति भावः । **तदुपपादनाय** सर्ववेदार्थत्वोपपादनाय । **पूर्ववाक्यम्** ओतत्ववाचीत्यादि पूर्ववाक्यम् । अथवा स एव भर्गशब्दार्थ इत्यादि पूर्ववाक्यम् ।

**आनन्दः**— अत्र कैश्चिद्वेदान्तानां विधिनिष्ठत्वमङ्गीकृत्यैवाभ्यधिकाशङ्का दर्शिता । तन्निराकरणाय तदीयमारम्भप्रकारं दर्शयति **अत्र केचिदिति** । **अभ्यधिकाशङ्कामिति** । अयमर्थः । चोदनालक्षणोऽर्थो धर्म इति द्वितीयसूत्रे सर्वस्यापि वेदस्य विधिपरत्वेन प्रामाण्यमुक्तम् । तत्र सदेवेत्यादि वेदान्तवाक्येषु विध्यश्रवणेन विधिपरत्वाभावाद्वेदान्तानामानर्थक्यम् । न चात्मा वाऽरे द्रष्टव्य इत्यादौ विधिश्रवणात् कृत्यानां विधौ स्मरणा-द्विधिपरत्वमस्तीति वाच्यम् । तथाऽप्यस्य कर्मप्राधान्येन भावार्थप्राधान्याभावात्तस्य च स्वतन्त्रफलार्थं विधातुं शक्यत्वात् । न च कर्माभिधायिप्रत्ययादपि धात्वर्थविषयो विधिरवगम्यत एव स्वाध्यायोऽध्येतव्य इतिवदिति वाच्यम् । यत्रापि कर्म प्राधान्येन उच्यते आत्मानमुपासीतेत्यादौ तत्रापि तावत्स्वतन्त्रफलाय कर्मविधानमसंभवि क्रियाया द्रव्ये गुणभूतत्वात् । नापि कर्मकारकसमवायिफलाय विधानम् । आत्मनः कर्मत्वस्यैवासंभवात् । तथाहि । आत्मनो नित्यत्वेन अनुत्पाद्यत्वात् । अविकारत्वेन विकार्यत्वाभावात् । नित्याप्तत्वेनानाप्तत्वात् । न च संस्कारकर्मत्व-

मेवास्तु विहितक्रियासामर्थ्यात् अज्ञानाद्यनादिमलापकर्षरूपसंस्कारसंभवादिति वाच्यम्। संस्कृतस्य कर्मान्तरानुपयोगित्वेनासंस्कार्यत्वादीप्सिततमत्वासंभवेन कर्मत्वासंभवात् । नन्वेवमपि सक्तून् जुहोतीत्यादेः क्रतुप्रकरणे श्रवणेन सक्तुहोमस्य क्रत्वङ्गत्वमवगतम् । तत्राङ्गानि द्विविधानि । अर्थकर्माणि संस्कारकर्माणि च । तत्र क्रतुकार्याण्यनाश्रित्य स्वातन्त्र्येण विहितानि प्रयाजादीन्यर्थकर्माणि । व्रीह्यादिकारकगुणभूतानि संस्कारकर्माणि । तत्र न तावत्सक्तुहोमस्यार्थकर्मता सक्तुद्रव्यगुणभूतत्वात्। संस्कारकर्म च द्विविधं विनियुक्तसंस्कारो यथा व्रीहिभिर्यजेतेति विनियुक्तव्रीहीनुद्दिश्य प्रोक्षणादिसंस्कारः । कश्चिद्विनियोक्ष्यमाणसंस्कारो यथा आहवनीये जुहोतीति विनियोक्ष्यमाणस्याधानेन संस्कारः । संस्कृतस्य च विनियोगः । तत्र होमेन भस्मीकृतानां सक्तूनामुभयथापि क्रतौ विनियोगाभावाद्वैयर्थ्यायोगाच्च संस्कारकर्मत्वं परित्यज्य सक्तूनिति प्राधान्यं च विहाय सक्तुभिरिति गुणभावेन कर्मप्राधान्यमुपधायार्थकर्मता निरूपिता यथा तथात्मानमिति साध्यतया प्राधान्यं विहायात्मनोपासीतेति गुणत्वोपगमेन स्वतन्त्रफलाय प्राधान्येनोपासनं विधीयतामिति चेन्मैवम्। तत्र यथा होमप्राधान्येऽपि सकर्मकत्वाद्धातोः सक्तव एव कर्मकारकतया भस्मीक्रियन्त एवमवगमस्यापि सकर्मकत्वादर्थतः कर्माभावे विधानासंभवात् उपासनाद्यपरिज्ञानात् । न च ज्ञानमुपासनम्, आत्मा च विषयभावेन तन्निर्वर्तयतीति नोपासनाद्यपरिज्ञानमिति वाच्यम् । एवं तर्हि तदेवायातं ज्ञानेनात्मा आप्यत इति तच्चायुक्तम् । नित्याप्तस्य तदयोगात् संस्कार्यत्वे चोपयोगाभावात्। तस्माद्विध्याद्यभावेन वेदान्तानामानर्थक्यमिति। **पृथगारभन्त इति**। वेदान्तानां विधिपरत्वमेव स्वीकर्तव्यम्। कटस्त्वया कर्तव्य इत्यादौ कृत्यादीनां विधायकत्वदर्शनात्। अविद्याधर्मादिनिवृत्तिरूपसंस्कारहेतुभूताविद्योच्छित्तेराप्यत्वाच्च। न च संस्कृतस्यान्यत्र विनियोगाकाङ्क्षा, स्वयं पुरुषार्थत्वात्। अपुरुषार्थसंस्कारस्य च विनियोगापेक्षत्वात् तथाच विधिपरत्वादारभ्यत्वमित्यर्थः । तत्र स एव न तु कार्यशेषतयेत्याद्यं समाधानमिति । उपलक्षणमेतत् । मन्तव्य इत्यादि कृत्यप्रत्ययान्न नियोगसंप्रत्यय इति । तत्र प्रष्टव्यम् । किमस्य लोके नियोगप्रत्यायकत्वम् उत वेदे । नाद्यः । कटस्त्वया कर्तव्य इत्यादौ स्वयमेव विधायकत्वस्य दर्शितत्वात् । न द्वितीयः । अथातो धर्मजिज्ञासेति प्रथमसूत्रे स्वाध्यायोऽध्येतव्य इत्यस्य विधायकत्वाङ्गीकारेणात्र शङ्काकारणाभावात्। ननु चतुर्विधस्यापि क्रियाफलस्यात्मन्यसंभवस्योक्तत्वान्मन्तव्य इत्यादेर्न विधायकत्वम्। न च सक्तुन्यायेनात्मनि क्रियाफलं संभवतीति वाच्यम्। आत्मविषयज्ञानस्य सिद्धत्वोक्त्या सक्तुन्यायो न संभवतीति उक्तमिति चेन्मैवम्। यथा हिरण्यं बिभृयादिति पक्षे प्राप्तस्य नियमविधिरभ्युदयफलस्तद्वत्प्रकृतेऽपि नियमविधिरस्तु। आत्मविषयज्ञानस्य असिद्धत्वेऽपि अभ्युदयफलार्थसिद्धस्यैवाभ्यास उपासनाख्यो विधिबलादङ्गीक्रियते इति को विरोधः । न च विधानबलादपि आत्मविषयज्ञानसन्तानो न कर्तव्यः । अवस्थात्रयेऽपि विज्ञानसन्तानाविच्छेदात् तथाच नायं नियमविधिरिति वाच्यम् । एवं तर्ह्यनात्मप्रतिभासनिवृत्तये परिसंख्याविधिरदृष्टार्थोऽयं भवेत् । तथाच गतार्थत्वान्नाधिकशङ्कोपपद्यते। यदप्यात्मज्ञानादविद्योच्छेदस्तदुच्छेदात्संसारनिवृत्तिः फलमिति तदपि न। सर्वेषामहमिति आत्मज्ञानस्य नित्यसिद्धत्वेऽपि संसारनिवृत्तेरभावात् । न च अहंप्रत्ययावसेयादन्यदेवात्मरूपं पराकृतभोक्तृभोक्तव्यभावमात्मज्ञानविधिना ज्ञाप्यते । तादृगात्मज्ञानस्याद्याप्यसिद्धत्वान्न संसारनिवृत्तिरिति वाच्यम्। विधेर्हि सामान्यतः सिद्धस्य विशेषसिद्धौ सामर्थ्यम्। नत्वत्यन्तमसिद्धसद्भावे। तथाच सामान्यज्ञानस्य

लोके सिद्धत्वेऽपि निष्प्रपञ्चात्मविषयज्ञानस्यासिद्धत्वेन गगनमुष्टिहननवत्तद्विधानमेवासंभावितमिति नायमारम्भ-प्रकारः साधुरिति दिक्। पूर्ववाक्यं स एव भर्गशब्दार्थ इत्येतत्। नन्वस्मिन्पक्षे जिज्ञास्य इत्येतद्व्यर्थम्। गतार्थतादेः परिहारस्य स एवेत्यादिनैव कृतत्वादित्यत आह **जिज्ञास्य इतीति**। तथा च सर्ववेदार्थत्वरूपाद्धेतोर्जिज्ञास्य इति साध्यसमर्पकं तदिति भावः। ननु कथं वेदस्य न कार्यनिष्ठत्वं किन्तु सिद्धपरत्वमेवेत्ययुक्तम्। कुतः, युक्तेरनुक्त-त्वादित्यत्राह **वक्ष्यतीति**।

**कं०रा०**— ननूक्तरीत्या ब्रह्मविचारस्य पूर्वतन्त्रे वृत्तत्वेऽपि सत्यामभ्यधिकाशङ्कायां तन्निरासायोत्तर-तन्त्रारम्भोऽस्त्वित्यत आह **अभ्यधिकेति**। **इत्यादीति**। स एव भर्गशब्दार्थ इत्यादिसर्ववेदार्थ इत्यन्तमुक्तमित्यर्थः। **स एवेति**। स एव सर्ववेदार्थ इत्यवधारणेन प्राधान्येन वेदार्थत्वं ब्रह्मण एव नान्यस्येत्येतदर्थकेन न कार्यशेषतया ब्रह्म वेदार्थ इति लभ्यते। अनेन स्वप्राधान्येन वेदार्थब्रह्मविचारस्येतःपूर्वं पूर्वमीमांसायामवृत्तत्वेऽपि तादृग्विचारस्य तत्र वृत्तत्वमङ्गीकृत्याभ्यधिकाशङ्कया पृथक् ब्रह्मजिज्ञासारम्भ इत्याद्यं समाधानं निरस्तमिति संबन्धः। **सर्वेतीति**। **सर्ववेदार्थ इति**। भगवतः सर्ववेदार्थत्वोक्त्या कार्यनिष्ठवेदभागस्य पूर्वतन्त्रे विचारितत्वेऽपि तत्राविचारितस्य सिद्धब्रह्मनिष्ठवेदान्तभागस्येह विचार्यमाणत्वान्न तेनास्य गतार्थत्वमिति द्वितीयं च समाधानं निरस्तमित्यर्थः। **तदिति**। प्राधान्येन भगवतः सर्ववेदार्थत्वोपपादनाय स एव भर्गशब्दार्थ इत्यादिपूर्ववाक्यमित्यर्थः। **साध्येति**। अस्तु प्राधान्येन भगवतः सर्ववेदार्थत्वं ततः किमित्याकाङ्क्षायां स एव सर्ववेदार्थ इत्युक्तस्य प्राधान्येन सर्ववेदा-र्थत्वरूपहेतोर्जिज्ञास्य इति जिज्ञास्यत्वरूपसाध्यं निर्दिश्यत इति भावः। एतद्भगवत्सर्ववेदार्थत्वम्।

**श्रीनिधि०**— **केचित्** नैयायिकाः। **अपरे** शृङ्गिणः। **वस्तुतत्त्वनिष्ठ इति**। सिद्धान्तनिष्ठ इत्यर्थः। **गतार्थताशङ्केति**। धर्म एव सर्ववेदार्थः स विचारित इति गतार्थताशङ्केत्यर्थः। **आद्यं समाधानमिति**। ब्रह्मज्ञानस्य चोदनालक्षणत्वेन धर्मस्वरूपत्वात्। सिद्धैव ब्रह्मजिज्ञासेत्युक्ते अभ्यधिकाशङ्कां दर्शयता कार्यशेषत्वमङ्गीकृतमेव। चोदनालक्षणत्वाङ्गीकारे ब्रह्मणः कार्यशेषत्वस्य अवर्जनीयत्वात्। अन्यथा अभ्यधिकाशङ्कैव नोपपन्नेति भावः। 'ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम्' इति भागवतवाक्यमुच्यते।

**वा०चं०**— तत्र केषाञ्चिदभ्यधिकाशङ्कातत्समाधानप्रकारं सामान्यतो वक्तुं प्रवृत्तं **तत्र केचिदिति**। तस्यायं भावः। 'सदेव सोम्येदम्' 'सत्यं ज्ञानमनन्तम्' इत्यादिषु विध्यश्रवणान्न वेदान्तानां विधिपरत्वं उचितम्। न च 'आत्मा वा अरे द्रष्टव्यः' 'तदन्वेष्टव्यम्' इत्यादिषु विधिश्रवणात्तदेकवाक्यतया विधिरहितवाक्यानामपि तत्परत्वमेवेति वाच्यम्। तेषामपि 'तयोरेव कृत्यक्तखलर्थाः' इति सूत्रविहितभावकर्मार्थकतव्यप्रत्ययान्तत्वेऽपि विधिवाक्यत्वा-भावात्। न च भावकर्मविहितानामपि कृत्यप्रत्ययानां कृत्याश्चेति विधौ स्मरणाद्युक्तं तेषां ज्ञानविधित्वमिति वाच्यम्। गन्तव्यमित्यादि-भावाभिधायिप्रत्ययस्य भावप्राधान्येन ततो धात्वर्थविधिप्रत्ययेन तत्र धात्वर्थस्य स्वतन्त्रफलाय विधातुं शक्यत्वेऽपि कर्माभिधायि प्रत्ययस्थले कर्मणः प्राधान्येन क्रियायाश्च गुणत्वेन स्वतन्त्रफलाय तस्या विधातुमशक्यतया ग्रामो गन्तव्यः स्वाध्यायोऽध्येतव्य इत्यादिवत् 'आत्मा वा अरे द्रष्टव्य' इत्यादौ तव्यप्रत्ययस्य





आत्मरूपकर्मकारकगतफलाय क्रियाविधानपरत्वेऽङ्गीकार्ये कर्मरूपात्मगतातिशयस्य चोत्पत्तिरूपस्यानादित्वेनाविकारित्वेन विकाररूपस्य नित्याप्तत्वात्तदाप्तिरूपस्यासंभवात्संस्काररूपत्वे वक्तव्ये संस्कारस्य गुणाधानमलापकर्षणरूपेण द्वैविध्यादात्मनश्च निर्गुणत्वेन गुणाधानरूपस्यासंभवान्मलापकर्षरूपस्य संभवेऽपि विनियुक्तविनियोक्ष्यमाणयोः संस्कारदर्शनादात्मनश्चोभयरूपत्वाभावेन संस्कारासंभवेन तद्रूपातिशयस्याप्यभावान्न तस्य ज्ञानविधिपरत्वं युक्तम् । न च सक्तून् जुहोतीत्यस्य क्रतुप्रकरणे श्रवणेन क्रत्वङ्गत्वादङ्गानां चार्थकर्मत्वसंस्कारकर्मत्वरूपेण द्वैविध्यात्सक्तुहोमस्य सक्तुद्रव्यगुणभूतत्वेन प्रयाजादिवदर्थकर्मत्वासंभवेन प्रोक्षणादिवत् संस्कारकर्मत्वे वक्तव्ये विनियुक्तविनियोक्ष्यमाणसंस्कारत्वेन संस्कारद्वैविध्याद्धोमेन भस्मीकृतानां सक्तूनां प्रोक्षणादिवत् आहवनीयादिवच्चोभयविधसंस्कारत्वस्याप्यसंभवात् अङ्गत्वायोगे स्वतन्त्रफलसाधनत्वाश्रवणात् दर्शपूर्णमासप्रकरणपठितत्वेन फलकल्पनानुपपत्तेरध्ययनविध्युपात्तत्वेनानर्थक्यासंभवाच्च संस्कारकर्मत्वं परित्यज्य सक्तूनिति कर्मप्राधान्यं विहाय सक्तुभिरिति गुणभावेन क्रियाप्राधान्यमाश्रित्यार्थकर्मता निरूपिता यथैवमात्मानमिति साध्यतया प्राधान्यं विहायात्मनेति गुणत्वेनोपगमेन स्वतन्त्रफलायोपासनं प्राधान्येन विधीयतामिति नास्य विधित्वासंभव इति वाच्यम् । तत्र यथा होमप्राधान्येऽपि सकर्मकत्वाज्जुहोतेः सक्तव एव कर्मकारतया भस्मीक्रियन्ते एवमवगमस्य सकर्मकत्वादर्थतः कर्माभावे न विधानमिति कर्मान्तरासंभवात् शब्दतः करणस्यात्मन एवार्थतः कर्मत्वे वक्तव्ये तद्गतस्यातिशयस्याप्युत्पत्तिविकृतिसंस्काररूपस्यासंभवेनार्थकर्मत्वस्यैवमप्यसंभवेन विध्यभावादविवक्षितार्था वेदान्ता इति धर्ममीमांसानन्तरं स्नाने प्राप्ते इदमारभ्यते । अथातो **ब्रह्मजिज्ञासेति** । अनन्तरं ब्रह्म जिज्ञासितव्यं न स्नातव्यमित्यभिप्रायः । कटस्त्वया कर्तव्यो ग्रामो गन्तव्य इत्यादौ कर्माभिधायिप्रत्ययादपि धात्वर्थनियोगसंप्रत्ययात् द्रष्टव्य इत्यादौ च क्रियाफलस्यात्मगतस्याविद्योच्छेदलक्षणातिशयस्य संभवादपुरुषार्थसंस्कारस्योत्तरत्रोपयोगापेक्षायामपि न पुरुषार्थसंस्कारस्य तदपेक्षेति द्रष्टव्य इत्यादेरेव विधित्वसंभवाद्युक्तं विधिपरत्वं वेदान्तानामिति । **अपरे त्विति** । लोके सन्दिग्धसप्रयोजनयोरेव विचार्यत्वाद्धर्मस्य च लोकप्रवादसिद्धतया सामान्यतः प्रसिद्धत्वेनाग्निहोत्रचैत्यवन्दनादिविशेषाकारेण वादिविप्रतिपत्तिविषयत्वेन च सन्दिग्धत्वात्पुरुषार्थसाधनतया सप्रयोजनत्वाच्च तस्यैव विचारयोग्यतया वेदप्रामाण्यप्रतिपादनात्प्राक् सामान्यतोऽसिद्धेस्तत एव विशेषतोऽविप्रतिपत्तेः पुरुषार्थसाधनतया न सर्ववेदार्थो विचारयोग्य इति धर्मपरः कार्यनिष्ठ एव वेदभागो विचार्यतया प्रक्रान्तोऽत एव विचारितश्च न त्वतथाविधो वस्तुतत्त्वनिष्ठ इति भावः । स एव भर्गशब्दार्थ इत्याद्युक्तमित्युक्तमेवांशभेदेन विशदयति **तत्र सर्वेति** । **गतार्थताशङ्कानिरास इति** । विधेरेव सर्ववेदार्थत्वं तद्विचारश्च प्राचि तन्त्र एव कृत इति प्राप्तगतार्थताशङ्कायाः सर्ववेदार्थो ब्रह्मैव न विधिरित्युक्त्या निरास इत्यर्थः । स एवेत्यवधारणान्यथाऽनुपपत्त्या प्राधान्यस्यैव विवक्षितत्वात् इत्याशयः । **आद्यं समाधानमिति** । तस्य विधिपरत्वरूपत्वादिति भावः । **द्वितीयमिति** । विषयविभागपरत्वात् तस्येति भावः । अस्मिन्पक्षे शङ्कानिरासस्य पूर्वेणैव सिद्धत्वाज्जिज्ञास्य इत्यादेर्वैयर्थ्यमित्यत आह **जिज्ञास्य इतीति** । न केवलं पूर्ववाक्येन तदुपपादनमपि तु **वक्ष्यमाणन्यायेनापि** इत्याह **वक्ष्यति चेति** ।

**वा०र०— केषाञ्चिदिति** । अद्वैतिसिद्धान्त्येकदेशिनामित्यर्थः । अत्र पूर्ववादी सिद्धान्त्येकदेशीयान् दूषयितुमित्यादिविवरणोक्तेः । मूले केचिदित्युक्तानामभ्यधिकाशङ्का तत्समाधानयोः अपरमत इत्यसङ्ग्रहेणाप्यप्रद-





र्शनादुक्तं **सामान्यत इति**। तदुक्तशङ्कादिप्रकारस्य बहुत्वाद्भूयांशस्य फलिताश्रयणपुरस्कारेण दूषणकरणोपपत्तेर्न मूले तच्छङ्कादिप्रदर्शनम्। वेदान्तानां विधिनिष्ठत्वमङ्गीकृत्यैवारम्भ इति फलितस्य तु दूषणं मूले भविष्यतीति भावः। **तस्येति**। केचिदिति सामान्येनोक्तस्यायं वक्ष्यमाणो भाव इत्यर्थः। अत्र भाव इत्यनन्तरं चोदनालक्षणोऽर्थो धर्म इति ब्रुवता सूत्रकारेण विधिपराणामेव वेदानां प्रामाण्यमिति निरूपणादिति पूरणीयम्। पञ्चपादिकानुसारात्। **एवं** च सदेवेत्यादिशङ्कोपपत्तिः। इत्यादिष्वित्यनन्तरं चशब्दः पूरणीयः इत्यादिषु चेति। तेनैकवाक्यता। **उचितमिति**। ततश्च न तेषां प्रामाण्यमिति शेषः। **न चात्मा वा इति**। सर्वत्र वेदान्तेषु विधिश्रवणाभावेऽपि आत्मा वाऽरे द्रष्टव्य इत्यादौ तावद्विधिश्रवणमस्ति। तदितरसत्यादि वाक्यानां तु विधिप्रत्ययरहितत्वे विप्रतिपत्तिविध्यपेक्षितार्थ-प्रतिपादकत्वेन तदेकवाक्यतया विधिपरत्वस्यैव सत्त्वाद्युक्तं प्रामाण्यम्। यथा हि सोरोदीदित्यादिवाक्यानां विधिविधुराणामपि विध्येकवाक्यतया विधिपरत्वेन प्रामाण्यमित्याशयः। **तेषामपीति**। आत्मा वा **इत्यादि**-वाक्यानामपीत्यर्थः। **तव्यप्रत्ययान्तत्वेऽपीति**। तव्यप्रत्ययान्तद्रष्टव्य इत्यादिपदोपेतत्वेऽपीत्यर्थः। **विधि-वाक्यत्वेति**। तव्यप्रत्ययस्य विध्यर्थत्वे हि तेषां विधिवाक्यता स्यात्। भावकर्मार्थत्वे तु तस्य न तेषां विधिवाक्यत्वमित्यर्थः। **विहितानामपीति**। अनेन भावकर्मार्थत्ववत् विध्यर्थत्वस्यापि सत्त्वात्प्रकृते च विध्यर्थकत्वाङ्गीकारात्तादृशतव्यप्रत्ययोपेतात्मा वेत्यादिवाक्यानां युक्तं ज्ञानविधित्वमित्यर्थः। **गन्तव्यमित्यादि**। गन्तव्यमित्यत्रत्यतव्यप्रत्ययस्य धात्वर्थक्रियारूपभावाभिधायित्वाद्भावस्यैव तत्र प्राधान्येन तस्मात्प्रत्यया-द्धात्वर्थविधिप्रत्ययेन तत्र धात्वर्थस्येति योज्यम्। **कर्माभिधायीति**। वक्ष्यमाणग्रामो गन्तव्य इत्यादिस्थल इत्यर्थः। **इत्यादिवदिति**। इत्यादिवाक्ये विद्यमानस्य तव्यप्रत्ययस्य ग्रामादिरूपकर्मकारकगताप्तिरूपफलाय गमनादिक्रियाविधानपरत्ववदित्यर्थः। इत्यादावित्यादिपदेनात्मानमुपासीतेत्यादेः सङ्ग्रहः। वक्ष्यति चात्मानमिति साध्यतयेत्यादि। आत्मरूपं यत्कर्मकारकमिति विग्रहः। **क्रियेति**। ज्ञानरूपक्रियेत्यर्थः। अस्त्वात्मगतफलाय क्रियाविधानपरत्वं को दोष इत्यत मूलं किमुत्पत्तिर्विकारो वा आप्तिर्वा संस्कारो वेति विकल्पान्मनसि कृत्वा क्रमेण दूषयति **उत्पत्तिरूपस्येति**। षष्ठ्यन्तद्वयस्यासंभवादित्युत्तरेण संबन्धः। चतुर्थं निराकर्तुं परिशेषयति **संस्कारेति**। प्रकृते संस्कारोऽपि भवन् गुणाधानरूपो वा मलापकर्षणरूपो वेति विकल्पद्वयं मनसि कृत्वा क्रमेण निराह **आत्मनश्चेति**। **मलापकर्षणेति**। अज्ञानाधर्मादिरूपमलेत्यर्थः। **विनियुक्तेति**। व्रीहिभिर्यजेतेत्यादिना विनियुक्तं व्रीह्याज्यादि। तत्संस्कारो व्रीह्यादिकमुद्दिश्य प्रोक्षणावघातादिः। प्रोक्षणादिसंस्कृतानामेव व्रीहीणां पुरोडाशादि-निवर्तनद्वारा यागोपयोगात्। पत्न्यवेक्षणसंस्कृतस्याज्यस्यैव प्रयाजादावुपयोगात्। आहवनीये जुहोतीति विनि-युक्तस्याग्नेराहवनीयत्वसिद्धये विहितआधानादिर्विनियोक्ष्यमाणसंस्कारः। संस्कृतस्यैव विनियोग इति यावदिति विवेकः। **अतिशयस्यापीति**। उत्पत्त्यादिसमुच्चयार्थोऽपिशब्दः। ब्रह्मणि ज्ञानविधिपरत्वं सक्तुन्यायेन संभविष्यतीति शङ्कते **न च सक्तूनिति**। क्रत्वङ्गत्वादित्यस्य क्रत्वङ्गत्वावगमादित्यर्थः। **अर्थकर्मत्वेति**। अङ्गानि द्विविधानि अर्थकर्माणि संस्कारकर्माणि च। तत्र यानि क्रतुकारकाण्यनाश्रित्य स्वातन्त्र्येणेति यावत् विहितानि तानि अर्थकर्माणि। यथा प्रयाजानुयाजादीनि। यानि तु व्रीह्यादिकारकगुणभूतानि तानि संस्कारकर्माणि। यथा प्रोक्षणादीनित्याशयः। **सक्तुहोमस्येति**। व्रीहीन्प्रोक्षति पत्न्यवेक्षेतेत्यादौ प्रोक्षणावेक्षणादिकं प्रति व्रीह्यादीनां





प्राधान्यदर्शनात्सक्तूनामपि द्वितीयाश्रुत्या प्राधान्यं होमस्य चाप्राधान्यमिति लाभादिति भावः । **अर्थकर्मत्वेति** । अर्थकर्मरूपाङ्गत्वासंभवेनेत्यर्थः । संस्कारकर्मत्वे संस्काररूपाङ्गत्व इत्यर्थः । **होमेनेति** । प्रोक्षणादिसंस्कृतानां व्रीह्यादीनां पुरोडाशनिर्वर्तनद्वारा यागोपयोगवत् आधानादिसंस्कृताग्नेर्होमोपयोगवच्च होमाख्यसंस्कारविशिष्टसक्तूना-मुत्तरत्रोपयोगाभावेन क्रतुं प्रत्यनुपकारितया क्रतौ विनियोगासंभवादुभयविधसंस्कारकर्मत्वस्याप्यसंभवादित्यर्थः । प्रकृतस्य सक्तुहोमस्य द्विविधसंस्कारकर्मत्वाभावे धारणाङ्गत्वस्यैवाभावः प्राप्त इत्याह **अङ्गत्वायोग इति** । अस्य संस्कारकर्मत्वं परित्यज्येत्युत्तरेण संबन्धः । ननु मास्त्वङ्गत्वम् । स्वतन्त्रविधित्वमेव किं न स्यादित्यतः किं स्वतन्त्रफलं श्रुतत्वात्कल्प्यते । उत विश्वजिन्न्यायेन कल्प्यते । नाद्य इत्याह **स्वतन्त्रेति** । द्वितीयं निराह **दर्शेति** । ततश्च स्वातन्त्र्यानुपपत्त्याङ्गत्वमेव वाच्यमिति भावः । ननु तर्ह्यस्य सक्तुहोमवाक्यस्यानर्थक्यमेवास्त्वित्यत आह **अध्ययनेति** । तत्परिगृहीतानां चानुष्ठानोपयोग्यर्थज्ञानपर्यन्ताध्ययनकर्मतायाः प्रथमाधिकरणे सिद्धत्या आनर्थक्या-योगात्कथञ्चिदर्थवत्त्वं वाच्यमित्याशयः । परित्यज्यार्थेति संबन्धः । अर्थकर्मतोपपादकप्रदर्शनं **सक्तूनित्यादि** । व्रीहीन्प्रोक्षतीत्यादिदृष्टान्तेन प्राप्तं कर्मणः प्राधान्यं होमक्रियायाश्च द्रव्यगुणत्वेन प्रोक्षणादिवदप्राधान्यमित्यनाश्रित्य सक्तुभिरिति तृतीयया विपरिणामे सति व्रीहिभिर्यजेतेत्यादिवत् क्रियायाः प्राधान्यं सक्तुद्रव्यस्य च गुणभूतत्व-मित्याश्रित्येत्यर्थः । ततश्च सक्तुहोमस्य क्रत्वङ्गत्वोपपत्तिरिति भावः । **साध्यतयेति** । उपास्तिजनितातिशय-विशिष्टतयेत्यर्थः । **प्राधान्यम्** । द्वितीयाप्रतीतम् । द्वितीयायाः आत्मनेति तृतीयया विपरिणामे आत्मन उपासनां प्रति गुणत्वप्राप्तेरुपासनायाः कर्मकारकगतातिशयार्थत्वाभावान्मोक्षाख्यस्वतन्त्रफलायैव विधानमित्याह **आत्मने-तीति** । **विधित्वं** ज्ञानविधित्वम् । अस्येत्यस्य आत्मानं आत्मा वेत्यादि वाक्यस्येत्यर्थः । सक्तुहोमविधितया आत्मानमित्यादिविधेर्वैषम्यान्न दृष्टान्तदार्ष्टान्तिकभावो युक्त इत्याह **तत्र यथेति** । जुहोतेः सकर्मकक्रियावचन-त्वात् कर्मणा विना क्रियाप्रतिपादनानुपपत्त्या शब्दतः करणभूता अपि सक्तवो अर्थतः कर्मकारकभूता इति वाच्यम् । कर्मभूतेषु सक्तुषु होमक्रियाजन्यस्य भस्मीभावरूपातिशयस्य सद्भावात् । तदेतदाह **भस्मीक्रियन्त इति** । एवमवगमस्योपासीतेत्यादिनोक्तस्य सकर्मकतया कर्मापेक्षायां शब्दतः कर्माभावादर्थतोऽपि कर्माभावे विधानानुपपत्तेः अन्यस्य च कर्मणो निरूपयितुमशक्यतयात्मनेति शब्दतः करणभूतस्यात्मन एवार्थतः कर्मत्वे वक्तव्ये कर्मत्वस्य क्रियाजन्यातिशययोगित्वरूपतया आत्मनि चोक्तरीत्योत्पत्त्यादिरूपस्यातिशयस्यासंभवेन स्वरूपतः आप्तत्वेऽपि प्रतीतित आप्तिर्न सिद्धेत्यस्य च स्वप्रकाशचैतन्ये प्रतीतितोऽपि नित्यमाप्ते वक्तुमशक्यत्वेनार्थकर्मत्वस्य सक्तुन्यायेनापि वक्तुमशक्यतया आत्मा वा इत्यादेर्ज्ञानविधित्वायोगेन तदेकवाक्यतया सत्यं ज्ञानमित्यादीनां विधिपरत्वानुपपत्तेरविवक्षितार्था वेदान्ता इत्यतस्तद्विचारस्य अप्रसङ्गादध्ययनानन्तरभाविधर्ममीमांसानन्तरमधीत्य स्नायादिति स्मृतिप्राप्तस्नानं कर्तव्यमिति प्राप्ते सतीदमारभ्यत इति पूर्वतन्त्रतोऽभ्यधिकाशङ्कायां तन्निवृत्त्यर्थमुत्तर-मीमांसारम्भ इति प्रतिपादयितुं अथातो ब्रह्मजिज्ञासेति सूत्रमारब्धमित्यर्थः । **न स्नातव्यमिति** । ब्रह्मजिज्ञासातः पूर्वं न स्नातव्यमपि तु तदनन्तरं स्नातव्यमित्यर्थः । यदुक्तं वेदान्तवाक्येषु विधिर्न श्रूयत इति । तन्न । द्रष्टव्य इत्यादौ तव्यप्रत्ययश्रवणेन तदेकवाक्यतया सत्यं ज्ञानमित्यादेरपि विधिपरत्वोपपत्तेः । यदपि गन्तव्यमित्यादि भावाभिधायिप्रत्ययस्थले धात्वर्थविधिप्रतीत्युपपत्तावपि कर्माभिधायिप्रत्ययस्थले ग्रामो गन्तव्य इत्यादाविव





कर्मकारकगतफलायाः क्रियायाः विधानपरत्वेऽङ्गीकार्य इत्यादि। तद्दूषयति **कटस्त्वयेत्यादिना**। संप्रत्ययादित्यनन्तरं धात्वर्थनियोगपरत्वेनोपपन्न इति पूरणीयम्। कर्मकारकगतं फलं संस्कारः सोऽपि ह्यविद्यालक्षणमलापकर्षणरूपः। न च विनियुक्तविनियोक्ष्यमाणयोरेव संस्कारार्हत्वादात्मनश्चोभयरूपत्वाभावान्न सोऽपि संस्कारः संभवतीत्युक्तमिति वाच्यम्। अपुरुषार्थसंस्काररूपप्रोक्षणादीनामुत्तरत्रोपयोगापेक्षायामपि स्वत एव पुरुषार्थरूपाऽविद्योच्छेदलक्षण-संस्कारस्योत्तरत्रोपयोगापेक्षाभावोपपत्त्या द्रष्टव्यस्तदन्वेष्टव्यमित्यादेरेव विधित्वोपपत्तेस्तदेकवाक्यतया युक्तं सर्व-वेदान्तानां विधिपरत्वमित्यर्थः। **कार्यनिष्ठ एवेति** मूलोक्तं धर्मपरवेदैकदेशस्यैव पूर्वतन्त्रे विचारितत्वं युक्त्योप-पादयति **लोक इत्यादिना न सर्ववेदार्थो विचारयोग्य इतीत्यन्तेन। पुरुषार्थसाधनतयेति**। पुरुषैरर्थ्यमानस्य फलस्य साधनतयाऽवगम्यमानत्वादित्यर्थः। द्वितीयपुरुषार्थसाधनतयेत्यनन्तरमवगमरहितत्वाच्चेति पूरणीयम्। तथैव पाठस्तु स्वरस एव। विचारयोग्य इतीत्यन्तमुपलक्षणम्। भाष्यसूत्रकाराभिमत्या चेत्यपि ज्ञेयम्। तथाहि। अथात इत्याद्यसूत्रभाष्यकारेण धर्मे सामान्यतः प्रसिद्धिविशेषतो विप्रतिपत्तिं चोपन्यस्य चैत्यवन्दनादीनामेव धर्मत्वाद्बुद्धादिवाक्यान्येव विचार्याणीति पूर्वपक्षं कृत्वा सिद्धान्तसूत्रमर्थकथनपुरःसरमेवमवतारितम्। धर्माय वेदवाक्यानि विचारयिष्यन्वेदस्यार्थविवक्षां धर्ममात्रस्य विचारावसरं च प्रदर्शयितुमथातो धर्मजिज्ञासेति सूत्रयामास जैमिनिरिति। तेन पूर्वोत्तरभाष्यपर्यालोचनया धर्मपरवेदविचारस्यैव भाष्यकाराभिमतेरिति ज्ञायते। एतत्सूत्रस्य चायमर्थः। वेदमधीत्यानन्तरमधीतवेदस्य विवक्षितार्थस्य च विचारहेतुत्वाद्धर्मविचारः कर्तव्य इति। यद्यप्यथशब्देन कृत्स्नवेदाध्ययनस्य पूर्ववृत्तत्वमभिधायातःशब्देन च कृत्स्नवेदस्य विबक्षितार्थत्वहेतूकरणानुसारेण सर्ववेदार्थविचार-कर्तव्यताप्रतिज्ञैव प्राप्नोति। अन्यथा प्रतिज्ञाहेत्वोर्व्यधिकरणत्वापातात्। तथापि वेदशब्दं परित्यज्य धर्मशब्देन प्रतिजानतः सूत्रकारस्य वेदैकदेशे एव भारो विज्ञायते। प्रागुक्तयुक्तिसिद्धत्वात्। वेदार्थस्याग्निहोत्रादेर्विचारयोग्यत्वं तु धर्मत्वप्रयुक्तमेवाङ्गीकृतम्। व्यधिकरणत्वं तु विचार्यस्यैवाग्निहोत्रादेर्धर्मस्य दैवगत्या वेदार्थत्वस्यापि सत्त्वात्। तथा चाद्यसूत्रं धर्ममात्रविचारपरम्। तथा द्वितीयमपि चोदनालक्षणोऽर्थो धर्म इति सूत्रं वेदैकदेशविचारमेव गमयति। अत्र यश्चोदनालक्षणः स धर्म इति वचनव्यक्त्या धर्मलक्षणपरं सूत्रमर्थात्प्रमाणप्रतिज्ञासिद्धिरिति प्राभाकरमते यो धर्मः स चोदनालक्षण इत्यन्वये तु मुखतः प्रमाणप्रतिज्ञा अर्थाद्धर्मलक्षणसिद्धिरिति वार्तिककारीयमते च वेदप्रमाणक इत्यनुक्त्वा चोदनालक्षणक इति वदता सूत्रकारेण वेदैकदेशविचार एवाभिप्रेत इत्यवगमादित्यपि द्रष्टव्यम्। अधिकं विवरणोपन्यासादौ ज्ञेयम्। **अंशभेदेनेति**। सर्ववेदार्थ इति चांशभेदेनेत्यर्थः। आकाङ्क्षानुसारेणेत्यपि ज्ञेयम्। स एव भर्गेत्यस्य पश्चाद्योजनात्। प्राधान्यं भाष्यवाक्यान्न लभ्यत इत्यतस्तल्लाभं विवक्षाज्ञापककथनपूर्वकं विवक्षाश्रयणेन दर्शयति **स एवेतीति**।

**स०व्र०**— ननु अथातो धर्मजिज्ञासेति प्रथमसूत्रे धर्मस्य जिज्ञास्यत्वे प्रतिज्ञाते किंलक्षणको धर्म इत्यपेक्षायां विधिवाक्यज्ञाप्यत्वरूपचोदनालक्षणोऽर्थो धर्म इति द्वितीयसूत्रेणाभिहिते चोदनानामेव अप्रामाण्यान्न धर्मजिज्ञासा कर्तव्येत्याकाङ्क्षायां प्रथमाध्याये वेदप्रामाण्यस्य, द्वितीये कर्मोत्पत्तिविधिभेदस्य, तृतीये विहिताना-मङ्गाङ्गिभावस्य, चतुर्थे क्रतुपुरुषार्थप्रयुक्तानुष्ठेयपरिमाणस्य, पञ्चमे अनुष्ठानानुक्रमस्य, षष्ठे विध्यपेक्षिताधिकारस्य,





सप्तमे प्रकृत्युपदिष्टानामङ्गानां विकृतौ सामान्यातिदेशस्य अष्टमे आग्नेयोऽष्टाकपाल इत्यादिप्रकृत्युपदिष्टानामङ्गानां सौर्यं चरुं निर्वपेदित्यादिविकृतौ द्रव्यदेवतादिसामान्यद्वारेण विशेषातिदेशस्य, नवमे प्रकृत्युपदिष्टमन्त्रसामसंस्काराणां विकृतावतिदिष्टानां प्रकृतिगताग्नेयादिशब्दं विहाय विकृतिगतसूर्यायेत्यादिशब्दाध्याहारलक्षणस्योहस्य, दशमे विकृतावतिदिष्टानां कुशमयं बर्हिर्भवतीत्यादीनां शरमयं बर्हिर्भवतीत्यादिविशेषाङ्गोपदेशादिना बाधस्य, एकादशे सकृदनुष्ठितानां प्रयाजादीनामाग्नेयाद्यनेकशेष्युपकारकत्वलक्षणतन्त्रस्य, द्वादशे एकविप्रयुक्तस्य तत्स्थानाभिषिक्त-शेष्यन्तरोपकारकत्वरूपप्रसङ्गस्य प्रतिपादितत्वेन धर्मस्वरूपस्यैव विचारितत्वात् ब्रह्मणोऽपि धर्मादिवदवश्य-प्रतिपत्तव्यत्वात्तस्य चातीन्द्रियत्वेन प्रत्यक्षेण तत्प्रतिबद्धलिङ्गाभावेनानुमानेन सर्वस्याप्यागमस्य कार्यपर-त्वेनागमेन चासिद्धत्वात्तत्प्रतिपत्त्यर्थं ब्रह्ममीमांसारम्भ इत्यत आह **अभ्यधिकेति** । यूपं तक्षति, यूपमष्टाश्री-करोति, आहवनीये जुहोतीत्यादिवाक्यैरपूर्वस्यैव यूपाहवनीयादिविधिशेषत्वेन सिद्धिवद्ब्रह्मणोऽपि सिद्धेः संभवात्; असिद्धत्वे वाऽऽरोपितरूपेणोपपत्तेर्न ब्रह्मजिज्ञासा कर्तव्येति नैतच्छास्त्रमारम्भणीयमिति भावः । **अत्र केचिदिति** । चोदनालक्षणोऽर्थो धर्म इति द्वितीयसूत्रे विधिपरत्वेन सर्वस्य वेदस्य प्रामाण्यमुक्तं तदयुक्तम् । तथात्वे 'सदेव सोम्येदमग्र आसीत्' इत्यादिवेदान्तवाक्येषु विध्यश्रवणेन तेषां विधिपरत्वाभावादप्रामाण्यापत्तेः । न च 'आत्मा वा अरे द्रष्टव्य' इत्यादौ विधिश्रवणेन बिधिशेषत्वेन तदेकवाक्यतया सर्वस्यापि प्रामाण्यमिति वाच्यम् । द्रष्टव्य इत्यत्र तव्यप्रत्ययस्य 'तयोरेव कृत्यक्तखलर्थाः' इत्यनेन भावकर्मणोरेव विहितत्वेनाविधायकत्वात् । न च भावकर्मणोरिव विधावपि 'कृत्याश्च' इत्यनेन तेषां स्मरणाद्विधायकत्वमस्तीति वाच्यम् । तथापि गन्तव्यमित्यादिवद्भावविध्यर्थत्वेन कर्मविध्यर्थत्वाभावात् । न च कटस्त्वया कर्तव्यो, ग्रामो गन्तव्यः, स्वाध्यायो अध्येतव्य, इत्यादाविव द्रष्टव्य इत्यादिकर्मविधायकप्रत्ययादपि धात्वर्थविषयभूतविध्यबगमः संभवतीति वाच्यम्, दर्शनरूपक्रियाया द्रव्यभूतात्मगुणत्वेनस्वतन्त्रफलार्थकर्मविधान-स्यासंभवात्, कर्मसमबेतफलार्थमपि तद्विधानासंभवेनविधायकत्वानुपपत्तेः । न चात्मन एव कर्मत्वान्नोक्त दोष इति वाच्यम् । क्रियाजन्यफलशालिन एव कर्मत्वेनात्मनश्चानादिनित्यत्वेनोत्पाद्यत्वविकार्यत्वयोरसंभवात् । सर्वगतत्वेन नित्याप्तत्वेन चाप्यत्वासंभवात् । संस्काराभावेन संस्कार्यत्वस्याप्यसंभवेन क्रियाजन्यफलशालित्वासंभवेन कर्मत्वासंभवात् । न चाविद्याऽधर्मादिनिवृत्तिलक्षणमलापकर्षरूपसंस्कारसंभवेन संस्कार्यत्वात्कर्मत्वं संभवतीति वाच्यम् । संस्कृतस्योत्तरत्रोपयोगस्यावश्यकत्वेन प्रकृते चोपयोगाभावेन संस्कार्यत्वानुपपत्तेः । ननु सक्तून् जुहोतीत्यादि सक्तुहोमस्य क्रतुप्रकरणे श्रुतत्वेन अङ्गत्वादङ्गानां चार्थसंस्कारकत्वेन द्विविधत्वात् सक्तुहोमस्य प्रोक्षणादिवत्सक्तुगुणत्वेन प्रयाजादिवदर्थसंस्कारत्वासंभवात् विनियुक्तविनियोक्ष्यमाणसंस्कारत्वेन द्रव्यसंस्कारत्वेन द्रव्यसंस्कारस्य द्वैविध्यात् । व्रीहिभिर्यजेतेति बिनियुक्तव्रीहीनुद्दिश्य प्रोक्षणादिसंस्कारवत् विनियुक्तसंस्कारत्वे चाहवनीये जुहोतीति विनियोक्ष्यमाणस्याधानेन संस्कारकर्मत्वपरित्यागेन द्वितीयां च तृतीयार्थतया व्याख्याय सक्तुभिर्जुहोतीति वाक्यार्थसंभवेन स्वतन्त्रफलार्थं विधानवत् प्रकृतेऽप्यात्मानमिति परोक्तप्राधान्यं परित्यज्य द्वितीयां तृतीयार्थत्वेन व्याख्यायात्मना लोकमुपासीतेति वाक्यार्थसंभवेन स्वतन्त्रफलार्थमेव विधानमस्त्विति चेन्न । अवगमस्य सकर्मकत्वेन कर्मण आवश्यकत्वात् प्रकृते च ब्रह्मणः शब्दतः कर्मत्वाभावेऽपि अर्थतः कर्मत्वेन क्रियाजन्यातिशयस्य आवश्यकत्वेन प्रकृते चोक्तरीत्या कर्मत्वासंभवेन निष्कर्मकज्ञानविधानानुपपत्तेः ।





तस्माद्विधिपरत्वेन प्रामाण्ये वेदान्तानां प्रामाण्यं न स्यादिति भावः । **पृथगारभन्त इति** । कटस्त्वया कर्तव्य इत्यादाविव कर्माभिधायितव्यप्रत्ययाद्धात्वर्थविषयीभूतावगमनविधायकत्वसंभवात् । न च स्वतन्त्रफलार्थं कर्मसमवेतफलार्थं वा विधानमित्यादिना विकल्प्यैतद्दूषितमिति वाच्यम् । द्वितीयपक्षाभ्युपगमात् । न च कर्माभावः । आत्मन एव तत्त्वात् । न चोत्पाद्यत्वाद्यभावान्न कर्मत्वमिति वाच्यम् । अविद्याऽधर्मादिनिवृत्तिलक्षणातिशयसंभवेन कर्मत्वसंभवात् । न चोत्तरत्रानुपयोगान्न संस्कार्यत्वमिति वाच्यम् । अपुरुषार्थसंस्कारोपेतानामुत्तरत्रोपयोगापेक्षायामपि अविद्यानिवृत्तेः पुरुषार्थत्वेनोत्तरत्रोपयोगापेक्षाया एव अभावात् । तस्मादात्मन एव कर्मत्वेन कर्मसमवेतफलार्थं विधानसंभवेन 'आत्मा वा अरे द्रष्टव्य' इत्यादिवाक्येषु विधायकतव्यप्रत्ययस्मरणेन विधिपरत्वेन तेषां प्रामाण्यादेकवाक्यत्वेन सदेवेत्यादेः अपि प्रामाण्यान्न कश्चिद्दोष इति भावः । ननु वृद्धव्यवहारानुरोधेन सर्वस्यापि वेदस्य कार्यपरत्वे सिद्धबोधकत्वायोग इत्युक्तम्, तत्राह **वक्ष्यतीति** ।

**विठ्ठ०— अभ्यधिकाशङ्कामिति** । 'सदेव सौम्येदमग्र आसीत्' 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिषु ब्रह्मपदप्रधानवाक्येषु विध्यश्रवणात् न वेदान्तानां विधिपरत्वं इत्यादि अभ्यधिकाशङ्कां दर्शयन्तः तत्समाधानपूर्वकं विधिपरतामङ्गीकुर्वाणा विधिशेषतयैव ब्रह्ममीमांसां पृथगारभन्ते इत्यर्थः । **स एवेति** । स एव स्वप्राधान्येन सर्ववेदार्थो न तु कार्यशेषतया इत्याद्यं समाधानं निरस्तम् । सर्ववेदार्थोऽपि स एवेत्यनेन कार्यनिष्ठवस्तुतत्वनिष्ठभेदेन वेदे द्वैविध्यं कृत्वा वस्तुतत्वनिष्ठं वेदभागं विचारयितुमिदमारभ्यत इति द्वितीयं समाधानं निरस्तमित्यर्थः । **तदुपपादनाय** भगवतः सर्ववेदार्थत्वोपपादनाय । **पूर्ववाक्यं** स एव भर्गेत्यादि ।

**चषकः— तत्र** कतिपयेषामधिकाशङ्कां तत्समाहितिभङ्गीं च सामान्यतोऽभिधित्सते **तत्र केचिदिति** । अयमाशयः । विधायकप्रत्ययविनिर्मुक्तानामपि 'सदेव सोम्येदं, सत्यं ज्ञानम्' इत्यादीनां वेदान्तानां श्रूयमाणत्वान्न तेषां विधिपरत्वमध्यवसितुं सुशकम् । विधायकतव्यादिघटितानां तत्परत्वाध्यवसायात्तद्रहितानामपि तदेकवाक्यतया तत्परत्वोपपत्तिरिति शङ्का तु तादृशतव्यादीनां तयोरेवेत्यनुशिष्टभावकर्माद्यर्थकत्वस्यापि सूपगततया विधिपरत्वाध्यवसायकत्वाभावान्निरसनीया । न च भावकर्मविहितानामपि कृत्यप्रत्ययानां कृत्याश्चेति विधौ स्मृत्या ज्ञानविधित्वं सङ्गच्छत इति वाच्यम् । भावाभिधायकप्रत्यय एव गन्तव्यमित्यादाविव क्रियाप्रधानकतया क्रियायाः स्वतन्त्रफलोद्देशेन पुरुषं नियोक्तुं शक्नोति प्रकृतस्तु न प्राधान्येन भावमभिधत्ते अपि तु कर्मैवेति क्रियायास्तत्र गुणत्वेन स्वतन्त्रफलोद्देशेन विधातुमशक्यत्वात् । कर्माभिधायितव्यप्रत्ययादपि धात्वर्थविषयविध्यधिगतिर्ग्रामो गन्तव्यः स्वाध्यायोऽध्येतव्य इत्यादौ दृश्यत इति प्रकृतेऽपि तथाऽस्त्वितिशङ्काऽपि निर्दलैव । द्रव्यरूपकर्मविशेषणीभूतक्रियायाः कर्मकारकासमवेतत्वरूपस्वातन्त्र्यविशेषितफलोद्देशेन विधानानौचित्येन तत्समवेतत्वरूपपारतन्त्र्यविशेषितफलोद्देशेनैव तद्विशेषणीभूतायास्तस्या विधानमुपेतव्यम् । तच्च दुरुपगमम् । तथाहि । 'आत्मा द्रष्टव्य' इत्यादौ कर्मीभूतस्यात्मनोऽनादित्वेन व्रीहीनवहन्तीत्यादाववहननक्रियया वितुषव्रीहीणामुत्पादस्येवोत्पादलक्षणातिशयस्याविकारित्वेन तण्डुलान् पिनष्टीत्यादौ पेषणेन पिष्टीभावरूपविकारस्येव विकाररूपस्यात्मनो ज्ञानक्रियया नित्याप्तत्वेन गां दोग्धीत्यादौ गोर्दोहनक्रियया कादाचित्काप्तेरिवाप्तिरूपस्य संस्कारस्य मलापकर्षणेन गुणाधानरूपेण





द्वैविध्यादात्मनो निर्गुणत्वेन गुणाधानरूपस्यासंभवान्मलापकर्षणरूपस्य च तस्य स्रुचः संमार्ष्टीत्यादौ विनियुक्त-विनियोक्ष्यमाणयोरेव दर्शनादात्मनश्चोक्तोभयरूपत्वाभावेन तादृशस्याप्ययोगात्कर्मकारकगतातिशयस्य दुर्निरूपतया नात्मा द्रष्टव्य इत्यादेर्ज्ञानविधिरूपता सङ्गच्छते । स्वाध्यायोऽध्येतव्य इत्यादौ तु दर्शितप्रकारेष्वन्यतमस्यार्थ-ज्ञानादिरूपस्य संभवेन तत्र विधायकता निर्वहतीति । अथ क्रतुप्रकरणे श्रूयमाणे सक्तून् जुहोतीत्यत्र भस्मीभूतानां विनियोगासंभवेन संस्कारकर्मतां सक्तूनिति प्राधान्यं चापहाय तृतीयात्वेन विपरिणामेन सक्तुभिरिति गुणभावेन होमप्राधान्यं स्वीकृत्य स्वतन्त्रफलार्थतोरीकृता तद्वदात्मानमुपासीतेत्यत्र द्वितीयायास्तृतीयात्वेन विपरिणामेन श्रुतप्राधान्यानादरणेनात्मनेति गुणत्वोपगमेन स्वतन्त्रफलायैवोपासनं प्राधान्येन विधीयतामिति चेन्न । तत्र यथा होमप्राधान्येऽपि सकर्मकत्वाज्जुहोतेः सक्तव एव कर्मकारकतया भस्मीक्रियन्ते एवमवगमस्य सकर्मकत्वादर्थतः क्रमाभावेन तादृशार्थान्तरासंभवादन्तःकरणस्यात्मन एवार्थतः कर्मत्वमभिधातव्यं तच्चोक्तदिशा न सङ्गच्छत इति कर्मकारकविनिर्मुक्तं ज्ञातं स्वतन्त्रफलोद्देशेन न विधातुं सुशकमिति विध्यसंभवाद्वेदान्तानामविवक्षितार्थत्वा-द्धर्मजिज्ञासानन्तरं स्नातव्यमित्यधिकाशङ्का प्रदर्श्यत इत्यर्थः । 'व्युत्पत्त्यभावः प्रतिपत्तिदौस्थ्यमन्येन सिद्धत्वमथा-फलत्वम् । एतानि वै सूत्रचतुष्टयेन नारम्भमूलानि निराचकारे'ति रामानुजीयादयः सिद्धार्थे व्युत्पत्त्यभावेन वेदान्तानां ब्रह्मण्यमानत्वान्न तद्विचार आरभ्य इत्यादिरूपाधिकाशङ्कां दर्शयन्त इत्यर्थः । यद्वा केचिदिति मायावादिन इत्यर्थः । तैरपि सिद्धेऽर्थे व्युत्पत्त्यभावाभ्यधिकाशङ्कां प्रदर्श्य कार्यशेषे ब्रह्मणि व्युत्पत्त्यादेरुक्तत्वादित्यपि स्थितम् । **पृथगा-रभन्त इति** । ग्रामो गन्तव्यः कटस्त्वया कर्तव्य इत्यादौ कर्माभिधायकप्रत्ययादपि धात्वर्थनियोगसंप्रतीतेर्द्रष्टव्य इत्यादौ च क्रियाफलस्यात्मगतस्याविद्योच्छेदलक्षणातिशयस्य संभवादपुरुषार्थसंस्कारस्योत्तरत्रोपयोगापेक्षायामपि न पुरुषार्थसंस्कारस्य तदपेक्षेति द्रष्टव्य इत्यादेरेव विधित्वसंभवाद्युक्तं वेदान्तानां विधिपरत्वमिति । **अपरे त्विति** । अद्वैतवादिन इत्यर्थः । **आद्यं समाधानम्** । द्रष्टव्य इत्यादेः विधित्वसंभवात्कर्मकारकविधयोपासनाविधावन्वितं ब्रह्म जिज्ञासितव्यमिति समाधानम् । **द्वितीयम्** । वस्तुतत्वनिष्ठवेदभागं विचारयितुमिदमारभ्यत इति समाधानम् ।

**गूढ०**— अत्र कैश्चिद्वेदान्तानां विधिनिष्ठत्वमङ्गीकृत्यैवाभ्यधिकाशङ्का दर्शिता । तन्निराकरणाय तदीयमारम्भप्रकारं दर्शयति **अत्र केचिदिति । अभ्यधिकाशङ्कामिति** । अयमर्थः । चोदनालक्षणोऽर्थो धर्म इति द्वितीयसूत्रे सर्वस्यापि वेदस्य विधिपरत्वेन प्रामाण्यमुक्तम् । तत्र सदेवेत्यादिवेदान्तवाक्येषु विध्यश्रवणेन विधि-परत्वाभावाद्वेदान्तानामानर्थक्यम् । न चात्मा वा अरे द्रष्टव्य इत्यादौ विधिश्रवणात् कृत्यानां विधौ स्मरणात् विधिपरत्वमस्तीति वाच्यम् । तथाप्यस्य कर्मप्राधान्येन भावार्थप्राधान्याभावात्तस्यैव च स्वतन्त्रफलार्थं विधातुं शक्यत्वात् । न च कर्माभिधायिप्रत्ययादपि धात्वर्थविषयो विधिरवगम्यत एव स्वाध्यायोऽध्येतव्य इतिवदिति वाच्यम् । यत्रापि कर्म प्राधान्येनोच्यते आत्मानमुपासीतेत्यादौ तत्रापि तावत्स्वतन्त्रफलाय कर्मविधानमसंभवि क्रियाया द्रव्ये गुणभूतत्वात् । नापि कर्मकारकसमवायिफलाय विधानं आत्मनः कर्मत्वस्यैवासंभवात् । तथा ह्यात्मनो नित्यत्वेन अनुत्पाद्यत्वात् । अविकारत्वेन विकार्यत्वाभावात् । नित्याप्तत्वेनानाप्तत्वात् । न च संस्कार-कर्मत्वमेवास्तु विहितक्रियासामर्थ्यात् अज्ञानाद्यनादिमलापकर्षरूपसंस्कारसंभवादिति वाच्यम् । संस्कृतस्य





कर्मान्तरानुपयोगित्वेनासंस्कार्यत्वादीप्सिततमत्वासंभवेन कर्मत्वासंभवात् । नन्वेवमपि सक्तून् जुहोतीत्यादेः क्रतुप्रकरणे श्रवणेन सक्तुहोमस्य क्रत्वङ्गत्वमवगतम् । तत्राङ्गानि द्विविधानि । अर्थकर्माणि संस्कारकर्माणि च । तत्र क्रतुकार्याण्यनाश्रित्य स्वातन्त्र्येण विहितानि प्रयाजादीन्यर्थकर्माणि । व्रीह्यादिकारकगुणभूतानि संस्कारकर्माणि । तत्र न तावत्सक्तुहोमस्यार्थकर्मता । सक्तुद्रव्यगुणभूतत्वात् । संस्कारकर्म च द्विविधम् । विनियुक्तसंस्कारो यथा व्रीहिभिर्यजेतेति विनियुक्तव्रीहीनुद्दिश्य प्रोक्षणादिसंस्कारः । कश्चिद्विनियोक्ष्यमाणसंस्कारो यथा आहवनीये जुहोतीति विनियोक्ष्यमाणस्याधानेन संस्कारः । संस्कृतस्य च विनियोगः । तत्र होमेन भस्मीकृतानां सक्तूनामुभयथापि क्रतौ विनियोगाभावाद्वैयर्थ्यायोगाच्च संस्कारकर्मत्वं परित्यज्य सक्तूनिति प्राधान्यं च विहाय सक्तुभिरिति गुणभावेन कर्मप्राधान्यमुपधायार्थकर्मता निरूपता यथा तथा आत्मानमिति साध्यतया प्राधान्यं विहायात्मनोपासीतेति गुणत्वोपगमेन स्वतन्त्रफलाय प्राधान्येनोपासनं विधीयतामिति चेन्मैवम् । तत्र यथा होमप्राधान्येऽपि सकर्मकत्वा- द्धातोः सक्तव एव कर्मकारकतया भस्मीक्रियन्त एवमवगमस्यापि सकर्मकत्वादर्थतः कर्माभावे विधानासंभवात् । उपासनाद्यपरिज्ञानात् । न च ज्ञानमुपासनम्, आत्मा च विषयभावेन तन्निर्वर्तयतीति नोपासनाद्यपरिज्ञानमिति वाच्यम् । एवं तर्हि तदेवायातं ज्ञानेनात्मा आप्यत इति तच्चायुक्तम् । नित्याप्तस्य तदयोगात् संस्कार्यत्वे चोपयोगाभावात् । तस्माद्विध्याद्यभावेन वेदान्तानामानर्थक्यमिति । **पृथगारभन्त इति** । वेदान्तानां विधिपरत्वमेव स्वीकर्तव्यम् । कटस्त्वया कर्तव्य इत्यादौ कृत्यादीनां विधायकत्वदर्शनात् । अविद्याधर्मादिनिवृत्तिरूप- संस्कारहेतुभूताविद्योच्छित्तेराप्यत्वाच्च । न च संस्कृतस्यान्यत्र विनियोगाकाङ्क्षा, स्वयं पुरुषार्थत्वात् । अपुरुषार्थ- संस्कारस्य च विनियोगापेक्षत्वात्तथाच विधिपरत्वादारभ्यत्वमित्यर्थः । तत्र स एव न तु कार्यशेषतयेत्याद्यं समाधानमिति । उपलक्षणमेतत् । मन्तव्य इत्यादिकृत्यप्रत्ययान्न नियोगसंप्रत्यय इति । तत्र प्रष्टव्यम् । किमस्य लोके नियोगप्रत्यायकत्वं उत वेदे । नाद्यः । कटस्त्वया कर्तव्य इत्यादौ स्वयमेव विधायकत्वस्य दर्शितत्वात् । न द्वितीयः । अथातो धर्मजिज्ञासेतिप्रथमसूत्रे स्वाध्यायोऽध्येतव्य इत्यस्य विधायकत्वाङ्गीकारेणात्र शङ्काकारणाभावात् । ननु चतुर्विधस्यापि क्रियाफलस्य आत्मन्यसंभवस्योक्तत्वात् मन्तव्य इत्यादेर्न विधायकत्वम् । न च सक्तुन्यायेनात्मनि क्रियाफलं संभवतीति वाच्यम् । आत्मविषयज्ञानस्य सिद्धत्वोक्त्या सक्तुन्यायो न संभवतीत्युक्तमिति चेन्मैवम् । तथा हिरण्यं बिभृयादिति पक्षे प्राप्तस्य नियमविधिरभ्युदयफलस्तद्वत्प्रकृतेऽपि नियमविधिरस्तु । आत्मविषय- ज्ञानस्य असिद्धत्वेऽपि अभ्युदयफलार्थसिद्धस्यैवाभ्यास उपासनाख्यो विधिबलादङ्गीक्रियत इति को विरोधः । न च विधानबलादपि आत्मविषयज्ञानसन्तानो न कर्तव्यः । अवस्थात्रयेऽपि विज्ञानसन्तानाविच्छेदात् । तथाच नायं नियमविधिरिति वाच्यम् । एवं तर्ह्यनात्मप्रतिभासनिवृत्तये परिसंख्याविधिरदृष्टार्थोऽयं भवेत् । तथाच गतार्थ- त्वान्नाधिकशङ्कोपपद्यते । यदप्यात्मज्ञानादविद्योच्छेदस्तदुच्छेदात्संसारनिवृत्तिः फलमिति । तदपि न । सर्वेषां अहमित्यात्मज्ञानस्य नित्यसिद्धत्वेऽपि संसारनिवृत्तेरभावात् । न चाहंप्रत्ययावसेयादन्यदेवात्मरूपंपराकृतभोक्तृ- भोक्तव्यभावमात्मज्ञानविधिना ज्ञाप्यते । तादृगात्मज्ञानस्याद्याप्यसिद्धत्वान्न संसारनिवृत्तिरिति वाच्यम् । विधेर्हि सामान्यतः सिद्धस्य विशेषसिद्धौ सामर्थ्यम् । न त्वत्यन्तमसिद्धसद्भावे । तथाच सामान्यज्ञानस्य लोके सिद्धत्वेऽपि निष्प्रपञ्चात्मविषयज्ञानस्यासिद्धत्वेन गगनमुष्टिहननवत्तद्विधानमेवासंभावितमिति नायमारम्भप्रकारः साधुरिति दिक् ।





पूर्ववाक्यं स एव भर्गशब्दार्थ इत्येतत् । नन्वस्मिन्पक्षे जिज्ञास्य इत्येतद् व्यर्थम् । गतार्थत्वादेः परिहारस्य स एवेत्यादिनैव कृतत्वादित्यत आह **जिज्ञास्य इतीति** । तथाच सर्ववेदार्थत्वरूपाद्धेतोर्जिज्ञास्य इति साध्यसमर्पकं तदिति भावः । ननु कथं वेदस्य न कार्यानिष्ठत्वम् । किन्तु सिद्धपरत्वमेव इत्ययुक्तम् । कुतः, युक्तेरनुक्तत्वादित्यत्राह **वक्ष्यतीति** ।

**॥ प्रयोजनतत्संबन्धाभावशङ्कायाः निरसनम् ॥**

**॥ जिज्ञासायाः ज्ञानादिप्रणाड्या मोक्षफलकत्वम् ॥**

**'ज्ञानी' इत्यादिश्रुत्युदाहरणम्—**

**१६६ सु०— ब्रह्मजिज्ञासाया निष्प्रयोजनत्वं शङ्कितमपाकर्तुं अतःशब्दं व्याचष्टे ज्ञानीति ।**

**अनु०— ज्ञानी प्रियतमोऽतो मे तं विद्वानेव चामृतः ।**
**वृणुते यं तेन लभ्य इत्याद्युक्तिबलेन हि ।**
**जिज्ञासोत्थज्ञानजात्तत्प्रसादादेव मुच्यते ॥**

**तं विद्वानित्यनेन 'तमेवं विद्वानमृत इह भवति' इति वाक्यम्, एवशब्देन 'नान्यः पन्था अयनाय' इत्युत्तरवाक्यमवधारणार्थं च संगृहीतम् । चशब्दो वाक्यसमुच्चये । 'वृणुते यम्' इत्यनेन 'यमेवैष वृणुत' इति वाक्यं संगृहीतम् । आदिपदेन 'आत्मा वा अरे द्रष्टव्य' इत्यादेः संग्रहः । हिशब्दो हेतौ । एवशब्दः प्रत्येकमभिसंबध्यते ।**

**परि०—** एवं ॐब्रह्मपदाभ्यां चिदचिद्विलक्षणविषयसिद्धिमनुग्राह्यप्रमाणमन्येनागतार्थत्वं चोपपाद्य अथपदस्य भाष्य एव सङ्क्षेपविस्तराभ्यामर्थस्योक्तत्वेनेह वक्तव्यविशेषाभावादुपासनापादोपक्रमे सङ्ग्रहेण व्याख्यास्यमानत्वाच्चातःपदस्यैव ज्ञानादिप्रणाड्या मोक्षफलकत्वाद्बन्धस्य सत्यत्वाद्वेदस्य सिद्धरूपवस्तुपरत्वाद्वेदस्य प्रामाण्याद्वेदस्यान्विताभिधायित्वादित्येवंरूपहेतुपञ्चकपरत्वेन पञ्चधा व्याख्या आचार्येण प्रारभ्यते ज्ञानीत्यादिना स्वयं भगवतेत्यतः प्राक्तनग्रन्थेन । तत्र ज्ञानीत्यादेर्वैयर्थ्यनिरासाय प्रयोजनमाह **ब्रह्मेति** । ब्रह्मपदादिना चिदचिदन्यविषयसिद्धचैव ज्ञानस्वभावतोऽपीत्यत्र वक्ष्यमाणदिशा अथपदजिज्ञासापदाभ्यामन्यथानुपपत्त्या च तज्ज्ञानतत्प्रसादद्वारा मोक्षाख्यप्रयोजनसिद्धावपि ज्ञानादि-

त्रयस्यापि कर्मजत्वप्रयुक्तं यन्निष्प्रयोजनत्वं प्रयोजनं चेश्वरजिज्ञासाया इत्यादिना पूर्वपक्षे शङ्कितं तद्विचारैकजन्यज्ञानैकजन्यप्रसादद्वारकमोक्षाख्यफलत्वोक्त्या निवारयितुमित्यर्थः। 'ज्ञानीप्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम्' इति भागवतवाक्यं व्यक्तमिति तदनुक्त्वाऽन्यदाह **तमिति**। अवधारणार्थं चेति बहुव्रीहिः। तमेवं विद्वानेवेत्यवधारणोक्तौ योऽर्थो लभ्यते तदर्थकथनपरमुत्तरवाक्यं च गृह्यत इत्यर्थः। **वाक्येति**। भाष्योपात्तश्रुतिस्मृतिवाक्यानामन्योन्यसमुच्चय इत्यर्थः। **हेताविति**। एतच्च यस्मादित्यादिना अतो ब्रह्मजिज्ञासा कर्तव्येत्यन्तेनानुपदमेव व्यक्तम्। **प्रत्येकमिति**। प्रसादादेवेत्येवशब्दः जिज्ञासयैवोत्थाज्ज्ञानादेव जातात्प्रसादादिति संबध्यत इत्यर्थः। एतदप्यग्रे व्यक्तम्। एतच्चावधारणं 'सिद्धे सत्यारम्भो नियमाय' इति न्यायेन जीवान्यविषयसमर्पकब्रह्मपदेनैव ब्रह्मज्ञानादिद्वारा मोक्षफलकत्वसिद्धावपि पुनरत इति कथनाल्लब्धमिति भावः।

**गु०दी०**— **उत्तरवाक्यमवधारणार्थं** चेत्यत्र एवशब्दादन्ययोगव्यवच्छेदाख्यं यदवधारणं सोऽर्थो यस्य तत्। अनेन श्रुतिर्निरवकाशार्थग्राहित्वात्प्रबला। ''कर्मणैव हि संसिद्धिमास्थिता जनकादय'' इत्यादिस्मृतिस्तु अर्थत्रयसाधारणैवकारमात्रग्राहितया सावकाशत्वाद्दुर्बलेति सूचितम्।

**आनन्दः**— ननु जिज्ञास्योऽयं विधीयत इत्यनेन सूत्रार्थस्योक्तत्वात् ज्ञानीत्यादिभाष्यं व्यर्थमित्यतः तत्प्रयोजनं दर्शयति **ब्रह्मेति**। ननु नान्यः पन्था अयनायेति वाक्यसङ्ग्रहणमयुक्तं, ज्ञानस्य मोक्षसाधनत्वाप्रतिपादकत्वादित्यत आह **अवधारणार्थमिति**। अवधारणे इदमेव मोक्षसाधनं नान्यदिति अवधारणार्थमेवेत्यर्थः। नन्वस्तु प्रसादेन मोक्षः, तथापि जिज्ञासावैयर्थ्यं प्रसादस्य प्रकारान्तरेणैव संभवादित्यत आह **एवशब्द इति**। जिज्ञासाया एव ज्ञानं ज्ञानादेव प्रसादः। तस्मादेव मोक्ष इति प्रत्येकं संबन्ध इति भावः।

**श्रीनिधि०**— **अवधारणार्थमिति**। अन्ययोगव्यवच्छेदार्थमित्यर्थः। **एवशब्दः प्रत्येकमिति**। जिज्ञासयैव ज्ञानं ज्ञानेनैव प्रसादः प्रसादादेव मुच्यत इति बुद्ध्या विविच्य संबन्धः कर्तव्य इति भावः।

**वा०चं०**— ओतत्ववाचीत्यादि विधीयत इत्यन्तस्येव ज्ञानीत्याद्युत्तरग्रन्थस्यापि विषयोपपादकत्वभ्रान्तिं निवारयन्नेव तत्प्रतिपादनसार्थक्यप्रदर्शनपूर्वकं तत्प्रतिपाद्यमाह **ब्रह्मेति**। अत्र ज्ञानीत्याद्यनुव्याख्यानाद्यपादस्य ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति मामित्येकादशस्कन्धगतवाक्याद्यपादस्वरूपानुवादत्वेन अर्थकथनरूपत्वाभावादर्थानुवादरूपोत्तरपादादिसङ्ग्राह्यमेव दर्शयति **तं विद्वान् इत्यादिना**। नन्वेतद्वाक्यार्थाननुवादत्वादेवेत्यंशस्य वैयर्थ्यम्। न च नान्यः पन्था इति वाक्यान्तरसङ्ग्राहकत्वं तस्येति वाच्यम्। तस्य तेनासमानार्थत्वात्। एवेत्येतावन्मात्रेण वाक्यविशेषालाभाच्च समानार्थकत्वेऽपि वाऽन्यशब्दस्य कर्मान्यपरत्वे प्रकृतविरोधापाताच्चेत्यतो जिज्ञासाद्यतिरिक्तसाधनस्य पूर्वपक्षिणा शङ्कितत्वेन तन्निवर्तके जिज्ञासोत्थेति वाक्ये जिज्ञासादीनां साध्यसाधनभावस्य साधनान्तरव्यावृत्तेश्च प्रतिपाद्यमानतया तत्र प्रमाणसमर्पके पूर्ववाक्ये उभयविधवाक्योपादानाय





विद्वानेवेत्यनूदिते विद्वानित्येतत्समभिव्याहारेण वेदनातिरिक्तसाधननिषेधकवाक्योपादानसूचनात् । अवधारण-फलान्यनिषेधप्रतिपादकस्य नान्य इत्यस्यावधारणार्थकैवकारेण समानार्थत्वसंभवान्नान्य इत्यस्य च तमेवं विद्वानित्यत उत्तरत्वेन पूर्वप्रकृतवेदनान्यस्यैवान्यशब्देन ग्रहणयोग्यतयाऽप्रकृतकर्मादिरन्यस्यायोग्यत्वाद्युक्तः प्रकृतोपयोग इत्यभिप्रेत्याह **एवशब्देनेति** । एवशब्दवच्चशब्दस्याप्यर्थानुवादकत्वभ्रान्तिं निराचष्टे **चशब्द इति** । जिज्ञासोत्थेत्युत्तरवाक्यानुरोधेनादिपदसङ्ग्राह्यमाह **आदीति** । हिशब्दस्य प्रसिद्ध्याद्यर्थकत्वे ज्ञानीत्यादेरतःशब्द-व्याख्यानरूपत्वाप्रतीतेराह **हिशब्द इति** । ज्ञानप्रसादमोक्षाणां साधनान्तरसाध्यत्वस्य पूर्वपक्षितत्वात्तन्निवर्तके जिज्ञासोत्थेतिवाक्ये बुद्ध्या विवेकेन प्रत्येकमेवशब्दसंबन्धो विवक्षित इत्याह **एवेति** ।

**वा०र०— तत्प्रतिपादनसार्थक्येति** । प्रतिपाद्यमाहेत्युत्तरवाक्यस्य ज्ञानीत्युत्तरवाक्यप्रतिपाद्यमाहे-त्यर्थकत्वात् तेन वाक्येन यदर्थप्रतिपादनं क्रियते तत्प्रतिपादनस्य सार्थक्येत्यर्थः । एकादशेत्यतःपरं भागवतेति पूरणीयम् । **अर्थकथनरूपत्वाभावादित्यादि** । अनेन निमित्तकथनेन मूले सङ्ग्राह्यप्रदर्शने वैषम्यायोगशङ्कानिरा-करणम् । उत्तरपादादीत्यादिपदेन द्वितीयार्धपूर्वपादसङ्ग्रहः । अत्रोत्तरपादेऽप्यंशभेदेन सङ्ग्राह्यमित्यपि विवेक्तव्यम् । **एतद्वाक्येति** । तमेवं विद्वानित्येतद्वाक्येत्यर्थः । अनेनामृत इत्यस्यैतद्वाक्यार्थानुवादरूपत्वमस्तीति सूचयता **तं विद्वानितीति** मूलम् । तं विद्वानमृत इत्यनेनेति व्याख्येयमित्यपि सूचितं भवति । **तस्य तेनेति** । वाक्या-न्तरस्थैवशब्देनेत्यर्थः । वाक्यविशेषलाभमङ्गीकृत्यासमानार्थत्वमुक्तम् । वस्तुतस्तु वाक्यविशेषलाभ एवायुक्त इत्याह **एवेत्येतावन्मात्रेणेति** । **समानार्थकत्वेऽपीति** । एतच्च वाक्यविशेषलाभोपलक्षणम् । **प्रकृतविरोधेति** । ज्ञानस्य मोक्षकारणतायाः प्रागुक्तत्वेन कर्मान्यनिषेधस्य प्रकृतज्ञानसाधनेनाविरोधित्वादिति भावः । **अतिरिक्त-साधनस्येति** । कर्मणा ज्ञानमातनोतीत्यागमोक्तकर्मरूपस्येत्यर्थः । **तन्निवर्तके जिज्ञासोत्थेति वाक्य इति** । तन्निवर्तकतयाऽतःशब्दव्याख्यानपरे जिज्ञासेति वाक्य इत्यर्थः । क्वचित्तथैव पाठः । उत्तरवाक्येति च व्याख्येयम् । वक्ष्यति च **पूर्ववाक्य इति** । **साध्यसाधनभावस्येति** । प्रतिपाद्यमानतयेति संबन्धः । प्रतिपादयिष्यमाणतयेत्यर्थः । **तत्रेति** । तदुभयत्रेत्यर्थः । **उभयवाक्येति** । उभयविधार्थप्रतिपादकवाक्यद्वयेत्यर्थः । अन्यथा पूर्वोत्तरविसंवादापत्ते-रिति भावः । एवेत्यनेन वाक्यविशेषलाभं दर्शयति **विद्वानित्येतदिति** । केवले तत्सूचकत्वाभावेऽपीति शेषः । **अवधारणेति** मूलोक्तं समानार्थत्वम् उपपादयति **अवधारणेति** । ननु वेदनातिरिक्तसाधननिषेधकवाक्योपादानसूचनं विद्वानेवेत्यनेन भाष्येण कृतमित्युक्तम् । तत्कथम् । नान्य इति वाक्येनापि कर्मान्यनिषेधस्यैव वक्तुं शक्यत्वेन वेदनातिरिक्तेति प्रकृताप्राप्तेरित्यतः विद्वानित्यनेन वेदनातिरिक्तलाभसूचनप्रकारं दर्शयन् विद्वानित्येतत्समभि-व्याहारस्य उत्तरमिति मूलानुसारेण प्रागुक्तसाधनसूचनसाधकत्वं चोपपादयति **नान्य इत्यस्य चेति** । अत एवात्र श्रुतिविचारसूत्रेणापि प्रवृत्तिरिति न वेदनातिरिक्तेत्यादिपूर्वग्रन्थेन गतार्थतेति ज्ञेयम् । **पूर्वप्रकृतेति** । पूर्वत्र मोक्षसाधनतया प्रकृतं यद्वेदनमिति योज्यम् । योग्यतयेत्यतःपरं तस्यैव निषेधोपपत्तावपीति पूरणीयम् । एवं अयोग्यत्वादित्यनन्तरं तन्निषेधायोगादिति शेषः । **प्रकृतेति** । प्रकृतज्ञानमोक्षसाधनतया विरोधाभावस्तदुपयोग-श्चेति योज्यम् । **अर्थानुवादकत्वेति** । समानार्थकयत्किंचिद्वाक्यार्थानुवादत्वेन तद्वाक्यसूचकत्वभ्रान्तिमित्यर्थः ।





**जिज्ञासोत्थेत्युत्तरेति**। तत्र जिज्ञासयैव ज्ञानं नान्येनेत्यर्थप्रतिपादनादिति भावः। **अतःशब्देति**। अतो ब्रह्मजिज्ञासा कर्तव्यैवेत्युत्तरवाक्यानुसारेण यतो मुच्यत इत्यन्तानन्तरमत इत्येवमतःशब्दव्याख्यानरूपत्वेत्यर्थः। प्रसिद्धचादीत्यादिपदेन हेतुत्वार्थत्वव्यतिरिक्तावधारणाद्यर्थत्वपरिग्रहः। **तन्निवर्तक इति**। तन्निवर्तकतया अतःशब्दव्याख्यानरूपेत्यर्थः। **बुद्ध्येति**। प्रसादादेवेति संबद्धस्यापि जिज्ञासयैवोत्थज्ञानेनैव जन्यप्रसादादिति संबन्ध इत्यर्थः।

**स०व्र०— प्रत्येकमभिसंबध्यत इति**। जिज्ञासयैव ज्ञानं, ज्ञानेनैव प्रसादः, प्रसादादेव मोक्ष इति प्रत्येकमभिसंबन्ध इत्यर्थः।

**विठ्ठ०—** 'ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति मामि'ति एकादशस्कन्धगतवाक्यस्य स्वरूपत एवानुवादात् अर्थतोऽनुवादेन लब्धान्येव वाक्यानि दर्शयति **तमेवं विद्वानित्यादिना**। **एवशब्दः प्रत्येकमिति**। प्रसादादेवेत्येवशब्दो जिज्ञासाज्ञानप्रसादशब्दैः बुद्ध्या विवेकेन संबध्यत इत्यर्थः।

**गूढ०—** ननु जिज्ञास्योऽयं विधीयत इत्यनेन सूत्रार्थस्योक्तत्वात् ज्ञानीत्यादिभाष्यं व्यर्थम् इत्यतस्तत्प्रयोजनं दर्शयति **ब्रह्मेति**। ननु नान्यः पन्था इति वाक्यसङ्ग्रहणमयुक्तम्, ज्ञानस्य मोक्षसाधनत्वाप्रतिपादकत्वादित्यत आह **अवधारणार्थमिति**। अवधारणे इदमेव मोक्षसाधनं नान्यदित्यवधारणार्थमेवेत्यर्थः। नन्वस्तु प्रसादेन मोक्षः, तथापि जिज्ञासावैयर्थ्यं प्रसादस्य प्रकारान्तरेणैव संभवादित्यत आह **एवशब्द इति**। जिज्ञासाया एव ज्ञानं ज्ञानादेव प्रसादः तस्मादेव मोक्ष इति प्रत्येकं संबन्ध इत्यर्थः।

**१६७ सु०— यस्मात् तस्य ब्रह्मणो नारायणस्य प्रसादात् परमानुग्रहादेव मुच्यते संसारात्। न तु कर्मादिनेति 'तमेवं' 'यमेवैष वृणुत' इति श्रुतिबलेन गम्यते। यद्यपि 'तमेवम्' इति परमपुरुषप्रसादो न श्रूयते। तथाऽपि 'यमेवैष वृणुत' इति वाक्यानुरोधेन तत्राप्यनुसन्धेयः। निमित्तेन नैमित्तिकोपलक्षणात्। मुमुक्षुसंबन्धिसाधनावधारणाय तु न साक्षादुक्तः। वरणं तु प्रसाद उच्यते। 'अपाम सोमम्' इत्याद्यास्तु श्रुतयः सावकाशत्वादन्यथा योज्याः। 'ईश्वरपरमप्रसादश्च तज्ज्ञानादेव भवति, न पुनः कर्मादिने'ति 'ज्ञानी प्रियतमः', 'तमेवं विद्वानि'त्युक्तिबलेनावगम्यते। विद्वानित्यस्यापि प्रसादातिशयद्वारेणेत्यर्थपर्यवसानस्योक्तत्वात्। कमदिरनुग्रहमात्रहेतुत्वेनापि तद्वचनं सार्थकम्। ईश्वरज्ञानं च तज्जिज्ञासयैव नान्येनेति 'आत्मा वा अरे द्रष्टव्य' इति परमात्मदर्शनानुवादेन तत्साधनतया 'श्रोतव्य' इत्यादिना श्रवणादिविधायकोक्तिबलेन प्रतीयते। कर्मणां त्वन्तःकरणशुद्धिद्वारेण ज्ञानाङ्गत्वोपपत्तेस्तद्वाक्यं सार्थकं भविष्यति। अतो ब्रह्मजिज्ञासा कर्तव्येति संबन्धः।**

**बिन्दुः— यस्मादिति**। अतो ब्रह्मजिज्ञासा कर्तव्येति व्यवहितेन वक्ष्यमाणेन संबन्धः। **निमित्तेनेति**। ज्ञानप्रसादयोः साध्यसाधनरूपत्वेन निमित्तनिमित्तिभावादित्यर्थः। ननु लाक्षणिकनिर्देशो





किं प्रयोजनमत आह **मुमुक्ष्विति**। प्रसादस्येश्वरनिष्ठत्वेन मुमुक्षुसंपाद्यसाधनावधारणावगतिर्न स्यादिति भावः। **अनुग्रहमात्रहेतुत्वेनेति**। अपामेत्यादिवचनं ज्ञानिकृतकर्मणः मुक्तावानन्दातिशयकारित्व-रूपानुग्रहहेतुत्वप्रतिपादकं न तु मोक्षहेतुताप्रतिपादकमित्यर्थः। अथवा 'तत्कर्म हरितोषं यदि'त्येतद्वचनं मोक्षसाधनीभूतमहाप्रसादहेतुत्वं कर्मणो न प्रतिपादयति किन्तु 'प्रसादात्त्वधमाद्विष्णोः स्वर्गलोक उदाहृत' इत्युक्तस्वर्गसाधनीभूतोऽधमप्रसाद एव 'कर्मणा त्वधमः प्रोक्तः प्रसाद' इति विशेषवचनानुसारेण स्वर्गसाधनीभूताल्पप्रसादमात्रहेतुत्वेनाप्युपपन्नम्। स एव ह्यनुग्राह्यशब्दार्थ इति। **कर्मणां त्विति**। जिज्ञासुकृतकर्मणां ज्ञाननिष्पादकत्वमिति अपामेत्यस्यैव वर्णकान्तरम्।

**परि०**— भाष्यवाक्यानि योजयति **यस्मादित्यादिना**। इति श्रुतिबलेन गम्यत इत्ययुक्त-मित्याक्षिप्य समाधत्ते **यद्यपीति**। **निमित्तेनेति**। ज्ञानेन तज्जन्यप्रसादोपलक्षणात् इत्यर्थः। तमेवं विद्वानित्यस्य तत्प्रसादवानित्यर्थो लक्षणया ध्येयः। वेदनजन्यत्वरूपशक्यसंबन्धसत्त्वात् इति भावः। तथैव श्रुतौ कुतो नोक्तमित्यत आह **मुमुक्ष्विति**। प्रसादो हीश्वरसंबन्धी सन्मोक्षसाधनं ज्ञानं च मुमुक्षुनिष्ठत्वात्तत्संबन्धि सत् मोक्षसाधनं तत्र तत्प्रसादवानमृत इह भवतीत्युक्तौ नान्यः पन्था इति वाक्यशेषो व्यर्थः। भगवन्निष्ठस्य प्रसादादन्यस्य मोक्षसाधनतयाऽप्रसक्ततया तन्निरासायोगात्। विद्वानमृत इत्युक्तौ तु मुमुक्षुनिष्ठं भगवद्वेदनमिव कर्माप्यपाम सोममित्यादि पूर्वपक्ष्युक्तश्रुत्यादिवशेन प्रसक्तमिति तन्निरासकतया नान्यः पन्था इति वाक्यशेषोऽर्थवान्। मुमुक्षुनिष्ठं ज्ञानमेव मोक्षसाधनं न तु कर्मेत्यवधारणोपपत्तेः। अतः प्रसादो न साक्षादुक्त इत्यर्थः। एतेन नान्यः पन्था इति ज्ञानादन्यस्य साधनत्वनिषेधात्कथं प्रसादः साधनत्वेन निवेश्यत इति प्रत्युक्तम्। मुमुक्षुसंबन्धिसाधनान्तरस्यैव निषेधात्। **यमेवैष** इति वाक्यानुरोधेनेत्ययुक्तम्। तत्र प्रसादाप्रतीतेरित्यत आह **वरणं त्विति**। पूर्वपक्ष्युक्तश्रुतेः का गतिरित्यत आह **अपामेति**। **सावकाशत्वादिति**। 'भाक्तं वा अनात्मवित्त्वात्' इति वैराग्यपादीयसप्तमाधिकरणभाष्यटीकयोरुक्तदिशेति भावः। ज्ञानजादित्यंशं व्याचष्टे **ईश्वरेति**। यस्मादित्येतदत्राप्यन्वेति। तत्कर्म हरितोषं यदित्यादिवचनाविरोधायोक्तम् **परमेति**। कर्मजस्त्वपरम इति भावः। एवशब्दः प्रत्येकमभिसंबध्यत इत्येतद्व्यक्तीकृतं **ज्ञानादेवेति**। **तद्वचनमिति**। तत्कर्म हरितोषं यदित्यादि पूर्वपक्ष्युक्तवचनमित्यर्थः। जिज्ञासोत्थेत्येतद्योजयति **ईश्वरज्ञानं चेति**। यस्मा-दित्येतदत्राप्यन्वेति। कर्मणा ज्ञानमातनोतीत्यादिपूर्वपक्ष्युक्तवचनानां गतिम् आह **कर्मणां त्विति**। **ज्ञानाङ्गत्वेति**। 'उत्क्रमिष्यत एवं भावादित्यादौ तथा वक्ष्यमाणत्वादिति भावः। जिज्ञास्योऽयं विधीयत इत्यनेनान्वयमुपेत्यातःशब्दाध्याहारेणार्थमाह **अत इति**।

**गु०दी०**— **जिज्ञासयैव** इति वदता "आत्मा वै" इत्यत्रोक्तवैशब्दः एवकारार्थः। **प्रसिद्ध्यर्थकत्वे**ऽपि प्रसिद्धस्यैव ग्राह्यत्वेन, एवकारार्थ एव तात्पर्यमिति सूचितम्।

**यादु०**— **निमित्तेनेति**। यथा लाङ्गलेन वयं जीवाम इत्यत्रान्ननिमित्तेन लाङ्गलेन तत्कार्यमन्नं लक्ष्यते तथा प्रकृतेऽपि ज्ञानलक्षणेन प्रसादसाधनेन तत्कार्यप्रसादौ लक्ष्यत इत्यर्थः। लक्षणावृत्तिरर्थगतेति मतमाश्रित्येद-मुक्तमित्यवगन्तव्यम्। उपलक्षणे कारणमाह **मुमुक्षुसंबन्धीति**। अयं भावः। अत्र हि 'नान्यः पन्था अयनाय विद्यत' इत्यन्यनिषेधेनोक्तावधारणं प्रतीयते। तेन मुमुक्षुसंबन्धीनि यानि साधनानीष्टापूर्तादीनि कर्माणि ब्रह्मज्ञानं चेति प्रसिद्धानि तेषु ब्रह्मज्ञानमेव मोक्षसाधनं नोक्तरूपं कर्मेति मुमुक्षुनिष्ठकर्माद्यनेकसाधनेषु ज्ञानस्यैव मोक्षसाधनत्वनिर्धारणाय प्रसादो न कण्ठरवेणोपात्तः। तस्य भगवन्निष्ठत्वेन मुमुक्षुसंबन्धित्वाभावात्। यदि चात्र प्रसादोऽभिधीयते तदा तस्यैव मोक्षसाधनताप्रतीतिः स्यात्। न तु मुमुक्षुसंबन्धित्वावच्छिन्नसाधनेषु अभिलषितैकसाधनताप्रतीतिरिति। ज्ञानस्य भक्तिभागत्वेन ज्ञानशब्देन भक्तेरुपलक्षणान्मुमुक्षुसंबन्धित्वेऽपितस्या न व्यावर्त्यत्वमिति द्रष्टव्यम्। **सावकाशत्वादिति**। 'अमृतो वाव सोमपो भवति यावदिन्द्रो यावन्मनुर्यावदादित्य' इति श्रुत्युक्तप्रकारेणेति भावः। **अनुग्रहमात्रहेतुत्वेनेति**। अधमप्रसादहेतुत्वेनापीत्यर्थः। **तद्वचनमिति**। 'तत्कर्म हरितोषं यत्' इत्यादिवचनमित्यर्थः। **तद्वाक्यमिति**। कर्मणा ज्ञानमातनोतीत्यादिवाक्यमित्यर्थः।

**वं०प०**— ननु तं विद्वानित्यनेन तमेवं विद्वानिति वाक्यं सङ्गृहीतमिति यथोच्यते एवं ज्ञानी प्रियतमोऽतो म इत्यनेन प्रियो हि ज्ञानिनोऽत्यर्थमिति वाक्यं सङ्गृहीतमिति कस्मान्नोक्तमिति चेत्। उच्यते— **'ज्ञानी प्रियतमोऽतो** मे ज्ञानेनासौ बिभर्ति मामि'त्येवमेवैकादशस्कन्धवाक्यसद्भावात्तथा नोक्तमिति संप्रदायः।

**आनन्दः**— ननूदाहृतश्रुत्यादिजातं प्रसादस्य मोक्षसाधनत्वे वा मानं, उक्तसर्वार्थे वा। नाद्यः। तमेव-मित्यादौ प्रसादस्य मोक्षसाधनताया अप्रतीतेः। न द्वितीयः। तत्रास्मिन्नर्थे तासां मानत्वमिति न प्रतीयते। प्रसादशब्दार्थाप्रतीतेश्चेत्यत आह **यस्मादिति**। ननु प्रसादस्य मोक्षसाधनत्वे तमेवेति श्रुत्युदाहरणमयुक्तम्। तत्र ज्ञानस्यैव मोक्षसाधनतायाः उक्तत्वेन प्रसादस्य तदनुक्तेरित्यत आह **यद्यपीति**। ननु तमेवेत्यत्र प्रसादो-ऽनुसन्धेय इत्युक्तं तत्र किं प्रसादवाचकं पदमध्याहर्तव्यमित्युच्यते ज्ञानपदस्यैव तत्परत्वमिति वा। **नाद्यः** अश्रुतकल्पनाप्रसङ्गात्। द्वितीयेऽपि किं शक्त्या तत्परत्वं उत लक्षणया। नाद्यः निघण्टुनिरुक्तादेरभावेन तदभावात्। न द्वितीयः शक्यसंबन्धाभावादित्यत आह **निमित्तेनेति**। तथाच निमित्तेन ज्ञानेन नैमित्तिकः प्रसादो लक्ष्यत इति निमित्तनैमित्तिकभावः एव शक्यसंबन्ध इति भावः। नन्वियं रूढलक्षणा वा स्वतन्त्रलक्षणा वा। नाद्यः बहुलप्रयोगाभावात्। न द्वितीयः तस्याः प्रयोजनं विना असंभवात्। अतस्तत्प्रयोजनं वक्तव्यमित्यत आह **मुमुक्ष्विति**। प्रसादस्तु मोक्षदातृसंबन्धीति भावः। ननु यमेवेति श्रुतौ वरणमेवोक्तं न तु प्रसादोऽतः कथं तदनुसारेण तमेवेति श्रुतेः प्रसादपरत्वमिति तत्राह **वरणमिति**। तर्हि कर्मणो मोक्षसाधनत्वप्रतिपादकश्रुतीनां का गतिरित्यत आह **अपामेति**। नन्वस्तु प्रसादस्य मोक्षसाधनत्वं तथापि तत्कर्म हरितोषं यदिति श्रुतेः कर्मणैव





तत्संभवेन जिज्ञासाया वैयर्थ्यमित्यत आह **ईश्वरेति** । ननु कथं तत्र ज्ञानस्य प्रसादसाधनत्वमुच्यते, तद्वाचकपदाभावादित्यत आह **विद्वानिति** । तद्वचनस्य का गतिरत्राह **कर्मदेरिति** । नन्वेवमपि कर्मणा ज्ञानमातनोति इति श्रुतेः कर्मणैव ज्ञानस्य संभवाज्जिज्ञासाया वैयर्थमित्यत आह **ईश्वरज्ञानमिति** । तर्हि कर्मणेति श्रुतेः का गतिरित्यत्राह **कर्मणां त्विति** । वाशब्दोऽवधारणार्थः । प्रसादादेव मुच्यत इत्यस्य साकाङ्क्षत्वादित्यत आह **अत इति** ।

**कं०रा०**— **निमित्तेनेति** । तमेवं विद्वानिति वेदनरूपनिमित्तवाचिना शब्देन तत्साध्यप्रसादस्योपलक्षणादित्यर्थः । ननु तमेवं विद्वानिति श्रुतौ वेदनमुक्त्वा तत्साध्यप्रसादः कस्मादुपलक्ष्यते साक्षादेवोच्यतामित्यत आह **मुमुक्ष्विति** । साक्षात्प्रसादशब्देनैव तदुक्तौ मुमुक्षोरभिमतफलसाधनमयं प्रसाद इति निर्धारयितुं न शक्यते । 'तत्कर्म हरितोषं यत्', 'एवं ज्ञाते तु भगवाननादिः पुरुषोत्तमः । प्रसीदत्यच्युत' इत्यादिना प्रसादस्य नानाविधत्वावगमात् । वेदनरूपनिमित्तेन तन्निमित्तकप्रसादोपलक्षणे तु वेदनजन्यप्रसादो मुमुक्षोरभिमतफलसाधनमित्यवधारयितुं शक्यत इत्युपलक्षितः प्रसादो न साक्षादुक्त इत्याशयः । ननु परमानुग्रहादेव मुच्यत इति यदुक्तं तदनुपपन्नम् । अपाम सोमममृता अभूमेत्यादौ सोमपानादिनाऽपि मुक्तेरुक्तत्वादित्यत आह **अपामेति** । **ज्ञानी प्रियतम इति** । ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति मामिति भगवद्वाक्यं भागवतस्थम् । ननु परमप्रसादश्च तज्ज्ञानादेवेत्ययुक्तम् । तत्कर्म हरितोषं यदित्यादिवचनेन कर्मादेरपि तद्धेतुत्वावगमादित्यत आह **कर्मेति** । नन्वीश्वरज्ञानं च तज्जिज्ञासयैवेत्यनुपपन्नम् । कर्मणा ज्ञानमातनोतीत्यादिवाक्येन कर्मणापि ज्ञानसाधनत्वावगमादित्यत आह **कर्मणां त्विति** । कर्मणां ज्ञानोत्पत्तावङ्गत्वमेव न प्रधानसाधनत्वमित्येतदभिप्रायं प्रागुक्तं जिज्ञासयैवेत्यवधारणमिति भावः । अत्र च प्रमाणं "श्रवणं मननं चैव ध्यानं भक्तिस्तथैव च । साधनं ज्ञानसंपत्तौ प्रधानं नान्यदिष्यत" इत्यादि द्रष्टव्यम् ।

**श्रीनिधि०**— संबन्धप्रकारं दर्शयति **यस्मात्तस्येत्यादिना** । **निमित्तेन नैमित्तिकेतीति** । निमित्तवाचकपदेन नैमित्तिकस्य साध्यस्य प्रसादस्योपलक्षणादित्यर्थः । अनेन मुख्यार्थसंबन्ध उक्तो वेदितव्यः । **मुमुक्षुसंबन्धीति** । साधनं द्विविधम् । मुमुक्षुसंबन्धि ईश्वरसंबन्धि चेति । तथा च मुमुक्षुसाधनमध्ये ज्ञानमेव मोक्षसाधनं नान्यदित्यवधारणायेत्यर्थः । अतः प्रसादो न व्यवच्छिद्यत इति भावः । **सावकाशत्वादिति** । यत्किञ्चित्कालीनमृत्यभावमादायाप्युपपत्तेः । अन्यथा यावदिन्द्रो यावन्मनुरित्याद्युत्तरविरोधापत्तेः इति भावः । **तद्वचनं** तत्कर्म हरितोषं यदीत्यादिवचनम् । **तद्वाक्यमिति** । 'कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवती'त्यादि वाक्यम् ।

**वा०चं०**— नन्वेकवाक्यत्वादस्य नैवकारस्य प्रत्येकं संबन्धः संभवति । प्रसादशब्दस्य यत्किञ्चित्प्रसादपरत्वे च कर्मादेर्मोक्षसाधनत्वं वदताऽपि कर्मादिसाध्यस्य तस्याङ्गीकर्तुं शक्यत्वेन तस्य जिज्ञासोत्थज्ञानजन्यत्वाभावेन भवदभिमतजिज्ञासाप्रयोजनत्वासिद्धिः । मुच्यत इत्यस्य पापादिमुक्तिपरत्वे तस्याः कर्मादिसाध्याऽधमप्रसादादिसाध्यत्वस्य सिद्धान्तेऽप्यङ्गीकारात्साधनान्तरव्यावृत्त्यर्थकैवकारानुपपत्तेः इति जिज्ञासावश्यकत्वस्य असिद्धिश्च । श्रुतेरेव साधकत्वाद्बलशब्दप्रयोगे च न प्रयोजनं पश्यामः । हिशब्दस्य हेत्वर्थकत्वे वाक्यापूर्तिश्च इत्यतो बुद्ध्या विवेकेन भिन्नवाक्यत्वमत्राभिप्रेत्योक्तशङ्कापरिहाराय वाक्यं योजयति **यस्मादित्यादिना** । अत्र तस्य ब्रह्मण इत्यनेन विषयफलसंबन्धप्रदर्शनम् । पररीत्या तस्य निर्गुणत्वे प्रसादोत्त्यनुपपत्तेरुक्तं **नारायणस्येति** ।





भिन्नवाक्यताप्रदर्शनेन प्रथमशङ्कापरिहारः । परमानुग्रहादिति विशेषविवक्षया द्वितीयायाः शङ्कायाः संसारादिति शेषोक्त्या तृतीयायाः श्रुतेरापातप्रतीत्यैतदर्थालाभेऽपि प्रमाणान्तराविरोधेन वाक्यार्थपर्यालोचनायामेतदर्थलाभ इत्यभिप्रेत्य बलशब्दप्रयोग इत्याह **यद्यपीति** । पुरुषग्रहणेन तमेवमिति वाक्यस्य पुरुषसूक्तस्थत्वाद्युक्तं नारायण-परामर्शकत्वमिति सूचयति । परमग्रहणेन सोऽयं पुरुष इत्यपीत्युक्तस्य न्यायस्य वक्ष्यमाणस्य चानुसन्धेयतां सूचयति । **श्रूयते** वचनवृत्त्या बोध्यते । **अनुसन्धेय इति** । विद्वांस्तत्प्रसादातिशयवांश्च इति विद्वच्छब्दलक्षणां सूचयति । वाक्यानुरोधेनेत्यनेन लक्षणाप्रयोजकमुख्यार्थानुपपत्तेः प्रदर्शनम् । निमित्तेनेति शक्यसंबन्धस्य । मुमुक्ष्वित्यादिना च प्रयोजनस्य । एवं तमेवमिति वाक्ये बलशब्दप्रयोजनमुपपाद्य यमेवैष इत्यत्रापि तदुपपादयति **वरणं त्विति** । साधनान्तरव्यावृत्त्यर्थकैवकारेण सूचितां पूर्वपक्ष्यभिमतसाधनान्तरप्रतिपादकवाक्यानां गतिमाह **अपामेत्यादिना** । **अन्यथा योज्या इति** । भाक्तं वेति सूत्रोक्तरीत्या त्रेधा योज्या इत्यर्थः । सूत्र एव स्पष्टत्वादत्र योजनाप्रकाराप्रदर्शनम् । तत्रास्पष्टत्वादेवानुग्रहमात्रहेतुत्वेनेत्यन्तःकरणशुद्धिद्वारेण चेत्युत्तरवाक्यान्तरे तत्प्रदर्शनमिति ध्येयम् । विद्वच्छब्दस्य प्रसादातिशये लक्षणायामपि ज्ञानप्रसादयोर्द्वारद्वारिभावस्य पर्यवसानगत्या लाभमभिप्रेत्याह **विद्वानितीति** । यद्वा मुख्यार्थानुपपत्तिशक्यसंबन्धाद्यनुसन्धानबललभ्यस्य लाक्षणिकस्य ज्ञानसाध्यप्रसादातिशय-स्यैवेयं पर्यवसितोक्तिरिति ध्येयम् । अपूर्णताशङ्कानिराकरणाय सूत्रशेषरूपस्य ज्ञानीत्यादि मुच्यत इत्यन्तवाक्यस्य सूत्रेणान्वय इत्याह **अत इति** ।

वा०र०— **नन्विति** । अस्यैकवाक्यत्वादिति संबन्धः । नैवेति नकारस्य संभवतीत्युत्तरेण संबन्धः । वाक्यभेदस्यैवाभावेन बुद्ध्या विवेकानवसरादिति भावः । **यत्किञ्चिदिति** । परमत्वं व्यावर्तयितुमेतत् । **वाक्या-पूर्तिश्चेति** । यस्मादिति लाभेऽपि तस्यात इत्याद्यपेक्षत्वादित्याशयः । अपूर्णताशङ्कानिराकरणायेति वक्ष्यमाणत्वात् । ईश्वरस्य प्रसादश्चेत्यादिक्रमेण बद्धक्रमत्वादत्रैवापूर्तिशङ्कोत्थानम् । **बुद्ध्या विवेकेन भिन्नेति** । जिज्ञासया ज्ञानं भवति ज्ञानाच्च प्रसादो भवति प्रसादाच्च मुच्यत इति कार्यकारणयोर्विवेकेन प्रतिपादनायैकस्मिन्नपि वाक्ये बुद्ध्यैव विवेकं कृत्वेत्यर्थः । **ब्रह्मण इत्यनेनेति** । फलहेतुप्रसादनिरूपकत्ववचनेनेत्यर्थः । द्वितीयाया इत्यादौ बुद्ध्या विवेकेन परिहार इति वर्तते । यद्यपीत्येतदवतारयति **श्रुतेरिति** । **पुरुषेति** । ईश्वरेति स्थाने इति शेषः । **इत्यपीत्युक्तस्येति** । स वा अयं पुरुष इति श्रुतेः पूर्णत्वादिना पुरुषशब्दवाच्यत्वस्य विष्णावेव संभवेन हिरण्यगर्भादेः पुरुषसूक्तप्रतिपाद्यत्वा-भावादित्युक्तन्यायस्येत्यर्थः । **वक्ष्यमाणस्य चेति** । 'मुक्तामुक्तेरेशत्वमिति तस्याह सा श्रुति'रित्याद्यनुव्याख्याने वक्ष्यमाणस्येत्यर्थः । लक्षणया श्रवणस्य विद्यमानत्वादाह **श्रूयते वचनवृत्त्या बोध्यत इति** । निमित्तेनेत्युत्तर-वाक्यानुसारेण लब्धा लक्षणा अनुसन्धाने मूलमिति तदभिप्रायमाह **अनुसन्धेय इतीति** । इत्यनेनेत्यर्थः । शक्यसंबन्धस्येत्यादौ प्रदर्शनमित्यस्यानुवृत्तिः । **मुमुक्ष्वित्यादिना चेति** । ज्ञानशब्दस्य प्रसादे बहुलप्रयोगा-भावेनारूढलक्षणात्वात् तल्लक्षणायां च प्रयोजनस्यावश्यवक्तव्यत्वादिति भावः । ज्ञानान्तानामेव मुमुक्षुसंबधित्वम् । ज्ञानसाध्यः प्रसादस्तु मोक्षदातृसंबन्धीत्यवधारणायेति तु मूलार्थः । अन्यथाख्यातिस्थमेतद्व्याख्यानं तु विनोदे दूषितम् । ज्ञानस्यापि भक्तिद्वारा प्रसादसाधनत्वेऽपि ज्ञानग्रहणेन स्वव्यापारविशिष्टज्ञानग्रहणात्तदन्तानां

**मुमुक्षुसंबन्धित्वावधारणमित्यपि** मूलेऽभिप्रेतमिति न कश्चिद्दोषः प्रयोजनस्य प्रदर्शनमित्यनन्तरं ज्ञातव्यमिति पूरणीयम्। **इत्यत्रापीति**। मुखतः प्रसादस्य तत्राप्यनुक्तेरिति भावः। योजनीया इति मूलपाठेऽपि तदर्थानुवादा योज्या इति प्रतीकोपादाने व्याख्याने च। तथैव मूलपाठोऽपि तत्रतत्रेत्यप्याहुः। **एवकारेणेति**। प्रसादादेवेत्येवकारेणेत्यर्थः। **त्रेधेति**। भागतस्तदमृतत्वं वा शब्दात्पर इत्यादितत्सूत्रीयभाष्याद्यनुसारेण त्रेधेत्यर्थः। भागत अमृतत्वमित्युक्तं काम्यकर्मिणामल्पकालीनममृतत्वं गौणमेकम्। अकाम्यकर्मिणां जिज्ञासूनां पारम्परिकं मुख्यमेवामृतत्वं द्वितीयं अकाम्यकर्मिणां ज्ञानिनामानन्दातिशयमात्रमिति तृतीयमिति विवेकः। तत्कर्म हरितोषम्। कर्मणा ज्ञानमित्येतद्वाक्ययोरिवापामेत्यादिवाक्यस्यापि योजनाप्रकारस्य मुखतोऽनुक्तिः कुतः। अन्यथा योजनीया इत्यनेन तत्प्रकारस्यान्यत ऊह्यत्वसूचनात् तत्प्रकारस्यान्यत ऊह्यत्वोक्तौ उक्तवाक्यान्तरेऽपि तदूह्यत्वं वा कुतो नोक्तमित्यतो वैषम्ये निमित्तमाह **सूत्र एवेति**। **स्पष्टत्वादिति**। प्रागुदाहृतभाष्योक्तरीत्या स्पष्टत्वादित्यर्थः। **तत्रेति**। भाक्तमिति सूत्र इत्यर्थः। **वाक्यान्तर इति**। तत्कर्म कर्मणा ज्ञानमित्येतद्वाक्ययोरित्यर्थः। **लक्षणायामपीति**। अनुसन्धेय इति पूर्ववाक्योक्तरीत्या लक्षणया प्रसादस्यापि लाभेऽपीत्यर्थः। अनेन लक्षणयैव प्रसादातिशयलाभात्पर्यवसानोक्त्ययोग इति शङ्का सूचिता। लक्षणायामपि यो द्वारद्वारिभावस्तस्येत्यनेन द्वारद्वारिभावप्रापकं किमपि नास्तीति मूलोक्तपर्यवसानविषयो द्वारद्वारिभाव एवेतिभावेन तदुक्तिरिति परिहारः सूचितः। पूर्वत्र प्रसादस्य लक्षणया लाभे उक्ते ज्ञानप्रसादयोः समकक्ष्यतया दण्डचक्रयोरिव न कारणताऽपि तु ज्ञानोत्तरभाविप्रसादो ज्ञानस्य द्वारतया मोक्षं प्रति साधनमायातीत्येवं वस्तुस्थितिमाश्रित्य द्वारद्वारिभावे पर्यवसानस्य वक्तव्यत्वादिति भावः। प्रसादस्य पूर्वत्र तत्तदुक्तिसामर्थ्याल्लाभ इति यदुक्तं तदेवायाससाम्यात्पर्यवसानमित्युपचर्यत इति प्रकारान्तरेण पर्यवसानोक्तिं घटयति **यद्वेति**। अत्र मुख्यार्थानुपपत्त्युक्त्या ज्ञानस्य साक्षात्साधनत्वाभावः प्राप्तः। निमित्तेन नैमित्तिकेत्युक्तरीत्या शक्यसंबन्धप्रतिपादनेन प्रसादो द्वारमित्यस्यापि लाभ इति विवेकः। **अपूर्णतेति**। प्रसादादेव मुच्यत इत्यन्तभाष्ये ततः किमित्याकाङ्क्षोदयादपूर्णतेत्याशयः। अन्यशेषस्य सूत्रेणान्वयायोग इति शङ्कापरिहाराय सूत्रशेषस्येति वदता सूत्रोपयुक्तप्रमेयप्रतिपादकस्य ज्ञानीत्यादेर्नोत्सूत्रत्वं शङ्कनीयमिति च सूचितम्।

**स०व्र०— निमित्तेनेति**। लाङ्गलेन जीवाम इत्यत्र साक्षाल्लाङ्गलस्य जीवनसाधनत्वाभावान्नैमित्तिकमुपलक्ष्यते यथा, तद्वन्निमित्तेन ज्ञानेन नैमित्तिकस्य प्रसादस्योपलक्षणादित्यर्थः। अनेन शक्यसंबन्धो दर्शितः। ज्ञानशब्दस्य प्रसादे बहुलप्रयोगाभावेन रूढलक्षणाऽसंभवात्प्रयोजनाभावेन अरूढलक्षणायाश्चासंभवात्कथं ज्ञानशब्देन प्रसादोपलक्षणेत्यतः प्रयोजनाभावोऽसिद्ध इत्याह **मुमुक्ष्विति**। प्रसादस्य तु मुमुक्षुसंबन्धिसाधनत्वं नेति भावः। ननु मुमुक्षुसंबन्धिसाधनावधारणं हि ज्ञानमेव मोक्षसाधनं मुख्यं नान्यदिति कार्यम्। तदयुक्तम् भक्तेरेव मोक्षं प्रति मुख्यसाधनत्वादिति चेन्न। ज्ञानेन भक्तेरुपलक्षणात्। न च संबन्धाभावः। ज्ञानस्य भक्त्येकदेशत्वेनैकदेशे विशिष्टलक्षणोपपत्तेः। वक्ष्यते चैतत् 'ज्ञानस्य भक्तिभागत्वादि'ति भाष्यकृता। तमेवेत्यत्रैव प्रसादो न श्रूयते यद्बलाच्छङ्क्यत इत्यत आह **कर्मदिरिति**। 'कर्मणा त्वधमः प्रोक्तः प्रसाद' इति प्रमाणानुसारेण स्वर्गादिहेत्वधमप्रसादमात्रहेतुत्वेनेत्यर्थः।





**विठ्ठ०— वाक्यानुरोधेनेति**। तमेवं विद्वानित्यत्र विद्वत्शब्देन प्रसादस्य लक्षणया स्वीकाराभावे यमेवैष इति श्रुतिविरोधे प्राप्ते तदनुरोधेन लक्षणया प्रसादोऽनुसन्धेय इत्यनेन लक्षणाबीजमुख्यार्थानुपपत्तिं प्रदर्श्य शक्यसंबन्धं दर्शयति **निमित्तेनेति**। निमित्तेन मोक्षकारणज्ञानेन नैमित्तिकस्य तत्कार्यस्य प्रसादस्येत्यर्थः। लाक्षणिकपदप्रयोजन-माह **मुमुक्षुसंबन्धीति** । अधिकारिनिष्ठसाधनेषु उपासनाज्ञानादिषु ज्ञानस्यैव प्राधान्यावधारणाय प्रसादस्यैव प्राधान्येऽपि तस्य भगवन्निष्ठतया मुमुक्षुनिष्ठत्वाभावान्न दोषः। अधिकारिनिष्ठसाधनेषु भक्तेरेव उत्तमत्वेऽपि 'सम्यक् स्नेह्युता मतिः । सुस्थिरा भक्तिरुद्दिष्टा' इत्यादिना ज्ञानस्यैव भक्तिभागत्वावगमात् ज्ञानस्योत्तमत्वकथनेऽपि न विरोध इति ज्ञेयम्। यमेवैष इत्यत्रापि प्रसादो न श्रूयते इत्यत उक्तम् **वरणं त्विति**। **अन्यथा योज्या इति**। भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति इति सूत्रानुसारेणामुख्यामृतत्वरूपस्वर्गादिपरत्वादिना योज्या इत्यर्थः। तत्कर्म हरितोषं यदित्यस्य का गतिरित्यत आह **कर्मदिरिति**। कर्मणा त्वधमः प्रोक्तः इत्युक्तेः अधमानुग्रहहेतुत्वेनेत्यर्थः। तर्हि कर्मणा ज्ञानमातनोतीत्यस्य का गतिरित्यत आह **कर्मणां त्विति**। हिशब्दान्वयं दर्शयति **अत इति**।

**चषकः— निमित्तेनेति**। धनेन विद्यया लाङ्गलेन वा वयं जीवामेत्यत्र निमित्ताभिधायकपदस्य तन्नि-मित्त-कान्नलक्ष्कतादर्शनात्प्रकृतेऽपि ज्ञानरूपनिमित्ताभिधायकविदेस्तन्निमित्तकप्रसादलक्षकतोपेया इति भावः। ज्ञानलक्षणेन प्रसादसाधनेन तत्कार्यप्रसादो लक्ष्यत इत्यर्थः। लक्षणावृत्तिरर्थगतेतिमतमाश्रित्य इदमुक्तमित्यव-गन्तव्यमित्यपि व्याचख्युः। स्वारसिकलक्षणोपगतेः फलमभिधत्ते **मुमुक्ष्विति**। **साक्षात्** वाचकपदप्रयोगेण।

**गूढ०—** ननूदाहृतश्रुत्यादिजातं प्रसादस्य मोक्षसाधनत्वे वा मानं, उक्तसर्वार्थे वा। नाद्यः। तमेवमित्यादौ प्रसादस्य मोक्षसाधनताया अप्रतीतेः। न द्वितीयः। तत्रास्मिन्नर्थे तासां मानत्वमिति न प्रतीयते। प्रसादशब्दार्था-प्रतीतेश्चेत्यत आह **यस्मादिति**। ननु प्रसादस्य मोक्षसाधनत्वे तमेवेति श्रुत्युदाहरणमयुक्तम्। तत्र ज्ञानस्यैव मोक्ष-साधनताया उक्तत्वेन प्रसादस्य तदनुक्तेरित्यत आह **यद्यपीति**। ननु तमेवेत्यत्र प्रसादोऽनुसन्धेय इत्युक्तं तत्र किं प्रसादवाचकं पदमध्याहर्तव्यमित्युच्यते। ज्ञानपदस्यैव तत्परत्वमिति वा। नाद्यः। अश्रुतकल्पनाप्रसङ्गात्। द्वितीयेऽपि किं शक्त्या तत्परत्वमुत लक्षणया। नाद्यः। निघण्टुनिरुक्तादेरभावेन तदभावात्। न द्वितीयः। शक्यसंबन्धाभावादित्यत आह **निमित्तेनेति**। तथाच निमित्तेन ज्ञानेन नैमित्तिकः प्रसादो लक्ष्यत इति निमित्तनैमित्तिकभाव एव शक्यसंबन्ध इति भावः। नन्वियं रूढलक्षणा वा स्वतन्त्रलक्षणा वा। नाद्यः। बहुलप्रयोगाभावात्। न द्वितीयः। तस्याः प्रयोजनं विना असंभवादतस्तत्प्रयोजनं वक्तव्यमित्यत आह **मुमुक्ष्विति**। प्रसादस्तु मोक्षदातृसंबन्धीति भावः। ननु यमेवेति श्रुतौ वरणमेवोक्तं न तु प्रसादोऽतः कथं तदनुसारेण तमेवेति श्रुतेः प्रसादपरत्वमिति तत्राह **वरणमिति**। तर्हि कर्मणो मोक्षसाधनत्वप्रतिपादकश्रुतीनां का गतिरित्यत आह **अपामेति**। नन्वस्तु प्रसादस्य मोक्षसाधनत्वं तथापि तत्कर्म हरितोषं यदिति श्रुतेः कर्मणैव तत्संभवेन जिज्ञासाया वैयर्थ्यमित्यत आह **ईश्वरेति**। ननु कथं तत्र ज्ञानस्य प्रसादसाधनत्वमुच्यते, तद्वाचकपदाभावादित्यत आह **विद्वानिति**। तद्वचनस्य का गतिरत्राह **कर्मदिरिति**। नन्वेवमपि कर्मणा ज्ञानमातनोतीति श्रुतेः कर्मणैव ज्ञानस्य संभवाज्जिज्ञासावैयर्थ्यमित्यत आह **ईश्वरज्ञानमिति**।

तर्हि कर्मणेति श्रुतेः का गतिरित्यत आह **कर्मणां त्विति**। वाशब्दोऽवधारणार्थः। प्रसादादेव मुच्यत इत्यस्य साकाङ्क्षत्वादित्यत आह **अत इति**।

**प्रदीपः**— तत्र कटस्त्वया कर्तव्य इत्यादौ कृत्यानां विधायकत्वदर्शनात्संसारहेतुभूताविद्योच्छित्तेराप्यत्वाद्वेदान्तानामपि विधिपरत्वमिति निमित्तेनेति लाङ्गलेन जीवामीति साक्षाल्लाङ्गलस्य जीवनसाधनत्वायोगान्नैमित्तिकमुपलक्ष्यते यथा तद्वदुपलक्षणे कारणमाह **मुमुक्ष्विति**। यमैवेत्यत्रैव प्रसादो न श्रूयते यद्बलात् श्रुत्यन्तरेऽपि तथा स्यादित्यत आह **वरणं त्विति**। **अपामेति**। चिरस्थायित्वमात्रममृतशब्दार्थ इत्यर्थः।

**१६८ सु०— इदमुक्तं भवति। यद्यपि न जिज्ञासायाः स्वर्गादिरूपोऽभ्युदयः प्रयोजनं संभवति। तथाऽपि मोक्षो भविष्यति। तस्यानन्यसाध्यत्वात्। मोक्षसाधनं हि साक्षात् भगवानेव। 'बन्धको भवपाशेन भवपाशाच्च मोचक' इत्यादिवचनात्। साधनं च द्विविधम्। सिद्धमसिद्धं च। तत्रासिद्धमुत्पाद्यं फलकामेन। यथा यागादि। सिद्धं तु सव्यापारीकरणीयम्। यथा कुठारादि। सिद्धं च साधनं भगवानिति मुमुक्षुणा सव्यापारीकरणीयः। व्यापारश्च प्रसन्नता एव। निगडादिमोचकेषु राजादिषु तथा दर्शनात्। 'यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण' इत्यादिश्रुतेश्च। व्यापारप्राधान्योक्तिश्च 'इन्द्रियार्थसन्निकर्षः प्रत्यक्षमि'त्यादाविव औपचारिकी। मोचकश्चेश्वरप्रसादस्तद्भक्त्येकसाध्यः। 'भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचिदि'त्यादिवचनात्। स्वर्गादिहेतुप्रसादमात्रं कर्मादिसाध्यम्। 'कर्मणा त्वधमः प्रोक्तः प्रसाद' इत्यादिस्मृतेः। प्रसादो नामेच्छाविशेषो गुणान्तरं वा न नः काचित् क्षतिः। परमेश्वरभक्तिर्नाम निरवधिकानन्तानवद्यकल्याणगुणत्वज्ञानपूर्वकः स्वात्मात्मीयसमस्तवस्तुभ्योऽनेकगुणाधिकोऽन्तरायसहस्रेणाप्यप्रतिबद्धो निरन्तरप्रेमप्रवाहः। यमधिकृत्य 'यत्र नान्यत्पश्यति' 'सा निशा पश्यतो मुनेः' इत्यादिश्रुतिस्मृतयः। न चासौ तत्साक्षात्कारमन्तरेणोत्पद्यते। लोके तथाऽदर्शनात्। न चाव्यक्तस्वभावो भगवांत्सहस्रेणापि प्रयत्नानां शक्यः साक्षात्कर्तुं, विना तदनुग्रहात्। प्रसन्नस्त्वनन्ताचिन्त्यशक्तियोगादात्मानं दर्शयतीति युज्यते। दर्शनसाधनं चानुग्रहः स्वयोग्यगुणोपेतस्य निर्दोषस्य भगवद्विग्रहविशेषस्य आदरनैरन्तर्याभ्यां विषयवैराग्यतद्भक्तिसहिताद् बहुकालोपचितान्निदिध्यासनापरनामकाद्विचिन्तनादृते न लभ्यते। न च निदिध्यासनं वाक्यार्थग्रहणलक्षणे श्रवणे कृतेऽपि विना मननापरनाम्ना विचारेणोपपद्यते। संशयविपर्ययोस्तादवस्थ्यात्। न हि तयोः सतोरादरनैरन्तर्याद्युपपद्यते। अतो जिज्ञासा निदिध्यासनपरमेश्वरानुग्रहतद्दर्शनपरमभक्तिपरमानुग्रहद्वारा मोक्षसाधनत्वात् कर्तव्येति।**





**बिन्दुः—** एवं पदार्थव्याख्यानपूर्वकमन्वयमभिधाय प्रघट्टकोपक्रमस्थनिष्प्रयोजनत्वशङ्कां व्युदसितुं वाक्यार्थं सूचयंस्तात्पर्यमाह **एतदुक्तमिति** । **औपचारिकीति** । सन्निकृष्टमिन्द्रियमित्यपेक्षयेत्यर्थः । **भक्त्येकसाध्य इति** । प्रकृतमूले अनुक्तमपि भक्तिपादीयानुव्याख्यानलभ्यत्वेन विवक्षितत्वादुक्तम् । माहात्म्यज्ञानपूर्वस्तु इत्याद्यागमानुसारेण भक्तिलक्षणमाह (तत्र) **निरवधिकेत्यादिना** । आद्यं विशेषणं माहात्म्यज्ञानपूर्वक इति । स्वात्मात्मीयेत्यादिना सर्वतोऽधिक इति । अन्तरायेत्यादिना सुदृढ इति प्रेमेत्यनेन स्नेह इत्युक्तार्थं भवति । महाप्रसादसाधनीभूतायाश्च तस्याः परमत्वं प्रवाह इत्यनेनोक्तम्। तदपि न घटादिप्रवाहवद्विच्छिद्य विच्छिद्य किन्तु सन्ततत्वमित्याह **निरन्तर इति**। एतदेव श्रुतिस्मृतिसिद्धमित्याह **यमिति** । यद्यन्यदर्शनश्रवणादि स्यात्तदा नैरन्तर्यमेव भज्येतेति भावः । भूतानि परमात्मज्ञानविधुराणि येषु विषयादिषु जागरूकाणि तेषु परमात्मनिबद्धहृदयो ज्ञानी नोपादेयताबुद्धिमालम्बत इत्यर्थः ।

**परि०—** कथमनेन ज्ञानीत्यादिना मुच्यत इत्यन्तेन भाष्येण पूर्वपक्षदशायामुक्तनिष्प्रयोजनत्वशङ्कानिरास इत्यत आह **इदमुक्तमिति**। श्रुतौ मूले च यस्य प्रसादादित्यादिप्रसादप्राधान्योक्तिः कथमित्यत आह **व्यापारेति** । परेण चशब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्ध इति सूत्राद्युक्तमाह **तद्भक्त्येकेति** । भारततात्पर्योक्तमाह **भक्त्यैवेति** । तत्कर्म हरितोषं यदित्यादि तु कथमित्यत आह **स्वर्गादीति** । भाष्योक्तस्मृतिमाह **कर्मणेति** । ननु प्रसादस्येच्छाविशेषत्वाद्भगवतश्च 'आप्तकामस्य का स्पृहा' इति श्रुत्येच्छानिषेधात्कथं प्रसादो भगवत उच्यत इत्यत आह **प्रसादो नामेति** । **न नः काचित्क्षतिरिति** । प्रसादद्वारा ज्ञानं मुक्तिहेतुरिति प्रकृतप्रमेये काचिद्धानिर्नास्ति इत्यर्थः । युक्तिपादे 'न प्रयोजनवत्त्वात्' इत्यधिकरणानुव्याख्याने सुधायां च समर्थयिष्यमाणं प्रसादस्य इच्छारूपत्वं तु वास्तवाभिप्रायम् । अत एवेच्छाविशेष इति कोट्यन्तरोक्तिः श्रुतेरर्थान्तरस्य वक्ष्यमाणत्वादिति भावः । ननु प्रसादस्य भक्तिसाध्यत्वे ज्ञानजात्तत्प्रसादादिति कथमित्यतः ज्ञानस्य भक्तिभागत्वादिति भक्तिपादान्त्यभागे वक्ष्यमाणदिशैकदेशकीर्तनमेतदिति भावेनाह **परमेश्वरभक्तिर्नामेति** । 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा' इति भारततात्पर्योक्तेरिति भावः । असंभावितोऽयं प्रेमप्रवाह इत्यत आह **यमधिकृत्येति** । उक्तरूपप्रेमप्रवाहमाश्रित्य 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति छान्दोग्ये सप्तमाध्याये भूमप्रकरणे यत्र यस्मिन् भूमविषये उक्तरूपभक्तौ सत्यामन्यदर्शनादिकं नास्तीत्याद्यर्थकश्रुतयो वर्तन्ते । तथा । 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' इत्यादि गीतादिस्मृतयः प्रवर्तन्त इत्यर्थः ।





अस्तु मोक्षहेतुप्रसादो भक्त्येकसाध्यः । किं जिज्ञासया कृत्यमित्यतः प्रणाड्या तदुपयोगमाह **न चासा**वित्यादिना **कर्तव्ये**त्यन्तेन । असौ भक्तिरित्यर्थः । **लोक इति** । राजादौ । **अव्यक्तेति** । 'तदव्यक्तमाह हि' इति वक्ष्यमाणन्यायेनेति भावः । नन्वव्यक्तैकस्वभावः प्रसन्नः सन्नपि कथं मुक्तिहेतुप्रसादजनकभक्तिकारणस्य साक्षात्कारस्य विषयः स्यादित्यतः 'अतोऽनन्तेन तथा हि लिङ्गम्' इति सूत्राद्युक्तमाह **प्रसन्नस्त्विति** । नन्वस्त्वेवं तावता मुक्तिहेतुप्रसादजनकभक्तिकारणसाक्षात्कारोत्पादकस्य ईश्वरानुग्रहस्य अन्येनापि संभवान्न जिज्ञासया विचाररूपया कृत्यमित्यतस्तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्' इति सूत्राद्युक्तोपयोगमाह **दर्शनसाधनं चेति** । **विग्रहविशेषस्येति** । बिम्बरूपस्येत्यर्थः । न सामान्यादप्युपलब्धेरित्यादेरिति भावः । **भक्तीति** । 'अनुबन्धादिभ्यः' इति सूत्रादिति भावः । कर्तव्येतीति शब्दस्येदमुक्तं भवतीति पूर्वेणान्वयः ।

**गु०दी०— निरवधिकानन्तानवद्यकल्याणगुणत्वज्ञानपूर्वक** इति वदता बहुतरशास्त्रजन्यं ज्ञानं तज्जन्यमपरोक्षज्ञानं च न भक्तिशरीरे प्रविष्टमिति सूचितम् । अतो न भक्तिज्ञानयोः साङ्कर्यमिति भावः । एतादृशनिरन्तरप्रेमप्रवाहोऽसंभावित इति शङ्कानिरासाय संभावकप्रमाणं सूचयितुमुक्तम् **यमधिकृत्येति** । यत्रेति वाक्ये विषयान्तराभिलाषराहित्येन भगवद्दर्शनस्योक्तत्वादुक्तार्थोऽवगम्यत इति । "यस्यां जागर्ति" इत्युक्तगीतावाक्ये च लोके सर्वभूतानां परलोकसाधनपरमात्मगुणचिन्तनविषयिणी या निशा अज्ञानं तस्यां निशायां तेषु सत्यामेव संयमी जागर्ति । तन्निशाविषयीभूतभगवद्गुणगणार्णवमेकाग्रमनसा ध्यायति । यस्यां हरीतरदुर्विषयभोगाख्यावस्थायामयं लोकः जागर्ति पश्यतो मुनेः साऽवस्था निशेति । विषयान्तराशाशून्यतया भगवच्चिन्तनस्योक्तत्वाद्भगवति निरन्तरप्रेमप्रवाहोऽवगम्यत इति भावः । स्वादिष्ठो गुडरस इति शतशः वाक्यश्रवणेऽप्यनुत्पन्नः स्नेहातिशयः रसनया गुडरससाक्षात्कारे सति जायत इत्येतत्सर्वानुभवसाक्षिकमिति भावेनोक्तं **लोके तथा दर्शनात्** इति । यतो जिज्ञासैवापेक्षितसाधनमतः कारणादपेक्षितफलसाधनत्वकारणादिति यतःशब्दापेक्षाऽतश्शब्दाल्लाभात्प्रकृतस्य विचारस्य हेतुत्वे वर्तत इत्युक्तम् ।

**यादु०— न नः काचिदिति** । प्रसादस्य पक्षद्वयेऽपि भगवद्गुणत्वेन तदभेदाद्भक्त्यादिसाध्यत्वानुपपत्तिरूपक्षतिर्नास्ति । अस्माभिः विशेषबलेन शक्त्यात्मना सतोऽपि व्यक्त्यात्मना साध्यत्वाङ्गीकारादिति भावः । यद्वा ननु भगवतो निर्गुणत्वात्कथं तत्रेच्छारूपो गुणः । सगुणत्वेऽपि वा तस्य अष्टगुणत्वात्कथं गुणान्तररूपप्रसादसंभव इत्यत आह **न नः काचिदिति** । अस्माभिरनन्तगुणवत्त्वाङ्गीकारान्नोक्तदोष इति भावः । मोचकप्रसादहेतुभूतभक्तिस्वरूपं दर्शयति **परमेश्वर-भक्तिः इति** । मोचकप्रसादहेतुभूतेति शेषः । एतादृशः प्रेमप्रवाहोऽसंभावित इत्याशङ्कापरिहाराय संभावकं प्रमाणेनाह **यमधिकृत्येति** । यं ज्ञापयितुमित्यर्थः । अत्रोभयत्र जाग्रदवस्थायामपि बाह्यविषयाज्ञानोक्त्या भगवत्युक्तप्रेमप्रवाहोऽस्तीति ज्ञायते । अन्यथा तदसंभवादिति भावः ।





**आनन्दः**— ननु प्रसादादेव मुच्यत इत्यत्र प्रसादस्य मोक्षसाधनत्वमुक्तम् । तदयुक्तम् । बन्धको भवपाशेनेत्यादौ भगवत एव मोक्षसाधनत्वस्योक्तत्वादन्यथा द्वितीयसूत्रविरोधात् । किञ्च ज्ञानी प्रियतम इत्यादि-श्रुतिबलेन यदि कर्मादिश्रुतीनां सावकाशत्वं तर्हि कर्मणेत्यादिश्रुतिबलेन एतासामेव सावकाशत्वं किन्न स्यात् । किञ्च मुच्यत इत्युक्ते यत्किञ्चिद्दुःखमोक्षस्य स्वर्गेऽपि सत्त्वात्तस्यैवात्र फलत्वं प्रतीयते । अपि च ज्ञानस्य प्रसाद-साधनत्वकथनमप्ययुक्तम् । भक्त्यैव तुष्टिमभ्येतीति स्मृतौ भक्तेरेव प्रसादसाधनत्वस्योक्तत्वात् तद्विरोधः । किञ्च जिज्ञासाया ज्ञानसाधनत्वकथनमप्ययुक्तम् । जिज्ञासां विना पुरुषप्रयत्नेनैव साक्षात्काररूपज्ञानसंभवात् । अस्तु वा जिज्ञासया साक्षात्कारः तथापि श्रवणमात्रेणैव तदुपपत्तौ मननादेरुपयोगाभावादित्यत आह **इदमुक्तं भवतीति**। ननु भगवत एव मोक्षसाधनत्वे साधनस्य सिद्धत्वात्सर्वदा मोक्षः स्यात् । भगवतो नित्यत्वेन श्रवणाद्यसाध्यत्वेन श्रवणादिरूपजिज्ञासावैयर्थ्यं चेत्यत आह **साधनं चेति**। ननु राजादयो वित्तादिनापि निगडादिभ्यो मोचयन्ति तथाच वित्तादेरपि साधनताया दृष्टत्वात्कुतः प्रसादस्यैवावश्यकत्वमिति तत्राह **यस्येति**। ननु भगवत एव प्रधानत्वात्कथं प्रसादादिति व्यापारप्राधान्योक्तिरिति तत्राह **व्यापारेति**। ननु भक्तेरेव प्रसादसाधनत्वे कमदिस्तत्साधनत्ववचन-विरोध इत्यत आह **स्वर्गादीति**। ननु प्रसादरूपगुणाङ्गीकारेऽष्टगुणत्वस्वीकारविरोध इत्यत आह **प्रसाद इति**। अस्माभिरनन्तगुणपूर्णत्वस्वीकारान्नास्माकं काचित्क्षतिरित्यर्थः। ननु भगवद्वत्ततत्प्रसादस्यापि नित्यत्वात्कथं तस्य ज्ञानादिजन्यत्वम्। न च कार्योन्मुखत्वेनाभिव्यक्तत्वमेव प्रसादस्य ज्ञानसाध्यत्वमिति वाच्यम्। तादृशसाध्यत्वस्य भगवतोऽपि संभवेन प्रसादपर्यन्ताया अभिव्यक्तेः अयुक्तत्वादिति । मैवम् । उक्तश्रुत्याद्यनुसारेण तथोक्तत्वादिति भावः । ननु भज सेवायामिति धातौ भक्तिर्नाम भजनं तच्च कर्मादिरूपसेवैव । तथाच तस्या एव प्रसादसाधनत्व-मापतितमित्यत आह **परमेश्वरभक्तिरिति** । कादाचित्कस्याप्रयोजकत्वात् **निरन्तरेति** । एतादृशभक्तिमतः किं लक्षणमत्राह **यमिति**। ननु चायं पुरुषप्रयत्नेनैव स्यादित्यत आह **न चेति**। अव्यक्तस्वभावस्यापि कथं दर्शनमित्यत आह **अनन्ताचिन्त्यशक्तियोगादिति**। भगवद्विग्रहविशेषस्य चिन्तनादृत इत्यन्वयः। ननु श्रवणमात्रेण ध्यानोपपत्तौ मननवैयर्थ्यमत आह **न चेति**। श्रवणशब्दार्थो वाक्यार्थग्रहणलक्षण इति। उपसंहरति **अत इति**।

**कं०रा०**— ननु प्रसादाख्यव्यापारवतो भगवत एव प्राधान्येन मोचकत्वाद्यस्य प्रसादादिति श्रुतौ प्रसादाख्यव्यापारप्राधान्योक्तिः कथमित्यत आह **व्यापारेति** । **स्वात्मेति** । स्वात्मन्यात्मीयसमस्तवस्तुषु च यः स्नेहस्ततोऽनेकगुणाधिक इत्यर्थः । **यमिति** । यं प्रेमप्रवाहमधिकृत्य यद्वन्तं विषयीकृत्येति यावत् । यत्र यस्मिन्परमात्मनि दृष्टे सत्यन्यत्किञ्चिदपि न पश्यतीत्यर्थप्रतिपादकश्रुतयो यस्यां विषयलक्षणायां भूतानि जाग्रति सा परमात्मानं पश्यतो मुनेर्निशा तत्र ज्ञानाभावादित्यर्थप्रतिपादकस्मृतयश्च प्रवृत्ता इत्यर्थः ।

**श्रीनिधि०**— **सव्यापारीकरणीयः** व्यापारवत्त्वेन करणीयः। इच्छाविशेषो गुणान्तरं वेति। इच्छाविशेष एव प्रसाद इति सिद्धान्तः। इच्छानिमित्तको यस्मादिति वक्ष्यमाणत्वात्। **न नः काचित्क्षतिरिति**। अष्टगुणत्ववादिनो नैयायिकस्यैव क्षतिरिति भावः । माहात्म्यज्ञानपूर्वक इत्यस्य विवरणं **निरवधिकेत्यादि** । सर्वतोऽधिक इत्यस्य विवरणं **स्वात्मात्मीयेत्यादि**। सुदृढ इत्यस्यार्थो **अन्तरायसहस्रेणापीति**। **यमधिकृत्येति**। **यं** प्रेमप्रवाहम्।





**वा०चं०**— ननु प्रसादस्य मोक्षहेतुत्वं नातःशब्दार्थतया व्याख्यातुं युक्तम् । 'ततो ह्यस्य बन्धविपर्ययौ' 'परेण च शब्दस्य' इत्यादिसूत्रैः 'ज्ञानिनां मोक्षदश्च सः' इति स्वेनैवोदाहरिष्यमाणप्रमाणेन 'येनैव बन्धमोक्षः स्यात्' इति वक्ष्यमाणस्ववचनेन च विरोधापत्तेः । न च तदनुसारेणेश्वरस्यैव मोक्षहेतुत्वं प्रसादस्य च व्यापारत्वमत्राभिप्रेतमिति वाच्यम् । व्यापारस्यानावश्यकत्वात्तथात्वेऽपि वा तस्यैव व्यापारत्वे प्रमाणाभावात्तथैवोक्तिप्रसङ्गाच्च । 'ज्ञानजात्तत्प्रसादात्' इत्यप्ययुक्तम् । पूर्वपक्ष्युक्तादृष्टकल्पनानुद्धारात् । ज्ञानान्तरमेव प्रसादेन सद्यो मोक्षापत्तेश्च । न चैवमेव साक्षात्कारप्रसादयोरन्तरा साधनान्तरमत्राभिप्रेतमिति वक्तुमुचितम् । प्रसादस्येच्छामात्रत्वेन तस्याश्च अनादिसिद्धत्वेन साधनानपेक्षणाच्च । जिज्ञासोत्थज्ञानेत्यप्ययुक्तम् । अतोऽनन्तेनेत्येतद्विरोधापत्तेः । आदिपदेन आत्मा वा अरे इति श्रवणादित्रयसङ्ग्राहकवाक्यविशेषोपादानप्रयोजनं च न पश्याम इत्यतः सूत्राद्यनुसारेणैतद्वाक्याभिप्रेतं साधनान्तरोपलक्षणमुक्तोपलक्षितानां साध्यसाधनभावोपपादनप्रकारं च दर्शयति **इदमुक्तमिति** । अत्र **यद्यपीत्यादि** मुच्यत इत्यस्याभिप्रायकथनम् । **मोक्षसाधनं हीत्यादि** सहेतुकं प्रसादशब्दोपलक्षितार्थकथनम् । **साधनं चेत्यादि**नैवकारेण लब्धस्य प्रकृते व्यापारावश्यकत्वस्य प्रसन्नताया एव व्यापारत्वस्य चोपपादनेन साध्यसाधनभावोपपादनम् । **मोचकश्चेत्यादिना** सहेतुकमुपलक्षितार्थकथनम् । **प्रसादो नामेति** तत्स्वरूपकथनेनेच्छामात्रस्य सिद्धत्वेऽपीच्छाविशेषस्य गुणान्तरस्य वाऽनभिव्यक्त्यादिसूचनेन साध्यसाधनभावोपपादनम् । एवं भक्तिप्रसादयोः साध्यसाधनभावमुपपाद्य भक्तिज्ञानयोः साध्यसाधनभावं न चासौ इत्यादिनोपपादयितुं 'माहात्म्यज्ञानपूर्वस्तु' इति प्रमाणं मनसि निधाय भक्तिस्वरूपकथनं **परमेश्वरेति** । तादृशभक्तिस्वरूपमनुभवारूढं कर्तुं तत्कार्यप्रतिपादकप्रमाणोपन्यासो **यमधिकृत्येति** । **न चाव्यक्तेति** सहेतुकं ज्ञानशब्देन प्रसादशब्देन वोपलक्षितार्थकथनम् । **प्रसन्न** इत्यादि साध्यसाधनभावोपपादनम् । जिज्ञासाशब्दस्य निदिध्यासनार्थत्वमभिप्रेत्य तस्य ज्ञानसाधनतोपपादनाय निदिध्यासनस्वरूपनिरूपणं **दर्शनसाधनं चेत्यादि** । जिज्ञासाशब्दार्थविचारस्य निदिध्यासनसाधनतोपपादनं **न चेत्यादि** । अत एव त्रितयसङ्ग्राहकवाक्यस्य आदिपदेनोपादानम् । यद्वा नात्रोपलक्षितार्थकथनं किन्तु परम्परासाध्यसाधनभावाभिप्रायप्रवृत्तैतद्वाक्याभिप्रेतपरम्पराघटकानां कथनमिति द्रष्टव्यम् ।

**वा०र०**— **इत्यादिसूत्रैरिति** । आदिना अतोऽनन्तेन तथाहि लिङ्गमिति सूत्रपरिग्रहः । **वक्ष्यमाणेति** । उपासनापादे **तस्यैव** प्रसादस्यैव । **तथैवेति** । तस्येति वर्तते । व्यापारस्य सतः प्रसादान्मुच्यत इति प्राधान्येनोक्तिं विहाय व्यापारत्वेनैवोक्तिप्रसङ्गाच्चेत्यर्थः । **न चैवमेवेति** । अत्रेति वक्तुं नोचितमिति प्रतिज्ञायामेवमेवेति हेतुगर्भं प्रोक्तम् । प्रमाणाभावेऽपीत्यर्थकेन तेन प्रमाणाभावेन तथा वक्तुमनुचितत्वादिति हेतुसमर्पणात् । अत एवोत्तरवाक्येऽनपेक्षणाच्चेति चशब्दप्रयोगो युक्तः । एतेन चशब्दायोगशङ्का गर्भस्रावेणैव निराकृतेति ज्ञेयम् । **अतोऽनन्तेनेत्येतदिति** । अव्यक्तत्वप्रतिपादकतदव्यक्तमाह हीत्येतत्सूत्रशेषत्वादस्यानेन तत्सूत्रमुपलक्ष्यते । उपलक्षणायां प्रयोजनं तु न तत्सूत्रेण सर्वथाऽव्यक्तत्वमुच्यते किन्तु पुरुषप्रयत्नाद्यभावे तदित्याशङ्कावारणम् । एतत्सूत्रेऽव्यक्तस्वभावस्यापि भगवतः प्रसादे सत्येव दर्शनविषयतेति प्रतिपादनात् । अथवा अत्र जिज्ञासया ज्ञानमित्ययुक्तम् । अव्यक्तस्वभावस्य भगवतः स्वाचिन्त्यशक्त्यैव दर्शनप्रतिपादकातोऽनन्तेनेत्येतद्विरोधादिति





योज्यम् । **प्रयोजनं च नेति** । श्रवणमात्रेण वा श्रवणनिदिध्यासनाभ्यां वा साक्षात्कारसिद्धेस्त्रितयस्यानावश्यकत्वेन तत्र सङ्ग्राहकवाक्यविशेषोपादानप्रयोजनाभावादित्याशयः । **सूत्रादीति** । आदिपदेन श्रुतिस्मृतिपरिग्रहः । उपलक्षण-मित्यस्य दर्शयतीत्यनेन संबन्धः । **उक्तेति** । उक्तानि चोपलक्षितानि चोक्तोपलक्षितानि तेषामित्यर्थः । ननु प्रसादस्य मोक्षसाधनत्वमित्यादिना प्रदर्शितशङ्कानां मध्ये कस्याः परिहारः केन जात इत्याशङ्कायामंशभेदेन तत्तच्छङ्कापरिहारं दर्शयति **अत्र यद्यपीत्यादि मुच्यत इत्यस्येत्यादिना** । इत्यादि इत्यादिकं मुच्यत इति मोक्षसाधनत्वोक्त्या सूचितस्यार्थस्य कथनरूपमित्यर्थः । अत्रेत्यादीत्यादिपदेन मोक्षसाधनं हीत्युत्तरोपक्रमपर्यन्तं ग्राह्यम् । एवमुत्तरत्रापि तत्तदुपक्रम एव पूर्वपूर्वावधिरिति ज्ञेयम् । अत्रेत्यस्येति द्रष्टव्यमित्युत्तरेण संबन्धः । यद्यपीत्यादिग्रन्थे साधना-न्तरोपलक्षणादिविवेकाप्रतीत्या तत्प्रदर्शनं कृतम् । प्रसाद एव व्यापार इति कुत्र दृष्टमित्यत आह **निगडादीति** मूलम् । एवं दर्शने प्रमाणमभिधाय श्रुतिमप्याह **यस्येति** । व्यापारस्य सतः प्रसादस्य व्यापारतयैवोक्त्या भवितव्यं तत्कथं प्रधानतया तस्योक्तिरित्यतस्तत्र निमित्तं दृष्टान्तेनाह **व्यापारेति** । दृष्टान्तप्रदर्शनेन रूढव्यवहारे प्रयोजना-न्वेषणायासो नेति ध्वनयति । तत्कर्म हरितोषमित्यादिवचनगतिमाह **स्वर्गादिहेतुरिति** । **अनभिव्यक्त्यादीति** टीका । अनेन नः काचित्क्षतिर्नेत्यस्य निर्गुणत्ववाद्यष्टगुणत्ववादिमते तादृशगुणान्तरानुपपत्तावपि सगुणत्व-वादिमते तदनुपपत्तिरूपा क्षतिर्नेत्यर्थः । तथा तादृशगुणविशेषस्य नित्यव्यक्तगुणके हरावभावकालासंभवेन भक्त्या-दिसाध्यत्वानुपपत्तेः सदा तत्सद्भावे च सदा मोक्षापत्तिरूपा क्षतिश्च नास्ति । शक्त्यात्मना प्राग्विद्यमानस्यापि विशेषबलेन व्यक्तिकाले तेन मोक्षोपपत्तेरिति व्याख्यानं कृतं भवति । मूले **परमेश्वरेति** । मोचकप्रसादहेतुभूतेति शेषः । परमेश्वरेत्युक्त्यैव देवतान्तरगुर्वादिभक्तिरलक्ष्येति सूचनान्न तद्भक्तावव्याप्तिरिति दर्शितम् । प्रमाणं **मनसी**ति टीका । माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रमाणवाक्यगतप्रथमपादविवरणपूर्वकं तदुक्ताभिधानं निरवधिकेत्यादिना कृतम् । तथा सर्वतोऽधिक इत्येतद्विवरणपूर्वकं तदुक्ताभिधानं स्वात्मात्मीयेत्यादिना कृतम् । सुदृढ इत्येतस्यापि विवरणपूर्वकं तदुक्ताभिधानमन्तरायेत्यादिना कृतम् । स्नेहपदार्थविवरणपूर्वकं तदुक्तोपादानं च निरन्तरेत्यादिना कृतमिति स्पष्टत्वादिति भावः । जरासन्धादिभगवद्वेषिषु विषयासक्तेषु वा कार्यदर्शनेन वा शास्त्रतो वोपदेशतो वा निरवधिकेत्याद्युक्तमाहात्म्यज्ञानसद्भावेऽपि भक्त्यभावादतिव्याप्तिरित्यतस्तद्व्यवच्छेदाय निरन्तरेत्या-द्युक्तम् । तेषु च केषाञ्चित् स्नेहप्रसक्तेरभावात्केषाञ्चिदल्पस्नेहेऽपि निरन्तरेत्याद्युक्तस्नेहस्याभावात् तद्व्यवच्छेदो युक्तः । निरन्तरप्रेमप्रवाहमात्रं द्रव्याद्युपार्जननिमित्तस्वाम्यादावस्तीति तद्व्युदासाय प्रेमप्रवाहाविच्छेदसमर्पकान्तरायसह-स्नेणेत्यादि । तादृशोऽपि स्नेहः स्वात्मादाविति तद्व्युदासाय स्वात्मात्मीयेत्यादि । न चैवं सति प्रथमविशेषणानर्थक्यम् । तस्य माहात्म्यज्ञाने सति अधिकारिणः तथाविधप्रेमप्रवाहो भवितुमर्हतीति संभावकतया कथनात् । स्वात्मात्मीय-समस्तवस्तुभ्योऽधिकप्रेमप्रवाहस्य क्वचिदाभिमानिकेऽपि सत्त्वात् । अत एवार्जुनादीनां तादृशकार्यार्थं प्राणत्यागादि-प्रतिज्ञा । रावणेन सीतानिमित्तं दशाननानामपगमितत्वस्य **भवत्कृते खंजने**त्यादिषूक्तेरतोऽन्तरायेत्याद्यपि सार्थकम् । तत्र चाभिमानापगमे वा जन्मान्तरे वा तत्प्रतिबन्धादित्यादि ज्ञेयम् । विशेषतस्तत्कृत्यं लेख्यमस्ति । **असाविति** मूलम् । निरन्तरप्रेमप्रवाह इत्यर्थः । न तु संपूर्णभक्तिपदार्थभूतनिरवधिकेत्यादिविशेषणविशिष्टोऽत्रासावित्यनेनोच्यते । तस्य परमात्मनोऽन्यत्राभावात् । तेन लोके तथा दर्शनादित्युत्तरग्रन्थोपपत्तिरिति ज्ञेयम् । **प्रसादपदेन वेति** ।





य उपलक्षितोऽर्थो दर्शनसाधनानुग्रहरूपस्तस्य कथनमित्यर्थः। अनेन मोक्षसाधनीभूतपरमानुग्रहसमर्पकप्रसादपदेन स्वसाधनभक्तिसाधनसाक्षात्कारसाधनभूतावान्तरप्रसादोऽप्यन्यथानुपपत्त्योपलक्षणया ग्राह्य इत्युक्तं भवति। **साध्यसाधनभावेति**। अनुग्रहशब्दोक्तावान्तरप्रसाददर्शनयोर्यः साध्यसाधनभावस्तदुपपादनमित्यर्थः। अव्यक्त-स्वभावस्याप्यतोऽनन्तेत्युक्तरीत्याऽनन्ताचिन्त्यशक्तियोगादित्यस्य तदुपपादकमिति ज्ञेयम्। **शब्दार्थेति**। विचारापरनामकेति प्रागर्थत्वेनोक्तस्योत्तरत्र चार्थत्वेन वक्ष्यमाणस्येत्यर्थः। **साधनतोपपादनमिति**। संशय-विपर्ययोर्निवृत्त्यर्थं श्रवणानन्तरं निदिध्यासनतः प्राङ्मननापरनामकविचारस्यावश्यकतोक्त्या तदुपपादनादिति भावः। **अत एवेति**। एवं त्रितयस्यावश्यकत्वादेव तत्सङ्ग्राहकवाक्यस्येत्यादेरित्यादिपदेनोपादानवर्णनं युक्तमित्यर्थः। एवं ननु प्रसादस्य मोक्षसाधनत्वमित्यारभ्य प्रयोजनं च न पश्याम इत्यन्तशङ्कापरिहारायोक्तोपलक्षितसाधनानां साध्यसाधनभावोपपादनप्रकारं दर्शयतीत्यवतारयता मध्ये घटकत्वेनोक्तभगवदादीनामुपलक्षणया ग्रहणमिति भावं वर्णयित्वा तदनुसारेण तत्तदंशेनोपलक्षिततत्तत्पदार्थविवेकः कृतः। इदानीं किं मध्ये लक्षणोक्त्याश्रयणेन। जिज्ञासाया ज्ञानसाधनत्वोक्तेः परम्पराभिप्रायस्य सिद्धत्वात्तदभिप्रेतानि मध्ये यावन्ति साधनानि परम्पराघटकत्वेन प्राप्तानि तेषां कथनाय भगवदादीनां यद्यपीत्यादितत्तदंशेन प्रतिपादनमिति प्रकारान्तरमाह **यद्वेति**। **परम्पराभि-प्रायप्रवृत्तेति**। साध्यसाधनयोरुक्तयोर्योग्यताविरहेणानन्वयप्रसङ्गादिति वक्ष्यमाणरीत्याऽन्वयायोगेन तदभिप्रायस्य आवश्यकत्वादिति भावः। **घटकानां कथनमिति**। क्वचिदुपपादनं च कृतमिति पूरणीयम्।

**स०व्र०**— ननु कथं भगवतः साधनत्वम्। यागादिवत् व्यापाररूपत्वाभावात्। कुठारादिवत् तदिति चेन्न। व्यापारानिरूपणात् इत्यत आह **साधनं चेति**। ननु न भगवतः साधनत्वम्। यस्य प्रसादादिति प्रसादस्य मोक्षसाधनत्वाध्यवसायादित्यत आह **व्यापार इति**। कथं नित्यगुणस्य प्रसादः साध्यत इत्याशङ्क्याह **प्रसाद इति**। शक्तिव्यक्तिरूपताया वक्ष्यमाणत्वादित्यर्थः। अत्र गुणान्तरमित्यभ्युच्चयः। इच्छाविशेष इत्येव वस्तुस्थितिः। तथा वक्ष्यत्याचार्यः 'इच्छानिमित्तको यस्मात्' इत्यादिना। **स्वात्मात्मीयेति**। स्वात्मात्मीय-समस्तवस्तुषु क्रियमाणस्नेहादित्यर्थः। अत्र प्रमाणमाह **यमधिकृत्येति**। **यं** प्रेमप्रवाहम्। प्रवृत्ता इति शेषः। यत्र भूम्नि दृष्टेऽन्यत् किञ्चन न पश्यति। अस्य स भूमेति वाक्यशेषेणान्वयः।

**विठ्ठ०**— ननु प्रसादस्य मोक्षहेतुत्वेनातःशब्दव्याख्यानं नोचितं भगवत एव मोक्षहेतुत्वेन प्रमितत्वात्। न च प्रसादोऽवान्तरव्यापारः मानाभावात् तथात्वेऽपि कर्मादिसाध्याधमप्रसादेनैवोपपत्तेः किं ज्ञानेनेत्यादिशङ्का-मपाकर्तुमाह **इदमुक्तं भवतीति**। ननु प्रसादो नाम इच्छाविशेषो वा गुणान्तरं वा पक्षद्वयेऽपि भक्तिसाध्यत्व-मनुपपन्नं नित्यव्यक्ता हरेर्गुणा इत्युक्तेः सर्वदा सत्त्वादित्यतो भक्तिसाध्यत्वं नाम प्रसादे फलोन्मुखत्वाकारविशेषस्य व्यक्तीकरणं गुणगताकारस्य नित्यव्यक्तत्वं नाङ्गीक्रियते अतो नानुपपत्तिरित्याह **प्रसादो नामेति**। एतादृशप्रेमप्रवाहो-ऽसंभावित इत्यतः तत्कार्यप्रतिपादकप्रमाणोदाहरणेन संभावयति **यमधिकृत्येति**। अत्रोभयत्रापि जाग्रदवस्थायामपि केवलभगवद्रूपदर्शनदशायां बाह्यविषयज्ञानाभावोक्त्या तादृशप्रेमप्रवाहोऽस्तीति लभ्यते इति भावः।





**चषकः**— **न नः काचिदिति**। कल्पद्वयेऽपीशगुणत्वानपायेनेशाभिन्नतया भक्त्यादिसाध्यत्वानुपपत्तिरिति शङ्कानवकाशैव। सिद्धान्ते गुणगुणिनोः सविशेषाभेदोपगत्या व्यक्त्यव्यक्तिभ्यां सर्वसामञ्जस्यादिति भावः। मुक्त्यात्मकफलोपधायकप्रसक्तिहेतुभूतभक्तिस्वरूपं प्रकाशयति **परमेश्वरेति**। निरूपकतयाऽधिकपदार्थतावच्छेदकीभूताधिक्यान्वय्यवधित्वार्थिका पञ्चमी। उक्तार्थेऽसंभावनाशङ्काव्यवच्छित्यै प्रमाणमभिधत्ते **यमधिकृत्येति**। यं परमात्मानं विषयीकृत्येत्यर्थः। यत्र यस्यां विषयलक्षणायां जाग्रति। अन्यत् परमात्मातिरिक्तं न पश्यति। न साक्षात्कुरुते। सा परमात्मानं पश्यतो मुनेर्निशा प्रायस्तत्र ज्ञानाभावादित्यर्थः। **शक्तियोगात्** शक्तिलक्षणादुपायात्।

**गूढ०**— ननु प्रसादादेव मुच्यत इत्यत्र प्रसादस्य मोक्षसाधनत्वमुक्तम्। तदयुक्तम्। बन्धको भवपाशेन इत्यादौ भगवत एव मोक्षसाधनत्वस्योक्तत्वादन्यथा द्वितीयसूत्रविरोधात्। किञ्च ज्ञानी प्रियतम इत्यादिश्रुतिबलेन यदि कर्मादिश्रुतीनां सावकाशत्वं तर्हि कर्मणेत्यादिश्रुतिबलेनैतासां सावकाशत्वमिति किं न स्यात्। किञ्च मुच्यते इत्युक्ते यत्किञ्चिद्दुःखमोक्षस्य स्वर्गेऽपि सत्त्वात्तस्यैवात्र फलत्वं प्रतीयते। अपि च ज्ञानस्य प्रसादसाधनत्वकथनमप्ययुक्तम्। भक्त्यैव तुष्टिमभ्येतीति स्मृतौ भक्तेरेव प्रसादसाधनत्वस्योक्तत्वात् तद्विरोधः। किञ्च जिज्ञासाया ज्ञानसाधनत्वकथनमप्युक्तम्। जिज्ञासां विनापि पुरुषप्रयत्नेनैव साक्षात्काररूपज्ञानसंभवात्। अस्तु वा जिज्ञासया साक्षात्कारस्तथापि श्रवणमात्रेणैव तदुपपत्तौ मननादेरुपयोगाभावादित्यत आह **इदमुक्तं भवतीति**। ननु भगवत एव मोक्षसाधनत्वे साधनस्य सिद्धत्वात्सर्वदा मोक्षः स्यात्। भगवतो नित्यत्वेन श्रवणाद्यसाध्यत्वेन श्रवणादिरूपजिज्ञासावैयर्थ्यं चेत्यत आह **साधनं चेति**। ननु राजादयो वित्तादिनापि निगडादिभ्यो मोचयन्ति। तथाच वित्तादेरपि साधनताया दृष्टत्वात्कुतः प्रसादस्यैवावश्यकत्वमिति तत्राह **यस्येति**। ननु भगवत एव प्रधानत्वात्कथं प्रसादादिति व्यापारप्राधान्योक्तिरिति तत्राह **व्यापारेति**। ननु भक्तेरेव प्रसादसाधनत्वे कमदिस्तत्साधनत्ववचनविरोध इत्यत आह **स्वर्गादीति**। ननु प्रसादरूपगुणाङ्गीकारेऽष्टगुणत्वस्वीकारविरोध इत्यत आह **प्रसाद इति**। अस्माभिरनन्तगुणपूर्णत्वस्वीकारान्नास्माकं काचित्क्षतिरित्यर्थः। ननु भगवद्दत्तप्रसादस्यापि नित्यत्वात्कथं तस्य ज्ञानादिजन्यत्वम्। न च कार्याभिमुखत्वेनाभिव्यक्तत्वमेव प्रसादस्य ज्ञानसाध्यत्वमिति वाच्यम्। एतादृशसाध्यत्वस्य भगवतोऽपि संभवेन प्रसादपर्यन्ताया अभिव्यक्तेः अयुक्तत्वादिति। मैवम्। उक्तश्रुत्याद्यनुसारेण तथोक्तत्वादिति भावः। ननु भज सेवायामिति धातौ भक्तिर्नाम भजनं तच्च कर्मादिरूपैव। तथाच तस्या एव प्रसादसाधनत्वमापतितमित्यत आह **परमेश्वरभक्तिरिति**। कादाचित्कस्याप्रयोजकत्वात् **निरन्तरेति**। एतादृशभक्तिमतः किंलक्षणमित्याह **यमिति**। ननु चायं पुरुषप्रयत्नेनैव स्यादित्यत आह **न चेति**। अव्यक्तस्वभावस्यापि कथं दर्शनमित्यत आह **अनन्ताचिन्त्यशक्तियोगादिति**। भगवद्विग्रहविशेषस्य चिन्तनादृत इत्यन्वयः। ननु श्रवणमात्रेणैव ध्यानोपपत्तौ मननवैयर्थ्यमत आह **न चेति**। श्रवणशब्दार्थो वाक्यार्थग्रहणलक्षण इति। उपसंहरति **अत इति**।

**प्रदीपः**— ननु कथं भगवतः साधनत्वं यागादिवद्व्यापाररूपत्वाभावात् कुठारादिवत्तदिति चेन्न। व्यापारानिरूपणादित्यत आह **साधनं चेति**। ननु न भगवतः साधनत्वं यस्य प्रसादादिति प्रसादस्य मोक्षसाधनत्वाध्यवसायादित्यत आह **व्यापार इति**। कथं नित्यगुणस्य प्रसादः साध्यत इत्याशङ्क्याह **प्रसाद इति**। शक्तिव्यक्तिरूपताया वक्ष्यमाणत्वादित्यर्थः।





**१६९ सु०— ये तु ध्यानमेव परमपाटवापन्नमपरोक्षाकारमिति मन्यन्ते तेषां दर्शनश्रुतय उपचरितार्थाः प्रसज्येरन् ।**

**बिन्दुः— दर्शनश्रुतय इति**। साक्षात्काररूपदर्शनस्य निदिध्यासितव्य इत्यनेन लब्धत्वाद्द्रष्टव्य इत्यसङ्गतं स्यादिति भावः।

**परि०— ये त्विति**। रामानुजीयाः। **दर्शनश्रुतय इति**। 'आत्मा वा अरे द्रष्टव्यः' 'दृष्ट्वैव तं मुच्यत' इत्यादिश्रुतय इत्यर्थः।

**यादु०— दर्शनश्रुतय इति**। 'आत्मा वा अरे द्रष्टव्यः' 'दृष्ट्वैव तं मुच्यत' इत्याद्याः श्रुतय इत्यर्थः। ध्यानस्य परमपाटवत्वेऽपि परोक्षत्वानपगमादिति भावः। न च ध्यानस्यापि मानसापरोक्षरूपत्वेनाविरोध इति वाच्यम्। ध्येयांशे तस्य परोक्षत्वात्। यथाऽऽहुः। 'परोक्षज्ञानसन्ततिर्ध्यानम्' इति। केचित्तु दर्शनश्रुतय इत्युक्तस्य दर्शनस्य ध्यानसाध्यत्वश्रुतय इत्यर्थ इत्याहुः।

**आनन्दः**— नन्वभ्यासपाटवापन्नध्यानस्यैवापरोक्षाकारत्वात्कथं तस्यैतत्साधनत्वमत आह **ये त्विति**।

**श्रीनिधि०— ये त्विति**। रामानुजीयाः। **दर्शनश्रुतय इति**। दर्शनस्य मोक्षसाधनत्वविधायिकाः श्रुतय इत्यर्थः।

**विठ्ठ०**— ननु पटुतरध्यानस्यैवापरोक्षत्वेन कथं निदिध्यासननामकपटुतरध्यानस्यापरोक्षसाधनत्वमुच्यते इत्यत आह **ये त्विति**। दृष्ट्वैव मुच्यते। आत्मा वाऽरे द्रष्टव्य इत्याद्याः दर्शनस्य मोक्षसाधनत्वपराः श्रुतयः उपचरितार्थाः स्युः। परोक्षज्ञानसन्ततेरेव ध्यानत्वेन प्रमितत्वादित्यर्थः।

**चषकः— दर्शनश्रुतयः** दर्शनप्रतिपादिकाः श्रुतयः 'आत्मा वा अरे द्रष्टव्य' इत्याद्याः। **उपचरितार्था इति**। ध्यानस्य परमपाटवेनापि परोक्षत्वानपायादिति भावः।

**गूढ०**— नन्वभ्यासपाटवापन्नध्यानस्यैव अपरोक्षाकारत्वात् कथं तस्य तत्साधनत्वम् अत आह **ये त्विति**।

**प्रदीपः**— अपरोक्षकारणं ध्यानमेव मोक्षसाधनं न ज्ञानसाधनप्रतिपादकश्रुतिविरोध इत्याह **ये त्विति**। स्यादेतदित्यादिसूत्रे लक्षणया रूढ्या वा जिज्ञासाशब्दस्य विचारार्थत्वात् तस्यैव फलसाधनत्वायोग्यत्वादसूत्रित-प्रसादो न वक्तव्य इत्यर्थः।





॥ सर्वस्य ज्ञानस्वभावत्वेऽपि हरिं विना न कस्यापि मुक्तिः ॥

तत्रादौ पूर्वपक्षः—

**१७० सु०— स्यादेतत् । अतःशब्दस्तावत्प्रकृतस्य हेतुभावे वर्तते । तत्र ब्रह्मजिज्ञासायाः प्रयोजनाकाङ्क्षायामधिकारिविशेषणतयाऽथशब्देन प्रकृतो मोक्षः संबध्यते । ज्ञातुमिच्छा जिज्ञासा । न चात्रावयवार्थेन जिज्ञासाशब्दोऽर्थवान् । इच्छायाः स्वातन्त्र्याविषयत्वेन विधातुमशक्यत्वात् । अत एवेष्यमाणज्ञानोपलक्षणाऽप्ययुक्ता । तस्माज्ज्ञानेच्छान्तर्णीतो विचारो जिज्ञासापदेन लक्ष्यते ।**

**बिन्दुः**— ज्ञानस्य प्रसादद्वारा मोक्षहेतुत्वं समर्थयन्मूलमवतारयिष्यन्निवर्तनीयाशङ्कां प्रदर्शयन्नुक्तमाक्षिपति **स्यादेतदित्यादिना** । **अधिकारीति** । मुमुक्षारूपाधिकारिविशेषणविषयीभूतो मोक्ष इत्यर्थः । **स्वातन्त्र्येति** । विषयसौन्दर्यलभ्यत्वादिति भावः । **अत एवेति** । अनिच्छतोऽपि दुर्गन्धादिज्ञानदर्शनादिति भावः ।

**परि०**— 'द्रव्यं कर्म च कालश्च' इत्यादिश्लोकद्वयं पूर्वसङ्गतमिति दर्शयंस्तार्किकशङ्कोत्तरत्वेन अवतारयति **स्यादेतदित्यादिना** । एतत् वक्ष्यमाणम् । पूर्वं मोक्षहेतुप्रसादजनकज्ञानजनकत्वाज्जिज्ञासा कर्तव्येति जिज्ञासोत्थेत्यादिनोक्तम् । तत्र मोक्षहेतुज्ञानजनकत्वमात्रस्य प्रकृतत्वसंभवोऽतःशब्दस्तावदित्यादिनोपपाद्यते । ईश्वरप्रसादस्य त्वित्यादिना तु प्रसादांशस्याप्रकृतत्वमुच्यते । **प्रकृतस्य हेतुभाव इति** । एतस्माद्धेतोरित्यर्थे वर्तत इत्यर्थः । एतच्छब्दात्पञ्चम्यास्तसिलादेशे एतदोशिति प्रातिपदिकस्याशादेशेऽत इति रूपम् । तथाच सर्वनामसंज्ञकेन प्रातिपदिकेनाकारेण प्रकृतं परामृश्य तस्य तसिल्विभक्त्या हेतुत्वमतःशब्दो वक्तीत्यर्थः । **अधिकारीति** । अधिकारिविशेषणेच्छाविषयत्वेन इत्यर्थः । अथेत्यस्याधिकारानन्तर्यमर्थः । अधिकारश्च मुमुक्षादिरिति भाष्य एव व्यक्तत्वादिति भावः । मोक्षस्याथपदेन प्रकृतत्वमुक्त्वा ज्ञानस्य जिज्ञासापदेन प्रकृतत्वं वक्तुं वाचस्पतिनोक्तमर्थमनूद्य निराह **ज्ञातुमिच्छेति** । **स्वातन्त्र्येति** । विषयविशेषदर्शनादेवेच्छाया जायमानत्वेन प्रयत्नानपेक्षणादिति भावः । **विधातुमशक्यत्वादिति** । प्रयत्नविषयस्यैव विधेयत्वादिति भावः । रामानुजाभिमतार्थं निराह **अत एवेति** । ज्ञानस्य करणपरतन्त्रतया पुरुषप्रयत्नाविषयत्वादेवेत्यर्थः । **अन्तर्णीत इति** । प्रकृत्यर्थज्ञानसाधनत्वेन सन्प्रत्ययार्थरूपेच्छासाध्यत्वेन मध्ये प्राप्त इत्यर्थः । अनेन मुख्यार्थसंबन्धो लक्षणाबीजभूतो दर्शितः । अत्रान्तर्णीतेति पाठः साधुः । 'श्रदन्तरोरुपसर्गवद्वृत्तिर्वाच्या' इत्युक्त्यन्तःशब्दस्योपसर्गत्वेन 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वेन भाव्यत्वात् ।





**गु०दी०**— तच्च प्रयोजनं योग्यतया मोक्ष एवेत्याह **तत्रेति**। **ज्ञानेच्छान्तर्णीत** इत्यस्य ज्ञातुमिच्छेति विग्रहवाक्योक्तविचारसाधनेच्छायाः विचारसाध्यस्यापरोक्षज्ञानस्यान्तर्णीत इत्यर्थः।

**यादु०**— असूत्रितः प्रसादः किमर्थं मोक्षसाधनतयोच्यत इति वक्तुमाह **अतःशब्दस्तावदित्यादिना**। **हेतुभाव इति**। हेतुत्व इत्यर्थः। अत्र हेतुशब्दो लिङ्गवचनो न कारणवचनः। प्रकृतस्य मोक्षस्य जिज्ञासां प्रत्यकारणत्वात्। तथा च ब्रह्मजिज्ञासाकर्तव्यत्वरूपसाध्येऽधिकारिविशेषणतया प्रकृतस्य मोक्षस्य प्रयोजनरूपतया लिङ्गत्वमिति भावः। **प्रयोजनाकाङ्क्षायामिति**। मुख्यप्रयोजनाकाङ्क्षायामित्यर्थः। ज्ञानस्य तु सुखदुःखावाप्तिहान्योरन्यतरत्वाभावान्न मुख्यत्वमिति भावः। तेन जिज्ञासाशब्देनैव ज्ञानस्य विचारप्रयोजनस्योक्तत्वान्न प्रयोजनाकाङ्क्षाऽनुपपन्नेति शङ्काऽनवकाश इति ध्येयम्। **अधिकारिविशेषणतयेति**। स्वर्गकामो यजेतेत्यत्राधिकारिविशेषणस्य स्वर्गस्य यथा मुख्यफलत्वं तद्वदिति भावः। अत्र कश्चित्। अधिकारिविशेषणत्वेन न मोक्षस्य फलता साधयितुं शक्या। जीवनगृहदाहादेरपि फलतासङ्गात्। नापि काम्यत्वविशेषितेन। परस्त्रीकामः प्रायश्चित्तं कुर्यादित्यत्र काम्यमानयोषित्पिण्डस्यापि फलतापातादित्याशङ्क्य न विशेषणत्वमात्रेण काम्यत्वमात्रेण वा मुक्तेः फलत्वं किन्तु काम्यत्वे सत्यनिन्दितविशेषणत्वेनातो नोक्तदोष इत्याह। तच्चिन्त्यम्। न ह्यत्राधिकारिविशेषणतयेत्येतन्मोक्षस्य फलत्वसाधनायोक्तं येनोक्तशङ्कासमाधाने सङ्गच्छतः किन्तु तस्य प्रकृतत्वोपपादनाय। फलत्वं तु मोक्षस्य दुःखनिवृत्त्यादिरूपतया प्रसिद्धमेवेति नोपपादकापेक्षेति। **स्वातन्त्र्येति**। प्रयत्नाविषयत्वेनेत्यर्थः। विषयविशेषदर्शनादेवेच्छाया जायमानत्वेन प्रयत्नानपेक्षणादिति भावः। **अत एवेति**। ज्ञानसाधनस्य विचारादेरेव साक्षात्प्रयत्नविषयत्वं न ज्ञानस्येति भावः। चशब्देन तथात्वे ब्रह्मणो विधेयविशेषणत्वापत्त्याऽप्राधान्यप्रसङ्ग इत्युक्तदूषणं ग्राह्यम्। विचारस्यैव लक्षणायां को हेतुरित्यत आह **ज्ञानेच्छान्तर्णीत इति**। ज्ञानेच्छयोरन्तर्मध्ये नीत इत्यर्थः। सन्दिग्धे विपर्यस्ते वा तत्त्वावधारणमिष्यते। तच्च विचाराविनाभूतमिति विचारे लक्षणेत्यर्थः। नन्वत्र जिज्ञासापदं यौगिकं वाक्यरूपं कथं लक्षकं लक्षणायाः पदवृत्तित्वादिति चेत्। अत्र वदन्ति। न प्रकृतिप्रत्ययसमुदायोऽत्र लक्षकः। किन्तु प्रत्यय एक एवेति। तच्चिन्त्यम्। तथात्वे मुख्यार्थसंबन्धप्रदर्शनायेच्छासाध्य इत्येव वक्तव्यत्वेन ज्ञानेच्छान्तर्णीत इति प्रकृतिप्रत्ययोभयार्थसंबन्धप्रदर्शनवैयर्थ्यप्रसङ्गात्। तस्मादत्र प्रकृतिप्रत्ययोरपि लक्षकत्वं वाच्यमित्यपरे। न च वाक्ये कथं लक्षणेति चोद्यावतारः। गम्भीरायां नद्यां घोष इत्यत्र गम्भीरनदीपदयोर्गम्भीरनदीसंबद्धतीरलक्षकत्वस्य सत्यादिपदानां ब्रह्मस्वरूपमात्रलक्षकत्वस्य च वेदान्तिभिरङ्गीकारात्। तत्रैकैकस्य लक्षकत्वे शक्यासंबन्धिनो गम्भीरनदीतीरादेरप्रतीतिप्रसङ्गवदत्राप्येकैकस्य लक्षकत्वे शक्यासंबन्धिनो ज्ञानसाधनेच्छासाध्यविचारस्याप्रतीतिप्रसङ्गात्। अत एव तादृशविचारोपस्थित्यर्थं प्रकृतिप्रत्यययोरुभयोरपि लक्षकत्वं वेदान्तिरीत्या वक्तव्यमिति। इदमप्यनुपपन्नम्। अत्र किं प्रकृतिप्रत्यययोरजहत्स्वार्थलक्षणोत जहत्स्वार्थलक्षणा। नाद्यः। छत्रिणो गच्छन्तीत्यादौ छत्र्यछत्रिसमुदायस्य गमनान्वय इवात्रापि ज्ञानेच्छाविचाररूपसमुदाये कर्तव्यत्वान्वयप्रसङ्गेन ज्ञानेच्छयोरपि विधेयत्वप्राप्तेः। नापि द्वितीयः। तथात्वे ज्ञानेच्छाबोधकस्यान्यस्याभावेन ब्रह्मण इष्यमाणज्ञानान्वयोक्तिविरोधात्।





तस्माद्विचारो लक्ष्यत इत्यस्याक्षिप्यत इत्यर्थो वर्णनीयः । तथाहि । जिज्ञासा कर्तव्येत्यत्रेष्यमाणज्ञानस्य साक्षादिच्छासाध्यत्वासंभवादिच्छाया वा साक्षात्तत्साधनत्वे अनन्वयात्तन्निर्वाहको विचार आश्रयणीयः । क्रियायाः कालान्तरभाविफलसाधनत्वानुपपत्त्याऽपूर्वाभ्युपगमवदित्याहुः । तदपि चिन्त्यम् । मुख्यप्रयोगाति-क्रमेणेत्यग्रिमफक्किकाऽस्वारस्यात् । विचारस्य आक्षेपलभ्यत्वे कर्तव्यपदानन्वयप्रसङ्गाच्च । न ह्याक्षेपलभ्यस्य वाक्यार्थे समन्वयो दृष्टः ।

**वं०प०— अधिकारिविशेषणतयेति** । नित्यानित्यवस्तुविवेको विषयवैराग्यं शमदमादिसंपत्तिर्मुमुक्षेति साधनचतुष्टयसंपन्नस्यैवाधिकारित्वादित्यर्थः।

**आनन्दः— ** ननु द्रव्यं कर्म चेति भाष्ये सर्वस्यापि भगवदनुग्रहाधीनत्वकथनमयुक्तं सूत्रार्थकथन-रूपत्वाभावादित्यतस्तन्निवर्त्यां शङ्कां दर्शयति **स्यादेतदिति** । अत्र हि ईश्वरप्रसादादिकं सूत्रार्थत्वेन वर्णितं तद्धि वाक्यार्थो वा पदार्थो वा । नाद्यः । तदभावात् । पदार्थत्वपक्षेऽपि किमध्याहृतपदार्थो वा विद्यमानपदार्थो वा । विद्यमानपदार्थत्वपक्षेऽपि शक्त्या वा विद्यमानपदार्थत्वं लक्षणया वा । तत्र न कोऽपि प्रकारः संभवतीत्याशयेन सूत्रगतपदार्थान्विदन्नतःशब्दार्थं तावदाह **अतःशब्द इति** । **अधिकारिविशेषणतयेति** । मोक्षयोग्यत्वस्य अधिकारिलक्षणत्वेन तस्याधिकारिविशेषणत्वादिति भावः । तर्हि जिज्ञासाशब्दार्थत्वमस्त्वित्यत आह **ज्ञातुमिति** । **स्वातन्त्र्याविषयत्वेन** पुरुषस्वातन्त्र्याविषयत्वेन । अस्तु तर्हि इष्यमाणज्ञानोपलक्षणं जिज्ञासापदेनेत्यत आह **अत एवेति** । पुरुषस्वातन्त्र्याविषयत्वादेवेत्यर्थः । अनिच्छतोऽपि दुर्गन्धज्ञानदर्शनादिति भावः । **ज्ञानेच्छान्तर्णीत इति** । ज्ञानसाधनत्वेनेच्छासाध्यत्वेन तदन्तर्णीत इत्यर्थः । ज्ञानायेच्छा हि विचारमाक्षिपतीति भावः । तथाच जिज्ञासापदेन विचारलक्षणायां साध्यसाधनभाव एव शक्यसंबन्ध इति भावः ।

**कं०रा०— अधिकारीति** । मुमुक्षारूपाधिकारानन्तर्यप्रतिपादकाथशब्देनाधिकारिविशेषणमुमुक्षा-न्तर्गततया प्रकृतो मोक्षः प्रयोजनवत्त्वेन संबध्यत इत्यर्थः । **इच्छाया इति** । पुरुषकृतिसाध्यस्यैव यागादे-र्विधेयत्वदर्शनादिच्छायाश्च विषयसौन्दर्यलभ्यत्वेन तदसाध्यतया विधेयत्वायोगादिति भावः । **अत एवेति** । ज्ञानस्य प्रमाणपरतन्त्रत्वेन पुरुषकृत्यसाध्यत्वादेवेत्यर्थः । **उपलक्षणेति** । यद्यपि ज्ञानवाचिनो ज्ञाधातोः जिज्ञासेत्यत्र सत्त्वात्तेनैव ज्ञानोपस्थितिसंभवान्न लक्षणा युक्ता । तथाऽपि ज्ञानस्य सन्प्रत्ययवाच्येच्छा-विशेषणत्वेन धातुनोपस्थापितस्य कर्तव्यपदार्थान्वयायोगात्स्वातन्त्र्येण तस्योपस्थित्यर्थं जिज्ञासापदस्य तत्र लक्षणेति ध्येयम् । **ज्ञानेच्छेति** । ज्ञानेच्छानन्तरं विचारः । विचारानन्तरं च ज्ञानमिति प्रकृतिप्रत्ययार्थयोः ज्ञानेच्छयोर्मध्यवर्ती विचारो जिज्ञासापदेन लक्ष्यत इत्यर्थः । ज्ञानेच्छान्तर्णीत इत्यनेन जिज्ञासापदेन विचारलक्षणायां बीजभूतशक्यसंबन्धो दर्शित इति द्रष्टव्यम् । यद्यपि स्वस्वार्थशक्तप्रकृतिप्रत्ययसमुदायात्मकतया जिज्ञासेत्येतन्न पदं किन्तु वाक्यमिति तस्य लक्षकत्वायोगः । तथाऽपि जिज्ञासेत्यत्र यत्पदं प्रकृतिरूपं प्रत्ययरूपं वा तेन विचारो लक्ष्यत इत्यत्र तात्पर्यम् ।

**श्रीनिधि०— अधिकारिविशेषणतयेति**। मुमुक्षोरधिकारित्वादिति भावः। **स्वातन्त्र्याविषयत्वेनेति**। **विषयसौन्दर्यलभ्यत्वेन** पुरुषप्रयत्नाविषयत्वेनेत्यर्थः। **अत एवेति**। पुरुषप्रयत्नाविषयत्वादेवेत्यर्थः। **ज्ञानेच्छेति**। ज्ञा अवबोधन इति धातोः कर्मणः 'समानकर्तृकादिच्छायां वा' इति सूत्रेण सन्प्रत्यये कृते सन्यङोरिति द्वित्वे **हलादिशेषे ह्रस्व** इति ह्रस्वे सन्यत इतीत्वे अप्रत्ययादिति सूत्रेण अप्रत्यये अतो लोप इति अकारलोपे टापि च कृते जिज्ञासाशब्दो निष्पन्नः। तथा च प्रकृत्यर्थभूतइच्छासाध्यत्वेन ज्ञानेच्छान्तर्णीतो विचारो लक्ष्यत इत्यर्थः। अनेन प्रकृत्यर्थप्रत्ययमुख्यार्थसंबन्ध उक्तो भवतीति बोध्यम्।

**वा०चं०—** ननु द्रव्यं कर्म चेति ज्ञानस्वभावतो मुक्तिनिषेधकमुत्तरवाक्यमसङ्गतम्। न च जिज्ञासोत्थेति पूर्ववाक्योक्तप्रसादस्यातःशब्दार्थतया लाभोपपादनाय तदिति वाच्यम्। तद्वाक्योक्तविचारज्ञानमोक्षाणामिव प्रसादस्यापि हेतुसमर्पकातःशब्देन लाभोपपत्त्या विशेषशङ्काभावेन प्रसादलाभस्यैव विशिष्यानुपपादनीयत्वाज्ज्ञानस्वभावतो मुक्तेः साधकाभावेनेश्वराधीनत्ववचनविरोधेनानुपपत्तिश्चेत्यतः प्रकृतहेतुत्वसमर्पकेणातःशब्देन प्रकृतत्वाद्विचारज्ञानमोक्षाणां हेतुत्वलाभेऽपि प्रसादस्याप्रकृतत्वान्न तल्लाभ इति विशेषशङ्कासद्भावाद्युक्तं तदुपपादनमित्यभिप्रेत्य विशेषशङ्कामुत्थापयति **स्यादेतदिति**। एतत्प्रसादार्थकतयाऽतःशब्दव्याख्यानं तदा स्याद्यदि प्रसादः प्रकृतः स्यादिति शेषः। मोक्षादीनां प्रकृतत्वं प्रसादस्य तदभावं चोपपादयति **तत्रेत्यादिना**। अथशब्देन अधिकारिविशेषणतया मोक्षस्येव शमादीनामपि प्रकृतत्वान्न मोक्षस्यैव संबन्धे विशेषनियामकमित्यत उक्तं **ब्रह्म**जिज्ञासायाः प्रयोजनाकाङ्क्षायामिति। एवमथशब्देन मोक्षस्य प्रकृतत्वमुपपाद्य विचारे ज्ञानसाधनत्वस्य ज्ञाने मोक्षसाधनत्वस्य जिज्ञासाशब्दलक्षणानिमित्तशक्यसंबन्धत्वेन लक्षणाप्रयोजनत्वेन च लाभार्थं लक्षणाया मुख्यार्थानुपपत्त्यादिपूर्वकत्वात्प्रसिद्धयौगिकार्थानुपपत्त्यादिप्रतिपादनाय जिज्ञासाशब्दस्य यौगिकमर्थं तावदाह **ज्ञातुमिच्छेति। इच्छाया इति**। इच्छाया विषयसौन्दर्याधीनत्वेन पुमनधीनत्वेन विधेयत्वासंभवादित्यर्थः। **अत एवेति**। ज्ञानस्य स्वकारणे सति पुमनिच्छायामपि दर्शनात्स्वातन्त्र्याविषयत्वेनाभिधेयत्वादेवेत्यर्थः। इष्यमाणेति शक्यसंबन्धप्रदर्शनम्। एवं च मुख्यार्थानुपपत्तेरुपलक्षणीयान्तरस्य चाभावाद्विचार एवोपलक्षणीय इत्युपसंहरन् शक्यसंबन्धं च दर्शयति **तस्मादिति**। इष्यमाणज्ञानं प्रति साक्षादिच्छायाः साधनत्वासंभवादिच्छानन्तरभाविज्ञानात्प्राक्कालसंबन्धी विचारो ज्ञानेच्छयोरन्तर्मध्ये नीत इत्यर्थः। यद्वा श्रुतिसिद्धस्वर्गसाधनभावो यागः स्वर्गेच्छासाध्य इवान्वयव्यतिरेकसिद्धज्ञानसाधनभावो ज्ञानेच्छासाध्यो विचारो ज्ञानेच्छयोरन्तर्णीत इत्यर्थः। एवं च ज्ञानेच्छासाध्यत्वं विचारस्य शक्यसंबन्ध इति भावः। अत्र ज्ञानेच्छासाध्य इत्येव वक्तव्येऽन्तर्णीत इत्युक्तिः शक्यसंबन्धगवेषणायां विचारे ज्ञानसाधनत्वस्यापि लाभ इति सूचयितुम्। अस्तु तर्ह्यथशब्दान्मोक्षस्य जिज्ञासाशब्दाच्च विचारे ज्ञानसाध्यत्वस्य च लाभः।

**वा०र०— पूर्ववाक्योक्तप्रसादस्येति**। सूत्रकाराभिप्रेततया ज्ञानमोक्षयोरन्तरावश्यकत्वेन व्याख्यातस्येत्यर्थः। **लाभोपपत्त्येति**। यदि हेतुसमर्पकातःशब्देन विचारज्ञानमोक्षाणां लाभसौलभ्यात्तेषां ततो लाभस्यानुपपादनीयता तर्हि तद्वदेव प्रसादस्यापि तेन लाभाभ्युपगमे बाधकाभावेन तल्लाभस्याप्यनुपपाद्यत्वमेव। तथात्वेऽपि





तदुपपादने च विचारादीनां ततो लाभस्याप्युपपादनप्रसङ्गोऽर्धजरतीयायोगादित्याशयः । ज्ञानस्वभावत एव मोक्षोपपत्तेर्न प्रसादापेक्षेति विशेषशङ्कासद्भावात्तदभावोऽसिद्ध इत्यत आह **ज्ञानस्वभावत इति** । साधकाभावेन अनुपपत्तिरिति संबन्धः । अनुपपत्तौ हेत्वन्तरमीश्वरेति । अत्रेश्वराधीनत्ववचनविरोधेन चेति चशब्दयुक्तः पाठः । तदभावे वा चशब्दार्थान्तिभविनैवार्थो योज्यः । पूर्वदूषणसमुच्चये चशब्दः । लाभोपपादने विशेषशङ्काभावोऽसिद्ध इति प्रतिपादितं प्रकृतहेतुत्वसमर्पकेत्यादिसद्भावादित्यन्तेन । अनेन न तु यस्य कस्यापि हेतुत्वसमर्पकताऽतः शब्दस्य । येन प्रसादस्याप्रकृतत्वेऽपि तेन लाभः स्यादिति दर्शयितुं प्रकृतस्येत्युक्तमिति मूलाशय उक्तो भवति । मूलार्थस्तु अतःशब्दप्रतिपादकेन पूर्वप्रकृतं परामृश्य तस्य हेतुता तत्परया विभक्त्योच्यत इति । **तत्रेत्यादिनेति** । **तत्रे**त्यस्य मूले तथा सतीत्यर्थः । प्रकृतस्य हेतुभावेऽतःशब्दो वर्तत इति यदा सिद्धं तदेति यावत् । **प्रयोजनाकाङ्क्षायामितीति** । अयमर्थः । ब्रह्मज्ञानाय विचारकर्तव्यता तावत्प्रतीयते । न च ब्रह्मज्ञानस्य स्वरूपेण पुरुषार्थता । सुखदुःखावाप्ति-निवृत्त्यन्यतरत्वाभावात् । तस्मात्फलविशेषाकाङ्क्षायामथशब्दोपात्ताधिकारिविशेषणभूतो मोक्षः फलत्वेन संबध्यते । यथा स्वर्गकामो यजेतेत्यत्राधिकारिविशेषणस्वर्गफलत्वेन । नन्वधिकारिविशेषणत्वेन मोक्षस्य फलत्वे यावज्जीव-मग्निहोत्रं जुहोतीत्यत्र । यस्याग्निर्गृहान् दहेत् सोऽग्नये क्षामवतेऽष्टाकपालमित्यादावधिकारिविशेषणत्वेनोक्तजीवन-गृहदाहादेरपि फलत्वापत्तिः । अथ काम्यत्वेन फलत्वमिति चेन्न । परस्त्रीकामः प्रायश्चित्तं कुर्यादित्यत्र काम्यमान-योषित्पिण्डस्यापि फलतापातात् । तत्कथमेतदिति चेन्न । विशेषणत्वमात्रेण काम्यत्वमात्रेण वा फलत्वानङ्गीकारात् । किन्तु काम्यत्वे सत्यनिन्दितत्वेन । प्रकृते चाधिकारिविशेषणपदस्य काम्यत्वे सत्यनिन्दितत्वे तात्पर्यान्न कश्चिद्दोषः । एवमेव वक्ष्यति च बन्धमिथ्यात्वमित्येतदवताररूपपराभाष्याद्यनुवादमूलटीकायां टीकाकृदिति ज्ञेयम् । **प्रकृतत्व-मुपपाद्येति** । ततश्च मोक्षसाधनत्वाज्जिज्ञासा कर्तव्येति प्रागुक्तार्थैकदेशः संभवतीति सूचयित्वेत्यपि ज्ञेयम् । **विचारे ज्ञानेत्यादि** । अत्र विचारे ज्ञानसाधनत्वस्य जिज्ञासाशब्दलक्षणानिमित्तशक्यसंबन्धत्वेनेत्यादिरूपेण यथाक्रमं संबन्धः । एतच्च ज्ञानेच्छान्तर्णीत इत्यादिव्याख्यावसरे टीकायामेव स्पष्टं भविष्यति । **लाभार्थमिति** । ततश्च जिज्ञासाशब्दार्थो विचारो दर्शनद्वारा मोक्षसाधनत्वात्कर्तव्य इत्यंशोऽपि संभवतीति सूचयितुमित्यपि ज्ञेयम् । अनुपपत्त्यादीत्यादिपदेन शक्यसंबन्धपरिग्रहः । **तावदाहेति** । अनेन जिज्ञासापदस्य विचाररूपार्थेनैव व्याख्येयतया विचारो हि जिज्ञासेति वाच्ये ज्ञातुमिच्छा हीत्यसङ्गतमिति शङ्का गर्भस्रावपराहतेति ज्ञापितम् । विचारे तस्य शक्त्यभावात् । लक्षणार्थं च मुख्यार्थप्रदर्शनादेरावश्यकतया मुख्यार्थप्रदर्शनार्थमेवेच्छया व्याख्यानात् । **इच्छेतीति** । इच्छायां सन्विधानादिति भावः । इच्छाया अर्थत्वानुपपत्त्या न विचारस्यैवोपलक्षणया सिद्धिः । इष्यमाणज्ञानस्यैवोप-लक्षणया ग्रहणोपपत्तेरित्याशङ्कापरिहाराय प्रवृत्तात एव चेष्यमाणेति मूलगतमत एवेत्येतद्यथा प्रकृतोपयोगि स्यात् तथा व्याचष्टे **ज्ञानस्येति** । **पुमनिच्छायामपीति** । अनिच्छतोऽपि दुर्गन्धादेर्ज्ञानदर्शनादिति भावः । **शक्यसंबन्धेति** । इच्छावाचकजिज्ञासापदेन ज्ञानलक्षणायामिच्छाविषयत्वं संबन्धो दर्शित इत्यर्थः । **मुख्यार्थेति** । इच्छारूपेत्यर्थः । **उपलक्षणीयान्तरस्येति** । ज्ञानरूपस्य पूर्वोक्तरीत्याऽभावात्तदन्यस्यापि तथाविधस्याभावादित्यर्थः । **शक्य-संबन्धमिति** । इच्छावाचकजिज्ञासापदेन विचारलक्षणायां शक्यसंबन्धमित्यर्थः । इच्छानन्तरभावीत्यादेरिच्छा-साध्यो ज्ञानसाधनं चेत्यर्थः । जिज्ञासा कर्तव्येत्यत्रेष्यमाणज्ञानस्य साक्षादिच्छासाध्यत्वासंभवादिच्छाया अपि





साक्षाज्ज्ञानसाधनत्वेनानन्वयाज्ज्ञानेन वेच्छाया वोक्तसाध्यत्वस्य वा साधनत्वस्य वा निर्वाहाय मध्ये विचार आक्षिप्यते । कालान्तरभाविस्वर्गरूपफलसाधनत्वस्य यागक्रियायामनुपपत्त्याऽपूर्वस्य मध्ये कल्पनवदिति भावः । अस्मिन्पक्षे इच्छाया एव ज्ञानसाधनत्वं प्रमाणप्राप्तं विचारस्त्वाक्षेपलभ्य इत्यङ्गीकृतं स्यात् । तथात्वे च विचारज्ञानसाधनत्वस्यान्वयव्यतिरेकसिद्धताविरोध इत्यतो विचारस्यैवान्वयव्यतिरेकाभ्यां ज्ञानसाधनत्वसिद्धे- र्नापूर्वतुल्यता । न चेच्छासाध्यत्वं शक्यसंबन्धरूपं कथं तर्हि निर्वाह्यमिति वाच्यम् । यथा स्वर्गकामो यजेतेति विहितत्वाच्छ्रुतिसिद्धस्वर्गसाधनभावेऽपि यागो वस्तुतः स्वर्गेच्छाया साध्योऽपि भवत्येवं ज्ञानान्वयव्यतिरेक- सिद्धज्ञानसाधनभावोऽपि विचारो ज्ञानेच्छया साध्यो भवतीत्येवं फलेच्छासाध्यत्वेनेच्छासाध्यत्वरूपशक्यसंबन्ध- लाभोपपत्तेरिति प्रकारान्तरमाह **यद्वा श्रुतीति** । तथा च ज्ञानेच्छयोः कार्यकारणभावानापन्नयोरन्तर्मध्ये वस्तुतः फलेच्छासाध्यत्वेन नीत इत्याशयः सूचितो भवति । एवं चेच्छावाचकपदेन कथञ्चिच्छक्यसंबन्धलाभायैव विचारस्य ज्ञानेच्छान्तर्णीतत्वमुक्तमिति भावः । तर्हि लाघवाज्ज्ञानेच्छासाध्य इत्येवोच्यतां किं तदन्तर्णीतत्वोक्त्या । न हि पूर्वव्याख्यान इवेह विचारस्य मध्ये व्यापारतयावस्थानमस्ति । विचारप्रयोजकेच्छायाः परम्परया ज्ञानसाधनत्वे मानाभावादित्यत आह **अत्र ज्ञानेच्छासाध्य इत्येवेति । ज्ञानसाधनत्वस्यापीति** । ज्ञानेच्छया साध्यो विचार इत्येवोक्ते शक्यसंबन्धमात्रं लभ्यते न तु तस्य विचारस्य ज्ञानसाधनतापि । ज्ञानेच्छान्तर्णीत इत्युक्तौ च वस्तुतो विचारो यथेच्छया साध्य एव ज्ञानसाधनमपि भवतीति शक्यसंबन्धगवेषणायामेव लाभात्प्रकृते च लक्ष्यविचारस्य ज्ञानसाधनताया विवक्षितत्वाद्विवक्षितज्ञानसाधनतालाभाय ज्ञानेच्छान्तर्णीत इति गुरूक्तिरित्यर्थः ।

**स०व्र०**— अपरोक्षाकारध्यानमेव मोक्षसाधनज्ञानमित्यत्र ज्ञानसाधनत्वाध्यवसायादसूत्रितः प्रसादो न वक्तव्य इति शङ्कते **स्यादेतदित्यादिना । अतःशब्द इति** । यस्माद्विचारः फलसाधनमतोऽसौ कर्तव्य इत्यर्थः । विचारसाध्यज्ञानस्य सुखप्राप्तिदुःखनिवृत्त्यन्यतरत्वाभावात् । तस्मात्फलविशेषाकाङ्क्षायां 'स्वर्गकामो यजेते'त्यत्रा- धिकारिविशेषणस्य स्वर्गस्य फलत्ववदथशब्दोपात्ताधिकारिविशेषणभूतो मोक्षः फलत्वेन संबध्यत इति भावः । नन्वधिकारिविशेषणत्वेन मोक्षस्य फलत्वमुत काम्यत्वेन । नाद्यः गृहदाहादेरपि फलताप्रसङ्गात् । न द्वितीयः 'परस्त्रीकामः प्रायश्चित्तं कुर्यात्' इत्यत्र कामिनीव्यक्तेरपि फलतापत्तिः । तस्मादधिकारिविशेषणस्य फलत्व- मसङ्गतमिति । मैवम् । न विशेषणत्वेन न वा काम्यत्वमात्रेण मुक्तेः फलत्वम् । किन्तु काम्यत्वे सत्यनिन्दित त्वेन तस्मादधिकारिविशेषणतयेति सुष्ठूक्तमिति । **इच्छाया इति** । पुरुषप्रयत्नाविषयत्वेन विधानानुपपत्ते- र्लक्षणाऽऽश्रयणीयेति भावः । जिज्ञासाशब्देन विचारस्यैव लक्षणायां को हेतुरित्यतो जिज्ञासापदवाच्यसंबन्ध इत्याह **अन्तर्णीत इति** । ज्ञानेच्छाभ्यामन्तर्मध्ये नीत इत्यर्थः । परोक्षज्ञानं फलम् । सन्दिग्धे न निश्चयः । तच्च विचाराविनाभूतमिति विचारे लक्षणेति भावः । अथवा जिज्ञासा कर्तव्येत्यत्रेष्यमाणज्ञानस्य साक्षादिच्छासाध्यत्वस्य इच्छाया अपि साक्षात् ज्ञानं प्रति साधनत्वस्य चासंभवात् । क्रियायाः कालान्तरभाविफलसाधनत्वानुपपत्त्या अपूर्वाभ्युपगमवत्तन्निर्वाहकमेव आक्षिप्यत इत्यर्थः । यद्वा ज्ञानेच्छान्तर्णीत इति शक्यसंबन्धज्ञापनार्थमुक्तम् । ज्ञानेच्छाभ्यामन्तः मध्ये नीतः । ब्रह्मज्ञानेच्छया हि विचारे क्रियमाणे ब्रह्मज्ञानं भवति अत इच्छाज्ञानमध्यवर्ती





विचार इच्छासाध्यो ज्ञानजनको लभ्यत इत्यर्थः। नन्वत्र जिज्ञासापदं यौगिकं वाक्यं न रूढमतः कथं विचारलक्षकं रूढस्य गङ्गादिपदस्य तीरादिलक्षकतया प्रसिद्धत्वादिति चेत्। अत्र वदन्ति। न प्रकृतिप्रत्ययसमुदायोऽत्र लक्षकः, किन्तु प्रत्यय एक एवेति तच्चिन्त्यम्। तथात्वे मुख्यार्थसंबन्धदर्शनायेच्छासाध्य इत्येव वक्तव्यत्वेन ज्ञानेच्छान्तर्णीत इति प्रकृतिप्रत्ययार्थसंबन्धप्रदर्शनवैयर्थ्यात्। तस्मादत्र प्रकृतिप्रत्यययोरुभयोरपि विचारलक्षकत्वम्। एवं हि उभयाभिधेयसंबन्धप्रदर्शनं सार्थकम्। न च पदसमूहे एकार्थलक्षकत्वं क्वाप्यदृष्टं कथं कल्पनीयमिति वाच्यम्। परैः गम्भीरायां नद्यां घोष इत्यत्र गम्भीरनदीपदयोर्गम्भीरनदीसंबद्धतीरलक्षकत्वस्य सत्यादिपदानां ब्रह्मस्वरूपमात्रलक्षकत्वस्य च स्वीकारात्। तत्रैकैकस्य लक्षकत्वे शक्यसंबन्धिनो गम्भीरनदीतीरादेरप्रतीतिप्रसङ्गवत् अत्राप्येकैकस्य लक्षकत्वे शक्यासंबन्धिनो ज्ञानसाधनेच्छासाध्यविचारस्य अप्रतीतिप्रसङ्ग इति। अत एतादृशविचारोपस्थित्यर्थे प्रकृतिप्रत्यययोरुभयोरपि लक्षकत्वं वक्तव्यमिति। अत्र ब्रूमः। न तावदत्र प्रकृतिप्रत्यययोरजहत्स्वार्थलक्षणा। छत्रिणो गच्छन्तीत्यादौ छत्र्यच्छत्रिसमुदायस्य गमनान्वय इवात्रापि ज्ञानेच्छाविचाररूपसमुदायस्य कर्तव्यत्वान्वयप्रसङ्गेन ज्ञानेच्छयोरपि विधेयत्वप्राप्तेः। नापि जहत्स्वार्था। तथात्वे ज्ञानबोधकस्यान्यस्याभावेन ब्रह्मण उद्देश्यज्ञानान्वयोक्तिविरोधात्। तस्मात्प्रत्यय एक एव जहत्स्वार्थलक्षणया विचारलक्षक इति प्रतिभाति। न चैवं विचारस्य ज्ञानेच्छान्तर्णीत इति प्रकृतिप्रत्ययार्थसंबन्धप्रदर्शनं व्यर्थमिति वाच्यम्। नात्र विचारस्य प्रकृतिप्रत्ययार्थसंबन्धो मुख्यार्थसंबन्धतयोच्यते किन्तु लोके हि यो मुख्यार्थसंबन्धः यत्समभिव्याहृतापरपदार्थान्वययोग्यः स एव लभ्यो भवति न परः। विचारस्य प्रत्ययमुख्यार्थेच्छायाः साध्यतया संबन्धः। साधनतया ज्ञानरूपापरपदार्थान्वययोग्यश्च। अतः प्रत्ययलभ्यो भवतु युक्त इत्याशयेन तस्योभयसंबन्धप्रदर्शनोपपत्तेः। न चैवमत्रेच्छाबोधकाभावेन ज्ञानस्येष्टत्वं न सिद्ध्यतीति वाच्यम्। आक्षेपेणैव तत्सिद्धेः। तथाहि इष्टसाधनत्वस्यैव विध्यर्थतया ब्रह्मज्ञानजनके विचारे इष्टसाधनतया विधिनावगते ज्ञानजनकविचारस्येष्टसाधनत्वं ज्ञानस्यैव इष्टत्वमादाय पर्यवस्यतीति न काचिदत्रानुपपत्तिरिति।

**विट्ठ०**— द्रव्यं कर्म चेत्यादेः प्रकृते सङ्गत्यप्रतीतेः भगवत्प्रसादेनैव मोक्षस्य नियतत्वात् सूत्रे विचारज्ञानमोक्षाणामेव प्राप्तेः प्रसादस्य चाप्राप्तेः कथमित्यतः प्रसादोऽपि सूत्रे स्वीकार्य एवेति वक्तुं द्रव्यमित्यादि इत्याशयेन शङ्कामुत्थापयति **स्यादेतदिति**। **हेतुभावे** हेतुत्वे। **अधिकारिविशेषणतयेति**। मुमुक्षोरेवात्राधिकारित्वेन तद्विशेषणतया प्रकृतो मोक्षो अथशब्देन संबध्यते अतो मोक्षः सूत्रप्राप्त इति भावः। विचारस्य सूत्रे प्राप्तिं दर्शयति **ज्ञातुमिच्छेति**। ज्ञातुमिच्छा जिज्ञासेत्यवयवार्थ इति भावः। तर्हि विचारस्य कथं प्राप्तिरित्यत उक्तं **न चेति**। नचात्रेच्छालक्षणयौगिकार्थेनार्थवानिति विचारं लक्षयितुं मुख्यार्थानुपपत्तिप्रदर्शनम्। **स्वातन्त्र्याविषयत्वेन** प्रयत्नाविषयत्वेन। अत एव स्वकारणपौष्कल्ये सति प्रयत्नाभावेऽपि ज्ञानस्य दर्शनेन स्वातन्त्र्याविषयादेव। **तस्मादिति**। यत एवं मुख्यार्थानुपपत्तिः यतश्च नान्यत्र लक्षयितुं युक्तं तस्मात् ज्ञानेच्छावाचकत्वेन जिज्ञासापदेन विचारो लक्ष्यते। शक्यसंबन्धमुपपादयितुमुक्तम् **ज्ञानेच्छान्तर्णीत इति**। इष्यमाणज्ञानं प्रति साक्षादिच्छायाः साधनत्वादिच्छानन्तरभाविविचारस्यैव ज्ञानसाधनत्वात् प्रकृत्यर्थभूतज्ञानसाधनतया सन्प्रत्ययार्थेच्छासाध्यतया तदुभयान्तर्गतत्वेन स्वीकार्य इति यावत्।





**चषकः**— सूत्रघटकपदाप्रतिपादितप्रसादस्य मुत्त्युपधायकतावचनं मन्दप्रयोजनमित्यभिधित्समानः पीठिकामारचयति **अतःशब्दस्तावदित्यादिना** । प्रकृतिभूतसर्वनामसंज्ञकैतच्छब्दस्य एतदोशिति अशादेशे तत्प्रकृतिकपञ्चम्यादेशतापन्नतसिल्प्रत्यये च निष्पन्नोऽतःशब्दः प्रकृतिजनितोपस्थितिविषयस्यज्ञापकत्वरूप-हेतुत्वस्य ज्ञानज्ञाप्यत्वरूपहेतुमत्त्वस्य वा प्रतिपादक इत्यर्थः । आद्ये हेतुविभक्त्यर्थे ज्ञापकत्वे प्रकृत्यर्थस्याधेयता-संबन्धेन प्रत्ययार्थस्य च प्रतिज्ञार्थैकदेशे साध्ये निरूपकतासंबन्धेनान्वयः । द्वितीये तादृशविभक्त्यर्थैकदेशे ज्ञाने विषयितासंबन्धेन तद्धटितविभक्त्यर्थस्य च तादृशसाध्ये आश्रयतासंबन्धेनेति भावः । प्रयोगसमवेतादेशैः स्मार्यमाणानां स्थानिनामेव बोधकत्वमिति नैयायिकास्तत्समवेतादेशा एव तादृशा इति पाणिनीया इति वैचित्र्यं तु नेहप्रपञ्चनीयम् । **प्रयोजनेति** । मुख्यप्रयोजनजिज्ञासायामित्यर्थः । सुखदुःखाप्तिनिवृत्त्यन्यतररूपत्वाभावेन ज्ञानं न मुख्यमिति हृदयम् । तेन सन्प्रत्ययार्थेच्छाविशेषणतापन्नतत्प्रकृतिभूतधातूपस्थाप्यज्ञानरूपप्रयोजनगोचरावगते-र्जिज्ञासापदेनैव निर्वृत्ततया विषयपूरणात्प्रयोजनजिज्ञासैव नोदेतुमलमिति चोद्यानवकाशः । **अधिकारिविशेषण-तयेति** । चन्द्रिकायां जन्मादिनये विशिष्टाधिकारिकमोक्षफलकजीवान्यधर्मिकगुणपूर्णत्वप्रकारकजिज्ञासा कर्तव्येति तत्सूत्रजनितान्वयबोधाकारप्रदर्शनायेति निपातोपस्थाप्यविशेषणचतुष्टयविशेषिताधिकारिणः स्ववृत्तिकर्तृता-निरूपकतासंसर्गेण जिज्ञासापदार्थविशेषणतापन्नस्य विशेषणीभवन्त्यां मुमुक्षायां विषयिताप्रत्यासत्त्या प्रकारी-भूयभासमानमोक्षेतिशब्दोपस्थाप्यतावच्छेदकघटकेनाप्यन्वेष्यतीति भावः । **अशक्यत्वादिति** । इच्छाया विषय-सौन्दर्यदर्शनघटितसामग्रीनिष्पाद्यतया पुंप्रयत्नागोचरत्वेन तन्नैरपेक्ष्यादिति भावः । अत एव पुंप्रयत्नघटितसामग्री-निष्पाद्यत्वादेव । **इष्यमाणेति** । सन्प्रत्ययार्थेच्छायां विषयिताप्रकारीभूयभासमानज्ञानलक्षकता जिज्ञासाशब्दस्य न सङ्गच्छत इत्यर्थः । **तस्मादिति** । प्रकृतिप्रत्ययाभिधेययोर्ज्ञानेच्छयोः प्रतिसन्धीयमानपदार्थान्तरान्वयित्व-बाधाल्लक्ष्यान्तरविरहादेवेत्यर्थः । **ज्ञानेच्छान्तर्णीतः** प्रकृतिभूतजानात्युपस्थाप्यज्ञानसाधनीभूतः सन्प्रत्ययार्थेच्छा-साध्यस्तन्मध्यपतितो विचार इत्यर्थः । एतेन जिज्ञासापदाभिधेयनिरूपितो जन्यजनकभाव एव शक्यसंबन्ध इति ध्वन्यते । ज्ञानगोचरेच्छासाध्य इत्येवाभिहितेरौचित्येनान्तर्णीत इत्युक्तिः शक्यसंबन्धगवेषणायां विचारे ज्ञानसाधनत्वस्यापि लाभ इति सूचयितुमिति व्याचक्षते अत्र व्याकर्तारः । नन्वत्र जिज्ञासापदं यौगिकं वाक्यरूपं कथं लक्षकं लक्षणायाः पदवृत्तित्वादिति चेदत्र वदन्ति । न प्रकृतिप्रत्ययसमुदायोऽत्र लक्षकः किन्तु प्रत्यय एक एवेति । तच्चिन्त्यम् । तथात्वे मुख्यार्थसंबन्धप्रदर्शनायेच्छासाध्य इत्येव वक्तव्यत्वेन ज्ञानेच्छान्तर्णीत इति प्रकृतिप्रत्ययोभयार्थसंबन्धप्रदर्शनवैयर्थ्यात् । तस्मादत्र प्रकृतिप्रत्यययोरुभयोरपि लक्षकत्वमित्यपरे । न च वाक्ये कथं लक्षणेति चोद्यावतारः । गभीरायां नद्यां घोष इत्यत्र गभीरनदीसंबद्धतीरलक्षकत्वस्य सत्यादिपदानां ब्रह्मस्वरूपमात्रलक्षकत्वस्य च वेदान्तिभिरङ्गीकारात् । तत्रैकैकस्य लक्षकत्वे शक्यासंबन्धिनो ज्ञानसाधनेच्छा-साध्यविचारस्याप्रतीतिप्रसङ्गात् । अत एव तादृशविचारोपस्थित्यर्थं प्रकृतिप्रत्यययोरुभयोरपि लक्षकत्वं वेदान्तिरीत्या वक्तव्यमिति । इदमप्यनुपपन्नम् । अत्र किं प्रकृतिप्रत्यययोरजहत्स्वार्थलक्षणा उत जहत्स्वार्थ-लक्षणा । नाद्यः छत्रिणो गच्छन्तीत्यादौ छत्र्यछत्रिसमुदायस्य गमनान्वय इवात्रापि ज्ञानेच्छाविचाररूपसमुदाये कर्तव्यत्वान्वयप्रसङ्गेन ज्ञानेच्छयोरपि विधेयत्वप्राप्तेः । नापि द्वितीयः । तथात्वे ज्ञानेच्छाबोधकस्याभावेन





ब्रह्मण इष्यमाणज्ञानान्वयोक्तिविरोधात् । तस्माद्विचारो लक्ष्यत इत्यस्याक्षिप्यत इत्यर्थो वर्णनीयस्तथाहि जिज्ञासा कर्तव्येत्यत्र इष्यमाणज्ञानस्य साक्षादिच्छासाध्यत्वासंभवादिच्छायाः साक्षात् तत्साधनत्वेनानन्वयात् तन्निर्वाहको विचार आश्रयणीयः । क्रियायां कालान्तरभाविफलसाधनत्वानुपपत्त्या अपूर्वाभ्युपगमवदित्याहुः । तदपि चिन्त्यम् ।

**गूढ०**— ननु द्रव्यं कर्म चेति भाष्ये सर्वस्यापि भगवदनुग्रहाधीनत्वकथनमयुक्तं सूत्रार्थकथनरूपत्वाभावादित्यतस्तन्निवर्त्यां शङ्कां दर्शयति **स्यादेतदिति** । अत्र हीश्वरप्रसादादिकं सूत्रार्थत्वेन वर्णितं तद्धि वाक्यार्थो वा पदार्थो वा । नाद्यः । तदभावात् । पदार्थत्वपक्षेऽपि किमध्याहृतपदार्थो वा विद्यमानपदार्थो वा । विद्यमानपदार्थत्वपक्षेऽपि शक्त्या वा विद्यमानपदार्थत्वं लक्षणया वा । तत्र न कोऽपि प्रकारः संभवतीत्याशयेन सूत्रगतपदार्थान् वदन्नतःशब्दार्थं तावदाह **अतःशब्द इति** । **अधिकारिविशेषणतयेति** । मोक्षयोग्यत्वस्याधिकारिलक्षणत्वेन तस्याधिकारिविशेषणत्वादिति भावः । तर्हि जिज्ञासाशब्दार्थत्वमस्त्वित्यत आह **ज्ञातुमिति** । **स्वातन्त्र्याविषयत्वेन** पुरुषस्वातन्त्र्याविषयत्वेन । अस्तु तर्हि इष्यमाणज्ञानोपलक्षणं जिज्ञासापदेनेत्यत आह **अत एवेति** । पुरुषस्वातन्त्र्याविषयत्वादेवेत्यर्थः । अनिच्छतोऽपि दुर्गन्धज्ञानदर्शनादिति भावः । **ज्ञानेच्छान्तर्णीत इति** । ज्ञानसाधनत्वेन इच्छासाध्यत्वेन तदन्तर्णीत इत्यर्थः । **ज्ञानायेच्छा हि विचारमाक्षिपतीति** भावः । तथाच जिज्ञासापदेन विचारलक्षणे साध्यसाधनभाव एव शक्यसंबन्ध इति भावः ।

**प्रदीपः**— **अतःशब्द इति** । यस्माद्विचारः फलसाधनमतोऽसौ कर्तव्य इत्यर्थः । ननु विचारसाध्यज्ञानस्य सुखदुःखावाप्तिनिवृत्त्यन्यतरत्वाभावात् फलान्तरं वक्तव्यमित्याशङ्क्योक्तं **तत्रेति** । अयं ब्रह्मज्ञानाय विचारः । तस्य कर्तव्यता तावत् प्रतीयते न च ब्रह्मज्ञानस्य स्वरूपेण पुरुषार्थता सुखावाप्तिदुःखनिवृत्त्यन्यतरत्वाभावात् तस्मात् फलविशेषाकाङ्क्षायामथशब्दोपात्ताधिकारिविशेषणभूतो मोक्षः फलत्वेन संबध्यते यथा स्वर्गकामो यजेतेत्यत्राधिकारिविशेषणस्य स्वर्गस्य फलत्वं तद्वत् । ननु अधिकारिविशेषणत्वेन मोक्षस्य फलत्वमुत काम्यत्वेन तत्र तु प्रथमकल्पो न च कल्पते जीवनगृहदाहादेरपि फलताप्रसङ्गात् । न द्वितीयः । परस्त्रीकामः प्रायश्चित्तं कुर्यादित्यत्र काम्यकामत्वेन वा मुक्तेः फलत्वं किन्तु काम्यत्वे सत्यनिन्दितत्वेन । तस्मादधिकारिविशेषणतयेति सुष्ठूक्तमिति । **इच्छाया इति** । मुख्यार्थानुपपत्तिर्लक्षणाबीजमित्युक्तम् । अन्तर्णीत इति जिज्ञासापदवाच्यसंबन्धोऽपि विचारस्यैव लक्षणायां हेतुरुच्यते ज्ञानेच्छयोः अन्तर्मध्ये नीत इति यावत् । परोक्षतया ज्ञाते अपरोक्षज्ञानं फलमिष्यते सन्दिग्धे च निश्चयफलं तच्च विचाराविनाभूतमिति विचारलक्षणेत्यर्थः । अथवा जिज्ञासाकर्तव्येत्यत्रेष्यमाणज्ञानस्य साक्षादिच्छासाध्यत्वसंभवात्तन्निर्वाहको विचार आक्षिप्यते इच्छाया अपि साक्षात्साधनत्वेनानन्वयात् तन्निर्वाहको विचार आश्रयणीयः । क्रियायाः कालान्तरभाविफलसाधनत्वानुपपत्त्या पूर्वाभ्युपगमवदित्यर्थः ।





**१७१ सु०— मुख्यप्रयोगातिक्रमेण लाक्षणिकाश्रयणे चेदं प्रयोजनम् यत् विचारस्य ज्ञानद्वारैव मोक्षसाधनत्वज्ञापनम् । अन्यथा योग्यताविरहेणान्वयाभावप्रसङ्गात् । यदि च जिज्ञासाशब्दो मीमांसाशब्दवद्विचार एवोपसंख्यायते तदाऽप्यन्वयव्यतिरेकाभ्यां विचारस्य ज्ञानसाधनता ज्ञास्यते ।**

**एवं च विचारो यतो ज्ञानसाधनं ज्ञानं च मोक्षसाधनम् अतः असौ कर्तव्य इति लभ्यते।**

**परि०— अन्यथेति** । मुख्यविचारपदस्यैवोक्तावित्यर्थः । साक्षाद्धेतुत्वाभावादिति भावः । **विचार एवोपसङ्ख्यायत इति** । यद्यपि श्रीमद्भाष्यटीकायां जिज्ञासितं सुसंपन्नमिति प्रयोगान्मुख्यार्थ एव जिज्ञासाशब्दो विचारेऽभिमतस्तथापि पूर्वत्र लक्ष्यत इत्युक्तिः, अत्र च यदि चोपसङ्ख्यायत इति चोक्तिरनास्थयेति चन्द्रिकायामुक्तम् ।

**यादु०—** अत एवमत्रास्वरसात्पक्षान्तरमाह **यदि चेति** । मीमांसाशब्दवदित्यनेन जिज्ञासाशब्दो विचारे रूढ एव । इच्छाप्रतीत्यभावेऽपि विचारप्रतिपादकत्वात् मीमांसाशब्दवदिति युक्तिं सूचयति । यथाहुः । 'मीमांसा-शब्दतो हीच्छामज्ञात्वैव विजानते । विचारं लौकिकास्तेन तत्रायं रूढ इष्यत' इति । एवं चास्मिन्पक्षे तद्विजिज्ञासस्व इत्यादौ अस्मिंश्च सूत्रे विधौ न लक्षणाश्रयणमिति ज्ञातव्यम् । मीमांसाशब्दवद्विचार एवोपसङ्ख्यायत इत्यनेन मीमांसाशब्दो यथा इच्छार्थत्वाभावेऽपि विचार एव 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्ये'त्यत्र सन्नन्त उक्तः । तथा जिज्ञासाशब्दोऽपि इच्छार्थत्वाभावेऽपि विचार एव सन्नन्त उपसङ्ख्येय इति सूयचति । ननु रूढ्या जिज्ञासाशब्दस्य विचारवाचकत्वे तस्य साक्षान्मोक्षसाधनत्वासंभवेन ज्ञानद्वारकत्वं कथं ज्ञेयमित्यत आह **तदाऽप्यन्वयव्यतिरेकाभ्यामिति** । अस्मिन्नपि पक्षे ब्रह्मण उद्देश्यफलसंबन्धित्वेनैव जिज्ञासाकर्मत्वं न साक्षादतो न विधेयविशेषणतयाऽप्राधान्यमिति शङ्कावकाश इति ध्येयम् । युक्तो नियुक्तः प्रेरित इत्यर्थः ।

**वं०प०— अन्यथेति** । ज्ञानद्वारमन्तरेण साक्षाद्विचारस्यैव मोक्षहेतुत्वोक्तावित्यर्थः । **योग्यतेति** । विचारे क्रियमाणेऽपि मोक्षानुपलम्भेनार्थबाधरूपयोग्यताविरहादित्यर्थः ।

**आनन्दः—** नन्वस्मदायत्ते शब्दप्रयोगे प्रयोजनाभावे लाक्षणिकप्रयोगो न युक्त इत्यत्राह **मुख्येति** । **अन्यथेति** । ब्रह्मविचार इति मुख्यप्रयोग इत्यर्थः । एवं हि सति विचारस्य मोक्षसाधनत्वमुक्तं स्यात् । तच्चायुक्तम् । तमेवमिति श्रुतौ ज्ञानस्यैव मोक्षसाधनताया उक्तत्वेन तद्बाधेनाबाधितत्वरूपयोग्यताया अभावादन्वयप्रमा न स्यादित्यर्थः । ननु टीकायां जिज्ञासितं सुसंपन्नमित्यादिप्रयोगेण मीमांसाशब्दो विचारे रूढ इत्युक्तत्वेन तत्र योग्यताविरहेणान्वयाभावरूपदोषः स्यादित्यत आह **यदि चेति** । एवं सति सिद्धं सूत्रार्थमाह **एवं चेति** ।





**कं०रा०— विचारस्येति** । वाचकविचारशब्दस्यैव प्रयोगेऽतःशब्दोपात्तमोक्षरूपप्रयोजनं प्रति विचारस्य ज्ञानद्वारा साधनत्वं न लभ्यते । ज्ञानेच्छान्तर्णीतविचारलक्षकजिज्ञासापदप्रयोगे तु ज्ञानद्वारैव विचारस्य मोक्षसाधनत्वं लभ्यत इति भावः । **अन्यथेति** । विचारस्य ज्ञानद्वारा मोक्षहेतुत्वज्ञापकलाक्षणिकपदप्रयोगाभावे विचारमोक्षयोः साक्षादेव साध्यसाधनभावो वाक्यार्थः स्यात् । तत्र चान्वये योग्यताविरहेणान्वयो न स्यादित्यर्थः । **यदि चेति** । मीमांसाशब्दवज्जिज्ञासाशब्दस्य विचारवाचकत्वमेव यदा भवति तदा लाक्षणिकशब्दप्रयोगाभावाद्विचारस्य ज्ञानद्वारा मोक्षहेतुत्वं न ज्ञापितं स्यादिति चोद्याभिप्रायः । जिज्ञासाशब्दस्य विचारवाचकत्वं च 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्ये'त्यत्र मानेर्जिज्ञासायामित्यर्थनिर्देशबलात्सिद्धम् । न हि क्वाप्यवाचकशब्देनार्थनिर्देशोऽस्तीति भावः । मीमांसाशब्दवज्जिज्ञासाशब्दस्य विचारवाचकत्वेऽपि विचारे सति विचार्यार्थतत्त्वज्ञानं तदभावे तदभाव इत्यन्वयव्यतिरेकदर्शनेन जिज्ञासाशब्दितविचारस्य ज्ञानसाधनताज्ञापने ज्ञानद्वारैव मोक्षसाधनता लभ्यत इत्यभिप्रेत्य परिहरति **तदाऽपीति** ।

**श्रीनिधि०— अन्यथेति** । विचारस्य साक्षान्मोक्षसाधनत्व इत्यर्थः । **योग्यताविरहेणेति** । विचारस्य साक्षान्मोक्षसाधनत्वस्य 'आत्मा वाऽरे द्रष्टव्यः', 'तमेवं विद्वान्' इत्यादि श्रुतिबाधितत्वादिति भावः । **मीमांसाशब्दवदिति** । अत्र जिज्ञासाशब्दवत् प्रक्रिया द्रष्टव्या । 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्ये'ति अभ्यासदीर्घः । मीमांसाशब्दस्य इच्छावाचिसन्नन्तत्वेऽपि विचारवाचित्वं यथा तथा जिज्ञासाशब्दस्यापि भविष्यतीति भावः ।

**वा०चं०—** ज्ञानस्य मोक्षसाधनतालाभस्तु कथमित्यतः स्वायत्तन्यायविरोधेन लाक्षणिकप्रयोगानुपपत्तेस्तत्प्रयोगप्रयोजनत्वेन तत्सिद्धिरित्याह **मुख्येति** । **अन्यथेति** । विचारे मुख्यस्य विचारशब्दस्यैव सूत्रे प्रयोगेऽतो मोक्षाद्धेतोर्विचारः कर्तव्य इति सूत्रवाक्यान्मोक्षविचारयोः साक्षात्साध्यसाधनभावप्रतीत्या विचारस्य च अन्वयव्यतिरेकाभ्यां साक्षाज्ज्ञानसाधनत्वस्यैव सिद्धतया विचारे साक्षान्मोक्षसाधनत्वस्य बाधितत्वेनान्वयाभावप्रसङ्गादित्यर्थः । एवं लक्षणापक्षे ज्ञानसाधनत्वादिलाभं प्रदर्श्य रूढिपक्षेऽपि तं दर्शयति **यदि चेति** । एवं च पूर्वोक्तान्वयाभावप्रसङ्गो ज्ञानान्वयव्यतिरेकाननुसन्धानेन साक्षात्साध्यसाधनभावेन सूत्रव्याख्यान इति न विरोध इति द्रष्टव्यम् । अस्मिन्पक्षेऽथ मुमुक्षानन्तरं ज्ञानसाधनविचारः कर्तव्य इति सूत्रवाक्यार्थान्यथाऽनुपपत्त्या ज्ञानस्य मोक्षसाधनतालाभ इति द्रष्टव्यम् ।

**वा०र०— स्वायत्तन्यायेति** । अस्मदायत्ते वाक्प्रयोगे किमित्यवाचकपदं प्रयुञ्ज्महे इति न्यायेनेत्यर्थः । अयं चात एव चोपमेत्येतद्व्याख्यानादौ तत्र तत्र मूलकृतोदाहृत इति ज्ञेयम् । **तत्प्रयोगेति** । अनुपपन्नोऽपि यो लाक्षणिकप्रयोगस्तत्प्रयोजनेति योज्यम् । पावित्र्यादिज्ञापनाय गङ्गायां घोष इत्यादौ अवाचकप्रयोगदर्शनेन तन्न्यायस्य प्रयोजनाभावस्थलविषयत्वादिति भावः । **लक्षणापक्ष इति** । जिज्ञासाशब्दस्य विचारे लक्षणेति पक्षे विचारस्य





ज्ञानसाधनत्वं लक्षणानिमित्तशक्यसंबन्धत्वेन ज्ञाने मोक्षसाधनत्वं च लक्षणाप्रयोजनत्वेन लभ्यत इत्येवं तदुभयलाभं प्रदर्शयेत्यर्थः। **रूढिपक्षेऽपीति**। जिज्ञासाशब्दस्य विचारे रूढिपक्षेऽपीत्यर्थः। तं पक्षमाश्रित्यापीति यावत्। मूले विचार एवोपसंख्यायते। विचारे रूढतया स्वीक्रियत इत्यर्थः। जिज्ञासितं सुसंपन्नमिति विचारेऽपि तत्प्रयोगादिति भावः। ननु रूढिपक्षे जिज्ञासापदोक्तविचारस्य साक्षान्मोक्षसाधनत्वानुपपत्तिं परिहर्तुमन्वयव्यतिरेकाभ्यां विचारस्य ज्ञानसाधनतावगमोऽङ्गीकृतः। न चासौ युज्यते। लक्षणापक्षे तदाश्रयणप्रयोजनत्वेन विचारस्य ज्ञानद्वारैव मोक्षसाधनताज्ञापनमुक्त्वा विचारे मुख्यविचारशब्दप्रयोगश्चेदतो मोक्षाद्धेतोर्विचारः कर्तव्य इति सूत्रवाक्यप्रतीत-विचारमोक्षयोः साक्षात्साध्यसाधनभावानुपपत्त्याऽन्वयाभावप्रसङ्ग इत्यभिधानेन तद्विरोधप्रसङ्गात्। तत्पक्षेऽपि विचारस्य ज्ञानसाधनताया अन्वयव्यतिरेकाभ्यामवगमसंभवेन तस्य साक्षान्मोक्षसाधनत्वस्यानङ्गीकारादिति वक्तुं शक्यत्वादित्यत आह **एवं चेति**। **साक्षात्साध्यसाधनभावेन व्याख्यान इति**। यदि च रूढिपक्ष इव लक्षणा-पक्षेऽपि साक्षात्तयोः साध्यसाधनभावमव्याख्यायान्वयव्यतिरेकाभ्यां विचारस्य ज्ञानसाधनतावगम्यत इति व्याख्यायते तदान्वयाभावप्रसङ्गोऽप्यत्रेव तत्रापि नेति भावः। ननु विचारस्य ज्ञानसाधनताया उक्तरीत्या लाभोऽस्तु। तथापि ज्ञानस्य मोक्षसाधनताया एतत्पक्षे कथं लाभः। लक्षणाप्रयोजनत्वेन हि प्राक्तल्लाभ उदित इत्यतः पूर्वत्रेव तल्लाभस्यासंभवेऽपि प्रकारान्तरेण तल्लाभसंभवान्न दोष इत्याह **अस्मिंश्च पक्ष इति**। **लाभ इति**। भोजनेच्छानन्तरं पाकसाधनाधिश्रयणादि कार्यमित्युक्तेऽसङ्गतिपरिहाराय पाकश्च भोजनसाधनमिति लाभवन्मुमुक्षानन्तरं मोक्ष-साधनस्यैवानुष्ठेयत्वे विधातव्ये ज्ञानसाधनविचारविधानमसङ्गतमित्यसङ्गतिपरिहाराय ज्ञानं च मोक्षसाधनमित्यत्र पर्यवसन्नमिति ज्ञानस्य मोक्षसाधनताया लाभ इत्यर्थः।

**स०व्र०**— ननु जिज्ञासाशब्दस्य रूढत्वे ज्ञानज्ञापकाभावाद्योग्यताविरहेण विचारस्य मोक्षसाधन-त्वोक्तिरनन्विता स्यादित्यत आह **यदि चेति**।

**विठ्ठ०**— विचारस्य जिज्ञासापदेन लक्षणायां संबन्धानुपपत्तिं दर्शयित्वा लाक्षणिकपदप्रयोगे प्रयोजनमाह **मुख्यप्रयोगेति**। **अन्यथेति**। विचारशब्दस्यैव सूत्रे प्रयोगे। अतो मोक्षाद्धेतोः विचारः कर्तव्य इति विचारस्य मोक्षसाधनत्वाप्रतीतेः तस्य चाग्निसेचनवदयोग्यत्वेनान्वयाभावः सूत्रवाक्ये स्यात्। ज्ञानस्य मोक्षसाधनतायाः सुप्रमितत्वेन तद्द्वारा विचारस्य मोक्षसाधनत्वं अवश्यज्ञापनीयमिति तदर्थं लाक्षणिकपदप्रयोग एवावश्यक इति भावः। ननु जिज्ञासितं सुसंपन्नं आत्मानं जिज्ञासया यच्छेदित्यादिप्रयोगबाहुल्यदर्शनात् जिज्ञासाशब्दो रूढो-ऽङ्गीक्रियते तत्त्वप्रकाशिकायां तथैवोक्तेः। अस्त्विति चेत्तर्हि विचारस्य ज्ञानसाधनतालाभादुक्तदोषप्राप्तिरित्यत आह **यदि चेति**। मीमांसाशब्दवदित्यनेन यथा सन्नन्तोऽपि मीमांसाशब्दो मान्बधेत्यादिसूत्रेण विचारपरत्वेनोप-संख्यातः तथा अयमपि शब्द उपसंख्येय इति भावः। **अन्वयव्यतिरेकाभ्यामिति**। मोक्षसाधनीभूतज्ञानस्य विचारान्वयव्यतिरेकानुविधायकहेतुना बहिरेव ज्ञास्यते अतो नोक्तदोष इति भावः। अस्त्वेवं ततः किमित्यतः उक्तरीत्या लब्धार्थं जिज्ञासा कर्तव्येत्यंशस्य दर्शयन् प्रसादो न सर्वथा सूत्रलब्ध इत्याह **एवं चेति**।





**चषकः**— मुख्यातिक्रमेणेत्यग्रिमफक्किकाऽस्वारस्यात् । विचारस्याक्षेपलभ्यत्वे कर्तव्यपदार्थानन्वयप्रसङ्गाच्च । न ह्याक्षेपलभ्यस्य वाक्यार्थे समन्वयो दृष्टः अत एव तत्रास्वरसात्पक्षान्तरमाह **यदि चेतीति** व्याचचक्षिरे । वस्तुतस्तु वाक्यस्य पाणिनिदिशा सुप्तिङन्तानेकपदघटिततया शक्त्यभावनिबन्धनलक्षकताराहित्येऽपि यौगिकजिज्ञासापदस्य तादृशानेकघटितत्वाभावेन कृदन्तत्वायत्तप्रातिपादिकसंज्ञाधीनसुबुत्पत्तिकतापादितपदसंज्ञाध्रौव्येन प्रकृत्यर्थज्ञानविशेषितेच्छावाचिनो ज्ञानसाधनेच्छासाध्यविचारलक्षकताया निरर्गलतया वाक्यतुल्यत्वाद्यौगिकस्य न लक्षकतेति शङ्काङ्कुरमुत्पत्तुमेव नालम् । कथमन्यथा छत्रिणो यान्तीत्यादेर्यौगिकस्य छत्रिपदस्य तान्त्रिकाणां वैश्वदेवीमिति वाक्यविहितयागे यौगिकस्य वैश्वदेवेन यजेतेति वाक्यघटकवैश्वदेवपदस्य वैश्वदेवावैश्वदेवसमुदायस्य तादृशयोः क्षराक्षरपदयोष्टीकाकृतां च लक्षकतोरीकृतिः सङ्गच्छेत । गभीरायां नद्यामित्यत्र तु गभीरपदस्यैव वा नदीपदस्यैव वा गभीरनदीतीरे लक्षणा, अन्यतरपदं तात्पर्यग्राहकमित्याकरे व्यक्तमेव । वाक्यलक्षणापक्षः स्वबोध्यसंबन्धो लक्षणेत्यभिदधतां मीमांसकानामेवेति निरूढमेव । अत एव अस्वरसात्पक्षान्तरमाहेति वा कथम् । अरुचेरेव दुरुपपादत्वात् । तस्मात् 'जिज्ञासाशब्दतो हीच्छामज्ञात्वैव विजानते । विचारं लौकिकास्तेन तत्रायं रूढ इष्यत' इति चन्द्रिकादिशा अवयवार्थप्रतिसंहितिनियन्त्रितलक्षणाग्रहासमवधानेऽपि शाब्दबोधोदयाद्रूढिरेवोपेतव्येत्याह यदि चेतीत्येवावतारयितव्यः स ग्रन्थ इति सर्वं समञ्जसम् । अत एवावयवार्थप्रतिसंहितिदशायामेवार्थप्रत्यायकबुभुत्सापदादविशेषो नैतत्पदस्येति ध्येयम् । एवं लक्षणापक्षे ज्ञानसाधनत्वादिलाभं प्रदर्श्य रूढिपक्षेऽपि तं दर्शयति । **यदि चेती**त्यप्यवतारयन्ति । अत्र चन्द्रिकायां सुधायां जिज्ञासापदस्य विचारलक्षकताकल्पो मतान्तरमभिप्रेत्य प्रदर्शितः । यदि चेत्यादिना विचारे रूढतामतं तु सिद्धान्तदिशेति स्थितम् । अवाचकेनार्थनिर्देशायोगेन मान्बधदानित्यादिसूत्रे मानेर्जिज्ञासायामित्यर्थनिर्देशाद्विचारबोधकता जिज्ञासाशब्दस्य सेत्स्यतीत्यपि निबन्धान्तरीयो विन्यासः । एवं च प्रकृतकल्पे विधौ न लक्षणेति प्रवादोऽप्यादृतो भवति । जिज्ञासापदस्य विचारलक्षकताकल्पे स्वायत्ते इति न्यायेन स्वारसिकलक्षणोपगतिसाफल्यानुरोधेनान्तराकृत्य ज्ञानं विचारस्य मोक्षसाधनताधिगतावपि तदभिधायकताकल्पे तन्न्यायाप्रवृत्त्या तद्दुरधिगम इत्यतः संप्रत्यपि तद्घटयिष्यति **तदाऽप्यन्वयेति**।

**गूढ०**— नन्वस्मदायत्ते शब्दप्रयोगे प्रयोजनाभावे लाक्षणिकप्रयोगो न युक्त इत्यत्राह **मुख्येति** । **अन्यथेति** । ब्रह्मविचार इति मुख्यप्रयोग इत्यर्थः । एवं हि सति विचारस्य मोक्षसाधनत्वमुक्तं स्यात् । तच्चायुक्तम् । तमेवमिति श्रुतौ ज्ञानस्यैव मोक्षसाधनताया उक्तत्वेन तद्बाधेनाबाधितत्वरूपयोग्यताया अभावादन्वयप्रमा न स्यात् इत्यर्थः । ननु टीकायां जिज्ञासितं सुसंपन्नमित्यादिप्रयोगेण मीमांसाशब्दो विचारे रूढ इत्युक्तत्वेन तत्र योग्यताविरहेणान्वयाभावरूपदोषः स्यादित्यत आह **यदि चेति** । एवं सति सिद्धं सूत्रार्थमाह **एवं चेति** ।

**प्रदीपः**— ननु जिज्ञासाशब्दस्य रूढत्वे ज्ञानज्ञापकत्वाभावाद्योग्यताविरहेण विचारस्य मोक्षसाधनत्वोक्तिः अनन्विता स्यादित्यत उक्तं **यदि चेति** ।





**१७२ सु०— मोक्षादेरन्यलभ्यत्वस्य शङ्कितत्वात्सावधारणताऽपि ।**

**बिन्दुः**— ज्ञानेच्छान्तर्णीत इत्यनेन शक्यसंबन्धमाह **सावधारणतापीति** । अब्भक्षन्यायेन इत्यर्थः । अन्यथा शङ्कासमाधानयोर्वैयधिकरण्यं स्यादिति भावः ।

**परि०— शङ्कितत्वादिति** । पूर्वपक्षिणेति योज्यम् । **सावधारणतेति** । विचार एव यतो ज्ञानसाधनं ज्ञानमेव यतो मोक्षसाधनमिति सावधारणतेत्यर्थः । अन्यथा पूर्ववादिकृतशङ्कानिरासाभावेन अत इत्यस्य वैयर्थ्यापत्तेरिति भावः।

**वं०प०— सावधारणतेति** । विचार एव यतो ज्ञानसाधनं ज्ञानमेव यतो मोक्षसाधनमिति सावधारणतेत्यर्थः ।

**आनन्दः**— ननु कर्मणैव मोक्षः स्यादित्यत आह **मोक्षादेरिति** । सर्वं वाक्यं सावधारणमिति न्यायादिति भावः।

**वा०चं०**— जिज्ञासोत्थेति वाक्योक्तावधारणलाभप्रकारं दर्शयति **मोक्षादेरिति** । ननु लक्षणापक्षस्तावदनुपपन्नः । तथा हि । न तावज्जिज्ञासापदसमुदाये लक्षणा । जिज्ञासापदस्य यौगिकतया समुदायस्याशक्तत्वात् । शक्तपदस्यैव लक्षकत्वात् । नापि सन्प्रत्यये लक्षणा । इच्छाया अविधेयत्वेनेच्छाविचारयोः कर्तव्येत्येकक्रियान्वयाभावेन छत्रिपदवदजहल्लक्षणानुपपत्तेः । नापि तत्र जहल्लक्षणा । इच्छापरित्यागे साध्यतोपस्थितिं प्रति प्रयोजकीभूतस्येष्टत्वस्याभावेन ज्ञानस्य साध्यतोपस्थित्यभावेनाकाङ्क्षाभावेन तस्य साधनेन विचारेणान्वयायोगात् । ज्ञानायेति साध्यत्वाकारेणान्वयायोगाच्च । नापि ज्ञानपदेऽजहल्लक्षणा । ज्ञानविचारयोरेकवृत्त्युपस्थितयोः परस्परान्वयासंभवेन साध्यसाधनभावेनान्वयानुपपत्तेः । न ह्येकवृत्त्युपस्थितानामपि परस्परमन्वयो व्युत्पत्तिसिद्धः । शक्यलक्ष्यसमुदायस्य ज्ञानविचारस्य युगपदेकक्रियान्वयाभावाच्च न तत्राजहल्लक्षणा । नापि तत्र जहल्लक्षणा । ज्ञानाय विचारः कर्तव्य इति श्रौतान्वयायोगादिच्छाया अनन्वयप्रसङ्गात्कर्तव्यविचारस्येच्छयाऽन्वयासंभवाद्विचारातिरिक्तस्य लक्ष्यमाणार्थस्याभावाच्च । नापि रूढिपक्षो युक्तः । इच्छायां सन्विधानेनावयवशक्तेरेव सुप्रसिद्धतया रूढिकल्पकाभावादिति चेन्न तावल्लक्षणापक्षे दोषः । वैश्वदेवेन यजेतेत्यादौ वैश्वदेवीमामिक्षामिति वाक्यविहितयोगे यौगिकस्य वैश्वदेवशब्दस्य वैश्वदेवावैश्वदेवसमुदाये लक्षणावद्यौगिकस्यापि जिज्ञासाशब्दस्य लक्षणोपपत्तेः । अवयवशक्तिमाश्रित्य समुदाये योग इवावयवशक्तिमाश्रित्य समुदाये लक्षणाङ्गीकारेऽप्यनुपपत्तेरभावात् । अस्तु वा सन्प्रत्यये जहल्लक्षणा । न चोक्तदोषः । गम्भीरनद्योरन्वयबोधनान्तरं गम्भीरान्वितनदीबोधकनदीपदस्यैव तीरे लक्षणायामपि गम्भीरनदीतीरत्वेनोपस्थित्या गम्भीरनदीतीरत्वस्य लक्ष्यतावच्छेदकत्वात्तत्कोटिप्रवेशेन नद्या गम्भीरत्वसिद्धिवज्ज्ञानेच्छयोरन्वयबोधानन्तरं ज्ञानान्वितेच्छाबोधकसन्प्रत्ययस्य विचारे लक्षणायामपि ज्ञानविषय-





केच्छासाध्यविचारत्वप्रकारकबोधेन ज्ञानविषयकेच्छासाध्यविचारत्वस्य लक्ष्यतावच्छेदकत्वात्तत्कोटिनिवेशेन ज्ञाने इष्टत्वलाभेन ज्ञानस्य साध्यतयोपस्थितेर्बुद्ध्या विवेकेन ज्ञानायेत्याकारेण अन्वयस्य च संभवात् । न च गम्भीरनदीपदद्वयेऽपि लक्षणास्वीकाराद् दृष्टान्तासङ्गतिरिति वाच्यम् । उक्तरीत्या नदीपद एव लक्षणया गम्भीर-नदीबोधोपपत्तौ पदद्वयेऽपि लक्षणायां कल्पकाभावात् । यत्तु केनचित्सन्प्रत्ययस्य जहल्लक्षणया विचारलक्षकत्व-मङ्गीकृत्य विचारान्वयाय ज्ञानस्य साध्यतोपस्थितये सिद्धावस्थज्ञानवाचकज्ञानपदस्य साध्यावस्थज्ञानलक्षकत्वं पञ्चदशान्याज्यानीत्यत्र सिद्धावस्थस्तोत्रनाम्नोऽप्याज्यपदस्य पञ्चदशसङ्ख्यागुणान्वयाय साध्यावस्थस्तोत्रलक्षकत्व-वदिति पदद्वयेऽपि लक्षणेत्युक्तम् । तन्न । पञ्चदशान्याज्यानीत्यत्र प्रकारान्तरेण साध्यतोपस्थित्यसंभवेन तत्र लक्षणाश्रयणेऽपि प्रकृते उक्तरीत्या लक्ष्यतावच्छेदककोटिनिवेशेन ज्ञानस्येष्टत्वलाभेन साध्यत्वेनोपस्थितेः प्रकारा-न्तरेण संभवान्न पदद्वये लक्षणा युक्ता । अङ्गीकृत्य चेदमुदितम् । वस्तुतः पदवृत्तिर्लक्षणावृत्तित्वाच्छक्तिवदिति वाक्ये लक्षणैव न युक्ता । न च विषं भुङ्क्ष्वेत्यादौ वाक्येऽपि लक्षणा दृष्टेति वाच्यम् । अयमिदानीं मयि क्रुद्धः । आप्तत्वे सति प्रमाणविरुद्धकर्तव्यताभिधायित्वात् । क्रोधश्चास्य सन्निहितशत्रुगृहभोजनादेव दृष्टत्यागेनादृष्ट-कल्पनाऽयोगात् । अतो न मयेदं कार्यमित्यनुमितेरेव तत्रापि स्वीकारेण वाक्यलक्षणाया अनङ्गीकारात् । ननु 'अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदी'ति वाक्येऽर्धमेवान्तर्वेदीति वाक्यार्थपक्षे परिसङ्ख्यादोषापत्त्याऽर्धमन्तर्वेदि मातव्यमित्येव विधातव्येऽर्धान्तरं न विहितं नापि प्रतिषिद्धमित्यर्धान्तरस्य विधितो व्यावृत्तावपीच्छातः प्राप्तस्या-निवारणात् । पाक्षिकप्राप्तबहिर्देशानुवादकत्वे बहिर्वेदीत्यस्य नित्यवच्छ्रवणानुपपत्त्या बहिर्वेदीत्यस्यापि विधाय-कत्वस्वीकारे वाक्यभेदापत्त्याऽन्तर्वेदिबहिर्वेदिशब्दद्वयोपलक्षितान्तरालदेशरूपैकार्थविधानेन वाक्यभेदाभावात् । यत्र मीयमानयूपस्यार्धमन्तर्वेदि भवत्यर्धं बहिर्वेदि तत्र मिनुयादिति देशविशेषलक्षणा वाक्येऽपि स्वीकृतैवेति चेत् । अत्र केचित् । अर्धमेवान्तर्वेदीति नियमाश्रयणाद्विनैव लक्षणां सन्धिदेशविशेषसिद्धिरिति परिहरन्ति । तन्न । प्रकरणविशेषादसंयुक्तम् । प्रधानस्य चिकीर्षया च संयोगादित्यधिकरणाभ्यां वेदैरङ्गप्रधानरूपसर्वार्थत्वप्रतिपादनेन नियमेन प्राप्तसर्ववेदैरर्धान्तरव्यावृत्तिफलकपरिसङ्ख्याप्रसक्तावपि पाक्षिकाप्राप्तेरभावेन नियमाश्रयणासंभवात्तस्मा-दर्धस्यान्तरत्वे सत्यर्धस्य बहिष्ट्वेन वाक्यार्थेनान्तरालप्रदेशस्यापेक्षणादेव लाभेनान्यलभ्यत्वाभावान्न लक्षणेत्येव परिहारो द्रष्टव्यः । न चैवं लक्षणोच्छेदः । यत्र वाक्यान्तर्गतपदान्तराणां शक्यार्थबोधकत्वस्वीकार एकपदलक्षणया च न प्रकृतार्थलाभस्तत्र शाब्दी हीति न्यायाविरोधायानेकपदलक्षणास्वीकारेऽपि शक्यपदरहितवाक्ये एकपद-लक्षणयोपपत्तिस्थले वा नानेकलक्षणेत्यभिप्रायान्न लक्षणोच्छेदप्रसङ्गः । विषं भुङ्क्ष्व इत्यत्र भुजिधातोर्मुख्यार्थत्वे अर्धमन्तर्वेदीत्यत्रापि लिङ्गादेरभिधायकत्वस्वीकारे तत्राप्यनेकपदलक्षणास्वीकारेऽपि बाधकाभावात् । न च जिज्ञासापदेऽप्येवमेव पदद्वये लक्षणाऽस्त्विति वाच्यम् । उक्तरीत्या प्रकृते एकपदलक्षणयैवोपपत्त्या विषं भुङ्क्ष्वे-त्यादिवत्पदद्वयलक्षणां विनाऽनुपपत्तेरभावेन पदद्वयलक्षणाया अस्वीकार्यत्वात् । तस्मान्न लक्षणापक्षे कश्चिद्दोषः । नापि रूढिपक्षोक्तदोषः । प्रयोगप्रत्यययोरेव रुढिकल्पकत्वात् । न चावयवशक्त्या ज्ञानेच्छावाचिनो जिज्ञासाशब्दस्य विचारे लक्षणया प्रयोगप्रत्यययोरुपपत्तौ न शक्त्यन्तरकल्पनमिति वाच्यम् । तथा सति ज्ञानेच्छावाचिनो मीमांसा-शब्दस्यापि विचारे लक्षणया प्रयोगप्रत्ययोपपत्त्या रूढिर्न स्यात् । न च मीमांसाशब्दाद्विचारप्रतीतेर्ज्ञानेच्छा-





रूपयौगिकार्थप्रतीतिपूर्वकत्वाभावान्न तस्य तत्र लक्षणेति वाच्यम् । बुभुत्सापदादपि विलम्बेन विचारधी-संभवेनाभियुक्तानां तदप्रयोगेन मीमांसाशब्दवज्जिज्ञासाशब्दस्यैव नियमेन विचारे प्रयोगेन मीमांसाशब्दतुल्यतया जिज्ञासाशब्दाद्विचारप्रतीतेरपि यौगिकार्थप्रतीतिपूर्वकत्वाभावस्य सिद्धत्वात् । अन्यथा मान्बधेति सूत्रे माने-र्जिज्ञासायामिति वृत्तावुक्तेरुत्तरसूत्रेणैव सनः सिद्धेरत्र मानो ग्रहणमभ्यासदीर्घत्वार्थमिति पदमञ्जर्यामुक्तेस्तयो-रेकार्थत्वस्य तदभिप्रेतत्वाज्जिज्ञासाशब्दवन्मीमांसाशब्देऽपीच्छायां सन्विधानेनाविशेषान्मीमांसाशब्दाद्विचारप्रतीते-रिच्छाप्रतीतिपूर्वकतैव स्वीकर्तव्या स्यात्तदिदमुक्तं मीमांसाशब्दवदिति । न च मीमांसावद्विचारपर्यायेष्वगणनान्न जिज्ञासाशब्दस्य तत्र रूढिरिति वाच्यम् । बुभुत्सापदवैलक्षण्यस्य मीमांसाशब्दसारूप्यस्य चोपपादिततयाऽस्यापि तत्पर्यायेषु गणनीयत्वात्तदिदमुक्तमुपसङ्ख्यायत इति । न चैवं विचारप्रतीतेरिच्छाप्रतीतिपूर्वकत्वाभावमुपजीव्य जिज्ञासाशब्दस्य विचारे रूढिप्रतिपादने तस्या इच्छाप्रतीतिपूर्वकत्वनियमोपजीवनेन प्रवृत्तलक्षणापक्षः पूर्वोक्तोऽयुक्तः स्याद्वस्तुनो द्वैरूप्यासंभवेन जिज्ञासाशब्दाद्विचारप्रतीतेरिच्छाप्रतीतिपूर्वकत्वनियमतदभावयोरनुपपत्तेरिति वाच्यम् । विचारे रूढेरेव स्वपक्षत्वेऽपि जिज्ञासाशब्दाद्विचारे ज्ञानसाधनत्वरूपप्रकृतप्रमेयस्य रूढिरूपस्वपक्षेणेव परपक्ष-भूतलक्षणयाऽपि निर्वाहात् । परीत्याऽपि प्रकृतोपपादनसंभवे किमिदानीं स्वपक्षाग्रहेणेत्यभिप्रेत्य परसिद्ध-लक्षणापक्षस्यानूदितत्वेनाविरोधात् । अत एव शङ्काग्रन्थे तदुक्तिः । न चैवं गीताभाष्यटीकायामेतत्सूत्रस्थजिज्ञासा-शब्दस्य विचारलाक्षणिकत्वमङ्गीकृत्येच्छाया विधेयत्वोपपादनमयुक्तं स्यादिति वाच्यम् । कर्तव्यपदान्वयाय सूत्रस्थजिज्ञासाशब्दस्येच्छार्थताऽसंभवेन विचारपरताया आवश्यकत्वात्स्वाभिप्रेतरूढ्यनुसारेण चेच्छाप्रसक्तेरेव सूत्रेऽनुपलम्भेनेच्छाया युक्तत्वप्रतिपादकप्रमाणोपन्यासावसरे सूत्रोदाहरणस्यासङ्गत्यापातेन सूत्रं प्रकृते सङ्गमयितुं वा जिज्ञासाशब्दस्य विचारे लक्षणां वदता परेणापि ज्ञानादिच्छाऽङ्गीकर्तव्येति परन्यायेन परं प्रत्युपपादयितुं वा तत्रापि परमतस्यैवोपन्यस्तत्वात् । यद्वा विचारे रूढेः सत्त्वेऽपि येन रूढिं विद्यमानामप्यनवबुद्ध्या यौगिक एवार्थोऽवबुद्धस्तस्य विचारप्रतीतेर्यौगिकार्थेच्छाप्रतीतिपूर्वकत्वनियमेन तं प्रति लक्षणाया आवश्यकत्वात्तदभिप्रायेणात्र गीताभाष्ये च लक्षणापक्षोक्तिरिति सर्वमनवद्यम् । (गुप्तिज्किद्भ्यःसन् । मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य । सूत्रद्वयोक्तेभ्यः सन्स्यान्मानादीनामभ्यासस्येकारस्य दीर्घश्च । गुपेर्निन्दायाम् । तिजेः क्षमायाम् । कितेर्व्याधिप्रतीकारे निग्रहेऽपनयने नाशने संशये च । मानेर्जिज्ञासायाम् । बधेश्चित्तविकारे । दानेरार्जवे । शानेर्निशाने । एष्वर्थेष्वेते नित्यं सन्नन्ताः, धातोरित्यविहितत्वात्सनोऽत्र नार्धधातुकत्वं तेनेड्गुणौ न । अत्र न्यासकार आह । धातोः कर्मणः समान-कर्तृकादिच्छायां वेति सूत्रे वाग्रहणं विभज्य त्रिसूत्रीशेषतया संबध्यते । सा च व्यवस्थितविभाषा । तेनेह सूत्रद्वयेऽर्थविशेषोपहितेभ्य एव सनिति । स च विशेषो मुनित्रयेण साक्षादनुक्तोऽपि वृत्तिकारादिभिरुपनिबद्धस्तं दर्शयति । गुपेर्निन्दायामित्यादिना । धातोरिति सूत्रे इच्छायामिति श्रुतत्वात्कर्मत्वं समानकर्तृकत्वं च तदपेक्षमेव गृह्यते । तथा च इषिकर्मणः इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छायामित्यर्थः । उदाहरणं तु पठितुमिच्छति पिपठिषतीत्यादि पिपठिषेत्यादि च । अथाष्टावनुदात्तेतः गुप गोपने तिज्निशाने मान्पूजायां बधबन्धने । अनुदात्तेत्व-रूपानुबन्धस्य केवलेऽचरितार्थत्वात् सन्नन्तात्तङ् । जुगुप्सते जुगुप्साञ्चक्रे तितिक्षते मीमांसते भष्भावः चर्त्वं बीभत्सते । गुपिप्रभृतयः किद्भिन्ना निन्दाद्यर्थका एवानुदात्तेतः आर्जवनिशानार्थौ दान्शानौ च स्वरितेतौ ।





गोपनादिरूपे धातुपाठोपात्तेऽर्थान्तरे त्वननुबन्धकाश्शुरादयः । भ्वादयो भिन्नाः । अभेदे तु सन्नन्तादिवाकर्तृगफलात् ण्यन्तादपि तङ् स्यादिति भावः । वाचस्पत्यादौ मीमांसाशब्दो माङ्मान इत्यस्मात् व्युत्पन्न इत्युक्तम् । तत्समर्थनं त्वित्थम् । इह सन्प्रकृतिस्तावदात्मनेपदार्हा चुरादिकाङ्गिन्नैवेति स्थितम् । मान्पूजायामित्यादिवृत्तिकारग्रन्थोऽपि भंक्त्वा व्याख्येय एव । न हि तस्मादयं सन् । एवं स्थिते सन्प्रकृतिरनुदात्तेदेवेत्यत्र मानाभावात् ङिदेव सास्तु नुक् च सूत्रे निपात्यताम् । न च वैयाकरणानामुपायेष्वाग्रहः । उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता इत्युक्तेः । न चैवं सनिमीमेति इस्प्रसङ्गः । भ्वादिसाहचर्येणेच्छासन्येव तद्विधानादिति ।)

वा०र०— **अवधारणेति** । प्रसादादेवेत्यवधारणेत्यर्थः । न च तर्हि मोक्षादेरित्यादिपदायोगः । तदवधारणस्यैव जिज्ञासयैवोत्थज्ञानादेव जायमानेति पूर्वत्राप्यन्वयादिति भावः । एवं जिज्ञासाशब्दस्य लक्षणया वा रूढ्या वा विचारपरत्वमुपपाद्य रूढिपक्षस्य स्वपक्षतां चान्ते उपपादयिष्यन् उक्तपक्षद्वयमपि समर्थयितुं तदुभयमाक्षिपन् तावल्लक्षणापक्षं विवरणनृसिंहाश्रमानुसारेणाक्षिपति **ननु लक्षणापक्षस्तावदिति** । जिज्ञासापदे लक्षणा भवन्ती किं समुदाये उत सन्प्रत्यये आहोस्वित् ज्ञानार्थकप्रकृतिपदे इति विकल्पान् मनसि कृत्वाद्यपक्षमनूद्य दूषयति **न तावज्जिज्ञासेति** । जिज्ञासापदरूपो यः समुदायः शक्तं पदमिति लक्षणानुसारेण प्रकृत्यादेः पदत्वात्तत्समुदायस्तत्रेत्यर्थः । एतेन समुदायोक्त्यैव यौगिकताया लाभाद्यौगिकतयेत्युत्तरग्रन्थासङ्गतिरिति निरस्तम् । **समुदायस्येति** । वर्णसमुदायस्येत्यर्थः । क्लृप्तावयवशक्त्यैवार्थबोधोपपत्तौ समुदायशक्तिकल्पनायोगादिति भावः । उक्तं च भट्टवार्तिके । भवेतां यदि वृक्षस्य वाजिकर्णौ कथञ्चन । अक्लृप्तां समुदायस्य कः शक्तिं जातु कल्पयेदिति । मास्तु शक्तिस्तथापि लक्षणा किं न स्यादित्यतस्तदुत्तरत्वेनोक्तम् उपपादकमाह **शक्तपदस्यैवेति** । शक्यार्थबाधादेर्लक्षणाबीजतया शक्त्यभावे लक्षणाबीजाभावेन लक्षणाया अयोगादिति भावः । तदुक्तं मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनादित्यादि । तद्ग्रन्थेऽनुक्तमप्युपपादकं तत्र तत्र वक्ष्यतीति ज्ञेयम् । प्रत्ययलक्षणापक्षेऽपि अजहल्लक्षणा वा जहल्लक्षणा वेति विकल्पं मनसि कृत्वा आद्यं दूषयति **इच्छाया इति** । यत्र हि तद्वाक्यप्रतीयमानक्रियान्वयः शक्यलक्ष्यसाधारणस्तत्रैव छत्रिणो गच्छन्तीत्यादावजहल्लक्षणाया दृष्टत्वेन प्रकृते च विचारस्य विधेयत्वेऽपि इच्छाया विधेयत्वाभावेन विचारेच्छयोः कर्तव्येत्येकक्रियान्वयस्याभावेनाजहल्लक्षणानुपपत्तेरित्यर्थः । द्वितीयमाशङ्क्य निराकरोति **नापि तत्रेति** । ब्रह्मज्ञानाय विचारः कर्तव्य इति हि सूत्रार्थः । तत्र जिज्ञासापदेनेच्छाया अप्युपस्थित्यभावे ज्ञाने इष्टत्वप्रकारकबोधाभावेन तदधीनसाध्यत्वप्रकारकबोधस्याप्यनुपपत्त्या तथोपस्थित्यभावे चेदृशं ज्ञानं केन साधनेन स्यादित्या-काङ्क्षानुपपत्त्या विचारेण तज्ज्ञानमित्येवं विचाररूपसाधनेनान्वयायोगादित्यर्थः । न केवलं ज्ञानस्य साध्यत्वेनोपस्थित्यभावे आकाङ्क्षायोगेन साधनतया विचारस्यान्वयायोग इत्येव । अपि तु ज्ञानायेति ज्ञानस्य विचारं प्रति साध्यत्वेनान्वयायोगश्चेत्याह **ज्ञानायेतीति** । यद्वा ज्ञानस्य स्वपदेनानुपस्थितत्वेनैकदेशान्वयस्याव्युत्पन्नत्वेन च तदन्वयायोग इत्याह **ज्ञानायेतीति** । ज्ञानपदे लक्षणेति पक्षेऽपि किमजहल्लक्षणोत जहल्लक्षणेति विकल्पद्वयं मनसि कृत्वाद्यमनूद्य दूषयति **नापीति** । **एकवृत्तीति** । अजहल्लक्षणास्थले हि शक्यलक्षणयोरपि लक्षणैव । अन्यथा युगपद्वृत्तिद्वयविरोधात् । एकवृत्त्युपस्थितयोश्च न परस्परमन्वयो दृष्टः । प्रकृते च तथास्थितयोर्ज्ञानविचारयोः





साध्यसाधनभावेनैवान्वयो विवक्षितः। स न संभवतीत्यर्थः। स्वप्रधानतयोभयोः प्रतिपादनं त्वसंमतमिति भावः। तदेवोपपादयति **न हीति**। दूषणान्तरेणाजहल्लक्षणापक्षं दूषयति **शक्यलक्ष्यसमुदायस्येति**। ज्ञानं च विचारश्चेति द्वन्द्वैकवद्भावः। समुदायरूपस्य ज्ञानविचारस्येत्यर्थः। छत्र्यछत्रिसमुदायस्य गमनरूपैकक्रियान्वयसत्त्वेन तथाविध-स्थल एवाजहल्लक्षणास्थित्या प्रकृते च ज्ञानस्य विधेयत्वेन शक्यलक्ष्ययोर्ज्ञानविचारयोः कर्तव्येत्येकक्रियान्वया-भावाच्चेत्यर्थः। द्वितीयमनूद्य दूषयति **नापीति**। तत्र ज्ञानपदे हेतुमाह **ज्ञानायेति**। यदि ज्ञानपरित्यागस्तर्हि ज्ञानाय विचारः कर्तव्य इति यः श्रौतोऽन्वयो वक्तव्यस्तदयोगादित्यर्थः। दूषणान्तरमाह **इच्छाया इति**। प्रकृत्यर्थज्ञानपरित्यागे प्रत्ययार्थभूतेच्छायाः ज्ञाने इष्टत्वसमर्पकतया अन्वयासंभवेनानन्वयप्रसङ्गादित्यर्थः। मास्तु ज्ञानेनान्वयस्तदतिरिक्तेनैव अन्वयः किं न स्यादित्यतस्तदन्यत् भवद्विचाररूपमेव वाच्यम्। न च कर्तव्येति क्रियान्वयि विचारस्येष्टत्वबोधोऽत्र भवति। येन विचारेणेच्छाया अन्वयो भवेदित्यर्थः। एतेनैव कर्तव्येत्यनेनेच्छाया अन्वयो नास्तीत्यपि सूचितम्। ननु विचारापेक्षयान्वयायोगेऽपि ज्ञानपदलक्ष्यमाणार्थान्तरेण तस्यान्वयः किं न स्यादित्यत आह **विचारातिरिक्तस्येति**। एवं प्रथमवर्णकाद्यभागविवरणटीकान्तरानुसारेण लक्षणापक्षमाक्षिप्य तृतीयवर्णकपञ्चपादिकास्थोच्यते नायं जिज्ञासा-शब्दः परित्यक्तावयवार्थः केवलमीमांसापर्यायः प्रयुज्यमानो दृश्यते नापि स्मरणमस्ति न चावयवार्थेनार्थवत्त्वे संभवति। समुदायस्यार्थान्तरकल्पना युक्तेत्यादिग्रन्थाशयकथनपरचत्वारः शब्दप्रवृत्तिप्रकाराः तत्र रूढिर्यथेत्यारभ्य तस्मात् क्लृप्तसामर्थ्यादिव प्रयोगप्रतिपत्तिसंभवेन शक्त्यन्तरकल्पनेत्याह नायं जिज्ञासाशब्द इतीत्यादि विवरणोक्त-रीत्या सिद्धान्त्यभिमतरूढिपक्षमप्याक्षिपति **नापि रूढीति**। **कल्पकेति**। प्रयोगप्रत्ययरूपेत्यर्थः। अवयवशक्त्या ज्ञानेच्छावाचिनो जिज्ञासाशब्दस्य विचारे लक्षणया प्रयोगप्रत्यययोरुपपत्तौ न शक्त्यन्तरकल्पनं युक्तमिति भावः। समर्थने उक्तरीत्यैव चन्द्रिकानुसारेणाशङ्कयिष्यमाणत्वात् व्युत्पादयिष्यते चेदमुत्तरत्र। इतःपरं रूढिपक्षोपपादन-समाप्तिपर्यन्तं लेख्यमस्ति। एवं नृसिंहाश्रमोक्तरीत्या जिज्ञासापदसमुदायादेर्विचारे लक्षणापक्षं जिज्ञासाशब्दस्य विचारे रूढिपक्षं चाक्षिप्य तत्परिहारं च तदुक्तं दूषयिष्यन् स्वाभिप्रेतं तदाक्षेपपरिहारं तावद्दर्शयति **न तावदित्यादिना**। रूढिपक्षे दूषणाभावस्याप्युत्तरत्र प्रतिपादनाभिप्रायेण तावच्छब्दः। लक्षणापक्षे जिज्ञासापदसमुदायस्य विचारे लक्षणेति पक्ष इत्यर्थः। वक्ष्यति च **जिज्ञासाशब्दस्येति**। अस्तु वा सन्प्रत्यये जहल्लक्षणेति पक्षान्तरस्य पृथक्प्रतिज्ञानाच्चेति ज्ञेयम्। **वैश्वदेवेनेति**। प्रमाणलक्षणस्य चतुर्थपादे वैश्वदेवे विकल्प इति चेदिति दशमाधिकरणे चिन्तितम्। चातुर्मास्येषु हि चत्वारि पर्वाणि वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयनामकानि तत्र वैश्वदेवपर्वणि आग्नेयमष्टा-कपालं निर्वपति सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालमिति भिन्नदेवताका भिन्नहविष्का अष्टौ यागाः समाम्नाताः। तत्सन्निधौ वैश्वदेवेन यजेतेति श्रुतम्। तत्र सन्देहः किं यजेतेत्यनेन प्रकृताष्टौ यागाननूद्य वैश्वदेवशब्देन विश्वेदेवाख्यदेवतारूपगुणो विधीयते। किं वैतेषां यागानां वैश्वदेवशब्दो नामधेयमिति। पूर्वपक्षस्तु वैश्वदेवशब्दस्य नामधेयत्वे नाममात्रस्य विधेयत्वा-योगात् द्रव्यदेवतयोरभावेन द्रव्यदेवताख्यरूपशून्यतया यागस्यापि विधेयत्वानुपपत्तेर्ध्रौवाज्येन्द्ररूपद्रव्यदेवतयो-रन्यत्र कल्पनायाश्चानन्यगतिकतया प्रकृतदेवतारूपगुणविधित्वसंभवेन अष्टौ हवींष्षीत्यनन्यगतिकलिङ्गविरोधाच्च तत्कल्पनानुपपत्तेर्वैश्वदेवेन यजेतेति समग्रवाक्यस्यैवानर्थक्यप्रसङ्गेन वैश्वदेवशब्दस्य नामधेयत्वाश्रयणानुपपत्त्या





यजतिना प्रकृतयागाननूद्य तेषु विश्वेदेवदेवताख्यगुणो विधीयत इत्यङ्गीकार्यम् । न चाष्टस्वपि यागेषु देवताकाङ्क्षाया आग्नेयमष्टाकपालमित्याद्युत्पत्तिवाक्यैनैवाग्न्यादिदेवताप्रतिपादकेन निवृत्ततया विश्वेदेवदेवतासंबन्धप्रयोजकाकाङ्क्षाभावेन नोक्तगुणविधानं संभवतीति वाच्यम् । उत्पत्तिवाक्यावगताग्न्यादिदेवतावरुद्धेष्वपि यागेषु देवतान्तरस्य संपूर्णवाक्यवैयर्थ्यान्यथानुपपत्त्या प्राप्तत्वेन त्यागायोगाद्देवताद्वयसमावेशस्य च विकल्पेनोपपत्त्या स्वत आकाङ्क्षाभावेऽपि यजिना शुद्धानां प्रकृतानां यागानामाकाङ्क्षोत्थापनेन वाक्याद्देवतान्तरान्वयसंभवेन दोषाभावात् । न चाग्न्यादिदेवतानामुत्पत्तिशिष्टत्वाद्विश्वेदेवदेवतायाश्चोत्पन्नशिष्टत्वादुत्पन्नशिष्टयोर्मध्ये उत्पत्तिशिष्टस्य स्वभावतः बलीयस्त्वेनोत्पन्नशिष्टबाधकत्वोपपत्तेर्न विकल्पावकाश इति वाच्यम् । उत्पत्तिशिष्टस्य स्वभावतः प्रबलत्वेऽपि समस्तवाक्यवैयर्थ्यान्यथानुपपत्त्या प्रतिघातेनानर्थक्यप्रतिहतानां विपरीतं बलाबलमिति श्रुतिलिङ्गाधिकरणोक्तन्यायेन प्राबल्यापगमाद्देवताद्वयस्य विषमशिष्टत्वेनाविकल्पे बाधकाभावेनामिक्षायागातिरिक्तेषु सप्तसु यागेषु देवताद्वयविकल्पः। आमिक्षायां च विश्वेदेवदेवतानुवादमात्रमित्यङ्गीकारोपपत्तेः। तस्मादनन्यगत्याऽग्न्यादिदेवतान्तरावरुद्धेष्वपि प्रकृतयागेषु वैश्वदेवेन यजेतेत्यनेन तदनुवादपूर्वकं विश्वेदेवदेवतारूपो गुणो विधीयत इत्येव वाच्यमिति। सिद्धान्तस्तु भवेदेवं समग्रवाक्यवैयर्थ्यान्यथानुपपत्त्या देवतागुणविधिपरत्वं वैश्वदेवशब्दस्योक्तरीत्या यदि समग्रवाक्यानर्थक्यं नामधेयत्वपक्षे स्यात् । न च तदस्ति । उक्तरीत्या तत्पक्षे नाममात्रस्य विधेयत्वाद्वयोगेऽपि प्रकृताष्टयागानामेकेन वैश्वदेवशब्देनानुवादमुखेन समुदायीकरणार्थत्वेन वैश्वदेवेन यजेतेति समग्रवाक्यस्यार्थवत्त्वात् । तथाहि । अष्टानां यागानां नानावाक्यचोदितानां स्वतःसमुदायायोगेऽप्यनुवादे सति एकशब्देन तेषामुपादानप्राप्त्या तेन निमित्तेनैकप्रतीत्या रूढानां समुदायसंभवात् तत्सिद्ध्यर्थमुक्तवाक्यगतवैश्वदेवशब्देन छत्रिन्यायेन वैश्वदेवावैश्वदेवसमुदायानुवादस्यावश्यकत्वम् । न च समुदायीकरणप्रयोजनाभाव इति वाच्यम् । प्राचीनप्रवणे वैश्वदेवेन यजेतेत्यादिषु वैश्वदेवनाम्नाग्नेयादियागसमुदायं व्यवहृत्य तस्य यागाष्टकस्य प्राचीनप्रवणदेशादिसंबन्धप्रतिपादनात् । तत्प्रतिपादनस्योक्तरीत्या समुदायीकरणसत्त्व एव संभवेन यागाष्टकस्य प्राचीनप्रवणदेशादिसंबन्धसिद्धेरेव प्रयोजनत्वात्। यदि च श्रुतिवृत्त्या वैश्वदेवशब्दात्प्राप्तार्थमात्रस्वीकारस्तर्हि वैश्वदेवशब्देनामिक्षामात्रानुवादप्राप्त्या तन्मात्रस्यैव प्राचीनप्रवणदेशादिसंबन्धबोधकवाक्यगतवैश्वदेवशब्देनानुवादपूर्वकं तत्संबन्धोक्तिप्राप्त्या यागाष्टकस्य तत्संबन्धसिद्धिर्न स्यात् । किं चाष्टाकपालवाक्यसन्निधौ पठ्यमानवैश्वदेवेनेतिवाक्यगतवैश्वदेवशब्दस्य श्रुतिवृत्त्यामिक्षायागपरत्वे समग्रवाक्यानर्थक्यतादवस्थ्यम् । प्राचीनप्रवणे वैश्वदेवेनेति वाक्यगतवैश्वदेवशब्देन वैश्वदेवीमामिक्षामिति प्रकृतवैश्वदेवशब्दस्यैव प्रत्यभिज्ञानसंभवेन तेन आमिक्षायागस्य प्राप्त्युपपत्त्या तत्प्राप्त्यर्थं सन्निधिपठ्यमानवाक्येनानुवादस्य व्यर्थत्वात् । तस्मादाग्नेयादियागाष्टकस्य प्राचीनप्रवणदेशादिसंबन्धसिद्ध्यर्थं तद्वाक्यगतवैश्वदेवशब्दस्य यागाष्टकपरत्वस्यावश्यकत्वात् तदष्टकस्यैव सन्निधिपठ्यमानवाक्यगतवैश्वदेवशब्देन विश्वेदेवदेवताकामिक्षायागे यौगिकेनापि तद्यागसहचारेण छत्रिन्यायेन वैश्वदेवावैश्वदेवसमुदायस्य लक्षणया ग्रहणस्यावश्यकत्वादुक्तयागाष्टकनामत्वाश्रयणे तद्वाक्यवैयर्थ्यानापत्तेरानर्थक्यप्रतिघाताभावेनोत्पन्नशिष्टापेक्षयोत्पत्तिशिष्टस्यैव बलवत्त्वप्राप्त्याग्न्यादिदेवतावरुद्धयागेषु विश्वेदेवदेवताया विकल्पेन समावेशासंभवेन विश्वेदेवाख्यदेवतागुणविधानासंभवात्कर्मनामधेयमेव वैश्वदेवशब्द इति। अत एवोक्तम्। 'गुणान्तरावरुद्धत्वान्नावकाश्यो गुणोऽपरः। विकल्पोऽपि न वैषम्यात्तस्मान्नामैव





युज्यत' इति । **तथा च यथामिक्षायागे यौगिकस्य वैश्वदेवशब्दस्य** तदतिरिक्तसप्तयागसङ्ग्रहाय छत्रिन्यायेन वैश्वदेवा-**वैश्वदेवसमुदाये लक्षणा । तथेच्छायां यौगिकस्यापि** जिज्ञासापदस्य विचारे लक्षणोपपत्तेरित्यर्थः । अत्राधिकरणे वैश्वदेवेन यजेतेत्येतदेव देवताविशिष्टयागविधिरूपम् । प्रत्यक्षयजिश्रुतेः । तद्यागस्य द्रव्याकाङ्क्षायां वैश्वदेव्यामिक्षेति वाक्यमनुवादरूपं न तु तत्र यजिकल्पनम् । पशुसोमाधिकरणे ऐन्द्रवायवं गृह्णातीत्यादौ न यजिकल्पनमिति प्रतिपादनादित्यादिविचारः आपदेवीये द्रष्टव्यः । तथा यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वमित्यर्थ-वादरूपवाक्यशेषाद्विश्वेदेवकर्तृकत्वरूपनिमित्तेन वैश्वदेवशब्दोऽष्टानां यागानां नामेत्यादिकमपि तदधिकरणप्रमेयमिति पक्षे एकत्र यौगिकस्याप्यन्यत्र लक्षणेत्यत्र कथं दृष्टान्तत्वमित्यपि न शङ्कनीयम् । विश्वेषां देवानामिज्यमानतया यागसंबन्धाश्रयणेन वैश्वदेवशब्दस्तन्नामेति पक्षाश्रयणेन एतद्ग्रन्थप्रवृत्तेः । यद्वा तदीयदेवताधिकरणे देवतानां कर्मविधिराहित्यप्रतिपादनात्तद्विरुद्धार्थवादलब्धयोगापेक्षया आमिक्षायागविधिप्राप्तविश्वेदेवदेवताकत्वपुरस्कारेणाष्ट-यागसङ्ग्रहो लक्षणयैवोचित इति विश्वेदेवदेवताकत्वपक्षाश्रयणेन प्रवृत्तसिद्धान्त्याशयं मनसि कृत्वेदमुक्तमिति न दोष इत्यलम् । **योगिकस्य वैश्वदेवशब्दस्येत्यनेन** योगिकत्वादेव समुदायशक्तिकल्पनानर्हस्येति सूचयति तत्समुदाय इत्यतःपरमखण्डशक्त्यकल्पनेऽपीति शेषः । यदपि शक्तपदस्यैव लक्षकत्वादित्युक्तम् । तत्र यस्य लक्षणा तत्पदगतशक्तेरेवोपजीव्यत्वमिति न निर्बन्धः । यथाऽवयवगतशक्तिमाश्रित्य कुम्भकारौपगवादिसमुदाये योगवृत्तिः **सम्मता तथोक्त-शक्तिमाश्रित्य समुदाये** लक्षणावृत्तेरप्युपपत्तेः । तथाच प्रकृते समुदायस्याशक्तत्वेऽपि न दोष इत्याह **अवयवशक्तिमिति** । यद्यपि कुम्भप्रातिपदिककरोतिधात्वण्प्रत्ययाः स्वस्वार्थेऽन्यानपेक्षा रूढा एव । तथापि समुदाये कुम्भकर्तृत्वरूपे विशिष्टेऽर्थेऽवयवशक्तिसापेक्षा इति तर्कताण्डवोक्तेरवयवशक्त्युपयोग इति ज्ञेयम् । एवं जिज्ञासापदसमुदाये लक्षणेति पक्षं समर्थ्य सन्प्रत्यये अजहल्लक्षणानङ्गीकारेणैव न तत्पक्षोक्तदोषप्रसक्तिरिति मन्वानः सन्प्रत्ययस्य जहल्लक्षणाविचारेऽङ्गीक्रियत इति पक्षविशेषं तावत्परिगृह्णाति **अस्तु वा सनिति । उक्तदोष इति** । जहल्लक्षणापक्षे इच्छापरित्यागे साध्यतेत्यादिनोक्तदोष इत्यर्थः । ज्ञानस्य साधनभूतविचारेणान्वयायोगं प्रति प्रयोजकाकाङ्क्षाभावं प्रति पूर्वोक्तरीत्या परम्परया इच्छायाः परित्यागः प्रयोजको वाच्यः । न चैवं प्रसज्यत इत्यर्थः । जहल्लक्षणापक्षे इच्छापरित्यागस्यावश्यकत्वेऽपि ज्ञानस्य साध्यत्वेनोपस्थित्यनुकूलमिष्टत्वज्ञानं तु प्रकारान्तरेण संभवतीति सदृष्टान्तमाह **गम्भीरनद्योरिति** । एतच्च नदीपदस्यैव तीरे लक्षणायामपि गम्भीरनदीतीरे घोष इत्येत-द्बोधोपपादनायोक्तम् । उक्तं च मणौ । गम्भीरनद्योरन्वयबोधानन्तरं गम्भीरपदं नदीपदं वा स्वज्ञाप्यगम्भीरनद्यास्तीरं लक्षयतीति । वस्तुतस्तु गम्भीरपदात्स्वार्थपरम्परासंबन्धेन लक्ष्योपस्थितौ विलम्बान्नदीपदात्स्वार्थसाक्षात्संबन्धेन शीघ्रतरोपस्थितिसंभवान्नदीपद एव लक्षणेति चागम्भीरत्वसिद्धिवदिति । चित्रागोपदयोरन्वयबोधानन्तरं गोपदं चित्रगोस्वामिलक्षकम् । स्वज्ञाप्यचित्रगोसंबन्धेन तत्स्वामिस्मारकत्वादिति मण्युक्तरीत्या चित्रगुरिति बहुव्रीहौ गोपद एव लक्षणायामपि चित्रगोस्वामित्वरूपलक्ष्यतावच्छेदककोटिप्रवेशेन गवां चित्रत्वसिद्धिवच्चेत्यप्युपलक्षणया ज्ञेयम् । **अयं लक्षणापक्षोऽङ्गीकृत्येति** स्वयमेव वक्ष्यति । उपस्थितेरित्यस्य संभवादित्युत्तरेण संबन्धः । उपस्थितिसंभवे **चाकाङ्क्षाया उपपत्त्या ज्ञानस्य साधनेन विचारेणान्वयसंभव** इति भावः । **आकारेणेति** । साध्यत्वाकारेणेत्यर्थः । **तथैव पूर्वमुक्तेः । एवं लक्षणापक्षे ज्ञानस्य** साध्यत्वोपस्थितिं समर्थ्य नृसिंहाश्रमोक्तं लक्षणापक्षे साध्यत्वोपस्थिति-





समर्थनप्रकारं निराकर्तुमनुवदति **यत्त्विति** । लक्षकत्वमङ्गीकृत्येत्यनेन तावदंशे स्वोक्तसाम्यमित्युक्तं भवति । ज्ञानस्येत्येतत् पूर्वत्रोत्तरत्र च संबद्ध्यते । विचारान्वयोपपादिका या ज्ञानस्य साध्यत्वोपस्थितिस्तदर्थमिति योज्यम् । लक्ष्यकत्ववदित्यतःपरमुपपन्नमिति शेषः । इति इत्येवं **पदद्वयेऽपीति** । ज्ञानपदे सन्प्रत्यये चेत्यर्थः । सिद्धावस्थास्तोत्रेत्यादिकमुपपादनीयमस्ति । यस्मिन्गुणोपदेशः प्रधानतोऽभिसंबन्ध इति प्रथमस्य चतुर्थ-पादीयाधिकरणे पञ्चदशान्याज्यानीत्याद्युदाहृतेत्यादिरूपेण रूढिपक्षसमर्थनान्तं व्याख्येयमस्ति । अयमिदानीं क्रुद्धः आप्तत्वे सतीत्यादिवाक्ये अनुमितानुमितेरिति पाठः । प्रकृत्यधिकरणस्थव्यञ्जनं नामेत्यादिमूलटीकायां वचन-लिङ्गानुमितानुमितिरेवेति वक्ष्यमाणत्वात् । परसम्मतत्वाद्युक्तत्वाच्चेति ज्ञेयम् । ततःपरमप्यज्ञानां ज्ञानद इत्येत-दवतारभूतयदुक्तमित्येतन्मूलावताररूपनन्वज्ञानामिति वाक्येऽपीत्यादिटीकापर्यन्तं भूयान् ग्रन्थो व्याकर्तव्योऽस्ति।

गीताभाष्यतट्टीकास्था विधायकत्वोक्तिरपि तट्टीकोपपादनरूपमत्कृत्यनुसारेण योज्या । चन्द्रिकाटीकापि विलोक्यविशेषनिष्ठतया व्याख्यातीति । अतःपरं द्रव्यशब्देनेत्यादिनेति प्रतीकोपादानानन्तरं यद्वेत्यादि पाठः । तत्र द्रव्येत्यादिनेति प्रतीकोपादानपाठः । पूर्वलिखितनाशितपूर्वपुटे उभयोपपादनात् । यद्वेति पक्षे द्रव्येतीत्येव प्रतीकोपादानपाठः । द्रव्यं कर्म चेत्येतद्व्याख्यानगततत्रायमर्थ इत्येतदवतारे द्वितीययोजनायामित्युक्तं स्यात् इत्यनन्तरं तच्च नोपपद्यत इति मूलपाठः नोपपद्यत इत्यंशाभावो लेखकागतः । वाक्ययोजना कार्यास्ति । यच्चज्ञानेति वाक्यगतोऽयं बन्ध इत्यनूद्य व्याख्यातं दुःखान्त इत्यन्तेन । न चैवमित्येतदर्थतोऽनुवदन् शेषं पूरयति । अज्ञान-मात्रनिबन्धनो न चेत्यतः परमिति । अत्र न चेत्यतःपरं किन्त्वज्ञानं यन्नियतमिति पाठः ।

**गूढ०**— ननु कर्मणैव मोक्षः स्यादित्यत आह **मोक्षादेरिति** । सर्वं वाक्यं सावधारणमिति न्यायादिति भावः।

**१७३ सु०— ईश्वरप्रसादस्य तु ज्ञापकं न किञ्चिदत्र पश्यामः ।**

**परि०**— **अत्रेति** । सूत्रे न पश्याम इत्यर्थः ।

**१७४ सु०— न च ज्ञानस्य मोक्षसाधनता न युक्ता । येनेश्वरप्रसादो मध्येऽध्याह्रियते । आत्मयाथात्म्याज्ञानादनात्मनि शरीरादावात्मत्वारोपे सति हि तदनुकूलप्रतिकूलयो रागद्वेषौ भवतः । ताभ्यां प्रयुक्तः पुण्यपापलक्षणां प्रवृत्तिमाचिनुते । ततश्च सुरनरतिर्यगादिनाना-योनिषु नवीनशरीरेन्द्रियादिसंयोगलक्षणं जन्मास्य भवति । तस्माच्च दुःखानुभव इत्यनादिरयं कार्यकारणप्रवाहः संसार इत्युच्यते । आत्मतत्त्वज्ञानाच्चाज्ञानविपर्ययौ निवर्तेते । तत्त्वज्ञानस्य स्वसमानाश्रयविषयाज्ञानमिथ्याज्ञाननिवर्तनस्वाभाव्यात् । शुक्तिकातत्त्वज्ञानस्य तदज्ञान-रजतारोपनिवर्तकत्वदर्शनात् । मिथ्याज्ञाननिवृत्तौ च रागद्वेषानुदयः । कारणाभावात् ।**





**तयोरभावे च न प्रवृत्तेरुत्पत्तिः । तत एव प्रागुपचितायाश्चोपभोगेन प्रक्षयः । प्रवृत्त्यभावे च जन्मान्तराभावो हेत्वभावादेव । वर्तमानशरीरादेश्चारम्भकक्षये सति निवृत्तिः । जन्माभावे च न निर्बीजस्य दुःखस्योत्पाद इत्येवमात्यन्तिकी दुःखनिवृत्तिर्मुक्तिः । तथा च ज्ञानस्वभावलभ्यायां मुक्तौ किमीश्वरप्रसादेन ॥ न हि अन्धकारनिबन्धनदुःखनिवृत्तये प्रदीपमुपाददानाः कस्यचित्प्रभोः प्रसादमपेक्षन्ते । स्वभावो हि प्रदीपस्यायं यत्समानाधिकरणान्धकारनिवर्तकत्वम् । तथा च न्यायसूत्रम् । 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग' इति ।**

**बिन्दुः**— नन्वेवमपीश्वरतत्त्वज्ञानादेवात्माज्ञानविपर्ययोर्निवृत्तिरस्त्वित्यत आह **तत्त्वज्ञानस्येति** । चैत्रे तत्त्वज्ञानस्य मैत्रनिष्ठतन्निवर्तकत्वापत्तेराह **समानाश्रयेति** । चैत्रनिष्ठस्यैव तस्य पराज्ञाननिवर्तकता स्यादत उक्तं **समानविषयेति** । मिथ्याज्ञानप्रकारीभवद्धर्मविरोधिधर्मप्रकारतयेत्यपि द्रष्टव्यम् । तेन न धर्मिज्ञानादेरिदंत्वादिप्रकारकस्य रजतत्वप्रकारकविपर्ययादिनिवर्तकत्वमिति भावः ।

**परि०**— ननु यथा यजेत स्वर्गकाम इत्यादौ स्वर्गयागयोर्मध्यभाविनोऽपूर्वस्याश्रवणेऽपि 'अपूर्वद्वारा योगः स्वर्गसाधनम्' इत्युच्यते । यथा वा स्रुवेणावद्यतीत्यत्र द्रवद्रव्यमित्यध्याह्रियते एवमस्त्वित्यत आह **न च ज्ञानस्येति** ॥ 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग' इति गौतमसूत्रं हृदि कृत्वा प्रसादमृतेऽपि ज्ञानस्य मोक्षसाधनत्वं व्यनक्ति **आत्मेत्यादिना** । **तदनन्तरापायादिति** । पूर्वपूर्वापायादित्यर्थः ।

**वं०प०**— वक्ष्यमाणं न्यायसूत्रं व्याख्याति **आत्मयाथात्म्याज्ञानाच्चेत्यादिना दुःखनिवृत्तिर्मुक्तिरित्यन्तेन** । **रागद्वेषेति** । सौत्रदोषशब्दव्याख्यानम् । **उत्तरोत्तरेत्यादि** । मिथ्याज्ञानापाये दोषापाय इत्यादिरूपेणेत्यर्थः ।

**आनन्दः**— किञ्च बन्धस्याज्ञाननिमित्तत्वेन ज्ञानेनाज्ञाने निवृत्ते बन्धस्यापि निवृत्तौ मुक्तिः स्यादेवेति न भगवत्प्रसादस्योपयोग इत्याह **आत्मेति** । अत्र हेतुमाह **तत्त्वज्ञानस्येति** । **प्रवृत्तेः** पुण्यपापलक्षणायाः । **उपचितायाः** संपादितायाः । तथापि वर्तमानशरीरादिनिवृत्त्यर्थमीश्वरप्रसादापेक्षेत्यत आह **वर्तमानेति** । कुतो नेत्यत आह **स्वभाव इति** । **उत्तरोत्तरापाय इति** । मिथ्याज्ञानस्य अपाये दोषस्यापायः तदपाये प्रवृत्त्यपायः तदपाये जन्मनः अपायः तदपाये दुःखापायः इत्युत्तरोत्तरापाये अनन्तराभावात् इत्यर्थः ।

**कं०रा०**— **तदिति** । शरीराद्यनुकूले रागो भवति तत्प्रतिकूले द्वेषश्च भवतीत्यर्थः । **आचिनुते** कुरुते । **आत्मतत्त्वज्ञानात्** स्वेतरविविक्तात्मतत्त्वज्ञानात् ।





**श्रीनिधि०— आत्यन्तिकी दुःखनिवृत्तिरिति**। सा च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखनिवृत्तिः। अत्र च दुःखनिवृत्तिपदं चरमदुःखकाले उक्तविशेषणविशिष्टदुःखान्तरनिवृत्तिमादाय अतिव्याप्तिपरिहारार्थम्। एवं च तस्यां दुःखनिवृत्तौ दुःखासमानकालीनत्वं नास्तीति नातिव्याप्तिरिति भावः। शिष्टं स्पष्टम्।

**वा०चं०**— ननु विचारस्य सौत्रपदशक्तिबलादलाभेऽपि लक्षणया लाभवद्विचारस्य ज्ञानसाधनताया लक्षणानिमित्तशक्यसंबन्धत्वेन लाभवच्च प्रसादस्य सौत्रपदशक्त्यादिनाऽलाभेऽपि सूत्रोक्तज्ञानमोक्षसाध्यसाधनभावान्यथाऽनुपपत्तिलब्धतया सूत्रार्थत्वमेव। न च ज्ञानस्य स्वभावेनैव मोक्षसाधनत्वसंभवान्न तदन्यथाऽनुपपत्तिरिति वाच्यम्। ज्ञानस्य मोक्षसाधनताया अदृष्टत्वेन स्वभावकल्पनाया असंभवेन मध्ये प्रसादाध्याहारस्यावश्यकत्वादित्यतो दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानरूपकार्यकारणप्रवाहरूपसंसारनिवृत्तिरूपत्वात् मुक्तेः तादृशकार्यकारणप्रवाहस्यानाद्यज्ञानमूलकत्वात् ज्ञानाज्ञानयोश्च प्रदीपान्धकारयोरिव स्वाभाविकविरोधात् ज्ञानेन साक्षाद्दुःखाद्यनिवृत्तावपि तन्मूलभूताज्ञाननिवृत्तिसंभवात्तन्निवृत्तौ च तत्कार्यनिवृत्तेः कारणाभावेन सुलभत्वात् दुःखादीनां कार्यकारणभावस्य कारणापाये कार्याभावस्य च न्यायसूत्र एवोक्तत्वात् नादृष्टकल्पनेत्यभिप्रेत्य कथं दुःखादीनां कार्यकारणभावः कुतश्च तदपाये तदपायस्तथात्वे वा कथं प्रागापादितदोषाद्यनिवृत्तावात्यन्तिकदुःखनिवृत्तिरित्याशङ्कां दुःखादिस्वरूपविवरणेन तदपायादौ हेत्वादिकथनेन च परिहरन् मोक्षस्येश्वराधीनत्ववचनान्यथाऽनुपपत्त्या प्रसादाध्याहारशङ्कां च तद्वचनादिगतिकथनेन परिहरन्नन्यथाऽनुपपत्तिमाशङ्क्य समाधत्ते **न च ज्ञानस्येत्यादिना**। अत्र शङ्काग्रन्थे रागादीनां दुःखावान्तरकारणानां निवेशो द्रव्यं कर्म चेति परिहारग्रन्थे द्रव्यादिशब्दोदितप्रकृत्यादिमूलकारणपरिग्रहेण तन्निवर्त्यतयेति द्रष्टव्यम्। न्यायसूत्रोदाहरणं त्वेतच्छङ्कामूलभूततन्मतस्यागमविरोधेनाभासत्वं द्योतयितुम्। यद्यप्यत्र सूत्रे दुःखादिमिथ्याज्ञानान्तानामेवोपादानं न त्वज्ञानस्य तथाऽप्यधिष्ठानयाथात्म्यज्ञाननियतत्वान्मिथ्याज्ञानस्य तदुक्त्यैव सिद्धत्वात्सूत्रेऽज्ञानस्य पृथगनुक्तावपि सूत्राभिप्रायलब्धत्वाज्ज्ञानस्वभावत इति मूलग्रन्थे ज्ञानस्वभावस्य शङ्काप्रापकत्वेनोक्ततया मिथ्याज्ञाननिवर्तकत्वस्येव अज्ञाननिवर्तकत्वस्यापि ज्ञानस्वभावत्वादत्र तदुक्तिः। अत एव तत्त्वज्ञानस्येत्याद्युक्तमिति द्रष्टव्यम्। यत्तु मोक्षस्येत्यादिना वचनगतिकथनं तदुदाहरिष्यमाणेनाज्ञानां ज्ञानद इति विशेषवचनेन निवर्त्यतयेति द्रष्टव्यम्। यद्वा ज्ञानस्य मोक्षसाधनताया अदृष्टत्वेनादृष्टकल्पनाप्रसङ्गेनानुपपत्त्या मध्ये प्रसादाध्याहारस्य आवश्यकत्वात्प्रसादस्यापि प्रकृतत्वेन युक्तमतःशब्दार्थत्वमित्याशङ्क्य निषेधति **न च ज्ञानस्येति**। अदृष्टकल्पनापरिहाराय मुक्तेर्ज्ञानस्वभावलभ्यत्वस्य वक्तव्यत्वात्सिद्धान्त्यभिमतमोक्षस्वरूपे ज्ञानस्वभावलभ्यतायाः प्रतिपादयितुमशक्यतया न्यायसूत्रं मूलीकृत्य मोक्षस्वरूपाभ्युपगमेन तस्य ज्ञानस्वभावलभ्यतां व्युत्पादयितुं तदुपयुक्ततया बन्धस्वरूपं निरूपयति **आत्मेत्यादिना**।

**स०व्र०**— ननु प्रसादस्यासूत्रितत्वेऽपि ज्ञानमोक्षयोः श्रुतसाध्यसाधनभावाऽनुपपत्त्या यागस्वर्गयोरपूर्वस्येव आक्षेपः स्यादित्यत आह **न चेति**। ज्ञानस्वभावलभ्यत्वं मुक्तेरन्वयव्यतिरेकाभ्यामुपपादयति **आत्मेत्यादिना**। **अनात्मनि शरीरादाविति**। अयं परमतानुवाद इति नापसिद्धान्तः। केचित्तु स्फुटतरविवेकाभावाभिप्रायेणेयमुक्तिरित्याहुः।





**स०ना०**— 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव चे'त्यनुव्याख्यानसुधायाम् । **आत्मयाथात्म्यज्ञानादिति** । परमात्मयाथात्म्यज्ञानादित्यर्थः । **आत्मत्वारोप इति** । जीवत्वारोप इत्यर्थः । **तत्त्वज्ञानस्य समानाश्रयविषयेति** । समानाश्रयविषयत्वं तु अज्ञानापेक्षया । न तु मिथ्याज्ञानापेक्षया । तस्य शरीरविषयत्वेन भिन्नविषयत्वादिति द्रष्टव्यम् । **शुक्तिकातत्त्वज्ञानस्येति** । ज्ञानस्य समानाश्रयविषयाज्ञाननिवृत्तावयं दृष्टान्तो बोध्यः । अयमत्र समुदायार्थः । शङ्खे पीतत्वभ्रमवत् अनात्मन्यात्मत्वारोपः सोपाधिकः । चक्षुषः काचकामलादिवत् जीवस्य परमेश्वरविषयाज्ञानमुपाधिः । एवञ्च श्वेतः शङ्ख इति ज्ञानेऽपि काचादिदोषवशात् पीतः शङ्ख इति भ्रमवत् मम देह इति देहात्मनोः भेदज्ञानेऽपि परमेश्वराज्ञानरूपदोषवशात् देहे आत्मत्वारोपः सोपाधिको भवति । ततो रागद्वेषौ । ताभ्यां च पुण्यपापलक्षणां प्रवृत्तिमाचिनुते ततः सुरनरतिर्यगादिनानायोनिषु नवीनशरीरेन्द्रियादिसंयोगलक्षणं जन्म भवति ततो दुःखानुभव इत्येवंरूपः संसारो भवति अतस्तन्निवृत्तये ब्रह्मजिज्ञासा तया च ब्रह्मज्ञानम् । तेन च तदज्ञाननिवृत्तिः ज्ञानस्य समानाश्रयविषयाज्ञाननिवर्तकत्वम् न स्वाभावस्य, शुक्तिकातत्त्वज्ञाने दर्शनात् । अज्ञाने च निवृत्ते भिन्नविषयस्यापि मिथ्याज्ञानस्य निवृत्तिर्भवति । सोपाधिकभ्रमस्य उपाधिनिवृत्तौ निवृत्त्यवश्यंभावात् । तत्कुत इति चेत् । उपाधिभूतकाचादिनिवृत्तौ पीतभ्रमस्य निवृत्तिदर्शनात् । भ्रमे निवृत्ते रागद्वेषाभावेन पुण्यपापलक्षणप्रवृत्त्यभावः । तदभावे च नूतनशरीरप्राप्त्यभावः । प्रागुपचितपुण्यादेश्च भोगेनैव प्रक्षय इति ज्ञानस्वभावलभ्यायां मुक्तौ किमीश्वरप्रसादेन । अत्राज्ञानस्याधिष्ठानाविषयकत्वादेव दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादिति न्यायसूत्रात् मिथ्याज्ञानमेव संसारकारणत्वेनोपात्तम् अज्ञानस्यापि ग्रहणे अज्ञानमपि अधिष्ठानविषयकमिति विज्ञायेत तन्मा विज्ञायीति तत्परित्यागः । एतेन अधिष्ठानयाथात्म्यज्ञानस्य भ्रमहेतुत्वात् शरीरविषयकमेवाज्ञानं वाच्यं न त्वीश्वरविषयकमिति परास्तम् । निरुपाधिकभ्रमस्य अधिष्ठानयाथात्म्यज्ञानजन्यत्वेऽपि सोपाधिकभ्रमस्य तज्जन्यत्वनियमाभावात् । अवश्यमीश्वरविषयमेवाज्ञानं संसारहेतुतया पूर्वपक्ष्यभिमतं मन्तव्यम् । अन्यथा शरीराज्ञानस्य जीवाज्ञानस्य वा संसारहेतुत्वे तत्परिहाराय तयोरेव जिज्ञासा, तयोरेव ज्ञानमित्यापत्त्या 'जिज्ञासोत्थज्ञानजात्तत्प्रसादादेव मुच्यते' इत्यनुव्याख्यानोक्तं सर्वं सूत्रव्याख्यानमङ्गीकृत्य प्रसादमात्राक्षेपकत्वं न स्यादिति।

**विठ्ठ०**— ज्ञानस्यापि साक्षान्मोक्षसाधनतायाः अयुक्तत्वात् मध्ये प्रसादो गृह्यते इत्यत आह **न चेति** । ज्ञानस्य साक्षादेव मोक्षसाधनत्वमित्युपपादयति **आत्मेत्यादिना** ।

**गूढ०**— किञ्च बन्धस्याज्ञाननिमित्तत्वेन ज्ञानेनाज्ञाने निवृत्ते बन्धस्यापि निवृत्तौ मुक्तिः स्यादेवेति न भगवत्प्रसादस्योपयोग इत्याह **आत्मेति** । अत्र हेतुमाह **तत्त्वज्ञानस्येति** । **प्रवृत्तेः** पुण्यपापलक्षणायाः । **उपचितायाः** संपादितायाः । तथापि वर्तमानशरीरादिनिवृत्त्यर्थं ईश्वरप्रसादापेक्षेत्यत आह **वर्तमानेति** । कुतो नेत्यत आह **स्वभाव इति** । **उत्तरोत्तरापाय इति** । मिथ्याज्ञानस्यापाये दोषस्यापायः तदपाये प्रवृत्त्यपायः तदपाये जन्मनः अपायस्तदपाये दुःखापाय इत्युत्तरोत्तरापायेऽनन्तराभावादित्यर्थः ।





**१७५ सु०— यत्तु मोक्षस्येश्वराधीनत्ववचनं तज्ज्ञानादिजन्मनीश्वरस्य निमित्ततापरमित्यविरुद्धम् । तदर्थं च तदुपास्त्यादेरुपयोगः ।**

**परि०—** ज्ञानिनां मोक्षदश्च स इत्यादेः का गतिरित्यत आह **यत्त्विति । ज्ञानादिजन्मनीति ॥** ज्ञानादिजन्ये मोक्षे ईश्वरोऽपि निमित्तमित्येवंपरमित्यर्थः । कार्यमात्रं प्रति तस्य निमित्तत्वादिति भावः । यद्वा ज्ञानादिजन्मनि ज्ञानादेरुत्पत्तौ ईश्वरस्य निमित्ततापरमित्यर्थः ।

**वं०प०—** **निमित्ततापरमिति** । ईश्वरस्य सर्वोत्पत्तिमत्पदार्थनिमित्तकारणत्वादित्यर्थः । **तदर्थमिति** । निमित्तकारणभूतेश्वरस्य ज्ञानजनकत्वार्थमित्यर्थः ।

**आनन्दः—** मोक्षस्य ज्ञानाधीनत्वे ईश्वराधीनत्वप्रतिपादकवचनविरोध इत्यत आह **यत्त्विति** ।

**श्रीनिधि०— तदर्थं च तदुपास्त्यादेरिति** । दधियागादेः इन्द्रियादिजनकत्ववत् उपास्त्यादेरपि अदृष्टद्वारा तज्ज्ञान उपयोगः न तु प्रसादद्वारेति न विरोध इति द्रष्टव्यम् । न्यायमते मोक्षो दुःखानुत्पादः । तदनन्तरापायादपवर्ग इत्युक्तेः । एवं च नेश्वरेच्छासाध्यो मोक्षो येन प्रसादस्य इच्छाविशेषत्वेन उभयोरस्य शेषः स्यात् । उत्पादप्रागभावपरिपालनं च नेश्वरेच्छाधीनं किं जन्माद्यभावेन, तस्य च प्रवृत्त्याद्यभावेनेति न साङ्कर्यम् ।

**स०व्र०— ज्ञानादिजन्मनीति** । ज्ञानाद्युत्पत्तावित्यर्थः ।

**गूढ०—** मोक्षस्य ज्ञानाधीनत्वे ईश्वराधीनत्वप्रतिपादकवचनविरोध इत्यत आह **यत्त्विति** ।

उत्तरपक्षः—

**१७६ सु०—** तदेवं ज्ञानस्वभावेनाज्ञानादिनिवृत्तौ कारणाभावे कार्यानुदयस्य ईश्वरप्रसादानपेक्षत्वादयुक्तमिदमतःशब्दव्याख्यानमित्यत आह **द्रव्यमिति** ।

**अनु०— द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।**
**यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ॥**
**नर्ते त्वत्क्रियते किञ्चिदित्यादेर्न हरिं विना ।**
**ज्ञानस्वभावतोऽपि स्यान्मुक्तिः कस्यापि हि क्वचित् ॥**





**द्रव्यशब्देन प्रकृत्यादितत्त्वमुच्यते । कर्मेति धर्माधर्मौ । स्वभावः प्रकृत्यादीनां परिणामादिः । जीव इत्यभिमानी । एव इति यदनुग्रहत इत्यतःपरं द्रष्टव्यम् । अनेन सर्वोत्पत्तिमदुपादाननिमित्तानां सत्ताऽपि परमेश्वराधीनेत्युच्यते । 'न ऋते त्वत्क्रियते किञ्चन' इति श्रुत्या सर्वार्थक्रियायास्तदधीनत्वम् । इत्यादेः 'आगमादवगम्यत' इति शेषः । 'ज्ञानस्वभावतोऽपी'ति अपिशब्देनाङ्गीकारवादोऽयमिति सूचयति । हिशब्दो हेतौ । यस्मादेवं तस्मादुपपन्नं पूर्वव्याख्यानमिति ।**

**बिन्दुः— जीव इत्यभिमानीति** । एवं च लक्ष्म्या अपि सङ्ग्रह इति भावः ।

**परि०—** श्रीतत्त्वस्यापि लाभाय जीवशब्दार्थमाह **जीव इतीति** ॥ प्रकृत्यादितत्त्वानां तत्परिणामानामभिमानी । तथाच सर्वोऽपि चेतन इत्यर्थः । **इति शेष इति** । इत्यादेरित्यनन्तरमागमादिति । क्वचिदित्यनन्तरमित्यवगम्यत इति शेष इत्यर्थः ॥ **अङ्गीकारवादोऽयमिति** । ज्ञानस्वभावाद्भवन्नपि मोक्षो न हरिं विनेति मोक्षस्य ज्ञानस्वभावाधीनत्वमुपेत्य हर्यधीनत्वोक्तिपक्षोऽङ्गीकारवादेन ।

**गु०दी०—** जीवपदेन जीवस्यैवोक्तौ लक्ष्म्या असंग्रहप्रसङ्गादित्यतो **जीव इत्यभिमानी** प्रकृत्यादितत्त्वानामभिमानीत्युक्तम् ।

**यादु०—** बन्धस्येश्वराधीनत्वप्रतिपादनपरतया श्लोकं व्याचष्टे **द्रव्यशब्देनेत्यादिना** । रमासङ्ग्रहार्थमाह **जीव इत्यभिमानीति** ।

**वं०प०— अङ्गीकारवादोऽयमिति** । **ज्ञानस्वभावतोऽपीति** । मोक्षस्य ज्ञानस्वभावाधीनत्वमुपेत्य हर्यधीनत्वोक्तिपक्षोऽङ्गीकारवादेन । वस्तुतस्तु ज्ञानस्वभावाधीनत्वमेव नेत्यर्थः ।

**आनन्दः—** ननु तार्किकादिरीत्या कालजीवयोर्द्रव्यमध्य एव प्रवेशात् पृथग्ग्रहणमयुक्तमित्यत आह **द्रव्यशब्देनेति** । आदिपदेन महत्तत्त्वादिपरिग्रहः । जीव एवेत्यत्रावधारणस्यानुपयोगात् भिन्नक्रमेणान्वयमाह **एव इतीति** । ननु बन्धस्याज्ञाननिमित्तकत्वाभावान्न ज्ञानेन तन्निवृत्तिरिति वक्तव्ये नर्त इति श्रुत्युदाहरणमयुक्तमित्यत आह **अपिशब्देनेति** । बन्धस्याज्ञाननिमित्तकत्वेन ज्ञानेन तन्निवृत्त्या मुक्त्यङ्गीकारेऽपि मुक्त्यर्थं भगवत्प्रसादोऽवश्यापेक्षित इति ज्ञानस्य मोक्षसाधनत्वाङ्गीकारमपिशब्दः सूचयतीत्यर्थः । तत्र हेतुः श्रुत्या सर्वक्रियाणां तदधीनत्वसिद्धिरिति । ननु प्रसिद्ध्यर्थो हिशब्दो न युक्तः । ज्ञानेन मुक्त्यभावस्य क्वापि प्रसिद्ध्यभावादित्यत आह **हिशब्द इति** । हिशब्दस्य हेत्वर्थत्वे साध्यं वक्तव्यमित्यत आह **यस्मादेवमिति** ।





**कं०रा०— जीव इति** । पूर्वोक्तानामभिमानी जीव इत्युच्यत इत्यर्थः ।

**श्रीनिधि०—** लक्ष्मीसङ्ग्रहाय **जीव इत्यभिमानी**ति प्रकृत्याद्यभिमानीत्यर्थः ।

**वा०चं०—** अत्र जीवकालयोर्द्रव्यत्वेऽपि तयोः पृथक्करणे स्वभावशब्दस्य स्वरूपमात्रपरत्वे तेनैव द्रव्यकर्मजीवकालानां ग्रहणोपपत्त्या स्वधर्मग्रहणे कर्मशब्दोक्तचेष्टायाश्च विशिष्योक्तेः प्रयोजनविशेषाभावेन द्रव्यादिशब्दान्विशेषनिष्ठतया व्याख्याति **द्रव्यशब्देनेत्यादिना** । यद्वा पूर्वपक्षनिवर्तकतया अनेन सर्वोत्पत्तिमदित्यादिनैतन्मूलाभिप्रायं वक्तुं तदनुगुणतया द्रव्यादिशब्दान्व्याख्याति **द्रव्यशब्देनेत्यादिना** । न ऋत इत्यस्य पूर्वेण समानविषयत्वभ्रान्तिं निवारयितुं विषयभेदमाह **न ऋत इति** । इत्यादेरित्यत्र विशेष्यतयाऽभिमतप्रमाणं प्रदर्शयन्नेव पञ्चम्याः कारकहेतुत्वपरत्वभ्रान्तिं शेषपूरणेन निवारयति **इत्यादेरिति** । पूर्वं मुक्तौ साधनान्तरनिषेधेन समुच्चायकत्वासंभवादाह **ज्ञानेति** ।

**स०व्र०—** चित्प्रकृतिसंग्रहाय जीवपदं व्याख्याति **जीव इत्यभिमानीति** । **न ऋते त्वदिति** । ननु कथं कालजीवादीनां नित्यादीनां नियम्यत्वम् । नित्यत्वेनैवेति ब्रूमः नित्यकर्मभिर्दुरितप्रागभावपरिपालनदर्शनात् । प्रागभावपरिपालनस्य नित्यत्वानतिरिक्तत्वादिति ।

**विट्ठ०—** न्यायसूत्रार्थः प्राचीनसुधया स्पष्टः । स्वाधिष्ठानलब्धप्रकृतिपरिणामेत्यादेर्वक्ष्यमाणत्वात् तदनुरोधेन स्वभावसिद्धार्थमाह **स्वभावेति** । अभिमानीति रमाया अपि सङ्ग्रहार्थम् ।

**गूढ०—** ननु तार्किकादिरीत्या कालजीवयोः द्रव्यमध्ये एव प्रवेशात् पृथग्ग्रहणमयुक्तमित्यत आह **द्रव्यशब्देनेति** । आदिपदेन महत्तत्त्वादिपरिग्रहः । जीव एवेत्यत्रावधारणस्यानुपयोगात् भिन्नक्रमेणान्वयमाह **एव इतीति** । ननु बन्धस्याज्ञाननिमित्तकत्वाभावान्न ज्ञानेन तन्निवृत्तिरिति वक्तव्ये नर्त इति श्रुत्युदाहरणमयुक्तमित्यत आह **अपिशब्देनेति** । बन्धस्याज्ञाननिमित्तकत्वेन ज्ञानेन तन्निवृत्त्या मुक्त्यङ्गीकारेऽपि मुक्त्यर्थं भगवत्प्रसादोऽवश्यापेक्षित इति ज्ञानस्य मोक्षसाधनत्वाङ्गीकारमपिशब्देन सूचयतीत्यर्थः । तत्र हेतुः । श्रुत्या सर्वक्रियाणां तदधीनत्वसिद्धिरिति । ननु प्रसिद्ध्यर्थो हिशब्दो न युक्तः । ज्ञानेन मुक्त्यभावस्य क्वापि प्रसिद्ध्यभावादित्यत आह **हिशब्द इति** । हिशब्दस्य हेत्वर्थत्वे साध्यं वक्तव्यमित्यत आह **यस्मादेवमिति** ।

**प्रदीपः—** प्रसादस्यासूत्रितत्वेऽपि ज्ञानमोक्षयोः श्रुतसाध्यसाधनभावान्यथानुपपत्त्या अन्वयव्यतिरेकाभ्यामुपपादयति **आत्मेत्यादिना** । **न ऋते त्वदिति** । ननु कथं कालजीवादीनां नित्यानां नियम्यत्वं नित्यत्वेनैव नियम्यत्वमिति ब्रूमः । नित्यकर्मभिर्दुरितप्रागभावपरिपालनदर्शनात् प्रागभावपरिपालनस्य नित्यत्वानतिरिक्तत्वादिति ।





**१७८ सु०— ततश्चायमर्थः । स्यादेतदेवं यद्यज्ञानमात्रनिबन्धनोऽयं बन्धो जीवस्य स्यात् । न चैवम् । श्रुतिस्मृतीतिहासपुराणेषु परमेश्वरेच्छानिमित्तत्वावगमात् । अद्वैतिनामविद्याधीनजीवब्रह्मविभागवत् तार्किकादीनां च गुणवत्त्वाधीनद्रव्यत्ववदनादेरपीश्वराधीनत्वोपपत्तेः । उपपादयिष्यते हि 'ज्ञानानन्दादिस्वरूपोऽयं जीव' इति 'पुंस्त्वादिवत्' इत्यादिना । तद्भावानुपलब्धिश्चानुभवसिद्धा । तेनावगम्यतेऽस्ति किमप्यावरकम्, येनावृतः स्वप्रकाशचैतन्यरूपोऽपि नात्मनस्तत्त्वं वेद ॥ न च कामकर्मादिकमेव तथा भवितुमर्हति । तस्यापि सादिनः कारणापेक्षत्वात् । न च पूर्वपूर्वस्मादुत्तरोत्तरमिति युक्तम् । सुप्तिप्रलययोः तद्वृत्त्यभावेन निष्कलङ्कचैतन्यबलात्स्वरूपावभासप्रसक्तेः । अतः कामकर्माद्यतिरिक्तं 'मायाऽविद्या प्रकृतिरि'त्यादिशब्दाभिधेयमनाद्येव किमपि द्रव्यमङ्गीकरणीयम् । 'अनादिमायया सुप्त' इत्यादिश्रुतिस्मृतयश्चात्र भवन्ति ॥ न च 'मायाऽपि कथं स्वप्रकाशमावृणोती'ति युक्तम् । आवरकतयैव तस्याः प्रमितत्वात् । वक्ष्यते चात्रोपपत्तिः । न च जडस्य स्वतः किञ्चित्करत्वं युक्तम् । 'द्रव्यं कर्म चे'त्यादिवाक्यविरुद्धं च ।**

बिन्दुः— **अद्वैतिनामित्यादि** । ननु किमिदमधीनत्वं नाम । न तावज्जन्यत्वम् । अनादित्वस्योक्तत्वात् । नापि तज्ज्ञाप्यत्वम् । घटादेरपि चक्षुराद्यधीनत्वापातात् । नापि लिङ्गविधया तत् । धूमं विनापि वर्तमानस्य वह्नेस्तदधीनत्वव्यवहारापत्तेः । नापि तत्समव्याप्तत्वम् । कालाकाशादीनां गोत्वाश्वत्वादीनां च कालिकव्याप्तिमत्त्वेन परस्पराधीनत्वव्यवहारापत्तेः । घटादीनां दण्डाद्यधीनत्वस्य प्रजानां राजाधीनत्वस्य कार्यमात्रस्येश्वराधीनत्वस्य चासंभवापत्तेः । तस्मात्तद्व्यतिरेकप्रयोजकव्यतिरेकप्रतियोगित्वम् । तच्चास्ति अविद्यासंसारयोः शुक्त्यज्ञानरजतादिस्थले दृष्टत्वात् । तार्किकमते यद्यपि द्रव्यत्वगुणवत्त्वादौ वास्तवं तन्न संभवति तथापि तर्कितं तत्संभवत्येव । यद्यत्र गुणवत्त्वं न स्यात् तर्हि द्रव्यत्वमपि न स्यात् । गुणकर्मादौ दृष्टत्वात् । संभवति चैतत्प्रजाराजादौ । अराजके तथा दृष्टत्वात् । एवं कर्तुरभावे कार्यव्यतिरेकस्य कुलालादिस्थले दृष्टत्वेन ईश्वरव्यतिरेकस्य तर्कितस्य सुवचत्वेन युज्यते घटादौ क्षित्यादौ च कार्ये ईश्वराधीनत्वव्यपदेशः । सन्ति च प्रसञ्जितानप्यभावादिपदार्थानादाय तान्त्रिकाणां निरूढव्यवहारः । यथा उपाधिवादे यदभावो व्यभिचारविरोधी स धर्मस्तत्रोपाधिरित्यादौ सिद्ध्यसिद्धिभ्यां व्याघातापत्त्या यदीयेन प्रसञ्जितेन साध्यव्यापकत्वाद्यभावेन हेतुसाध्ययोरव्यभिचार आपादयितुं शक्यते स धर्मस्तत्रोपाधिरित्यभियुक्तैर्व्याख्यातत्वात् । इति युज्यते अस्माकं अद्वैतिनां तार्किकाणां च अनादेरपि अधीनत्वव्यपदेशः तद्व्यतिरेकस्य दृष्टत्वात् । अन्यथा कालाकाशगोत्वाश्वत्वादावतिप्रसङ्गस्योक्तत्वादिति





चेत्। अदर्शनबलेन पदार्थविलोपमापादयन् प्रायश्चार्वाकचरणानुसरणो नाधीतिनं स्वात्मानमभिव्यनक्ति भवान्। तन्मतप्रवेशं च कलङ्कत्वेन मन्यमानो यदि प्रमाणं पृच्छसि तर्हि स्वात्मनो बाधिर्यमाविष्करोति। यत् द्रव्यं कर्म च कालश्चेति स्मृतिं न ऋते इति श्रुतिं च भगवता आचार्यवर्येणोपन्यस्तामपि नानुसन्धत्से। एवं च अतिप्रसङ्गापादनमपि गर्भस्रावेणैव परास्तमित्यवेहि। प्रमाणसदसद्भावाभ्यां पदार्थव्यवस्थानात्। दृश्यन्ते हि पुण्यश्लोके राजनि धनिकानां धनानि कदाप्यनपहरति अमीषां वित्तानि युधिष्ठिरायत्तानीत्यादिव्यपदेशः। एवं नित्यस्यापि जीवाकाशादेर्ध्वंसं अत्यन्ताभावं च कर्तुं समर्थोऽपि भगवान् सत्यसङ्कल्पत्वादेव तथा न करोति कर्तुमकर्तुमन्यथाकर्तुं सामर्थ्यस्य तु सकलश्रुतिस्मृतीतिहासपुराणेषु प्रसिद्धत्वादिति सर्वमवदातम्। **न च काम्यं कर्मादिकमिति**। फलोद्देशेन कृतमित्यर्थः। **सुप्तिप्रलययोस्तद्वृत्त्यभावेनेति**। इदमुक्तं भवति। कर्मणः प्रतिबन्धकत्वं वदन् प्रष्टव्यः। किं कर्मशब्देन परिस्पन्दरूपा चेष्टोच्यते आहोस्वित् क्रियामात्रं वा। उत अदृष्टं वा। आद्यं दूषयति **सुप्तीति**। तदभावेनेत्येतावतेव विवक्षितसिद्धौ वृत्तिपदोपादानं तृतीयविकल्पनिरासे उपयोक्ष्यते। तच्च तत्रैव वक्ष्यामः। ननु प्रतिबन्धकाभावेऽप्यनुभावकसामग्र्यभावान्नानुभवः। जाग्रन्मात्रावस्थाव्यापृतानां बाह्यकरणानामुपात्तत्वात्। तेषां तदविषयत्वाच्च। मनसस्तु स्वप्नावस्थापर्यन्तमनुवर्तिनस्तदानीं विलीनत्वेन कार्यानुन्मुखत्वात्। अतः किं बलात् स्वरूपानुभव आपाद्यते इत्यत उक्तं **निष्कलङ्कचैतन्यबलादिति**। तस्य च स्वप्रकाशत्वस्य वक्ष्यमाणत्वादिति भावः। नापि द्वितीय इत्याह **सुप्तिप्रलययोरिति**। मनस उपरतत्वेन तद्वृत्तिरूपज्ञानेच्छादिक्रियाऽभावादित्यर्थः। समानमितरत्पूर्वेण। तृतीयस्याप्येतदेवोत्तरं **सुप्तीति**। अयमाशयः। किं काम्यकर्मजन्यादृष्टस्य स्वर्गं प्रतीव स्वरूपावरणं प्रति साक्षात्साध्यसाधनभाव उच्यते किंवा तज्जन्यसुखदुःखाद्यनुभवे सर्वदा व्यावृत्तस्य पुरुषस्य तद्व्यासङ्गेनैव अत्यन्तव्याकुलतया मनसश्चोत्कटविषयग्रहण एवोन्मुखत्वेन ज्ञापकस्याप्यभावेन न स्वरूपानुसन्धानमिति। नाद्यः। काम्यकर्मणां फलेन सह कार्यकारणभावस्य श्रुत्येकसमधिगम्यत्वेन प्रमाणान्तराविषयत्वात्। श्रुतेश्च अनुपलब्धिबाधितत्वात्। असंभवाच्च। न हि ज्योतिष्टोमेन स्वर्गकामो यजेतेति श्रुतिवत् स्वस्वरूपानावरणकामोऽमुकयागं कुर्यादिति कस्याञ्चिदपि शाखायामुपलभ्यते। संभवति वा। न ह्यनिष्टसाधनं वेदो विधत्ते। तथात्वे च बुद्धिपूर्वकारी कथं तत्र प्रवर्तेत एवं च सत्यप्रामाण्यमपि कथं न स्यादित्यादिदूषणस्यातिस्फुटतया शिष्यैरेवावगन्तुं शक्यत्वमित्यभिप्रेत्य द्वितीये दोषमाह **सुप्तीति**। तस्य अदृष्टस्य वृत्तिः सुखदुःखादिकार्यजननावस्था तस्याः सुप्तौ प्रलये चाभावेनेत्यर्थः। यद्यपि जाग्रत्स्वप्नावस्थयोः पुरुषः क्षणमपि सुखदुःखाद्यनुसन्धानविकलो नास्ति। अन्ततो हिक्कितनिमीलितक्षुतकण्डूयनादीनां सर्वदा अमरपामरसाधारणत्वात्। तथापि तद्वृत्तिः सुप्तौ प्रलये च प्रमाणविकला न बाह्यं किञ्चन वेदनान्तरमिति





प्रमाणविरुद्धा चेति । यदप्युक्तं मनसः उक्तविषयव्यासक्तत्वादिति । तदप्यसत् । न हि आत्मानन्दादपि कश्चित् उत्कटो विषयः संभवति । तदेतदुक्तं **निष्कलङ्कचैतन्येति** । प्रत्युत बाह्यविषयानुल्लङ्घ्यैव सर्वदा आत्मानन्दप्रवणताया एवौचित्यात् । दृश्यते हि मनसः स्वभावो यत् क्षुद्रदुःखमेव गृह्णाति । एवं निदाघार्तस्य किञ्चित्पर्णच्छायादिजन्यक्षुद्रसुखानुभवकाले अकस्मात् चन्दनकर्पूरादिकल्कमिश्रित-शिशिरितजाह्नवीसलिलाभिषेककाले तज्जन्यमुत्कटसुखमेव गृह्णातीति सहृदयानामकैतवसिद्धम् । तथाच यद्यात्मानन्दोऽनावृतः स्यात् अनुभूयेतैव अवश्यमितरद्विषयसुखमप्यभिभूयेति भावः । ननु मनस-स्तदोपरतत्वात्कथमनुभव इत्यतो निष्कलङ्कचैतन्यबलादित्युक्तम् । क्वचित्कामकर्मादीति भावः । तस्य चायमर्थः । कामो रागः द्वेषस्याप्येतदुपलक्षणम् । कर्मशब्दव्याख्यानं पूर्ववदेव विकल्पदूषणानि च तथैव । ननु रागद्वेषादीनां पूर्वोक्तन्यायेन सुप्तिप्रलययोरावरकत्वासंभवेऽपि दुरदृष्टमेव तथास्तु तदेव मया कर्मशब्देनोच्यत इति चेत् । निरस्तप्रायत्वात् । ब्रह्महा क्षयरोगी स्यादित्यादिवत् कर्मविपाकादिषु अमुकपापवान् आवृतस्वरूपो भवतीत्यादेरदर्शनात् । एवमपि स्वरूपाननुभवान्यथानुपपत्त्यैव तत्कल्प्यत इति चेत् । तदेतदप्रयासलब्धचिन्तामणिमुत्सृज्य चण्डालवेश्मनि कपर्दिकाभिक्षाटनम् । तदेतदनुपद-मेवोक्तं टीकायां श्रुतिस्मृतीतिहासपुराणेषु अनादिमायया सुप्त इत्यादिना परमेश्वरेच्छानिमित्तत्वाव-गमादित्यलं पल्लवितेनेति ।

**परि०**— वस्तुतस्तु ज्ञानस्वभावाधीनत्वमेव अस्य नेत्यर्थः । अङ्गीकारवादमस्तु वेत्यादिनाऽग्रे विवरिष्यन्नेतिपक्षं तावत्प्रपञ्चयति **स्यादेतदित्यादिना** । **श्रुतीति** । 'त्वं मुक्तिदो बन्धदोऽतो मतो न' इति श्रुतिः । तत्र तत्र भाष्यकारोक्तपञ्चरात्रस्मृतिः । 'सुखं दुःखं भवो भावो भयं चाभयमेव च' इत्यादीति-हासः । 'तदिच्छया यतो ह्यस्य बन्धमोक्षौ प्रतिष्ठितौ' इत्यादिपुराणम् । ननु कथमनादेरनाधेयातिशय-स्येशाधीनतेत्यत आह **अद्वैतिनामिति** । विवृतमेतद्न्यायत्र्यधिकरणचन्द्रिकायाम् । 'अनादीनां गुणादीनां यथा गुण्यादितन्त्रता' इत्यादिना । ननु गौतमसूत्रोक्तदिशा देहात्मैक्यारोपनिमित्तत एव बन्धोपपत्ता-वनादिबन्धमुपेत्य तस्येशाधीनता किमर्थमुपेयेत्यतोऽनादिबन्धस्थितिं स्वाभिमतां साधयति **उपपाद-यिष्यते हीत्यादिना तदेवमितिपर्यन्तेन** ॥ **इत्यादिनेति** । सूत्रेणेत्यर्थः । **तद्वृत्तीति** । तत्परिणामरूप-कार्याभावेनेत्यर्थः । तत्तच्छब्दघटितनानाश्रुत्यैकमत्यायोक्तमित्यादिशब्दाभिधेयमिति । **वक्ष्यते चेति** । 'स्वभावाज्ञानवादस्य निर्दोषत्वान्न तद्भवेत्' इत्यत्र सविशेषाङ्गीकारादित्युपपत्तिर्वक्ष्यत इत्यर्थः । अस्त्वेवं किमीशेनेत्यत आह **न च जडस्येति** । प्रकृत्येति स्वशक्त्येति च व्यधिकरणे तृतीये ।





**यादु०**— बन्धस्येश्वराधीनत्वं कथमनेन लब्धमित्यतस्तत्प्रदर्शयितुमाह **उपपादयिष्यते हि इत्यादिना**। **तद्वृत्त्यभावेनेति**। तत्कार्याभावेनेत्यर्थः। न तु तत्सत्ताभावेनेत्यर्थः। सुप्त्यादावपि कामादेः सूक्ष्मरूपेण सत्त्वात्। तथाच सुप्तिप्रलययोः कामकर्मादिजन्यस्य कार्यस्य कस्याप्यभावेन स्वरूपप्रकाशप्रतिबन्धरूपकार्यस्याप्यभावापत्त्या तदानीं स्वरूपावभासप्रसङ्ग इति भावः। ननु कथमविद्याऽपि स्वप्रकाशमानचैतन्याभिन्नमानन्दादिकमावृणोतीत्यत आह **वक्ष्यते चात्रेति**। 'स्वभावाज्ञानवादस्य निर्दोषत्वान्न तद्भवेदि'त्यत्र सविशेषत्वरूपा अविद्यायाः परमेश्वराचिन्त्याद्भुतशक्त्युपबृंहितत्वरूपा चोपपत्तिर्वक्ष्यत इत्यर्थः।

**वं०प०**— **श्रुतीति**। 'त्वं मुक्तिदो बन्धदोऽतो मतो न' इति श्रुतिः। तत्र तत्र भाष्यकारोक्तपञ्चरात्रस्मृतिः। 'सुखं दुःखं भवोऽभावो भयं चाभयमेव चे'त्यादीतिहासः। 'तदिच्छया यतो ह्यस्य बन्धमोक्षौ प्रतिष्ठितौ' इत्यादिपुराणम्। नन्वनादेः कथमीश्वराधीनत्वमित्यत आह **अद्वैतिनामित्यादिना**।

**आनन्दः**— अङ्गीकारवादमेव विशदयन्नाह **ततश्चेति**। ननु न बन्धस्येश्वरेच्छानिमित्तकत्वम् अनादित्वादित्यत आह **अद्वैतिनामिति**। ईश्वरेच्छाधीनत्वं बन्धस्येत्यत्रान्यथानुपपत्तिरूपं प्रमाणमाह **उपपादयिष्यत इति**। नन्वावरणं कुतः कल्पनीयं सामग्र्यभावादेव न वेदेति किं न स्यादित्यत आह **स्वप्रकाशेति**। तथा भवितुं आवरकं भवितुम्। **तद्वृत्त्यभावेनेति**। तस्य काम्यकमदिः सुप्तिप्रलययोः कार्योन्मुखत्वाकारेण वृत्त्यभावेनेत्यर्थः। तेनादृष्टरूपकामकमदिः सुप्तिप्रलययोरभावे उत्तरकाले प्रबोधसृष्ट्यादिकार्यं न स्यादपसिद्धान्तश्चेति दूषणं परास्तं भवति। **वक्ष्यते चात्रोपपत्तिरिति**। स्वप्रकाशचैतन्यस्यापि मायावरणमित्यत्रोपपत्तिर्वक्ष्यत इत्यर्थः। नन्वेतावता हि मायाया आवरकत्वमुक्तं भवेत्। न चैतावता बन्धस्येश्वरेच्छाधीनत्वमुपपादितमित्यत आह **न चेति**।

**श्रीनिधि०**— **श्रुतिस्मृतीतिहासपुराणेष्विति**। न ऋते त्वत्क्रियत इति श्रुतिर्द्रष्टव्या। न केवलं दुःखनिवृत्तिर्मोक्षः किं नाम स्वरूपानन्दाविर्भावोऽपि। तथा च तदावरणनिवृत्तये तदावरकेश्वरप्रसादोऽपेक्षित इति वक्तुमाह **उपपादयिष्यत इति**। **तद्भावानुपलब्धिः** तत्स्वरूपानुपलब्धिः तत्त्वेनानुपलब्धिः इति यावत्। **तद्वृत्त्यभावेन** कामकर्मादिलक्षणावरकवृत्त्यभावेनेत्यर्थः। **निष्कलङ्कचैतन्येति**। प्रतिबन्धकरहितचैतन्येत्यर्थः। इदं च दूषणं मायिनं प्रति। तार्किकं प्रति तु अनादिमायया सुप्त इत्यागमविरोध एव दूषणम्। **वक्ष्यते चैतदिति**। स्वभावाज्ञानवादस्य निर्दोषत्वान्न तद्भवेदित्यनुपदमेव वक्ष्यत इत्यर्थः।

**वा०चं०**— ननु ज्ञानस्वभावेनैवाज्ञाननिवृत्तौ कारणाभावेन कार्यानुत्पादान्नेश्वरप्रसादोऽपेक्षित इति शङ्किते सर्वोत्पत्तिमदुपादाननिमित्तानां भगवदधीनतावबोधकवाक्योदाहरणमसङ्गतम्। न च मोचने प्रसादस्यावश्यकत्वाद्बन्धस्येश्वराधीनत्वेन तस्यैव मोचकत्वात्प्रसाद आवश्यक इत्युपपादयितुं बन्धस्येश्वरेच्छाधीनत्वे वक्तव्ये न तदुदाहरणासङ्गतिरिति वाच्यम्। तर्हि बन्धस्येश्वरेच्छाधीनत्वे प्रमाणस्योपन्यसनीयत्वेन प्रकृत्यादीनां तदधीनत्वे तदुदाहरणासङ्गतिरेव। न च तेषामपि बन्धकारणत्वात्तदुक्तिः तेषां बन्धकारणत्वे प्रमाणाभावात्। भावे वा प्रकृत्यादीनां





बन्धकानां भगवदधीनत्वेऽपि भगवतः साक्षाद्बन्धकत्वानापत्त्या तेषां बन्धकत्वोक्तेः साक्षात्प्रसादोपपादकत्वाभावेन तदुक्तेरसङ्गतिरेव। रागादीनां बन्धकत्वेनाशङ्कितानां भगवदधीनत्वस्यावश्यवक्तव्यस्यानुक्तेश्चेत्यतस्तत्सङ्गमयितुमाह **ततश्चेति**। यद्वा नन्वनेन वाक्येन मोक्षस्य न ज्ञानस्वभावलभ्यत्वम्। ततश्च प्रसादोऽपेक्षित एव। ज्ञानस्वभावलभ्यत्वाङ्गीकारेऽपि प्रसादोऽपेक्षित एवेत्युक्तं स्यात्। तच्च नोपपद्यते। मोक्षस्य युक्त्या ज्ञानस्वभावलभ्यताव्युत्पादनान्नोक्तिमात्रेण तदभाव ईश्वरेच्छाधीनत्वं च तस्य सिद्ध्यतीत्यतो बन्धस्येशेच्छाधीनत्वयुक्त्यैव मोक्षस्येशेच्छाधीनत्वव्युत्पादनमत्र वाक्येऽभिप्रेतं नोक्तिमात्रमतो नानुपपत्तिरित्याशयकथनपूर्वमनङ्गीकारपक्षं व्युत्पादयितुमस्तु वेत्यादिनाऽङ्गीकारपक्षमपि व्युत्पादयितुमाह **ततश्चेति**। एतन्मुक्तेर्ज्ञानस्वभावलभ्यत्वम्। एवं त्वदुक्तरीत्या यदा स्यादित्यर्थः। अत्र श्रुतिपुराणयोरुदाहृतयोर्ग्रहणं स्मृतीतिहासेत्यादिशब्दसङ्गृहीतकथनम्। परमेश्वरेत्यतःपूर्वं साक्षात्परम्परया चेति शेषः। तत्र पुराणं बन्धकानामीशाधीनतोक्तिद्वारा बन्धस्येशाधीनतापरं श्रुतिस्तु बन्धस्याप्यर्थक्रियात्वात्साक्षादेवेशाधीनतापरा। ततश्च बन्धस्य साक्षाद्बन्धकप्रवर्तकतया चेशेच्छानिमित्तत्वं सूचयति। एतादृशवाक्योदाहरणलब्धार्थकथनं **यद्यज्ञानेत्यादि**। अयं बन्धो मिथ्याज्ञानेत्यादिदुःखान्तोऽज्ञानमात्रनिबन्धनः। न चैवम्, इत्यतःपरं किन्त्वज्ञानं यन्नियतं तन्निबन्धनः पृथक् च भगवन्निबन्धन इति शेषः। ननु पराभिप्रेतकार्यकारणप्रवाहरूपबन्धस्येदंप्रथमताशून्यत्वेनानादित्वेऽपि स्वरूपेणानादित्वाभावादज्ञानाधीनत्वस्य परेण वक्तुं शक्यत्वेऽपि सिद्धान्त्यभिप्रेतप्रकृत्यादिबन्धस्य स्वरूपेणानादित्वान्नेश्वरेच्छाधीनत्वं तस्येति शङ्कामुपोद्घातेन परिहरति **अद्वैतिनामिति**। इदं चानादीनामपि प्रकृत्यादीनां भगवदधीनताबोधकपुराणबलाच्छ्रुतिस्थकिञ्चनेतिपदाच्च लब्धार्थकथनम्। उपपत्तिग्रहणेनानादेरुत्पत्त्यर्थं भगवदनपेक्षायामपि स्थित्यर्थं सादितो न विशेष इति न्यायं सूचयति। ननूक्तरूपबन्धस्य कथमज्ञाननियामकेशाधीनत्वं पृथक् च कथमीशाधीनत्वमित्यतो बन्धस्वरूपं न केवलं त्वदुक्तरीत्यैव किन्तु स्वरूपाच्छादनमपि। एवं च जीवस्वरूपाच्छादकप्रकृत्यादिशब्दिताज्ञाननियामकतया स्वतश्च जीवस्वरूपाच्छादकत्वेन मिथ्याज्ञानादिप्रयोजकनियामकतया स्वतश्च बन्धनियामकत्वेनेति प्रदर्शयितुं किं तत्स्वरूपम्? कुतश्च तत्? कुतश्च तदाच्छादककल्पना? प्रकृत्यादिकमेव च कुतस्तथा रोगादेरपि संभवात् कथं च स्वप्रकाशाच्छादनसंभवः? कुतश्च तदाच्छादकस्यापि भगवदधीनत्वमित्याशङ्काः परिहरति **उपपादयिष्यते हीत्यादिना**। अथवा ननूक्तरूपबन्धस्याज्ञानमात्रनिबन्धनताया युक्तिपूर्वमुपपादनान्न तस्येच्छाधीनत्वम्। न च श्रुत्यादिबलात्तथा। उदाहृतवाक्येषूक्तरूपबन्धस्येशेच्छाधीनताया अप्रतिभानादित्यतः साक्षात्परम्परया बन्धस्येशेच्छाधीनत्वं व्युत्पादयितुं परोक्तविलक्षणबन्धबन्धकस्वरूपं युक्त्यादिना प्रतिपादयन्नुदाहृतवचनानां तत्र प्रमाणत्वं च घटयितुमाह **उपपादयिष्यते हीत्यादिना**। स्वप्रकाशेत्यनेन सामग्र्यभावप्रयुक्ततयाऽनुपलब्धेरन्यथासिद्धिं निराकरोति। आवरकान्तरप्रयुक्तान्यथासिद्धिनिराकरणं **न चेति**। सुप्तौ रागाभावः प्रलये कार्यमात्राभावेन कर्मणोऽप्यभाव इत्युभयोर्ग्रहणम्। इत्यादिश्रुतीत्युत्तरत्र आदिशब्दोपात्ताविद्याप्रकृतिबन्धकत्वाभिधायकश्रुत्यनुसारेणाह **मायाऽविद्या प्रकृतिरिति**। **अनाद्येवेति**। एतच्च परिशेषकथनं सादिधर्माधर्मौ कर्मशब्देनोपादायाप्यनादिप्रकृतेर्द्रव्यशब्देन प्रमाणे पृथगुपन्यासमहिम्ना लब्धमिति द्रष्टव्यम्। **स्मृतयश्चात्रेति**। चशब्देनोक्तपरिशेषसमुच्चयः कथमित्यावरकत्वमप्रामाणिकमिति वा। प्रमाणबोधितमप्यसंभावितं कथमङ्गीकर्तव्यमिति वा। नाद्यः। परिशेषश्रुत्यादे-





रिदानीमेवाभिहितत्वादित्याह **आवरकतयेति** । न द्वितीय इत्याह **वक्ष्यते चेति** । स्वभावाज्ञानवादस्येत्यनुव्याख्यानव्याख्यावसरे यद्यपि जीवचैतन्यं ब्रह्म स्वधर्मप्रकाशात्मकं तथाऽपि परमेश्वराचिन्त्याद्भुतशक्त्युपबृंहिताविद्यावशान्न तथा संसारे प्रकाशयति इति वक्ष्यत इत्यर्थः । जडस्येति हेतुगर्भं विशेषणम् । द्रव्यं कर्म चेत्यादिना अस्य वाक्यस्य अत्रोपयोगप्रदर्शनम् ।

**स०व्र०**— नन्वज्ञाननिमित्तोऽयं बन्धो ज्ञानेनैव निवर्त्यः । ज्ञाने चेश्वरानुग्रहो निमित्तमस्तु । तत्प्रसादस्य तु न कश्चिन्मुक्तावुपयोगः । कारणनिवृत्त्यैव कार्यनिवृत्तेरित्यत आह **ततश्चेति** । कथमनादिबन्धस्येश्वरेच्छाधीनत्वं किञ्चिदुपकाराभावादित्याशङ्क्यानादेरप्यधीनत्वे वादिसंमतिमाह **अद्वैतिनामिति** । **स्वरूपावभासप्रसक्तेरिति** । यावत्स्वरूपावभासप्रसक्तेरित्यर्थः । **वक्ष्यते चात्रोपपत्तिरिति** । 'स्वभावाज्ञानवादस्य' इत्यादिना ।

**वि०ठ०**— ननु ज्ञानस्वभावलभ्ये मोक्षे क ईश्वरप्रसादस्योपयोग इति शङ्कायां सर्वस्य भगवदधीनताभिधायकवाक्योदाहरणं न सङ्गतमित्यतो बन्धस्येश्वराधीनत्वेन तस्यैव मोचकत्वात् युक्ता प्रसादस्यावश्यकता इति परिहारस्य प्रकृत्यादिबन्धस्येश्वराधीनताप्रमितावेव संभवात् उत्तरवाक्योदाहरणं सङ्गतमेवेत्याशयेनाह **ततश्चायमर्थ इति** । अनादेर्बन्धस्य कथमीशाधीनत्वं अनाधेयातिशयत्वादित्यत आह **अद्वैतिनामिति** । बन्धस्येशाधीनत्वमेवोपपादयति **उपपादयिष्यते हीत्यादिना** । **तद्वृत्त्यभावेन** कामादिवृत्त्यभावेन । **कथं आवृणोतीत्यस्य** किं आवरकत्वं अप्रामाणिकमित्यभिप्रायः किंवा प्रामाणिकमपि असंभावितमिति वा । नाद्यः श्रुतिस्मृतीनां अत्रैवोदाहृतत्वादित्याह **आवरकतयैवेति** । न द्वितीय इत्याह **वक्ष्यते इति** । स्वभावाज्ञानवादस्येत्यत्र परमेश्वराचिन्त्याद्भुतशक्त्युपबृंहिताविद्यावशात् न तथा संसारे प्रकाशयतीति वक्ष्यते इत्यर्थः ।

**चषकः**— किञ्चिन्निबन्धनज्ञस्युत्पत्तिरूपातिशयविनिर्मुक्तस्यानादेर्बन्धस्य कथमीशेच्छायत्ततेत्यतो मतान्तरानुमतनिदर्शनप्रदर्शनेन सा सङ्गच्छत इत्याह **अद्वैतिनामित्यादि** । "अनादीनां गुणादीनां यथा गुण्यादितन्त्रता । तथाऽनादिश्रुतेरस्तु क्षेमायेश्वरतन्त्रता ॥" यथा वैशेषिकादिमते गगनपरिमाणादीनामनादिनित्यानामपि स्वाश्रयगगनाद्यधीनता, यथा वा अद्वैतिमते अनादेरात्मज्ञानसंबन्धस्य जीवब्रह्मविभागादेश्च संबन्ध्यज्ञानाधीनता, यथा प्रभाकरमते दुःखप्रागभावस्य मोक्षस्य ज्ञानाधीनता, यथा वा मतान्तरे दुरितप्रागभावस्य निषिद्धाकरणाधीनतेत्यादिनाऽनादेरपि स्थितावीशाधीनताऽस्त्येव । 'अकर्तुमन्यथाकर्तुं कर्तुं चास्तीश्वरस्य यत् । सामर्थ्यं तेन तत्तन्त्रमनाद्यपि च सादिवदि'ति कारिकाविवृत्त्यन्तेन गायत्रीनयचन्द्रिकायां कृतप्रपञ्चनमेतत् । **तद्वृत्त्यभावेन** तत्कार्याभावेन । तथाच सुप्त्यादिदशायां स्वरूपावभासानुत्पादप्रयोजककामकर्मादिकार्यसमवधानाभावेन तदवभासप्रसङ्ग इति भावः । **वक्ष्यते चेति** । 'स्वभावाज्ञानवादस्य निर्दोषत्वान्न तद्भवेदि'त्यनुव्याख्याप्रतीकव्याख्यावसरे यद्यपि जीवचैतन्यं ब्रह्म स्वधर्मप्रकाशात्मकं तथापि परमेश्वराचिन्त्याद्भुतशक्त्युपबृंहिताविद्यावशान्न तथा संसारे प्रकाशयतीत्यभिधास्यत इत्यर्थः ।

**गूढ०**— अङ्गीकारवादमेव विशदयन्नाह **ततश्चेति** । ननु न बन्धस्येश्वरेच्छानिमित्तकत्वं अनादित्वादित्यत आह **अद्वैतिनामिति** । ईश्वरेच्छाधीनत्वं बन्धस्येत्यत्रान्यथानुपपत्तिरूपं च प्रमाणमाह **उपपादयिष्यत इति** ।





नन्वावरणं कुतः कल्पनीयं सामग्र्यभावादेव न वेदेति किं न स्यादित्यत आह **स्वप्रकाशेति**। तथा भवितुं आवरकं भवितुम्। **तद्वृत्त्यभावेनेति**। तस्य काम्यकर्मादेः सुप्तिप्रलययोः कार्योन्मुखत्वाकारेण वृत्त्यभावेनेत्यर्थः। तेन अदृष्टरूपकामकर्मादेः सुप्तिप्रलययोरभावे उत्तरकाले प्रबोधसृष्ट्यादिकार्यं न स्यादपसिद्धान्तश्चेति दूषणं परास्तं भवति। **वक्ष्यते चात्रोपपत्तिरिति**। स्वप्रकाशचैतन्यस्यापि मायावरणमित्यत्रोपपत्तिर्वक्ष्यत इत्यर्थः। नन्वेतावता हि मायाया आवरकत्वमुक्तं भवेत्। न चैतावता बन्धस्येश्वरेच्छाधीनत्वमुपपादितमित्यत आह **न चेति**।

**प्रदीपः**— नन्वज्ञाननिमित्तोऽयं बन्धो ज्ञानेनैव निवर्त्यः ज्ञाने चेश्वरो निमित्तमस्तु तत्प्रसादस्य तु न कश्चिन्मुक्तावुपयोगः कारणनिवृत्त्यैव कार्यनिवृत्तेरित्यत आह **ततश्चेति**। कथमनादेः बन्धस्येश्वरेच्छाधीनत्वं किञ्चिदुपकाराभावादित्याशङ्क्यानादेरप्यन्याधीनत्वे वादिसंमतिमाह **अद्वैतिनामिति**। उपपादयिष्यते हीत्यादिना इच्छादिशब्दाभिधेयाया मायाया बन्धहेतुत्वं प्रसक्तप्रतिषेधेनाभिधत्ते। ततश्च मायानिवृत्त्यैव बन्धनिवृत्तिरिति मायानिवृत्त्यर्थं परमेश्वरप्रसादोऽपेक्षणीय इत्यर्थः।

**१७८ सु०— अतः परमेश्वर एव सत्त्वादिगुणमय्या विद्याविरोधित्वेनाविद्यया स्वाधीनया प्रकृत्या अचिन्त्याद्भुतया स्वशक्त्या च जीवस्य स्वप्रकाशमपि स्वरूपचैतन्यमाच्छादयतीति युक्तम्। स एव च स्वाधिष्ठानलब्धपरिणाममहदहङ्कारादिप्रकृत्यंशैः संयोज्य कर्तृत्व-भोक्तृत्वस्वातन्त्र्यं कारकफलस्वाम्यं चास्याविद्यमानमेवोपदर्श्य रागाद्युत्पादनद्वारा दुःख-मनुभावयति।**

**बिन्दुः— अविद्यमानमेवोपदर्श्येति**। जीवस्याविद्यमानमित्यर्थः।

**परि०— संयोज्य** जीवमित्यर्थः।

**गु०दी०**— ईश्वरदत्तशक्तेर्मणेः स्वसमीपस्थदहनदाहकत्वशक्तिप्रतिबन्धकत्ववत् स्वान्तःस्थितस्वप्रेरक-भगवच्छक्तिसमुपबृंहितस्य बहिर्जीवमावृत्य स्थितस्यापि प्रधानस्यान्तःस्थितस्वप्रकाशजीवचैतन्यप्रकाशप्रतिबन्ध-कत्वसंभवादिति भावेनोक्तम् **अतः परमेश्वर एवेत्यादि**। **अस्याविद्यमानम्** इत्यस्य परमेश्वरवत् स्वातन्त्र्येणा-विद्यमानं तद्दत्तेषत्स्वातन्त्र्येण विद्यमानं चेत्यर्थः।

**वं०प०**— सत्त्वादिगुणात्मकप्रकृतेरविद्याशब्दवाच्यत्वे निमित्तम्। **विद्याविरोधित्वेनेति**। तथा च सिद्धान्ते भावरूपाज्ञानशब्देन सत्त्वादिगुणमयी प्रकृतिरेवोच्यत इति संप्रदायः। चतुर्थाध्यायटिप्पण्यामस्मदाचार्यैः एतत्स्फुटतरं प्रतिपादितमस्तीति ज्ञेयम्।

**आनन्दः**— तर्हि जडप्रकृतिर्बन्धिकेत्यादिवचनानां का गतिरित्यत आह **अत इति**। **कारकफल-स्वाम्यमिति**। क्रियाफलस्वातन्त्र्यमित्यर्थः।





**कं०रा०— कर्तृत्वेति** । कर्तृत्वभोक्तृत्वयोः स्वातन्त्र्यमित्यर्थः । **कारकफलस्वाम्यं** कारकफलं प्रति स्वामित्वम् ।

**श्रीनिधि०— विद्याविरोधित्वेनाविद्ययेति** । विद्याविरोधित्वेन निमित्तेनाविद्याशब्दवाच्ययेत्यर्थः । द्विविधो हि बन्धः । विद्यमानाच्छादनं अविद्यमानसंपादनं चेति । तत्र विद्यमानाच्छादनस्य परमेश्वरायत्तत्वेन तन्निवृत्त्यर्थं तत्प्रसादोऽपेक्षित इत्युक्तम् । तत्र स्वाभाविकस्य औपाधिकस्य संपादनमपि भगवदधीन-मतस्तन्निवृत्त्यर्थमपि ईश्वरप्रसादोऽपेक्षित इति वक्तुमाह **स एव चेति** । **स्वाधिष्ठानेन** स्वावस्थानेन लब्धः परिणामो येषां ते तथोक्ताः । कर्तृत्वभोक्तृत्वयोः विषये स्वातन्त्र्यम् । कारकं इन्द्रियादिकम् । फलम् दुःखानु-भवः । **तत्स्वाम्यं** तद्विषये स्वामित्वमित्यर्थः ।

**वा०चं०—** एवमुपयुक्तमभिधाय कथं प्रकृतेरविद्यात्वमनादित्वं चेत्यतस्तमोरूपायास्तद्घटयन्भगवतो द्वेधा स्वरूपाच्छादकत्वं विवक्षितमाह **अत इति** । अनेन प्रमाणे द्रव्यमित्यंशस्याभिप्रेतार्थः कथितो भवति । इदं चाज्ञानस्य भगवदधीनत्वकथनम् । स एव चेत्यनेन स्वभावपदोक्तपरिणामांशस्य । कर्तृत्वेत्याद्युपदर्श्येत्यन्तेन जीवपदोक्ताभिमानीत्यंशस्य अस्वरूपे स्वरूपमतेरेवाभिमानित्वात् इदं च मिथ्याज्ञानस्य भगवदधीनत्वकथनम् ।

**स०व्र०— कारकफलस्वाम्यमिति** । इन्द्रियतत्फलस्वामित्वमित्यर्थः ।

**विठ्ठ०—** अस्त्वेवं स्वरूपचैतन्याच्छादनं तथाऽप्यानन्दरूपे चैतन्ये च दुःखानुभवः कथं इत्यत आह **स एवेति** ।

**गूढ०—** तर्हि जडप्रकृतिरेव बन्धिकेत्यादिवचनानां का गतिरित्यत आह **अत इति** । **कारकफलस्वाम्य-मिति** । क्रियाफलस्वातन्त्र्यमित्यर्थः ।

**१७९ सु०— तदेवं बन्धस्येश्वराधीनत्वात्स एव मोचकोऽङ्गीकार्यः । अपरस्य स्वातन्त्र्याभावात् । प्रसन्न एवासौ स्वकीयां मायां व्यावर्तयतीति तत्प्रसादार्थं सर्वोऽप्ययं साधनसन्दर्भ इत्युक्तम् । ततो यद्यपि न सूत्राक्षरेभ्यो भगवत्प्रसादो लभ्यते तथाऽप्यनुप-पत्त्या अङ्गीकरणीय इति युक्तं व्याख्यानम् । वक्ष्यति चैतत्सूत्रकारः 'ततो ह्यस्य बन्ध-विपर्ययौ' इति । एवमुक्तेन न्यायेन न ज्ञानस्यैवायं स्वभावो यत्साक्षान्मोक्षसाधनत्वम् ।**

**अस्तु वा तथाऽपीश्वरप्रसादोऽपेक्षितः । सकलकारकाणां तदधीनसत्ताप्रवृत्तित्वेन तदिच्छां विना कस्यापि कार्यस्यानुदयादिति ॥ अङ्गीकारवादस्य चेदं प्रयोजनं यत्पूर्वस्यैवा-**





**र्थस्य समर्थनम् । तथा हि । येन ज्ञानस्य मोक्षहेतुत्वमङ्गीकृतं न तेनापि ईश्वरेच्छा त्यक्तुं शक्यते । कारकप्रेरकत्वादिनाऽवश्याभ्युपगमनीयत्वात् । तथा च किमनेन ज्ञानेनाप्रमितेन । प्रमित ईश्वर एवाङ्गीकार्य इति ।**

**बिन्दुः— तथाऽप्यनुपपत्त्येति** । जडस्य स्वतः अकिञ्चित्करताया द्रव्यं कर्म चेत्यादि-सिद्धत्वादिति भावः । **ज्ञानेनाप्रमितेनेति** । स्वतःसाधनत्वेनाप्रमितेनेत्यर्थः ।

**परि०— इत्युक्तमिति** । मुच्यत इत्यन्तपूर्वग्रन्थव्याख्यावसर इत्यर्थः । **वक्ष्यति चैतदिति** । बन्धमोक्षावीशाधीनावित्येतद्भक्तिपादे 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्ये'ति वक्ष्यतीत्यर्थः । पूर्वमङ्गीकारवादोऽयमित्युक्तं व्यनक्ति **अस्तु वेति** । मोक्षसाधनत्वं ज्ञानस्वभाव इत्यनुकर्षः । **पूर्वस्यैवेति** । तत्प्रसादादेव मुच्यत इत्यत्रोक्तार्थस्यैवेत्यर्थः । **अप्रमितेनेति** । ज्ञानिनां मोक्षदश्च स इतीश्वरस्येव ज्ञानस्वभावे मुक्तिहेतुत्वस्याप्रमितत्वादिति भावः ।

**गु०दी०— सूत्राक्षरेभ्यो भगवत्प्रसादो न लभ्यत** इति परदुराग्रहमनुसृत्योक्तम् । वस्तुतस्तु भाष्यदिशा सोऽप्यतश्शब्देनैव लभ्यत इति ज्ञेयम् । ज्ञानस्वभावादेव मोक्ष इति कुत्राप्यश्रुतेः **किमनेन ज्ञानेनाप्रमितेन** इत्युक्तम् । किञ्च ज्ञानस्वभावेनैव संसारध्वंस इति वदता दीपानयने तम इव ज्ञानाव्यवहितोत्तरक्षण एव कुतो न मोक्षः । ज्ञानेनाज्ञाननाशे तदुपादानकप्रारब्धकर्मादेरपि नाशावश्यंभावेन कार्यविलम्बे कारणाभावात् । ज्ञानादीश्वरप्रसाद इत्यङ्गीकारे तु प्रसन्नो भगवान् विवेकित्वाद्ब्रह्मसदने वा अमुक्तगम्यस्वसदने वा "परान्तकाल" इति श्रुत्युक्तपराख्य-चतुर्मुखब्रह्मायुषः अवसानपर्यन्तमवस्थाप्य पश्चादेव मोक्षं ददातीति न काचिदनुपपत्तिरिति भावेनाह भगवान् भाष्यकारः "न हरिं विनेति" ।

**यादु०— सत्त्वादिगुणमय्याऽविद्ययेति** । प्रकृतिविशेषणं ग्रन्थान्तराविरोधायेति ज्ञातव्यम् । अङ्गीकार-वादोऽयमिति सूचयतीत्युक्तं प्रपञ्चयति **अस्तु वा तथेति** । 'न ऋते त्वदि'ति श्रुत्युक्तं सर्वार्थक्रियायास्तदधीनत्वमत्र हेतुतयान्वितमित्याशयेनाह **सकलकारकाणामिति** । **पूर्वस्यैवार्थस्येति** । ईश्वरस्यैव मोक्षहेतुत्वरूपार्थस्येत्यर्थः । **कारकेति** । ज्ञानरूपकारकेत्यर्थः ।

**आनन्दः—** तथापि प्रसादापेक्षा कुत इत्यत आह **प्रसन्न एवेति** । सूत्रकारेणेश्वरस्य बन्धकत्वमोचकत्वयो-रनुक्तत्वात्कथं तदुक्तिरित्यत्राह **वक्ष्यतीति** । एवं च सर्वं सङ्कलय्याह **एवमिति** ।

**श्रीनिधि०— अप्रमितेनेति** । स्वातन्त्र्येण मोक्षहेतुत्वेन बन्धको भवपाशेन भवपाशाच्च मोचक इत्यादिना प्रमित इत्यर्थः ।





• **वा०चं०**— इयता ग्रन्थेन बन्धस्येश्वराधीनत्वं यदर्थं वर्णितं तदिदानीमाह **तदेवमिति** । स एव कुतो मोचक इत्यत एतद्वाक्योदाहरणलब्धमपरस्य स्वातन्त्र्याभावमत्रापि हेतुत्वेन योजयति **अपरस्य इति** । तावता हरेर्मोक्षसाधनत्वेऽपि प्रसादस्य किमायातमित्यतो हरेः समूलबन्धमोचनं मूलभूतमायाव्यावर्तनाभावे न संभवति । मायाव्यावर्तनं च न प्रसादेन विनेति प्रसादसिद्धिरित्याह **प्रसन्न एवेति** । स्वकीयामित्युक्त्या बन्धस्य भगवदधीनत्वोपपादनस्य प्रकृतोपयोगं दर्शयति । नन्वेवं मोक्षस्य प्रसादलभ्यत्वे ज्ञानस्य मोक्ष उपयोगादर्शनिन तदर्थमीमांसारम्भानुपपत्तिरित्यतो 'जिज्ञासोत्थज्ञानजात्' इति पूर्ववाक्योक्तं ज्ञानादेः प्रसादार्थत्वं स्मारयति **तदिति** । न केवलमन्यथाऽनुपपत्तिमात्रेण प्रसादस्य सूत्रार्थान्तःप्रवेशनमपि तु सूत्राभिप्रेतं च तदित्याशयवान् प्रसादप्रापकस्य बन्धमोक्षयोर्भगवदधीनत्वस्य सूत्रान्तरारूढतां दर्शयति **वक्ष्यति चेति** । अङ्गीकारवादसूचकापिशब्देन सूचितं ज्ञानस्य साक्षान्मोक्षसाधनत्वं स्वभाव इत्यस्यार्थस्यानुपपन्नत्वं सिद्धमित्याह **एवमिति** । एवं चेत्यादेर्वाक्याद्बन्धस्य बन्धकानां च भगवदधीनत्वावगमादपरस्य स्वातन्त्र्याभावावगमाच्च हरिं विना ज्ञानस्वभावान्मुक्तिर्न स्यात् । साक्षान्मोक्षसाधनत्वं न ज्ञानस्वभाव इति यावत् । इत्यपिशब्दपरित्यागेनापि वाक्यं व्याख्येयमित्युक्तं भवति । **अस्तु वेति** । अस्मिंश्च पक्षे यथास्थितैव योजनेति हृदयम् । ननु ज्ञानस्य साक्षान्मोक्षसाधनत्वस्वभावत्वाङ्गीकारः प्रकृतविरुद्धः प्रमाणविरुद्धश्चेत्यतः प्रकृतार्थोपपादकत्वं पर्यवसानगत्या प्रमाणाविरुद्धत्वं चोपपादयति **अङ्गीकारेति** । **अप्रमितेनेति** । साक्षान्मोक्षसाधनत्वस्वभाववत्तयेति शेषः ।

**स०व्र०**— ननु शब्दो नित्योऽनित्यो वास्तु पक्षद्वयेऽपि शब्दानुशासनं तावत्कर्तव्यम् इतिवत् अनास्थाऽभावात्कथमङ्गीकारवाद इत्यत आह **अङ्गीकारवादस्येति** । सर्वत्राङ्गीकारवादस्य पूर्वोक्तार्थसमर्थनमेव प्रयोजनम् । वैयाकरणैस्तु शब्दनित्यत्वानित्यत्वयोर्द्वयोरप्यभ्युपगमाद्युक्ता तत्रानास्थेति भावः ।

**विठ्ठ०**— न केवलमन्यथानुपपत्त्या भगवत्प्रसादो मोक्षसाधनं तत्सूत्रकाराभ्युपगत इति गम्यते किं नाम सूत्रकारोऽपि प्रसादस्य मोक्षसाधनत्वं वक्ष्यतीत्याह **वक्ष्यतीति** । अपिशब्दसूचिताङ्गीकारवादं सूचयितुं निरूपितं स्वाभिमतप्रमेयं दर्शयति **एवमिति** । अङ्गीकारवादं दर्शयति **अस्तु वेति** । ज्ञानमेव साक्षान्मोक्षसाधनमिति शेषः ।

**चषकः**— **सूत्राक्षरेभ्य इति** । सूत्रजनितान्वयधीविषयो न भवतीत्यर्थः । **अनुपपत्तीति** । अनुपपत्तिप्रतिसन्धानाधीनोदीच्यबोधविषय इत्यर्थः । **सकलकारकाणामिति** । न ऋते त्वदिति श्रुतेः इति भावः ।

**गूढ०**— तथापि प्रसादापेक्षा कुत इत्यत आह **प्रसन्न एवेति** । सूत्रकारेणेश्वरस्य बन्धकत्वमोचकत्वयोरनुक्तत्वात्कथं तदुक्तिरित्यत आह **वक्ष्यतीति** । एवं च सर्वं सङ्कलय्याह **एवमिति** ।

**प्रदीपः**— शब्दो नित्योऽनित्यो वा । पक्षद्वयेऽपि शब्दानुशासनं तावत्कर्तव्यमितिवदनास्थाभाववत् कथमयमङ्गीकारवाद इत्यत आह **अङ्गीकारवादस्येति** । सर्वत्राङ्गीकारवादस्य पूर्वोक्तार्थसमर्थनमेव प्रयोजनं वैयाकरणैस्तु शब्दनित्यत्वानित्यत्वयोर्द्वयोरभ्युपगमाद्युक्ता तत्रानास्थेति भावः ।





॥ मोक्षस्य कार्य(सिद्ध)स्वरूपत्वम् ॥

मोक्षस्य उत्तरप्रवाहानुत्पादमात्रत्वाभावः—

**१८० सु०—** "यदुक्तं 'न कार्यो मोक्षः किन्तु प्राचीनेषु मिथ्याज्ञानादिषु निवृत्तेषु कारणाभावादेवोत्तरप्रवाहानुत्पादमात्रम् । तत्र का नाम परमेश्वरापेक्षा । तद्वचनानि तु ज्ञानोत्पत्त्यादिनिमित्ततापराणी'ति । तदनुपपन्नम् । ज्ञानप्रदानाद्यतिरिक्तस्यापि ईश्वर-प्रयोजनस्यागमेषूक्तेः" इत्याह **अज्ञानामिति** ।

**अनु०— अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्च सः ।**
**आनन्ददश्च मुक्तानां स एवैको जनार्दनः ॥**
**इत्युक्तेः**

**मोक्षदः प्रागुक्तप्रकृतिबन्धात् ।**

**बिन्दुः— प्रागुक्तप्रकृतिबन्धादिति** । अन्यथा आनन्दद इत्यनेन पौनरुक्त्यं स्यादिति भावः ।

**परि०— प्रागुक्तप्रकृतिबन्धादिति** । सत्त्वादिगुणमय्येत्यादिना प्रागुक्तेत्यर्थः ।

**यादु०— कार्य इति** । पुरुषकृतिसाध्य इत्यर्थः ।

**वं०प०— प्रागुक्तेति** । अतः परमेश्वर एवेत्यादिना प्रागुक्तेत्यर्थः ।

**आनन्दः—** नन्वज्ञानामित्यत्र ज्ञानस्य प्रसादहेतुत्वं प्रसादस्य मोक्षहेतुत्वं वा न प्रतिपाद्यत इति तदुदाहरणमयुक्तमित्यतस्तन्निवर्त्यां शङ्कां दर्शयति **यदुक्तमिति** । न च दुःखप्रध्वंसरूपमोक्षस्य कार्यत्वात् कथमेतदिति वाच्यम् । दुःखप्रागभाव एव मोक्ष इति मताभिप्रायेणोक्तत्वादिति । ननु मोक्षद आनन्दद इत्येतत् पुनरुक्तम् आनन्दस्य मोक्षरूपत्वादित्यत आह **मोक्षद इति** ।

**वा०चं०—** नन्वज्ञानामिति वाक्येऽपि स एवैक इति हरिं विना मुक्त्यभावबोधनात्तस्यापि पूर्वत्रोदाहार्य-त्वेन पृथक्करणमयुक्तमित्यतोऽत्र मोक्षद इत्यनेन भगवतः प्रकृतिबन्धनिवृत्तिरूपमोक्षकारणत्वोक्त्या प्रकृतिबन्ध-निवृत्तिरूपत्वान्मोक्षस्य कार्यत्वमुपपद्यत इत्यर्थसूचनेन दुःखानुत्पादरूपत्वान्मोक्षस्याकार्यत्वेन कारकानपेक्षत्वात् कारकप्रेरकत्वादिना ईश्वरप्रसादसापेक्षताव्युत्पादनमनुपपन्नमिति शङ्कापरिहारस्य ज्ञानदानातिरिक्तमोक्षदानोक्त्या च





ईशाधीनत्ववचनगतिकथननिरासस्यापि सूचनात्पूर्ववाक्याद्विशेषाभिप्रायेण भाष्यकारीयं पृथक्करणमुपपन्नमित्य-भिप्रेत्य तच्छङ्कानिवर्तकतया तद्वाक्यं योजयितुमाशङ्कते **यदुक्तमिति** । मोक्षद इत्यस्मादुक्तशङ्कानिवृत्त्युप-युक्तार्थलाभायोत्तरग्रन्थोपक्षेपाय चात्र तदुपयुक्तं प्रतिसंबन्धिनं पूरयति **मोक्षद इति**।

**वा०र०— पूर्वत्रेति** । द्रव्यं कर्म चेत्याद्यनुव्याख्यान इत्यर्थः । अत्राज्ञानामिति वाक्ये अत्रेत्यर्थसूचनेनेति शङ्कापरिहारस्य सूचनादिति संबन्धः । **गतिकथनेति** । ज्ञानादिजन्मनिमित्ततापरत्वरूपेत्यर्थः । **पूर्ववाक्याद्विशेषेति**। उभयसूचनाद्यः पूर्ववाक्याद्विशेषोऽधिकार्थलाभस्तदभिप्रायेणेत्यर्थः । उक्तनिरासद्वयस्य द्रव्यमित्यादिवाक्येऽभावा-दिति भावः । आशङ्कत इत्यस्याशङ्कां करोतीत्यर्थादनुवादेन निरासाय प्रसञ्जयतीत्यर्थः । अनुवदतीति वक्तव्यत्वेऽप्यत्रैव तन्निराकरणद्योतनायांशत इति वचनमिति ज्ञेयम् । मूले न कार्य इति । न प्रयत्नेन संपादनीय इत्यर्थः । कुत इत्यतः तत्स्वरूपप्रदर्शनपूर्वकं प्रयत्नानपेक्षामाह **किं त्वित्यादिना** । ज्ञानप्रदानाद्यतिरिक्तस्यापीश्वरप्रयोजनस्यागमेषूक्ते-रित्याहेति मूलम् । अनेन स एवैको जनार्दन इत्युक्तेरित्येतदनुव्याख्यानमिति प्रमाणवाक्ये ईश्वरप्रयोजनविशेष-स्योक्तेरिति व्याख्यातं भवति । न कार्य इत्याद्यनुवादपूर्वकं तदनुपपन्नमित्यभिधाय तत्प्रतिज्ञायां हेतुत्वेन इत्युक्ते-रित्यन्तानुव्याख्यानयोजनया अज्ञानामित्याद्यनुव्याख्यानस्य न हरिं विनेत्यादिपूर्वेण संबन्ध इत्युक्तं भवति । एवं मूलाशयं दर्शयितुमेव हरिं विनेत्यादिसमर्पकता स एवैक इत्यस्य पूर्वटीकायामुक्तेति द्रष्टव्यम् । **पूरयतीति** । मोक्षद इत्यनूद्य मोक्षप्रतियोगिनं पूरयतीत्यर्थः । मोक्षदः अविद्यानिवृत्तिद इति तत्त्वनिर्णयटीकाया अप्ययमेवार्थ इति ज्ञेयम् ।

**गूढ०—** नन्वज्ञानामित्यत्र ज्ञानस्य प्रसादहेतुत्वं प्रसादस्य मोक्षहेतुत्वं वा न प्रतिपाद्यत इति तदुदाहरणमयुक्तमित्यतस्तन्निवर्त्यां शङ्कां दर्शयति **यदुक्तमिति** । न च दुःखप्रध्वंसरूपमोक्षस्य कार्यत्वात् कथमेतदिति वाच्यम् । दुःखप्रागभाव एव मोक्ष इति मताभिप्रायेणोक्तत्वादिति । ननु मोक्षद आनन्दद इत्येतत् पुनरुक्तम् आनन्दस्य मोक्षरूपत्वादित्यत आह **मोक्षद इति** ।

**भगवानेव अनादेरपि प्रकृतिबन्धस्य निवर्तकः—**

**विवरणकारोक्तः पक्षः—**

**१८१ सु०— नन्वनादेः प्रकृतिबन्धस्य कथं निवृत्तिरिति चेत् ।**

**अत्राह कश्चित् । न सादित्वमनादित्वं वा विनाशाविनाशयोर्निमित्तम् । किन्तु विरोधिसन्निपातासन्निपातावेव ।**

**किञ्च लोके तावदनादिः प्रागभावो निवर्तते । सुगतानां तत्त्वपरिभावनाप्रकर्षेण अनादिवासनासन्तानानां निवृत्तिरिष्टा । नैयायिकानामप्यनादिमिथ्याज्ञानप्रवाहः परमाणु-**

**श्यामता च निवर्तते । साङ्ख्यानामप्यविवेको निवर्तते विवेकेन । मीसांसकानामिदानीन्तनधर्मतत्त्वज्ञानप्रागभावोऽनादिर्निवर्तते ।**

**अनादिभावरूपस्य न निवृत्तिरिति चेन्न । अनिर्वचनीयत्वादज्ञानस्य ।**

**अनादिर्न निवर्तत इति सामान्यव्याप्तिः। ज्ञानेनाज्ञाननिवृत्तिरिति विशेषव्याप्तिः । अतः सैव बलवती ।**

**बिन्दुः— अविवेक इति** । देहाद्यभेदज्ञानमित्यर्थः । यद्यप्येतत्प्रवाहत एवानादि तच्च नैयायिकादीनामपि समं तथाप्यनादेरपि निवृत्तिः सर्वतान्त्रिकैः स्वीकृतेत्येतत्प्रदर्शनार्थं विशिष्य साङ्ख्यपदोपादानम् । एतेन मीमांसकानामित्येतदपि व्याख्यातम् । **अनिर्वचनीयत्वादज्ञानस्येति** । भावाभावविलक्षणत्वाद्भाव एवासौ नेति अनादिभावो न निवर्तत इति व्याप्तौ सत्यामप्येतस्य निवृत्तौ न किञ्चिद्बाधकमिति भावः । **सैव बलवतीति** । ननु यदि सामान्यधर्मावगाहिप्रमाणापेक्षया विशेषधर्मावगाहि मानं बलवत् तर्हि द्रव्यत्वप्रकारकघटविषयज्ञानापेक्षया घटत्वप्रकारकघटविषयज्ञानस्यापि प्राबल्यं स्यात् । न च द्वयोस्तत्र प्रमात्वेन न बाध्यबाधकभावः किन्तु सामान्यस्य भ्रमत्वे विशेषप्रमा बाधिकेत्यभिप्राय इति वाच्यम् । तर्हि प्रमात्वमेव बाधकताप्रयोजकमस्तु । किमन्तर्गडुना सामान्यविशेषभावेनेति चेत् । न । भावानवबोधात् । अयं भावः । ययोर्धर्मयोर्व्याप्यव्यापकभावः तत्र व्यापकधर्ममुद्देश्यतावच्छेदकीकृत्य किञ्चिद्धर्मविषयकं सामान्यप्रमाणं तस्य तद्व्याप्यधर्मावच्छिन्नोद्देश्यताकं तद्विरुद्धधर्मावच्छिन्नविधेयताकं प्रमाणं बाधकमिति । तदुक्तं महाभाष्ये । येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीति । उदाहरणं तु यदाहवनीये जुहोतीति सामान्यम् । गार्हपत्ये पत्नीसंयाजान् जुहोतीति विशेषः । तत्रोद्देश्यतावच्छेदकयोर्होमत्वपत्नीसंयाजहोमत्वयोर्व्याप्यव्यापकभावात् । आहवनीयत्वगार्हपत्यत्वयोश्च विधेयतावच्छेदकयोरपि विरुद्धत्वाच्च । एवं कर्मण्यण् आतोऽनुपसर्गे क इत्यादावपि । यदप्युक्तं महाभाष्ये सत्यपि संभवे बाधनं भवति यथा दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति । तत्रापि विधेयतावच्छेदकयोर्विरोध एव । सोऽयं न्यायः प्रकृतव्याप्तिद्वयेऽप्यक्षत इति सर्वं समञ्जसमिति ।

**परि०**— कथं निवृत्तिरित्याक्षेपस्यात्रोच्यत इत्यादिना स्वयं समाधिं वक्ष्यन् विवरणोक्तं निरसितुं तावदनुवदति **अत्राह कश्चिदित्यादिना तदयुक्तमित्यन्तेन** । बन्धो न निवर्तते अनादित्वादिति हेतोरप्रयोजकत्वमुक्त्वा प्रागभावादावनेकत्र व्यभिचार इति भावेनाह **किञ्च लोक इति** । **परमाण्विति** ।





पार्थिवपरमाणुश्यामतेत्यर्थः । तस्या अपाकजत्वादिति भावः । **विवेकेनेति** । प्रकृतिपुरुषविवेकेन तदविवेको निवर्तत इत्यर्थः । वासनादावनादित्वं नेति मन्वानः शङ्कते **अनादिभावरूपस्येति** । हेतोः सत्प्रतिपक्षत्वासिद्धत्वाद्यभिप्रायेण निराह **अनिर्वचनीयत्वादिति** । भावाभावविलक्षणत्वादित्यर्थः । भावत्वमुपेत्यापि समाधिमाह **अनादिरिति** । **सैवेति** । विशेषव्याप्तिरेवेत्यर्थः ।

**यादु०**— विमतो बन्धो न निवर्ततेऽनादित्वादात्मवदित्यनुमानविरोधात्कथं बन्धनिवृत्तिरुपपन्नेत्याशङ्कते **नन्वनादेरिति** । **न सादित्वमनादित्वं वेति** । ध्वंसप्रागभावयोर्व्यभिचाराद्भावत्वे सतीति विशेषणे स्वभावे प्रयोजनान्तरकल्पनापात इति भावः । **विरोधिसन्निपातेति** । निवर्तकभावाभावावित्यर्थः । तथाच पूर्वानुमाने निवर्तकाभाव उपाधिस्तत्सद्भावेन सत्प्रतिपक्षता चेत्यर्थः । ननु सत्प्रतिपक्षानुमानेऽपि सादित्वमुपाधिरित्यत उक्तम् **सादित्वं विनाशे न प्रयोजकमिति** । अनादिर्न निवर्तत इत्यत्र किमनादित्वमात्रं विवक्षितमुतानादिभावत्वम् । आद्येऽपि किं लौकिकानां चोद्यमुत तत्तद्वादिनामिति विकल्प्य क्रमेण दूषयति **लोके तावदित्यादिना** । **अविवेक इति** । प्रकृतिपुरुषयोरित्यर्थः । इदानींतनेति धर्मतत्त्वज्ञानविशेषणम् तत्प्रतियोगिकप्रागभावनिवृत्त्युपपादनायेति ध्येयम् । द्वितीयं पक्षमाशङ्कते **अनादीति** । भावत्वे सत्यनादिन इत्यर्थः । भावशब्देन किं सत्त्वं विवक्षितमुताभाव-वैलक्षण्यमिति विकल्प्याद्ये विशेषणासिद्धिमाह **अनिर्वचनीयत्वादिति** । किञ्च विमतमज्ञानं ज्ञाननिवर्त्यमज्ञानत्वा-च्छुक्त्यज्ञानवदित्यनुमानबाध इत्याशयेनाह **अनादिर्न निवर्तत इत्यादिना** ।

**वं०प०**— उत्तरग्रन्थोपक्षेपायेदं व्याख्यानम् । **अविवेक इति** । प्रकृतिपुरुषयोरविवेकः । प्रकृतिपुरुषविवेकेन ज्ञानेन निवर्तत इत्यर्थः । **अनिर्वचनीयत्वादिति** । भावाभावविलक्षणत्वेन भावत्वाभावादिति भावः ।

**आनन्दः— नन्विति** । तथा चाज्ञानादिबन्धनं न निवर्तते । अनादित्वादित्यनुमानं फलितमिति भावः । अत्र स्वयं परिहारं वक्तुं कस्यचित्समाधानं दूषयितुमनुवदति **अत्राहेति** । अप्रयोजकत्वेनानुमानं दूषयति **न सादित्व-मिति** । किञ्च स्वरूपानादित्वं वा निवृत्तौ प्रयोजकं भावरूपत्वे सत्यनादित्वं वा । नाद्य इत्याह **किञ्च लोक इति** । द्वितीयं शङ्कते **अनादीति** । अत्र हि भावत्वं नाम सत्त्वं वा अभावविलक्षणत्वं वा । आद्ये आह **अनिर्वचनीयत्वा-दिति** । सद्विलक्षणत्वादित्यर्थः । तथाच विशेषणमसिद्धमिति भावः । प्रकारान्तरेण निवृत्तिमुपपादयति **अनादिरिति** ।

**कं०रा०**— **अनादेरिति** । प्रकृतिबन्धो न निवर्ततेऽनादित्वादात्मवदित्यनुमानविरुद्धत्वादनादेः प्रकृति-बन्धस्य निवृत्तिरङ्गीकर्तुं न शक्यत इति भावः । **निमित्तं** प्रयोजकम् । **विरोधिसन्निपातासन्निपातौ** निवर्तक-सद्भावासद्भावौ । **परमाण्विति** । पीलुपाकप्रक्रियापक्षे परमाणुश्यामता पाकेन निवर्तत इति भावः । **अविवेक इति** । प्रकृतिपुरुषयोर्भेदाग्रहस्तद्भेदग्रहेण निवर्तत इत्यर्थः । यद्यपि भेदाग्रहरूपाविवेकनिवृत्तिरूपत्वाद्विवेकस्य विवेकेना-विवेको निवर्तत इत्यविवेकस्य विवेकजन्यनिवृत्तिप्रतियोगित्वोक्तिरनुपपन्ना । तथाऽपि विवेकशब्दो विवेचकपर इति वा प्रागभावनिवृत्तिः प्रतियोग्यतिरिक्तेति वा समाधानमत्र द्रष्टव्यम् ।





**श्रीनिधि०**— अनादित्वहेतोर्व्यभिचारमाह **किञ्चेति** । परिभावना ध्यानम् । **वासनानां** संस्काराणाम् । सन्तानाः समूहाः ते अनादयः । विवेकेन प्रकृतिपुरुषविवेकेन । धर्मप्रागभावः तत्त्वज्ञानप्रागभावश्च । **अनिर्वचनीयत्वादिति** । अनिर्वचनीयत्वं नाम विरुद्धप्रकाराणां मध्ये केनापि प्रकारेण निर्वक्तुमशक्यत्वं विवक्षितम् । अतः भावत्वाभावत्वाभ्यामपि निर्वक्तुमशक्यत्वं विवक्षितम् । तथा च भावत्वविशेषणाभावेन तद्विशिष्टानादित्वहेतोरपि असिद्धिरिति भावः । अनादित्वमात्रं भावत्वे सत्यनादित्वं वा हेतुत्ववत् । उभयतः अपि बाधितविषयत्वं स्यात् इत्याह **अनादिर्न निवर्तत इति** । यद्वा अनिर्वचनीयत्वमङ्गीकर्तुमशक्यम् व्याहतत्वात् । अतो नासिद्धिरित्यतो दूषणान्तरमाह **अनादिर्न निवर्तत इति** । **सैव बलवतीति** । सामान्यविशेषयोर्मध्ये विशेषस्य बलवत्त्वादिति भावः ।

**वा०चं०**— नन्वेवं व्याख्याने प्रकृतिबन्धस्यानादित्वेन निवर्त्यत्वानुपपत्त्या वाक्यमनुपपन्नार्थं स्यादतो नेदं व्याख्यानं युक्तम् । ततश्च नास्य प्रकृतोपयोग इत्यतोऽनादेर्निवृत्त्यनुपपत्तिशङ्कापरिहारं विवरणकारीयमनूद्य निराकृत्य भाष्यकाराभिमतं परिहारं वक्तुं शङ्कामुत्थापयति **नन्विति** । बन्धो न निवर्ततेऽनादित्वादिति विवक्षितानुमाने न सादित्वमित्यादिना हेतोरप्रयोजकत्वमभिधाय व्यभिचारमप्याह **किञ्चेति** । यद्यपि विवरणे किञ्चेत्येतावानंशो नास्ति लोके तावदिति ग्रन्थश्च न सादित्वमित्युक्ताप्रयोजकत्वोपपादकतया व्याख्यातुं शक्यते । तत्त्वदीपने सादित्वादेरनिमित्तत्वे हेतुं दर्शयतीत्यवतारितश्च । तथाऽपि स्पष्टव्यभिचारस्य ग्रन्थस्य न तथाऽवतरणमुचितम् अप्रयोजकत्वोपपादनस्यापि व्यभिचारोपपादनेनैव सिद्धेः किन्तु विरोधिसन्निपातेत्युक्तोपपादनाच्च दूषणान्तरत्वमेवोचितम् । अत एव तन्नव्येनापि व्यभिचारमाहेत्यवतरणं कृतमित्यभिप्रायेण विवरणाभिप्रेतार्थकथनं किञ्चेत्येतदिति ध्येयम् । अनादिर्न निवर्तत इत्यत्र किमनादित्वमात्रं विवक्षितमुतानादिभावत्वम् । आद्येऽपि किं लौकिकस्य चोद्यमुत वादिनामिति विकल्प्याद्यं दूषयति **लोके तावदिति** । द्वितीयेऽपि किं सुगतस्योत नैयायिकस्याथवा साङ्ख्यस्याहोस्विन्मीमांसकस्येति विकल्पान्क्रमेण दूषयति **सुगतानामित्यादिना** । द्वितीयं पक्षमुत्थापयति **अनादीति** । यद्यपि सुगतानामित्याद्युक्तदोषस्यात्रापि संभवस्तथाऽपि लौकिकस्येदं चोद्यं न वादिनोऽतस्तान्प्रत्यप्ययमाक्षेप इत्यभिप्रायेण वा स्वपक्षेण दूषणान्तरसंभवाभिप्रायेण वा तमनभिधाय किमत्र भावशब्देन सत्त्वं विवक्षितमुताभाववैलक्षण्यमथवा तत्प्रयोजको धर्मः कश्चिदिति विकल्प्याद्येऽज्ञाने हेतुविशेष्यासिद्धिरित्याह **नानिर्वचनीयत्वादिति** । परमते प्रागभावे व्यभिचाराच्चेति द्रष्टव्यम् । किञ्चाप्रयोजकोऽयं हेतुः । न चानौपाधिकव्याप्तिभङ्ग एव दोषः । तस्य बलवद्बद्ध्यास्यन्तरबाधितत्वेनानौपाधिकत्वासिद्धेरित्यभिप्रेत्याह **अनादिर्न निवर्तत इति** । लोके ज्ञानाज्ञानयोर्निवर्त्यनिवर्तकतादर्शनाद्ब्रह्मज्ञानाज्ञानयोरपि तथात्वमित्यर्थः।

**वा०र०**— **एवं व्याख्यान इति** । वाक्यमनुपपन्नार्थं स्यादित्यनेन संबन्धः । तत्र हेतुः **प्रकृतीति** । अस्याज्ञानमिति वाक्यस्य । **नास्य प्रकृतोपयोग** इत्यनेन **नन्वनादेरिति** मूलस्य पर्यवसानकथनात्सदलत्वं सूचितमिति ज्ञेयम् । इत्यतो भाष्यकाराभिमतं परिहारं वक्तुमिति संबन्धः । इति शङ्का यतो भवति अतः परिहारप्रसञ्जकसद्भावाद्भाष्यकाराभिमतं तच्छङ्कापरिहारं वक्तुं तां शङ्कां तावदुत्थापयतीत्यर्थः । तर्हि यत्तावदविद्याया अनादित्वेनेत्युत्तरग्रन्थेनैवालम् । अत्राहेत्याद्यधिकमित्यत उक्तम् **अनादेर्निवृत्तीति** । अनादेर्या निवृत्तिस्तस्या





अनुपपत्त्येति योज्यम् । विवरणकारीयपरिहारनिराकरणं च स्वोक्तपरिहारदार्ढ्यार्थं तन्निराकरणव्याजेन प्रमेयान्तरेष्वपि तदचातुरीमाविष्कर्तुं च । अनुमानमात्रमेवाश्रित्य विवरणग्रन्थप्रवृत्तेरनुमानमात्रपर्यवसानमाह **बन्ध इति** । अप्रयोजकत्वमभिधाय व्यभिचारमप्याहेति । यद्यप्रयोजकोऽन्यथासिद्धो व्याप्यत्वासिद्धो वा वाक्यत्वादिहेतुरित्यपौरुषेयत्ववादीयतत्त्वनिर्णयटीकोक्तेरप्रयोजकत्वस्य हेत्वाभासान्तर्भावव्युत्पादनपरवरदराजीयग्रन्थे अन्यथासिद्धोऽप्रयोजक उपाधिमानिति पर्याया इत्युक्तेरुक्ततत्त्वनिर्णयटीकावाक्ययोजनास्थलीयास्मदुपदर्शितन्यायसूत्रभाष्यादिपर्यालोचनया चाप्रयोजकत्वे उक्ते उपाधिरुक्तप्राय इति तेन व्यभिचारोन्नयने सति पूर्वग्रन्थादेव व्यभिचारलाभात् । किञ्चेत्यादिना पुनः व्यभिचारचोदनानुपपत्तेर्न तथावतारो युक्त इत्याभाति । तथापि परग्रन्थे अप्रयोजकत्वस्य बहुप्रकारतोक्तेर्हेतुरस्तु साध्यं मास्तु विपक्षे बाधकाभावादप्रयोजको हेतुरित्यस्य प्रयोजकान्तराभिधानेनोपाधिपर्यवसानस्थल इवोपाधिपर्यवसानं विहाय केवलं प्रयोजकान्तराभिधानमात्रस्थले तथा प्रयोजकान्तरानभिधानेऽपि हेतूच्छित्त्यादिबाधकनिवृत्त्या प्रयोजकत्वस्थलेऽपि च साम्येन प्रवृत्त्या प्रकृते च प्रयोजकान्तराभिधानेन तृतीयप्रकारस्यासंभवेऽपि उपाधिपर्यवसानाभ्युपगमेनाद्यस्य चासंभवेऽपि तदपर्यवसायिज्ञानबाध्यत्वमपि इत्येतत्संबन्धिमूले सत्यस्यापि ज्ञाननाश्यत्वमस्तु न विपक्षे बाधकं किञ्चिदित्यतोऽप्रयोजकत्वाज्ज्ञानबाध्यत्वं न सिद्धमपि व्याप्यत्वासिद्धमपीत्युक्तेः प्रयोजकान्तराभिधानेनाप्रयोजकताशङ्कारूपद्वितीयप्रकारस्यात्राश्रयणेन तावता च व्यभिचारालाभात् पृथग्व्यभिचाराभिधानपरतया अवतारो युक्तः । सम्मतश्चायं द्वितीयप्रकारो मूलकृतः । तस्य अकर्तृकत्वप्रसिद्ध्यभावादिति तत्त्वनिर्णयटीकायामिदमुक्तं भवति । वाक्यत्वादौ समानेऽपि लौकिकवाक्यस्य अवेदत्वात्सकर्तृकत्वमस्तु अस्य तु वेदत्वादकर्तृकत्वं भवत्विति शङ्कायां बाधकाभावेनाप्रयोजकत्वान्नैवमनुमातव्यमित्यादिरूपेणैकां योजनामभिधाय अथवा तस्याकर्तृकत्वेत्यनेन वेदत्वाभावो वाक्यत्वानुमानस्योपाधिरुच्यत इति प्रकारान्तरेणापि योजनायाः करणेनोपाध्यपर्यवसायिप्रयोजकाभिधानपक्षस्य ततः प्रतीतेः । उपाधिपर्यवसायिप्रयोजकान्तरकथनमात्रेति प्रकारस्वीकारेऽपि न दोषः । तावतोपाधिसद्भावेन व्याप्यत्वासिद्धो जातः न त्वनैकान्तिकः । तथा सति परपक्षेऽसिद्धप्रभेदव्याप्यत्वासिद्धस्यैवानैकान्तिकतापत्त्या पृथग्घेत्वाभासता न स्यात् । अन्यथासिद्धस्वरूपत्वेऽन्यथासिद्धो व्याप्यत्वेत्युक्तग्रन्थयोजनावसरे अस्माभिर्विवृतं तत एव प्रतिपत्तव्यम् । **तथेति** । अप्रयोजकत्वोपपादनपरत्वेनेत्यर्थः । तदुपपादनमन्यथासिद्धं चेत्याह **अप्रयोजकत्वेति** । व्यभिचारप्रतिपादनेनैवेति मूलकोशानुसारी पाठः । उपपादनेति पाठे उपेत्यस्य प्रत्यर्थकत्वम् । सत्यप्यनादित्वे विनाशदर्शनाद्विनाशाभावं प्रत्यनादित्वं प्रयोजकं नेत्यप्रयोजकत्वोपपादनलाभादिति भावः । किं चाप्रयोजकत्वं ह्यनादित्वादेः प्रयोजकत्वं नेत्येतावन्मात्रेण न प्रतिपादितम् । अपि तु किन्तु विरोधिसन्निपातासन्निपातावेवेति प्रयोजकान्तराभिधानेनापि । यदि चोत्तरग्रन्थस्याप्रयोजकत्वोपपादकता तर्ह्यावश्यकं प्रयोजकान्तरस्योपपादनमपि कर्तव्यं स्यान्न चैतदस्ति । ततोऽपि नाप्रयोजकत्वोपपादकतया योजना युक्तेत्याह **किन्तु विरोधीति** । दूषणान्तरपरत्वमिति पाठः । अत्र दूषणान्तरपरत्वस्योचितत्वे हेतुः न तथावतरणमुचितमिति । तस्य च तथावतरणस्यानुचितत्वादित्यर्थः । तदुपपादनाय स्पष्टव्यभिचारपरत्वस्याप्रयोजकत्वेत्यादेः प्रकारद्वयस्य चोक्तेरिति ज्ञेयम् । **तन्नव्येनापीति** । विवरणसंबन्धिनव्येनेत्यर्थः । विवरणटीकाकृदन्तरेण नृसिंहाश्रमेणेति यावत् । नेदं मूलाभिप्रायान्तर्गतं अपि तु विवरण-

वाक्यस्य दूषणान्तरपरत्वमेवोचितमिति यो मूलाभिप्रायो वर्णितस्तत्र संमतश्चायमर्थस्तट्टीकान्तरकर्तुरिति स्वयं साधकाभिधानमतो नव्यपश्चात्तनत्वेऽपि न दोष इति ज्ञेयम् । यद्यपि व्यभिचारस्य स्वरीत्याऽप्रसरात् परमतेनेति च टीकान्तरे उक्त्वा स्वमते त्वप्रयोजकत्वमित्युक्ततया स्वमतानुसारित्वम् । अप्रयोजकत्वमात्रस्यैव न तु व्यभिचारस्येत्याभाति । तथापि लोके तावदिति ग्रन्थे मुख्यं व्यभिचारपरत्वमेवाभिप्रेतं च परमतेन, स्वमतेन तदभावेऽपि अप्रयोजकत्वमात्रमेव दोषोऽस्त्वित्याशयेन टीकान्तरस्य प्रवृत्तिर्न तु व्यभिचारस्य दोषत्व-निराकरणाभिप्रायेणेति न दोष इति हृदयम् । लोक इत्येतत् ज्ञापकानुसारेण प्रागभाव एव पुनरविवेक इति धर्मतत्त्वज्ञानप्रागभाव इति च व्यभिचारप्रतिपादनेन च सूचनाल्लौकिकस्येति विकल्पप्रसक्तिरिति ज्ञेयम् । **द्वितीयमिति** । अनादिभावत्वमिति द्वितीयमित्यर्थः । सुगतानामित्याद्युक्तदोषे सति दोषान्तराभिधानप्रयासो व्यर्थ इत्याशङ्क्य परिहरति **यद्यपीत्यादिना** । न वादिना मत इति पाठः । तान्प्रत्ययमित्यनेन तदुक्तरीतेर्दुष्टत्वान्न तद्रीत्या व्यभिचारशङ्कासंभव इति सूचितम् । **परमत इति** । लौकिकमत इत्यर्थः । तन्मतेऽपि प्रागभावे सत्त्वविशिष्टा-नादित्वसत्त्वादिति भावः ।

**स०व्र०**— विमतो बन्धो न निवर्तते अनादित्वादात्मवदित्यनुमानान्न बन्धनिवृत्तिरित्याशङ्कते **नन्वनादेरिति** । परमतेन परिहरति **अत्राहेति** । विरोध्यभावस्योपाधित्वं विरोधिसंसर्गस्य वा प्रतिपक्षत्वमित्यर्थः । सादित्वादेर्विनाशाविनाशनिमित्तत्वे हेतू दर्शयति **किन्त्विति** । अनादिर्न निवर्तत इत्यत्र किमनादित्वमात्रं विवक्षित-मुतानादिभावत्वम् । आद्येऽपि किं लौकिकानां चोद्यं उत तत्तद्वादिनां इति विकल्प्य क्रमेण दूषयति **लोके तावदित्यादिना** । द्वितीयं पक्षमाशङ्कते **अनादीति** । भावशब्देन किं सत्त्वं विवक्षितम् उताभाववैलक्षण्यमिति विकल्प्याद्ये विशेषणासिद्धिमाह **नेति** । अनादित्वे सति भावत्वेऽपि निवृत्तिरस्तु । को बाधः । न च सामान्य-व्याप्तिबाधः । ततो विशेषव्याप्तेर्बलीयस्त्वादित्यभिप्रायेणाह **अनादिरिति** । लोके ज्ञानाज्ञानयोर्निवर्त्यनिवर्तकभाव-दर्शनाद्ब्रह्मज्ञानाज्ञानयोरपि तथात्वमित्यर्थः ।

**विठ्ठ०**— प्रकृतिबन्धनिवर्तकत्वं नेश्वरस्योपपद्यते विमतो बन्धो न निवर्तते अनादित्वादित्यनुमान-विरोधादिति शङ्कते **नन्वनादेरिति** । **कश्चित्** विवरणकारः । **विरोधिसन्निपातेति** । निवर्तकभावाभावावित्यर्थः । तथाच निवर्तकाभाव उपाधिः तत्सद्भावेन प्रतिपक्षता वेति भावः । व्यभिचारं चाह **किञ्चेति** । अनादिर्न निवर्तत इत्यत्र किमनादित्वमात्रं हेतुतया विवक्षितमुतानादिभावत्वम् । आद्येऽपि किं लौकिकानामिदं चोद्यम् उत तद्वादिनामिति विकल्पं मनसि निधायाद्यं दूषयति **लोके तावदिति** । द्वितीयं तत्तद्रीत्या दूषयति **सुगतानामित्यादिना** । तृतीयमुत्थापयति **अनादिभावरूपस्येति** । भावशब्देनापि किं सत्त्वं विवक्षितमुत अभावलक्षणत्वं वेति विकल्प्याद्ये विशेषणासिद्धिमाह **अनिर्वचनीयत्वादिति** । प्रकृत्यादिशब्दाभिधेयस्य बन्धकत्वेनाभिमतस्याज्ञानस्यानिर्वच-नीयत्वेन सत्त्वाभावत्वादिति भावः । किञ्च विमतं बन्धकत्वेनाभिमतम् अज्ञानं ज्ञाननिवर्त्यम् अज्ञानत्वात् शुक्तिकाज्ञानवत् इत्यनुमानबाध इत्याशयेनाभिप्रेतानुमानस्य प्राबल्यमुपपादयति **अनादिर्न निवर्तत इति** ।





**चषकः—** साध्यतदभावकोटिकविमतिविषयीभूतबन्धपक्षकानादित्वहेतुकानिवर्त्यत्वसाध्यकात्मनिदर्शनकानुमानविरोधाद्बन्धनिवृत्तिर्न घटत इत्याशङ्कते **नन्वनादेरिति** । विवरणकारीयसमाहितिं प्रतिविधित्समानोऽनुवदति **अत्राहेति** । दर्शितानुमाने निवृत्तिप्रयोजकसामग्र्यभाव उपाधिस्तादृशसामग्रीसद्भावेन प्रतिरोधप्रयोजकता वेत्याह **विरोधीत्यादिना** । **किञ्चेत्यादि** । सामानाधिकरण्यप्रत्यासत्त्याभावत्वाविशेषितमनादित्वं हेतूक्रियते तद्विशेषितं वेति कल्पद्वयीघटकादिमकल्पेऽपि वादीतरजनरूपलौकिकानुमिमानकत्वं वादिरूपानुमिमानकत्वं वेति कल्पद्वयीं तत्रत्योत्तरकल्पेऽपि वादिपदेन सुगतो नैयायिकः साङ्ख्यो मीमांसको वाऽभिप्रेयत इति कल्पचतुष्टयीमभिसन्दधान आद्यकल्पीयादिमं प्रत्याख्याति **लोके तावदित्यादि** । तथाच प्रागभावेऽनैकान्त्यम् । वादितानापन्नजनैरपि सुप्रतिपादमिति भावः । तादृशद्वितीयकल्पीयकल्पचतुष्टयीं प्रतिविधत्ते **सुगताना-मित्यादिना** । प्रधानभूताद्यकल्पीयं द्वितीयं निरस्यति **अनादिभावरूपस्येति** । सुगतानामित्यादिनाऽभिहितस्थानत्रये अनादित्वाभावेनैवानैकान्त्यव्युदासं प्रतिसन्दधान उत्तरदलेऽपि भावत्वं भावधर्मरूपमभिप्रेयते अभावविलक्षणत्वरूपं वेति कल्पद्वयीमभिप्रेत्याद्ये तदभावनियन्त्रिताप्रसिद्धिमभिधत्ते **अनिर्वचनीयत्वादिति** । किञ्च प्रकृतसाध्यमन्तरेणापि प्रकृतहेतोः सत्त्वोपपत्त्या अप्रयोजकतामभिधित्समानस्तच्छङ्कानिवर्तकाभिमतबन्धधर्मिकनिवर्त्यत्वापादकतद्व्यापकानादिभावत्वाभावापाद्यकतर्कस्य हेतुभूतायां प्रकृतापादकव्यतिरेकनिरूपितप्रकृतापाद्यव्यतिरेकनिष्ठव्याप्तावज्ञानत्वाभावस्योपाधितया मूलशैथिल्यनियन्त्रिततादृशतर्कानवतारेणाप्रयोजकतां प्रतितिष्ठापयिषति **अनादिर्न निवर्तत इत्यादि** । किञ्च विमतमज्ञानं ज्ञाननिवर्त्यमज्ञानत्वाच्छुक्त्यज्ञानवदित्यनुमानेन बाध इत्याशयेनाह। अनादिर्न निवर्तत इत्यादिनेत्यपि व्याकुर्वते।

**गूढ०— नन्विति**। तथा चाज्ञानादिबन्धः न निवर्तते अनादित्वादित्यनुमानं फलितमिति भावः। अत्र स्वयं परिहारं वक्तुं कस्यचित्समाधानं दूषयितुमनुवदति **अत्राहेति** । अप्रयोजकत्वेनानुमानं दूषयति **न सादित्वमिति** । किञ्च स्वरूपानादित्वं वा निवृत्तौ प्रयोजकं भावरूपत्वे सत्यनादित्वं वा। नाद्य इत्याह **किञ्च लोक इति** । द्वितीयं शङ्कते **अनादीति** । अत्र हि भावत्वं नाम सत्त्वं वा अभावविलक्षणत्वं वा। आद्ये आह **अनिर्वचनीयत्वादिति** । सद्विलक्षणत्वादित्यर्थः। तथा विशेषणमसिद्धमिति भावः। प्रकारान्तरेण निवृत्तिमुपपादयति **अनादिरिति**।

**प्रदीपः—** विमतो बन्धो न निवर्तते अनादित्वादात्मवदित्यनुमानात् न बन्धनिवृत्तिः शक्येति शङ्कते **नन्वनादेरिति**। परमतेन परिहरति **अत्राहेति**। विरोध्यभावस्योपाधित्वं विरोधिसंसर्गस्य वा प्रतिपक्षत्वमित्यर्थः। सादित्वादेर्विनाशानिमित्तत्वे हेतुं दर्शयति **किञ्चेति** । अनादिर्न निवर्तत इत्यत्र किमनादित्वमात्रं विवक्षितमुतानादिभावत्वम् । आद्येऽपि किं लौकिकानां चोद्यमुत तत्तद्वादिनामिति विकल्प्य क्रमेण दूषयति **लोके तावदित्यादिना** । द्वितीयं पक्षमुत्थापयति **अनादीति** । किं भावशब्देन सत्त्वं विवक्षितं उताभाववैलक्षण्यमिति विकल्प्याद्ये विशेषणासिद्धिमाह **नेति** । अनादित्वे सति भावत्वेऽपि निवृत्तिरस्तु को बाधः । न च सामान्यव्याप्तिबाधस्ततो विशेषव्याप्तेर्बलीयस्त्वादित्यभिप्रायेणाह **अनादिरिति** ।





**१८२ सु०— ननु स्वोपादानगतोत्तरावस्था विनाशः । तत्कथमनादेर्निरुपादानस्य विनाशः । न । स्वाश्रयगतोत्तरावस्थेत्येतावत्वात् । अन्यथा परमाणुश्यामत्वादीनामनिवृत्तिप्रसङ्गात् ॥ अभाववैलक्षण्यादात्मवदज्ञानस्यानिवृत्तिरिति चेन्न । सद्वैलक्षण्यात्प्रागभाववन्निवृत्तिः किं न स्यात् ॥ कस्तर्हि निर्णयः । ज्ञानाज्ञानकृतो विशेषान्वय इत्युक्तमिति ।**

**परि०—** तार्किकोक्तविनाशस्वरूपं निषेधति **नेति** । स्वयं प्रकारान्तरेण विनाशस्वरूपं निर्वक्ति **स्वाश्रयेति** । न तूपादानेत्यप्याश्रयो विशेषणीय इत्यर्थः । **परमाणुश्यामत्वादीनामिति** । तेषामनादित्वादिति भावः । अनिर्वचनीयत्वादित्युक्तपक्षेऽपि दोषमाशङ्क्य निराह **अभावेति** । **ज्ञानाज्ञानकृत इति** । यदज्ञानं तद् ज्ञानेन निवर्तत इति विशेषव्याप्तिरित्युक्तमित्यर्थः ।

**यादु०—** प्रकारान्तरेणानादेर्नाशासंभवं शङ्कते **ननु स्वेति** । घटादेर्विनाशो नाम स्वकारणसमवायिनी कपालाद्यवस्था । अज्ञानस्य चाकार्यत्वान्न स्वकारणसमवायिन्युत्तरावस्थेत्यविनाश इत्यर्थः । व्यर्थविशेषणत्वेन परिहरति **नेति** । तथा चात्मनो ब्रह्मस्वरूपाभिव्यक्तिरेवाविद्यानिवृत्तिरिति न नाशलक्षणानाक्रान्ततेति भावः । न केवलं व्यर्थविशेषणता किन्त्वव्याप्तिश्चेत्याह **अन्यथेति** । प्रागभावादिरादिशब्दार्थः । कल्पान्तरमुत्थापयति **अभाववैलक्षण्यादिति** । अत्रानादित्वमपि विशेषणं द्रष्टव्यम् । अस्य प्रत्यनुमानपरिहारमाह **सद्वैलक्षण्यादिति** । समानबलवत्त्वान्नानयोर्बाध्यबाधकभाव इति शङ्कते **कस्तर्हीति** । समानबलत्वमसिद्धमित्याह **ज्ञानाज्ञानेति** । तथा चाज्ञानत्वहेतुसहकृतं सद्वैलक्षण्यं प्रबलं सन्निवृत्तिनिर्णायकं भविष्यतीति भावः । वैनाशिका इति हेतुगर्भविशेषणम् । सर्वक्षणिकत्ववादित्वादित्यर्थः ।

**वं०प०—** **अनिवृत्तीति** । श्यामताया अनादित्वेनोपादानाभावादिति भावः । **कस्तर्हीति** । अभाववैलक्षण्यादात्मवदज्ञानस्यानिवृत्तिर्वा सद्वैलक्षण्यात्प्रागभाववन्निवृत्तिर्वेति सन्देह एव स्यान्न निर्णय इत्यर्थः । उत्तरमाह **ज्ञानेति** । यदज्ञानं तज्ज्ञाननिवर्त्यमिति विशेषव्याप्तिर्बलवतीति निवृत्तिनिर्णय एव भविष्यतीति भावः । **उक्तमिति** । ज्ञानेनाज्ञाननिवृत्तिरिति विशेषव्याप्तिरित्युक्तमित्यर्थः । साधनव्यापकत्वमसिद्धिं चोपपादयति **न हीति** । तदभावं निवर्तकाभावरूपमुपाधिम् । वासनासन्ताने व्यभिचार उद्भाव्यत इति चेत्तत्राह **न चेति** । तद्व्यतिरिक्तं वासनारूपसन्तानव्यतिरिक्तम् । **इदंप्रथमतेति** । अस्मिन्कालविशेषे तेजःसंयोगरूपः पाकः आरब्ध इति पाकस्येदंप्रथमता यदि स्यात् । तदैवैतावत्पर्यन्तं श्यामता न निवृत्तेति श्यामताया अनादित्वं स्यादित्यर्थः ।

**आनन्दः—** नन्वज्ञानस्य निरुपादानत्वेन विनाशलक्षणाभावान्न निवृत्तिरित्याशङ्कते **नन्विति** । **स्वाश्रयगतेति** । उपादानगतेत्यत्रोपादानशब्दस्य समवायिकारणपरत्वेन समवायादेः प्रवेशेन गौरवादिति भावः ।





**अन्यथेति** । स्वोपादानगतोत्तरावस्थाया विनाशित्व इत्यर्थः । तस्यानादित्वेन तदुपादानाभावादिति भावः । द्वितीयमाशङ्कते **अभावेति** । **कस्तर्हि निर्णय इति** । निवर्त्यत्वानिवर्त्यत्वप्रयोजकद्वयसमावेशेनोभयोरपि प्राप्तत्वान्निर्णयः क इत्यर्थः । विशेषव्याप्त्या सामान्यव्याप्तेर्बाधान्निवृत्तिरेव निर्णीयत इत्याह **ज्ञानेति** ।

**कं०रा०— स्वोपादानेति** । स्वोपादानगतविभक्तकपालत्वाद्यवस्थाया घटादिविनाशरूपत्वदर्शनादिति भावः । स्वाश्रयगतोत्तरावस्थैव विनाशशब्दार्थः । न तु स्वोपादानगतोत्तरावस्था । तत्र स्वोपादानत्वस्य स्वाश्रयविशेषत्वरूपतया गौरवात् । एवंविधश्च विनाशोऽनादेरज्ञानस्यापि स्वाश्रयत्वात्संभवतीत्याशयेन परिहरति **नेति** । **एतावत्त्वात्** । विनाशस्येति शेषः । **ज्ञानेति** । ज्ञानेनाज्ञानं निवर्तत इति विशेषव्याप्तिर्बलवतीत्युक्तमित्यर्थः । एवं च बलीयस्या विशेषव्याप्त्याऽज्ञानस्य निवृत्तिनिर्णय उपपद्यत इति भावः ।

**श्रीनिधि०— ज्ञानाज्ञानेत्यादि** । अज्ञानं ज्ञानेन निवर्तत इति विशेषव्याप्तिरित्युक्तमित्यर्थः । तथा च विशेषस्यैव बलवत्त्वमिति भावः ।

**वा०चं०—** प्रकारान्तरेणानादेर्नाशाभावं शङ्कते **ननु स्वोपादानेति** । घटादेर्नाशो नाम स्वकारणसमवायिनी कपालाद्यवस्था । अज्ञानस्य चाकार्यत्वान्न स्वकारणसमवायिन्युत्तरावस्थेत्यविनाश इत्यर्थः । व्यर्थविशेषणतया परिहरति **न स्वाश्रयेति** । स्वाश्रयगतोत्तरावस्थाया नाशत्वसंभवे समवायिकारणेति विशेषणं व्यर्थम् । तथा चात्मनो ब्रह्मस्वरूपाभिव्यक्तिरविद्यानिवृत्तिरिति किमत्रावद्यमित्यर्थः । न केवलं व्यर्थविशेषणता किन्त्वव्याप्तिश्चेत्याह **अन्यथेति** । प्रागभावादिरादिपदार्थः । परिशिष्टं पक्षद्वयमाशङ्क्य निराकरोति **अभाववैलक्षण्यादिति** । तत्प्रयोजको धर्मो भावत्वमित्यस्याप्युपलक्षणम् । अत्रानादित्वमपि विशेषणं द्रष्टव्यम् । प्रत्यनुमानपराहतिमाह **न सद्वैलक्षण्यादिति** । सत्ताजात्याश्रयान्यत्वादित्यर्थः । अतो न परमते दृष्टान्ते साधनवैकल्यमिति ध्येयम् । समानबलत्वान्नानयोर्बाध्यबाधकभाव इति शङ्कते **कस्तर्हीति** । समानबलत्वमसिद्धमित्याह **ज्ञानाज्ञानेति** । न सादित्वमित्यादेर्नाप्रयोजकतामात्रे तात्पर्यं किन्त्वित्यादिना विनाशाविनाशयोर्निवर्तकसद्भावतदभावरूपनिमित्तान्तरस्याप्ययुक्तेः । तथा चाविनाशे निवर्तकाभावः प्रयोजक इति विवक्षयोपाधिकथने तात्पर्यम् ।

**वा०र०— स्वकारणं** समवायिकारणम् । **तथा चात्मनो ब्रह्मस्वरूपेति** । आत्मरूपाश्रयगतोत्तरावस्थाभिव्यक्तिरूपो विनाश इत्यर्थः । **अव्याप्तिश्चेति** । विनाशलक्षणस्येति शेषः । **उपलक्षणमिति** । अस्योत्तरत्रोपन्यासादुपलक्षणयाभिधानमिति ज्ञेयम् । यत्तु अन्यथाख्यातौ न सादित्वमनादित्वं वेत्यादि वाक्यव्याख्यानावसरे प्रागभावादौ व्यभिचारादिकथनादि कृतम्, तत्तु उत्तरग्रन्थानुसन्धाने अयुक्तमिति स्पष्टमित्युपेक्ष्यम् । प्रध्वंसप्रागभावयोर्व्यभिचारेण सादित्वा नादित्वयोः विनाशाविनाशाभ्यां व्यभिचारस्य पूर्ववाक्य एव सिद्धत्वे लोके तावदनादिः प्राग्भावो निवर्तते इत्यादिना व्यभिचाराभिधानं कथं न व्यर्थं स्यात् । पूर्वोत्तरग्रन्थयोः





उपपाद्योपपादकभावेन प्रवृत्तिरिति तु न शङ्कनीयम् । विवरणे लोके तावदित्यादेरेव ग्रन्थस्य विद्यमानत्वेऽपि दूषणान्तरत्वज्ञापनायैव किञ्चेत्यस्याधिकस्य मूले पूरणात् । पूर्वग्रन्थस्य व्यभिचाराभिप्रायत्वेनानादित्वं विनाशाभावे प्रयोजकमित्येव वक्तव्यतया सादित्वस्य विनाशे प्रयोजकत्वखण्डनस्य विरोधिसन्निपाततदभावयोः विनाशाविनाशौ प्रति प्रयोजकत्वाभिधानस्य च वैयर्थ्यात् । न सादित्वमित्यादिवाक्यस्य व्यभिचाराभिधायकत्वम् । किन्तु विरोधीति वाक्यस्य तूपाधिप्रतिपक्षपरत्वमिति विवेकाङ्गीकारे तु यत्तावत्सादित्वमनादित्वं वेत्याद्युत्तरमूले उपाधि-प्रतिपक्षाभिप्रायकत्वेन विकल्पानुपपत्तिप्रसङ्गः । अत्र अधिकं विनोदे ज्ञेयम् । अभावे व्यभिचारपरिहाराय भावत्व-विशेषणमाशङ्क्य तथा सति अभावविनाशे निमित्तान्तरं वाच्यमित्यभिधानं चासत् । वक्ष्यमाणरीत्या प्राप्तस्यापि प्रागभावे व्यभिचारस्यैव भावत्वविशिष्टहेतोः वासनासन्तानादौ व्यभिचारस्य वा असिद्धेर्वा वक्ष्यमाणरीत्यैव प्राप्तायाः अभिप्रायतया वर्णनीयत्वेनार्धजरतीयायोगात् । अनादित्वेन निवृत्त्यभावशङ्कायामनादित्वनिवृत्त्यभावयोर्व्यभिचारेण व्याप्त्यभावे वादिनोक्ते भावविशेषणेन व्यभिचारपरिहारमात्रेणैव प्रतिवादिनः कृतार्थतया तेन अभावविनाशे निमित्तान्तरस्यावक्तव्यत्वाच्चेत्यलम् । नारायणपण्डितीयेऽपि तत्र तत्र व्याख्यानमुत्तराननुगुणम् । अभावविलक्षणत्व-मात्रस्य घटादावव्यभिचारायाह **अत्रानादित्वमपीति** । **दृष्टान्त इति** । स्वरूपसत्त्वस्य तत्रापि सत्त्वादिति भावः । अद्वैतिमते तदभावाभिप्रायेण परमत इत्युक्तं **ज्ञानाज्ञानेतीति** । तथाच ज्ञानत्वहेतुसहकृतसद्वैलक्षण्यं प्रबलं सन्निवृत्तिनिर्णायकं भविष्यतीति मूलाशयः । अप्रयोजकत्वमात्रपरत्वेन योजनाया विवरणं टीकाकारैः कृतत्वात् कथमयं विकल्प इत्यतस्तद्योजनैवायुक्तेति दर्शयन् विकल्पसंभवमाह **न सादित्वमित्यादेरित्यादिना** । अप्रयोजकत्वमात्रे हेतूच्छित्त्यादिबाधकोपन्यासनिवर्त्याप्रयोजकत्व इत्यर्थः । **उक्तेरिति** । तथाच प्रयोजकान्तर-कथनलब्धोपाधिपर्यवसायिनि तत्र तात्पर्यमिति लब्धम् ।

**स०व्र०**— प्रकारान्तरेणानादेर्नाशासंभवं शङ्कते **ननु स्वेति** । घटादेर्नाशो नाम स्वसमवायिकारण-गतोत्तरकपालत्वावस्था । अज्ञानस्य चाकार्यत्वान्न तत्समवायिकारणगतोत्तरावस्था विनाश इत्यर्थः । व्यर्थ-विशेषणतया परिहरति **न स्वाश्रयेति** । स्वाश्रयगतोत्तरावस्थाया नाशत्वसंभवे समवायिकारणेति विशेषणं व्यर्थम् । तथा चात्मनो ब्रह्मस्वरूपताभिव्यक्तिरविद्यानिवृत्तिरित्यर्थः । न केवलं व्यर्थविशेषणता । किन्त्वव्याप्तिश्चेत्याह **अन्यथेति** । प्रागभावादिरादिशब्दार्थः । कल्पान्तरमुत्थापयति **अभावेति** । अत्रानादित्वमपि विशेषणं द्रष्टव्यम् । प्रत्यनुमानपराहतिमाह **नेति** । अत्राप्यनादित्वं विशेषणं द्रष्टव्यम् । अतो न प्रध्वंसे व्यभिचारः । समानबलत्वान्न तयोः बाध्यबाधकतेति शङ्कते **कस्तर्हीति** । समानबलत्वमसिद्धमित्याह **ज्ञानेति** ।

**वि०्ठ०**— प्रकारान्तरेण प्रणाशाभावं शङ्कते **नन्विति** । व्यर्थविशेषणतया परिहरति **न स्वाश्रयेति** । तथा चात्मनो ब्रह्मस्वरूपाभिव्यक्तिरेवाविद्यानिवृत्तिरिति भावः । अव्याप्तिश्च स्यादित्याह **अन्यथेति** । परमाणु-





श्यामत्वादीनां अनादित्वेनोपादानाभावादिति भावः । प्रागभावादिः आदिशब्दार्थः । पक्षान्तरमुत्थाप्य सत्प्रतिपक्षतया दूषयति **अभाववैलक्षण्यादिति** । समानबलत्वान्नान्योन्यबाध्यबाधकभाव इति शङ्कते **कस्तर्हीति** । समानबलत्वमसिद्धमाह **ज्ञानाज्ञानेति** । तथाच ज्ञानत्वहेतुसहकृतसद्वैलक्षण्यं प्रबलं सन्निर्णायकं भविष्यतीति भावः।

**चषकः**— भङ्ग्यन्तरेणानादिप्रतियोगिकनिवृत्तिवैधुर्यमाशङ्कते **ननु स्वेति** । निवृत्तिलक्षणवाक्ये उपादानत्वांशनिवेशस्यानर्थक्यनियन्त्रितयोरितरभेदानुमाने निग्रहासिद्धयोः प्रसङ्गेन तां परिजिहीर्षति **न स्वाश्रयेति** । तथा चात्मनो ब्रह्मस्वरूपाभिव्यक्तिरेवाविद्यानिवृत्तिरिति निवृत्तिलक्षणाक्रान्तता सङ्गच्छत इति भावः । तत्रोपादानत्वांशोऽव्याप्तिमप्यभिधत्ते **अन्यथेति** । तद्गुणसंविज्ञानः प्रागभावादिघटितसमुदायोऽन्यपदार्थः । कल्पान्तरप्रत्याचिख्यासया शङ्कते **अभावेति** । घटादावनैकान्त्यापत्त्या अनादित्वांशोऽपि हेतुतावच्छेदकघटकोऽवसेयः । सत्ताजातिवृत्त्यवच्छेदकताकप्रतियोगिताकभेदवत्त्वरूपप्रतिरोधेन प्रतिहन्यत इत्याह **सदिति** । साधनप्रतिसाधनयोर्बलसाम्यान्न बाध्यबाधकभावो घटत इत्याशङ्कते **कस्तर्हीति** । बन्धपक्षकनिवर्त्यत्वसाध्यकतद्वृत्त्यसाधारणधर्मरूपाज्ञानत्वात्मकहेत्वन्तरसाचिव्यविशेषितया तत्साचिव्याप्रतिसन्धानदशायां तुल्यकक्ष्यापन्नमपि तत्समवहितिदशायामतादृशं सद्वैलक्षण्यं निश्चायकं भविष्यतीति भावः।

**गूढ०**— नन्वज्ञानस्य निरुपादानत्वेन विनाशलक्षणाभावान्न निवृत्तिरित्याशङ्कते **नन्विति** । **स्वाश्रयगतेति** । उपादानगतेत्यत्रोपादानशब्दस्य समवायिकारणपरत्वेन समवायादेः प्रवेशेन गौरवादिति भावः । **अन्यथेति** । स्वोपादानगतोत्तरावस्थाया विनाशित्व इत्यर्थः । तस्यानादित्वेन तदुपादानाभावादिति भावः । द्वितीयमाशङ्कते **अभावेति** । **कस्तर्हि निर्णय इति** । निवर्त्यत्वानिवर्त्यत्वप्रयोजकद्वयसमावेशेनोभयोरपि प्राप्तत्वान्निर्णयः क इत्यर्थः । विशेषव्याप्त्या सामान्यव्याप्तेर्बाधान्निवृत्तिरेव निर्णीयत इत्याह **ज्ञानेति** ।

**प्रदीपः**— लोके ज्ञानाज्ञानयोः निवर्त्यनिवर्तकभावदर्शनात् ब्रह्मज्ञानाज्ञानयोरपि तथात्वमित्यर्थः । प्रकारान्तरेणानादेर्नाशासंभवं शङ्कते **ननु चेति** । घटादेर्नाशो नाम स्वकारणसमवायिनी कपालावस्था । अज्ञानस्य चाकार्यत्वान्न तत्कारणसमवायिनी उत्तरावस्थेत्यविनाश इत्यर्थः । व्यर्थविशेषणपरतया परिहरति **न स्वाश्रय इति** । स्वाश्रयगतोत्तरावस्थाया नाशत्वसंभवे समवायिकारणेति विशेषणं व्यर्थं तथा चात्मनः ब्रह्मस्वरूपाभिव्यक्तिरविद्यानिवृत्तिरिति किमत्रापाद्यमित्यर्थः । न केवलं व्यर्थविशेषणता किन्तु अव्याप्तिश्चेत्याह **अन्यथेति** । प्रागभावादिरादिशब्दार्थः । कल्पान्तरमुत्थापयति **अभावेति** । अत्रानादित्वविशेषणं द्रष्टव्यम् । प्रत्यनुमानपराहतिमाह **नेति**। समानबलत्वान्नानयोर्बाध्यबाधकतेति शङ्कते **कस्तर्हीति** । समानबलत्वमसिद्धमित्याह **ज्ञानाज्ञानेति**।





**विवरणकारोक्तपक्षनिरासः—**

**१८३ सु०— तदयुक्तम् । तथाहि ।**

**यत्तावत् 'न सादित्वमनादित्वं वे'त्यादि । तत्र किं निवर्तकाभाव उपाधिरनेनोच्यते किंवा निवर्तकसद्भावेन सत्प्रतिपक्षता । नाद्यः । साधनव्यापकत्वात् । न द्वितीयः । असिद्धेः । न हि अज्ञानस्यानादितया निवृत्त्यनुपपत्तिं ब्रुवाणस्तन्निवर्तकमभ्युपैति । किन्त्वनादित्वेन तदभावमप्यनुमिनोति ।**

**परि०—** निवृत्तौ विरोधिसन्निपातः प्रयोजक इत्यादि क्रमेण निरस्यति **यत्तावदित्यादिना** । **उपाधिरिति** । अज्ञानं न निवर्ततेऽनादित्वादात्मवदित्यनुमाने निवर्तकाभाव उपाधिः । निवर्तकवत्त्वादज्ञानं निवर्तत इति प्रतिपक्षोऽभिप्रेयत इत्यर्थः । साधनव्यापकत्वमसिद्धिं च व्यनक्ति **न हीति** ।

**आनन्दः—** तदेतदनूदितं दूषयति **तदयुक्तमिति** । न प्रतिज्ञामात्रेणार्थसिद्धिरित्यत उपपादयति **तथा हीति** । **निवर्तकाभाव इति** । विरोध्यसन्निपात इत्यर्थः । **साधनव्यापकत्वादिति** । निवृत्त्यभाववादिना निवर्तकाभावरूपोऽप्युभयोरपि पक्षे स्वीकृत्योपाधेः साधनव्यापकत्वादित्यर्थः । ननु निवृत्त्यभाववादिना निवर्तकाभावस्याङ्गीकारेऽपि निवृत्तिवादिना निवर्तकस्याप्यङ्गीकृतत्वेन साधनव्यापकत्वसन्देहादनुमानं दुष्टमेव । न च तेनैव हेतुना निवर्तकाभावरूपोपाधेरपि पक्षे साधनात् साधनव्यापकत्वनिश्चयः स्यादिति वाच्यम् । तथा सति निवृत्त्यभावस्यैव तत्रोपाधितापत्तेः । तथा चान्योन्योपाधिभ्यामनुमानं दुष्टमेव । न च निवृत्त्यभाव-विशिष्टनिवर्तकाभावसाधनात्साधनव्यापकत्वनिश्चय इति वाच्यम् । एवमपि केवलस्य तत्रोपाधितापत्तेरिति । मैवम् । केवलस्य विशिष्टादन्यत्वेन व्याप्यव्यापकभावासंभवेन केवलस्योपाधित्वासंभवात् । विशिष्टस्य पदार्थान्तरत्वेऽपि निवृत्त्यभावमात्रस्य वा निवर्तकाभावमात्रस्य वा उपाधेः किं स्वव्यतिरेकेण सत्प्रतिपक्षो-त्थापकतया वा दूषणत्वं व्यभिचारोन्नायकतया वा । नाद्यः । असिद्धेः । न द्वितीयः । साध्यवदुपाधेरपि हेतु-व्यापकत्वेन उपाधिव्यभिचारेण साध्यव्यभिचारानुमानासंभवादिति ।

**कं०रा०— साधनेति** । यत्र यत्रानादित्वरूपं साधनं तत्र तत्र निवर्तकाभावस्य सत्त्वेन साधनव्यापक-त्वादित्यर्थः । यद्यपि प्रागभावेऽनादित्वस्य सत्त्वेऽपि निवर्तकाभावस्यासत्त्वान्न साधनव्यापकत्वम् । तथाऽपि वक्ष्यमाणरीत्याऽनादित्वरूपसाधनस्य भावत्वविशेषितत्वेनाविशेषितस्य च तस्य प्रागभावेऽसत्त्वादुपाधि-मत्यात्मादावेव सत्त्वात्साधनव्यापकत्वमेवेति ध्येयम् ।





**वा०चं०**— विनाशे निवर्तकसद्भावः प्रयोजक इति विवक्षायां प्रतिपक्षे तात्पर्यं लभ्यत इत्यभिप्रेत्य विकल्पयति **तत्र किमिति** । समानत्वाद्दूषणद्वयं युगपदुपपादयति **न हीति** । ननु माऽस्तु निवर्तकाभ्युपगमः परस्य साधकाभावेन निवर्तकाभावस्यानिश्चितत्वात् साधनव्यापकतासन्देहेन सन्दिग्धोपाधिः स्यादेवेत्यत आह **किन्त्विति** । ननु सिद्धान्त इव मायिनाऽपि विश्वमायानिवृत्तिरिति प्रमाणानुसारेण प्रमितनिवर्तकानभ्युपगमस्यानुचितत्वादिति निवर्तकाभावानुमानस्य च बाधितत्वादित्युपाधिप्रतिपक्षसमाधानं कर्तुं शक्यत एवेति कथं परं प्रत्येवं पर्यनुयोग इति चेन्न । अनादेः कथं निवृत्तिरित्याक्षिप्य 'तरति शोकमात्मविदि'ति शास्त्रप्रामाण्यादनादेरपि निवृत्तिरिति समाधानमाशङ्क्यानादिदेहात्माध्यासस्य तत्त्वज्ञानेऽपि अनिवृत्तेः प्रत्यक्षविरोधेन शास्त्रस्यैवाप्रामाण्यमिति शास्त्रमवधीर्यास्या युक्तेरेव तदाक्षेपसमाधानत्वेन परेण उपन्यस्तत्वान्नोपाधिप्रतिपक्षसमाधानं शास्त्रप्रामाण्यानुसारेण परेण कर्तुं शक्यम् । अस्माकं त्वलौकिकेऽर्थे शास्त्रविरोधेन प्रत्यक्षस्याभासत्वाद्युक्तं प्रमाणानुसारेण तथा समाधानमित्याशयात् ।

**वा०र०**— **समानत्वादिति** । निवर्तकस्य पक्षे सत्त्वात्कथमसिद्धिरिति शङ्काया अपि साधनव्यापकत्वोपपादनेनैव निरासादिति भावः । किं त्विति मूलं सङ्गमयति **नन्विति** । **परस्येति** । अज्ञानस्यानादितया निवृत्त्यनुपपत्तिं ब्रुवाणस्येत्यर्थः । परस्येत्यतःपरं तथापीति पूरणीयम् । अनिश्चितत्वादित्यत्र विभक्तिव्यत्ययेन परेणेत्यनुवर्तते । **सन्दिग्धेति** । तं प्रत्येव सन्दिग्धेति योज्यम् । **अनुमिनोतीति** मूलम् । विमतं निवर्तकरहितं भावत्वे सत्यनादित्वादात्मवदिति निवर्तकाभावमप्यनुमिनोतीत्यर्थः । न केवलं निवर्तकं नाभ्युपैतीत्येवेत्यपिपदार्थः । अनादेः कथं निवृत्तिरित्येतच्छङ्कापरिहाराय प्रवृत्तात्रोच्यत इति वक्ष्यमाणस्वपक्षे पराभिप्रेतानादित्वेन निवृत्त्यभावानुमाने उद्भाविताप्रयोजकत्वनिर्वाहाय आत्मनोऽपि निवृत्तिः स्यादिति बाधकात्कथमप्रयोजकत्वमिति शङ्कायाः निवर्तकभावाभावाभ्यां विशेषेणाविशेषरूपव्याप्त्यभावेन निराकरणानन्तरमज्ञानेऽपि निवर्तकं नाभ्युपगम्यते अनादित्वेनैव निवर्तकाभावो वाऽनुमीयत इत्यविशेषसिद्धिरित्याशङ्कायाः प्रमितनिवर्तकानभ्युपगमस्यानुचितत्वादिति । अनादित्वेन निवर्तकाभावानुमानस्य च बाधितत्वादिति च यथा परिहारः क्रियते तथा मायिभिरपि न सादित्वमनादित्वं वेत्यादिनोक्तनिवर्तकाभावलक्षणोपाधेस्तत्सद्भावरूपप्रतिपक्षस्य च निवर्तकानभ्युपगमतदभावसाधनेन परकीयं यन्निराकरणं तस्यापि परिहारः कर्तुं शक्यते । तैरपि सिद्धान्तिभिरिव विश्वमायेत्यादिप्रमाणाभ्युपगमात् । तत्कथमुक्तोपाधिप्रतिपक्षाभ्यां परोक्तानादित्वानुमानं खण्डयन् मायिनां न हि निवर्तकमभ्युपैतीत्यादिः पर्यनुयोगः इत्याशङ्कते **ननु सिद्धान्त इवेति** । **इति प्रमाणेति** । इति यत्प्रमाणमिति योज्यम् । उत्तरेति शब्दनिर्दिष्टं यथाक्रममुपाधिप्रतिपक्षनिराकरणम् । द्वितीयेति शब्दानन्तरं चशब्दः पूरणीयः । परं प्रत्येवमिति पाठः । एवं न ह्यज्ञानस्येत्यादिना कृत इत्यर्थः । प्रत्येवेति पाठे वा अन्यथासिद्धान्तेऽप्युक्तपर्यनुयोगः स्यादिति भावः । विश्वमायेत्यादि शास्त्रप्रामाण्यमङ्गीकृत्य तद्विरोधेन प्रत्यक्षस्याप्रामाण्यं चाभ्युपगच्छता सिद्धान्तिना तच्छास्त्रबलेन अप्रयोजकत्वनिर्वाहाय प्रमितेत्यादेः सिद्धान्ते वक्तुं शक्यत्वेऽपि मायिना शास्त्रप्रामाण्यमनादृत्य परोक्तनिरासाय युक्तेरेव पुरस्कारान्न तत्पक्षे सिद्धान्त इव शास्त्रबलेन परिहारोपपत्तिरिति वैषम्यं प्रतिपादयितुं कुतः शास्त्रं





मायिभिरनादृतमिति विज्ञायत इत्याशङ्कापरिहाराय परोक्ताक्षेपमायिकृततद्दूषणप्रकारं क्रमं च दर्शयति **न अनादेः कथमित्यादिना** । **शास्त्रमवधीर्येति** । अनादृत्येत्यर्थः । धृङ् अनादर इत्यस्मादवधीर्योपन्यस्तत्वादित्यव-धारणोपन्यसनरूपधात्वर्थयोः समानकर्तृकत्वेन समानकर्तृकयोः पूर्वकाल इति सूत्रेण पूर्वकाले विद्यमानादव-पूर्वकात् धृधातोः क्त्वाप्रत्यये कुगतिप्रादय इत्यनेन प्रकृत्येति ल्यबन्त इव गतिसंज्ञा । अवेत्यस्य धृत्वेति क्त्वान्तेन नित्यं समासे सति समासेऽनञ्पूर्वे क्त्वो ल्यबिति ल्यबादेशे ॠत इद्धातोरित्यनेनेत्वे रपरत्वे हलि चेति दीर्घत्वे तीर्यात् जीर्यतीतिवदवधीर्येति ल्यबन्तरूपसिद्धिरिति ज्ञेयम् । इदं च युक्तिपादे मूलस्थावधीर्येति प्रयोगमुप-पादयता टीकाकृता वक्ष्यते । **अस्या एवेति** । न सादित्वमनादित्वं वेत्यादि-नोक्तोपाधिप्रतिपक्षरूपाया इत्यर्थः । **उपाधिप्रतिपक्षसमाधानमिति** । साधनव्यापकत्वसिद्धिभ्यामुपाधिपक्षखण्डने कृते शास्त्रानुसारेण निवर्तक-सद्भावमाश्रित्य तदुभयसमाधानं तत्समर्थनमिति योज्यम् । यथा मायिना प्रत्यक्षविरोधेन तरति शोकमात्म-विदिति शास्त्रस्याप्रामाण्यप्राप्तेः शास्त्रावधीरणं कृतमेवं सिद्धान्तेऽपि शास्त्रप्रतिपाद्येऽर्थे प्रत्यक्षविरोधस्य यत्र सत्त्वं तत्रार्थे शास्त्रप्रामाण्यानङ्गीकारात् शास्त्रावधीरणं समानमेवेति माय्युक्तयुक्तेरेवादरणं कर्तव्यमित्यत आह **अस्माकं त्विति** । यद्यपि लौकिकार्थे प्रत्यक्षमागमात् बलवत्तथाप्यलौकिकार्थे आगमस्यैव प्रत्यक्षापेक्षया बलवत्त्वादाग-मेनैव प्रत्यक्षबाधप्राप्तेर्न शास्त्रानादरणं सिद्धान्ते प्राप्तमिति साम्याभावात्प्रमाणानुसारेणोपाधिप्रतिपक्षयोः समर्थनं युक्तमित्यर्थः ।

**स०व्र०**— तन्मतं दूषयति **तदयुक्तमिति** । नन्वनादित्वनिवर्तकराहित्ययोरात्मनि विद्यमानयोरपि, निवर्तकसद्भावेन पक्षे व्याप्त्यभावात् साधनवतः पक्षाद्व्यावर्तमानस्य निवर्तकाभावस्य न साधनाव्यापकत्वम् । नापि निवर्तकसद्भावस्यासिद्धिरित्याशङ्क्याह **न हीति** । न केवलं निवर्तकानङ्गीकारमात्रम् । अपि तु विमतं निवर्तकरहितं भावत्वे सत्यनादित्वादात्मवदिति निवर्तकाभावोऽप्यनुमीयत इत्याह **किन्त्विति** । न चैवं हिंसात्वे निषिद्धत्वमपि अनुपाधिः स्यात् । हिंसात्वेन निषिद्धत्वस्य साधयितुं शक्यत्वादिति वाच्यम् । तत्रानिषिद्धत्वसाधकश्रुतिबाध-सद्भावात् । एवमेव तरति शोकमात्मविदित्यादिश्रुतिविरोधस्तु नास्ति । अनादिभावरूपस्य त्वयापि निवृत्त्यनङ्गी-कारात् । अनिर्वाच्यत्वस्य निराकरिष्यमाणत्वेनाज्ञानस्य भावत्वावश्यंभावेनानिवर्त्यत्वापातेन श्रुतेरेवान्यथात्व-प्रसङ्गादिति भावः ।

**गूढ०**— तदेतदनूदितं दूषयति **तदयुक्तमिति** । न प्रतिज्ञामात्रेणार्थसिद्धिरित्यत उपपादयति **तथा हीति** । **निवर्तकाभाव इति** । विरोध्यसन्निपात इत्यर्थः । **साधनव्यापकत्वादिति** । निवृत्त्यभाववादिना निवर्तका-भावरूपोऽप्युभयोरपि पक्षे स्वीकृत्योपाधेः साधनव्यापकत्वादित्यर्थः । ननु निवृत्त्यभाववादिना निवर्तकाभावस्य अङ्गीकारेऽपि निवृत्तिवादिना निवर्तकस्याप्यङ्गीकृतत्वेन साधनव्यापकत्वसन्देहादनुमानं दुष्टमेव । न च तेनैव हेतुना निवर्तकाभावरूपोपाधेरपि पक्षे साधनात् साधनव्यापकत्वनिश्चयः स्यादिति वाच्यम् । तथा सति निवृत्त्यभावस्यैव तत्रोपाधितापत्तेः । तथा चान्योन्योपाधिभ्यामनुमानं दुष्टमेव । न च निवृत्त्यभावविशिष्टनिवर्तकाभावसाधनात्





साधनव्यापकत्वनिश्चय इति वाच्यम्। एवमपि केवलस्य तत्रोपाधितापत्तेरिति। मैवम्। केवलस्य विशिष्टादन्यत्वेन व्याप्यव्यापकभावासंभवेन केवलस्योपाधित्वासंभवात्। विशिष्टस्य पदार्थान्तरत्वेऽपि निवृत्त्यभावमात्रस्य वा निवर्तकाभावमात्रस्य वा उपाधेः किं स्वव्यतिरेकेण सत्प्रतिपक्षोन्नायकतया वा दूषणत्वं व्यभिचारोन्नायकतया वा। नाद्यः। असिद्धेः। न द्वितीयः। साध्यवदुपाधेरपि हेतुव्यापकत्वेनोपाधिव्यभिचारेण साध्यव्यभिचारानुमानासंभवादिति।

**प्रदीपः**— तन्मतं दूषयति **तदयुक्तमिति**। नन्वनादित्वनिवर्तकराहित्ययोरात्मनि विद्यमानयोरपि निवर्तकसद्भावेन पक्षे व्याप्त्यभावात् साधनवतः पक्षाद्व्यावर्तमानस्य निवर्तकाभावस्य साधनव्यापकत्वम्। नापि निवर्तकसद्भावस्यासिद्धिरित्याशङ्क्याह **न हीति**। न केवलं निवर्तकानङ्गीकारमात्रमपि तु विमतं निवर्तकरहितं भावत्वे सत्यनादित्वादात्मवदिति निवर्तकाभावोऽप्यनुमीयत इत्याह **किन्त्विति**। तरति शोकमात्मविदित्यादिश्रुतिविरोधस्तु नास्ति अनादेर्भावरूपस्य त्वया निवृत्त्यङ्गीकारात् अनिर्वाच्यत्वस्य निराकरिष्यमाणत्वादज्ञानस्य भावत्वावश्यंभावादनिवर्त्यत्वापत्तौ श्रुतेरेवान्यथात्वं स्यादिति।

**१८४ सु०— यदपि प्रागभावे व्यभिचारोद्भावनं तदपि भावत्वेन हेतुविशेषणादयुक्तम्।**

**यदपि सुगतानामित्यादि तदत्यन्तमसङ्गतम्। न हि वासनानामनादित्वं वैनाशिका अभ्युपयन्ति। न च तद्व्यतिरिक्तं सन्तानम्। येन तत्र व्यभिचार उद्भाव्येत। न च नैयायिकादयो मिथ्याज्ञानस्यानादितां तद्व्यतिरिक्तं वा प्रवाहमङ्गीकुर्वते। परमाणुश्यामताऽपि सादिरेव। न हि परमाणुपाकस्येदंप्रथमता तत्सिद्धान्तः।**

**बिन्दुः— परमाणुश्यामतापि सादिरेवेति**। यद्यपि पञ्चाध्यायीरूपमूलशास्त्रे चतुर्थेऽध्याये गौतमसूत्रमणुश्यामतानादित्वप्रतिपादकमस्ति। अणुश्यामतावद्वाऽनादित्वादिति। तथापि स निष्कृष्टपक्षो न भवति। तर्कप्रधाना हि तार्किकाः। न हि तेषां मते अस्मन्मत इव श्रुतिस्मृतिसिद्धपदार्थतत्त्वपुरस्कारेण व्यवस्था किन्तु तर्केण यावच्छुद्धं भवति तावदेव तत्त्वमिति तेषामभिमानः। अत एव उत्तरोत्तरनवीनैः प्राचीनग्रन्थखण्डनं भूषणत्वेनाद्रियत इत्याशयेनाह **न हीति**। परमाणुश्यामतेति सादिरिति च वर्तते। इतीत्युपस्कर्तव्यम्। नेत्यावर्तनीयम्। हिशब्दो हेतौ। परमाणुश्यामता न सादिरिति तस्य तार्किकस्य सिद्धः स्थितः अन्तः निर्णयः पक्ष इति यावत्। इति तु न हि अयं पक्षो न निर्व्यूढः स्थितः किन्तु युक्त्यसहत्वेन नवीनैरुन्मूलित इत्यर्थः। ननु कासौ युक्तिर्यद्विरोधान्नानादितेष्यत इति तत्राह **परमाणुपाकस्येदंप्रथमतेति**। न हीत्यावृत्त्यापि संबध्यते। संभवतीति च वाक्यशेषः। यदि हि परमाणुपाकस्येदंप्रथमता





स्यात्तर्हि आद्यपाकप्राक्कालीनरूपस्य स्यादनादिता न हि सा संभवति । अनादौ काले इदंप्रथमतायां प्रमाणाभावादिति भावः ।

**परि०**— किञ्च लोक इत्यनेन उक्तदोषं निराह **यदपीति** । नन्वन्यत्राप्युक्तो व्यभिचार इत्यत आह **यदपि सुगतानामित्यादीति** ।

**यादु०**— **इदंप्रथमतेति** । अग्निसंयोगस्य ततःपूर्वमपि संभवात् एवं ततःपूर्वमपीति नानादित्वम् ।

**आनन्दः**— ननु भावत्वे सत्यनादित्वस्यापि सौगतनैयायिकमतेन व्यभिचार इत्युक्तमित्यत आह **यदपीति** । तथापि वासनासन्ताने व्यभिचारः तस्यानादित्वादित्यतः सन्तान्यतिरिक्तस्य सन्तानस्याभावान्न तत्र व्यभिचार इत्यत आह **न चेति** । न वैनाशिका इति हेतुगर्भं विशेषणं सर्वक्षणिकत्ववादित्वादित्यर्थः । ज्ञानानां क्षणिकत्वेन मिथ्याज्ञानानामनादित्वाभावेन तत्प्रवाहस्यापि तन्नेत्याह **न चेति** । **परमाण्विति** । पार्थिवगतरूपादीनां पाकजत्वाङ्गीकारादग्निसंयोगानां पूर्वमपि सत्त्वादेवं ततः पूर्वतः पूर्वमिति नानादित्वमिति भावः । **इदंप्रथमता** अनादित आरभ्यैवंरूपता । कुतः सादित्वमत्राह **न हीति** ।

**कं०रा०**— **सन्तानम्** अभ्युपयन्तीति संबन्धः । तथा च वासनारूपसन्तानव्यतिरिक्तसन्तान्यभावान्न तत्र व्यभिचारोद्भावनावकाश इति भावः । **परमाण्विति** । परमाणुपाकस्यायं पाकः प्रथम इतीदंप्राथम्यं न हि नैयायिकसिद्धान्तः किन्तु तेजःसंयोगरूपः पाकः प्रवाहतः सदा जायत इत्येव । अतः पाकजत्वेन परमाणुश्यामताऽपि सादिरेवेति भावः ।

**श्रीनिधि०**— सन्तानं किं यावत्सन्तानिन एव उत तदतिरिक्तमिति विकल्पौ हृदि निधाय क्रमेण दूषयति **न हि वासनानामिति** । वैनाशिका विनाशं ब्रुवाणाः बौद्धा इत्यर्थः । इदं च हेतुगर्भं विशेषणम् । मिथ्याज्ञानप्रवाहे यद्व्यभिचारोद्भावनं तदपि पूर्ववदेव विकल्पमुखेन दूषयति **न चेति** । तत्सिद्धान्त इति तथा च परमाणुषु पाकप्रवाहस्यानादित्वे परमाणुश्यामताया अनादित्वाभाव इति भावः । **परस्येति** । अनिर्वचनीयत्वस्याप्यसिद्धत्वेन कुत्राप्यवर्णनादिति भावः ।

**वा०चं०**— **यदपि प्रागभाव** इत्यत्र प्रागभावशब्देन लौकिकः प्रागभावः साङ्ख्याभिमतोऽविवेकशब्दोक्तो विवेकप्रागभावो मीमांसकाभिमतो धर्मतत्त्वज्ञानप्रागभावश्च गृह्यते । सुगतानामित्यादीत्यादिपदेन तु नैयायिकादीनामित्युक्तानामेव ग्रहणम् । न हीत्यादिना तेषामेव मतेनानुपपत्तेर्वक्ष्यमाणत्वादिति द्रष्टव्यम् । वासनासन्तानानां निवृत्तिं वदन्प्रष्टव्यः । हेतुहेतुमद्भावेन अवस्थिता उदयव्ययधर्माणः सन्तानिन एव सन्तान इत्येतन्मतेनेदं व्यभिचारोपपादनमुत तदतिरिक्तः कश्चित्सन्तान इति मतेन । नाद्य इत्याह **न हीति** । तैः पूर्वपूर्वसंस्कार-





क्षणैरुत्तरोत्तरसंस्काराधानाङ्गीकारेण वासनानामनादित्वस्यानभ्युपगमात् । अन्यथा क्षणिकत्वानुपपत्त्या सत्त्वस्य व्यभिचारापत्तेः । सत्त्वाभावे चापसिद्धान्तात् तदिदमुक्तं वैनाशिका इति । अत एव च क्षणिकत्वाभावे सत्त्वानुपपत्त्याऽतिरिक्तसन्तानमङ्गीकृत्यापि क्षणिकत्वेऽवश्यमङ्गीकर्तव्ये नातिरिक्तत्वाङ्गीकारस्य प्रयोजनविशेष इत्यभिप्रेत्य तैरतिरिक्तत्वं नाङ्गीकृतमित्याह **न चेति** । अभ्युपयन्तीत्यनुषङ्गः । न च वासनानां तन्मते सादित्वे चतुर्थाध्याये तन्मतोपन्यासावसरे अनादित्वोक्तिर्व्याहन्येतेति वाच्यम् । वासनानां स्वरूपेणोत्पन्नानामपीदं-प्रथमताऽभावाभिप्रायेणानादित्वोक्तेरुपपत्तेरित्याशयः । अतिरिक्तं सन्तानमिति द्वितीयपक्षेऽपि तैः सन्तानस्य सत्त्वक्षणिकत्वयोरनङ्गीकारेणानादित्ववन्नित्यत्वस्यापि सत्त्वान्न तन्मतेनेदं व्यभिचारोपपादनमुपपद्यते । न च सन्तानिनां सत्त्वे सन्तानस्यासत्त्वानुपपत्त्या सत्त्वे च क्षणिकत्वावश्यंभाव इत्युपपाद्य तेनापि निवृत्तिरङ्गीकार्ये-त्याशयः । तर्हि तयैव युक्त्या सादित्वस्याप्यङ्गीकर्तव्यतापत्तौ हेत्वभावेन व्यभिचारानापत्तेः । अत एव तन्मतोपन्यासावसरे नित्यं सन्तानमेतेषामिति तन्मतमाविष्कृतम् । एतदप्याह **न चेति** । अत्र च योग्यता निवर्तत इतीत्यध्याहृत्याभ्युपयन्तीत्यप्यनुषञ्जनीयम् । वस्तुतस्तु हेतुहेतुमद्भावापन्नसन्तानरूपस्य सन्तानिनां हेतुहेतुमद्भावरूपस्य वा सन्तानस्येदंप्रथमताशून्यत्वेन तेन तत्र तत्रानादिनित्यत्वोक्तावपि वस्तुतः सन्तान-स्यातिरिक्तस्य तन्मतेऽप्यभावात्सन्तानिनां च स्वरूपेणानादिनित्यत्वाभावाद्यथाश्रुत एवायं ग्रन्थः साधुरिति द्रष्टव्यम् । **न चेति** । न चैवं तदीयसंसारानादित्वोक्तेः का गतिरिति वाच्यम् । कार्यकारणभावादिरूपस्य तस्येदंप्रथमताऽभावमात्रेण तदुक्त्युपपत्तेः । इदं च 'त इमे दुःखादयो मिथ्याज्ञानान्ता अविच्छेदेन वर्तमानाः संसारः । कः पुनरयं संसारो दुःखादीनां कार्यकारणभावः । स चानादिः पूर्वापरकालानियमात् इति न्यायवार्तिके दुःखजन्मप्रवृत्तिदोषाः विषयत्वेन तावन्मिथ्याज्ञानकारणम् । एवमसति जन्मनि मिथ्याज्ञानानुत्पत्तेरविषयोऽपि जन्म मिथ्याज्ञानस्य कारणम् । एवं विना प्रवृत्त्या जन्माभावाज्जन्मद्वारेण प्रवृत्तेरपि मिथ्याज्ञानकारणत्वं प्रवृत्तिद्वारेण च दोषाणां तथा 'मिथ्याज्ञानाद्दोषाः, दोषेभ्यः प्रवृत्तिः, प्रवृत्तेः जन्म जन्मनो दुःखम्' इत्यादिवार्तिकटीकायां च स्पष्टमिति द्रष्टव्यम् ।

**वा०र०— यदपि प्रागभाव** इति मूले प्रागभावपदेन लोके तावदनादिः प्रागभाव इत्युक्तस्यैव ग्रहणं न तु सांख्यरीत्योद्भाविताऽविवेकपदोक्तविवेकप्रागभावस्य मीमांसकाद्यभिमतेदानींतनधर्मतत्त्वज्ञानप्रागभावस्यापीति प्रतीतिं यदपि सुगतानामित्यादीत्यादिपदेन नैयायिकानामित्युक्तानामिवासांख्यानां मीमांसकादीनामित्युक्तानामपि पूर्वनिर्देशक्रमेण ग्रहणमिति प्रतीतिं च निराकर्तुं वाक्यद्वयेऽपि सङ्गृह्य विवक्षामाह **यदपि प्रागभाव इत्यत्रेत्यादिना** । **गृह्यत इति** । प्रागभाव इति सामान्योक्त्या त्रयाणामपि ग्रहणसंभवादुत्तरत्र तदुभयत्र व्यभिचारपरिहारस्य पृथगकरणाच्चेति भावः । उक्तानामेव ग्रहणमित्यत्र हेतुमाह **न हीत्यादिनेति** । **तेषामेव मतेनेति** । सुगतानां नैय्यायिकादीनामित्येतदुभयेषामेव मतेनेत्यर्थः । ततश्चादिपदं नैयायिकादिमात्रपरमिति विज्ञायत इति भावः । **वैनाशिका इतीति** । हेतुगर्भमेतदिति भावः । अन्ये त्वित्यादिनेत्यतःपरं सुगतानामित्युक्तानां मतेनानुपपत्तिं प्रदर्श्येति शेषः । एवं च तेषामेवेत्यनेन नैयायिकादीनामेव ग्रहणमिति योज्यमित्याहुः । **हेतुहेतुमद्भावेनेति** । एतच्च समयपादे





समुदाय उभयहेतुकेऽपीत्यधिकरणे व्यक्तम् । उक्तं च मूले । पूर्वोत्तरक्षणवर्तिनामात्मनां पर्वतादीनां च कार्य-कारणभावादुपपन्नोऽनुमानादिव्यवहार इति । **उदयव्ययधर्माणः** । उत्पत्तिविनाशवन्तः । **तैः** पूर्वपूर्वेति । उक्तं च मूले । कारणक्षणाः कार्यक्षणेषु संस्कारानर्पयन्ति । अतः पूर्वपूर्वात्मसंस्कारेत्यादि । न च तदतिरिक्तं सन्तानमित्यत्रापि वैनाशिका इत्युक्त एव हेतुरित्याशयेन तद्धेतुमेवोत्तरप्रतिज्ञायामपि व्यापारयन् उत्तरवाक्यमवतारयति **अत एव क्षणिकत्वाभाव इति** । अन्यथा सत्त्वस्य सन्ताने व्यभिचारापातादिति भावः । सत्त्वस्यैवानङ्गीकारेऽपसिद्धान्तापत्त्या चेत्यपि ज्ञेयम् । अतिरिक्तं सन्तानमङ्गीकृत्यापि सन्तानस्य क्षणिकत्वाभावे सत्त्वानुपपत्त्या क्षणिकत्वेऽवश्यमङ्गीकर्तव्ये इति योज्यम् । तैरिति सन्तानिभ्यः सन्तानस्येति पूरणीयम् । अङ्गीकृतमिति स्वावतारं मूलारूढं कर्तुमाह **अभ्युपयन्तीत्यनुषङ्ग इति** । **चतुर्थाध्याय इति** । तत्रापि द्वितीयपादे वैभाषिकसौत्रान्तिकाभिमत-मोक्षस्वरूपनिरूपणपरज्ञानं स्वरसभङ्ग एवेत्येतदनुव्याख्यानविवरणरूपाणामर्थज्ञानमेवात्मा तच्च ज्ञानस्वभावेनैव भङ्गुरम् अत एव क्षणिकम् । तत्सन्तानस्तु नित्यः तस्यानादिवासनावशाद्यो विषयोपरक्तस्योत्पादः स संसार इति मूलेऽनादित्वोक्तिरित्यर्थः । **उपपत्तेरिति** । चतुर्थाध्याय इत्यनुवर्तते । ततश्चैतस्याभिप्रायान्तरसत्त्वान्न तद्विरोधो-ऽत्रत्यसादित्वोक्तेरित्याशयः । न च तदतिरिक्तं सन्तानमित्येतद्वाक्यं वस्तुगत्या तैरतिरिक्तत्वं नाङ्गीकृतम् । अङ्गीकरणे प्रयोजनाभावादित्येवं वस्तुस्थितिकथनपरतया योजितम् । इदानीं प्राग्विकल्पितद्वितीपक्षनिरासपरतया तद्योजयितुं तन्निरासप्रकारं स्वयं दर्शयन् तत्प्रकारस्य तन्मूलारूढत्वं चोपपादयति **अतिरिक्तं सन्तानमिति** । **द्वितीयपक्षेऽपीत्यादिना** । **इदं व्यभिचारोपपादनमिति** । उपेत्यस्य प्रतीत्यर्थः । सुगतानां तत्त्वपरिभावनेत्यादिना कृतमित्यर्थः । व्यभिचारप्रतिपादनकर्तुराशयमाशङ्क्य निराकरोति **न चेति** । तन्मते न व्यभिचारोद्भावनं कुर्वतो हि तेनापि निवृत्तिरङ्गीकार्येत्याशयसत्त्वात्तदङ्गीकारे सिद्धे व्यभिचारप्रतिपादनं सुलभमेव । न च कथं तदङ्गीकार-प्राप्तिरिति वाच्यम् । सन्तानिनां सत्त्व इत्यादियुक्त्यैव तत्सिद्धेरित्यर्थः । अत्रोपपाद्येत्यस्योपपादने कृते सतीति पूर्वकालत्वमात्रे तात्पर्यान्न त्त्वादेशो ल्यबनुपपत्तिरिति ज्ञेयम् । **तथैवेति** । सत्त्वरूपयुक्त्यैवेत्यर्थः । सत्त्वक्षणिकत्वयोर्व्याप्तिसिद्धावनादेर्नाशासंभवेन क्षणिकत्वायोगापत्तेः सत्त्वेन सादित्वमपि सेत्स्यतीत्याशयः । **तन्मतोपन्यासावसर इति** । समुदाय उभयहेतुकेऽपीति समयपादीयाधिकरणानुव्याख्यान इति शेषः । क्षणिकत्वे प्रत्यभिज्ञाविरोध इत्याशङ्कापरिहारकतया सन्तानविषयत्वं प्रत्यभिज्ञाया वक्तुं नित्यं सन्तानमेतेषामिति परमाणुसन्तानस्य नित्यत्वप्रतिपादनादिति भावः । न च तद्व्याख्यानमूले सत्त्वस्य तत्र व्यभिचारमाशङ्क्य तस्य सत्त्वाभावादित्युक्तेः कथं सत्त्वेन सादित्वसाधनादिकमिति वाच्यम् । अतिरिक्तं सन्तानं तच्च नित्यमिति तत्र व्यभिचारप्रतिपादनं न युक्तमिति प्रथमोक्तार्थ एवास्य संमतित्वेन अभिधानेन अव्यवहितोक्ते अस्यानुपन्यासादिति ज्ञेयम् । पूर्वयोजनायामिवात्राप्यभ्युपयन्तीत्येतावन्मात्रानुषङ्गेनापूर्तेरधिकं च पूरणीयमाह **अत्र चेति** । अधिकपूरणे प्रकृतत्वं ज्ञापकं नास्तीत्यत उक्तं **योग्यतयेत्यादि** । वस्तुतस्तु हेतुहेतुमद्भावेनेत्यादि साधुरिति द्रष्टव्यमित्यन्तो ग्रन्थः सावधानतया स्पष्टनीयोऽस्ति । न्यायवार्तिकादिग्रन्थोऽपि स्पष्टनीयः ।





## १८८ सु०— एतेन ज्ञानाज्ञानकृतो विशेषान्वय इति निरस्तम् ।

**परि०**— प्रागुक्तमन्यदपि निराह **एतेन ज्ञानेति** ।

**यादु०**— **एतेनेति** । किं सङ्कोचनं बाध्यत्वमुत व्यभिचारादिप्रदर्शनमित्यादिविकल्पदूषणेन इत्यर्थः ।

**वं०प०**— कस्तर्हि निर्णय इत्याशङ्क्य ज्ञानाज्ञानकृतो विशेषान्वय इत्युक्तमित्येतदप्यनेनैव निराकृतमित्याह **एतेनेति** । किं सङ्कोचनं बाध्यत्वमित्याद्युक्तप्रकारेणेत्यर्थः ।

**आनन्दः**— **एतेनेति** । सामान्यविशेषभावस्याप्रयोजकत्वाद्विशेषव्याप्त्या सामान्यव्याप्तेर्बाधाभाव-कथनेनेत्यर्थः ।

**कं०रा०**— **एतेन** सामान्यविशेषभावस्याकिञ्चित्करत्वप्रतिपादनेन ।

**श्रीनिधि०**— **एतेनेति** । दृष्टान्तनिराकरणेनेत्यर्थः । तस्याप्युपयोगचिन्तने अनवकाशपराहतत्वेनेति वार्थः।

**वा०चं०**— यच्चाभाववैलक्षण्यादात्मवदनिवृत्तिरिति प्राप्ते तर्हि भाववैलक्षण्यात्प्रागभाववन्निवृत्तिः किं न स्यादित्यभिधाय समानबलत्वादनयोः कस्तर्हि निर्णय इत्याशङ्क्याज्ञानं ज्ञानेन निवर्तत इत्यस्याः विशेषव्याप्तित्वात्तयैव वा तत्सहकारेण भावविलक्षणं निवर्तत इत्यस्याः प्राबल्यादनया वा पूर्वव्याप्तिबाधेन निर्णय इत्यभिप्रेत्य ज्ञानाज्ञानकृतो विशेषान्वय इत्युक्तं तद्विशेषव्याप्तेः पूर्वव्याप्ति सङ्कोचकत्वाद्यसंभवेनाकिञ्चित्करत्वप्रतिपादनेन निरस्तमित्याह **एतेनेति** । अत्रानादिभावरूपत्वादिति हेतौ भावशब्दार्थविकल्पदूषणं परोक्तं प्रकरणशुद्ध्या निराकृत्य प्रकारान्तरेणानादेर्विनाशाभावशङ्कोत्तरस्य परोक्तस्यान्ते निराकरणं भावशब्दविकल्पदूषणयोर्मध्ये प्रकारान्तरेण विनाशाभावशङ्कासमाधानरूपग्रन्थस्य निवेशनमनुचितमिति परस्याचातुरीं दर्शयितुमिति द्रष्टव्यम् ।

**स०व्र०**— ज्ञानाज्ञानेति किं सामान्यविशेषभाव एवोपन्यस्त उपाधिर्वा नोभयमपि उक्तादेव दोषादित्याह **एतेनेति** ।

**विठ्ठ०**— **एतेनेति** । किं सङ्कोचनं बाध्यत्वमित्यादिविकल्प्य दूषणेनेत्यर्थः ।

**चषकः**— **एतेन** किं सङ्कोचनं बाध्यत्वमित्यादिविकल्प्य दूषणाभिधानेनेत्यर्थः ।

**गूढ०**— **एतेनेति** । सामान्यविशिष्टभावस्याप्रयोजकत्वाद्विशेषव्याप्त्या सामान्यव्याप्तेर्बाधाभावकथनेन इत्यर्थः ।

**प्रदीपः**— ज्ञानाज्ञानेति किं सामान्यविशेषभाव एवोपन्यस्त उपाधिर्वा नोभयथाप्युक्तादेव दोषादित्याह **एतेनेति** ।





**१८९ सु०— यदपि निरुपादानस्य विनाशानुपपत्तिमाशङ्क्योक्तं स्वाश्रयगतोत्तरावस्था विनाश इति । तदनुपपन्नम् । अनुपादानभूताश्रयोत्तरावस्था चेदाश्रितविनाशः स्यात्तदा भूतलादपसारिते घटे घटविनाशः स्यात् । परमाणुश्यामताप्रतिबन्दी तु तस्या अपि सोपादानत्वेनैव निरस्तेति ।**

**बिन्दुः— स्वाश्रयोत्तरावस्थेति** । सत्कार्यवादिमते सदसत्कार्यवादिनामस्माकं मते च ध्वंसस्यापि बाल्यकौमाराद्यवस्थावत् प्रतियोगिनश्चरमावस्थाविशेषत्वात् । यास्केनापि निरुक्ते षड्भाव-विकारा इत्युपक्रम्य जायतेऽस्ति विपरिणमते वर्द्धतेऽपक्षीयते विनश्यतीत्युक्तम् ।

**वं०प०**— स्वोपादानगतोत्तरावस्था विनाशश्चेत्परमाणुश्यामतादीनामनिवृत्तिः स्यादित्युक्तप्रतिबन्दी-मपाकरोति **परमाण्विति**। परमाणुश्यामतायां परमाणोरेव परिणामिकारणत्वरूपोपादानकारणत्वाङ्गीकारादिति भावः।

**आनन्दः— घटविनाशः स्यादिति**। न च तत्रापि घटविशिष्टभूतलनाशोऽस्तीति वाच्यम्। एवं सत्यत्र विशिष्टनाशेऽपि घटनाशवत्तत्रापि आश्रयविशिष्टाज्ञाननाशेऽपि अज्ञाननाशाभावादिति।

**श्रीनिधि०— भूतलादपसारिते घट इति**। अत्र च स्वाश्रयगतोत्तरावस्था भूतलविभागावस्था ज्ञेया।

**वा०चं०**— स्वाश्रयेत्यनुक्तस्वोपादानत्वस्यैव विनाशलक्षणान्तर्भविनाज्ञानस्यानिवृत्तौ परमाणुश्यामताया अप्यनिवृत्तिरिति परोक्तप्रतिबन्दीमुक्तस्मारणेन मोचयति **परमाण्विति**।

**स०व्र०— यदपीति** । स्वोपादानोत्तरावस्थायामेव विनाशव्यवहारादित्याशयः । विपक्षे अनिष्टमाह **अनुपादानेति** । तत्रोक्तं व्यभिचारं परिहरति **परमाण्विति** । यद्वा स्वोपादानोत्तरावस्थाया विनाशत्वादविद्याया-स्तदभावान्न निवृत्तिरित्यत आह **अनुपादानेति** । तत्रोक्तं व्यभिचारं परिहरति । तत्पक्षेऽविनाश इत्युक्ते परमाणुश्यामताया इव विनाशो भविष्यतीत्युक्तं तत्राह **परमाण्विति** ।

**गूढ०— घटविनाशः स्यादिति** । न च तत्रापि घटविशिष्टभूतलनाशोऽस्तीति वाच्यम् । एवं सत्यत्र विशिष्टनाशेऽपि घटनाशवत्तत्रापि आश्रयविशिष्टाज्ञाननाशेऽपि अज्ञाननाशाभावादिति।

**प्रदीपः— यदपीति** । स्वोपादानोत्तरावस्थाया विनाशत्वव्यवहारादित्याशयः । विपक्षे अनिष्टमाह **अनुपादानेति** । तत्रोक्तं व्यभिचारं परिहरति **परमाण्विति** । यद्वा स्वोपादानोत्तरावस्थाया विनाशत्वादविद्याया-स्तदभावात् न तत्पक्षे विनाश इत्युक्ते परमाणुश्यामताया इव नाशो भविष्यतीत्युक्तं तत्राह **परमाण्विति** । यद्वा सोपादानोऽयं तस्मान्निवर्तत इति विमतमनुवर्त्यानादित्वादिति चागमबाधितमित्यर्थः ।





**१९० सु०— अत्रोच्यते । यत्तावदविद्याया अनादित्वेनानिवृत्तिरिति सोऽयं प्रसङ्गः स्वतन्त्रानुमानं वा । नाद्यः । अविद्यानादित्वस्य श्रुतियुक्तिसिद्धत्वेन विपर्ययापर्यवसानात् । न द्वितीयः । 'विश्वमायानिवृत्तिः' 'मायामेतां तरन्ति ते' 'तरन्त्यविद्याम्' इत्यादिश्रुतिस्मृति-विरुद्धत्वात् । अनादेरपि निवृत्तौ बाधकाभावेनाप्रयोजकत्वाच्च । आत्मनोऽपि निवृत्तिप्रसङ्गो बाधक इति चेन्न । व्याप्त्यभावात् । निवर्तकभावाभावाभ्यां विशेषोपपत्तेः । प्रमितनिवर्तका-नभ्युपगमस्य अनुचितत्वात् । अनादित्वेन निवर्तकाभावानुमानस्य बाधितत्वात् ।**

**एतेन निवर्तकाभावस्योपाधित्वं तद्विपर्ययस्य प्रतिपक्षत्वं च समाहितम् ।**

**बिन्दुः**— ननु निवर्तकभावाभावाभ्यां विशेषं वदतः पूर्वपक्षिणो मतं स्वयं दूषितमेव कथमिदानीं सिद्धान्तेऽप्यङ्गीक्रियते उपाधिर्वा सत्प्रतिपक्षो वाऽनेनोच्यत इति विकल्पपूर्वकं स्वोक्तदूषणगणा-निस्तारादित्यत आह **प्रमितनिवर्तकानभ्युपगमस्येति** । 'तस्यैष आत्मा विवृणुते तनूं स्वामि'त्यादिना प्रमितस्य भगवत्प्रसादरूपनिवर्तकस्य योऽयमनभ्युपगमः प्रतिवादिनः तस्यानुचितत्वादित्यर्थः ।

**परि०**— एवं परोक्तं समाधिं निरस्यानादिबन्धस्य कथं निवृत्तिरित्याक्षेपं स्वयं समाधत्ते **अत्रोच्यत इत्यादिना** । **श्रुतीति** । अनादिमायया सुप्त इत्यादिश्रुत्या जीवानादित्वयुक्त्या च सिद्धत्वेन यद्यज्ञानमनादि स्यात्तर्हि न निवर्तेत निवर्तते च तस्मादनादि नेति विपर्ययपर्यवसानस्य बाधितत्वादिति भावः । **विश्वमायेति** । 'तस्याभिध्यानाद्योजनात्तत्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्रुतिः । 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति त' इति सप्तमे गीता । 'तरन्त्यविद्यां विततां हृदि यस्मिन्निवेशित' इति विष्णुपुराणे षष्ठांशे । **एतेनेति** । श्रुत्यादिना निवर्तकसमर्थनेन साधनाव्यापकत्वपक्षधर्मतयोः संभवादिति भावः ।

**यादु०**— **सोऽयं प्रसङ्ग इति** । यद्यज्ञानमनादि स्यात्तर्हि न निवर्तेत । निवर्तते च । तस्मान्नानादीति-प्रसङ्ग इत्यर्थः । यद्यपि परस्य स्वतन्त्रानुमानमेव विवक्षितं तथाऽप्यनादेः कथं निवृत्तिरिति तदीयवाक्यस्यानादि-त्वेन आपादकेनानिवृत्तिरापादनीयेत्यप्यर्थसंभवात्प्रसङ्गस्य विकल्पकोटिता । न हि पराभिप्रेतमेव विकल्प-नीयम् । अतादृशसंभावितपक्षाणामपि विकल्पकोटित्वस्य बहुलमुपलम्भात् । वस्तुतस्तु विश्वमायानिवृत्तिरित्यादि-प्रमाणविरोधेऽस्माभिरभिहिते नेदं स्वतन्त्रानुमानं येन प्रमाणविरोधो दूषणं स्यात् किन्तु प्रसङ्ग एवायम् । तत्र च प्रमाणविरोधोऽलङ्कार एवेति तटस्थशङ्कामप्यपाकर्तुमित्थं विकल्पितमित्यवधेयम् । **श्रुतियुक्तीति** । 'अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यत' इत्याद्याः श्रुतयः । अनादिजीवस्वरूपावरकस्य सादित्वे तदनुपपत्तिरिति च युक्तिः । ननु यद्येनाविशिष्टं तत्तथेति व्याप्तिरस्तीत्यत आह **निवर्तकाभावेति** ।





**आनन्दः**— यद्यज्ज्ञानमनादि स्यान्न निवर्तेत निवर्तते च तस्मान्नानादिरिति विपर्यये पर्यवसानं वक्तव्यम् । तदयुक्तम् । अनादित्वस्य श्रुतिसिद्धत्वादित्याह **अविद्येति** । श्रुत्याद्यन्यथा योज्यमत्राह **अनादेरपीति** । अनादेरज्ञानस्यापि निवृत्तावात्मनोऽपि निवृत्तिः स्यादिति शङ्कते **आत्मन इति** । **व्याप्त्यभावादिति** । यत्रानादिभूताज्ञान निवृत्तिस्तत्रात्मनोऽपि निवृत्तिरिति व्याप्त्यभावादित्यर्थः । ननु यस्य यद्भवति तत्तदविशिष्टस्यापि भवतीति सामान्यव्याप्तिरस्तीत्यत आह **निवर्तकेति** । निवर्तकं नाभ्युपेयत इत्यत आह **प्रमितेति** । **बाधितत्वात्** । श्रुत्यादिनेति शेषः । **एतेनेति** । निवर्तकस्य प्रमितत्वादसिद्ध्यभावेनेत्यर्थः ।

**कं०रा०**— **प्रसङ्ग इति** । अविद्या यद्यनादिः स्यात्तर्हि न निवर्तेतेत्यनिष्टप्रसञ्जनं वा उत अविद्या न निवर्ततेऽनादित्वादित्यनुमानं वेत्यर्थः । **विपर्ययेति** । निवर्तते च तस्मान्नानादिरिति विपर्ययपर्यवसानस्य अविद्यानादित्वप्रापकश्रुतियुक्तिबाधेनायोगात्प्रसङ्गस्याभासत्वमिति भावः । **श्रुतिस्मृतिविरुद्धत्वात्** श्रुतिस्मृतिबाधितत्वात् । यो धर्मो यत्र वर्तते स तदविशिष्टे वर्तत इति व्याप्तिबलादनाद्यज्ञाने वर्तमानं निवर्त्यत्वं तदविशिष्टे ब्रह्मण्यपि वर्तेतेत्यापाद्यत इत्यत आह **निवर्तकेति** । **एतेनेति** । अज्ञाने निवर्तकसद्भावस्य प्रमितत्वोपपादनेनाज्ञानं न निवर्ततेऽनादिभावत्वादित्यत्र निवर्तकाभावस्योपाधित्वं निवर्तकसद्भावस्य प्रतिपक्षत्वं च समाहितमुपाधौ साधनव्यापकत्वशङ्कायाः प्रतिपक्षेऽसिद्धिशङ्कायाश्चानवकाशादिति भावः ।

**श्रीनिधि०**— **प्रसङ्ग इति** । तर्क इत्यर्थः । स च यद्यनादि स्यान्न निवर्तेत निवर्तते चेन्नानादिरिति द्रष्टव्यः । ननु यो धर्मो यत्र वर्तते सः तदविशिष्टे वर्तत इति सामान्यव्याप्तिरस्तीत्यत आह **निवर्तकभावाभावाभ्यामिति** । तथा च तदविशिष्टत्वमात्मनोऽप्रसिद्धमिति भावः । परपक्षे उक्तं साधकं स्वपक्षे नास्तीत्याह **अनादित्वेनेति** ।

**वा०चं०**— **यत्तावदिति** । अनादेः कथं निवृत्तिरित्यस्यानादित्वे कथं निवृत्तिः निवृत्तिश्चास्त्यस्य बन्धस्यातो नानादित्वमुक्तं युक्तमिति निवृत्तिमङ्गीकृत्यानादित्वनिषेधेऽपि पर्यवसानसंभवादनादित्वान्न निवृत्तिरिति पूर्वोक्तमनादित्वमभ्युपगम्य निवृत्तिरुच्यमाना नोपपद्यत इति निवृत्त्यभावसाधनेऽपि पर्यवसानसंभवाद्विकल्पप्रसक्तिः । एवं चानादित्वाभावसाधकः प्रसङ्गो वा निवृत्त्यभावसाधकं स्वतन्त्रानुमानं वेति विकल्पार्थः । न तु प्रसङ्गोऽनुमानं वेत्येकविषयम् । नाद्य इत्युक्तदोषासङ्गत्यापत्तेः । यद्यपि निवृत्तावनादित्वं न स्यादित्यनिवृत्तिविषये प्रसङ्गोऽपि निवृत्तिमत्त्वान्नानादीत्यनादित्वाभावे स्वतन्त्रानुमानमपि विकल्पयितुं शक्यं तथाऽप्यनादेः कथं निवृत्तिरिति प्रश्नवाक्यादुक्तलक्षणयोः प्रसङ्गानुमानयोरेव प्रसक्तेस्तत्तद्विषयैकैकदूषणेनैवापरदूषणस्यापि लाभाच्च तदनुक्तिरिति द्रष्टव्यम् । **युक्तिश्रुतीति** । द्रव्यं कर्म चेत्येतद्व्याख्यावसरेऽविद्यानादित्वप्रतिपादकतयोपन्यस्तपरिशेषलक्षणयुक्तिश्रुतिसिद्धत्वादित्यर्थः । आगमबाधमुक्त्वाऽप्रयोजकत्वमप्याह **अनादेरपीति** । अनादेर्निवृत्त्यसंभवादागमोऽपि कथञ्चिदन्यथाव्याख्येय इति शङ्कापरिहारस्याप्यत्राभिप्रेतत्वाच्चशब्दाभावः । क्वचिच्चेत्यपि पाठस्तत्र यथाश्रुतैव योजना । अनादेरज्ञानस्य निवृत्तावात्मनोऽपि निवृत्तिः स्यादिति तर्के विशेषव्याप्तिर्वाऽभिमतोत यस्य यद्भवति





तदविशिष्टस्यापरस्यापि तद्भवतीति सामान्यव्याप्तिः । नाद्य इत्याह **व्याप्तीति** । न द्वितीयोऽविशेषासिद्धे-रित्याह **निवर्तकेति** । तथा च साध्यसाधनयोर्व्याप्तिशरीरप्रविष्टसामान्यधर्मानाक्रान्तत्वान्न व्याप्तिरिति भावः । निवर्तकमनभ्युपगन्तारं प्रति कथनीयं विशेषोक्तिरित्यत आह **प्रमितेति** । अपरीक्षकत्वापत्तेरतिप्रसङ्गाच्चेति भावः । नन्वनादित्वेन निवर्तकाभावानुमानस्य मयोक्तत्वेनोक्तिमात्रत्वाभावात् कथमपरीक्षकत्वादिकमित्यत आह **अनादित्वेनेति**।

**वा०२०**— प्रसङ्गो वा स्वतन्त्रानुमानं वेति विकल्पस्य प्रसक्तिसिद्ध्यर्थमनादेः कथं निवृत्तिरिति ग्रन्थात् अनादित्वान्न निवृत्तिर्भवितुमर्हतीति योजनयाऽनुमानपरत्वस्येवानादित्वे कथं निवर्तेतेति योजनायां तर्कपरत्वस्यापि प्रतीतिरस्तीत्याह **अनादेः कथमित्यादिना**। अत्रानादित्वे कथं निवृत्तिरित्यनेनानादित्वे निवृत्तिर्न स्यादस्ति च साऽतो नानादित्वमित्येवमनादित्वेन निवृत्त्यभावापादनरूपस्यैव तर्कस्य प्रतीत्याऽनादित्वस्य पराङ्गीकृतस्य स्वसंमतत्वे निवृत्तेश्च पराङ्गीकृतायाः असम्मतत्वे अनादित्वस्य निवृत्त्यभावसाधनत्वोपपत्तावप्यनादित्वाभावपर्यवसाय्यापादक-त्वायोगः अनादित्वस्य असम्मतत्वाभावे निवृत्तेश्च सम्मतत्वे विपर्ययपर्यवसानोपपत्तावपि तस्य निवृत्त्यभावे हेतुत्वेनाभिधानायोगः। इत्यतोऽत्रागत्यानादित्वेन निवृत्त्यभावसाधनस्येव तर्कस्यापि निवृत्त्यभावफलकत्वेऽङ्गीकार्ये अनादेः कथं निवृत्तिरित्येतत्पर्यालोचनयैव यद्यज्ञानं निवृत्तिमत्स्यात् तर्हि अनादिर्न स्याद्भवति चानादि तस्मान्न निवर्तत इति प्रसङ्गस्वरूपनिष्पत्तिः पराभिप्रेतेति सिद्धवत्कृत्य तद्दूषणं क्रियत इति प्रतीयते तत्र च नाद्यः। **अविद्या-नादित्वस्येति** । अविद्यानादित्वप्रामाणिकत्वोक्तिरूपदूषणासङ्गतिरायातीत्यतः अनुमानस्य निवृत्त्यभावफलकता तर्कस्य यद्यनादि स्यात् तर्हि न निवर्तेतेति अनादित्वाभावफलकतैवेति विषयभेदेन तर्कानुमानविकल्पस्याभि-प्रेतत्वान्नाद्य इति दूषणासङ्गतिरूपो दोषस्तावदनवकाशः । नापि निवृत्त्यभावापादनाद्यनुपपत्तिः । निवृत्त्यङ्गीकारेण तदभावापादनस्यानादित्वाङ्गीकारेण निवृत्त्यभावसाधनस्य चोपपत्तेरित्याशयेन विषयभेदाद्युपपादनं निवृत्तिमङ्गी-कृत्यानादित्वनिषेधेऽपीति अनादित्वमभ्युपगम्य निवृत्त्यभावसाधनेऽपीति च कृतमिति द्रष्टव्यम् । तमेवाशयं स्पष्टयति **एवं चेति। न तु प्रसङ्ग इति** च। **एकविषयमिति**। धूमानुमानविषयबुद्धेरेव साध्याभावमुखप्रवृत्तेः यदि निर्वह्निः स्यादित्येतत्तर्कविषयता । विपर्ययपर्यवसानेन निर्वह्निर्नेत्यनेन वह्नेरेव प्रतिपादनात् । एवं यदि निवृत्तिम-त्स्यात् तर्ह्यनादिर्न स्यादिति उक्तमुखप्रवृत्ततर्कस्वरूपे तस्मान्निवृत्तिमन्नेति विपर्ययपर्यवसानेन निवृत्त्यभावस्यैव प्रतिपादनलाभादनुमानविषयो निवृत्त्यभाव एव प्रसङ्गस्यापि विषयप्रसङ्गविषयोऽनादित्वाभावो नानुमानविषय इत्येवमेकविषयत्वाशयेन प्रसङ्गो अनुमानं वेत्येतन्मूलं प्रवृत्तमिति न मन्तव्यमित्यर्थः । निवृत्त्यङ्गीकारपक्षमात्रा-लम्बनेन वा अनादित्वाङ्गीकारपक्षमात्रावलम्बनेन वा न प्रवृत्तीत्युक्तरीत्यैकैकाङ्गीकारपक्ष एव साधनापादनद्वयस्य अयोगादित्युपलक्षणया द्रष्टव्यम् । उक्तविषयभेदेऽप्यनादित्वाभावादिरूपैकैकविषये तर्कानुमानोभयपरतया योजना-संभवे सति नैकमात्रपरत्वयोजना युक्तेत्याशयेन प्रकारान्तरेण विकल्पप्रसक्तिशङ्कामुत्थाप्य दूषयति **यद्यपीत्यादिना**। अनिवृत्तिविषय इत्यस्य तत्साधक इत्यर्थः। एवमनादित्वाभावस्य तत्साधकमित्यर्थः। **प्रसङ्गोऽपीति**। अनादित्वान्न निवर्तत इत्यनुमानमिवेत्यपिपदार्थः । विकल्पयितुं शक्य इति लिङ्गविपरिणामेनोत्तरेणान्वयः । **अनुमानमपीति** ।





यद्यनादि स्यात्तर्हि न निवर्तेतेति तर्क इवेत्यपिपदार्थः। शक्यमित्युपलक्षणम्। विश्वमायेत्यादिदूषणेन निराकर्तुं च शक्यमित्यपि द्रष्टव्यम्। **उक्तलक्षणयोरिति**। विमतं यद्यनादि स्यात्तर्हि न निवर्तेत। निवृत्तिमन्नानादित्वादित्येवंरूपयोरित्यर्थः। निवृत्तावनादित्वं न स्यादित्यादिरूपेण तर्कानुमानयोरप्यनादेः कथमिति वाक्यार्थत्वेन निरूपयितुं शक्यत्वे इतरयोरेव प्रसक्तिरिति नियन्तुमशक्यमित्यपरितोषादाह **तत्तदिति**। यद्यपि निवृत्तावित्यादिरूपटीकोक्ततर्कानुमानयोरेव प्रसक्तिं कृत्वापि एकैकदूषणेनैवापरदूषणलाभोपपत्तेरित्युक्तसमाधानेन च यद्यनादि स्यादित्यादिरूपतर्कानुमानयोराशङ्काप्रसक्तिनिराकरणं समानमिति मूलोक्तविकल्पे नियामकाभावस्तथाऽप्यनादेरिति वाक्यात् यद्यनादीत्यादिरूपयोरेव पुरस्स्फूर्तिरस्तीति भावेन मूलप्रवृत्तिरित्यत्र तात्पर्यान्न दोषः। **श्रुतियुक्तीति** मूलक्रमेऽपि उपपादनक्रमं प्राचीनमनुसृत्य युक्तिश्रुतीतिप्रतीकोपादानपाठो लेखकायत्तः। प्रायस्तु श्रुतियुक्तीत्येव प्रतीकोपादानपाठः। **उपन्यस्तेति**। उपन्यस्ते ये परिशेषलक्षणयुक्तिश्रुती ताभ्यामित्यर्थः। व्याख्याने क्रमव्यत्यासस्तु प्राचीनोपपादनक्रममनुसृत्येति स्पष्टम्। मूले श्रुतियुक्तिग्रहणमुपलक्षणम्। अनाद्यविद्यासाधनाय परिशेषस्येवानादिमाययेत्यादि श्रुतेरिव च स्मृतेरपि श्रुतिस्मृतयश्चेत्यनेन प्राक् सामान्यतः उक्तत्वादिति ज्ञेयम्। विश्वमायेत्यस्य ग्रन्थस्यागमबाधमात्रकथने तात्पर्यं नाप्रयोजकत्वेऽपीति नोत्तरवाक्यवैयर्थ्यमित्याशयेनाह **आगमबाधमिति**। दूषणान्तरपरत्वे मूले चशब्दाभावायोग इत्यतः तदभावमुपपादयति **अनादेरिति**। **शङ्कापरिहारस्यापीति**। तथा च पूर्वोक्तदोषोपपादकत्वस्यापि सत्त्वाच्चशब्दाभावः। किन्तु अप्रयोजकत्वकथनपरतया योजनान्तरं चशब्दाभावेऽपि तदर्थान्तर्भाविन विवक्षितमिति भावः। **यथाश्रुतैवेति**। आगमबाधमित्युक्तयोजनैवेत्यर्थः। आगमोपरि शङ्कानिरासस्तु न विवक्षित इत्येवशब्दार्थः। विशेषव्याप्तिर्वेति। अनेन मूलगतं व्याप्तिपदं विशेषव्याप्तीति व्याख्येयमिति सूचयति **उतेति**। उताविशेषलक्षणासामान्यव्याप्तिरित्यर्थः। विशेषासिद्धेरित्याहेत्युत्तरवाक्यात्। यस्येत्यादि तु तद्विवरणम्। यस्येत्येवोक्तावप्यपरस्मिन् यच्छब्दनिर्दिष्टादविशिष्टत्वोक्तौ यत्तच्छब्दाभ्यां निर्दिष्टयोर्विशेषो नास्तीति लभ्यत इति न यदविशिष्टस्येति पूर्वमुक्तम्। अनादेरज्ञानस्य निवृत्तावात्मनोऽपि निवृत्तिः स्यात्। आत्मनोऽज्ञानापेक्षया अज्ञानस्य वा तदपेक्षया विशेषाभावादित्यविशेषलक्षणा सामान्यव्याप्तिरिति फलितम्। वैशेषिकनये अविशेषलक्षणसामान्यव्याप्तिरिति वक्ष्यते चेति ज्ञेयम्। **नाद्य इत्याहेति**। विशेषव्याप्तौ दृष्टान्ताभावेन विशेषव्याप्तिर्नेत्याहेत्यर्थः। तथा च **साध्यसाधनयोरिति**। साध्यसाधनशब्दौ व्याप्यव्यापकपरौ। **सामान्यधर्मेति**। तदविशिष्टस्येत्यनेनोक्ताविशेषापरपर्यायसामान्यधर्मेत्यर्थः। **अनाक्रान्तत्वात्**। अघटितत्वात्। निवर्तकवतोऽज्ञानस्य निवृत्तौ आत्मनोऽपि निवर्तकवतो निवृत्तिः स्यादिति सामान्यधर्मभूतनिवर्तकस्य साध्यसाधनयोः प्रवेशे च आत्मनो निवर्तकानभ्युपगमेन विरोधापातादिति भावः। न द्वितीयः। असिद्धेः। न ह्यज्ञानस्येत्यादिना पूर्वोक्तं दोषं स्वपक्षे उद्धरतीत्याशयं द्योतयन्नवतारयति **निवर्तकमिति**। **अपरीक्षितत्वेत्यादि**। प्रामाणिकपरिगृहीतुरेव परीक्षकत्वात्। प्रामाणिकस्यापि निवर्तकस्यानभ्युपगमे प्रमाणसिद्धस्य आत्मादेरप्यनभ्युपगमप्रसङ्गादिति भावः। विवरिष्यते चेदम्। **मयोक्तत्वेनेति**। अनादेः कथं निवृत्तिरिति शङ्काकर्त्रा मया विवरणकारीयोपाधिपरत्वयोजनानिराकरणव्याजेनेत्यर्थः। उक्तिमात्रत्वाभावादित्यनेन प्रमाणमपुरस्कृत्योक्तिमात्रेण कञ्चिदर्थमभ्युपगच्छत एवापरीक्षकत्वमिति ध्वनयति। तथा आत्मादेः प्रामाणिकत्वात्तदभावे प्रमाणाभावाच्च नातिप्रसङ्ग इति सूचितम्। मूले **एतेनेति**। निवर्तकाभावानुमानस्य





बाधितत्वकथनेन निवर्तकसद्भावस्य प्रमितत्वकथनेन चेत्यर्थः । उक्तोपायद्वयेन साधनव्यापकत्वाभावस्यासिद्ध्यभावस्य च सिद्धिरिति भावः ।

**स०व्र०—** **विपर्ययापर्यवसानादिति** । अविद्या यद्यनादिः स्यात् तदा न निवर्तेत निवर्तते च तस्मान्नानादिरिति प्रसङ्गस्य विपर्ययापर्यवसानादित्यर्थः । **न द्वितीय इति** । विमतमनिवर्त्यमनादित्वादित्यनुमानमागमबाधितमित्यर्थः । अनादिभावस्याप्यस्माभिर्निवृत्त्यङ्गीकारेण विपक्षे बाधकाभावादप्रयोजको हेतुरित्याह **अनादेरपीति** । बाधकं शङ्कते **आत्मनोऽपीति** । विशेषव्याप्त्यभावेऽपि यस्य यद्वति तदविशिष्टस्यान्यस्यापि तद्वतीति सामान्यव्याप्त्या आपादनोपपत्तिस्तत्राह **निवर्तकेति** । यदुक्तमनिवृत्तिवादी निवर्तकं नोपैति किन्त्वनादित्वेन तदभावमपि अनुमिनोतीति तत् क्रमेण दूषयति **प्रमितेति** । ततश्चानादित्वानुमानं सोपाधिकं सत्प्रतिपक्षं चेत्याह **एतेनेति** ।

**वि०ठ०—** अनादेः प्रकृतिबन्धस्य कथं निवृत्तिरिति शङ्कायाः विवरणोक्तं परिहारं दूषयित्वा स्वयं परिहारं वक्तुं प्रतिजानाति **अत्रोच्यते इति** । **प्रसङ्ग इति** । यदि बन्धकाविद्यायाः अनादित्वं स्यात् तर्हि निवृत्तिः न स्यात् निवर्तते च तस्मान्नानादित्वमिति प्रसङ्ग इत्यर्थः । **श्रुतियुक्तीति** । अनादिमाययेत्यादिश्रुतयः सादित्वे नानादितोऽपि जीवस्वरूपावरकत्वं न स्यात् इत्याद्याः युक्तयो ज्ञेयाः । बन्धकाविद्या न निवर्तते अनादित्वात् जीवस्वरूपादिवत् इत्यनुमानं चेति द्वितीयं पक्षं दूषयति **न द्वितीय इति** । अविशेषो व्याप्तिरित्यत आह **निवर्तकेति** । निवर्तकाभावोऽसिद्ध इत्यत आह **प्रमितेति** । निवर्तकाभावमनादित्वेन साधयामीत्यत आह **अनादित्वेनेति** । **एतेनेति** । निवृत्तेः प्रमितत्वेनेत्यर्थः ।

**चषकः—** स्वयं समाधित्सते **अत्रोच्यत इति** । **सोऽयं प्रसङ्ग इति** । अज्ञानधर्मिकानादित्वापादकानिवर्त्यत्वापाद्यकस्तर्क इत्यर्थः । विपर्यये तत्कोटिमात्रपर्यवसान एव तर्कस्य तदभावकोटिकशङ्कानिवर्तकत्वादिति दीधितिकारोक्त्या तत्कोटितावच्छेदकावच्छिन्नसाधकविपर्ययप्रतियोगितावच्छेदकावच्छिन्नापाद्यकस्तर्कस्तत्कोटितावच्छेदकावच्छिन्नशङ्कानिवर्तक इति नियमेन प्रकृते विपर्ययपर्यवसानस्य बाधिततया प्रसङ्गस्यातादृशतया नाभिमतं निर्वोढुं स शक्नोतीत्याह **नाद्य इति** । **श्रुतियुक्तीति** । अनादिमायया सुप्त इति श्रुतिरज्ञानस्य सादित्वेऽनादिजीवस्वरूपावरकत्वानुपपत्तिर्युक्तिरित्यर्थः ।

**गूढ०—** यद्यज्ञानमनादि स्यान्न निवर्तेत निवर्तते च तस्मान्नानादिरिति विपर्यये पर्यवसानं वक्तव्यम् । तदयुक्तम् । अनादित्वस्य श्रुतिसिद्धत्वादित्याह **अविद्येति** । श्रुत्याद्यन्यथा योजनीयमत्राह **अनादेरपीति** । अनादेरज्ञानस्य निवृत्तावात्मनोऽपि निवृत्तिः स्यादिति शङ्कते **आत्मन इति** । **व्याप्त्यभावादिति** । यत्रानादिभूताज्ञाननिवृत्तिस्तत्रात्मनोऽपि निवृत्तिरिति व्याप्त्यभावादित्यर्थः । ननु यस्य यद्वति तत्तदविशिष्टस्यापि भवतीति सामान्यव्याप्तिरस्तीत्यत आह **निवर्तकेति** । निवर्तकं नाभ्युपेयत इत्यत आह **प्रमितेति** । **बाधितत्वात्** श्रुत्यादिनेति शेषः । **एतेनेति** । निवर्तकस्य प्रमितत्वादसिद्ध्यभावेनेत्यर्थः ।





**प्रदीपः**— अनादिभावस्यापि अस्माभिर्निवृत्त्यङ्गीकारात् विपक्षे बाधकाभावादप्रयोजको हेतुरित्याह **अनादेरपीति**। बाधकं शङ्कते **आत्मनोऽपीति**। किमनाद्यज्ञाननिवृत्त्याऽऽत्मा निवर्ततेति व्याप्तिः कथ्यते अतिप्रसङ्गो वा। नाद्य इत्याह **नेति**। द्वितीयं प्रत्याह **निवर्तकेति**। यदुक्तमनिवृत्तिवादी निवर्तकं नोपैति किन्त्वनादित्वेन तदभावमप्यनुमिनोतीति तत्क्रमेण दूषयति **प्रमितेति**। ततश्चानादित्वानुमानं सोपाधिकं सप्रतिपक्षं वेत्याह **एतेनेति**।

**१९१ सु०— नन्ववयवतत्संयोगविनाशाभ्यां द्रव्यनाशो दृष्टस्तत्कथमत्र विनाश इति चेत्। कुतोऽयमुभयाभ्युपगमः। एकैकपरिहारेणापि विनाशदर्शनादिति चेत्। तर्हि सादेरेवमस्तु। अनादेस्तृतीयोऽपि प्रकारोऽनुसर्तव्यः। प्रमितत्वादेव विनाशस्य। अनादेः कीदृशो विनाश इति चेत्। स्वरूपप्रध्वंस एव। स्वोपादानगतोत्तरावस्था स्वोपादानमात्रत्वापत्तिरित्यादि कार्यविषयम्। नन्वविद्या चेन्निवर्तेत। तर्ह्येकमुक्तौ सर्वमुक्तिः स्यात्। न स्यात्। प्रतिजीवमविद्याभेदाङ्गीकारात्। अत्र विशेषः 'स्वगुणाच्छादिका त्वेका' इत्यागमादनुसन्धेयः।**

**बिन्दुः**— नन्वनादेः समवायिकारणासमवायिकारणाभावेन तद्विनाशप्रयुक्तो द्रव्यनाश इति पक्षक्षत्यापत्त्या कथमविद्यानाश इत्याशयेन शङ्कते **नन्ववयवेति**। **अनादेः कीदृशो नाश इति**। कार्यविनाशापेक्षया वैलक्षण्याभिप्रायेण प्रश्नः। वैलक्षण्याभावमभिप्रेत्य उत्तरमाह **स्वरूपप्रध्वंस एवेति**। यथा समवाय्यसमवायिकारणविनाशजन्ययोः कार्यध्वंसयोर्न विशेषः किन्तु द्वावपि ध्वंसावेव तथा अयमपीत्यर्थः। कार्यविनाशे अधिकोऽपि धर्मोऽस्तीत्यन्यदेतत् इत्याह **स्वोपादानेति**। प्रतियोग्युपादानवृत्तित्वमित्यर्थः। अन्यस्य उत्तरावस्थात्वस्य दुर्वचत्वात् तथाहि किमिदमवस्थात्वं नाम न तावद्बाल्यकौमारादित्वं घटादावसंभवात्। नापि कार्यकारणरूपत्वम्। दण्डघटादेरपि परस्परावस्थात्वापत्तेः। नाप्युपादानोपादेयभावः। कौमारादिष्वव्याप्तेः। उपादानगतत्वोत्तययोगाच्च। तस्मात् उपादानवृत्तिपदार्थत्वमेव अवस्थात्वं वाच्यम्। वृत्तिश्च संबन्धविशेषेणैव संयोगादिव्यावृत्तेनेति वक्तव्यं वर्तते चैतत् घटतत्प्रागभावध्वंसादौ बाल्यकौमारादौ च। तस्यापि पुरुषावयवसंस्थानविशेषवृत्तित्वात्। अत एव प्रतियोगितत्प्रागभावौ व्युदसितुम् उत्तरत्वेन अवस्थां व्यशिनट्। तच्च उत्तरत्वं न स्वाधिकरणक्षणध्वंसाधिकरणक्षणवृत्तित्वम्। अविनष्टघटेऽपि तत्स्यात्। किन्तु स्वध्वंसाधिकरणक्षणवृत्तित्वं तच्च गगनादावतिप्रसक्तम् अतः स्वध्वंसाधिकरणक्षणमात्रवृत्तित्वम्। तदपि घटध्वंसकालोत्पन्नपटादौ गतम्। न च स घटस्तद्घटस्यावस्था। तस्मात्तद्ध्वंस एव तदुत्तरावस्था स च कार्य-





प्रतियोगिकः स्वोपादाने वर्तते तस्यापि विनाशे प्रलये मूलोपादानप्रकृतावेव। सैव चोपादानमात्रत्वापत्तिः। कार्यस्य मूलोपादानमात्रात्मना सत्त्वं प्रलय इत्यभ्युपगमात्। प्रागभावकालेऽप्यस्ति। अस्तु नाम किं तावता समस्तस्यापि प्रलयकालस्य प्रागभावकालत्वात्। न हि वयं तान्त्रिकान्तरवत् आत्यन्तिक-प्रलयवादिनः। ननु तर्ह्यनादिप्रतियोगिकः कुत्र वर्तते। किमनेन प्रश्नेन। अनादिर्भावः कुत्र वर्तत इति प्रश्नेऽपि किमुत्तरमायुष्मतः। यदि च कार्यभावस्य स्वोपादानेऽपि वृत्तिसत्त्वेऽपि अनादेस्तस्य भूतले वा काले वा वृत्तिरस्तु गगनादिवद्वा अवृत्तितैवास्तु उभयथापि न काचित्क्षतिरित्यमंस्थाः। सममेतत्सर्वं प्रकृतेऽपीति सर्वं समञ्जसमिति दिक्। **अत्र विशेष इति**। 'अजे द्वे प्रकृती दुष्टे नृषु प्रातिस्विकं स्थिते। स्वगुणाच्छादिका त्वेका परमाच्छादिका परे'त्यागमादित्यर्थः।

**परि०— अवयवेति**। समवाय्यसमवायिकारणनाशाभ्यामित्यर्थः। **स्वगुणेति**। 'स्वगुणा-च्छादिका त्वेका परमाच्छादिका परा। स्वगुणाच्छादिकां हत्वा परमाच्छादिकां परः। व्याघुट्य मोक्षपदवी ददाति पुरुषोत्तम' इत्यादिश्रुतिगीतातात्पर्योक्तागमादनुसन्धेय इत्यर्थः।

**गु०दी०— स्वरूपप्रध्वंस एव** इत्यत्र स्वावयवैः सहैव दग्धपटप्रध्वंसवदिति दृष्टान्तोऽनुसन्धेयः।

**यादु०— अनादेः कीदृश इति**। स्वाश्रयगतोत्तरावस्थेत्येतद् दूषितम्। स्वोपादानगतोत्तरावस्था च प्रकृते नास्ति। तदतिरिक्तस्तु प्रकारो नोपलभ्यत इत्यर्थः। अतिरिक्तप्रकारोऽप्यस्तीत्याह **स्वरूपप्रध्वंस इति**। प्रागभावेऽयमपि प्रकारः प्रामाणिक इति भावः। **स्वोपादानमात्रत्वापत्तिरिति**। सदसत्कार्यवादाभिप्रायेण। **अत्र विशेष इति**। अत्र प्रतिजीवमावरकतया स्वीकृताविद्यायामिति विशेषः प्रभेदोऽनुसन्धेय इत्यर्थः। यथोक्तं महातत्त्वविवेके। 'अथान्ये प्रकृती दुष्टे नृषु प्रातिस्विकं स्थिते। स्वगुणाच्छादिका त्वेका परमाच्छादिका परा। स्वगुणाच्छादिकां हत्वा परमाच्छादिकां परः। व्याघुट्य मोक्षपदवीं ददाति पुरुषोत्तम' इति। एतदागमबलेन स्वगुणा-च्छादिकाविद्याया हननलक्षणो नाशः। परमाच्छादिकायास्तु व्याघुट्टनमात्रमित्यपि विशेषोऽनुसन्धेय इत्यर्थः।

**वं०प०— नन्ववयवेति**। अवयवनाशात्समवायिकारणनाशाद्द्रव्यनाशो दृष्टः। यथा तन्तुनाशे सति पटनाशः। अवयवसंयोगनाशात्तन्तुद्वयसंयोगरूपासमवायिकारणनाशात्पटनाशो दृष्ट इत्यर्थः। नन्वनादिपदार्थध्वंसे स्वोपादानगतेत्यादिनाशलक्षणायोगः। उपादानस्यैवाभावादिति चेत्तत्राह **स्वोपादानेति**।

**आनन्दः— एवं** प्रकारद्वयम्। तत्र हेतुमाह **प्रमितत्वादेवेति**।

**कं०रा०—** यद्यपि सिद्धान्तप्रवृत्तेऽनुमाने उपाधेः प्रतिपक्षविधयैव दूषकत्वेनोपाध्युद्भावनेनैव प्रतिपक्ष-स्योक्तत्वात्पृथग्ग्रहणानुपपत्तिस्तथाऽपि परमते व्यभिचारोन्नायकत्वेनाप्युपाधेर्दूषकत्वात्परीत्या परो दूषणीय

इत्यभिप्रेत्य पृथगुपाधिप्रतिपक्षयोर्ग्रहणं कृतमिति ध्येयम् । तत्किमेकस्मिन् जीवे एकैवाविद्या नेत्याह **अत्रेति** । **अत्रैकैकजीवनिष्ठाविद्यायामप्यवान्तरविशेषः** 'स्वगुणाच्छादिका त्वेका परमाच्छादिकाऽपरे'त्यागमादनुसन्धेय **इत्यर्थः**।

**श्रीनिधि०— अवयवतत्संयोगनाशाभ्याम्** इत्यादि तु प्रक्रियामात्रमिति भावः । **उभयाभ्युपगमः** अवयवतत्संयोगनाशयोरुभयोर्निमित्तताभ्युपगमः । **एकैकपरिहारेणेति** । अवयवसंयोगनाशस्थले अवयवनाश-परिहारेण द्रव्यनाशो दृष्टः । अवयवनाशस्थले तत्संयोगनाशपरिहारेण नाशो दृष्ट इत्यर्थः ।

**वा०चं०**— नन्ववयवनाशेन वा तत्संयोगनाशेन वा द्रव्यनाशदर्शनादनादेर्निरवयवत्वेन तदुभय-प्रयुक्तविनाशासंभवेन यदीदं द्रव्यं सन्नाशवत्स्यात्तर्हि तत्प्रयोजकैतदन्यतरवत्स्यात् । न चैतदस्ति । तस्मान्न नाशवदिति विपक्षे बाधकान्तरमाशङ्कते **नन्विति** । प्रमितकार्यान्यथाऽनुपपत्त्या प्रयोजकान्तरस्याप्यनुसर्तव्ये उभयोरेव द्रव्यनाशप्रयोजकत्वाभ्युपगमोऽनुपपन्न इत्यभिप्रेत्य प्रयोजकान्तरं परमुखेनैव अङ्गीकारयितुं पृच्छति **कुत इति** । **एकैकेति** । तन्त्वादिनाशप्रयुक्तपटादिनाशे द्व्यणुकादिनाशे चेति शेषः । **अनादेरिति** । इदं च प्रतिबन्दीमुखेन प्रवृत्तस्य परं प्रति दूषणाभिधानम् । वस्तुतस्तु स्वमते निरवयवद्रव्याभावाल्लिङ्गदेहादिवदनाद्यविद्यादेरप्यवयवसंयोगनाशप्रयुक्त एव नाश इति द्रष्टव्यम् । स्वाश्रयगतोत्तरावस्थाविनाश इत्यस्य भवतैव निराकृतत्वादुपादानत्वगर्भविनाशलक्षणस्य चानादावसंभवादनादेर्विनाशानुपपत्तिरेवेति विपक्षे बाधकान्तरमभिप्रेत्य गूढाभिसन्धिः शङ्कते **अनादेरिति** । प्रकारान्तरसंभवाद्बाधकतर्केऽप्रयोजकतेत्याशयेनाह **स्वरूपेति** । तर्हि उपादानत्वगर्भतल्लक्षणोक्तिरभियुक्तानां न स्यादित्यतो न नाशसामान्यलक्षणतया तदुक्तिरपि तु नाशविशेषलक्षणतयेत्याशयेनाह **स्वेति** । उपादान-नाशप्रयुक्तनाशस्थले प्रकारान्तराभिप्रायेणादिपदम् । विपक्षे बाधकान्तरमाशङ्कते **नन्विति** । यद्वा 'ज्ञानिनां मोक्षद' इति निवृत्तिबोधकप्रमाणमुदाहरता भाष्यकारेण बन्धनिवृत्तौ प्राप्तसर्वबाधकपरिहारस्य सूचितत्वादनादित्व-प्रयुक्तां निवृत्त्यनुपपत्तिं परिहृत्य प्रकारान्तरप्राप्तां तामेव परिहर्तुमाशङ्कते **नन्विति** । माऽस्त्वनादित्वप्रयुक्ता निवृत्त्यनुपपत्तिस्तथाऽप्यविद्याया निवृत्तावेकमुक्तौ सर्वमुक्तिप्राप्त्या निवृत्त्यनुपपत्तिस्तदवस्थैव । न ह्येकजीववादि-विवरणकारेणेष्टापत्त्या सा त्वया परिहर्तुं शक्यते । अपसिद्धान्तापत्तेरिति भावः । मन्मतेऽविद्याभेदादेव न सर्व-मुक्तिप्रसङ्ग इत्याह **नेति** । एतावतैकजीववादिमतवैलक्षण्ये लब्धेऽपि प्रतिजीवमेकैकैवाविद्या तस्याश्च स्वरूपध्वंस एव विनाश इति बहुजीववादिमतसाधारण्यं प्रतीयते । तावतैव स्वमते सर्वमुक्तिप्रसक्तिपरिहारेऽपि वस्तुस्थितिकथनाय वा न सर्वाविद्यायाः स्वरूपध्वंसो युक्तो नापि प्रकृतप्रकृत्यात्मकाविद्याया अपसिद्धान्तापत्तेरित्याशङ्कापरिहाराय वा स्वमते विशेषमाह **अत्रेति** । एवं च प्रतिजीवमप्यनादी द्वे प्रकृती । तयोर्मध्ये स्वगुणाच्छादिकाया अनादिभूताया अपि स्वरूपप्रध्वंसः । परमाच्छादिकायास्त्वनन्तत्वाद्व्याघुट्टनमात्रम् । मोक्षद इत्येतत्तूभयविधप्रकृतेरप्युक्तरूपयथायोग्य-मोक्षद इति व्याख्येयमित्युक्तं भवति ।

**वा०र०— द्रव्यं सदिति** । द्रव्यत्वे सतीत्यर्थः । प्रकाशस्य सतस्तदीयतामात्रनिबन्धनः स्वभावविषय एव तद्विषयत्वमित्यात्मतत्त्वविवेकादिव्याख्यावसरे प्रकाशत्वसमानाधिकरण .... इत्यादिप्रतिपादनात् द्रव्यत्वसमानाधि-





करणनाशवत्स्यादिति वा । अत एव प्रयोजनवत्त्वाधिकरणस्थले टीकाकृतोक्तात्मतत्त्वविवेकग्रन्थानुसारेण व्याख्यानमिति ज्ञेयम् । **बाधकान्तरमिति** । व्यापकानुपलब्धिबाधरूपमित्यर्थः । **प्रयोजकान्तरस्यापीति** । अवयवनाशतत्संयोगनाशयोरन्यतरमात्रस्य प्रयोजकत्वपरित्यागेन द्वितीयस्याप्यधिकस्य प्रयोजकस्यानुसर्तव्यत्व इत्यर्थः । **अनुपपन्न इति** । द्वयोरेव प्रमितकार्यान्यथानुपपत्त्या तृतीयस्यापि स्वीकार्यत्वादनुपपन्न इत्यभिप्रेत्येत्यर्थः । **प्रयोजकान्तरमिति** । तृतीयं प्रयोजकमित्यर्थः । द्वितीयप्रयोजकं कुतस्त्वयाऽङ्गीक्रियत इति पृष्टे पर एकस्य व्यभिचारात् द्वितीयमपि प्रयोजकमङ्गीकरोमीति वदन् समानन्यायतया द्वयोर्व्यभिचारात् तृतीयमपि प्रयोजकं कथं नाङ्गीकरिष्यति अर्धजरतीयानुपपत्तेरिति तेनापि तदङ्गीकारसिद्धिरित्याशयः । **तन्त्वादीति** । यत्रावयवभूततन्तु-कपालादीनामेवाग्न्यादिना नाशस्तत्र संयोगनाशेनावयविनाशाभाव इति ज्ञेयम् । **द्व्यणुकेति** । परमाणूनां नित्यतया तन्नाशस्य तत्र वक्तुमशक्यत्वादिति भावः । **इदं चेति** । द्वयोः प्रकारयोरनुपपत्तौ तृतीयोऽपि प्रकारोऽनुसर्तव्य इति दूषणाभिधानं च परं प्रति प्रतिबन्दीमुखेन प्रवृत्तत्वात् कृतम् । न तु द्वयोः प्रकारयोरन्यतरस्य प्रकृतेऽसंभवाभि-प्रायेणेत्यर्थः । कथमन्यतरप्रकारः प्रकृते संभवतीत्यत आह **वस्तुतस्त्विति** । **निरवयवद्रव्याभावादिति** । परमाणु-लक्षणनिराकरणावसरे भूतसूक्ष्मस्यापि सावयवत्वादेः प्रतिपादयिष्यमाणत्वादिति भावः । लिङ्गदेहादिवदिति संभावक-तया दृष्टान्तोक्तिः । स्पष्टं चेदम् । ... । **प्रमितत्वादेवेति** मूलम् । तथा चाज्ञाननाशस्यापि प्रमितत्वादेव तत्र विधान्तर-कल्पने कल्पनागौरवानवकाशः । यथोक्तम् । 'प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि । बालाग्रशतभागस्तु न कल्प्य-स्त्वप्रमाणक इती'ति भावः । **कीदृशो विनाश इति** मूलस्य स्वाश्रयगतेत्यादिरूपो वा स्वोपादानेत्यादिरूपो वा । नाद्यः । भवतैव निराकृतत्वात् । न द्वितीयः । अनादेर्विनाशत्वेनाभिमते उक्तरूपविनाशलक्षणायोगेन विनाशत्व-स्यैवानुपपत्तेरित्यर्थं मनसि कृत्वा तन्मूलमवतारयति **स्वाश्रयेति** । तर्ह्युपादानगर्भेत्युत्तरशङ्कैव गूढोऽभिसन्धिः । **भवतैवेति** । अनादेः कथं निवृत्तिरिति शङ्कामुत्थाप्य विवरणकारीयतत्परिहारनिराकरणव्याजेन सिद्धान्तिना त्वयैवोक्तत्वादिति शिष्यशङ्केयमिति ज्ञेयम् । **प्रकारान्तरेति** । प्रागभावे तस्यापि सिद्धत्वादिति भावः । **आदिपद-मिति** । आदिपदेनोपादाननाशप्रयुक्तकार्यनाशस्थलीयतदुपादानगतोत्तरावस्थादिसंग्रह इत्यर्थः । अस्मिन्पक्षेऽनादेः कथं निवृत्तिरित्येतच्छङ्कापरिहारपरग्रन्थशेषत्वमाश्रयणीयं भवति । न च तद्युज्यते । नन्वनादेरिति शङ्काया इव नन्वविद्या चेदित्यादिग्रन्थस्याप्यज्ञाननिवृत्तिरिति पक्षे स्वतन्त्रशङ्कापरत्वस्यैव प्रतीतेरित्यपरितोषात्प्रकारान्तरेणावतारयति **यद्वेति** । सर्वमुक्तिप्रसङ्ग इष्टापत्तिशङ्कां निराकरोति **न हीति** । **एकजीववादिविवरणेति** । हेतुगर्भं विवरण-कारस्यैकजीववादित्वात्तेन तथाऽङ्गीकर्तुं शक्यते । शुकवामदेवादिमुक्तिवादानामर्थवादत्वस्य तेनाभ्युपगमात् । नैवं भवताऽङ्गीकर्तुं युक्तम् । बहुजीववादित्वादिति भावः । अत्र विशेष इत्युत्तरमूलानुत्थानशङ्कां सूचयंस्तान् परिहरन्नेवावतारयति **एतावतेति** । प्रतिजीवमविद्याभेदाङ्गीकारेणेत्यर्थः । **एकैकैव** । प्रतिजीवं भिन्नभिन्नरूपा-प्यविद्यैकैकैव । न वक्ष्यमाणस्वगुणाच्छादकत्वादिरूपेण भिन्ना । **स्वरूपेति** । प्रकृतेरेकत्वेन तदाश्रयणेन प्राप्तं स्वमताद्वैलक्षण्यं वक्ष्यमाणस्वमतीयस्थितिस्पष्टनाय तद्व्यावर्त्यतयाऽनूदितम् । न तु स्वतन्त्रमिदं वैलक्षण्य-प्रदर्शनमिति नैतस्य वैयर्थ्यशङ्कावकाशः । **प्रतीयत इति** । प्रतिजीवमिति मूलेऽधिकानुक्तेस्तावत एव प्रतीति-रित्याशयः । प्रतीयत इत्यनन्तरं तत्परिहर्तुमिति पूरणीयम् । अस्य च स्वमते विशेषमाहेत्युत्तरेण संबन्धः ।





ननु नैतत्परिहारादिकमावश्यकम् । एतन्मताश्रयणेऽपि सर्वमुक्तिप्रसङ्गरूपपूर्वशङ्कितदोषपरिहारसिद्धेस्तदर्थमेव च भवतः प्रवृत्तेरित्यत उक्तं **तावतैवेत्यादि** । सत्यम् । तत्परिहारोऽनेन भवतीति । तथापि नेदं वास्तवं समाधानं प्रतिवादिपराजयसिद्धावपि शिष्यप्रतिपत्त्यननुकूलत्वात् । अतस्तदनुकूलतया वस्तुस्थितिकथनस्यावश्यकत्वात् प्रतिजीवमविद्याभेदेऽप्यवान्तरविशेषस्वीकारेण प्रवृत्तवास्तवसमाधानेनोक्तशङ्कापरिहारः कार्य इति द्योतयितुं **स्वमते विशेषमाहेति** योजना । अनेनैव विशेषकथनपरोत्तरमूलवैयर्थ्यशङ्कापि सूचिता । **वस्तुस्थितीति** । प्रतिजीवं भिन्नाप्यविद्याऽनेकरूपेत्यादिका वस्तुस्थितिर्ज्ञेया । **सर्वाविद्याया इति** । ईश्वरेच्छाजडप्रकृतिरूपसर्वेत्यर्थः । **नापीति** । सर्वेत्येतद्बुद्ध्या विवेकेन सर्वस्या इत्येवंरूपेणानुवर्तते । स्वरूपप्रध्वंस इति च प्रकृतत्वं च सत्त्वादिगुणमय्या मोक्षदप्रागुक्तप्रकृतिबन्धादित्यनेनेति ज्ञेयम् । **अपसिद्धान्तेति** । जडप्रकृतावपि या तत्तज्जीवावरणतया तमोरूपा प्रकृतिस्तस्या एव प्रध्वंसो न जडप्रकृतिमात्रस्येत्यादिसिद्धान्तात्तद्विरोधापत्तेरित्यर्थः । **स्वगुणाच्छादिकेत्यादि** मूलोदाहृतवाक्यम् 'अथान्ये प्रकृती दुष्टे नृषु प्रातिस्विके स्थिते' इति पूर्वार्धसापेक्षम् । एकयेत्यादेरन्यथाऽप्रत्यायकत्वं स्यात् । अतः पूर्वार्धोक्तमपि सङ्गृह्णन्मूलाभिप्रेतं विशेषं व्यनक्ति **एवं च प्रतिजीवमिति** । एवं चेत्यस्येत्युक्तं भवतीत्युत्तरेण संबन्धः । **अनन्तत्वादिति** । नित्यत्वादित्यर्थः । ईश्वरेच्छापसरणादिकालनिरूपणादिकं द्वितीयाध्यायगीताभाष्यटीकाप्रपञ्चेऽस्मदीये द्रष्टव्यम् । वक्ष्यते चेदम् । विशेषोऽवगन्तव्य इति मूलकारोक्तावगन्तव्यविशेषप्रदर्शनस्य मोक्षद इत्येतद्व्याख्यानानानुगुण्यशङ्कापरिहाराय प्राचीनव्याख्यानमप्येतदनुसारेण विवेचनीयमित्याह **मोक्षद इत्येतत्त्विति** ।

**स०व्र०— एकैकेति** । कपालनाशाद्घटनाशः द्व्यणुकावयवानां परमाणूनां नाशाभावेऽपि तत्संयोगनाशात् द्व्यणुकनाश इत्युभयाङ्गीकारेऽपि यथा प्रमितत्वान्न कल्पनागौरवं तथा अज्ञानस्यापि विनाशप्रमितेरवयवतत्संयोगाभ्यां नाशाभावेऽपि विधान्तरमनुसरणीयम् । प्रमितत्वेन कल्पनागौरवाभावात् । यथोक्तं 'प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि । बालाग्रशतभागोऽपि न कल्प्यस्त्वप्रमाणक' इति । **कीदृश इति** । स्वाश्रयगतोत्तरावस्थाविनाश इत्येतत् दूषितं स्वोपादानोत्तरावस्था प्रकृते नास्ति तदतिरिक्तस्तु प्रकारो नोपलभ्यत इत्यर्थः । विनाशलक्षणस्याव्याप्तिमाशङ्क्याह **स्वेति** । पूर्वपक्षी एकजीववादिदूषणेन तद्वासनावासितान्तःकरण आह **नन्विति** । 'नृषु प्रातिस्विके स्थिते' इति वाक्यस्याभिप्रेतत्वात्तेन प्रतिजीवमविद्याभेदसिद्धिरिति भावः ।

**विठ्ठ०— तत्कथमत्रेति** । बन्धस्यानादित्वेन निरवयवतया तदुभयप्रयुक्तनाशासंभवात् कथमत्र विनाश इति भावः । प्रकारान्तरेण नाशं परेणाङ्गीकारयितुं उक्तद्वयाभ्युपगमे निमित्तं पृच्छति **कुतोऽयमुभयाभ्युपगम इति** । एकविधनाशाभ्युपगमे लाघवादिति भावः । कोऽसौ तृतीयः प्रकारः इत्याशयेन पृच्छति **अनादेः कीदृश इति** । **स्वरूपध्वंस एवेति** । प्रागभावे ईदृशनाशस्य दर्शनात् अन्यस्यादर्शनादिति भावः । सदसत्कार्यवादानुसारेणोक्तम् **स्वोपादानमात्रत्वापत्तिरिति** । स्वोपादानतन्त्वादिनाश आदिशब्दार्थः । **अत्र विशेष इति** । अविद्यायां जीवाच्छादिकापरमाच्छादिकाभेदेन प्रतिजीवं विद्यमानत्वविशेषः तत्राद्यायाः स्वरूपनाशः तदभिमानिन्याः दुर्देवतायाः





सद्यस्तमःप्राप्तिः। स्वरूपहननं, द्वितीयायास्तु तदा व्याघुट्टनं किञ्चित्काल(नन्तरं)व्यवधानेन ध्वंसस्तमःप्राप्तिः भवत इति विशेषश्च 'स्वगुणाच्छादिका त्वेका परमाच्छादिका परा। स्वगुणाच्छादिकां हत्वा परमाच्छादिकां परः। व्याघुट्य मोक्षपदवीं ददाति पुरुषोत्तम' इत्याद्यागमादवगन्तव्य इत्यर्थः। विस्तरस्तु तत्त्वरत्नप्रकाशे।

**चषकः— अत्र विशेष इति**। 'अजे द्वे प्रकृती दुष्टे नृषु प्रातिस्विके स्थिते। स्वगुणाच्छादिका त्वेका परमाच्छादिका परा। स्वगुणाच्छादिकां हत्वा परमाच्छादिकां परः। व्याघुट्य मोक्षपदवीं ददाति पुरुषोत्तम' इत्याद्यागमानुरोधेन स्वगुणाच्छादकाविद्यायाः स्वरूपप्रध्वंस एव। परमाच्छादिकायास्तु व्याघुट्टनमात्रमिति विशेषोऽवसेय इत्यर्थः।

**गूढ०— एवं** प्रकारद्वयम्। तत्र हेतुमाह **प्रमितत्वादेवेति**।

**प्रदीपः— एकैकेति**। कपालनाशाद्घटनाशः द्व्यणुकावयवानां परमाणूनां नाशाभावेऽपि तत्संयोगनाशाद् द्व्यणुकनाशस्ततश्च प्रमितत्वादुभयाङ्गीकारः कल्पनागौरवाभावात् तद्वज्ज्ञानस्यापि विनाशप्रमितेरवयवतत्संयोगाभ्यां नाशाभावेऽपि विधान्तरमनुसरणीयं प्रमिते कल्पनागौरवाभावात्। यथोक्तम्— 'प्रमाणवन्त्यदुष्टानि कल्प्यानि सुबहून्यपि। बालाग्रशतभागोऽपि न कल्प्यस्त्वप्रमाणकः ॥' इति स्वाश्रयगतोत्तरावस्थाविनाश इत्येतद्दूषितं स्वोपादानोत्तरावस्था प्रकृते नास्ति तद्व्यतिरिक्तस्तु न वक्ष्यत इति कीदृश इत्युक्तम्। विनाशलक्षणस्याव्याप्तिमाशङ्क्याह **स्वेति**। अत्र पूर्वपक्षी एकजीववादिदूषणेन तद्वासनावासितान्तःकरण आह **नन्विति**। एकजीववादी भवता पलायितो नात्रास्तीति सिद्धान्त्याह **न स्यादिति**।

**१९२ सु०— स्यादेतत्। ब्रह्मविदामप्यविद्याऽनुवर्तते। तेन न श्रुतिस्मृतीनां प्रामाण्यम्। ब्रह्मसाक्षात्कारः अविद्यानिवर्तकः न विवेकमात्रमिति चेन्न। तद्वतामपि संसारानुवृत्तिदर्शनात्। साक्षात्कृतब्रह्मणां सद्यःशरीरादिपाते वातपुत्रीयाः पौरुषेयाः ब्रह्मोपदेशाः प्रसज्येरन्निति ॥ मैवम्। न स्मरति भवानुक्तार्थस्य। प्रसन्नः परमेश्वर एव बन्धविध्वंसं करोतीत्युक्तम्। न च साक्षात्कारस्तत्प्रसादसाधनम्। येन सोऽपि कथं तेषां नेति पर्यनुयुज्येत। भक्तेः परावस्था हि तद्धेतुरुक्ता। तत्संपत्तिश्च कार्यगम्या। परचित्तवृत्तीनामप्रत्यक्षत्वात् ॥ प्रारब्धकर्मप्रतिबद्धो भगवत्प्रसाद इति तु मन्दम्। अचेतनानां कर्मणां स्वतन्त्रभगवत्प्रसादप्रतिबन्धकत्वायोगात्।**

**बिन्दुः— ब्रह्मविदामपीति**। परोक्षज्ञानिनामित्यर्थः। ननु या संसारानुवृत्तिः सा परोक्षज्ञानिनामेव, अपरोक्षज्ञाने सति सा नास्त्येवेत्यत आह **साक्षात्कृतेति**। तेषां वक्तुमलब्धावसरत्वेन





उपदेशासंभवात् कविर्हरिरन्तरिक्ष इत्यादिनवयोगीश्वराः साक्षात्कृतब्रह्माणो जनकाय तत्त्वमुपदिदिशु-रित्यादिवचनानामप्रामाण्यं स्यादित्यर्थः । **उक्तार्थस्येति** । अधीगर्थदयेशां कर्मणीति षष्ठी । **इति तु मन्दमिति** । अप्रतिहतेच्छत्वरूपेश्वरत्वव्याघातादिति भावः । अचेतनानामित्यतिशयोक्तिः । न हि चेतनेनापि स प्रतिबन्धुं शक्यते ।

**परि०— श्रुतिस्मृतीनामिति** । ज्ञानिनां मोक्षद इत्यादीनां ज्ञानान्मोक्षोक्तिपराणामित्यर्थः । **न विवेकमात्रमिति** । देहात्मादिविवेकमात्रमिति वा नित्यानित्यविवेकमात्रमिति वाऽर्थः । **वातपुत्रीया इति** । अशरीरवाक्यानि भवेयुरित्यर्थ इत्येके । पिशाचवार्ता भवेयुरित्यर्थ इत्यन्ये । वातपुत्रो वायुः तदीयाः वातपुत्रीयाः वाय्वानीतवार्ता भवेयुर्निर्मूला भवेयुरित्यर्थ इत्यपरे । वातागमनमिव पुत्रपतनमिव वातपुत्रीयं काकतालीयमितिवदयं शब्दः । यादृच्छिकत्वात्पुत्रपतनं न वातागमनहेतुकम् । तथेहापि शुकवामदेवाद्युपदेशा अहेतुका भवेयुरित्यर्थ इत्यप्याहुः । शुकवामदेववैशंपायनादिपुरुषसंबन्धिनः पौरुषेयाः । शुकादेरपरोक्षज्ञानित्वादिति भावः । 'अधीगर्थदयेशां कर्मणीति' षष्ठीमुपेत्याह **न स्मरति भवानुक्तार्थस्येति** । उक्तार्थः कः यस्य विस्मृतिरुच्यत इत्यत आह **प्रसन्न इति** । तत्संपत्तिः भक्तेः परावस्थासंपत्तिः । **प्रारब्धेति** । ज्ञानिप्रारब्धेत्यर्थः ।

**गु०दी०— वातपुत्रीया** इत्यत्र वातपुत्रीयाः वातपुत्राः वातांशाः तत्संबन्धिनः वायुवार्तारूपा इति यावत् । **पौरुषेयाः** पुरुषेण कर्तुं योग्याः । **तत्प्रसादसाधनम्** इत्यत्र साक्षात् प्रसादसाधनमित्यर्थः ।

**यादु०— तेन न श्रुतीति** । विश्वमायानिवृत्तिरित्याद्यानामित्यर्थः । तथा च न तद्बाधोऽनुमानस्येति भावः । **विवेकमात्रमिति** । परोक्षज्ञानमित्यर्थः । **वातपुत्रीया इति** । अयं च समासः काकतालीय इति समासवद्द्रष्टव्यः । तदर्थश्च युक्तिपादे वक्ष्यते । अर्थस्येति कर्मणि षष्ठी । 'अधीगर्थदयेशां कर्मणी'ति स्मरणात् । केचिदाहुः । नापरोक्षज्ञानानन्तरमेव मोचकप्रसादोत्पत्तिः । किन्तु प्रारब्धकर्मणा प्रतिबद्धोऽसावतो न मुक्तिं तदैव जनयतीति तद् दूषयति **प्रारब्धेति** ।

**वं०प०—** अविद्यानाशस्य श्रुतिस्मृतिसिद्धत्वेनाविद्याया न निवृत्तिरिति स्वतन्त्रानुमानस्यायोग इत्ययुक्तम् । श्रुत्यादेरप्रामाण्यादित्याशयेन शङ्कते **स्यादेतदिति** । श्रुतिस्मृतीनामविद्यानाशप्रतिपादकानां विश्वमायानिवृत्ति-रित्यादीनाम् । विवेकमात्रं परोक्षज्ञानम् । ननु न ब्रह्मसाक्षात्कारवतां संसारानुवृत्तिरङ्गीक्रियते । साक्षात्कृतब्रह्मणां ज्ञानसामर्थ्येन तदुत्पत्त्यनन्तरमेवाविद्यानिवृत्त्या सद्यःशरीरादिपाताङ्गीकारात् । अतः श्रुत्यादीनां प्रामाण्यमुपपद्यत इत्यत आह **साक्षात्कृतेति** । **पौरुषेया इति** । अपरोक्षज्ञानिपुरुषकर्तृकाः । परं ब्रह्म दृष्टवन्तो यदि तत्स्वरूप-मुपदिशेयुस्तर्हि परेषां विश्वासो भविष्यति । अन्यथाऽन्धपरम्पराशङ्का स्यात् । ब्रह्मसाक्षात्कारवतामवस्थानं





चाविद्यानिवृत्त्या सद्यः शरीरादिपाते न संभवति । अतस्तेषामवस्थानमुपदेशार्थमवश्यं वक्तव्यमेव । तथा चाविद्यानिवृत्तिर्नास्तीति प्राप्तमतः पूर्वोक्तदोषस्तदवस्थ इति भावः। **उक्तमिति**। तथाच साक्षात्कारोऽप्रयोजक इति भावः। साक्षात्कार इव प्रसादोऽपि तेषां कुतो नास्तीति चेत्तत्राह **न चेति**। न हीत्यर्थः।

**आनन्दः— श्रुतिस्मृतीनामिति**। ब्रह्मज्ञानेनाविद्यानिवृत्तिबोधकानामिति शेषः। ननु ब्रह्मसाक्षात्कारवतां सद्यःशरीरपातो भवतीत्यत आह **साक्षात्कृतेति**। तत्पुत्रसंबन्धिनः ब्रह्मोपदेशाः पौरुषेयाः प्रसज्येरन् अपौरुषेयागमे साक्षात्कारवतां सद्यःशरीरपातस्याप्रतिपादनादेतदप्रामाणिकमिति भावः । यद्वा तत्पुत्रसंबन्धिनः ये ब्रह्मोपदेशाः ब्रह्मसाक्षात्कारो भवति। अनन्तरमेव मोक्षो भवति। इत्येवंरूपा उपदेशाः पौरुषेयाः अप्रामाणिकाः स्युः। न च ते अप्रामाणिकाः तस्मादेतदयुक्तमित्यर्थः। अधीगर्थेतिस्मरणादर्थस्येति कर्मणि षष्ठी।

**कं०रा०— वातपुत्रीया इति** । वातागमनपुत्रपतनसमागमवत्पततः पुत्रस्य वाताविष्टत्ववच्च पौरुषेया ब्रह्मोपदेशा यादृच्छिकाः प्रसज्येरन्नित्यर्थः। समासाच्च तद्विषयादिति इवार्थविषयात्समासादपरस्मिन्निवार्थे छप्रत्यये काकतालीयादिशब्द इव वातपुत्रीयशब्दो निष्पन्न इति ज्ञातव्यम्। अथवा। वातपुत्रो वाय्वंशो यत्र यत्राशरीरवाक् श्रूयते तत्र तत्र तां वाचं वाय्वंश एव वक्तीतीतिहासपुराणप्रसिद्धिः। तथा च ब्रह्मोपदेशा वातपुत्रीयाः प्रसज्येरन् अशरीर-वाचः प्रसज्येरन्नित्यर्थः। "पथि प्रग्रहिणं कंसमाभाष्याहाशरीरवागि"त्यादिना भागवतादौ सामान्यत उक्तत्वेऽपि पद्मपुराणादौ "अन्तरिक्षे वायुरत्र प्राह गम्भीरया गिरा । अस्यास्तवाष्टमो गर्भः कंसप्राणान् हरिष्यती"त्यादिना विशेष उक्तः । वातपुत्रशब्दाद्वृद्धाच्छ इति छप्रत्यय इति द्रष्टव्यम् ।

**श्रीनिधि०— विवेकमात्रमिति** । परोक्षरूपं तत्त्वनिश्चयमात्रमित्यर्थः । **वातपुत्रीया इति** । वातपुत्रः पिशाचः । 'अहर्लीनो वातपुत्र' इति निघण्टोः तत्संबन्धिनो वातपुत्रीयाः । **वातपुत्राः** वातांशाः । तत्संबन्धिनो वातपुत्रीयाः। वायुवार्तारूपा इति यावदिति केचित्। अशरीरवचनानीत्यपरे। **पौरुषेयाः** पुरुषकर्तृकाः। **ब्रह्मोपदेशाः** भयादृष्टमित्याद्या उपदेशाः । **उक्तार्थस्येति** । अधीगर्थदयेशामिति कर्मणि षष्ठी । उक्तार्थविषयकं स्मरणं तव नास्तीत्यर्थः ।

**वा०चं०—** ज्ञानिनां मोक्षद इति भगवतो मोक्षदत्वोक्त्या ज्ञानस्वभावादेव मोक्षसंभवान्नेशकृत्यमिति शङ्काया एव न केवलं परिहारो भाष्यकृतोऽभिप्रेतोऽपि तु ज्ञानस्याविद्यानिवर्तकत्वासंभवान्नोक्तश्रुत्यादिकमुपपन्नमिति शङ्कापरिहारोऽपीति भावेन तां शङ्कामुत्थापयति **स्यादेतदिति**। जीवजडविवेकेन ब्रह्मविदामपि न जानामीत्यनुभवेन तत्कार्यसंसारानुवृत्तिदर्शनेन चाविद्यानुवृत्तिसिद्धेर्ब्रह्मज्ञानस्य तन्निवर्तकत्वबोधकश्रुत्यादीनामप्रामाण्यान्न तद्बाधोऽज्ञाननिवृत्त्यभावसाधकानुमानस्येति भावः। विवेकमात्रस्याज्ञानाविरोधित्वेन तदनिवर्तकत्वेऽपि ब्रह्मसाक्षात्कारस्य तद्विरोधित्वेन निवर्तकत्वसंभवात्तद्विषयकत्वाच्च श्रुत्यादीनां नोक्तमयुक्तमिति शङ्कते **ब्रह्मसाक्षात्कार इति** । विवेकिनामस्मदादीनामज्ञानानुभवस्येव साक्षात्कारवतामज्ञानानुभवस्य निश्चेतुमशक्यत्वेऽपि संसारानिवृत्तिदर्शनेन





तत्कारणाज्ञानादिनिश्चयः सुशक एवेत्याशयेनाह **तद्धतामिति** । अत एव पूर्वमविद्याऽनुवर्तत इत्युक्त्वाऽत्र संसारानुवृत्तिदर्शनादित्येवाहेति भावः । ननु न साक्षात्कारवतां संसारानुवृत्तिः । तेषामज्ञाननिवृत्त्या तत्कार्यस्यापि निवृत्तेः संसारानुवृत्तिमतां च न साक्षात्कार इत्यत आह **साक्षात्कृतेति** । **वातपुत्रीया इति** । अत्र यद्यपि 'समासाच्च तद्विषयादि'ति सूत्रेणेवार्थविषयात्समासादपरस्मिन्निवार्थे छप्रत्ययेन काकतालीयाजाकृपाणीयवातपुत्रीयादिशब्दा व्युत्पादिता उपमाद्वयगर्भाः । तथा च काकतालाजाकृपाणवातपुत्राणामिव यादृच्छिको दस्युदेवदत्तयोः समागम इत्येका समासार्थोपमा । तदानीमेव तालकृपाणवातैः काकाजापुत्राणामिव दस्युना देवदत्तवधः कृत इत्यन्या तद्धितार्थोपमा चेति । यत्रोपमाद्वयं तत्रैवास्य शब्दस्य संपूर्णार्थता तथापि यादृच्छिकसमागममात्रेऽप्यस्य प्रचुरः प्रयोगो दृश्यत इत्ययमपि प्रयोगो यादृच्छिकसमागममात्रविषयो द्रष्टव्यः । ( समासाच्च तद्विषयात् । इवार्थविषयात्समासात् छः स्यादिवार्थे । पूगाञ्ञ्य इत्यतः प्राक् इवेत्यधिकारात् । काकतालीयः देवदत्तस्य वधः । इह काकतालसमागमसदृशश्चोरसमागम इति समासार्थस्तत्प्रयुक्तः । काकमरणसदृशस्तु प्रत्ययार्थः । अजाकृपाणीयोऽतर्कितोपनत इति फलितोऽर्थः । काकतालीय इति प्रकृतसूत्रादेव ज्ञापकादिवार्थे समासः । सुप्सुपेति वा । उभयथाऽपि विशेषसंज्ञाविनिर्मुक्तः । स च छप्रत्ययविषय एव । तेन स्वातन्त्र्यमुपाध्यन्तरगो विग्रहश्च नेत्याकरः । शस्त्रीश्यामेत्यादौ त्वेक एवार्थः । स च समासेऽन्तर्भूत इति छो न भवतीति ज्ञेयम् । ) **उक्तार्थस्येति** । अधीगर्थेति षष्ठी । ( अधीगर्थदयेशां कर्मणि । एषां कर्मणि शेषे षष्ठी स्यात् । मातुः स्मरणम् । सर्पिषो दयनमीशनं वा । ) उक्तं द्रव्यं कर्म चेत्येतद्व्याख्यावसरे । ननूक्तं स्मारणं व्यर्थमित्यतः प्रसादस्यैव बन्धविध्वंससाधनत्वं वदताऽपि साक्षात्कारस्य प्रसादसाधनत्वेन वक्तव्यतया सति साक्षात्कारे प्रसादोऽपि स्यात् ततश्च बन्धनिवृत्तिरपि स्यादिति साक्षात्कारस्य बन्धध्वंससाधनत्वे प्राप्तानुपपत्तेः प्रसादस्य बन्धध्वंससाधनत्वोक्तावपि तदवस्थतया न प्रसादाङ्गीकार उचित इति विशेषशङ्कापरिहारायोक्तस्मारणोपपत्तिरित्यभिप्रेत्य प्रसादेऽप्यनुपपत्तिमाशङ्क्य परिहरति **न चेति** । तथा च साक्षात्कारस्य बन्धध्वंसहेतुत्वे प्राप्तानुपपत्तेर्न प्रसादपक्षे प्रसक्तिरिति भावः । **परावस्थेति** । यमधिकृत्येत्यादिनोक्ता परिपाकावस्थेत्यर्थः । ननु सति साक्षात्कारे सामग्रीसद्भावेन भक्तेः परावस्थाऽप्यस्त्येवेति प्रसादोऽपि स्यादिति पर्यनुयोगस्तदवस्थ इत्यत आह **तदिति** । ज्ञानेनाज्ञाननिवृत्तौ विरामाभावस्य सिद्धतया तन्निवृत्तौ च तत्कार्यविलयस्यावश्यकतया तत्पक्षेऽनुपपत्तावपि सिद्धस्यापि कारणस्य कदाचिदेव फलोन्मुखत्वलक्षणपरिपाकस्यापूर्वादौ क्लृप्तत्वात्सत्यपि साक्षात्कारे भक्तिपरावस्थाभावोपपत्तेर्भक्तिपक्षे नानुपपत्तिरिति भावः । अचेतनानामिति कर्मणामस्वातन्त्र्योपपादनायोक्तम् ।

**वा०र०**— स्यादेतदित्यादिमूलग्रन्थस्योद्ग्राह्यत्वमिति शङ्कापरिहारायाह **ज्ञानिनां मोक्षद इतीति** । **नोक्तश्रुत्यादिकमिति** । ज्ञानस्याविद्यानिवर्तकत्वप्रतिपादकं ज्ञाननिवर्त्यत्वानुमानबाधकतयोदाहृतं विश्वमायानिवृत्तिरित्यादिश्रुत्यादिकमित्यर्थः । **उपपन्नम्** । प्रमाणम् । बाधितार्थकस्य प्रामाण्यायोगादिति भावः । **जीवजडेति** । ब्रह्मसाक्षात्कार इत्युत्तरशङ्कानुसारेणात्राभिप्रेतचित्पदार्थप्रदर्शनमिदम् । जीवजडभिन्नत्वेन ब्रह्म जानतामित्यर्थः । अनुवर्तत इति मूलोक्तानुवृत्तिं युक्तिद्वयेनोपपादयितुमुक्तं **न जानामीत्यादि** । श्रुतिस्मृतित्वेन सामान्यत उक्तेरपि

प्रकरणाद्विशेषपर्यवसानं बोध्यमित्याशयं द्योतयितुं *ब्रह्मज्ञानस्येत्यादिमूलाभिप्रेतं शङ्काफलमस्पष्टत्वाद्दर्शयति* **न तद्बाध इति** । **विवेकमात्रस्येति** । जीवजडभिन्नत्वप्रकारेण ब्रह्मज्ञानमात्रस्येत्यर्थः । श्रुत्यादिकमपि तादृश-ज्ञानमात्रस्य तन्निवर्तकत्वपरं न भवति । येनाप्रामाण्यं स्यादपि तु साक्षात्कारस्यैव तन्निवर्तकत्वपरमित्याह **तद्विषयत्वाच्चेति** । श्रुत्यादीनां च तद्विषयत्वादिति योज्यम् । **नोक्तमिति** । अज्ञाननिवृत्त्यभावसाधकानुमानस्य श्रुत्यादिबाधितत्वं प्रागुक्तं नायुक्तमित्यर्थः । अत्र संसारेत्युक्तिनिमित्तमाह **विवेकिनामिति** । तथा च पूर्वत्र हेतुद्वयेनाविद्यानुवृत्तिकथने तात्पर्यमिह त्वेकेनैव हेतुनेति विशेष इति प्रतिपादयितुं संसारेत्युक्तमित्युक्तं भवति । स्वव्याख्यानं मूलोक्तज्ञापकेनोपपादयति **अत एवेति** । **संसारानुवृत्तिदर्शनादित्यादि** मूलम् । एतच्च प्रमेयमिति सर्वे प्रविज्ञाय सर्वैस्तर्कैः सदागमैरिति विद्यैवेत्येतदधिकरणीयानुव्याख्यानमूले भागवतधर्मप्रवृत्तये ज्ञानिनः कमपि कालमवस्थापयन् तदर्थं प्रारब्धानि कर्माण्यवशेष्येत्यादिनाभिधास्यते । तथा सर्वात्मना त्वभोगो हीति स्तुतयेऽनुमतिर्वेत्यधिकरणीयानुव्याख्यानमूले ब्रह्मज्ञानिनोऽपि प्रारब्धकर्मणः सर्वात्मना क्षयो नास्तीति पूर्वत्र व्याख्याय तथा सति ब्रह्मविदां संसारावस्थानं न स्यान्निर्बीजत्वादित्यनेन वक्ष्यते । एवं चतुर्थेऽनारब्धकार्ये एव तु पूर्वे तदवधेरित्येतदवतारमूले सकलकर्मक्षये तदैव मुक्तिः स्यात् । न चैवम् । जीवन्मुक्तानामुपलम्भादित्यनेनापि । एवमन्यत्रापि । उक्तसर्वस्थलेऽप्यन्यथा ब्रह्मोपदेशानां वातपुत्रीयत्वप्रसङ्गादित्येतन्मूलोक्तबाधकमभिप्रेतम् । अत एव भागवतधर्मप्रवृत्तय इत्येतद्व्याख्यावसरे टीकाकृता तथाशयवर्णनं कृतमिति ज्ञेयम् । दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञाना-नामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति द्वितीयन्यायसूत्रीयतश्च खलु वै निश्रेयसं किं तत्त्वज्ञानानन्तरमेव भवति । नेत्युच्यते । किं तर्हि तत्त्वज्ञानादित्युक्तोक्तसूत्रोपन्यासपरभाष्यव्याख्यानरूपे वार्तिके न तत्त्वज्ञानादपवर्गः उभयथा च दोषात् । यदि तत्त्वज्ञानानन्तरमेवापवर्गः स्यात् तद्वतामवस्थानं न स्यात् । तद्वतां चावस्थानं दृष्टम् । कुतः । शास्त्रसंप्रदायाविच्छेदात् । संप्रदायो नाम शिष्योपाध्यायसंबन्धस्याविच्छेदे शास्त्रप्राप्तिः । यदि तत्त्वज्ञानादपवर्गः स्यात् शास्त्रसंप्रदायो विच्छिद्येत । यस्य यदा तत्त्वज्ञानं वृत्तं स तदैवापवृक्त इति । प्रतिपाद्यतत्त्वज्ञाने सत्यप्यप-वर्गाभावे तस्य तत्कारणत्वाभावं च प्रतिपाद्य पुनरप्युक्तमथ तत्त्वज्ञानानन्तरमपवर्गो वातपुत्रीयं शास्त्रं स्यान्न तत्त्वदृक्पूर्वकमिति । तदेतद्वार्तिकानुसार्येतन्मूलस्यापि तद्वाचस्पत्याद्यनुसारेण न तत्त्वदृक्पूर्वकमित्युक्तेर्यस्य तत्त्वज्ञानमुत्पन्नं न तेन ब्रह्मोपदेशः क्रियते । येन चोपदेशः क्रियते न तस्य तत्त्वज्ञानमुत्पन्नं किं त्वसौ पाणौ पञ्चवराटकान्निक्षिप्य कतीति पृष्टवन्तं प्रति कस्यचित् पञ्चेति यदृच्छया वाक्यप्रयोगवद्यदृच्छया ब्रह्मतत्त्वविषय-वाक्यप्रयोगरूपब्रह्मोपदेशं करोति । दैवादागततद्वाक्यानुसारेण ब्रह्मतत्त्वमपि वर्तत इति यावत् । तथा चोपदेश-रूपप्रयुज्यमानतद्वाक्यस्य ब्रह्मतत्त्वरूपार्थस्य च समागमो वातपुत्रयोर्यादृच्छिकसमागमवद्यादृच्छिकः । तत्त्वज्ञान-पूर्वकवाक्य इति शब्दार्थसमागमस्य बुद्धिपूर्वकत्वाभावात् । ततश्चास्य ब्रह्मोपदेशस्य न प्रामाण्याध्यवसायः संभवति । तदभावे चोपदेशरूपवाक्ये श्रोतॄणां प्रवृत्तिर्निरङ्कुशा न भवतीत्येवं दोषपर्यवसायि ब्रह्मोपदेशानां वातपुत्रीयत्वं स्यादिति विवक्षितोऽर्थः शिष्यैरेवोह्य इत्याशयेन सर्वपुरुषाभ्यां णढञावितिसूत्रीय'पुरुषाद्वधविकारसमूहतेनकृतेष्वि'ति भाष्य-कारीयवक्तव्यात्तेन कृते वाक्य इत्यर्थे पुरुषशब्दात् ढञि ढस्यायनेयीयियः इत्यनेन एयादेशे यस्येति चेत्यकारलोपे ञित्परत्वादादिवृद्धौ पौरुषेयशब्दनिष्पत्तेः पुरुषकृताः पौरुषेया इति लभ्यते । तथाविधा ब्रह्मोपदेशाः तत्त्वज्ञान-





शून्यपुरुषेण क्रियमाणाः ब्रह्मतत्त्वविषयका ये उपदेशास्तद्रूपाणि वाक्यानि तदात्मकं शास्त्रमिति यावत्। ते उपदेशा वातपुत्रयोर्यादृच्छिकसमागमवद्ब्रह्मतत्त्वरूपार्थेन यादृच्छिकसमागमवन्त आपतेयुरित्यक्षरयोजनां च सिद्धवत्कृत्य तत्रोपमानोपमेयभावानुपपत्तिमाशङ्क्य निराकरोति **अत्र यद्यपीत्यादिना**। **समासाच्च तद्विषयादिति सूत्रेणेत्यादि**। काकतालशब्दौ हि वृत्तिविषय इत्युक्त्या अन्यत्र काकतालशब्दयोः काकतालार्थत्वमेवेति ध्वनितम्। एतदभिप्रायेणैव कैयटे वृत्तिविषय इत्युक्तम्। वृत्तिविषये काकतालसमवेतक्रियावर्तिनौ। तेन काकागमनमिव तालपतनमिवेति काकतालमितीवार्थे समासाच्च तद्विषयादिति ज्ञापकाद्वा सुप्सुपेति वा समासः। समासश्चास्मादेव ज्ञापकात्। न ह्यस्यापरं लक्षणमस्ति। सुप्सुपेति लक्षणान्तराभावेऽप्यनेनैव ज्ञापकेन समासः। एवं ज्ञापनेन समासस्य छप्रत्ययविषयत्वमेवेति कैयटादयः। तैरेवोक्तसमासविधायकमप्युक्तम्। **सुप्सुपेतीति**। सह सुपेत्यत्र सुपेति योगविभागस्याङ्गीकारेण तस्य सुबामन्त्रित इत्यतोऽनुवर्तमानसुबित्यनेन संबन्धे सुप्सुपेति सूत्रवाक्यं संपद्यते तेन समास इत्यर्थः। स चैवं विषये एवेत्यादिरूपकाशिकाग्रन्थात् व्याख्यातं च मञ्जर्याम्। किं पुनः कारणज्ञापकात्समाससद्भावः प्रतिपाद्यत आह **न हीति**। **स चैवं विषय एवेति**। छप्रत्ययविषय एवेत्यर्थः। अनन्यत्र भावो विषयार्थः। तेन स्वातन्त्र्यमुपाध्यन्तरयोगो विग्रहश्च न भवतीति। उभयथापि समासोऽयं संज्ञाविशेषविनिर्मुक्त इति रमातत्त्वबोधिन्योरधिकं चोक्तम्। उभयत्रोपमेयं देवदत्तागमनं तदानीमेव दस्योरुपनिपातश्च। तेन देवदत्तस्य दस्योश्च समागमः काकतालसमागमसदृश इति फलति। ततश्च काकतालमिव काकतालीयमिति द्वितीयस्मिन्निवार्थे समासाच्च तद्विषयादिति सूत्रेण छप्रत्ययः। तत्र हि इवे प्रतिकृताविति सूत्रात्प्रकृत इवार्थस्तदित्यनेन निर्दिश्यते। न छप्रत्ययस्तस्यानेन विधानात्। तथा चेवार्थविषयात्समासादपरस्मिन्निवार्थ एव छप्रत्ययो भवति इवे प्रतिकृतावित्यतः इवे इत्यस्याधिकारादिति प्रतिपादनात्। एवं च पतनात्तालेन काकवधस्येवोपनिपतता दस्युना देवदत्तस्य वधः कृत इति छप्रत्ययार्थ इति। एवमेवाजाकृपाणीयशब्दोऽपि व्युत्पाद्यः। तदेतत्काशिकामञ्जर्योरुदाहरणद्वयं वातपुत्रीयेत्युदाहरणोपलक्षणम्। अत एव तत्रान्धवर्तकीयमित्युदाहरणान्तरम्। तस्य हि वर्तिका नाम शकुनिविशेषः। अन्धहस्ते च तस्य पतनम्। तेन तस्य ग्रहणं च यादृच्छिकं तद्वदेव देवदत्तदस्युसमागमादिति प्रतिपाद्यत इति मनसि कृत्वा काशिकास्थोदाहरणद्वयेन प्रकृतमुदाहरणं संकलय्य त्रितयस्यापि तत्र साम्येन छप्रत्ययविषयतामुक्त्वा तत्रत्योपमाद्वयमुपमेयद्वयं च सहैव निर्दिश्य प्रकृतासङ्गतिप्रतिपादनम्। उक्ताशयेनैव वातपुत्रीयादिशब्दा इत्यादिपदम्। वातपुत्राणामिवेति पूर्वग्रन्थानुसारेण तालकृपाणपुत्रैरिति वातानामिति च वक्तव्ये वातैः पुत्राणामिति वचनं पुत्रेण वा तस्येव वा तेन पुत्रस्यापि यादृच्छिकी निवृत्तिः संभवतीति काकतालाजाकृपाणस्थल इव वध्यघातकभावनियमो नास्तीति प्रतिपादनायेति न दोषः। पुत्रैरिति वातानामिति च पाठस्तु स्वरस एव। **तद्धितेति**। छप्रत्ययाख्येति शेषः। **संपूर्णेति**। समासार्थोपमातद्धितार्थोपमा चेति उपमाद्वयस्यैव काकतालीयादिपदेनोपस्थितेस्तद्द्वयस्थले तच्छब्दानां संपूर्णार्थत्वेऽप्येकमात्रोपमास्थले संपूर्णार्थत्वाभावात्प्रकृते च प्रयुज्यमानोपदेशरूपवाक्यस्य ब्रह्मतत्त्वरूपार्थस्य च यादृच्छिकसमागमस्यैकस्यैव सत्त्वान्न संपूर्णार्थतेति तन्न्यायोदाहरणमत्रासङ्गतमिति भावः। अत एव युक्तिचरणस्थयाथार्थ्यं प्रमाणलक्षणमित्येतदाक्षेपाय प्रवृत्तकाकतालीयेऽतिव्याप्तिरित्येतन्मूलटीकायामुपमाद्वयमुपपादयिष्यत इति ज्ञेयम्। **यादृच्छिकसमागममात्रेऽपीति**। एकस्यैव यादृच्छिकसमागमस्य सत्त्वस्थलेऽपीत्यर्थः।





अस्य काकतालीयादिशब्दस्याप्रयोगोऽभियुक्तानाम् । **अयमपीति** । अत्रत्यो वातपुत्रीया इति प्रयोगोऽपीत्यर्थः । अङ्गीकृत्य चैतदुक्तम् । वस्तुतस्तु प्रकृतेऽपि उपदेशरूपवाक्यात्मकशास्त्रस्य ब्रह्मतत्त्वरूपार्थेन समागमस्येव तेन शास्त्रेण पुरुषे जनितब्रह्मतत्त्वज्ञानस्यापि वातकृतपुत्रनिवृत्त्युपमेयभूतस्य सत्त्वेन संपूर्णार्थत्वसंभवादित्यपि ज्ञेयम् । युक्तिचरणटीकायां ततश्च काकागमनतालपतनसमागमरूपस्य तालकृतकाकवधरूपस्य चोपमानस्यानुपादानात् प्रत्ययार्थोपमायाम् उपमानलोपः । समासार्थोपमायां वाचनिकोपमानलोपः । सर्वोऽप्ययं लोपः छप्रत्ययविधायक-शास्त्रकृत इत्येवमधिकं प्रतिपादितमस्ति तदपि तन्मूलं निष्कास्य व्याख्येयमस्ति तदप्यत्र लेख्यम् । ......... । अन्ये तु यदि ब्रह्मसाक्षात्कारवतां सद्यःशरीरपातोऽभ्युपगम्यते तर्हि पौरुषेयतया प्रसिद्धा ब्रह्मोपदेशा वातपुत्रीया आगमिकाः स्युः । साक्षात्कृतब्रह्मणां सद्यःशरीरपाताभावे तैर्यथादर्शनमन्यान्प्रति ब्रह्मोपदेशसंभवेन तत्परम्परया सर्वेषां ब्रह्मोपदेशप्राप्तावपि तेषां सद्यःशरीरपाताभ्युपगमे शरीरादिरूपोपदेशोपयोग्यभावेन तैरुपदेशानुपपत्त्या तदन्येषां च यथावत्तज्ज्ञानस्यैवाभावेनोपदेशकत्वानुपपत्तेरुपदेशपरम्पराया अन्धपरम्परात्वप्रसङ्गादिति मूलाभिप्रायोऽनेन टीका-ग्रन्थेन सूचित इत्याहुः । केचित्तूक्तविधयोपदेशपरम्पराया अप्रवृत्तौ ब्रह्मोपदेशाः वातागमनपुत्रोत्पत्तिकार्यकारण-भावबोधकवाक्यवत् वार्तामात्राः स्युरिति मूलार्थ इत्याहुः । **षष्ठीति** । अधीगर्थदयेषां कर्मणीति स्मरणान्मातुः स्मरतीत्यादाविव कर्मणि षष्ठीति योज्यम् । **व्याख्येति** । तत्र बन्धस्येश्वराधीनत्वयुक्त्या तथोक्तत्वाभावः । **स्मारणं व्यर्थमिति** । शिष्या एवैतच्छङ्कापरिहारं प्रागुक्तरीत्या करिष्यन्ति । ततश्चैतच्छङ्कोत्थानमप्यत्र न कार्यमित्याशयः । पुनराशङ्कामुत्थाप्य पूर्वोक्तस्मारणेन तत्परिहारं कृत्वा तत्रापि प्राप्तानुपपत्तिमाशङ्क्य तत्परिहारस्यात्र करणेनाधिक-प्रतिपादनार्थत्वादुक्तस्मारणस्य न वैयर्थ्यमित्याशयं द्योतयन्नुत्तरमूलमवतारयति **प्रसादस्यैवेति** । साक्षात्कारस्य बन्धध्वंससाधनत्वे प्राप्ता या अनुपपत्तिस्तस्याः प्रसादस्य बन्धध्वंससाधनत्वोक्तावपि कथं तदवस्थत्वम् । न हि प्रसादवादिना साक्षात्कारोऽपि तत्कारणतयोक्त इत्यत उक्तं **प्रसादस्यैवेत्यादीतीत्यन्तम्** । इत्येवंरूपेण तदवस्थयेति संबन्धः । वक्तव्यतया कारणान्तराभावादन्यथा साक्षात्कारवैयर्थ्यापत्तेश्चेति भावः । **न प्रसादसाधनमिति** मूले साक्षादिति शेषः । **अनुपपत्तेरिति** । संसारानुवृत्तिर्न स्यादित्यनुपपत्तेरित्यर्थः । **न प्रसादपक्ष इति** । प्रसादस्योक्त-रीत्या साधनान्तरसाध्यत्वेन सत्यपि साक्षात्कारे भक्तिपरावस्थारूपसाधनाभावेनैव प्रसादाभावसंभवात् संसारा-नुवृत्त्युपपत्तेरिति भावः । उक्तेत्यस्य स्थानप्रदर्शनं **यमधिकृत्येत्यादिनेति** । भक्तिरूपनिरूपणानन्तरं यमधिकृत्य 'यत्र नान्य-त्पश्यति सा निशा पश्यतो मुनेरि'त्याद्याः श्रुतिस्मृतय इति जिज्ञासोत्थेति वाक्यव्याख्यावसरे उक्तत्वादिति भावः । परावस्थेत्यस्य व्याख्या परिपाकावस्थेति । साक्षात्कारो न प्रसादसाधनमित्यादि वदतापि साक्षात्कारेण भक्तिपरावस्था तया च प्रसाद इत्येव स्वीकृतं भवति । साक्षात्कारातिरिक्तकारणाभावादिप्रयुक्तयुक्तेरित्याशयेन साक्षात्कारपरावस्थयोः कार्यकारणभावाश्रयणेऽपि प्रागुक्तानुपपत्तिस्तदवस्थेत्याशङ्कापरिहारपरतयोत्तरवाक्यमव-तारयति **नन्विति** । प्रसादोऽपीत्यनेन तत्साध्यबन्धध्वंसादिपर्यन्तं गृह्यते । एवमन्यत्रापि । ननु साक्षात्कारस्य बन्धध्वंसहेतुत्वे वा प्रसादहेतुत्वे वा प्राप्तानुपपत्तिपरिहारः साक्षात्साधनत्वाभावाश्रयणेनोपपन्नः । तत्रोक्तरीत्या द्वारसद्भावात् । न च साक्षात्कारभक्तिपरावस्थयोर्मध्ये कारणान्तरमस्ति । येन तद्विलम्बात्सत्यपि साक्षात्कारे भक्तिपरावस्थाभाव इति कल्पनोपपद्यत इत्याशयेनैव संपूर्णकारणरूपसामग्रीसद्भावस्याशङ्कने सति तत्परिहारः





कथमनेन स्यात् । प्रागभावः कार्योन्नेय इत्युक्ते कार्यं दृष्ट्वा प्रागभाव आसीदिति ज्ञानवत्कार्यभूतं प्रसादं दृष्ट्वा भक्तिपरावस्था ज्ञातव्येत्यस्यानुत्तरत्वात् । साक्षात्कारे सति भक्तिपरावस्था प्राप्तेत्युक्ते तस्मिन्सत्यपि तदभावे विलम्बहेतोरेव वक्तव्यत्वादित्यतो विलम्बहेतुं मूलाभिप्रेतं दर्शयति **ज्ञानेनाज्ञानेति** । लोके घटादिज्ञानेन तदज्ञान-निवृत्तौ कर्तव्यायां विरामपदोक्तविलम्बस्याभावः सिद्धः । यत्र हि तदानीमेव तत्कार्यकारणासंभवस्तत्रैव किञ्चित्कालं स्वव्यापारकरणाभावरूपावसानसंभवात् । न च ज्ञानस्य स्वोत्पत्तिकालानन्तरं स्वकार्यकारणत्वानुपपत्तिरस्ति । तथाच न्यायेन भगवज्ज्ञानेनाप्यज्ञाननिवृत्तौ कर्तव्यायां विलम्बाभावात्तेन तन्निवृत्त्यङ्गीकारे चाज्ञानकार्यस्यापि प्रागुक्तरीत्या निवृत्तिसिद्धेः संसारानुवृत्त्ययोग इति ज्ञानस्य साक्षाद्बन्धध्वंसहेतुत्वपक्षेऽनुपपत्तिर्यद्यप्यस्ति तथापीत्यर्थः । **सिद्धस्यापीति** । अयमर्थः । नैवं ज्ञानस्य भक्तिपरावस्थाहेतुत्वेऽनुपपत्तिः प्रसज्यते । भक्तिरूपं कारणं हि साक्षात्कारात्पूर्वमेवास्ति । तदभावे साक्षात्कारस्यैवानुदयात् । उक्तं च प्राक् दर्शनसाधनं चानुग्रह इत्येतन्मूले विषयवैराग्यतद्भक्तीति भक्तेरपि दर्शनसाधनानुग्रहात्पूर्वभावित्वम् । तथा च पूर्वसिद्धभक्तिरूपकारणस्य साक्षात्कारेण परावस्था क्रियते । सा च न साक्षात्कारोत्तरकाल एव किन्तु विलम्बेन । साक्षात्कारेणोपकृतं भक्त्याख्यं कारणं कदाचिदेव फलोन्मुखं भवति । यदा च भवति सैव तत्परावस्थेत्युच्यते । भक्तिस्तु पूर्वं विद्यमानापि पश्चा-त्साक्षात्कारेणोपकृतापि न परावस्थां तदैव लभते । किन्तु कालान्तरे । यथा यागस्य देवतोद्देशेन द्रव्यत्यागरूपतया क्षणिकत्वेन स्वर्गपर्यन्तमवस्थानानुपपत्त्या मध्ये कल्पितमपूर्वं न स्वोदयानन्तरमेव स्वर्गं जनयति । किन्तु स्वपरिपाककाल एव । परिपाकश्च विलम्बेन । यथा वा पुण्यपापे विद्यमाने अपि स्वफलं न स्वोदयानन्तरमेव भोजयतः किन्तु स्वपाकानन्तरम् । एवमन्यदप्यूह्यम् । एवं सिद्धभक्त्याख्यकारणस्य साक्षात्कारेणोपकृतस्य परिपाकानन्तरमेव प्रसादजनकत्वमित्येवं विलम्बोपपत्तेः साक्षात्कारे सत्यपि परावस्थाभावोपपत्त्या प्रसादाभावाद्युपपत्तिः । ततश्च कादाचित्कफलोन्मुखत्वलक्षणपरिपाकरूपभक्तिपरावस्थां प्रति साक्षात्कारस्य कारणतायाः अपूर्वादौ क्लृप्तकाला-न्तरीयपरिपाकदृष्टान्तेनोपपत्त्या कार्यगम्येति मूलस्याप्युक्तरीत्या परिपाके विलम्बोपपत्त्यभिप्रायान्न साक्षात्कारस्य भक्तिपरावस्थाकारणत्वाभ्युपगमे काचिदनुपपत्तिरिति । ननु साक्षात्कारेणैव मोचकप्रसादे इत्यङ्गीकृत्य तस्य प्रारब्धकर्मप्रतिबद्धत्वान्मोक्षाभावोपपत्तेरित्येव कुतो न समाधीयते । किं साक्षात्कारप्रसादयोर्मध्ये भक्तिपरावस्थां प्रकल्प्य तदभावेन मोक्षविलम्ब इति कल्पनया । अत एव प्रारब्धप्रतिबन्धादिवादानामुपपत्तिरित्यत आह मूले **प्रारब्धेति** । स्वतन्त्रभगवत्प्रसादप्रतिबन्धकत्वाभावे कर्मणामस्वतन्त्रतैव वाच्येति नाचेतनत्वोक्तिः सङ्गतेत्यत आह **अचेतनानामितीति** । एतच्च मूलटीकयोरचेतनत्ववचनं पररीत्यैव । वस्तुतोऽचेतनशरीरकाणां स्वस्वकर्मफलभाजां चेतनताया एव 'अचेतनशरीराणि स्वकर्मफलभाञ्जि च । प्रत्येकं तेषु चानन्ते'त्यादिना भक्तिपादे कर्मणां चेतनत्व-स्यानुभाष्ये प्रतिपादयिष्यमाणतयाऽचेतनवदस्वतन्त्राणामित्येवमस्वतन्त्रत्वमात्रे तात्पर्यमिति न विरोध इति ज्ञेयम् ।

**स०व्र०**— बन्धस्य ज्ञाननिवर्त्यत्वमुक्तमिति भ्रान्त्या चोदयति **स्यादिति** । **साक्षात्कृतेति** । ब्रह्मापरोक्षज्ञानरहितानां च संप्रदायज्ञानाभावेनोपदेशकत्वाभावात्साक्षात्कारवतामेवोपदेशा वातपुत्रीयाः आकस्मिका भवेयुरित्यर्थः । **वातपुत्रीया इति** । अत्र वातपुत्रशब्दौ वृत्तिविषयवातपुत्रसमवेतक्रियापरौ । तेन वातागमनमिव पुत्रपतनमिव वातपुत्रमिति । इवार्थे समासाच्च तद्विषयात् इवार्थविषयात्समासपदादिवार्थे छ इति ज्ञापकात्समासः ।





उभयत्रोपमेयादि कस्यचिद्ब्रह्म(णः )साक्षात्कारः तदैव यदृच्छया ब्रह्मोपदेशप्रवृत्तिः । तेन साक्षात्कारब्रह्मोपदेशानां चैककालिकत्वं वातपुत्रसमागमपतनसदृशमिति फलति । ततो वातपुत्रमिव वातपुत्रीयमिति द्वितीयस्मिन्निवार्थे समासाच्च तद्विषयादिति सूत्रेण इवे प्रतिकृतावित्यधिकारस्थेन छप्रत्ययः । तथा च पतनेन व्यथितो यथा वातेन हन्यते तथा ब्रह्मोपदेशेषु साक्षात्कृतत्वप्रसिद्धिरुत्पद्यत इत्यर्थः । ततश्चात्र वातागमनपुत्रपतनरूपस्य वातकृत-पुत्रबाधरूपस्य चोपमानस्यानुपादानात् प्रत्ययार्थोपमायामुपमानलोपः । छप्रत्ययार्थोपमायामुपमानलोपः । समासार्थोपमायां वाचकोपमानलोपः सर्वोऽप्ययं लोपः छप्रत्ययविधायकशास्त्रकृत इति सूक्ष्मया दृष्ट्या अवगन्तव्यम् । ननु तेषामुपदेशानामनादित्वेन नोपदेशकापेक्षेत्यत उक्तम् **पौरुषेया इति** । **उक्तार्थस्येति** । कर्मणि षष्ठी । 'अधीगर्थदयेशां कर्मणि' इति स्मरणात् । तथा चोक्तार्थं न स्मरतीत्यर्थः । **उक्तेति** । जिज्ञासोत्थ-ज्ञानजादित्येतद्व्याख्यानावसरे इदमुक्तं भवतीत्यादिनेत्यर्थः ।

**विठ्ठ०**— ज्ञानिनां मोक्षद इत्येतत्सङ्गमयितुं तथापि नाविद्याबन्धस्य ब्रह्मज्ञाननिवर्त्यत्वमिति शङ्कते **स्यादेतदिति** । **वातपुत्रीया इति** । साक्षात्कृतब्रह्मत्वेन प्रसिद्धानां शुकनारदादीनां पुरुषाणामुपदेशाः वातपुत्रीयास्स्युरित्यर्थः । वातपुत्रीया वायुवार्ता अप्रसिद्धकर्तृका यावदित्येके वातस्यागमनमिव पुत्रस्योत्पत्तिरिव यादृच्छकाः तत्सदृशा आकस्मिका यावदित्यपरे । न ब्रह्मसाक्षात्कारो बन्धनिवर्तकः किन्तु परिपक्वभक्तिजनितः परमप्रसाद एव अतो यावद्भक्तिपरिपाकः स्वाधिकारानुसारेण भवति तावदविद्यानुवृत्तिः युक्तेत्याशयेन परिहरति **मैवमिति** । अधीगर्थदयेशां कर्मणि इति सूत्रादत्रोक्तार्थस्येति षष्ठी कर्मणि, उक्तार्थमिति यावत् । **अधीगर्थाः** स्मृत्यर्थाः ।

**चषकः**— **वातपुत्रीया इति** । वातागमनपुत्रपतनसमागमसदृशा आकस्मिका इत्यर्थः । **उक्तार्थस्येति** । अधीगर्थदयेशां कर्मणीत्यनुशासनान्निरूपकताप्रत्यासत्त्या स्मृत्यन्वयिकर्मत्वार्थिका षष्ठी ।

**गूढ०**— **श्रुतिस्मृतीनामिति** । ब्रह्मज्ञानेनाविद्यानिवृत्तिबोधकानामिति शेषः । ननु ब्रह्मसाक्षात्कारवतां सद्यःशरीरपातो भवतीत्यत आह **साक्षात्कृतेति** । तत्पुत्रसंबन्धिनः ब्रह्मोपदेशाः पौरुषेयाः प्रसज्येरन् अपौरुषेयागमे साक्षात्कारवतां सद्यःशरीरपातस्याप्रतिपादनादेतदप्रामाणिकमिति भावः । यद्वा तत्पुत्रसंबन्धिनः ये ब्रह्मोपदेशाः ब्रह्मसाक्षात्कारो भवत्यनन्तरमेव मोक्षो भवतीत्येवंरूपा उपदेशाः पौरुषेयाः अप्रामाणिकाः स्युः । न च ते अप्रामाणिकाः तस्मादेतदयुक्तमित्यर्थः । अधीगर्थेतिस्मरणादर्थस्येति कर्मणि षष्ठी ।

**प्रदीपः**— बन्धस्य ज्ञाननिवर्त्यत्वमुक्तमिति भ्रान्त्या चोदयति **स्यादिति** । साक्षात्कारस्यैव निवर्तकत्वं अज्ञानमात्रमित्याशङ्क्य तदपि असिद्धमित्याह **साक्षादिति** । साक्षात्कारे सत्यपि निश्चलभक्त्यभावेन तज्जन्यप्रसादा-भावात्प्रारब्धकर्मोपभोगार्थं संसारानुवृत्तिरित्याह **मैवमित्यादिना** । अर्थस्येति कर्मणि षष्ठी अधीगर्थदयेशां कर्मणीति स्मरणात् उक्तस्याप्यर्थस्याधिकरणविवक्षया पुनराशङ्कामुखेनोपपादनं न दोषाय । ननु चेत्यानन्दस्य स्वरूपत्वं अनुभवस्यापि साक्षिरूपस्य सिद्धम् । अनुभवस्यानन्दविषयत्वमपि स्वाभाविकमेवेत्यर्थः ।

**१९३ सु०— तान्यपि तदिच्छाविशेषानुगृहीतानीति चेत् । भगवदिच्छयोर्विरोधप्रसङ्गात् । मोचकप्रसाद एवैवंरूप इति चेत् । तर्हि स एवापरिपूर्ण इत्येवागतम् । अन्यथा कथं प्रारब्धानामप्युपमर्दं वक्ष्यति । प्रारब्धप्रतिबन्धादिवादास्तूपचरितार्था एव ।**

**बिन्दुः— अन्यथेति** । कर्मणां प्रतिबन्धकत्वे । न हि वह्न्यादिः स्वप्रतिबन्धकं मण्यादिकमुपमृद्नातीति भावः । वक्ष्यति सूत्रकार उपमर्दं चेत्यनेन सूत्रेणेत्यर्थः ।

**परि०— विरोधेति** । इदानीमिमं मोचयामि प्रारब्धवशान्न विमोचयामीत्येवंरूपविरोधप्रसङ्गादित्यर्थः । **अन्यथेति** । विष्णुप्रसादस्य ज्ञानिप्रारब्धप्रतिबद्धत्वे सति तृतीयाध्यायचतुर्थपादे 'उपमर्दं चे'ति सूत्रेऽनेककालं भोक्तव्यप्रारब्धस्याल्पभोगेन ज्ञानिन उपमर्दकथनमयुक्तं स्यात् । ज्ञानजन्यप्रसादेनैवोपमर्दस्य वाच्यत्वात्प्रतिबद्धत्वे तदयोगादिति भावः । नन्वेवं तर्हि ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् । एवं मुक्तिफलानियम इत्यादौ सूत्रे अवसन्नं यदारब्धं कर्म तत्रैव गच्छति । न चेद्बहूनि जन्मानि प्राप्यैवान्ते न संशय इत्यादौ च ज्ञानिनः प्रारब्धप्रतिबन्धे सति न तस्मिन्नेव जन्मनि मुक्तिरित्यादिवादः कथमित्यत आह **प्रारब्धेति** । ईश्वरप्रसादपूर्तिः एव नास्तीत्येवमर्थ इत्यर्थः ।

**यादु०—** ननु मोचकप्रसादरूपेच्छैका प्रतिबन्धककर्मानुग्राहिका चापरेतीच्छाद्वयं नाङ्गीक्रियते येन विरोधः स्यात् । अपि तु मोचकप्रसाद एवैवंरूपः प्रतिबन्धककर्मानुग्राहक इत्यङ्गीक्रियते । अतो न विरोध इत्याशङ्क्ते **मोचकप्रसाद इति** । **अन्यथेति** । भगवदिच्छाया एव प्रारब्धकर्मानुग्राहकत्व इत्यर्थः । भगवदिच्छानुगृहीतकर्मणां प्रतिबन्धकत्वे उपमर्दं चेत्यत्र वक्ष्यमाण उपमर्दोऽयुक्तः स्यात् । तदनुग्राहकभगवदिच्छाया मोघत्वप्रसङ्गादिति भावः । नन्वेवं भवत्पक्षेऽपि 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्यत' इत्यादिवादानुपपत्तिः । अत्र हि प्रारब्धकर्मणां प्रतिबन्धकत्वमुच्यते । तदन्यथाऽनुपपत्त्या मोचकप्रसादोऽपरोक्षज्ञानानन्तरं संपूर्ण एवास्तीत्यवगम्यते । अन्यथा तेषां प्रतिबन्धकत्वस्यैवायोगात् । सति पुष्कलकारणे कार्यानुत्पत्तिप्रयोजकं हि प्रतिबन्धकं नामेत्याशङ्कां परिहरति **प्रारब्धप्रतिबन्धेत्यादिना** । आदिपदेन तत्क्षयानन्तरमेव मोक्षं प्रतिपादयतामथ संपत्स्यत इत्यादिवादानां सङ्ग्रहः । **उपचरितार्था एवेति** । मोचकप्रसादप्रतिबन्धद्वारा मोक्षेऽपि प्रतिबन्धकत्वादिति भावः ।

**वं०प०—** ननु 'न मोचकप्रसादः प्रारब्धकर्मप्रतिबद्धः कर्मणामचेतनत्वेन प्रतिबन्धकत्वायोगात्' इत्युक्तमयुक्तम् । मोचकप्रसादरूपेच्छा एका । प्रतिबन्धकीभूताचेतनकर्मानुग्राहिका चेच्छाऽपरेतीच्छाद्वयाङ्गीकाराद्भगवदिच्छानुगृहीतकर्मणां प्रतिबन्धकत्वोपपत्तिरित्याशङ्क्य निराकरोति **तान्यपीति** । **तर्हीति** । प्रारब्धकर्मानुग्राहकत्वेन प्रतिबन्धकत्व इत्यर्थः । **अन्यथेति** । भगवदिच्छाया एव प्रारब्धकर्मानुग्राहकत्वे ज्ञानेन प्रारब्धानामुपमर्दो वक्ष्यमाणो न युक्तः स्यात् । 'न वै जनो जातु कथञ्चनाव्रजेन्मुकुन्दसेव्यन्यवदङ्ग संसृतिम्' इति वचनेनोपमर्दस्वरूप-





मुक्तम् । यथाऽज्ञानी कर्मवशादश्वो भूत्वा दुःखमनुभवति । तथा ज्ञानिनोऽयमश्वो भूत्वा दुःखमनुभोक्तव्यमिति प्रारब्धकर्मास्ति । तस्य ज्ञानेनोपमर्दश्चेदश्वजन्म प्राप्नोति तावद् दुःखं नानुभवतीति ह्युपमर्दो वक्तव्यः । तत्रैतादृशकर्मानुग्राहको भगवत्प्रसादः तर्हि ज्ञानेनोपमर्दो न स्यात् । ज्ञानस्यैव प्राबल्यप्राप्त्या यथोक्तफलदातृ-कर्मानुग्राहकभगवदिच्छाया मोघत्वप्रसङ्गादित्यर्थः । ननु तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्यत इति प्रारब्धकर्मणां मोक्षप्रतिबन्धकत्वं तावदुच्यते । तदन्यथाऽनुपपत्त्याऽपरोक्षज्ञानानन्तरं मोचकप्रसादः संपूर्ण एवास्तीत्यागतम् । अन्यथा प्रतिबन्धकत्वमेव न स्यात् । सति पुष्कलकारणे यस्मिन्सति यन्नोत्पद्यते तस्यैव तत्र प्रतिबन्धकत्वात् । तथा च संपूर्णमोचकप्रसादसद्भावात्साक्षात्कृतब्रह्मणां सद्यःशरीरादिपाते वातपुत्रीया ब्रह्मोप-देशाः प्रसज्येरन्निति दूषणं भवत्पक्षेऽपि समानमित्यत आह **प्रारब्धेति** । तस्य तावदेवेति वाक्ये कर्मणां साक्षान्मोक्षप्रतिबन्धकत्वमभिप्रेतं स्यात्तदा तदन्यथाऽनुपपत्त्या संपूर्णप्रसादोऽप्यस्तीति स्यात् । न चैवम् । प्रारब्धकर्मणामपरोक्षज्ञानिषु मोचकप्रसादोत्पत्तिप्रतिबन्धकत्वमेवोच्यते । मोक्षप्रतिबन्धकत्वोक्तिस्तूपचरितैव मोक्षसाधनीभूतप्रसादाप्रतिबन्धकत्वात् । अतो नोक्तदोष इति भावः ।

**आनन्दः— तान्यपीति** । तथाच प्रसादप्रतिबन्धकत्वं स्यादिति भावः । भगवदिच्छयोः प्रसादरूपेच्छा-विशेषकर्मानुग्राहकेच्छाविशेषयोरित्यर्थः । **एवंरूपः** कर्मादिप्रतिबन्धकशून्यः । एवं च तस्य कर्माद्यप्रतिबद्ध-त्वात्तत्सत्त्वे संसारनिवृत्तिः स्यात् । न च भवति तस्मान्मोचकः प्रसाद एव पूर्णो नास्तीति वक्तव्यमिति । परिहरति **स एवेति** । यद्वा मोचकप्रसाद एवंरूप एव इच्छाविशेषेण रुद्ध एव । तथाच को दोष इत्यर्थः । तर्हि रुद्धोऽपूर्ण एवेति न मोचक इत्याह **स एवेति** । **अन्यथेति** । पूर्णस्य प्रसादस्य कर्मणां प्रतिबन्धकत्व इत्यर्थः । प्रसादस्य प्रतिबद्धत्व इत्यर्थः । **स्तुत्यधिकरणे** उपमर्दं चेति सूत्रे ।

**कं०रा०— तानीति** । एतस्य मोक्षः प्रारब्धकर्मभिः प्रतिबद्धोऽस्त्वितीश्वरेच्छाविशेषानुगृहीतत्वात्प्रारब्ध-कर्मणां भगवत्प्रसादप्रतिबन्धकत्वं युक्तमिति भावः । **भगवदिति** । एनं मोचयामीति मोक्षविषयकभगवदिच्छाया एतस्य मोक्षः प्रारब्धकर्मभिः प्रतिबद्धोऽस्त्विति मोक्षाभावविषयकभगवदिच्छायाश्च विरोधप्रसङ्गादित्यर्थः । न चैतदिच्छाद्वयमीश्वरे युक्तं भगवत्त्वादेवेत्यभिप्रेत्य भगवदित्युक्तम् । मोक्षप्रतिबन्धकप्रारब्धकर्मावसाने एनं मोचयिष्यामीत्येवमाकारकत्वादपरोक्षज्ञानानन्तरभाविमोचकप्रसादस्य नोक्तदोष इत्याशयेन शङ्कते **मोचक इति** । **तर्हीति** । कालान्तरे मोचयिष्यामीत्येवमाकारत्वे प्रसादस्य स्वोत्पत्त्यनन्तरमेव फलसंपादके राजप्रसादे परिपूर्णत्व-व्यवहारदर्शनादस्य चातथात्वादयं प्रसादोऽपरिपूर्ण इत्येवावगतमित्यर्थः । **अन्यथेति** । अपरोक्षज्ञानानन्तरमेव परिपूर्णप्रसादो जातः स च प्रारब्धकर्मप्रतिबद्ध इत्यङ्गीकारे ज्ञानसामर्थ्यात्प्रारब्धानामप्युपमर्दं सूत्रकार उपमर्दं चेत्यत्र कथं ब्रूयात् । न कथञ्चित् । न हि संभवति ज्ञानादप्युत्तमसाधनम् । परिपूर्णभगवत्प्रसादमपि प्रतिबध्नतां प्रारब्धानां ज्ञानेनोपमर्द इति भावः ।

**श्रीनिधि०— तान्यपि** प्रारब्धकर्माण्यपि । **भगवदिच्छयोरिति** । एनमिदानीं मोचयामि । एनं पुनः प्रारब्धकर्मभिः प्रतिबध्नामीतीच्छयोरित्यर्थः । **एवंरूप इतीति** । एवं प्रारब्धकर्मसमाप्तौ सत्यहं मोचयामीत्येवंरूप





इत्यर्थः । **स एवापरिपूर्ण इति** । परिपूर्णत्वे तदानीमेव मोचयामीतीच्छाप्रसङ्गादिति भावः । **अन्यथेति** । प्रारब्धकर्मप्रतिबद्धत्वे भगवत्प्रसादस्येत्यर्थः । अनादेर्बन्धस्य निवृत्तिः प्रमितत्वादङ्गीकार्येत्युक्तम् । तत्रावयवनाशेन वा तत्संयोगनाशेन वा द्रव्यनाशो दृष्टः । कथमत्र विनाश इति शङ्कायां **तृतीयः प्रकारोऽनुसर्तव्य** इत्युक्तम् । इदं च वैयात्येन वदन्तं प्रत्येवोक्तम् ।

**वा०चं०**— प्रतिबन्धकीभूतकर्मानुग्राहकभगवदिच्छाविशेषो हि नैनं मोचयामीत्याकारो वाच्यः । प्रसादश्चैनं मोचयामीत्याकारः । एवं च प्रसादस्येच्छाविशेषानुगृहीतकर्मप्रतिबद्धत्वाभ्युपगमे भगवदिच्छयोर्विरोधप्रसङ्ग इत्याह **भगवदिति** । ननु न कर्मानुग्राहको भगवदिच्छाविशेषः प्रसादातिरिक्तोऽभ्युपगम्यते येन विरोधः स्यादपि तु मोचको भगवदिच्छाविशेषरूपः प्रसाद एव च प्रारब्धकर्मावसान एनं मोचयिष्यामीत्याकारोऽतो नानुपपत्तिरित्याशङ्कते **मोचक इति** । तर्हि प्रसादे जातेऽपि तद्विषयीभूतप्रारब्धकर्मावसानस्याभावे विषयाभावे इच्छाया अपूर्तेर्लोक-व्यवहारसिद्धत्वात्प्रसादस्वरूपं संपूर्णं नास्तीत्येव प्राप्तं न तु कर्मादिप्रतिबद्धमिति । यथा विद्याचरणादिना प्रभोरागामिपर्वकालेऽस्मै गां दास्यामीतीच्छाविशेषे जातेऽपि तदिच्छाविशेषविषयीभूतकालविशेषस्याप्रास्येच्छा-विशेषोऽपूर्ण इत्युच्यते तद्वत् । तथाच प्रसादस्यापूर्त्या साधनपूर्त्यभावे प्राप्तेऽपि प्रसादस्य प्रारब्धप्रतिबद्धत्वं नैव सिद्धम् । सति पुष्कलकारणे कार्याभावप्रयोजकस्यैव प्रतिबन्धकत्वादित्याशयेनाह **तर्हीति** । युक्त्यन्तरं चाह **अन्यथेति** । प्रारब्धकर्मणां प्रसादप्रतिबन्धकत्वे प्रसादेन कर्मोपमर्दोक्तिरयुक्ता । न हि प्रतिबद्धं प्रतिबन्धक-मेवोपमर्दयतीति भावः । नन्वेवं प्रारब्धकर्मणां प्रतिबन्धकत्वाभावे तद्बोधकवाक्यविरोधः । तथा ज्ञानस्य मोक्ष-प्रसादसाधनताऽनङ्गीकारे तद्बोधकवाक्यविरोधश्चेत्यत उक्तयुक्त्या प्रारब्धकर्मणां प्रतिबन्धकत्वाभावात्सति प्रतिबन्धके कार्योत्पत्तिविलम्बवत्प्रारब्धकर्मदशायां साधनपूर्त्यभावेऽपि कार्योत्पत्तिविलम्बेन प्रतिबन्धकत्वोक्तेरौप-चारिकत्वाज्ज्ञानस्य साक्षान्मोक्षसाधनताया अप्युक्तरीत्याऽनुपपत्तेर्मोक्षसाधनप्रसन्नभगवद्व्यापारभूतप्रसादसाधन-भक्तिसाधनतया मोक्षसाधनत्वोक्तेरौपचारिकत्वमिति नोक्तानुपपत्तिरित्यभिप्रेत्य ननु अनादेरित्यारभ्योक्तप्रमेयस्य ज्ञानिनां मोक्षद इत्युक्तोपपादकत्वान्नासङ्गतिरित्यपि सूचयति **प्रारब्धेति** ।

**वा०र०**— नन्वचेतनतया कर्मणा स्वसामर्थ्येन भगवत्प्रसादप्रतिबन्धकत्वाभावेऽपि राजगौरवाद्राज-भृत्येनामात्यस्येवानुग्राहकेच्छासामर्थ्यात् कर्मणः भगवत्प्रसादप्रतिबन्धकत्वमस्त्विति शङ्कते **तान्यपीति** मूलम् । अपिशब्देन अचेतनत्वमप्रयोजकमिति सूचयति **भगवदिच्छयोरिति** । नैनं मोचयिष्याम्येनं मोचयिष्यामीत्येवंरूपयो-स्तदिच्छयोरित्यर्थः । **तद्विषयीभूतेति** । प्रारब्धकर्मावसाने एनं मोचयिष्यामीत्याकारप्रसादं प्रति प्रारब्धकर्माव-सानस्य विषयत्वादिति भावः । प्रारब्धकर्मावसानाभावे प्रसादस्वरूपं संपूर्णं नास्तीत्येव प्राप्तमिति संबन्धः । तत्कुत इत्यत उक्तं विषयाभावे इच्छाया इत्यादिसिद्धत्वादित्यन्तम् । प्रतिबद्धमितीत्यस्य न प्राप्तमिति संबन्धः । उक्तमेव दृष्टान्तेन स्पष्टयति **यथा विद्येति** । **पर्वकाल इति** । उपरागादिरूप इत्यर्थः । **सति पुष्कलेति** । एतत्प्रतिबन्धकत्व विचारस्त्वस्माभिरग्रेतनमूलस्थसतीत्यादिलक्षणविचारावसरे करिष्यते । प्रतिबद्धमिति कर्तृ-कीर्तनम् । प्रतिबन्धकमिति द्वितीयान्तम् । स्वयं येन प्रतिबद्धं तत्प्रतिबन्धकमेवेत्यर्थः । केचित् विरोधप्रसङ्गात् ।





न च विरोधो युक्तस्तस्मान्न प्रतिबद्धः प्रसाद इति भावः । तर्हि मोचकप्रसादसत्त्वात्कथं संसारोपलम्भ इत्याशङ्कते **मोचक इति** । अत्र यदि । तर्हि संसारोपलम्भः कथमिति शेषः । एवकारो भिन्नक्रमः । एवं च मोचकः प्रसाद एवंरूप एव यदि प्रारब्धकर्मप्रतिबद्ध एव तर्हि तस्य सत्त्वात्कथं संसारोपलम्भो न कथमपीत्यर्थः । तर्हि मोचकप्रसादस्य संसारनिवृत्तिं प्रति चरमकारणतायाः श्रुतिसिद्धत्वात्संसारोपलम्भान्यथानुपपत्त्या तस्या-पूर्णत्वमेव प्राप्नोति न तु प्रतिबद्धत्वमिति परिहरति **तर्हीति** । **अन्यथेति** । पूर्णस्यापि प्रतिबद्धत्व इत्यर्थ इति व्याचक्षते इति गुरुचरणाः । **तद्बोधकवाक्येति** । तस्य तावदेव चिरं यावन्न विमोक्ष्येथ संपत्स्यत इत्यादि-वाक्येत्यर्थः । तद्बोधकेति द्वितीयम् । तमेवं विद्वानमृत इह । तमेवं विदित्वाऽतिमृत्युमेतीत्यादिवाक्यं ज्ञानस्य मोक्षसाधनत्वबोधकम् । ज्ञानी प्रियतमः यस्य प्रसादादित्येतदुत्तरार्धे नारायणो विचिन्त्य इत्यादिवाक्यं ज्ञानस्य प्रसादसाधनत्वबोधकमिति विवेकः । **उक्तयुक्त्येति** । अचेतनानामित्युक्तास्वातन्त्र्ययुक्त्येत्यर्थः । **साधनपूर्त्य-भावेऽपीति** । प्रारब्धकर्मदशायां यः साधनपूर्त्यभावः तस्मिन् सत्यपीत्यपिपदेन प्रतिबन्धकसमुच्चयः । **नासङ्गति-रिति** । नोद्भाष्यत्वशङ्केत्यर्थः ।

**स०व्र०— विरोधप्रसङ्गादिति** । एनमिदानीं मोचयामि एनं प्राच्यकर्मभिरिदानीं प्रतिबध्नामीति विरोध-प्रसङ्गादित्यर्थः । **एवंरूपः** प्रारब्धकर्मावसाने मोचयामीत्येवंरूपः ।

**विठ्ठ०— भगवदिच्छयोरिति** । एनं मोचयामीति इच्छालक्षणसमय एव एनं कर्मभिर्बध्नामीति इच्छाङ्गीकारात् तयोरिच्छयोः विरोधप्रसङ्गादित्यर्थः । नेच्छाद्वयमङ्गीक्रियते येन विरोधः स्यात् अपि तु मोचकप्रसादरूपेच्छैव प्रतिबन्धककर्मानुग्राहिका इत्युच्यते इति शङ्कते **मोचकेति** । **अन्यथेति** । प्रारब्धकर्मणां प्रसादप्रतिबन्धकत्वाङ्गीकारे उपमर्दं चेति वक्ष्यमाणप्रसादेन कर्मोपमर्दोक्तिः अयुक्ता स्यादित्यर्थः । तस्य तावदेव चिरं यावन्न विमोक्ष्ये मुक्तिगाश्चाधिकारिणामित्यादीनां प्रारब्धशापप्रतिबन्धवादानां तर्हि का गतिरित्यत आह **प्रारब्धेति** । निमित्तमात्रतयोपचरितार्था इत्यर्थः ।

**चषकः— भगवदिच्छयोः** मोचकप्रसादरूपप्रतिबन्धकर्मानुग्राहकरूपेच्छयोः । **एवंरूपः** प्रतिबन्धक-कर्मानुग्राहकरूपः ।

**गूढ०— तान्यपीति** । तथाच प्रसादप्रतिबन्धकत्वं स्यादिति भावः । भगवदिच्छयोः प्रसादरूपेच्छा-विशेषकर्मानुग्राहकेच्छाविशेषयोरित्यर्थः । एवंरूपः कर्मादिप्रतिबन्धकशून्य इत्यर्थः । एवं च तस्य कर्माद्य-प्रतिबद्धत्वात्तत्सत्त्वे संसारनिवृत्तिः स्यात् । न च भवति तस्मान्मोचकः प्रसाद एव पूर्णो नास्तीति वक्तव्यमिति परिहरति **स एवेति** । यद्वा मोचकप्रसाद एवंरूप एव इच्छाविशेषेण रुद्ध एव । तथाच को दोष इत्यर्थः । तर्हि रुद्धोऽपूर्ण एवेति न मोचक इत्याह **स एवेति** । **अन्यथेति** । पूर्णस्यापि प्रतिबद्धत्व इत्यर्थः । **स्तुत्यधिकरणे** उपमर्दं चेति सूत्रे ।





**१९४ सु०— वस्तुतस्तु भगवानेव अनादेरपि बन्धस्य निवर्तक इति साधूक्तं 'ज्ञानिनां मोक्षदश्च स' इति।**

**यादु०**— नन्वनादेर्बन्धस्य कथं निवृत्तिरिति शङ्काया अनादित्वमनिवृत्तिप्रयोजकं न भवति किन्तु निवर्तकाभाव एव प्रयोजकः । प्रकृते तु निवर्तकं प्रमितमेवातोऽनादेरपि बन्धस्य निवृत्तिरुपपन्नेति पूर्वं समाधानमभिहितम् । इदानीं वस्त्वनादित्वमनिवृत्तिप्रयोजकं तथाऽप्यघटितघटकैश्वर्ययोगादनादित्वेनानिवर्त्यतया प्रसक्तस्यापि बन्धस्य निवर्तकः परमेश्वर इति तत्र का कथन्तेति समाधानान्तरं वदन्नुपसंहरति **वस्तुतस्त्विति** । **भगवान्** अघटितघटकैश्वर्यवान् । एवकारेणानादित्वमनिवर्त्यत्वप्रयोजकं भवदपि न सर्वथा किन्तु भगवदितरा-निवर्त्यत्वप्रयोजकमेवेति सूचयति । अनादेरित्यनन्तरमत एवानिवर्त्यतया प्राप्तस्यापीति शेषः ।

**कं०रा०**— **भगवानिति** । समग्रैश्वर्यादिमान् पुरुषोत्तम एव यदाऽनादेर्बन्धस्य विध्वंसनं करोतीत्यङ्गीक्रियते तदाऽनादेः कथं निवृत्तिरिति चोद्यानवकाश इति भावः ।

**श्रीनिधि०**— न तु विनीतं प्रतीति भावेन तं प्रति समाधानमाह **वस्तुतस्त्विति** । **भगवानेवानादेरिति** । तस्याघटितघटकत्वेनैव धर्मिग्राहकमानसिद्धत्वात् । तथा च कात्र कथन्ता ।

**स०व्र०**— अनादित्वस्यानिवृत्तिं प्रत्यप्रयोजकत्वमित्युक्तम् **अनादेरपीत्यादिना** । अधुना प्रयोजकत्व-मङ्गीकृत्यापि निवृत्तिरुपपन्नेति पक्षान्तरमाह **वस्तुतस्त्विति** । अनादेरित्यनन्तरं अत एवानिवर्त्यस्येति शेषः । तेनापिशब्दस्य संबन्धः । भगवान् अघटितघटनसामर्थ्योपेतः । अपि इति हेत्वर्थगर्भं विशेषणम् । तथा च युक्त्या अनिवर्त्यतया प्रसक्तस्यापि बन्धस्याचिन्त्यशक्त्या हरिर्निवर्तक इति भावः ।

**वि०ठ०**— निष्कर्षमाह **वस्तुतस्त्विति** । **भगवानेवे**त्यत्र प्रसन्न इति शेषः ।

**चषकः**— अनादित्वमनिवृत्तावप्रयोजकीकृत्य निवृत्तिप्रयोजकसामग्र्येव तत्प्रयोजिकेति प्रकृते तादृश-सामग्र्याः प्रमिततयाऽनादेरपि बन्धस्य निवृत्तिः सङ्गच्छत इति [१]समाहितिमनादेर्बन्धस्य कथं निवृत्तिरिति शङ्कायाः विभाष्य[२] संप्रत्यनादित्वस्यानिवृत्तिप्रयोजकत्वोपगमेऽप्यनिवर्त्यतया प्रसक्तस्यापि बन्धस्याघटितघटकैश्वर्य-लक्षणोपायात्परमात्मैव विध्वंसं करोतीति समाहित्यन्तरं विधत्ते **वस्तुतस्त्विति** । **भगवान्** अघटितघटकैश्वर्यवान् । एवकारेणानादित्वस्येशान्यकर्तृकविध्वंसनक्रियाकर्मताराहित्यनिर्वाहकतैव नेशकर्तृकतत्क्रियाकर्मताराहित्यनिर्वा-हकतेति ध्वन्यते ।

---

([१] समाधानम् । [२] उक्त्वा)





**१९५ सु०— ननु चानन्दः स्वरूपमेव। स चाविद्यावृतोऽविद्यानिवृत्तौ स्वतः सिद्ध एव। अनुभवोऽप्येवमेव। विषयित्वमप्यनुभवस्वभावो न त्वागन्तुको धर्मः। ततो मोक्षदानात्कथं पृथगानन्दादिदानम्। उच्यते। परमेश्वरशक्तिरेव जीवस्वरूपावरणं मुख्यम्। अविद्या तु निमित्तमात्रम्। ततोऽविद्यायां निवृत्तायामपि नाशेषानन्दाभिव्यक्तिर्यावदीश्वर एव स्वकीयां बन्धकशक्तिं न ततो व्यावर्तयति। अत एवानन्दह्रासवृद्धी वक्ष्येते इति।**

**बिन्दुः— अनुभव इति**। आनन्दानुभव इत्यर्थः। **स्वकीयां बन्धकशक्तिमिति**। नन्वीश्वरशक्तिरपि कथं प्रतिबध्नीयात्। आनन्दतदनुभवविषयतादीनां जीवस्वरूपत्वेन स्वतःसिद्धत्वादिति चेत्। कथमित्यस्य कोऽर्थः। किं कारणं पृच्छसि किं वा इतिकर्तव्यतारूपप्रकारं आहोस्वित् प्रमाणं वा। आद्ये यत्किञ्चिदिच्छायाः जनकं पृच्छ्यते उत प्रतिबन्धे कर्तव्ये अपेक्षितं वा। आद्ये तु तस्या अनादित्वान्न किञ्चिदित्येवोत्तरम्। अन्त्ये तु अनादिः कामकार्यप्रवाह एवेत्यवेहि। वक्ष्यति चैतद्भगवानेव वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयतीत्यादौ। द्वितीये तु अस्ति प्रकारविशेष इति वदामः। स एव क इति चेत् किं शृङ्गग्राहिकान्यायेन स दर्शनीय इत्यागच्छ तर्हि नूनं मन्यामहे सर्वमतीन्द्रियमेवमेवाद्राक्षीरिति। अद्धेति चेत्। आचक्ष्व तर्हि कामधेन्वादीनां प्रासादोद्गिरणेतिकर्तव्यतां, मणिमन्त्रादीनां वा दाहप्रतिबन्धेतिकर्तव्यतां पिशाचादीनां वा स्वस्थोन्मादकतेतिकर्तव्यता व्याख्यातुमशक्यत्वेऽपि प्रत्याख्यातुमशक्यत्वात्फलत्वेन कल्प्यः कश्चिदचिन्त्यः सामर्थ्यविशेषोऽस्ति। यदाहुः। अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभाव इति चेत्। हन्त तर्हि पश्चादिसामर्थ्यस्याचिन्त्यतामभ्युपेत्य समादधानः तादृशानन्तपदार्थस्रष्टृहिरण्यगर्भादिजनके सकलश्रुतिस्मृतीतिहासपुराणादिषु केवलमचिन्त्याद्भुतशक्तित्वादिनैव वर्ण्यमाने भगवत्सामर्थ्ये विप्रतिपद्यमानो य एवं पर्यनुयुंक्ते स स्फुटमात्मन्येव पशुत्वं जडत्वं पिशाचत्वं चाविष्करोतीति सहृदयैराकलनीयम्।

नन्वेवं सति पदार्थमात्रेऽप्येवमेवेश्वरसामर्थ्यकथनेनैव समाधानं स्यात्। तत्र च पर्यनुयोक्तुरेवमेव गालीप्रदानमात्रलाभः स्यादिति चेत्। सत्यं वस्तुतत्वं त्वेवमेव। समानमेतत्सर्वेषां मायावादिनाम्। तथा हि प्रमाणादिपदार्थान् व्युत्पादयन् प्रष्टव्यः। कानि प्रमाणानीति। प्रत्यक्षादीनीति चेत्। घटादीन्यपि कुतो न। प्रमाकरणत्वाभावादिति चेत्। तदपि कुतो नास्ति। फलोपधानाभावादिति चेत्। न। साध्यावैशिष्ट्यात्। फलोपधायकत्वातिरिक्तमेव कारणत्वमरण्यस्थदण्डसाधारणं योग्यतारूपं शक्तिरूपं वा नियतपूर्ववृत्तिजातीयत्वादिरूपं वा अन्यदेवेति चेत्। तर्हि तत्रैव व्यभिचारान्न साधकत्वम्। किञ्च अस्तु वा

यत्किञ्चित्प्रमाकरणत्वं तदेव घटादौ कुतो नास्ति। प्रमाणत्वाभिमतवृत्तिचक्षुष्ट्वाद्यभावादिति चेत्। तदपि कुतो नास्ति । प्रत्यक्षादिबाधितत्वादिति चेत् न । व्यधिकरणत्वात् । भवेदयं दोषो घटेऽपि यश्चक्षुष्ट्वमस्तीति ब्रूयात्तं प्रति। न हि नग्नः कुतो वस्त्रं पूरयेत्स इति पर्यनुयुक्तः प्रत्यक्षबाधादिति वदन् प्रतिवादिनं जयति किन्तु असंबद्धप्रलापित्वादुन्मत्ततामेव स्वात्मनः स्फुटयति । एवमेव धूमोऽनुमानमित्युच्यते न पुना रासभादिरस्यानुमानं, तत्कस्य हेतोः। व्याप्त्यभावादिति चेत् सापि कुतो नास्ति। व्यभिचारादिति चेत्। सोऽपि कुतः। उपाधिसद्भावादिति चेत् स एव धूमे कुतो नास्ति कस्माच्च रासभे समस्ति तत्र प्रत्यक्षादिबाधादन्यत्र तदबाधादिति तु उक्तवैयधिकरण्यविस्मरणविजृंभितमिति एवमेव द्रव्यगुणकर्मादिपदार्थसंशोधनेन किञ्चिदुत्तरमवशिष्यते। नन्वयं तत्तद्वस्तुस्वभाव एव यद्धूम एव व्याप्यो न रासभादिरिति स च स्वभावोऽचिन्तनीयत्वादिति चेत् किमधिकमर्जितम्। अयं परमनास्तिकाधमवस्तुस्वभावमात्रवादिचार्वाककुक्षिप्रवेशमाचरतात् । प्रत्युत अस्य रासभे अचिन्त्यसामर्थ्यं वदतस्तादृशदर्शननिर्मातुः पदार्थतत्त्वविवेचने प्रकृतस्यात्मगुरोरपि प्रकाशाद्रासभस्यैव माहात्म्यमधिकमाविष्कृतम् । यस्मात् सः तदीयसामर्थ्यमवलम्ब्य शिष्येभ्यः पदार्थतत्त्वमाविश्चक्र इति। गाली प्रदीयत इति मा वोचः। यद्भवदीयोक्त्यनुरूपमेवेदं समानाधिकरणमिति निर्मत्सरा एव जानन्ति। एतेन अनिर्वाच्याविद्याविलसितं सर्वं पदार्थजातं तस्याश्चाघटितघटकशक्तिमत्त्वात्सर्वं सूपपन्नमिति जल्पन्तः परास्ताः। यतः परमेश्वरीयामघटितघटकशक्तिं सर्वप्रमाणसिद्धामवमत्य जडेषु सर्वप्रमाणविरुद्धेषु तत्कल्पनया स्वकपोलकल्पितपदार्थव्युत्पादनेन [१]वाकलप्रतारणं कुर्वन्तः प्रायः स्वयमभ्यागतां कामधेनुमवमत्य कूर्मरमणीतः क्षीरप्रार्थनमाजीवितमाशासते। जन्मजीवनविधात्रीं प्राप्य निष्क्रयेणाप्यनिस्तार्य उपकारां जननीमुत्सृज्य श्वपाकीवन्दनमाचरन्ति चेत्यलं मूर्खैः कोलाहलेन । तस्मात्सर्वस्यापि वस्तुतत्स्वभावशक्तिसत्तादेर्भगवदचिन्त्यशक्त्येकनियतत्वेन सर्वं प्रमाणसिद्धमुपपन्नमिति वयमालोचयामः। नन्वेवं सति मीमांसावैयर्थ्यं, श्रुतेषु पदार्थेषु कथंताशङ्कानिरासः खलु तत्प्रयोजनम् । तच्च ईश्वरेच्छाधीनमिति ज्ञानेनैव सिद्धमिति भवद्भिरभ्युपगतत्वादिति चेत्। भ्रान्तोऽसि यस्मादेवं वदतामस्माकमेव मते मीमांसासाफल्यम्। एतादृशतत्त्वनिर्णयार्थमेव मीमांसायाः प्रवृत्तत्वात् । कथमन्यथा दुस्तर्ककर्कशनानादुर्दुरूढमतोद्धूलितपांसुभिर्विक्षोभिभिर्विक्षोभिताक्षाः सिद्धान्ततत्त्वं प्रतिपद्येरन्। वक्ष्यति चैतत्साक्षाद्भगवानेव आत्मनि चैवं विचित्राश्च हि । लोकवत्तु लीलाकैवल्यमित्यादि । उपपादयिष्यति च बहुधा भगवान् भाष्यकारः । विस्तारयिष्यते चैतदशेषमाकर एवेति । अत एव नान्त्यः । सर्वेषामपि प्रमाणानामत्रैव तात्पर्यात् मीमांसायाश्च तन्निर्णयार्थमेव प्रवृत्तत्वात् इति। नन्वेवं सति स्वर्गार्थिनां स्वर्गादौ रोगार्तानां च भेषजपानादौ





क्षुत्तृट्परीतानां वान्नसलिलादौ प्रवृत्तिर्न स्यात् सर्वस्यापि कार्यस्य ईश्वरैकाधीनत्वोररीकरणात् न च सा अज्ञप्रवृत्तिः। ज्ञानिनामपि तद्दर्शनात्। अन्नादिभिः क्षुत्प्रहाणाद्यभावप्रसङ्गाच्च। देवतान्तरोपासकानां च तत्तत्फलावाप्तिदर्शनाच्च। न हि साधनत्वभ्रान्त्या पिपासुना पीतं तैलं पिपासामपसारयतीति चेत्। सत्यम्। अत एव ब्रह्ममीमांसां शृणु। भर्गदहने तत्तद्वस्तुद्वारा तत्तत्कार्यं करोतीत्येतादृशश्रुतितात्पर्यस्य अत्र निर्णयात्। 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः।', 'यः पृथिव्यां तिष्ठन् पृथिवीमन्तरो यमयति','न ऋते त्वत्क्रियते' इत्यादि श्रुतयः, ''अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम्। मन्त्रोऽहमहमेवाज्यमहमग्निरह हुतम्। येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः। तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्'' इत्यादिस्मृतयः। अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्। अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशादित्यादिसूत्राणामेव तत्र मानत्वात्। एतावान् परं विशेषः। ज्ञानिनो हि तत्तद्वस्तुनिष्ठभगवदनुसन्धानवन्तः। अज्ञास्त्वर्वाग्दृष्टय इति। अत एवोक्तं भगवता— ''अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च। न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते'' इत्यलं पल्लवेन।

**परि०**— सप्तमे 'योगमायासमावृत' इत्येतद्व्याख्यापरगीताभाष्यगतं ''सामर्थ्योपायेने''त्यादिवाक्यं हृदि कृत्वाऽऽह **परमेश्वरेति**। **अत एवेति**। ईश्वरशक्तेरप्यावरकत्वादेव स्वशक्तिरूपावरणाव्यावर्तनव्यावर्तनाभ्यां ह्रासवृद्ध्योरुपपन्नत्वादेव 'स्तुतयेऽनुमतिर्वेति ज्ञानपादीयाधिकरणे ज्ञानिनोऽसत्प्रवृत्तिसत्प्रवृत्तिभ्यां मुक्तावानन्दह्रासवृद्धी वक्ष्येते। अन्यथा ते अनुपपन्ने स्यातामिति भावः।

**यादु०**— **मोक्षदानादिति**। अविद्यानिवृत्तिरूपमोक्षदानादित्यर्थः। **अत एवानन्दह्रासेति**। परमेश्वरशक्तेरविद्यातिरिक्ताया जीवस्वरूपावरणत्वादेवेत्यर्थः। अन्यथा निवृत्ताविद्यानामप्युत्तमाधिकारिणां मुक्तानां स्वोत्तमद्रोहादिना स्वरूपानन्दानुभवरूपह्रासो वक्ष्यमाणः कथमावरणाभावे सङ्गतः स्यात्। तथा ज्ञानोत्तरकृतकर्मणा आनन्दाभिवृद्धिरिति वक्ष्यते। सा च कथमुपपन्ना। न हि स्वरूपापेक्षयाऽभिवृद्धिरिति तदर्थः। किं त्वविद्यायां निवृत्तायामपि स्वस्वरूपभूतमप्यानन्दादिकमीश्वरेच्छाशक्त्यावृतं कर्माभावे नानुभवितुं शक्यम्। कृते च कर्मणि तेन तुष्टो भगवानिच्छाशक्तिमपसारयति। ततःपूर्वमनुभूयमानानन्दापेक्षयाऽधिकानन्दाद्यनुभवलाभादानन्दवृद्धिरित्युच्यते। ईश्वरेच्छाशक्तिरूपावरणाभावे इयमपि न स्यादिति भावः।

**आनन्दः**— ननु तदनुभवदानमेव तद्दानमित्यत आह **अनुभवोऽपीति**। अनुभवस्य विषयित्वदानमेव तदित्यत आह **विषयित्वमपीति**।

**वा०चं०**— एवं ज्ञानिनां मोक्षद इत्यंशमुपपाद्य 'आनन्ददश्च मुक्तानामि'त्यंशमप्युपपादयितुं पृथगुत्त्यनुपपत्तिं शङ्कते **ननु चेति**। आनन्दः स्वरूपमेवातः स्वतः सिद्धस्तिष्ठतीत्यन्वयः। तथा च सिद्धत्वादानन्दद इति





साध्यत्वोत्त्यनुपपत्तिरित्याशयः । ननु स्वतःसिद्धस्याप्यविद्यावृतत्वेन निवृत्ताविद्यात्वेन साध्यत्वान्न साध्यत्वोत्त्यनुपपत्तिरित्यतोऽविद्यानिवृत्तावित्युक्तम् । तथा च तथा साध्यत्वस्य संभवेऽपि तस्य मोक्षद इत्यनेनैवोक्तत्वात्पृथगानन्ददानं न वक्तव्यमित्यर्थः । अत्रानन्दस्य स्वरूपेण सिद्धत्वादानन्ददानं कथमविद्यानिवृत्तिमत्त्वेन साध्यत्वस्य मोक्षद इत्युक्तत्वान्मोक्षदानादानन्ददानं पृथक्कथमिति योजना द्रष्टव्या । यद्वा । आनन्ददानं मुख्यममुख्यं वाऽत्र विवक्षितम् । द्वितीयेऽपि तदभिव्यक्तिदानप्रयुक्तो वा तदनुभवदानप्रयुक्तो वा आनन्दानुभवे तद्विषयकत्वदानप्रयुक्तो वा आनन्ददानव्यपदेशः । नाद्य इत्याह **स्वरूपमेवेति** । द्वितीयेऽप्याद्यं दूषयति **स चेति** । स्वतःसिद्धोऽवस्थाविशेषलक्षणाभिव्यक्तिं प्राप्तः । ननु कथमावृतस्याभिव्यक्तिरित्यत उक्तम् **अविद्येति** । अविद्याया एवावरणत्वात्तन्निवृत्तेश्च मोक्षद इत्यनेनैव लब्धत्वादिति भावः । तृतीयं निराह **अनुभव इति** । एवमेव स्वरूपमेवेत्यर्थः । ननु चावृतस्यानुभवस्य न पुरुषार्थत्वमित्यत एवमेवेत्यावृत्त्या स चाविद्यानिवृत्तौ स्वतोऽभिव्यक्त एवेत्यपि व्याख्येयम् । चतुर्थं निराह **विषयित्वमपीति** । यद्वा नात्रानन्ददानं वक्तुं युक्तम् । जीवस्वरूपत्वेन सिद्धत्वादित्याह **स्वरूपमेवेति** । नन्वनुभूयमानानन्दस्यैव पुरुषार्थत्वादविद्यावृतस्य चानुभवायोगादावरणनिवर्तनेन सिद्धस्यापि तस्य दानमुच्यत इत्यतोऽविद्याया एवावरणत्वात्तन्निवृत्तेश्च मोक्षद इत्यनेनैवोक्ततया न पृथग्वक्तव्यमानन्ददानमित्याह **स चेति** । सिद्धोऽनुभूयत एवेत्यर्थः । निवृत्तेऽप्यावरणे सामग्र्यभावान्नानुभव इत्यत उक्तं **स्वत इति** । साक्षिण एव तत्करणत्वेन सिद्धत्वादिति भावः । अङ्गीकृत्य चेदमुदितम् । वस्तुतस्त्वानन्दवत्तदनुभवोऽपि स्वरूपमेव । आवरणनिवृत्तौ तदभिव्यक्तिश्च स्वतःसिद्धैवेत्याह **अनुभवोऽपीति** । ननु चोभयोः स्वतः सिद्धत्वेऽपि तयोर्विषयविषयिभावदानमत्र पृथगुच्यत इत्यत आह **विषयित्वमपीति** । ननु स्यादिदं समाधानमुपपन्नं यद्यविद्यावरणातिरिक्तं परमेश्वरशक्त्याख्यमपरमावरणं स्यात् । न चैवम् । कल्पकाभावादित्यतो निवृत्ताविद्यानां मुक्तानामप्यभिव्यक्त्यनभिव्यक्तिरूपे ह्रासवृद्धी वक्ष्यमाणे आवरणान्तरं विनाऽनुपपद्यमाने तत्कल्पयत इत्यभिप्रेत्याह **अत एवेति** ।

**वा०र०**— पूर्वोत्तरग्रन्थप्रतिपाद्यप्रदर्शनपूर्वकं ननु चानन्द इत्यत्राक्षेप्यस्य स्पष्टमप्रतीतेस्तद्दर्शयति **एवमिति** । **पृथगुक्तीति** । मोक्षदानादानन्ददानस्य पृथगुक्तीत्यर्थः । अविद्यानिवृत्तौ स्वतःसिद्ध इत्युक्तेऽविद्यानिवृत्तेः प्राक् स्वतःसिद्धिर्नास्तीति प्रतीयते। स्वरूपमेवेत्यस्य हेतुता च न प्रतीयत इत्यतो विवक्षितमन्वयं दर्शयन्नत इति पूरयन् अस्तिभवत्योः सर्वत्र संबन्धादस्तीत्यर्थः । क्व तिष्ठतीति पदं च पूरयन् सिद्धत्वोक्तिफलं च दर्शयन् योजयति **आनन्द इत्यादिना** । **निवृत्ताविद्यात्वेनेति** । निवृत्ता अविद्या यस्मादसौ निवृत्ताविद्यस्तस्य भावस्तत्त्वं तेन । अविद्यारूपावरणनिवृत्तिविशिष्टस्यानन्दस्य साध्यत्वोपपत्तेरित्यर्थः । अनेन पृथगुक्त्याक्षेपो न प्रथमत एव । अपि तु प्रथमतः आनन्दस्य स्वतःसिद्धत्वात्साध्यत्वानुपपत्तिरित्येवाक्षेपः । अथ यदि तत्परिहाराय निवृत्ताविद्यत्वेन तस्य साध्यतेत्युच्यते तर्हि प्राप्ताप्राप्तविवेकेनाविद्यानिवृत्तेरेव दानमानन्ददानतया प्राप्तमिति मोक्षद इत्युक्त्या पुनरुक्तिरित्येव पर्यवसानगत्येति मूलाशयसूचनेनानन्ददानं कथं पृथगानन्ददानं च कथमिति मूलं व्याख्यातं भवति । तदेतत्स्पष्टमेव स्वयमाह **अत्रानन्दस्येति** । एतद्योजनायां स्वरूपत्वेनैव दानानुपपत्तिशङ्कासंभवे तेन स्वतःसिद्धत्वसाधनं कृत्वा तेन दानानुपपत्तिरिति कल्पना व्यर्था । अविद्यानिवृत्तौ स्वतःसिद्ध एवेति यथाश्रुतसंबन्धपरित्यागश्च भवति ।





अनुभवोऽपीत्यादेश्च योजना न स्वरसतया प्रतीयत इत्यतो योजनान्तरमाह **यद्वा आनन्देति** । **मुख्यमिति** । स्वरूपेणैवेत्यर्थः । **अमुख्यमिति** । तद्गतागन्तुकधर्मदानेनेत्यर्थः । प्रयुक्तो वेति पूर्वद्वयस्यानन्ददानव्यपदेश इत्युत्तरेण संबन्धः । **स्वरूपमेवेतीति** । जीवस्वरूपत्वादेव स्वरूपेणानन्ददानानुपपत्तिरित्याशयः । स्वरूपत्वप्रयुक्तं स्वतः-सिद्धत्वमिति भ्रान्तिवारणायाह **अवस्थाविशेषेति** । नन्वविद्यानिवृत्तौ स्वतःसिद्धत्वेऽप्यविद्यानिवृत्तेरेव दानस्य बाध्यत्वात्पृथगुक्तिर्युक्तेत्यतो निवृत्तौ स्वतःसिद्धतामुपपादयन्नेव पृथगुक्तिव्यर्थतामाह **अविद्याया एवेति** । परमेश्वरशक्तिरेवेति समाधानव्यावर्त्यमिदम् । **स्वरूपमेवेत्यर्थ इति** । स्वरूपस्य च दानासंभवादित्यर्थः । **चतुर्थमिति** । यद्यप्ययं द्वितीये तृतीयस्तथापि प्रथमपक्षमेलनेन चतुर्थोऽयमित्याशयेन चतुर्थत्वोक्तिरिति ज्ञेयम् । एतद्योजनायामपि अभिव्यक्तिदानमनुभवदानं च भिन्नमित्याश्रयणीयं भवति । स्वतःपदस्य चार्थो न प्रतीयते । आनन्ददानं तदनुभवदानं चेति । पक्षद्वयाश्रयणेनैव ग्रन्थसामञ्जस्ये पक्षान्तरकल्पनायोगश्चेत्यस्वरसात्पक्षान्तरमाह **यद्वा नात्रेति** । **तस्य दानमिति** । अनुभवाभिव्यक्तिरूपम् । **उक्ततयेति** । आवरणनिवृत्त्युक्तावनुभवस्य सिद्धत्वप्राप्ते-रनुभूयमानानन्ददानमप्युक्तमित्यर्थः । **आनन्ददानमिति** । अनुभूयमानानन्ददानमित्यर्थः । प्रकृतोपयोगितया सिद्धशब्दं व्याख्याति **अनुभूयत इति** । स्वत इत्यनेन किमनुभवसामग्रीत्वेनोक्तमिति न प्रतीयतेऽत आह **साक्षिण एवेति** । एवमेवेत्येतदानन्ददानपक्षोक्तस्वरूपमेवेत्यादि सिद्ध इत्यन्तोक्तदूषणपरतया व्याख्याति **तदनुभवोऽपीत्यादिना** । मूले **मुख्यमावरणमिति** । बहुनात्र किमुक्तेनेत्यादिप्रमाणसिद्धमेतत्कल्पे लिङ्गशरीरभङ्गानन्तरमपि स्वरूपसुखं किञ्चिदनुभवतामेव सृष्ट्यादौ लोकाविर्भावे सति श्वेतद्वीपपतिदर्शनोत्तरमपसरणरूपनिवृत्तिप्रतियोगितयोक्तमावरण-मित्यर्थः । **वक्ष्यमाण इति** । अत्र स्वगुणाच्छादिका त्वेकेत्युक्तभगवदिच्छायामेव द्वैविध्यम् । जीवस्वरूपावरण-रूपप्रकृतिबन्धस्य विनाशः परमाच्छादकभगवदिच्छाया इव जीवस्वरूपावरणभगवदिच्छाया अप्यपसरणमेव । तत्रापि श्वेतद्वीपपतिदर्शनानन्तरं भगवदिच्छापसरणमपि न सर्वथा किन्तु ज्ञानाभिव्यक्तसुखं यावत्तावदंश एव तदपसरणम् । ज्ञानोत्तरकर्माभिव्यक्तसुखांशे तु न तदानीमेव तदपसरणम् । किन्तु तत्कर्मपरिपाककालीनकर्मसाध्यप्रसादे सति प्रसन्नो भगवान् स्वकीयामिच्छामपसारयति । तदा च शुद्धसत्त्वमुपादानीकृत्य विषयानुत्पाद्यज्ञानानभिव्यक्तमपि सुखं कर्मणाऽभिव्यञ्जयति । एवं कर्मप्रसन्नभगवता विषयोत्पादनसाध्यानन्ददानमेवानन्दाभिवृद्धिरित्युच्यते । तदेतदुक्त-मभिव्यक्तिरूप इत्यनेन । देवताव्यतिरिक्तानां तु स्वोत्तमद्रोहादिना क्लृप्तस्याप्यनुभूयमानतया प्राप्तस्यानन्द-स्यानभिव्यक्तिर्भवति । सैव ह्रास इत्युच्यते । अनभिव्यक्तिरूपेत्यनेनापि टीकायामियमुक्ता । प्रागपसृताया एवेच्छाया पुनरनभिव्यक्तांशेऽवस्थानात् । एते एव स्तुतयेऽनुमतिर्वेत्यधिकरणे वक्ष्यमाणे इति ज्ञेयम् । **आवरणान्तरं विनेति** । पूर्वोक्तरीत्या भगवदिच्छारूपमावरणान्तरमित्यर्थः । एवं ज्ञापकबलेनेश्वरेच्छावरणसाधनमुपलक्षणम् । गीताभाष्य-द्वितीयाध्यायटीकाविवरणस्थलीयास्मदुदाहृतप्रमाणानां ज्ञापकान्तराणां च सत्त्वात् । अत्र विस्तरभयात्प्रपञ्चो न क्रियते । उपयुक्तं प्रमेयमुक्तस्थलेऽस्मदीयविचारानुसारेण ज्ञेयम् ।

**स०व्र०— अत एवेति** । ईश्वराधीनत्वादेव बन्धनिवृत्तेरित्यर्थः । **वक्ष्येते** स्तुत्यधिकरणे ।





**विट्ठ०**— आनन्दद इत्यत्रानुपपत्तिमाशङ्क्य समाधत्ते **ननु चेति** । आनन्दानुभवयोः स्वरूपतया स्वतःसिद्धत्वेऽपि विषयविषयिभावदानेन आनन्द इत्युक्तमित्यत आह **विषयित्वमपीति** । **अत एवेति** । ईश्वरेच्छायाः आवरकत्वाङ्गीकारादेव निवृत्ताविद्यानामप्युत्तमाधिकारिव्यतिरिक्तानां मुक्तानां ज्ञानोत्तरभाविस्वोत्तमापराधादिना पातकेन पुण्यकर्मातिशयक्रमेण च स्वरूपानन्दस्य ह्रासवृद्धी 'शुभेनानन्दवृद्धिः स्यात् ह्रासश्चैवाशुभेन ही'ति ज्ञानपादे वक्ष्यते अन्यथा मुक्तावावरकाऽविद्याद्यभावेन सर्वेषामपि समग्रस्वरूपानन्दानुभवप्रसक्त्या वृद्धिह्रासौ विमुक्तिगौ नृणां न स्यातामित्यर्थः ।

**चषकः**— **मोक्षदानात्** प्रागुक्तप्रतिबन्धनिवृत्तिरूपमोक्षदानात् । **अत एव** । अविद्यातोऽतिरिच्यमानायाः पारमेश्वरशक्तेर्जीवस्वरूपावरणत्वादेव । निवृत्ताविद्यानामपि मुक्तानामप्यनभिव्यक्त्यभिव्यक्तिरूपे ह्रासवृद्धी अभिधास्यमाने आवरणान्तरं विनानुपपद्यमाने तद्गमयत इति भावः ।

**गूढ०**— ननु तदनुभवदानमेव तद्दानमित्यत आह **अनुभवोऽपीति** । अनुभवस्य विषयित्वदानमेव तदित्यत आह **विषयित्वमपीति** ।

**प्रदीपः**— **अत एवेति** । ईश्वराधीनत्वादेव बन्धनिवृत्तेरित्यर्थः । अत्र भाष्यकृता सूत्रार्थमुपवर्ण्य मतान्तरनिरासः कृतः । स न युक्तः । प्रयोजनाभावादप्रयुक्तत्वात्तत्प्राधान्याभिप्रायं भाष्यग्रहणम् ।

**॥ परभाष्यस्य दूषणम् ॥**

**॥ बन्धमिथ्यात्वनिरासः ॥**

**॥ विश्वस्य (बन्धस्य) मिथ्यात्वाभावः ॥**

**मुक्त्या बन्धमिथ्यात्वस्य अनपेक्षणम्**—

**१९६ सु०— एवं तावत्स्वमतेन सूत्रं व्याख्याय तत्परिशुद्धये परेषां भाष्यं दूषयति बन्धमिथ्यात्वमित्यादिना ।**

**अनु०— बन्धमिथ्यात्वं नैव मुक्तिरपेक्षते ॥**

**बिन्दुः**— अथ कः स्वरूपानुभवप्रतिबन्धः यो भगवदिच्छया क्रियते । स्वरूपानन्दस्य तद्रूपस्यानुभवस्य च नित्यसिद्धत्वात् इति चेत् । तस्या आत्मनः चिदानन्दरूपतामङ्गीकृत्य वा शङ्क्यते अपरामनभ्युपेत्य । आद्येऽपि किं सर्वेषु अनुभव इष्यते न वा । तादृशानुभवविरोधात् । द्वितीये

अननुभवनिमित्तमावश्यकं गले पतत्येव एतावान् यदभेदः अन्यैरप्रामाणिकीमविद्यामङ्गीकृत्य तस्याश्च अचिन्त्यशक्तिरपि कल्प्यते। अस्माभिस्तु वाकलश्रुतिस्मृतिघण्टाघोषप्रमितपरमेव स्वमहिमैवेत्युच्यते। अन्त्यस्तु स्वप्रकाशत्वसमर्थनेनैव स्फुटमाकरे निरसिष्यते। **एवं तावत्स्वमतेन सूत्रं व्याख्यायेति**। तदयं सूत्राक्षरार्थः। ओङ्कारस्तावदोतत्वाभिधायीत्युक्तम्। अथशब्दस्य तु मङ्गलप्रयोजनकस्य त्रयोऽर्था वाच्याः, निपातानामवाचकत्वपक्षे तु द्योत्या एव। युक्तं चैतद्यत् द्योत्या इति। अन्यथा हि उपास्यते गुरुरनुभूयते सुकृ(सुर)तमित्यादौ कर्मणि लकारो न स्यात्। सकर्मकक्रियाभिधायिधातोरेव तदनुशासनात्। तस्मात् उपासनानुभवश्चेति विशिष्टधातोरेवार्थः स्वीकार्य इति सिद्धं निपातानां द्योतकत्वम्। साक्षात्क्रियते नमस्क्रियते अलंक्रियत इत्यादावपि दर्शनात्, नोपसर्गमात्रविषयतया सङ्कोच इति दिक्। तत्र एतावत्प्रश्नार्थत्वम्। प्रतिवचनादर्शनात्। नाप्यारम्भार्थत्वम्। आरभ्यत इत्यनुक्तोऽप्यारम्भस्य सुप्रसिद्धतया तत्कथनवैयर्थ्यात्। अथशब्दानुशासनमिति महाभाष्ये तु अङ्गान्तराध्ययनव्यावृत्तव्याकरणाध्ययनाधिकारविशेषस्याभावेन मङ्गलार्थमवश्योपात्तस्य वाक्यार्थान्वयप्रतियोगी वाच्यो वार्थः आरम्भरूप इति स्थितम्। अतः परिशेषादपेक्षितत्वाच्चानन्तर्यं प्रकृतेऽर्थः। तच्च योग्यतया हरिभक्तिपूर्वकाध्ययनशमदमादिसंपत्तिविष्णुपादैकसंश्रयत्वरूपादधिकारादानन्तर्यमिति लक्ष्यते। अतः शब्दस्तु प्रकृतिभूतेन सर्वनाम्ना एतदा परामृष्टस्य मोक्षरूपफलस्य हेतुत्वाभिधायी तसिलन्तः। ब्रह्मशब्दस्तु गुणपूर्त्यभिधायीत्यविवादमेव। जिज्ञासाशब्दस्तु मननापरनामकयुक्त्यनुसन्धानरूपविचारार्थकः। न तु श्रवणार्थकोऽपि, उपनिषद्भाष्याध्ययनरूपस्य श्रवणस्य मीमांसातः प्रागेव सिद्धत्वात्। न ह्यश्रुतेऽर्थे मीमांसा संभवति। नापि श्रवणकर्तव्यतायाः श्रुत्यर्थनिर्णायकन्यायग्रथनात्मकशास्त्रारम्भणीयतायां हेतुता संभवति। अत एव निदिध्यासनार्थकोऽपि। तदेतदुक्तमाकर एव। जिज्ञासा नाम युक्त्यनुसन्धानात्मकविचारापरपर्यायं मननमिति। अत एव च अत्रैव क्वचिच्छ्रवणादिरूपा जिज्ञासेत्युक्तिः तत्त्वप्रकाशिकायां च तादृश्युक्तिरतद्गुणसंविज्ञानबहुव्रीह्यभिप्रायेति ध्येयम्। एवंस्थिते यद्यपि धातोः कर्मणः समानकर्तृकादिच्छायां वेति सूत्रेण समानकर्तृकादिषिकर्मभूतार्थप्रतिपादकाद्धातोः सन्विधानात् प्रत्ययस्य च प्रकृत्यर्थोपसर्जनकस्यार्थाभिधायकत्वात्। ज्ञातुमिच्छा जिज्ञासेत्यर्थाल्लभ्यते। तथापि नासौ शब्दो बुभुत्साशब्दवत् इच्छावाचकः किन्तु मीमांसाशब्दवत् विचारस्य वाचक एव न तु तत्र लाक्षणिकः। जिज्ञासितं सुसंपन्नमित्यादिनिरूढतरप्रयोगात् अवयवार्थप्रतीतिजनकतदर्थप्रत्ययस्य सर्वजनसिद्धेन प्रवाहाप्रतीतिपूर्वकतीरप्रतीतिजनकगङ्गापदस्य वैषम्याच्च। अवयवार्थसंभवमात्रेण तु रूढिपरित्यागे मण्डपशब्दस्य गृहविशेषे प्रवीणकुशलादिशब्दानां च निपुणे वाजिशब्दस्य चाश्वे रूढिर्न स्यात्।





तस्यापि मण्डपानकर्तृपुरुषसंबन्धात् प्रकृष्टवीणावादकुशादानादिगतप्रागल्भ्यरूपानुपयोगात्। वाजिशब्दवाच्यान्नसंबन्धिविलासकतायाः सुवचत्वात्। अवेदे चापरिमितं देयमित्याधानप्रकरणे श्रुतस्यापरिमितशब्दस्य परिमितान्यरूपमुख्यार्थनिष्ठानेकत्वगुणयोगादेव बहुत्ववति प्रयोगसंभवात् । जैमिनिनाचार्येण शब्दसमर्थिता रूढिर्न स्यात् । व्याकरणं तु सर्वतान्त्रिकाणां शब्दाख्यानपरमित्यनु(पदमेव)मतमेव । अत एवाहुः । 'यत्रार्थस्य विसंवादः प्रत्यक्षेणोपलभ्यते । स्वरसंस्कारमात्रार्था तत्र व्याकरणस्मृतिरि'ति । तस्माज्जिज्ञासाशब्दो विचारे रूढः । उक्तं च चन्द्रिकायाम् । 'जिज्ञासाशब्दतो हीच्छामज्ञात्वैव विजानते । विचारं लौकिकास्तेन तत्राद्यं रूढिरिष्यते । अन्यथा मण्डपादीनां गृहादौ स्यान्न रूढता । गङ्गाशब्दात्तु तीरादि तद्धि पूर्वं प्रकाशते' इति । तदयं वाक्यार्थः । उक्ताधिकारसम्पत्त्यनन्तरं मोक्षसाधनीभूत-प्रसादसाधनीभूत-दृढमतिसाधनीभूत-साक्षात्कारसाधनीभूत-निदिध्यासनसाधनत्वात् अनन्तानन्दगुणोतस्य देशतः कालतः परिच्छेदशून्यस्य सकलश्रुतिस्मृतिभिः श्रुतस्य नारायणस्य सम्यक् प्रतिपत्तिदार्ढ्यहेतुभूतमननविचारापरपर्याया जिज्ञासा कर्तव्येति । ननु अतःशब्दः प्रकृतस्य हेतुत्वे वर्तते तत्कथमेतादृगुक्तप्रणाडिका प्रकृता येनैवमर्थः संपद्यते । श्रूयतामवधानेन निगूढं सिद्धान्ततत्त्वम् । निष्प्रयोजनकत्वान्न कर्तव्येति पूर्वपक्षनिरासार्थे प्रयोजनं तावदत्र सूत्रकृता सूत्रितम् । तथाच प्रयोजनवत्त्वादित्युक्ते योग्यतया मोक्षरूपप्रयोजनवत्तान्वयः तावल्लभ्यते । यथा स्रुवेणावद्यतीत्यादावनुक्तस्यापि द्रवद्रव्यस्यान्वयः । अथवा अथशब्दोपात्ताधिकारिविशेषणत्वेन मोक्षस्य प्रकृतत्वात् तस्यैवैतदा परामर्शः। यद्यपि 'भक्तिमान्परमे विष्णौ यस्त्वध्ययनवान्नरः। अधमः शमादिसंपन्नो मध्यमः समुदाहृतः । आब्रह्मस्तंबपर्यन्तमसारं चाप्यनित्यकम् । विज्ञाय जातवैराग्यो विष्णुपादैकसंश्रयः । स उत्तमाधिकारी स्यादि'ति भाष्योदाहृतप्रमाणेषु मुमुक्षायाः अधिकारिविशेषणत्वेन प्रवेशः कण्ठतो न लभ्यते तथापि स्वर्गादिविषयवैराग्यविष्णुपादैकसंश्रयत्वान्यथानुपपत्त्या अर्थाल्लभ्यत एव । उक्तं चान्यत्र 'वेदा देवार्थकाः सर्वे देवा नारायणार्थकाः । नारायणस्तु मोक्षार्थः मोक्षो नान्यार्थ इष्यते इति मध्यमभक्तानामेकान्तानां न कस्यचित्। अर्थे नारायणो देवः सर्वमन्यत्तदर्थकमि'ति । एकान्तानामिति षष्ठी निर्धारणे। तथाच एकान्तानां मध्ये कस्यचिदपि भक्तस्य प्रयोजननिमित्तं नारायण उपास्यो न भवतीत्यर्थः । एवं च ज्ञानमोक्षयोः कारणकार्यभावो यावता विना न लभ्यते तावत् द्वारभूतं मध्ये आक्षेपाल्लभ्यते। यथा ज्योतिष्टोमस्वर्गयोर्मध्ये अपूर्वं कल्प्यते। प्रकृते च दृष्टे संभवत्यदृष्टकल्पनाया अन्याय्यत्वाल्लोके राजापराधेन बद्धस्य निगडबन्धान्मोक्षस्तदीयप्रसादैकसाध्यो दृष्टः प्रसादश्च तदीयभक्त्युद्रेकजन्यः। दृश्यते हि लोके अयं मदेकप्रवण इत्येव यदि राजा जानाति तदैव प्रसीदतीति । भक्तिरपि तादृशी





न साक्षात्कारमन्तरोदेति। अनुभवसिद्धमेतत्सहृदयानां यत् 'सितासिते सरिते यत्र सङ्गते' इत्यादिश्रुति-स्मृतिभ्यः परोक्षेण तीर्थमाहात्म्यमाकर्ण्य प्रस्थितानां तादृशतीर्थराजसाक्षात्कारमात्रेण अनिर्वाच्यः कश्चन मानसो रसविशेषः पुलकोद्गमादिश्च सात्त्विको भाव इति। वस्तुतस्तु ज्योतिष्टोमादिस्थलेऽपि भगवत्प्रसाद एव स्वर्गादिसाधनमिति सिद्धान्तः। 'कर्मणा त्वधमः प्रोक्तः प्रसादः श्रवणादिभिः। मध्यमो ज्ञानसंपत्त्या प्रसादस्तूत्तमो मतः। प्रसादात्त्वधमाद्विष्णोः स्वर्गलोकः प्रकीर्तितः। मध्यमाज्जनलोकादिरुत्तमस्त्वेव मुक्तिद' इत्यादेः। अत एव भाष्ये यतो 'नारायणप्रसादादृते न मोक्ष' इत्यध्याहारोऽपि कर्तव्य इति सूचितम्। 'यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम्। वाक्यं वेति सतां नीतिः सावकाशे न तद्भवेदि'ति न्यायसिद्धार्थप्रतिपादकं प्रमाणं चोपन्यस्तम्। अथवा जन्माद्यस्य यत इति सूत्रे निर्णेतव्यविषयवाक्ये यतो वा इमानि भूतानि जायन्त इत्यादौ प्रकृतस्य जगतो यथा अस्येतीदमा परामर्शः एवमत्रापि 'यस्य प्रसादात्परमार्त्तिरूपादस्मात्संसारान्मुच्यते नापरेण। नारायणोऽसौ परमो विचिन्त्यो मुमुक्षुभिः कर्मपाशादमुष्मादि'त्यादौ निर्णेतव्यवाक्य एव प्रकृतस्य प्रसादादेरेतदा परामर्श इति न काप्यनुपपत्तिः। अथवा जन्माद्यस्य यत इति सूत्रे सृष्ट्यादिकर्तृत्वं भगवतो लक्षणं वक्ष्यते। तदन्तर्गतं मोक्षप्रदत्वप्रविष्टं मोक्षस्य एतच्छब्देन परामर्शः। निर्णीतं चैतत्पूर्वतन्त्रे भेदलक्षणे 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरि'त्यादौ वक्ष्यमाणस्य ज्योतिर्यागादेरेतदापरामर्श इति। अन्येऽप्यतःशब्दस्यार्थाः भूयांसो हेतुत्वेन वर्ण्यन्ते तेऽप्यनेनैव न्यायेन प्रामाणिकत्वाद्योग्यत्वाच्च लभ्यन्ते। यस्मात्पूर्वपक्षिणा अना-रम्भणीयतायां यावन्तो हेतवः प्रदर्शिताः 'शब्दस्यैव अप्रामाण्यात् तत्राप्तिमूलस्य कथञ्चित्संभवेऽपि न वेदस्य प्रामाण्यं तत्संभवे वा न सिद्धे व्युत्पत्तिरतो ब्रह्मणि तात्पर्याभावान्न कर्तव्या जिज्ञासे'ति। तत्परिहारपरत्वेनाप्यतःशब्दो व्याख्यायतामित्यभिप्रेत्य भगवान् सर्वनामानमेतच्छब्दमेव हेतुकामधेनुं प्रायुंक्त। तथाच वेदस्य प्रामाण्यात्। प्रामाण्यस्य स्वतस्त्वात्। सिद्धे व्युत्पत्तिसद्भावात्कर्तव्या जिज्ञासेति प्रत्येकं वाक्यार्थः। स्फुटीकरिष्यते चैतद्भगवत्पादैरेवेत्यास्तां तावत्। नन्वस्तूक्तरीत्या मोक्षस्य प्रकृतत्वादेतत्परामर्शः, तथापि कथं हेतुत्वं युज्यते। यत्तसिला प्रतिपाद्येत। तथाहि ज्ञापकः कारकश्चेति द्विविधो हेतुः। तत्र न तावत् जिज्ञासां पक्षीकृत्य कर्तव्यतासाधने मोक्षो ज्ञापकहेतुः। असिद्धेरव्याप्तेश्च। नापि कारकः। उत्तरभावित्वादिति चेत् यथेच्छसि तथास्तु, जिज्ञासा पक्षः, मुमुक्षुणा कार्या। तत्कामनाविषयफलजनकत्वात्। स्वर्गकामकार्यज्योतिष्टोमवदिति प्रयोक्तुं शक्यत्वात्। यद्यप्यधिकारि-विशेषणत्वेन मोक्षमात्रं प्रकृतं तच्चात्मनिष्ठत्वेन व्यधिकरणं तथापि कारणताख्यसंबन्धे विपक्षेऽस्त्येव तादृशसंबन्धस्यैव हेतुतावच्छेदकत्वात्। तथाच मोक्षादित्येव हेतुः। जनकत्वादित्यनेन तु स एव संसर्गः





स्फुटीकृत इति ध्येयम्। ब्रह्म वा जिज्ञास्यं मोक्षदातृत्वात्। निगडादिमोचकमहाराजवत् इत्यादयः प्रकारा ऊह्याः। अस्तु वा मोक्षस्य तत्साधनप्रसादस्य तत्साधनज्ञानस्य च जिज्ञासां प्रति कारकत्वम्। न च कार्याव्यवहितपूर्वकाले असतः कथं तदिति वाच्यम्। चिरविनष्टयागस्यापि स्वर्गं प्रति कारकत्वाभाव-प्रसङ्गात्। यदि च तस्य स्वरूपेणासत्त्वेऽपि अपूर्वद्वारा सत्त्वमास्थीयते तर्हि प्रकृते मोक्षादप्युपदेशद्वारा पूर्ववृत्तित्वमस्त्येव। अन्यथा तस्य कारकतैव न स्यात्। क्रियां कुर्वद्धि कारकमित्युक्तत्वात्। आह च 'कर्ता कर्म च करणं संप्रदानं तथैव च। अपादानाधिकरणमित्याहुः कारकाणि षडि'ति। अन्यथा कारके इत्यधिकृत्य कर्मणि द्वितीयेत्यादिना अनुशिष्टा द्वितीयादयो न स्युः। हन्त तर्हि स्वर्गोऽपि यागक्रियाकारकं स्यादिति चेत्। इष्टापत्तेः। अन्यथा यागक्रियोत्पत्तिरेव न स्यात्। कमुद्दिश्य यागं कुर्यात्। नन्वेवं सति स्वर्गोद्देशादेः पूर्ववृत्तितया कारणत्वमस्तु न तु स्वर्गादेरिति चेत्। तर्हि यागापूर्वस्यैव स्वर्गं प्रति कारणतास्तु न तु नष्टस्य यागस्य फलेन। यागस्य ध्वंसरूपाभावसंबन्धश्चेदत्रापि प्रागभावसंबन्ध इत्यवेहि। अपूर्वे तस्य व्यापार इति चेत्। अत्रापि त उद्देशस्तथास्तु। उद्देशस्तु उत्कटकामना वा अनया क्रियया इदं करिष्यामीत्यध्यवसायविशेषो वेत्यन्यदेतत्। ननु तज्जन्यत्वे सति तज्जन्यजनको-ऽवान्तरव्यापारः न चैतत् फलोद्देशस्य संभवति। संभवति च यागापूर्वादाविति वैषम्यमिति चेत्। अस्य स्वगोष्ठीनिर्मितपरिभाषामात्रत्वात्। कुलालपित्रादेश्च तत्कार्यं प्रति तद्व्यापारत्वापत्तेः अयुक्तत्वाच्च। नन्वत एव यदवच्छिन्नं यदवच्छिन्नं जनयित्वैव यदवच्छिन्नं जनयति। तदवच्छिन्नस्य तदवच्छिन्ने जनयितव्ये तदवच्छिन्नमवान्तरव्यापार इत्युच्यत इति चेत्। उक्तोत्तरत्वात्। यजमानकर्तृका चारम्भयतीत्यादे-र्दर्शपूर्णमासाभ्यां नियमेन प्रागनुष्ठीयमानस्य, तथा 'एष वै यज्ञो यज्ञानां प्रथमो यदग्निष्टोमस्तस्मादेतेनेष्ट्वा धान्येन यजेते'ति वचनात्। उत्तरक्रतुभ्यः प्रागनुष्ठीयमानस्याग्निष्टोमस्य च यजमानं प्रत्यवान्तर-व्यापारत्वापत्तेश्च। सृष्टिं कृत्वैव संहृतिं कुर्वतः परमेश्वरस्यापि सृष्टिरवान्तरव्यापार इत्यापाताच्च। शिष्योपनयनं कृत्वैव विवाहं कुर्वतस्त्रैवर्णिकाचार्यस्याप्युपनयनं विवाहं प्रत्यवान्तरव्यापारः प्रसज्येतेति दिक्। तस्माद्व्यापारेतरत्वम् अननुमतमेव, कर्त्रादिकारकाणामननुगतत्वात्। तदेतदभिप्रेत्योक्तं पूर्वतन्त्रे भेदलक्षणे। गुणस्तु क्रतुसंयोगात्कर्मान्तरं प्रयोजयेत्संयोगस्याशेषभूतत्वात्। ज्योतिष्टोमे श्रूयते 'यदि रथन्तरं सामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्। यदि बृहत्सामा शुक्राग्रानि'ति। तत्र च बृहद्रथन्तरसामत्वादिविशिष्टमिदं कर्मान्तरं वा गुणविधिर्वेति सन्दिह्य गुणन्यायेन भेद इति पूर्वपक्षयित्वा। यद्यपि स्तुतशस्त्राधिकरणे अदृष्टार्थानां समुच्चय इति स्थापितं तथापि बृहद्वा पृष्ठं भवति रथन्तरं वा पृष्ठं भवतीति वाचनिकविकल्पबलात् पृष्ठस्तोत्रसाधनयोर्बृहद्रथन्तरसाम्नोः पाक्षिकान्वयसंबन्धात् यदि-





शब्दोपबन्धेन रथन्तरसामत्वादीनां निमित्तताप्रतीतेस्तदुद्दिश्य ग्रहाग्रताविशेषरूपो गुण एव विधीयत इति सिद्धान्तयित्वा पुनः शङ्कितम्। ननु माध्यन्दिनसवने क्रियमाणयोर्बृहद्रथन्तरसाम्नोः प्रातःसवने क्रियमाणां ग्रहाग्रतां प्रति कथं निमित्ततेति। समाहितं च, सत्यं पूर्ववर्तिता हि द्वेधा, स्वरूपेण वा बुद्धिसन्निधानेन वेति तत्र यत्करिष्यामीति बुद्ध्या यत्सत्त्वं व्यवसितं तत्पूर्वमस्त्येव तेन रूपेण। अध्वर्योश्च कर्मापवर्गपर्यन्तानां सर्वपदार्थानां कर्मप्रक्रमकाल एव बुद्धिस्थतया प्रातःसवनेऽपि तन्निमित्तानुसारेण ग्रहाग्रताविशेषानुष्ठानं सुघटमेवेति सोऽयं न्यायः प्रकृतेऽपि समान एवेति सर्वमवदातमतःशब्दव्याख्यानं, प्रकृत्यर्थभूत-मोक्षरूपफलस्य जिज्ञासां प्रति हेतुत्वप्रतिपादकस्तसिप्रत्यय इति । ननु तथापि ओङ्कारवाच्यस्य गुणोतत्वस्य कथं जिज्ञासोपसर्जनीभूते ब्रह्मणि अन्वयः संभवेत् । पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति व्युत्पत्तेः। अन्यथा ऋद्धस्य राज्ञः पुरुष इत्यत्र व्यासस्थल इव ऋद्धस्य राजपुरुष इत्यत्र समासस्थलेऽपि राजन्येव ऋद्धत्वान्वयबोधः स्यादिति चेत्। सत्यम्। ओङ्कारो हि स्रवत्यनोङ्कृतं ब्रह्मेति प्रमाणबलाद्वेदाध्ययनोपक्रमोपसंहारयोरिव अत्रापि स्रवणविशरणपरिहाररूपादृष्टार्थे प्रतिसूत्रमाद्यन्तयो-रवश्यं पठनीय इति पूर्वोक्तरीत्या सिद्धं तत्र पूर्वसूत्रे विशेषो यत्प्राथमिकोङ्कारस्य अन्वयप्रतियोगि-पदार्थोपस्थापकतया दृष्टार्थतादि संभवतीति समाश्रीयत एव । 'ओङ्कारश्चाथशब्दश्च तस्मात्प्राथमिकौ क्रमादि'त्यादिभाष्योदाहृतप्रमाणेऽप्यथशब्दतुल्ययोगक्षेमतायाः तद्धेतुत्वं वदंश्चापि 'तृतीयोऽत उदाहृत' इति तृतीयत्वस्य 'अतश्च पूर्वमुच्चार्याः सर्व एते सतां मता' इति बहुवचनेन च ओमथातःशब्दानां तुल्यरूपतायाश्च प्रतीतेः। एवं च यथा स्विष्टकृतः हविष्प्रतिपत्तिकर्मत्वेन दृष्टार्थस्यापि यागत्वेनादृष्टार्थता एवं प्रथमसूत्रस्थस्याद्योङ्कारस्यापि दृष्टादृष्टरूपोत्तया सार्थतेति स्थितम्। उत्तरसूत्रेषु तु केवलादृष्टार्थतैव। न ह्येकत्र दृष्टार्थतेत्येतावता सर्वत्रापि तथैवेति नियमः । एकपशुके यागे अन्वेतं माता मन्यतामिति मन्त्रगतमातृपदस्यैकवचनस्य दृष्टार्थत्वेऽपि अनेकपशुकेन माता वर्द्धत इति वचनेन न्यायेन चोहनिषेधात् केवलादृष्टार्थतायाः स्वीकृतत्वात् । मन्त्रोच्चारणस्य प्रयोगकाले दृष्टार्थस्यापि जपकाले अदृष्टार्थत्व-दर्शनाच्चेत्युपपादितमधस्तादेव । एवंस्थिते यद्यपि विशेष्यत्वाज्जिज्ञासाशब्दार्थेनैवोङ्कारस्यान्वय उचितः तथापि तत्र गुणोतत्वस्यास्यासंभवात्तदङ्गभूते ब्रह्मणि तदन्वयः। अर्थतः प्रधानभूतस्यापि ब्रह्मणः शब्दत उपसर्जनत्वं न विरुद्धं यथा हि सप्तदशारत्निर्वाजपेयस्य यूपो भवतीति यूपोद्देशेन विधीयमानस्य सप्तदशारत्नित्वस्य अव्यक्तासु तु सोमस्येत्याष्टमिकन्यायेन ज्योतिष्टोमविकारवाजपेयस्य सोमद्रव्यकतया पशुद्रव्यकत्वाभावाद्यूपाभावेन अनन्वयात् । तदङ्गभूतपशुयागसाधनीभूतयूपे समन्वयः । सोऽयमङ्गा-ङ्गितान्याय आनर्थक्यात्तदङ्गेष्वित्यधिकरणे व्युत्पादितः। यथा वा अर्थवादानां प्राशस्त्ये लाक्षणिकत्वेन





पदैकवाक्यतया अन्वय इति मते यजेतेति, यागभावनारूपविशिष्टपदार्थैकदेशे भावनोपसर्जनीभूते यजत्यर्थे यागे समन्वयः । यथा वा नामार्थान्वयस्थलेऽपि दण्डी स्तोत्रमन्वाहेत्यादौ विशेषणीभूत-दण्डस्यैव विध्यन्वयः । मैत्रावरुणस्य प्रैषानुवाचितायाः प्राप्तत्वेन दण्डमात्रविधानार्थत्वादेतद्वाक्यस्य । राजपुरुषमानयेत्यादौ तु विशेष्यान्वयसंभवान्नौत्सर्गिकव्युत्पत्तिबाधः क्रियते इति । ननु तथापि पौनरुक्त्यापत्त्या पर्याययोर्ब्रह्मशब्दयोर्विशेषणविशेष्यभावेन कथमन्वय इति चेत् । सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्रापि कथम् । तत्र हि अन्तत्रयशून्यत्वमनन्तशब्दार्थः ब्रह्मत्वं नाम । कथं च नारायणं निखिलपूर्णगुणैकदेहमित्यत्राप्यन्वयः । नारायणशब्दस्य गुणपूर्णार्थकत्वात् । यदि च तत्र करिकलभ-न्यायेन विशेषणवाचकपदसमभिव्याहारे ब्रह्मनारायणादिपदानां विष्णुमात्रपरत्वं तर्हि दीयतां प्रकृतेऽपि दृष्टिः । अल्पाक्षरसूत्रे एकेनैव पदेन शास्त्रविषयरूपतदर्थोपपत्तौ अन्यतरपदस्य निष्प्रयोजनत्वरूपवैयर्थ्य शङ्कापरमवशिष्यते । सा च ओमित्येतदक्षरमुद्गीथमुपासीतेत्यादिनानाविधशब्दोपेतजिज्ञासावाक्यान्यप्यत्र निर्णेतव्यत्वेन विषय इति सूत्रस्य विश्वतोमुखतासूचनार्थमिति प्रागेव प्रपञ्चितन्यायेन निरसनीयेति सकलमकलङ्कम् । तदेतत्सर्वमभिप्रेत्योक्तं चन्द्रिकायाम् । 'अथशब्देनाधिकारमत इत्यनुमाफलम् । ब्रह्मशब्देन विषयं सूचयामास सूत्रकृदि'ति ।

**परि०**— श्रोतृबुद्धिसौकर्यायाह **एवमिति** ॥ **तत्परिशुद्धय इति** । परकृतापव्याख्या-मापातरमणीयां पश्यतां श्रोतॄणां स्वकृतव्याख्यानं न मनसि स्थिरं भवतीति तत्स्थैर्यसिद्धय इत्यर्थः । यद्वा सौत्रातःशब्दस्य मोक्षहेतुप्रसादजनकज्ञानकारणत्वादित्यर्थ इति जिज्ञासोत्थज्ञानजादित्यादिनोक्त-मयुक्तम् । बन्धस्य मिथ्यात्वेन ज्ञानादेव बन्धनिवृत्तिरूपमोक्षसंभवेन प्रसादनैरपेक्ष्यादित्यतस्तद्व्याख्या-स्थैर्यायेत्यर्थः ।

**आनन्दः**— ननु बन्धमिथ्यात्वमित्यादिभाष्यं व्यर्थं, सूत्रतदुपयुक्तार्थकथनाभावादित्यतस्तन्निवर्त्यां शङ्कां दर्शयति **एवं तावदिति** । तथाच स्वकृतव्याख्यानदार्ढ्ये उपयोगान्न वैयर्थ्यमिति भावः ।

**वा०चं०**— ननु बन्धमिथ्यात्वमित्यादिना वर्तिष्यमाणं सूत्रार्थवर्णनमन्यद्वा । नाद्यः । तथात्वानुपलम्भात् । नाप्यन्यत् । सूत्रार्थव्याख्यानावसरेऽन्योक्तेरसङ्गतत्वादभाष्यत्वप्रसङ्गाच्चेत्यतः 'अतो यथार्थबन्धस्ये'त्येतदुपसंहार-भाष्यं मनसि निधायोत्तरप्रघट्टकतात्पर्यमाह **एवमिति** । परिशुद्धिरत्रापव्याख्यानिराकरणाभावे स्वोक्तार्थस्य शिष्य-बुद्ध्युपारूढत्वाभावात्स्वव्याख्यानस्य शिष्यचेतसि स्थिरीकरणलक्षणा ज्ञेया । यथा चैतत्तथा 'अतो यथार्थे'ति वाक्यव्याख्यानावसरे स्फुटम् ।





वा०र०— **वर्तिष्यमाणमिति**। बन्धमिथ्यात्वस्य युक्त्याद्याक्षिप्तत्वनिराकरणमिति योज्यम्। **सूत्रार्थेति**। अथात इति प्रथमसूत्रेति योज्यम्। एवमुत्तरत्रापि। **अन्यद्वेति**। प्रमेयान्तरकथनं वेत्यर्थः। **तथात्वेति**। सूत्रार्थवर्णनरूपत्वेत्यर्थः। **अन्यदिति**। **प्रमेयान्तरकथनरूपमिति**। द्वितीयोऽपि नेत्यर्थः। **अन्योक्तेरिति**। प्रमेयान्तरोक्तेरित्यर्थः। एतेनान्यपदस्य पूर्वोक्तकथनपरत्वेऽर्थासङ्गतिरिति शङ्का निरस्ता। **अभाष्यत्वेति**। सूत्रार्थो वर्ण्यते यत्रेत्युक्तभाष्यलक्षणाभावेनाभाष्यत्वस्य प्रसङ्गादित्यर्थः। उपसंहारभाष्यमित्यनेनैव बन्धमिथ्यात्व-मित्यादिनेति मूलगतादिपदसङ्ग्राह्योत्तरघटकोपसंहारभाष्यपर्यन्तो ज्ञेयः इति दर्शितम्। **परिशुद्धिरत्रेति**। स्वव्या-ख्यानस्य शिष्यचेतसि स्थिरीकरणरूपा परिशुद्धिरत्र ज्ञेयेति संबन्धः। कथं परभाष्यदूषणस्य स्थिरीकरणोपयोगः इत्यत उक्तम् **अपव्याख्याननिराकरणाभावादित्यादि**। अर्थद्वयदर्शने स्वोक्तार्थ एव विश्वासायोगादिति भावः। **नन्विति**। उत्तरग्रन्थ इत्यस्य तदाक्षेपकत्वनिराकरणमित्यनेन संबन्धः। तत्र हेतुः **बन्धमिथ्यात्वस्येत्यादि**। ततश्च बन्धमिथ्यात्वस्य मुक्त्याद्याक्षिप्ततायाः परेण वक्तव्यत्वेनोत्तरग्रन्थे तदाक्षेपकत्वेति लब्धमिति तच्छब्देन मुक्त्यादिकं बुद्ध्या विविच्य परामृश्यते। तस्य मुक्त्यादेर्बन्धमिथ्यात्वाक्षेपकत्वनिराकरणमित्यर्थप्राप्तिरिति ज्ञेयम्। **बन्धमिथ्यात्वस्यापि सूत्रितत्वादिति**। सूत्रितत्वसंभवादित्यर्थः। कथं सूत्रितत्वम्। तत्समर्पकपदाभावात् इत्यत आह **असूत्रितत्वेऽपि वेति**। **अस्येति**। तद्भाष्यस्येत्यर्थः।

स०व्र०— अत्र भाष्यकृता सूत्रार्थमुपवर्ण्य मतान्तरनिरासः कृतः। स न युक्तः प्रयोजनाभावादप्रसक्त-त्वादभाष्यत्वप्रसङ्गाच्चेत्यत आह **एवं तावदिति**। अर्थदोषाभिधानस्यारम्भदोषोपयुक्तत्वात्। तत्प्राधान्याभिप्रायं भाष्यग्रहणम्।

गूढ०— ननु बन्धमिथ्यात्वमित्यादिभाष्यं व्यर्थं, सूत्रतदुपयुक्तार्थकथनाभावादित्यतस्तन्निवर्त्यां शङ्कां दर्शयति **एवं तावदिति**। तथाच स्वकृतव्याख्यानदार्ढ्ये उपयोगात् न वैयर्थ्यमिति भावः।

॥ बन्धमिथ्यात्वपूर्वपक्षः ॥

**१९७ सु०— मायावादिना हि कर्तृत्वभोक्तृत्वदोषसंसर्गक्रियाकारकफललक्षणस्य बन्धस्य आत्मन्यारोपितत्वेन मिथ्यात्वं स्वभाष्यादौ वर्णितम्। तदनुपपन्नम्। बन्धमिथ्यात्वस्य असूत्रितत्वात्। असूत्रितार्थवर्णने च भाष्यलक्षणाभावेनाभाष्यत्वप्रसङ्गात्। 'सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः। स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः' इति हि भाष्यलक्षणमाचक्षते।**

बिन्दुः— **मायावादिनेति**। **दोषसंसर्गः** दोषश्च तत्संसर्गश्चेत्यर्थः। **अविद्या** रागद्वेषादयो दोषाः। **क्रिया** भोजनादिः। कारकमन्नादि। **फलं** तृप्त्यादीत्यर्थः।

**परि०— दोषेति** । रागद्वेषादीत्यर्थः । **क्रियेति** । विहितनिषिद्धादिक्रिया कर्त्रादिकारक-तज्जन्यैहिकामुष्मिकफलरूपस्येत्यर्थः ।

**यादु०— स्वभाष्यादौ** स्वभाष्यस्यादौ । लक्षणावगममन्तरेण तदभावावगमानुपपत्तेर्लक्षणमाह **सूत्रार्थ इति** । यत्रार्थो वर्ण्यते तद्भाष्यमित्युक्ते सागरादिवर्णनस्यापि भाष्यत्वं स्यात् । तद्व्यावृत्त्यर्थं सूत्रेति विशेषणम् । पदवृत्तिं व्यावर्तयति **वाक्यैरिति** । वार्तिकव्यावृत्त्यर्थमाह **सूत्रानुकारिभिरिति** । वार्तिके सूत्रप्रतिकूलवर्णनस्यापि संभवाद्व्यावृत्तिरित्यर्थः । वृत्तिं व्यावर्तयति **स्वपदानि चेति** ।

**आनन्दः— स्वभाष्यादाविति** । स्वभाष्यस्यादौ आदिमग्रन्थे युष्मदस्मदित्यत्रेत्यर्थः । नन्वसूत्रितार्थ-वर्णनेऽप्यभाष्यत्वं कुत इत्यत आह **भाष्यलक्षणेति** । किं तद्भाष्यलक्षणमत्राह **सूत्रार्थ इति** ।अत्र केवलं सूत्रार्थवर्णनस्य वार्तिकादावपि सत्त्वादुक्तं **पदैः सूत्रानुकारिभिरिति** । तदपि टीकादौ गतमतः। **स्वपदानि च वर्ण्यन्त इति** । तथाच त्रितयमपि मिलितं लक्षणमिति भावः।

**कं०रा०— सूत्रार्थ इति** । तावत्युक्ते वार्तिकेऽतिव्याप्तिः । तस्यापि सूत्रार्थवर्णकत्वात् । अत उक्तम् **सूत्रानुकारिभिः पदैरिति** । 'उक्तानुक्तदुरुक्तादिचिन्ता यत्र प्रवर्तते । वार्तिकं तदिति प्रोक्तं वार्तिकज्ञैर्विचक्षणै-रि'त्यभियुक्तवचनाद्वार्तिकस्य सूत्रोक्तानुक्तदुरुक्तचिन्तात्मकत्वेन सूत्रशिक्षात्मकतया सूत्रानुसारिभिः पदैः सूत्रार्थ-वर्णकत्वाभावात्तेन तद्व्युदासः । तावत्युक्ते वृत्तावतिव्याप्तिः । तस्या अपि सूत्रानुकारिभिः पदैः सूत्रार्थवर्णकत्वादत उक्तं **स्वपदानीति** । वृत्तौ स्वपदविवरणाभावात्तेन तद्व्युदास इति भावः ।

**श्रीनिधि०— दोषसंसर्गो** दोषसंबन्धः । स्वभाष्यादौ ।

**वा०चं०—** ननूत्तरग्रन्थे बन्धमिथ्यात्वस्य मुक्त्याद्याक्षिप्ततायाः परेणावक्तव्यत्वेन तदाक्षेपकत्व-निराकरणमसङ्गतम् । न च स्वभाष्यस्य भाष्यत्वोपपत्तये स्वोक्तबन्धमिथ्यात्वस्य सूत्रार्थतायै सूत्रार्थमुक्त्या-द्याक्षिप्तत्वमवश्यं तेन वक्तव्यमिति वाच्यम् । बन्धमिथ्यात्वस्यापि सूत्रितत्वात् । असूत्रितत्वेऽपि वा तत्प्रतिपादकस्यास्य भाष्यकृत्प्रणीतत्वेनैव भाष्यत्वोपपत्त्याऽभाष्यत्वानापत्तेः । परेणेतरेतरारोपवर्णनेऽप्यात्मव-न्मिथ्यात्वानापत्त्या बन्धमिथ्यात्वानुक्तेश्चेत्याशङ्कां परिहरन्नुत्तरग्रन्थमवतारयति **मायावादिना हीति** । अत्रानर्थश्च प्रमातृताप्रमुखं कर्तृत्वं भोक्तृत्वं चेत्यादिपरग्रन्थानुसारेण कर्तृत्वभोक्तृत्वयोस्तत्प्रयोजकतया क्रियाकारकफलानां तत्प्रयोजकत्वेन चाविद्यातत्कार्यरागादिदोषसंसर्गस्य च बन्धत्वेन ग्रहणम् । अस्य सर्वस्य लोकव्यवहारशब्दो-पात्तस्य मिथ्यात्वं परेणोक्तमिति द्रष्टव्यम् । मिथ्यात्वेन आरोपितत्वमिति वदताऽऽत्मानात्मनोरितरेतराध्यासेऽपि देहेन्द्रियादिरूपप्रपञ्चस्य स्वरूपेणैवारोपितत्वाच्छ्रुत्यादिबाधितत्वाच्च मिथ्यात्वमेव । आत्मनस्तु संसृष्टतयैवा-रोपितत्वात् श्रुत्याद्यबाधाच्च न मिथ्यात्वमिति पराभिप्रायो ध्वनितो भवति । भाष्यादावित्यादिग्रहणमकुशलत्व-





रूपोत्तरदूषणसौकर्यार्थम् । **लक्षणाभावेनेति** । भाष्यकृत्प्रणीतत्वेनैव भाष्यत्वे चातिप्रसङ्ग इति भावः । सागरादिवर्णनस्यापि भाष्यत्वव्यावृत्तये सूत्रेत्यर्थो विशेषितः । वार्तिकव्यावृत्त्यर्थं **सूत्रानुकारिभिरिति** । वार्तिके सूत्रप्रतिकूलस्यापि वर्णनसंभवादिति भावः । वृत्तिव्यावृत्तये **स्वपदानीति** । बन्धमिथ्यात्वस्य मा भूत्सूत्रश्रौतार्थत्वम् । मा च भूत्साक्षादार्थिकार्थत्वम् । तथाऽपि श्रौतवदार्थिकस्यापि सूत्रार्थत्वाच्छ्रौतार्थापत्तिलब्धप्रयोजनादेरिवार्थिकप्रयोजनाद्यर्थापत्तिलब्धबन्धमिथ्यात्वस्यापि सूत्रार्थत्वात्तत्प्रतिपादकस्य भाष्यत्वमुपपन्नमेवेति वक्तुं सूत्रार्थद्वैविध्यमाह **द्विविध इति**।

**वा०र०— परग्रन्थेति** । पञ्चपादिकाग्रन्थेत्यर्थः । तत्र प्रमातृताप्रमुखकर्तृत्वभोक्तृत्वस्यैवानर्थत्वेनाभिधानेऽपि तत्प्रयोजकत्वादिना दोषसंसर्गादेरपि तत्राभिप्रेतत्वादिति भावः । **कर्तृत्वभोक्तृत्वयोरिति** । तत्र भोक्तृत्वाध्यासः कर्तृत्वाध्यासमपेक्षते । अकर्तुर्भोगाभावात् । कर्तृत्वं रागद्वेषसंयोगाध्यासमपेक्षते । तद्रहितस्य कर्तृत्वाभावादित्यादिविवरणोक्तप्रकारेण हेतुपरम्पराऽनादिभूता अत्रापि योज्या। तत्रोक्तं दोषसंसर्ग एवमहंकर्तृत्वप्रमुख इत्यत्र क्रियाकारकफलानां ग्रहणात्तानि च सङ्गृह्य विशिष्टो बन्धो निरूपित इति ज्ञेयं मूले । भाष्ये लोकव्यवहार इत्येवोक्तेः कथं विशिष्यायं बन्धो वर्ण्यत इत्यतस्तट्टीकायां लोकव्यवहारशब्देन तावतोऽर्थस्य ग्रहणाद्युक्तमत्र तावदुपादानमित्याह **अस्य सर्वस्येति । मिथ्यात्वेनारोपितत्वमिति वदतेति** । आरोपितत्वेन मिथ्यात्वमिति मूले उक्तत्वेऽपि अन्योन्याध्यासेऽप्यवान्तरविशेषस्य पराभिप्रेतस्याभिधानेनात्मनः सत्यत्वेऽपि अनात्मनो मिथ्यात्वं युक्तमिति प्रतिपादयितुं मिथ्यात्वेनारोपितत्वमिति व्युत्क्रमेण योजितम् । अन्यथारोपितत्वाविशेषेणावान्तरविशेषानुपपत्तिशङ्का मूलकृता न परिहृता स्यात् । मिथ्यात्वं यदीति वाक्यव्याख्यावसरे न चारोपितत्वमात्रेण मिथ्यात्वम् । चेतनस्याचेतने स्वरूपाध्यासाभावात्संसृष्टतयैवाध्यासादित्यादिग्रन्थे स्पष्टमेतदिति भावः । भाष्यादावित्यत्र भाष्यस्यादावादिभाष्य इत्यर्थः । तदेतदादिभाष्यस्येति वक्ष्यमाणत्वादिति मनसि निधाय तत्रादिपदप्रयोजनमाह **भाष्यादावित्यादीति** । यद्यप्यकुशलत्वं परेणैवाशङ्क्य निराकृतं तथापि तद्दूषणस्य स्वसंमतत्वात् तदुद्भावनमुखेन परकीयशास्त्रोपोद्घातत्वयुक्त्युपन्यासप्रवृत्तिवर्णनस्येहाभिप्रेतत्वादुत्तरदूषणेऽतिसङ्गतमिति ज्ञेयम् । भाष्यलक्षणे तत्त्वदीपनानुसारेण पदकृत्यान्याह **सागरादिवर्णनस्येत्यादिना** । **वार्तिकं** सूत्रानुक्तार्थकथनक्वाचित्कतत्प्रत्याख्यानादिपरो ग्रन्थः । **वृत्तिस्तु** सूत्रार्थकथनपरो ग्रन्थ इति ज्ञेयम् । **श्रौतार्थापत्तिः** तदन्यथानुपपत्तिः । **सूत्रार्थद्वैविध्यमिति** ।

**स०व्र०—** किं तन्मतं यद् दूष्यत इत्यत आह **मायावादिनेति** । किं तल्लक्षणं यदभावोऽत्रेत्यत आह **सूत्रेति** । सागरादिवर्णनस्य भाष्यत्वनिरासाय सूत्रेति विशेषणम् । वार्तिकव्यावृत्त्यर्थं सूत्रानुकारिभिरित्युक्तम् । वार्तिके सूत्रप्रतिकूलवर्णनस्यापि सद्भावात् ततो व्यावृत्तिः । वृत्तिं वारयति **स्वपदानीति** ।

**वि०ठ०—** यद्वा 'अवृद्धिह्रासरूपत्वं मुक्तानां प्रायिकं भवेत् । कादाचित्कविशेषस्तु नैव तेषां निषिध्यते' इत्युक्तभोगभावाभावनिमित्तककादाचित्कविशेषाख्यानन्दवैचित्र्यावैचित्र्यरूपवृद्धिह्रासौ तत्तत्काले ईश्वरेच्छायाः आवरकत्वानङ्गीकारे न स्यातामिति स्थितिमाह **दर्शयतश्चैवमिति** । वक्ष्यत इति भावः । भविष्यादाविति





भविष्यस्यादिभाग इत्यर्थः । भाष्यलक्षणवाक्ये यत्किंचित्प्रातिपदिकस्य भाष्यत्वव्यावृत्तये सूत्रार्थ इत्युक्तम् । वार्तिकव्यावृत्त्यर्थं सूत्रानुकारिभिरिति तत्र सूत्राननुसारिस्वोत्प्रेक्षितवर्णनसंभवात् । वृत्तिव्यावृत्तये **स्वपदानीति** ।

**चषकः**— तत्परिशुद्धये अन्यदीयव्याख्याधर्मिकाप्रामाण्यप्रकारकप्रतिसंहितिपूर्वकात्मीयव्याकृतिधर्मिकप्रामाण्यप्रकारकावधृतिसंपत्त्यै । **स्वभाष्यादौ** स्वभाष्योपक्रमे । **अभाष्यत्वप्रसङ्गादिति** । भाष्यलक्षणलक्षितत्वाभावप्रसङ्गादित्यर्थः । तल्लक्षणलक्षितत्वाभावप्रतिपत्त्यौपयिकतल्लक्षणप्रतिपत्तिजननाय तदभिधत्ते **सूत्रार्थ इति** । यत्रेति सप्तम्या पदान्वयिनी घटकतोच्यते । सूत्रानुकारिभिः सूत्रघटकपदानुपूर्वीसदृशानुपूर्वीकैः इदं च सावधारणं सत्तद्घटकपदानुपूर्वीविरुद्धानुपूर्वीकपदाघटितत्वं यत्पदार्थे प्रत्याययति । इत्थं च तदानुपूर्वीविरुद्धानुपूर्वीकपदाघटितस्वघटकतादृशानुपूर्वीकपदकरणकार्थकर्मकवर्णनक्रियाकत्वे सति स्वघटकपदशक्तितात्पर्यप्रकाशकपदघटितत्वमिति पर्यवसितम् । वार्तिकेतिप्रसङ्गव्युदसनाय आद्यदलोपादानम् । तत्र सूत्रानुकूलवर्णनवत्प्रतिकूलवर्णनस्यापि सत्त्वेन तन्निरासः । सूत्रार्थनिरूपिकायां वृत्तावतिप्रसङ्गविधूननायोत्तरदलोपादानम् । तथाच सागरादिवर्णनक्रियायाः सूत्रानुकारिपदकरणकत्वाभावेनैव तद्वर्णकग्रन्थेऽतिप्रसङ्गाप्रसक्त्यार्थांशे सूत्रप्रतिपाद्यस्वांशनिवेशः स्वरूपसंकीर्तनायैवेति ध्येयम् ।

**गूढ०**— **स्वभाष्यादाविति** । स्वभाष्यस्यादौ आदिमग्रन्थे युष्मदस्मदित्यत्रेत्यर्थः । ननु असूत्रितार्थवर्णनेऽप्यभाष्यत्वं कुत इत्यत आह **भाष्यलक्षणेति** । किं तद्भाष्यलक्षणमत्राह **सूत्रार्थ इति** । अत्र केवलं सूत्रार्थवर्णनस्य वार्तिकादावपि सत्त्वादुक्तं **पदैः सूत्रानुकारिभिरिति** । तदपि टीकादौ गतमतः **स्वपदानि च वर्ण्यन्त इति** । तथाच त्रितयमपि मिलितं लक्षणमिति भावः ।

**प्रदीपः**— किं तन्मतं यद्दूष्यते अत आह **मायेति** । दूषयति **तदिति** । किं तल्लक्षणं यदभावोऽत्रेत्यत आह **सूत्रेति** ।

**१९८ सु०— अत्राह । द्विविधो हि सूत्रार्थः । श्रौत आर्थश्च । तत्र 'अथातो ब्रह्मजिज्ञासेतिसूत्रे अनुवादत्वपरिहाराय शास्त्रे पुरुषप्रवृत्तिसिद्धये च कर्तव्येति पदमध्याहार्यम् । जिज्ञासापदं चानुष्ठानयोग्यस्यान्तर्णीतस्य विचारस्योपलक्षणमि'ति स्थिते साधनचतुष्टयसंपन्नस्य ब्रह्मज्ञानाय विचारः कर्तव्य इति सूत्रवाक्यस्य श्रौतोऽर्थः संपद्यते । अर्थाददधिकारिविशेषणमोक्षसाधनं ब्रह्मज्ञानमिति सिद्ध्यति । सन्निधानाच्च वेदान्तवाक्यविचारः । इति श्रुत्यर्थाभ्यां साधनचतुष्टयसंपन्नस्य मोक्षसाधनब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्तव्य इति सूत्रवाक्यस्य तात्पर्येण प्रतिपाद्योऽर्थोऽवगतः ।**

**एवं च शास्त्रे प्रेक्षावत्प्रवृत्त्यङ्गतयाऽर्थतः सूत्रितस्य प्रयोजनादेरुपपादकं बन्धमिथ्यात्वमिति तदपि सूत्रार्थ एव ।**





**परि०— अत्राहेति**। सङ्गतित्रयोक्त्या अध्यासभाष्यस्योपपन्नतामाहेत्यर्थः। **अनुवादत्वेति**। भवतीत्युक्तौ सिद्धार्थनिर्देशरूपतयाऽनुवादत्वं स्यादिति भावः। **शास्त्र इति**। न्यायानुसन्धानरूपविचारस्य कार्यत्वे हि न्यायनिबन्धनरूपशास्त्रे पुरुषप्रवृत्तिर्भवति नान्यथेति भावः। **अन्तर्णीतस्येति**। यथा चैतत्तथोक्तं प्राक्। **साधनेति**। नित्यानित्यवस्तुविवेकविषयवैराग्यशमदमादिमुमुक्षारूपसाधनचतुष्टयेत्यर्थः। **सन्निधानाच्चेति**। निर्णेयार्थकत्वेन बुद्धौ सान्निध्यादित्यर्थः। **प्रयोजनादेरुपपादकं बन्धमिथ्यात्वमितीति**। अनेन प्रयोजनविषयोपपादकत्वं बन्धमिथ्यात्वस्योक्तम्।

**यादु०**— पूर्ववदसौत्रश्रौतार्थसंस्पर्शित्वेऽप्यार्थार्थसंस्पर्शित्वेन भाष्यत्वं वक्तुमाह **द्विविधो हि सूत्रार्थ इत्यादिना**। **अनुवादत्वे चेति**। भवतीत्यध्याहारेऽनुवादत्वं स्यात्तत्परिहारायेत्यर्थः। प्रकृतिप्रत्ययार्थयोर्ज्ञानेच्छयोः कर्तव्यत्वासंभवादाह **जिज्ञासापदं चेति**। एवमप्यधिकारिफलसाकाङ्क्षत्वेन अबोधकत्वमाशङ्क्याह **साधनचतुष्टयेति**। अथशब्दाद्विशिष्टाधिकारिप्रतिपत्तिः। इच्छाविषयत्वाद्ब्रह्मज्ञानफलत्वं चेत्यर्थः। ज्ञानस्य सुखदुःखावाप्तिनिवृत्त्यन्यतरत्वाभावादफलत्वमाशङ्क्यार्थमाह **अर्थादिति**। ब्रह्मज्ञानाय विचारे विहिते ब्रह्मज्ञानस्य स्वतोऽपुरुषार्थत्वेनान्यत्तत्साध्यफलं वक्तव्यम्। तत्किमित्याकाङ्क्षायामथशब्दवाच्यानन्तर्यविधित्वेन यद्विवक्षितं मुमुक्षुत्वरूपमधिकारिविशेषणं तत्प्रविष्टो मोक्षः फलतया संबद्ध्यते। कुतः। अर्थात्। अन्यथाऽनुपपत्तेरित्यर्थः। विचारस्य विषयसाकाङ्क्षत्वात्तस्य चानिर्दिष्टत्वात्साकाङ्क्षत्वशङ्कां निवारयति **सन्निधानाच्चेति**। वेदान्तवाक्यविचार इति च सिद्ध्यतीति संबन्धः। प्रत्यक्षाद्यगोचरत्वेनोपनिषन्मात्रप्रतिपाद्यत्वात्तद्विषयो विचारः साधनमित्यर्थः। सूत्रार्थवर्णनमुपसंहरति **इति श्रुत्यर्थाभ्यामिति**। यदर्थमर्थद्वयं समर्थितं तदाह **एवं चेति**। प्रयोजनादेरित्यत्रादिपदेन विषयो ग्राह्यः।

**वं०प०— श्रौतः** श्रुत्या पदमहिम्ना लब्ध इत्यर्थः। **अनुष्ठानयोग्यस्येति**। ज्ञानेच्छयोरविधेयत्वेन पुरुषानुष्ठानयोग्यत्वाभावादिति भावः। **अर्थादिति**। ब्रह्मज्ञानस्य मोक्षसाधनत्वमार्थिकमित्यर्थः। **सन्निधानादिति**। विचार्यत्वेन बुद्धिसन्निहितत्वादित्यर्थः।

**आनन्दः**— नन्वत्र किं साक्षात्सूत्रार्थकथनं वा सूत्रार्थवर्णनशब्देनोच्यते अर्थात्तत्कथनं वा। नाद्यः। तथा सति बन्धमिथ्यात्वमित्यादौ साक्षात्सूत्रार्थकथनाभावेन तस्याप्यभाष्यत्वापत्तेः। अर्थात्तत्कथनं तु प्रकृतेऽप्यस्तीत्याह **अत्राहेति**। श्रौत इति वृत्त्या पदबोधितोऽर्थ इत्यर्थः। **आर्थश्चेति**। वाक्यार्थान्यथानुपपत्त्या लभ्योऽर्थ इत्यर्थः। तत्र श्रौतमर्थं दर्शयति **तत्रेति**। अध्याहारप्रयोजनं सूत्र इत्यादि। अथशब्दार्थकथनं **साधनेति**। सन्प्रत्ययलक्ष्यो विचार इत्यर्थः। तथापि ज्ञानस्य मोक्षसाधनत्वं केन लभ्यत इत्यत आह **अर्थादिति**। तथापि बन्धमिथ्यात्वस्य कथं सूत्रार्थत्वमित्यत आह **एवं चेति**। प्रयोजनादेरित्यत्रादिपदेन विषयपरिग्रहः।

**कं०रा०— साधनेति**। नित्यानित्यवस्तुविवेक इहामुत्रफलभोगविरागः शमदमादिसंपत्तिर्मुमुक्षा चेत्येवंविधसाधनचतुष्टयसंपन्नस्येत्यर्थः। **अनर्थहेतुनिबर्हणं** अनर्थहेतुनिवर्तकम्।

**श्रीनिधि०— श्रौतोऽर्थः** श्रवणलभ्योऽर्थः । अक्षरलभ्य इति यावत् । **आर्थः** श्रुतार्थान्यथानुपपत्त्या प्राप्तः । **अत्राहेति** । बन्धमिथ्यात्वस्य शास्त्रे प्रेक्षावत्प्रवृत्त्यङ्गतयाऽर्थतस्सूत्रितस्य प्रयोजनादेरुपपादकत्वात् । विषयत्वेन । सूत्रितस्य ब्रह्मणो विषयतोपपादकत्वात् । सकलशास्त्रतात्पर्यविषयार्थोपपादकत्वाच्च । अतः न तद्वर्णनेनासूत्रितार्थवर्णनदोषः । नापि आर्थिकार्थस्य प्रथमत एव वर्णनादकौशल्यदोषश्चेति भावेनादिभाष्यस्य त्रेधा सङ्गतिमाहेत्यर्थः । **अर्थादधिकारिविशेषणेति** । ब्रह्मज्ञानाय विचारः कर्तव्य इत्युक्ते ज्ञानस्य स्वतःपुरुषार्थत्वाभावेन स्वरूपेण नोद्देश्यत्वम् । किन्तु पुरुषार्थसाधनत्वेनैव । स च पुरुषार्थः मोक्ष एव । यो ज्ञानसाध्यः । अधिकारिविशेषणत्वेन आवश्यकत्वादिति भावः । **सन्निधानाच्चेति** । **ब्रह्मज्ञानायेति** । तद्रूपसाध्येन तत्साधनानि वेदान्तवाक्यानि बुद्धिसन्निहितानीति भावः ।

**वा०चं०—** श्रौतार्थिकार्थयोरन्यादृशत्वे न प्रयोजनाद्याक्षेपकत्वमित्यतः प्रकृतोपयोगितया विशिष्य श्रौतार्थिकार्थस्वरूपं दर्शयति **तत्रेत्यादिना** । साकाङ्क्षतया सूत्रानर्थक्यं तावन्निरस्यति **तत्रेति** । सर्वज्ञबादरायणप्रणीतसूत्रानर्थक्यानुपपत्तेरध्याहारेणापि सूत्रं योज्यमित्याह **अध्याहर्तव्यमिति** । तदपि योग्यमेवाध्याहर्तव्यमित्याह **कर्तव्येतीति** । योग्यत्वमुपपादयति **शास्त्रेति** । पुरुषप्रवृत्तिरेव मा भूदित्यत आह **अनुवादत्वेति** । निरर्थकसिद्धबोधकवाक्यमनुवादशब्दार्थ इति ज्ञेयम् । ननु कर्तव्यपदं नाध्याहारयोग्यम् । प्रकृतिप्रत्ययार्थयोर्ज्ञानेच्छयोरन्यतरस्यापि कृतिसाध्यत्वाभावादित्यत आनर्थक्यपरिहाराय प्रवृत्तयेऽध्याहर्तव्यकर्तव्यपदस्य लक्षितविचारेणान्वयमाह **जिज्ञासापदं चेति** । वाच्यार्थानुपपत्तिशामकस्य विचारस्य लक्ष्यत्वमुपपन्नमित्याह **अनुष्ठानेति** । शक्यसंबन्धकथनमन्तर्णीतार्थस्येति व्याख्यातमेतत् । एवमप्यधिकारिफलसाकाङ्क्षत्वेनानर्थक्यमित्यत आह **साधनेति** । अथशब्दाद्विशिष्टाधिकारिप्रतिपत्तिः । इच्छाविषयत्वाद्ब्रह्मज्ञानस्य फलत्वं चेत्यर्थः । **श्रौतार्थः संपद्यत इति** । यद्यप्यथशब्दस्य किञ्चिन्निरूपितानन्तर्यमात्रमर्थस्तथाऽपि सामान्यशब्दस्य नियतविशेषपरत्वव्युत्पत्तेः श्रुत्यनुभवसिद्धः प्रतियोगिविशेषोऽपि शब्दार्थ इत्यर्थः । ज्ञानस्य सुखदुःखाभावेतरत्वादफलत्वमित्यत आह **अर्थादिति** । अयमाशयः । ब्रह्मज्ञानाय विचारकर्तव्यतायास्तावत्सूत्रात्प्रतीयमानत्वाद् ब्रह्मज्ञानस्य च स्वरूपेण पुमर्थत्वानुपपत्तेः पुमर्थसाधनत्वेनैव पुमर्थत्वे वक्तव्ये तत्फलविशेषाकाङ्क्षायां स्वर्गादेः विरक्तस्यैवात्राधिकारात् दृष्टसंभवेऽदृष्टकल्पनायोगाच्चाथशब्दोपात्ताधिकारिविशेषणमोक्षस्य ज्ञानफलत्वेन संबन्धो यथा स्वर्गकामो यजेतेत्यत्र स्वर्गस्य । न चाधिकारिविशेषणतामात्रस्य फलताप्रयोजकत्वे जीवनगृहदाहादेरपि फलताप्रसङ्गात्काम्यत्वेनापि विशेषणे परस्त्रीकामः प्रायश्चित्तं कुर्यादिति काम्यमानयोषित्पिण्डस्यापि फलताप्रसङ्गात्कथमेतदिति वाच्यम् । अधिकारिविशेषणत्वेन प्रकृतमोक्षस्यानिन्दितकाम्यत्वेन फलत्वोपपत्तेरिति । विचारस्य विषयसाकाङ्क्षत्वात्तस्य चानिर्देशात् साकाङ्क्षत्वमित्यत आह **सन्निधानाच्चेति** । इति च सिद्ध्यतीति संबन्धः । योग्यतया स्मृतिरत्र सन्निधानम् । तं त्वौपनिषदं पुरुषं पृच्छामीति श्रुत्या वेदान्तानां ब्रह्मप्रमितियोग्यतया नावेदविदिति श्रुत्या तदितरमानानां तदयोग्यत्वेन चावगतत्वात् । श्रोतव्यादिवाक्यसन्निधौ वेदानां पाठात्तस्य तानि सन्निहितानीति तन्मूलसूत्रस्यापि तानि सन्निहितानीति वाऽर्थः । यदर्थमर्थद्वयवर्णनं तदाह **एवं चेति** ।





**वा०र०**— ननु नेदं भाष्यव्याख्यानेत्यादिविवरणस्थशङ्काग्रन्थानुसारेणेति पूरणीयम्। **अन्यादृशत्व इति**। प्रयोजनाद्याक्षेपकत्वोपयोगिवक्ष्यमाणप्रकारादतिरिक्तत्व इत्यर्थः। तत्त्वदीपनाद्यनुसारेणानुवादत्वेत्यादिकमाकाङ्क्षा-क्रमेण व्याख्याति **सर्वज्ञेत्यादि**। **निरर्थकसिद्धार्थेति**। प्रयोजनं विना सिद्धार्थबोधकत्वमित्यर्थः। अधिकविधानाद्यर्थकसिद्धार्थकबोधकवाक्यं व्यावर्तयितुं निरर्थकतेति विशेषणम्। **कृतिसाध्यत्वाभावादिति**। तयोः पुमनधीनत्वादिति भावः। प्रवृत्तये चेति पाठः। प्रवृत्तिसिद्धये चेत्यस्यानुवादोऽयम्। जिज्ञासापद-मुख्यार्थस्वीकारे प्राप्तानुपपत्तिर्लक्ष्यार्थस्वीकारे नायातीत्यतो लक्षणाश्रयणमुपपन्नमित्याशयेनाह **वाच्यार्थेति**। **व्याख्यातमिति**। ज्ञानेच्छान्तर्णीत इत्येतद्व्याख्यावसर इति शेषः। **अधिकारीति**। अधिकारिफलाभ्यां साकाङ्क्षत्वेनेति विग्रहः। साकाङ्क्षतयेति प्रकृतत्वात्। एतेन फलाकाङ्क्षत्वेनेत्येव पूर्णम्। सकारोऽधिक इति निरस्तम्। **अनियतेति**। सामान्यस्य व्यवहारेष्वनुपयोगादनियतो यो विशेषः यः कश्चिद्विशेष इति यावत्। तत्परत्वव्युत्पत्तेरित्यर्थः। विशेषवाचकपदस्य तत्तद्विशेषमात्रपरत्वं नैव सामान्यवाचकपदस्येत्याशयः। तर्हि साधनचतुष्टयसंपत्तेरेव कुतो ग्रहणमित्यत आह **श्रुत्यनुभवेति**। **शब्दार्थः** अथशब्दार्थः। **ज्ञानस्येति**। ब्रह्मज्ञान-स्येत्यर्थः। **स्वर्गादिरिति**। पञ्चमीयम्। अदृष्टमेव फलं तर्ह्यस्त्वित्यत आह **दृष्टेत्यादि**। **जीवनेति**। यावज्जीव-मग्निहोत्रं जुहोतीत्यादिवाक्ये विहिताग्निहोत्रादौ जीवनवतोऽधिकारः यस्याग्निर्गृहान् दहेत् सोऽग्नयेऽष्टाकपाल-मित्यादिवाक्यविहितगृहदाहेष्ट्यादौ गृहदाहादिमतोऽधिकारादिति भावः। **विषयेति**। विषयेण साकाङ्क्षत्वादित्यर्थः। साकाङ्क्षत्वम्। ततश्चानर्थक्यमिति स्पष्टम्। सन्निधानपदार्थमाह **योग्यतयेति**। स्मारकं किमित्यतस्तद्दर्शयति **तं त्वेति**। यथाश्रुतसन्निधानमाश्रित्यापि व्याख्याति **श्रोतव्यादीति**। **तन्मूलम्**। श्रोतव्यादिवाक्यमूलकम्।

**सं०व्र०**— पूर्ववादी सौत्रश्रौतार्थसंस्पर्शित्वेऽपि आर्थार्थसंस्पर्शित्वेन भाष्यत्वं वक्तुमाह **अत्राहेत्यादिना**। सूत्रस्याबोधकत्वेनानर्थकतां तावत्परिहरति **द्विविधो हीति**। **तत्रेति**। अर्थद्वैविध्ये सतीत्यर्थः। कर्तव्यपदा-ध्याहारेऽप्यानर्थक्यं तदवस्थम्। प्रकृतिप्रत्ययार्थयोर्ज्ञानेच्छयोः कर्तव्यत्वासंभवादित्याशङ्क्य जिज्ञासापदेन विचारं लक्षयित्वा तस्य कर्तव्यतोच्यत इत्याह **जिज्ञासेति**। एवमपि अधिकारिफलसाकाङ्क्षत्वेनानर्थक्यमाशङ्क्याह **इति स्थित इति**। अथशब्दाद्विशिष्टाधिकारिप्रतिपत्तिरिच्छाविषयत्वात् ब्रह्मज्ञानस्य फलत्वं चेत्यर्थः। ज्ञानस्य सुखदुःखावाप्तिनिवृत्त्यन्यतरत्वाभावादफलत्वमाशङ्क्य आर्थार्थमाह **अर्थादिति**। विचारस्य विषयसाकाङ्क्षत्वात् तस्य चानिर्दिष्टत्वात् साकाङ्क्षत्वाशङ्कां निरस्यति **सन्निधानादिति**। वेदान्तवाक्यविचार इति च सिद्ध्यतीति संबन्धः। प्रत्यक्षाद्यगोचरत्वेनोपनिषन्मात्रप्रतिपाद्यत्वात् तद्विषयो विचारः साधनमित्यर्थः। सूत्रार्थवर्णनमुपसंहरति **इतीति**। यदर्थमर्थद्वयसमर्थनं तदाह **एवं चेति**।

**वि०ठ०**— मिथ्यात्वस्य सूत्राक्षरलब्धत्वाभावेऽपि आर्थिकार्थत्वान्नोत्सूत्रितत्वमिति वक्तुमाह **साधन-चतुष्टयेति**। नित्यानित्यवस्तुविवेकः इहामुत्रार्थभोगविरागः शमादिपञ्चकं मुमुक्षा चेति साधनचतुष्टयम्। अथशब्दा-





त्तद्विशिष्टाधिकारिप्रतिपत्तिः इच्छाविषयत्वात् ब्रह्मज्ञानस्य फलत्वप्रतिपत्तिश्च । सुखदुःखाप्तिहान्यन्यतरत्वाभावात् कथं ब्रह्मज्ञानस्य फलत्वमित्यत आह **अर्थादिति** । ब्रह्मज्ञानाय विचारे विहिते तस्य स्वतोऽपुरुषार्थत्वात् अन्यत् तत्साध्यं फलं वाच्यं तत्किमित्याकाङ्क्षायां अथशब्दवाच्यानन्तर्यावधित्वेन यद्विवक्षितं मुमुक्षुत्वरूपमधिकार विशेषणं तत्प्रविष्टो मोक्षः फलतयार्थात्संबध्यत इत्यर्थः । विचारस्य विषयसाकाङ्क्षत्वात् तस्य चात्रानिर्देशात् आकाङ्क्षावत्त्वेनानर्थक्यमित्यत आह **सन्निधानादिति** । इति च सिद्ध्यतीति संबन्धः । नेन्द्रियाणीत्युक्तेः वैदिकवेद्यत्वात् श्रोतव्य इत्यादिवाक्यानां सन्निधौ वेदान्तानामेव पाठात्तेषां सन्निहितत्वमिति ज्ञेयम् । यदर्थं श्रौतार्थिकार्थद्वयनिरूपणं तदिदानीमाह **एवं चेति** ।**प्रयोजनादेः** इत्यादिपदेन विषयग्रहणम् ।

**चषकः**— सूत्रघटकपदसमभिव्याहाररूपाकाङ्क्षाज्ञानजनितान्वयधीविषयतापन्नाप्रतिपादकत्वेऽपि तादृशार्थान्वयानुपपत्तिप्रतिसन्धानाधीनोदीच्यबोधविषयीभूतार्थप्रत्यायकतया भाष्यता सङ्गच्छत इत्याशयेनाह **द्विविधो हि सूत्रार्थ इत्यादिना** ।

**गूढ०**— नन्वत्र किं साक्षात् सूत्रार्थकथनं वा सूत्रार्थवर्णनशब्देनोच्यते अर्थात्तत्कथनं वा । नाद्यः । तथा सति बन्धमिथ्यात्वमित्यादौ साक्षात्सूत्रार्थकथनाभावेन तत्राप्यभाष्यत्वापत्तेः । अर्थात्तत्कथनं तु प्रकृतेऽप्य स्तीत्याह **अत्राहेति** । श्रौत इति वृत्त्या पदबोधितोऽर्थ इत्यर्थः । **आर्थश्चेति** । वाक्यार्थान्यथानुपपत्त्या लभ्योऽर्थ इत्यर्थः । तत्र श्रौतमर्थं दर्शयति **तत्रेति** । अध्याहारप्रयोजनं सूत्र इत्यादि । **अथशब्दार्थकथनं साधनेति** । सन्प्रत्ययलक्ष्यो विचार इति भावः । तथापि ज्ञानस्य मोक्षसाधनत्वं केन लभ्यत इत्यत आह **अर्थादिति** । तथापि बन्धमिथ्यात्वस्य कथं सूत्रार्थत्वमित्यत आह **एवं चेति** । प्रयोजनादेरित्यत्रादिपदेन विषयपरिग्रहः ।

**प्रदीपः**— पूर्ववादी सौत्रश्रौतार्थासंस्पर्शित्वेऽप्यार्थार्थसंस्पर्शित्वेन भाष्यत्वं वक्तुमाह **अत्राहेत्यादिना** । सूत्रस्याबोधकत्वेनानर्थक्यं तावत्परिहरति **द्विविधो हीति** । **तत्रेति** । अर्थद्वैविध्ये सतीत्यर्थः । कर्तव्यपदाध्याहारेऽप्यानर्थक्यं तदवस्थम् । प्रकृतिप्रत्ययार्थयोर्ज्ञानेच्छयोः कर्तव्यत्वासंभवादित्याशङ्क्य जिज्ञासापदेन विचारं लक्षयित्वा तस्य कर्तव्यतोच्यत इत्याह **जिज्ञासेति** । एवमप्यधिकारिफलसाकाङ्क्षत्वेनानर्थक्यमाशङ्क्याह **इति स्थित इति** । अथशब्दाद्विशिष्टाधिकारिप्रतिपत्तिरिच्छाविषयत्वात् ब्रह्मज्ञानस्य फलत्वं चेत्यर्थः । ज्ञानस्य सुखदुःखावाप्तिनिवृत्त्यन्यतरत्वाभावात् अफलत्वमाशङ्क्यार्थमाह **अर्थादिति** । विचारस्य विषयसाकाङ्क्षत्वात्तस्य चानिर्दिष्टत्वात्साकाङ्क्षशङ्कां निरस्यति **सन्निधानादिति** । वेदान्तवाक्यविचार इति च सिद्ध्यतीति संबन्धः प्रत्यक्षाद्यगोचरत्वेनोपनिषन्मात्रप्रतिपाद्यत्वात्तद्विषयो विचारः साधनमित्यर्थः । सूत्रार्थवर्णनमुपसंहरति **इतीति** । यदर्थमर्थद्वयसमर्थनं तदाह **एवं चेति** ।

**१९९ सु०— ब्रह्मज्ञानं हि सूत्रितमनर्थहेतुनिबर्हणम् । अनर्थश्च प्रमातृताप्रमुखं कर्तृत्वं भोक्तृत्वं च। तद्यदि वस्तुकृतं स्यान्न ज्ञानेन निबर्हणीयम्। यतो ज्ञानमज्ञानस्यैव निवर्तकम्। तद्यदि कर्तृत्वं भोक्तृत्वमज्ञानहेतुकं स्यात्ततो ब्रह्मज्ञानमनर्थहेतुनिबर्हणमुच्यमानमुपपद्येत । तेन सूत्रकारेणैव ब्रह्मज्ञानमनर्थहेतुनिबर्हणं सूत्रयता अविद्याहेतुकं कर्तृत्वं भोक्तृत्वं प्रदर्शितं भवति ।**

**विचारविषयतया च ब्रह्म सूत्रितम् । आत्मा च ब्रह्म । तस्य चाहं कर्ता भोक्तेति प्रतीयमानं रूपं यदि पारमार्थिकं स्यात्तदा असन्दिग्धतया विचारविषयता न स्यात्। तद्यदि कर्तृत्वादिरूपमविद्यारोपितम् । पारमार्थिकं तु निष्क्रियं निष्कलं ब्रह्मरूपं स्यात्ततोऽस्य सन्दिग्धतया विषयतोच्यमानोपपद्यते । तेनात्मस्वरूपं विचारविषयं सूत्रयता सूत्रकृतैव कर्तृत्वाद्यतदाकारस्य मिथ्यात्वं सूत्रितं भवति ।**

**परि०—** तत्र प्रयोजनोपपादकत्वं **ब्रह्मज्ञानं हीत्यादिना** विव्रियते । **प्रमातृताप्रमुखं** प्रमातृप्रमेयप्रमाणरूपम् । **अज्ञानहेतुकमिति** । अज्ञानं साक्षाज्ज्ञाननिवर्त्यं तत्कार्यं तु तन्निवृत्तिद्वारा निवर्त्यम्। प्रमात्रादि च नाज्ञानरूपमिति तद्धेतुकमेव वाच्यम्। तथात्व एव हि तदुपादानाज्ञाननिवृत्ति-द्वारा निवृत्तिः संभवतीति भावः। विषयोपपादकत्वं बन्धमिथ्यात्वस्याह **विचारविषयतया चेति** । **ब्रह्म सूत्रितमिति** । वेदान्तार्थस्यैव ब्रह्मत्वाद्वेदान्तविचारः कार्य इत्युक्तावपि विचारविषयतया ब्रह्मणः प्राप्तत्वादिति भावः।

**यादु०—** ननु कथं प्रयोजनादेरुपपादकं बन्धमिथ्यात्वमित्यपेक्षायां तस्य प्रयोजनोपपादकत्वरूपं प्रकारं तावद्दर्शयति **ब्रह्मज्ञानं हीति**। विचारफलतयोच्यमानं ब्रह्मज्ञानं स्वस्यापुरुषार्थत्वादनर्थनिवृत्तिफलतामाक्षिपतीत्यर्थः। नरकपातादिलक्षणस्यानर्थस्य ज्ञाननिवर्त्यत्वाभावात् । शरीराद्यभिमानपुरःसरं नरकपातादिजनितदुःखप्रमातृतैवानर्थ इत्याह **अनर्थश्चेति** । **वस्तुकृतमिति** । वस्तु परमार्थसद्यथा तथा कृतमित्यर्थः । परमार्थभूतमिति यावत् । विषयोपपादकताप्रकारं दर्शयति **विचारविषयतया चेति** । ब्रह्मणो विचारविषयत्वे कुतो मिथ्यात्वाक्षेप इत्यत आह **आत्मेति**।

**वं०प०— सूत्रितम्** अर्थात्। **अनर्थः** संसारः। **तद्धेतुः** अविद्या। **निबर्हणं** नाशकम्। मोक्षसाधन-मिति यावत्। **वस्तुकृतं** वास्तवम्। **अज्ञानस्यैवेति**। उपलक्षणमेतत्। तत्कार्यस्य चेत्यपि द्रष्टव्यम्। एवशब्देन सत्यस्य निवर्तकत्वव्यावृत्तिः। तथा च प्रमातृताप्रमुखस्य सत्यत्वे आत्मस्वरूपानुबन्धित्वप्राप्त्या आत्मस्वरूप-वज्ज्ञानेन निवृत्तिर्न स्यादित्यर्थः । **उच्यमानम्** अर्थादुच्यमानम् । आत्मा जीव एव । **तस्य** जीवस्य । निष्क्रियनिष्कलब्रह्मस्वरूपस्य जीवस्य। **सूत्रितम्** अर्थात् ।





**आनन्दः**— प्रयोजनोपपादकत्वमुपपादयति **ब्रह्मज्ञानं हीति**। **निबर्हणं** निवर्तकम्। **वस्तुकृतं** सत्यम्। कुतो नेत्यत आह **यत इति**। **तत इति**। तथाच ज्ञानेनाज्ञानस्य नाशे उपादाननिवृत्तौ उपादेयस्यापि निवृत्तिरिति सर्वस्यापि कर्तृत्वादेर्निवृत्तिरिति भावः। बन्धमिथ्यात्वस्य विषयोपपादकत्वं दर्शयति **विचारेति**। विचारज्ञानयोः साध्यसाधनभावात्तयोश्चैकविषयत्वादिति भावः।

**श्रीनिधि०**— **यतो ज्ञानमज्ञानस्यैव इति**। ससन्तानस्येति शेषः। **अविद्याहेतुकं** कर्तृत्वादिकमित्यादि। अविद्या तत्कार्ययोरन्यतरत्वं च मिथ्यात्वव्याप्यमिति भावः।

**वा०चं०**— तत्र प्रयोजनोपपादकत्वमुपपादयति **ब्रह्मज्ञानं हीति**। अर्थाद् ब्रह्मज्ञानस्य मोक्षसाधनत्वसिद्धेः प्रागुक्तत्वादिति भावः। नन्वनर्थो नरकपातादिलक्षणोऽन्य एव शरीरादिप्रतिभासस्य च मिथ्यात्वं साध्यत इति किं केन सङ्गतमित्यतः शरीराद्यभिमानपुरःसरनरकपातादिजन्यदुःखप्रमातृताया एवानर्थत्वान्नासङ्गतिरित्याह **अनर्थश्चेति**। निवर्ततां परमार्थ एव बन्धो ब्रह्मज्ञानेनेत्याशङ्क्य दृष्टान्तासंमत्योत्तरयति **तद्यदीति**। वस्तुना परमार्थसता निष्पन्नं वस्तुकृतं यथा वस्तु तथा वा कृतं वस्तुकृतमित्यर्थः। विषयाश्रयोभयगतानां सत्यानां ज्ञानेन निवृत्तेर्वक्ष्यमाणरीत्याऽसंभवादिति भावः। ननु ज्ञानबन्धनिवृत्त्योः श्रुतिसिद्धसाध्यसाधनभावेऽनुपपत्त्यभावेन न बन्धस्याविद्यात्मतासिद्धिरिति चेन्न। आग्नेयादिष्वपूर्वकल्पनावच्छ्रुतोपपत्तयेऽविद्यात्मकत्वस्यावश्यकल्पनीयत्वात्। न च यत्कालान्तरभावि न तत्कारणमिति व्याप्त्यन्यथाऽनुपपत्त्या तत्र तथा कल्पनमिति वाच्यम्। प्रकृतेऽपि तादृशव्याप्तेः संभवादित्याशयेनाह **यत इति**। यद्वा तद्यदीत्युक्ततर्के स्वाश्रयगतेत्यादिपूर्वोक्तो भावो न वर्णनीयः। यथाश्रुते चाप्रयोजकताशङ्कायां ज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्तिर्बन्धस्याज्ञानहेतुकत्वमनादाय न पर्यवस्यन्ती वस्तुकृतत्वमुन्मूलयतीति नाप्रयोजकतेति भावेनाह यत इतीति योज्यम्। एवं च सूत्रकृतैव बन्धस्याविद्यात्मकत्वव्यापारः सिद्ध इत्याह **तेनेति**। एवं प्रयोजनोपपादकतां बन्धमिथ्यात्वस्योपपाद्य विषयोपपादकतां चोपपादयति **विचारेति**। नन्वस्तु ब्रह्मणो विचारविषयत्वं तथाऽपि मन्मत इव त्वन्मतेऽपि बन्धमिथ्यात्वाभावेऽपि ब्रह्मणः सन्दिग्धतया विचारविषयत्वोपपत्तिर्न तदर्थं बन्धमिथ्यात्वं वर्णनीयमित्यतो जीवस्य सन्दिग्धत्व एव ब्रह्मणः सन्दिग्धत्वं न त्वन्यथेति भावेन तदुपपादनाय जीवब्रह्माभेदरूपं मन्मतवैलक्षण्यं स्वमतस्याह **आत्मा चेति**। एवं ब्रह्मण आत्मत्वं सिद्धवत्कृत्य तद्विषयत्वस्य बन्धमिथ्यात्वं विनाऽनुपपत्तिप्रकारं दर्शयति **तस्य चेत्यदिना**। पूर्ववत्सूत्रस्यैव विषयोपपादकबन्धमिथ्यात्वे व्यापारं दर्शयति **तेनेति**।

**वा०र०**— न निबर्हणीयमिति प्रतिज्ञायां हेतुं बहिरेवाह **विषयाश्रयेति**। तर्हि यत इत्युत्तरवाक्यवैयर्थ्यमित्यतस्तत्सङ्गमयितुं तद्व्यावर्त्यशङ्काप्रदर्शनपूर्वकं तन्निवर्तकतया यत इत्येतद्वाक्यमवतारयति **ननु ज्ञानेति**। गूढाभिसन्धेरुत्तरमाग्नेयादिष्विति। **व्याप्त्यन्यथानुपपत्त्येति**। इति व्याप्तेः सत्त्वादन्यथाऽपूर्वाकल्पने अनुपपत्त्या यागस्वर्गयोः साध्यसाधनभावस्यानुपपत्त्या तत्राग्नेयादिषु तथा अपूर्वद्वारेति कल्पनमित्यर्थः। **तादृशेति**।





यादृशव्याप्तिबलेन यथाश्रुतार्थाङ्गीकारे अनुपपत्तिरायातीति तादृशेत्यर्थः । **यत इतीति** । एवं च यतो ज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्तेर्बन्धस्याज्ञानकार्यत्वाभावे ज्ञानेन तन्निवृत्तेरयोग आयातीति तदुपपत्त्यर्थं बन्धस्य मिथ्यात्वं कल्पनीयमिति मूलाशयः । अस्मिन्पक्षे यत इत्युत्तरवाक्यस्य न ज्ञानेन निबर्हणीयमित्युक्तप्रतिज्ञायां हेतुसमर्पकता नायातीत्यतः पूर्ववाक्येनैवोत्तरवाक्यं सङ्गमयति **यद्वेति** । **स्वाश्रयगतेत्यादीति** । अयं च विषयाश्रयोभयगतेति प्रागुक्तस्यार्थानुवाद इति ज्ञेयम् । तदवर्णने यत इत्यस्य योजनां दर्शयति **यथाश्रुते चेति** । **अप्रयोजकतेति** । वस्तुकृतत्वमस्तु ज्ञानेन निबर्हणीयत्वं चास्त्वित्यप्रयोजकतेत्यर्थः । वस्तुकृतत्वरूपापादकोच्छेदरूपं बाधकमाह **ज्ञानमिति** । यथाश्रुते चेति योज्यमिति संबन्धः । **तद्यदि कर्तृत्वमिति** मूलम् । तत्कर्तृत्वं भोक्तृत्वं च यदीति योज्यम् । अथवा तदित्यव्ययं तस्मादित्यर्थे । यतो ज्ञानमित्युक्तव्याप्तिरूपबाधकादित्यर्थः । अनेनाज्ञानहेतुकत्वाङ्गीकारे ज्ञानस्याज्ञाननिवर्तकत्वं तु संभवतीत्युक्तं भवति । **मन्मतवैलक्षण्यमिति** । मदित्युक्तभेदवादिमतवैलक्षण्यमित्यर्थः । **सिद्धवदिति** । यद्यपि सिद्धं कृत्वेत्येव वाच्यम् । तथापि तस्यात्मत्वे प्रमाणोपन्यासस्य वादिपक्षे बाधकस्य वाऽनुपन्यासादात्यन्तिकसिद्धिरिदानीं नायातीति सिद्धवदित्युक्तमिति न दोषः।

**स०व्र०**— ननु ज्ञानस्यैव विचारफलत्वम् । अनर्थस्य मिथ्यात्वेन विनानुपपत्त्यभावात् न प्रयोजनं मिथ्यात्वाक्षेपकमित्याशङ्क्याह **ब्रह्मज्ञानं हीति** । ब्रह्मज्ञानोद्देशेन विचारकर्तव्यता विधीयमाना ब्रह्मज्ञानस्य अनर्थनिवृत्तिफलतामाक्षिपति । स्वरूपेण तस्यापुरुषार्थत्वादित्यर्थः । अथ नरकपातादिलक्षणस्यानर्थस्य ज्ञान-निवर्त्यत्वाभावात् । शरीराद्यभिमानपुरःसरं नरकपातादिजनितदुःखप्रमातृ तैवानर्थ इत्याह **अनर्थश्चेति** । निवर्ततां परमार्थ एवानर्थो किं ब्रह्मज्ञानेनेत्यत आह **तद्यदीति** । वस्तुना परमार्थसता निष्पन्नं वस्तुकृतम् । वस्तु यथा तथा वा कृतमित्यर्थः । सत्यस्य ज्ञानानिवर्त्यत्वे हेतुमाह **यत इति** । अथवा ननु न दृष्टसामर्थ्याद् ज्ञानाद्बन्ध-निवृत्तिर्येन बन्धस्याविद्यात्मकत्वं वर्ण्येत । किन्त्वागम एव ज्ञानाद्बन्धनिवृत्तिं श्रावयति । ननु श्रुत्युपपत्त्यर्थमेव बन्धस्याप्यविद्यात्मकत्वं वर्णनीयम् । यथाग्नेयादीनां षण्णामपि यागानामधिकारापूर्वविषयतया अपूर्वकरणभावे श्रुतेऽपि कालान्तरभाविप्रधानापूर्वसाधनत्वोपपत्त्यर्थं क्रमभावियागजन्यानि मध्यवर्तीन्यवान्तरापूर्वाणि कल्प्यन्ते । यथा वा श्रुतस्यैव यागस्य स्वर्गसाधनत्वस्योपपत्तयेऽपूर्वं कल्प्यते तद्वत् । ननु क्षणिककर्मणां कालान्तर-भाविफलसाधनत्वाभावव्याप्तिनियमाल्लोके वेदेऽपि स्वर्गापूर्वसिद्ध्यै यदि मध्येऽपूर्वाणि कल्प्यन्ते श्रुतोपपत्तय इति यदि तर्हीहापि व्याप्तिरस्तीत्याह **यतो ज्ञानमिति** । अत्राज्ञानपदेन तत्कार्यमुपलक्षणीयम् । अतो बन्धस्याविद्या-त्मकत्वे सूत्रस्यैव व्यापारात् सूत्रार्थविचारकर्तव्यतोपपत्त्यर्थं प्रयोजनसाधनायाध्यासो वर्णनीय इत्याह **तदित्यादिना** । विषयोक्त्यापि मिथ्यात्वमाक्षिप्यते इत्याह **विचारेति** । ब्रह्मणो विचारविषयत्वेऽपि कुतो बन्धमिथ्यात्वाक्षेपकत्वमित्यत आह **आत्मेति** । प्रत्यग्ब्रह्मणोरेकत्वं विषय इति भावः । ननु यदि सूत्रे जीवात्मनो विषयतयोक्तिः स्यात् तदा सा तस्य संदिग्धतासिद्धये कर्तृत्वादिरूपबन्धमिथ्यात्वं कथञ्चिदपेक्षेत । ब्रह्मणो विचारविषयत्वे तु न बन्धमिथ्यात्वसिद्धिः । न ह्यन्यस्य संदिग्धतयान्यस्य विषयतोपपद्यते अतिप्रसङ्गात् ।





तत्कथं मिथ्यात्वाक्षेप इत्यतो वाऽऽह । **आत्मा चेति** । ऐक्यस्याध्यासाक्षेपकत्वमुपपादयति **तस्य चेत्यादिना** । अतः सूत्रस्यैव बन्धस्याविद्यात्मकत्वे व्यापारः सूत्रार्थविचारकर्तव्यतोपपत्त्यर्थः । विषयसाधनायाध्यासो वर्णनीय इत्याह **तेनेति** ।

**विट्ठ०**— तत्र तावत्प्रयोजनोपपादकत्वमुपपादयति **ब्रह्मज्ञानं हीति** । दुःखादेरेवानर्थत्वात् शरीरादि-प्रतिभासस्य मिथ्यात्वसाधनमत्यसङ्गतमित्यतः शरीरे अभिमानस्य प्रथमाध्यासः । ततश्च कामकर्मादिनिमित्तक-दोषजन्यनारकादिदुःखप्रमातृत्वेनानर्थ इति नासङ्गतिरित्याह **अनर्थश्चेति** । **वस्तुकृतं** परमार्थसत्कृतं सत्यमिति यावत् । तर्हि कार्यकारणात्मकमुभयविधमपि न ज्ञानेन निवर्त्यमित्यर्थः । **तत इति** । तर्हीत्यर्थः । एवं चाविद्यात्मकत्वं कर्तृत्वादिबन्धस्य सूत्रकृदभिमतमिति ज्ञायत इत्याह **तेन सूत्रकारेणेति** । बन्धमिथ्यात्वस्य विषयोपपादकतां चोपदर्शयति **विचारविषयतया चेति** ।

**चषकः**— बन्धमिथ्यात्वस्य प्रयोजनोपपादकताभङ्गीं दर्शयति **ब्रह्मज्ञानं हीति** । **निबर्हणं** निवर्तकम् । **वस्तुकृतं** परमार्थभूतम् । विषयोपपादकताविधां च तस्य दर्शयति **विचारेति** ।

**गूढ०**— प्रयोजनोपपादकत्वमुपपादयति **ब्रह्मज्ञानं हीति** । **निबर्हणं** निवर्तकम् । **वस्तुकृतं** सत्यम् । कुतो नेत्यत आह **यत इति** । **तत इति** । तथाच ज्ञानेनाज्ञाननाशे उपादाननिवृत्तौ उपादेयनिवृत्तिरिति सर्वस्यापि कर्तृत्वादेर्निवृत्तिरिति भावः । बन्धमिथ्यात्वस्य विषयोपपादकत्वं दर्शयति **विचारेति** । विचारज्ञानयोः साध्य-साधनभावात्तयोश्चैकविषयत्वादिति भावः ।

**प्रदीपः**— ननु ज्ञानस्यैव विचारफलत्वात्तस्य च मिथ्यात्वेन विनानुपपत्त्यभावान्न प्रयोजनं मिथ्यात्वा-क्षेपकमित्याशङ्क्याह **ब्रह्मज्ञानं हीति** । ब्रह्मज्ञानोद्देशेन विचारकर्तव्यता विधीयमाना ब्रह्मज्ञानस्यानर्थनिवृत्ति-फलतामाक्षिपति स्वरूपेण तस्यापुरुषार्थत्वादित्यर्थः । अथ नरकपातादिलक्षणानर्थस्य ज्ञाननिवर्त्यत्वाभावा-च्छरीराद्यभिमानपुरस्सरनरकपातादिजनितदुःखप्रमातृतैवानर्थ इत्याह **अनर्थश्चेति** । निवर्ततां तर्हीश्वरज्ञानेनैव परमार्थ एवानर्थो ब्रह्मज्ञानेनेत्यत आह **तद्यदीति** । वस्तुना परमार्थसता निष्पन्नं वस्तुकृतं वस्तु यथा तथा वा कृतमित्यर्थः । सत्यस्य ज्ञानानिवर्त्यत्वे हेतुमाह **यत इति** । अतः सूत्रस्यैव बन्धस्याविद्यात्मकत्वे व्यापारात्सूत्रार्थविचारकर्तव्यतोपपत्त्यर्थं प्रयोजनसाधनायाध्यासो वर्णनीय इत्याह **तदित्यादिना** । विषयोक्त्यापि मिथ्यात्वमाक्षिपत इत्याह **विचारेति** । ब्रह्मणो विचारविषयत्वे कुतो मिथ्यात्वाक्षेप इत्यत आह **आत्मेति** । प्रत्यग्ब्रह्मणोरेकत्वं विषय इति भावः । ऐक्यस्याध्यासाक्षेपकत्वमुपपादयति **तस्य चेत्यादिना** । अतः सूत्रस्यैव बन्धस्याविद्यात्मकत्वे व्यापारः सूत्रार्थविचारकर्तव्यतोपपत्त्यर्थविषयसाधनायाध्यासो वर्णनीय इत्याह **तेनेति** ।





**२०० सु०— कर्तृत्वादेर्बन्धस्य मिथ्यात्वं च यावता विना नोपपद्यते तदपि सूत्रितमेव। न चैवमनेकार्थतादोषः। श्रौतार्थिकत्वभेदस्योक्तत्वात्सूत्रत्वाच्च। अलङ्कार एव ह्ययं सूत्रस्य यदनेकार्थत्वम्। यथाऽऽहुः 'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्। अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः' इति। विश्वतोमुखमित्यनेकार्थतामाह। अन्यत्रापि 'लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च। सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिण' इति। 'यावांत्सूचितः स सर्वोऽप्येषामर्थ' इति सूचितार्थानि। अतो यः कश्चिदर्थः शब्दसामर्थ्येनार्थवशाद्वा प्रतीयते स सर्वस्तदर्थ एवेति भवत्ययमर्थकलापस्तन्महिमाधिगतः।**

**तदेवं विध्यपेक्षितेष्वधिकारिविषयप्रयोजनानुबन्धेषु सूत्राक्षिप्तप्रयोजनविषययोरुपपादकं बन्धमिथ्यात्वं प्रतिपादयत् युष्मदस्मत्प्रत्ययगोचरयोरित्यादिभाष्यं सूत्रार्थसङ्गतमेव।**

**परि०**— वाचस्पत्युक्तवचनं चाह **लघूनीति**। एवं वा एवं वेति नानाकोटिकतयोक्तिहीनानीत्यर्थः। तथोक्तेर्गुरुत्वादिति कल्पतरूक्तोऽर्थः। **तदेवंविध्यपेक्षितेष्विति**। जिज्ञासाविध्यपेक्षितेष्वित्यर्थः। **अधिकारीति**। अधिकार्यादिरूपानुबन्धेष्वित्यर्थः।

**यादु०**— नन्वेवमस्तु कर्तृत्वादेर्बन्धस्य मिथ्यात्वं सूत्रितमिति। तथाऽप्यध्यासस्य सिद्धिहेतुभूतलक्षणसंभावनाप्रमाणादिकमसूत्रितं प्रतिपादयद्भाष्यं कथं नासङ्गतमित्यत आह **कर्तृत्वादेर्बन्धस्येति**। तथा च तदपि व्यवधानेन विषयाद्युपपादकमिति सूत्राक्षिप्तमेवेति भावः। **सौत्रार्थिकत्वेति**। प्रधानानेकत्वे वाक्यभेदो न गुणानेकत्व इत्यर्थः।

**वं०प०— न चैवमिति**। बन्धमिथ्यात्वोपयोगिलक्षणसंभावनाप्रमाणादिप्रतिपादकत्वे अनेकार्थप्रतिपादकत्वप्राप्त्या न वाक्यभेदप्रसङ्गः। एकवाक्यताया अर्थैक्यनिबन्धनत्वात् अर्थैकत्वादेकं वाक्यमिति वचनादित्यर्थः। **विध्यपेक्षितेष्विति**। जिज्ञासा कर्तव्येति जिज्ञासाविध्यपेक्षितेत्यर्थः। **अनुबन्धेष्विति**। अधिकार्यादिरूपानुबन्धेषु मध्य इत्यर्थः।

**आनन्दः**— नन्वेवं तर्हि सूत्रस्यानेकार्थत्वं स्यात्तच्चान्याय्यमित्यत आह **न चैवमिति**। केन पदेनात्र अनेकार्थत्वं सूत्रलक्षणत्वेनोच्यत इत्यत आह **विश्वत इति**।

**कं०रा०**— सूत्रस्यानेकार्थत्वे भामत्युदाहृतवाक्यमपि सम्मतित्वेनाह **अन्यत्रापीति**। **लघूनि** असन्दिग्धार्थानि। संशायकं हि नानार्थस्फोरकत्वेन गुर्विति लघुशब्दार्थः कल्पतरूक्तो द्रष्टव्यः।





**श्रीनिधि०— लघूनीति** । लघ्वक्षरयुक्तानीत्यर्थः । लघ्वक्षरैरैव सूत्ररचनासंभवे गुर्वक्षरैर्वचनं दोष इति भावः । **सर्वतः सारभूतानि** सर्वत उत्तमभूतानि । **तन्महिमाधिगतः** श्रुतार्थस्यान्यथानुपपत्तिरूपमहिमाधिगत इत्यर्थः ।

**वा०चं०—** नन्वस्तु तर्हि लोकव्यवहार इत्यन्तं भाष्यम् । सूत्राक्षिप्तबन्धमिथ्यात्वोपपादकत्वात् । कोऽयमध्यासो नामेत्यादेस्त्वतथात्वादभाष्यत्वमेवेत्यतः कोऽयमित्यादेर्लक्षणपरस्य तत्स्वरूपप्रतिपादकत्वं कथं पुनः प्रत्यगात्मन्यविषयेऽध्यास इत्यादेरध्याससंभावनापरत्वं तमेतमविद्याख्यमित्यादेश्च अध्याससद्भावनिर्णायक-प्रमाणोपपादकत्वमिति सर्वस्याप्यध्यासोपपादकतया बन्धमिथ्यात्व एव व्यापारान्नाभाष्यत्वमित्याह **कर्तृत्वादेरिति** । ननु विषयप्रयोजनब्रह्मस्वरूपप्रमाणयुक्तिसाधनफलविचाराणामध्यासलक्षणसंभावनाप्रमाणानां च प्रतिपादने बह्वर्थ-प्रतिपादनाद्वाक्यभेदः स्यादिति शङ्कते **न चेति** । अत्रानेकशब्दो बह्वर्थः । केषाञ्चिच्छ्रौतत्वेन केषाञ्चिदार्थिकत्वेन क्रोडीकारान्न बह्वर्थता । नाप्यनेकार्थता प्रकारान्तरेण भेदोक्तौ प्रधानानेकत्वेनानेकार्थत्वप्राप्तावपि श्रौतार्थिकत्वभेदोक्तौ गुणप्रधानानेकत्वेन नानेकार्थताप्राप्तिः । श्रुत्यर्थाभ्यां मिलिताभ्यां तात्पर्यविषयीभूतैकार्थसमर्पणादित्याशयेनाह **श्रौतेति** । अनेकार्थत्वे संमतिमाह **यथेति** । संमतित्वं घटयति **विश्वत इति** । सूचितस्यापि सूत्रार्थत्वे सूत्राणामनेकार्थत्वे च संमतिमाह **अन्यत्रापीति** । **लघूनि** असन्दिग्धार्थानि । संशायकं हि नानार्थस्फोरकत्वेन । गुरुवाक्ये पदाल्पत्वेन स्वल्पत्वं लघुत्वम् । पदे स्वल्पाक्षरत्वेन स्वल्पाक्षरत्वमिति न पौनरुक्त्यमिति वा । ननु सूचितार्थत्वेन मुख्यार्थत्वस्याप्यावश्यकत्वाद्बह्वर्थतासिद्धिरस्तु सूचितस्य सर्वस्यापि तदर्थतासिद्धिरस्तु केनेत्यत आह **यावानिति** । यद्वाऽनेकार्थत्वे पूर्वा संमतिः । सूचितस्य तदर्थत्वे द्वितीया । अत एव तत्र तत्पदमेव व्याख्यातमिति द्रष्टव्यम् । एवं बाधकपरिहारेण लब्धमाह **अत इति** । परमफलमाह **तदेवमिति** ।

**वा०र०— इत्यन्तं भाष्यमिति** । इत्यन्तो भागः भाष्यमस्तु भाष्यं भवत्वित्यर्थः । तल्लक्षणभूत-सूत्रार्थकथनरूपत्वहेतोः सत्त्वादित्याह **सूत्राक्षिप्तेति** । **इत्यादेस्त्विति** । आदिपदसङ्ग्राह्यमेतद्वाक्य एवोत्तरत्र स्फुटम् । **लक्षणपरस्य** । अध्यासलक्षणपरस्य । **तत्स्वरूपम्** । मिथ्यात्वस्वरूपम् । **विषयप्रयोजनेत्यादि** । विषयो ब्रह्म । प्रयोजनं मोक्षसाधनं ब्रह्मज्ञानं निष्कलं निष्क्रियमित्यादि ब्रह्मस्वरूपं निष्कलं निष्क्रियं शान्तमित्यादिकं तत्प्रमाणम् । तद्यदि वस्तुकृतं स्यादित्यादिका युक्तिः । ब्रह्मविचारस्य सपरिकरब्रह्मविचारत्वरूपेण प्रतिज्ञानात् ब्रह्मज्ञान-साधनफलविचारस्यापि प्रतिपादनमित्यादि ज्ञेयम् । अनेकशब्दस्यार्थद्वयमादायापि पर्यवसानसंभवात्प्रकृते च बह्वर्थकताया एवाशङ्कनेनार्थद्वयमात्रग्रहणायोगादाह **अत्रानेकेति** । श्रौतार्थिकत्वभेदस्येत्यनेन बह्वर्थत्वं नास्तीत्यङ्गी-कृत्यानेकार्थत्वमङ्गीकृतमिति प्रतीयते । न च तावतोक्तशङ्कापरिहारः । श्रौताद्यर्थानामपि बहुत्वात् उपाधिद्वयेन क्रोडीकाराभिप्रायेऽप्यनेकार्थत्वस्य तु दोषत्वमपरिहार्यमित्याशङ्कापरिहाराय तद्वाक्यतात्पर्यमाह **केषाञ्चिदित्यादिना** । **प्रकारान्तरेण** । श्रौतत्वार्थत्वप्रकारापेक्षया । **प्रधानानेकत्वेनेति** । गुणप्रधानत्वज्ञापकाभावेन प्रधानानामेवानेकत्व-प्राप्तेरिति भावः । गुणप्रधानभावस्वरूपमेवाह **श्रुत्यर्थाभ्यामिति** । **अनेकार्थत्व इति** । तस्य दूषणत्वाभावः प्रत्युत





भूषणत्वमेवेत्यत्रेत्यर्थः । एवमुत्तरत्रापि । स्वल्पाक्षरपदत्वेन लघुत्वस्य पुनरुक्तिरित्याशङ्कानिरासायास्वल्पाक्षर-पदत्वातिरिक्तार्थकतया लघुत्वं निर्वक्ति **लघूनीति** । असन्दिग्धार्थत्वे लघुत्वमित्येतदेव व्यतिरेकमुखेनोपपादयति **संशायकं हीति** । स्वल्पाक्षरपदत्वेनागतार्थतासिद्ध्यर्थं तत्सूचितप्रकारान्तरेणापि लघुत्वं निर्वक्ति **वाक्य इति** । लघूनीत्यस्योभयत्र संमतित्वे सूचितार्थानीत्यस्यानेकार्थत्वसमर्पकत्वमपि वाच्यम् । तन्न प्रतीयते । सूचितस्य सर्वस्य तदर्थकत्वकथनं च प्रकृतानुपयुक्तं किमित्युत्तरमूले प्रतिपाद्यते इत्याशङ्कां परिहरन्नुत्तरवाक्यमवतारयति **सूचितार्थत्वेनेति** । सूचितार्थानीत्युक्तेनेति योज्यम् । सूचितस्येति शेषः । बह्वर्थतेत्यत्र सूत्राणामिति शेषः । तथा चानेकार्थत्वस्य सूचितार्थानीत्यनेन सिद्धेः संमतत्वादनुपपादनमित्युक्तं भवति । यावानित्येतत्तु शङ्कान्तरनिराकरणाय प्रवृत्तमिति योजयति **सूचितस्येति** । यावानित्यस्य सूचितार्थत्वं प्रकृतविवक्षितमेवंरूपमित्येवंपरत्वस्य प्रतीते-रुत्तरसङ्गतिः सूचितार्थत्वमात्रे । यावानित्येतत्तु सूचितार्थत्वव्याख्यानम् । न तूक्तशङ्कावारणपरमिति प्रकारान्तरमाह **यद्वेति** । अनेकार्थत्वलाभोपपादनायासश्चात्र पक्षे नास्तीति हृदयम् । **तत्तदिति** । पूर्वत्र विश्वतोमुखमिति पदम् । उत्तरत्र सूचितार्थानीति पदमित्यर्थः ।

**स०व्र०**— ननु विषयप्रयोजनयोर्बन्धमिथ्यात्वानाक्षेपकत्वाद्धि ज्ञाननिवर्त्यत्वस्याज्ञानात्मकत्वाना-क्षेपकत्वात् यथाक्रममध्यासमिथ्यात्वाभिधानमसङ्गतमित्यत आह **कर्तृत्वादेरिति** । अनध्यस्तस्य मिथ्यात्वायोगात् सत्यस्य निवृत्त्यनुपपत्तेश्चेत्यर्थः । **न चेत्यादि** । प्रधानानेकत्वे वाक्यभेदः न गुणानेकत्व इत्यर्थः । फलित-मर्थार्थस्पर्शित्वेन नाभाष्यत्वमित्याह **तदेवमिति** ।

**वि०ठ०**— नन्वस्तु तर्हि बन्धमिथ्यात्वप्रतिपादकभाष्यस्योत्सूत्रितत्वाभावः । सर्वमिथ्यात्वप्रतिपादकस्यो-त्सूत्रितत्वं स्यादित्यत आह **कर्तृत्वादेरिति** । सर्वमिथ्यात्वं विना बन्धमिथ्यात्वानुपपत्तेः तदपि सूत्रितमेवेति नोत्सूत्रितत्वमिति भावः । नन्वेवं चेत्साधनचतुष्टयसंपन्नस्य मोक्षसाधनब्रह्मज्ञानाय वेदान्तविचारः कर्तव्यः इत्ये-कार्थः, बन्धादिप्रपञ्चमिथ्यात्वमिति अपरोऽर्थ इति प्रतिपाद्य भेदेन वाक्यभेदः स्यादित्यत आह **न चैवमिति** । श्रौतार्थिकयोरनतिभिन्नत्वादिति भावः । यद्वा श्रौतार्थभेद एव वाक्यभेदप्रयोजक एवेति न वाक्यभेद इति भावः । एवं प्रकारार्थभेदो भूषणमेवेत्याह **सूत्रत्वाच्चेति** । सूचितसूत्रार्थमित्यत्रापि संमतिमाह **अन्यत्रापीति** । **लघूनीति** । असन्दिग्धार्थानि सन्दिग्धार्थत्वे गुरूणि भवन्ति ।

**चषकः**— **श्रौतार्थिकेति** । प्रधानभूतार्थनानात्वमेव वाक्यभेदे निबन्धनं गुणीभूतार्थान्तर्भावेन न तत्र नियामकमिति भावः ।

**गूढ०**— नन्वेवं तर्हि सूत्रस्यानेकार्थत्वं स्यात्तच्चान्याय्यमित्यत आह **न चैवमिति** । केन पदेनात्रानेकार्थत्वं सूत्रलक्षणत्वेनोच्यत इत्यत आह **विश्वत इति** ।





**प्रदीपः**— ननु विषयप्रयोजनयोर्मिथ्यात्वापेक्षत्वात् ज्ञाननिवर्त्यत्वेनाज्ञानापेक्षत्वात् वाध्यासमिथ्यात्वाभिधानमसङ्गतमित्याह **कर्तृत्वादेरिति** । अनध्यस्तस्य मिथ्यात्वायोगात्सत्यस्य निवृत्त्यनुपपत्तेश्चेत्यर्थः । **न चेत्यादि** । प्रधानानेकत्वे वाक्यभेदो न गुणानेकत्व इत्यर्थः । मिथ्यात्वादीनामर्थाक्षिप्तत्वे सौत्रत्वमित्याह **अत इति** । फलितं सौत्रार्थस्पर्शित्वेन भाष्यत्वमित्याह **तदेवमिति** ।

**२०१ सु०— स्यादेतत् । प्रथमप्रतिपन्नं श्रौतार्थमुल्लंघ्य चरमप्रतिपन्नमार्थिकार्थमेवोपपादयन् कथमकुशलो न स्यादिति । अत्रोच्यते । स्यादेतदेवम् । यदि युष्मदस्मदित्यादिभाष्यं प्रथमसूत्राक्षिप्तार्थस्यैवोपपादकं स्यात् । न चैवम् । किं नाम सकलतन्त्रार्थोपोद्घातोऽपि प्रयोजनमस्य भाष्यस्य । तथा हि । अस्य शास्त्रस्यैदंपर्यं सुखैकतानसदात्मकूटस्थचैतन्यैकरसता संसारित्वाभिमतस्य आत्मनः पारमार्थिकं स्वरूपमिति वेदान्ताः पर्यवस्यन्तीति । तच्चाहं कर्ता सुखी दुःखीति प्रत्यक्षाभिमतेनाबाधितकल्पेनावभासेन विरुद्ध्यते । अतस्तद्विरोधपरिहारार्थं ब्रह्मस्वरूपविपरीतरूपमविद्यानिमित्तमात्मन इति यावन्न प्रतिपाद्यते तावज्जरद्गवादिवाक्यवदनर्थकं प्रतिभाति । अतस्तन्निवृत्त्यर्थमविद्याविलसितमब्रह्मस्वरूपत्वमात्मन इति प्रथममेव प्रेक्षावत्प्रवृत्तये प्रतिपादनीयम् । तदनेन भाष्येणोच्यत इति ।**

**बिन्दुः**— **अस्य शास्त्रस्यैदंपर्यमिति** । **सुखैकतानता** पूर्णसुखत्वात्मता । **सदात्मता** स्वरूपेणाबाध्यता । **कूटस्थता** निर्विकारता । **चैतन्यैकरसता** ज्ञानस्वरूपत्वमित्यर्थः । **संसारित्वाभिमतस्यात्मनः** सुखादिरूपता पारमार्थिकं रूपमिति वेदान्ताः पर्यवस्यन्त्यस्य शास्त्रस्यैदंपर्यमिति संबन्धः । **इदंपरस्य** ऐदंपर्ये तात्पर्यमित्यर्थः । वेदान्तानां सुखादिरूपे ब्रह्मणि तात्पर्यं बोधयितुमिदं ब्रह्ममीमांसाशास्त्रं प्रवृत्तमित्यर्थः ।

**परि०— भाष्यमिति** । परभाष्यमित्यर्थः । ऐदंपर्यमित्यस्य पर्यवस्यन्तीतिवक्ष्यमाणेतिपदेनान्वयः । सूत्रसन्दर्भरूपस्य अस्य शास्त्रस्य वेदान्ताखण्डैकरसचैतन्यस्वरूपप्रतिपादनेन पर्यवस्यन्तीत्येतदर्थसमर्थनपरत्वशब्दितमैदंपर्यं इदंपरत्वं तावदस्तीत्यर्थः । **सुखैकतानेति** । सुखैकघनेत्यर्थः । **सदात्मेति** । सद्रूपेत्यर्थः । **तच्चेति** । शास्त्रस्यैदंपर्यमित्यर्थः । **जरद्गवेति** । विस्तृतमेतत्पूर्वपक्षदशायामस्माभिः ।

**यादु०— श्रौतमर्थमिति** । विषयादिकं वा विचारकर्तव्यत्वं वेत्यर्थः । **आर्थिकार्थमिति** । बन्धमिथ्यात्वादिकमित्यर्थः । तन्त्रार्थः शास्त्रार्थो ब्रह्मात्मैक्यलक्षणः । उपोद्घातो नाम प्रतिपाद्यार्थं बुद्धौ संगृह्य प्रागेव



तदर्थमर्थान्तरवर्णनम् । तन्त्रोपोद्घात इत्येव परग्रन्थपाठः । तत्र तन्त्रमिति तन्त्र्यते प्रतिपाद्यत इति ब्रह्मात्मैक्यमेवोच्यते। धातूनामनेकार्थत्वात् तत्रि कुटुम्बधारण इति धातोः प्रतिपादनार्थत्वादिति द्रष्टव्यम् ।

**वं०प०— उपपादयन्** । युष्मदस्मदित्यादिना आदिभाष्येणोपपादयन् भाष्यकारः । **ऐदंपर्यम्** इदंपरत्वम् । अस्मिन्नर्थे तात्पर्यमिति यावत् । **सुखैकतानेति** । केवलसुखरूपेत्यर्थः । **सदात्मेति** । सद्रूपेत्यर्थः । तच्च शास्त्रस्यैदंपर्यम् । **स्वरूपमितीति** । स्वरूपमित्यत्रेत्यर्थः । जीवब्रह्मैक्ये वेदान्तानां तात्पर्यमिति भावः । **अनर्थकमिति** । प्रत्यक्षविरुद्धार्थप्रतिपादकत्वादित्यर्थः ।

**आनन्दः— ऐदंपर्यम्** अस्मिन्नर्थे तात्पर्यम् । कस्मिन्नर्थ इत्यत उक्तं **संसारित्वाभिमतस्यात्मनः सुखैकतानसदात्मकूटस्थचैतन्यैकरसता । पारमार्थिकं स्वरूपमिति** । तत्रार्थे वेदान्ताः पर्यवस्यन्तीति ।

**कं०रा०— ऐदंपर्यम्** इदंपरत्वम् । इति वेदान्ताः पर्यवस्यन्तीत्यैदंपर्यमस्य शास्त्रस्येत्यन्वयः । **जरद्गवादिवाक्यवदिति** । 'जरद्गवः कंबलपादुकाभ्यां द्वारि स्थितो गायति भद्रकाणि । तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्थ' इत्यादिवाक्यवदित्यर्थः ।

**श्रीनिधि०— तन्त्रं** शास्त्रम् । **ऐदंपर्यम्** इदंपरं प्रतिपाद्यं यस्य तदिदंपरं तस्य भाव ऐदंपर्यम् । **सुखैकतानम्** सुखस्वरूपम् । सदात्म सत्स्वरूपम् । **कूटस्थं** निर्विकारम् । **चैतन्यैकरसता** चैतन्यलक्षणमुख्यस्वरूपत्वम् । एतादृशचैतन्याभिन्नत्वमिति यावत् । ब्रह्मज्ञानेन बाध्यत्वात् अबाधितकल्पेनेत्युक्तम् ।

**वा०चं०—** मिथ्यात्वसूत्रमङ्गीकृत्य प्रथमप्रतिपादने हेतुं शङ्कते **स्यादेतदिति** । विषं भुङ्क्ष्वेत्यादिवाक्यात्प्रतिपन्नस्याप्यनुपादेयत्वादाह **श्रौतमिति** । श्रुतिप्रतिपिपादयिषितमिति भावः । एकेनोभयोरप्रतिपत्तेः कथं चरमत्वोक्तिरित्यत आह **आर्थिकेति** । आर्थिकप्रतीतेः पाश्चात्यत्वेन चरमत्वोक्तिर्न तु शब्दादेकं पूर्वं प्रतीत्य पश्चादपरं प्रत्येतीति । येन शब्दस्य विरम्य व्यापारः स्यादिति भावः । प्रयोजनसद्भावात्प्रथमप्रतिपादनमित्याह **स्यादेतदिति** । प्रतिपाद्यमर्थं बुद्धौ सङ्गृह्य प्रागेव तदुपयोगितया अर्थान्तरवर्णनमुपोद्घातः । अध्यासभाष्यस्याध्यासबोधः प्रयोजनम् । तन्त्रोपोद्घातो हेतुरिति प्रयोजनमित्यर्थः । विषयफलसिद्धिहेतोरध्यासस्य कथं तन्त्रशब्दवाच्यशास्त्रोपोद्घातत्वमिति न वाच्यम् । तत्रि कुटुम्बधारण इति धातुपाठेऽपि धातूनामनेकार्थत्वेनास्य प्रतिपादनार्थत्वात्तन्त्र्यते प्रतिपाद्यत इति तन्त्रशब्देन प्रतिपाद्यमुच्यते । प्रतिपाद्यार्थसिद्धिहेतुत्वं चाध्यासस्योपपन्नमेवेति भावः । ननु ब्रह्मणोऽनादित्वात् स्वप्रकाशत्वाच्च नाध्यासस्य तन्त्रार्थसिद्धिहेतुत्वमपीत्यतस्तन्त्रार्थं तावद्दर्शयति **अस्येति** । पर्यवस्यतीत्यैदंपर्यमिति संबन्धः । अस्मिन्परः शेषभूत इदंपरः, तस्य भाव ऐदंपर्यमिति व्युत्पत्तिः । अस्त्वयं तन्त्रार्थस्तथापि नाध्यासस्य तत्सिद्धिहेतुत्वमुक्तबाधकादित्यत आह **तच्चेति** । तन्त्रार्थप्रतिपत्तिप्रतिबन्धनिवृत्तावध्यासवर्णनोपयोग इति भावः । वाक्यविरोधात्सुखाद्यवभासस्य अप्रामाण्यमित्यत उक्तं **प्रत्यक्षेति** । ज्येष्ठत्वात्तस्य प्राबल्यमिति भावः । नाहं दुःखीत्यादिविद्वत्प्रत्यक्षविरोधात् । तर्ह्यस्तु तस्याप्रामाण्यमित्यतस्तस्यासंप्रतिपत्तेरिति भावेनाह **अबाधितेति** । ननु





विषयादेरध्यासाधीनत्वेऽपि तद्वर्णनमनर्थकम् । शास्त्रोत्थबोधादध्यासनिवृत्त्या विषयादिसिद्धेः समारोपितरजतादेरध्यस्ततावोधं विनाऽप्यधिष्ठानसाक्षात्कारान्निवृत्तिरिवेत्यत आह **अत इति** । लोकावलोकितपदार्थशक्त्यनुसारेण हि पदानामर्थबोधकत्वम् । न च बन्धवैतथ्यबोधं विना प्रत्यग्ब्रह्मणोरेकत्वयोग्यताऽधिगन्तुं शक्याऽतोऽध्यासवर्णनमुचितमित्याशयः । उपोद्घातत्वसमर्थनमुपसंहरति **अत इति** ।

**वा०र०**— मिथ्यात्वस्यासूत्रणं शङ्कित्रा तत्सूत्रणस्वीकारपूर्वकोत्तरशङ्काकरणायोग इत्यतस्तत्सूत्रणमेव नास्तीति प्राक् शङ्कितम् । अधुना तु अस्तु वा सूत्रणं तथापीति तदङ्गीकृत्य शङ्का प्रवृत्तेति न व्याघात इत्याशयेनोत्तरग्रन्थमङ्गीकारवादेन प्रवृत्त्या सङ्गमयति **मिथ्यात्वेति** । **प्रतिपन्नस्येति** । विषभोजनकर्तव्यतारूपस्येति पूरणीयम् । श्रौतमित्यनेन विषभोजनस्यापि श्रुतत्वात् तद्व्यावृत्त्ययोग इत्यतः श्रौतत्वं तद्व्यावर्तकं यथा स्यात्तथा निर्वक्ति **श्रुतीति** । विषभोजनं तु न प्रतिपिपादयिषितम् । तद्वाक्ये शत्रुगृहभोजनं न कार्यमित्यस्य प्रतिपादयितुमिष्टत्वादिति ज्ञेयम् । **एकेनेति** । श्रौतस्य श्रुत्या आर्थस्य च श्रुतार्थापत्त्या प्रतीतेः श्रुत्यैव वार्थत एव वोभयप्रतिपत्तिर्नास्ति । तादृशस्थल एव प्रथमप्रतिपन्नादिव्यवहारो युक्त इति भावः । **प्रत्येतीति** । प्रत्येति इति निमित्तेन चरमत्वोक्तिरिति नेत्यर्थः । **विरम्येति** । प्रथमचरमत्वोक्त्यनुसारेण विरम्य व्यापारप्राप्तिरपि भवतीत्यतो निमित्तादेव तदुपन्यासः । वस्तुतस्तु पूर्वोक्तरीत्यैकेनोभयप्रतिपत्त्यभाव एव मुख्या युक्तिरिति ज्ञेयम् । **विरम्येति** । चेतनस्यैवेदं पूर्वं कृत्वा अपरं पश्चात्करिष्य इत्यनुसन्धानपूर्वकः क्रमेण कार्यानुष्ठानरूपो व्यापारः संभवति नाचेतनस्योक्तरूपो विरम्य व्यापारः संभवतीत्याशयः । **संगृह्येति** । तदुपयोगित्वेन प्रागेवेति योज्यम् । अनेन सकलतन्त्रार्थप्रतिपादनमित्यनुक्त्वोपोद्घात इति कुत उक्तमिति शङ्का निराकृता भवति । प्रतिपादनस्योक्तरूपत्वाभावेनोपोद्घातप्रतिपादनयोर्भेदात् । अत्र शब्दवर्णनव्यावृत्तये **अर्थेति** । प्रतिज्ञातवर्णनं व्यावर्तयितुमर्थान्तरेति । असंबद्धार्थवर्णनव्यावृत्तये **तदुपयोगितयेति** । अग्निमानयमिति प्रतिज्ञाय धूमवत्वादित्यर्थान्तरवर्णनं व्यावर्तयितुं प्रतिपाद्यमर्थं **बुद्धौ संगृह्येति** । तावत्युक्ते बुद्धौ सङ्गृह्य पश्चात्प्रतिज्ञाय यद्वर्णनं तत्रोपोद्घातत्वप्रसङ्गस्तन्निरासाय **प्रागेवेति** । तस्य च शब्दप्रयोगात्प्रागेवेत्यर्थः । उपलक्षणमिदम् । प्रतिपादनं नाम प्रतिपाद्यं बहिरेव प्रतिज्ञाय पश्चात्तत्सिद्धये हेतूपवर्णनमित्यपि ज्ञेयम् । अत्र प्रतिज्ञाय हेतूपवर्णनमुपोद्घातोऽपि भवतीति तद्व्यावृत्तये बहिरेवेति । अवयवविपर्यासेनाप्राप्तकालताव्यावृत्तये पश्चादिति । असंबद्धहेतुव्यावृत्तये तत्सिद्धय इति । ततश्च प्रतिपादनोपोद्घातयोर्भेदात्प्रतिपादनपदं विहाय सकलतन्त्रार्थोपोद्घात इत्युपोद्घातपदं प्रयुक्तमिति भावः । अध्यासभाष्यस्याध्यासबोधप्रयोजनकत्वेऽपि उपोद्घातप्रयोजनकत्वाभाव इत्यतः तत्प्रयोजनकत्वमुपचारेणेत्याह **अध्यासभाष्यस्येति** । **हेतुरिति** । हेतुर्यतोऽतः प्रयोजनहेतुत्वात्प्रयोजनमित्युपचर्यत इत्यर्थः । **कथं तन्त्रेति** । अनेन तन्त्रोपोद्घात इत्यस्य शास्त्रोपोद्घात इति नार्थः । अस्य भाष्यस्य विषयफलसिद्धिहेतुतया तथात्वाभावादित्युक्तं भवति । **तन्त्रि कुटुम्बधारण इतीति** । इदित्वान्नुम् पचाद्यजिति भावः । प्रतिपादनार्थत्वात्प्रतिपाद्यमुच्यत इति संबन्धः । तदुपायप्रदर्शनं **तन्त्र्यत इत्यादि** । ततश्च तन्त्रोपोद्घात इत्यस्य प्रतिपाद्यार्थसिद्धिहेतुवर्णनमिति पर्यवसाने अध्यासस्तद्धेतुरिति लभ्यते तच्चोपपन्नमेवेत्याह **प्रतिपाद्यार्थेति** । प्रतिपाद्योऽर्थश्च ब्रह्मात्मैक्यं ब्रह्मैव वेति स्पष्टम् ।





प्रतिपाद्यो योऽर्थ इति वचनेन तन्त्रं योऽर्थ इति विग्रहः सूचितः। एवमुत्तरत्रापि। तन्त्रार्थसिद्धिहेतुत्वमपीत्यपिपदेन भवतु प्रयोजनसिद्धिहेतुत्वं तथापि तन्त्रार्थसिद्धिहेतुत्वं तु न घटत इत्युक्तं भवति। विद्याधरीकारोक्तां व्युत्पत्तिं दर्शयति **अस्मिन्पर इति**। शेषः परार्थ इति जैमिन्युक्तेः शेषभूत इति व्याख्यानम्। इदंपरस्य भाव इति भावार्थे गुणवचनब्राह्मणादिभ्यः कर्मणि चेति ष्यञि ञित्वादादिवृद्धावैदंपर्यशब्दनिष्पत्तिरिति भावः। **उक्तेति**। **ब्रह्मणो**ऽनादित्वादिरूपोक्तेत्यर्थः। अनादित्वादिबाधकेन तन्त्रार्थसिद्धिपदेन तन्त्रार्थोत्पत्तेर्वा तन्त्रार्थज्ञानस्य वा ग्रहणानुपपत्तावपि तत्प्रतिपत्तिप्रतिबन्धनिवृत्तेरेव ग्रहणस्याभिप्रेतत्वान्निवृत्तिपक्षे च बाधकाभावात् तत्प्रयोजकत्वविवक्षया तन्त्रार्थसिद्धिहेतुत्वोक्तिरुपपन्नेत्याह **तन्त्रार्थप्रतिपत्तीति**। **अवभासस्याप्रामाण्यमिति**। अवभासस्यैवाप्रामाण्यमस्त्वित्यर्थः। **प्रत्यक्षविरोधादिति**। सुखाद्यवभासापेक्षया प्रबलं प्रत्यक्षमिदमिति वक्तुं विद्वदिति विशेषणम्। **शास्त्रोत्थबोधादिति**। शास्त्रमेव प्रत्यक्षाभिमतमपि बन्धमाभासीकरिष्यति किं पृथगध्यासवर्णनेनेति भावः। अत्र दृष्टान्तः **समारोपितेति**। समारोपितम्। आरोपविषयभूतं यद्रजतादिकं तस्येत्यर्थः। **लोकावलोकितेति**। लोकावगतपदानां पदार्थेषु या शक्तिस्तदनुसारेणेत्यर्थः। लोके हि पदानामर्थविशेषेषु सङ्गतिग्रहे सति तदनुसारेणार्थबोधकता दृष्टा। न तु शब्दः स्वसामर्थ्येनैव पदार्थानवगमे वा तदवगमेऽपि योग्यताद्यनवगमे वा तेषां संसर्गं बोधयतीत्याशयः। प्रत्यग्ब्रह्मणोरित्यत्र प्रत्यक्पदं प्रत्यक्चैतन्यपरम्।

**स०व्र०**— मिथ्यात्वादिसूत्रणमङ्गीकृत्य प्रथमप्रतिपादने को हेतुरिति शङ्कते **स्यादेतदिति**। शब्दस्य विरम्य व्यापाराभावान्नामुख्याभिप्रायं चरमपदमित्यार्थिकविषयप्रयोजनविवक्षया न प्रथमप्रतिपादनमित्याह **स्यादेतदिति**। अध्यासबोधः प्रयोजनं तन्त्रोपोद्घातो हेतुरिति प्रयोजनम्। तन्त्र्यते प्रतिपाद्यते इति तन्त्रं ब्रह्मात्मैक्यम्। धातूनामनेकार्थत्वात्। प्रयोजनस्याध्यासहेतुकत्वेऽपि न विषयस्य तद्धेतुकत्वं ब्रह्मणोऽनादित्वात्स्वप्रकाशत्वाच्चेत्याह **तथा हीति**। शास्त्रार्थप्रतिपत्तिप्रतिबन्धकनिवृत्त्यर्थमध्यासवर्णनोपयोग इत्यर्थः। **अस्य शास्त्रस्येति**। ऐदंपर्यं हृदयवत्त्वम्। अस्मिन्नर्थे तात्पर्यमिति यावत्। तदेव दर्शयति **सुखैकतानेत्यादिना**। सुखैकतानत्वं सुखरूपत्वम्। ब्रह्मा-त्मैकत्वे वेदान्ताः पर्यवस्यन्तीति इदमस्य शास्त्रस्य तात्पर्यमिति भावः। युष्मदस्मदित्यादिग्रन्थस्य उपोद्घातार्थत्वमुपसंहरति **अत इति**।

**विठ्ठ०**— नन्वस्तु मिथ्यात्वं सूत्रितं तथापि वचनवृत्त्या प्राप्तविषयादिकं परित्यज्य प्रथममार्थिकार्थस्य बन्धमिथ्यात्वस्य प्रतिपादनमयुक्तमिति शङ्कते **स्यादेतदिति**। महाप्रयोजनान्तरस्यापि भावादस्य प्रथमोपपादनमिति परिहरति **स्यादेतदेवमिति**। **तन्त्रं** शास्त्रम्। **अस्य शास्त्रस्येति**। **वेदान्ताः पर्यवस्यन्तीति**। **ऐदंपर्यमिति** एतत्परत्वमिति योजना। **अविद्याविलसितमिति**। आत्मनोऽहङ्कर्तेत्यादिब्रह्मविपरीतस्वरूपत्वं अनिर्वाच्याविद्यापरिकल्पितमित्यर्थः। **प्रवृत्तये प्रतिपादनीयमिति**। अन्यथा शास्त्रतात्पर्यगोचरार्थस्य प्रत्यक्षविरुद्धत्वेन तत्र कस्यापि प्रवृत्तिर्न स्यादिति भावः।

**चषकः— प्रथमप्रतिपन्नमिति**। कर्मसाधननिष्ठान्तोऽयमिति प्राथमिकप्रतीतिविषयमित्यर्थः। **श्रौतार्थं** सूत्रघटकपदशक्तिनिरूपकम्। **उल्लङ्घ्य** अप्रतिपाद्य। आर्थिकार्थमनुपपत्तिप्रतिसन्धानाधीनोदीच्यबोधविषयीभूत-





बन्धमिथ्यात्वादिकम्। **तन्त्रार्थः** शास्त्रतात्पर्यगोचरो ब्रह्मात्मैक्यलक्षणः। अभिधास्यमानशास्त्रतात्पर्यविषयीभूतार्थगोचरप्रतिपत्त्यौपयिकार्थान्तरप्रतिपत्त्यनुकूलशब्दोच्चारणादिव्यापार एवोपोद्घातपदेनोच्यते । **ऐदंपर्यं** एतत्तात्पर्यकत्वम्। **अबाधितकल्पेन** ईषदूनाबाधितेन। ईषदसमाप्तौ कल्पब्देश्यदेशीयर इति स्मृतेः।

**गूढ०— ऐदंपर्यं** अस्मिन्नर्थे तात्पर्यम्। कस्मिन्नर्थ इत्यत उक्तं **संसारित्वाभिमतस्य आत्मनः सुखैकतानसदात्मकूटस्थचैतन्यैकरसता। पारमार्थिकं स्वरूपमिति**। तत्रार्थे वेदान्ताः पर्यवस्यन्तीति।

**प्रदीपः—** मिथ्यात्वादिसूत्राणामङ्गीकृत्य प्रथमप्रतिपादने को हेतुरिति शङ्कते **स्यादेतदिति** । शब्दस्य विरम्य व्यापाराभावान्नामुख्याभिप्रायं चरमपदमित्यार्थिकविषयप्रयोजनविवक्षया प्रथमप्रतिपादनमित्याह **स्यादेतदिति** । अध्यासबोधः प्रयोजनं तन्त्रोपोद्घातो हेतुरिति प्रयोजनम् । तन्त्र्यते प्रतिपाद्यतेऽनेनेति तन्त्रं ब्रह्मात्मैक्यं, धातूनामनेकार्थत्वात्प्रयोजनस्याध्यासहेतुकत्वेऽपि न विषयस्य तद्धेतुत्वं ब्रह्मणोऽनादित्वात् स्वप्रकाशत्वाच्चेत्यत आह **तथा हीति** । शास्त्रार्थप्रतिपत्तिप्रतिबन्धनिवृत्तावध्यासवर्णनोपयोग इत्यर्थः । तदेव दर्शयति **तच्चेति**। प्रत्यक्षस्य ज्येष्ठत्वेन प्राबल्यान्न शास्त्रविरुद्धः सुखाद्यवभास इत्युक्तं **प्रत्यक्षेति**। अबाधितपदं शास्त्रस्य सावकाशत्वाभिप्रायं विषयादेरध्यासाधीनत्वेऽपि तद्वर्णनमनर्थकं शास्त्रोत्थबोधादध्यासनिवृत्त्या विषयादिसिद्धेः समारोपितरजतादेरध्यस्तताबोधनं विना जीवब्रह्मणोरेकत्वयोग्यताधिगन्तुं शक्या । तस्मात् मिथ्यात्ववर्णनमुचितमित्यर्थः । युष्मदस्मदित्यादिग्रन्थस्योपोद्घातार्थत्वमुपसंहरति **अत इति** ।

॥ बन्धमिथ्यात्वपूर्वपक्षनिराकरणम् ॥

**२०२ सु०— तदेतदादिभाष्यस्य सङ्गतित्रयमप्यसङ्गतम् । तथा हि । यत्तावदुक्तं सूत्रितप्रयोजनाक्षिप्तं बन्धमिथ्यात्वमिति । तदसत् । यत्खलु प्रमितमप्यनुपपद्यमानं स्वोपपत्तये यदपेक्षते तत्तदाक्षिपति नान्यत् । यथा जीवतो देवदत्तस्य गृहेऽभावो बहिर्भावं न पुनः शब्दानित्यत्वम् । तत्कस्य हेतोः । यतो गृहेऽभावो बहिर्भावेनैव उपपद्यमानस्तमपेक्षते । एवं च प्रयोजनतयोक्ता मुक्तिर्यदि बन्धमिथ्यात्वमपेक्षेत तदा तदाक्षिपेत् । न चैतदस्तीत्याह बन्धमिथ्यात्वमिति । एवशब्देनान्यथैवोपपन्नतां सूचयति । कथम् । उक्तमेतत् यत् ज्ञानात्प्रसन्नः परमेश्वर एव बन्धनिवृत्तिं करोतीति । उपपद्यते च सत्यस्यापि प्रभुप्रसादान्निवृत्तिरिति वक्ष्यते ।**

**परि०— सङ्गतित्रयमिति** । प्रयोजनोपपादकत्वरूपं विषयोपपादकत्वरूपं सर्वशास्त्रस्योपोद्घातरूपं सङ्गतित्रयमित्यर्थः। **अन्यथैवोपपन्नतामिति**। मुक्तिरूपप्रयोजनस्य बन्धमिथ्यात्वेन विनैव युक्ततामित्यर्थः। **वक्ष्यत इति**। 'यथा दृष्ट्या प्रसन्नः सन् राजा बन्धापनोदकृदि'त्यादाविति भावः।





**वं०प०— सङ्गतित्रयमिति ।** सूत्राक्षिप्तप्रयोजनविषयोपपादकत्वेन तन्त्रोपोद्धातरूपत्वेन चोक्तं सङ्गतित्रयमित्यर्थः । **सूत्रितेति ।** अर्थात्सूत्रितेत्यर्थः ।

**आनन्दः—** तदेतदनूदितं दूषयति **तदेतदिति ।** प्रमितत्वमनुपपद्यमानत्वं आक्षिप्तस्योपपादकत्वं चेति त्रयमर्थापत्तौ वक्तव्यम् । न चैतत्प्रकृतेऽस्तीत्याह **तदसदित्यादिना ।** मूलस्थं एवशब्दवैयर्थ्यमाशङ्क्याह **एवशब्देनेति । वक्ष्यत इति ।** सत्यस्यापि प्रभुप्रसादान्निवृत्तिरित्येतत् अतो यथार्थबन्धस्येत्यत्र वक्ष्यत इत्यर्थः ।

**कं०रा०— सङ्गतित्रयं** सूत्रितप्रयोजनाक्षिप्तबन्धमिथ्यात्वप्रतिपादकत्वेन सूत्रितब्रह्मविषयताक्षिप्तकर्तृत्वभोक्तृत्वाद्याकारमिथ्यात्वप्रतिपादकत्वेन सकलतन्त्रोपोद्धातार्थत्वेन चेति सङ्गतित्रयम् ।

**श्रीनिधि०— वक्ष्यत इति ।** 'यथा दृष्ट्या प्रसन्नस्सन्नि'त्यादिनेति शेषः ।

**वा०चं०—** अत्र बन्धमिथ्यात्वं नैव मुक्तिरपेक्षत इत्युत्तरग्रन्थे प्रयोजनोपपादकत्वरूपपरोक्तसङ्गतिनिराकरणमात्रप्रतीत्या सङ्गत्यन्तराननुमतौ सङ्गतित्रितयासंभवेऽपि सङ्गतिद्वयसंभवेन भाष्यं न दूषितं स्यात् । तथा च भाष्यं दूषयतीति प्रतिज्ञा वन्ध्या स्यादित्यतो वक्ष्यमाणरीत्याऽनेनैव भाष्येण सङ्गतित्रयस्यापि निरासान्नानुपपत्तिरिति भावेन सामान्यतो भाष्यतात्पर्यमाह **तदेतदिति ।** एकोक्त्यैव न सङ्गतित्रितयनिराकरणं किन्तु वक्ष्यमाणरीत्योक्तिभेदेनेत्यभिप्रेत्य प्रयोजनोपपादकतया सङ्गतेः परेण प्रथमोपन्यासाद्बहुसंविधेयत्वाच्च तन्निरास एवादौ युक्त इति तमेवादौ प्रतिजानीते **यत्तावदिति ।** नन्वत्र मुक्तिरूपप्रयोजनस्य बन्धमिथ्यात्वाक्षेपकत्वं परोक्तमनिराकृत्य तस्य तदपेक्षाभावप्रतिपादनं भाष्यकारीयमसङ्गतम् । न च तस्य तदनाक्षेपकतोपपादनायैव तदनपेक्षोक्तिरिति वाच्यम् । अप्रयोजकत्वात् । न च यद्यदपेक्षते तदेव तदाक्षिपतीति नियमाद्युक्तमपेक्षाभावस्य आक्षेपाभावोपपादकत्वमिति वाच्यम् । धनापेक्षिणः पुरुषस्यापि तदाक्षेपकतापत्तेरित्यतः प्रयोजकस्वरूपं निष्कृष्याह **यत्खल्विति ।** अत्र स्वोपपत्तय इति विशेषणं पूर्वोक्तातिप्रसङ्गव्युदासाय । निष्पन्नस्वरूपस्य पुरुषस्य स्वजीवनाद्यर्थं धनापेक्षायामपि स्वस्वरूपोपपत्तये तदनपेक्षणात् । शशविषाणादेरपि स्वस्वरूपोपपत्तये कारणाद्यपेक्षस्य तदाक्षेपकतापत्तेः प्रमितमित्युक्तम् । प्रत्यक्षादिप्रमाणसिद्धदिवाभोजनादिमतः पीनत्वस्य स्वोपपत्तयेऽन्यापेक्षाक्षेपकत्वयोरभावान्नास्याः किमप्युदाहरणमित्यतः स्वोपपत्तय इत्युक्त्या लब्धमनुपपद्यमानस्थलं योगिरोगिभिन्नस्य दिवाऽभुञ्जानस्य प्रमितं पीनत्वादिकमत्रोदाहरणमिति ज्ञापनायानुपपद्यमानमिति विशेषणम् । नन्वेवमप्येवं प्रयोजकनिष्कर्षेण सिद्धे वक्ष्यमाणानुमानेऽप्यप्रयोजकत्वमित्यतो जीवतो देवदत्तस्य गृहाभावस्य बहिर्भावाक्षेपकत्वशब्दानित्यत्वानाक्षेपकत्वयोरनुभवसिद्धत्वात् तत्र च प्रयोजकान्तराभावादस्याप्यप्रयोजकत्वे तदनुभवसिद्धतदपलापप्रसङ्ग इत्यभिप्रेत्याह **यथेत्यादिना ।** एवं च मुक्तिर्न बन्धमिथ्यात्वाक्षेपिका तदनपेक्षत्वादिति मूलाभिप्रेतानुमानं सिद्धमित्याह **एवं चेति ।** ननु नैव मुक्तिरपेक्षत इत्यत्रैवकारोऽनुपपन्नः । अभावे तारतम्याभावेन व्यावर्त्याभावात् । न च पाक्षिकापेक्षैव व्यावर्त्येति वाच्यम् । तावताऽप्यन्यथोपपत्त्याऽर्थापत्तेर्दुष्टत्वादित्यतोऽर्थापत्तेर्दुष्टत्वेऽपि पाक्षिकापेक्षितार्थप्रतिपादकत्वेन परभाष्यस्य सङ्गतत्वापत्त्या सर्वथा तदसङ्गतिप्रतिपादनाय सर्वथाऽपेक्षाभावस्यैव वक्तव्यतया नानुपपत्तिरित्यभिप्रेत्यापेक्षा-





भावस्य अन्यथोपपत्तिनिबन्धनत्वात्सर्वथा तदभावोक्त्या तदुपपादकेऽवधारणलाभ इत्याह **एवशब्देनेति** । नन्वन्यथोपपत्तिहेतोरनुक्तत्वान्न प्रतिज्ञामात्रं साधकमित्यतो ज्ञानस्वभावतोऽपि स्यादिति पूर्ववाक्यलब्धं हेतुं सङ्गमयितुं पृच्छति **कथमिति** । एवं च ज्ञानपक्षे प्राप्ताज्ञानेन सत्यस्य निवृत्तेरदर्शनिनादृष्टकल्पनाप्रसङ्गात् सत्यत्वे निवृत्त्यनुपपत्तिरूपानुपपत्तिः न प्रसादस्यान्तर्निवेशेऽपि प्रसरति । यथा दृष्ट्या प्रसन्नः सन्निति वक्ष्यमाणयुक्तिबलादित्यभिप्रेत्याह **उपपद्यत इति** । अनेन बन्धमिथ्यात्ववन्नास्यानुपपादकत्वमित्यपि सूचितं भवति । एवं च साक्षाज्ज्ञानाद्बन्धनिवृत्तेरसूत्रितत्वात् सूत्रितायाश्चान्यथोपपन्नत्वान्नार्थापत्तिर्युक्तेत्याशयः ।

**वा०र०— सङ्गतिनिराकरणमात्रेति** । मुक्तिर्बन्धमिथ्यात्वं नैवापेक्षत इति योजनाया एव स्फुटं प्रतीतेरित्याशयः । **त्रितयासंभवेऽपीति** । त्रित्वावच्छिन्नासंभवेऽपीत्यर्थः । **वक्ष्यमाणेति** । अथवा विषयोक्त्याक्षिप्तेत्यादिरीत्येत्यर्थः । **संमतित्रयस्यापीति** । प्रयोजनोपपादकत्वं विषयोपपादकत्वमुपोद्घातार्थत्वं चेति सङ्गतित्रयस्यापीत्यर्थः । **एकोक्त्यैवेति** । बन्धमिथ्यात्वं नैव मुक्तिरित्येकरूपोक्तावपि पदविभागकल्पनाया एकरूपत्वेनैवेत्यर्थः । उक्तिभेदेनेत्यस्यापि पदविभागान्तरकल्पनाभेदनिमित्तकोक्तिभेदेनेत्येवार्थः । **वक्ष्यमाणरीत्येति** । एवमुक्तिः बन्धमिथ्यात्वं नापेक्षत इत्याद्युक्तिभेदेनेत्यर्थः । प्रथमोपन्यासोऽपि तत्रतत्राप्रधानकत्वात्स्वीक्रियते । अत आह **बहुसंविधेयत्वाच्चेति** । बहूपपादनसापेक्षत्वादित्यर्थः । **न च यद्यदपेक्षत इति** । अनेनोक्तव्याप्तिं मूलीकृत्य परेणापेक्षाप्रयुक्तमाक्षेपकत्वं वाच्यम् । न चात्र तद्व्याप्तिप्रसङ्गोऽस्ति व्याप्यस्यैवाभावादिति भाष्यभावं दर्शयितुं मूलं प्रवृत्तमिति सूचयति **प्रयोजकेति** । व्याप्यस्वरूपमित्यर्थः । तदाक्षेपकत्वरूपव्यापकप्रयोजकत्वात्तथोक्तिः । आक्षेपकत्वे प्रयोजकं यत्तत्स्वरूपमिति फलति । **निष्कृष्य** अनाक्षेपकाद्व्यावृत्तं यथा स्यात्तथेत्यर्थः । **पूर्वोक्तेति** । धनापेक्षिण इत्युक्तेत्यर्थः । व्युदासं दर्शयति **निष्पन्नेति** । **स्वस्वरूपेति** । अनेन स्वोपपत्तय इति यथाश्रुतस्य धनापेक्षास्थले सत्त्वेन तेन तद्व्यावृत्त्ययोगेऽपि स्वस्वरूपेति विवक्षितस्य तत्राभावेन युक्ता तद्व्यावृत्तिरिति सूचयति । अत एव स्वजीवनाद्यर्थमिति यत्किञ्चिदुपपत्तौ परापेक्षाव्युत्पादनमिति ज्ञेयम् । **प्रत्यक्षादीति** । अत्र प्रत्यक्षादिप्रमाणसिद्धत्वं प्रमितत्वोपपादनोपयोगितया पीनत्वविशेषणतयापि योज्यम् । पीनत्वेन दिवाभोजनाद्यपेक्षेण तदाक्षेप इति तु न युक्तम् । तस्य तत्कार्यतायाः प्रत्यक्षादिना निर्णयादित्यर्थप्रतिपादनाय दिवाभोजनादिविशेषणतया मूले तस्योपादानमिति सिद्धमेव । अत एवान्यापेक्षेति रात्रिभोजनादिकमेवानपेक्ष्यत्वादिनोच्यते । तेनान्यापेक्षाक्षेपकत्वयोरभावादित्युक्तिर्युक्तेति ज्ञेयम् । **अस्या इति** । व्याप्तेरित्यर्थः । नियमादिति प्रागुक्तत्वात् । **उपपत्तय इत्युक्त्या लब्धमिति** । धनाद्यपेक्षास्थलव्यावर्तनाय स्वोपपत्तय इत्यस्य प्रथममुपादानात्तदुपरि प्राप्तानुपपत्तिपरिहाराय प्रथमोपात्तविशेषणबललाभकथनमित्यदोषः । दिवा भुञ्जानस्य पीनत्वं व्यावर्तयितुं **दिवाऽभुञ्जानस्येति** । न तावन्मात्रेण तस्योदाहरणता । तथाविधयोगिरोगिणोः पीनत्वस्यान्यापेक्षाभावादित्याशयेन योगिरोगिभिन्नस्येत्युक्तम् । मिथ्यात्वमपि बन्धस्येत्येतन्मूले रसायनसिद्धिं वा योगर्द्धिं वेत्युक्ते रसायनसिद्धिमद्भिन्नस्येत्यप्युपलक्षणया ज्ञेयम् । भोगिभिन्नत्वमप्युपलक्षणयाऽभिप्रेतमित्यप्याहुः । पीनत्वादिकमित्यादिपदेन जीवतो गृहेऽभावादेः ग्रहणम् । अत्र च पीनत्वादिकमित्यत्र बुद्ध्या विवेकेन दिवाऽभुञ्जानस्य प्रमितं यत्पीनत्वं तदादिर्यस्येति योजनया





पीनत्ववत्प्रमितत्वाद्युपेतजीवतो गृहाभावादि लभ्यत इति विवक्षितमिति न यथाश्रुतानन्वयदोषः । नापि रात्रिभोजनाक्षेपकान्तरप्रतीतिर्नापि वा जीवतो गृहाभावादौ प्रयोजकानुक्तिदोष इति ज्ञेयम् । **वक्ष्यमाणेति** । अनुपदमेव तत्प्रकारो वक्ष्यते । यथा जीवत इत्यादिकमुदाहरणप्रदर्शनमात्रपरमिति भ्रान्तिवारणाय न पुनरित्याद्यधिकोक्ति-तात्पर्यमाह **जीवतो देवदत्तस्येत्यादिना** । तत्कस्य हेतोरित्यादेस्तात्पर्यं **प्रयोजकान्तरेति** । उक्तामुक्तिरित्यनेन मुक्तिः कर्त्री मिथ्यात्वं कर्मेत्युक्तं भवति **अभाव इति** । अपेक्षाभाव इत्यर्थः । **अनेनैवेति** । एवकारस्य यथाश्रुतो नञर्थेन संबन्धो निराकृतः । अपेक्षया संबन्धपक्षं निराकर्तुं तमाशङ्कते **न च पाक्षिकापेक्षैवेति** । यदि मुक्तिर्बन्धमिथ्यात्वं नापेक्षत इत्येवान्यथानुपपत्तिवादिनं परं प्रत्युच्येत तर्हि परो ब्रूयात् । नियमेनानपेक्षायामपि कदाचिदपेक्षते चेति । ततस्तद्व्यावर्तनाय कदापि नापेक्षत इति तं प्रति प्रतिपादनाय एवकारः सार्थक इत्यर्थः । **तावतापीति** । मुक्तिर्बन्धमिथ्यात्वं नापेक्षत इत्युक्त्यनन्तरं मुक्त्यन्यथानुपपत्तिवादी पाक्षिकी तदपेक्षा स्यादिति शङ्कितुं नार्हति । तथा सति तेन पाक्षिकापेक्षाभावस्याप्यङ्गीकारापत्त्या बन्धमिथ्यात्वं विनापि मुक्तेरुपपत्तिस्वीकारलाभादन्यथोपपत्त्या स्वकीयार्थापत्तेः स्वयमेव दुष्टत्वमङ्गीकृतं स्यात् । तथा च पाक्षिकप्राप्तेः शङ्कानर्हत्वात् तद्व्यावर्तनायैवकारायोगः । शङ्कायां वाऽन्यथोपपत्त्यैव निरासकरणपरित्यागेन प्रकारान्तरेणार्थापत्तिनिराकरणानावश्यकत्वं चेत्यत इत्यर्थः । सत्यमर्थापत्तिनिराकरणमन्यथोपपत्तिमात्रेण भवति । अन्यथोपपत्तिश्च पराङ्गीकारे सुलभैवेति । तथापि परोऽन्यथा-नुपपत्तिं दुष्टां मत्त्वापि यदि शङ्केत । प्रथमभाष्यं पाक्षिकापेक्षितार्थप्रतिपादकतया सङ्गतं भवति । कथञ्चिद्भाष्य-सङ्गतत्वकरणे तात्पर्यमस्माकमिति । तदा तं प्रति भाष्यस्य सर्वथाऽसङ्गतिप्रतिपादनाय पाक्षिकापेक्षापि व्यावर्तनीयैवेति तदर्थमेवकारः सार्थक इत्याह **अर्थापत्तेर्दुष्टत्वेऽपीति** । **यद्वा पाक्षिकापेक्षैवेति** । मुक्तिर्बन्ध-मिथ्यात्वं नापेक्षत इत्यस्य कदाचिन्नापेक्षत इत्यर्थकत्वं नेति तत्प्रयुक्तं कदाचित्तदपेक्षत्वमर्थतया लब्धं न भवतीति स्ववाक्यार्थान्तरनिराकरणायैवकार इत्यर्थः । **तावतापीति** । कदाचिन्नापेक्षते इत्युक्तिलब्धकदाचिदपेक्षयापि परकीयार्थापत्तेर्दुष्टत्वसूचनलाभेनैवकारेण तद्व्यावर्तनवैयर्थ्यादित्यत इत्यर्थः । न वयं स्ववाक्यार्थान्तरनिराकरण-मर्थापत्तिदुष्टत्वलाभायेति वदामः । येन तदर्थान्तरेऽप्यर्थापत्तिदुष्टत्वलाभेन तन्निरासवैयर्थ्यशङ्का स्यात् । किन्तु परभाष्ये पाक्षिकासङ्गतत्वप्रतिपादनस्यानभिप्रेततया सर्वथा तदसङ्गतत्वप्रतिपादनायैवानुभाष्यप्रवृत्त्या च तथा प्रतिपादनस्य च कदाचिदपेक्षापर्यवसायि कदाचिन्नापेक्षत इत्यर्थान्तरेऽनुपपत्त्या तद्भाष्यस्य सर्वथा अनपेक्षितार्थ-प्रतिपादकत्वप्रतिपादनलाभायैवेति ब्रूमः । तथा च तल्लाभाय सर्वथाऽपेक्षाभावस्यैव वक्तव्यत्वान्नैवकारवैय्यर्थ्य-मित्याशयेनाह **अर्थापत्तेर्दुष्टत्वेऽपीतीति** । यथाश्रुत एव ग्रन्थो योज्य इति । पक्षद्वयेऽपि परोक्तार्थापत्ति-दूषणायान्यथैवोपपन्नतासूचनं व्यर्थमिति शङ्कानिरासः प्रयोजनम् । अन्यथैवोपपन्नतां सूचयतीत्यस्य परभाष्ये सर्वथा सङ्गत्यभावप्रतिपादनायेति शेषपूरणेन योज्यत्वादिति सूचनात् । एवकारेण सर्वथाऽपेक्षाभावोक्तेः कथं तस्यार्थान्तर-समर्पकतेत्यतोऽन्यथैवोपपन्नतामित्येवकारलाभमुपपादयति **अपेक्षाभावस्येति** । पूर्वोक्तरीत्या अर्थापत्तिनिराकरण-स्यान्यथोपपत्तिमात्रसाध्यत्वमेवकारप्रयोजनं त्वन्यदेवेति मनसि निधायैवोत्तरमूलव्यावर्त्यमाशङ्कते **नन्वन्यथोप-पत्तीति** । **एवं चेति** । ज्ञानपक्षे प्राप्ताया सत्यत्वे निवृत्त्यनुपपत्तिरित्येवंरूपानुपपत्तिर्न सा प्रसादस्येति संबन्धः । तदुपपादनं **ज्ञानेनेत्यादि** । अनेन ननु ज्ञानपक्ष इव प्रसादपक्षेऽपि सत्यस्य निवृत्त्यदर्शनाददृष्टकल्पनापात इति दूषणं





**यादु०**— ननु श्रुत्यादिना ज्ञानमात्रनिवर्त्यत्वमुच्यत इत्यत आह **तरतीति**। प्रसन्ने भगवतीत्यध्याहारे अस्मत्पक्षस्यापि प्रतिपादकमितीदं वाक्यं पक्षद्वयसाधारणमित्यर्थः। **विशेषवचनेनेति**। 'अज्ञानां ज्ञानद' इति निरवकाशवचनेनेत्यर्थः।

**आनन्दः**— एवशब्देनान्यथैवोपपन्नत्वं सूचितमित्युक्तम्। तदयुक्तमिति शङ्कते **नन्विति**। **विशेषोक्त्येति**। सत्यस्यापि बन्धस्य प्रसादेनैव निवृत्तिरिति विशेषोक्त्येत्यर्थः। ज्ञानिनां मोक्षद इत्युक्त्या प्रसादस्य मोक्षहेतुताया उक्तत्वादिति भावः। ननु प्रसादस्य मोक्षहेतुत्वे तरतीति श्रुतिविरोधः। तत्र ज्ञानस्यैव मोक्षहेतुताया उक्तत्वादित्यत आह **तरतीति**। तद्वाक्यस्य मोक्षहेतुत्वमात्रप्रतिपादकत्वेन सामान्यवचनत्वादज्ञानामिति विशेषवचनानुसारेण योजनीयत्वादिति भावः। **दृष्ट्वैवेति**। एवकारस्य अन्ययोगव्यवच्छेदकत्वेन प्रसादस्य मोक्षहेतुताया निषिद्धत्वादिति भावः। **अयोगेति**। अदृष्ट्वा न मुच्यत इत्ययोगव्यवच्छेदपरत्वोपपत्तेरिति भावः। अन्ययोगव्यवच्छेदपरत्वेऽपि न दोष इत्याह **दर्शनेति**। प्रसादस्यैव मुक्तिहेतुत्वमङ्गीकृत्य बन्धमिथ्यात्वं मुक्तिनपिक्षत इति व्याख्यातम्।

**कं०रा०**— **अनुषञ्जनीयमिति**। अनुषक्तेनाज्ञानां ज्ञानद इत्यादिवाक्येन मोक्षदश्च स इति ज्ञानदानात् पृथङ्मोक्षदानोक्त्या मोक्षस्य भगवत्प्रसादसाध्यत्वलाभादन्यतरनिर्णयोपपत्तेरुक्तसन्देहानवकाश इति भावः। **दर्शनमोक्षावन्तरा** दर्शनमोक्षयोर्मध्ये। अन्तराऽन्तरेण युक्त इति द्वितीया।

**श्रीनिधि०**— **प्रबोधेन** जाग्रज्ज्ञानेन साक्षात् प्रसादाव्यवधानेन। **अत्राप्यनुषञ्जनीयमिति**। तथा च मोक्षदश्च स एवेत्युक्ते अप्रसन्नस्य तदयोगात् प्रसन्न एव सन् निवर्तक इति अन्यथैवोपपत्तिरिति भावः। **विशेषवचनेन** 'अज्ञानां ज्ञानदो विष्णुः', 'तमेवं विद्वानि'त्यादिकेन विशेषवचनेन। सामान्यवचनस्य बाधेऽपि न विशेषवचनस्य बाधकत्वम्। तथा च सन्देह एव न निश्चय इति। शङ्कते **दृष्ट्वैव तमित्यादिना**। दृष्ट्वेत्यस्य विशेषवचनत्वेऽपि सावकाशत्वेन बाध्यत्वं संभवतीति भावेनाह **अवधारणस्येति**। अयोगव्यवच्छेदः दर्शने सत्येव पूर्यत इति द्रष्टव्यः।

**वा०चं०**— ननु दर्शनजन्यप्रसादेन बन्धनिवृत्तेर्दर्शनबलादेव सूत्रार्थतया व्याख्येयत्वात् कल्पकदर्शनस्य च ज्ञानेन साक्षाद्बन्धनिवृत्तावपि तुल्यत्वात्सूत्रितसामान्यस्य प्रसादपक्षरूपविशेषमात्राश्रयणस्य नाग्रहादन्यन्मूलमित्याशङ्कते **नन्विति**। न दृष्टिमात्रात्प्रसादपक्षाश्रयणम्, अपि तु उक्तिबलात्। दृष्टिस्तु संभावकत्वेनोक्तेति भावेनाह **विशेषेति**। यद्येवं तर्हि तरतिशोकमात्मविदिति वचनबलादेव ज्ञानस्य साक्षाद्बन्धनिवर्तकत्वमपि सूत्रार्थतया स्वीकार्यमिति प्रतिपक्षशङ्कां निरस्यति **तरतीति**। अनेनेत्युक्तेरित्यनुव्याख्याने उक्तिपदं विशेषोक्तिपरमित्यभिप्रेत्य पूर्वोक्तस्य विशेषोक्त्येत्यत्रत्यविशेषपदस्य प्रयोजनमुक्तं भवति। विशेषवचनमेव प्रतिपक्षतया शङ्कते **दृष्ट्वैवेति**। **अवधारणस्येति**। एवं च तं दृष्ट्वैव मुच्यते नापरेण दर्शनासहकृतेन साधनेनेति श्रुतिर्व्याख्याता भवति। अस्मिन्पक्षेऽपरेणेत्यस्यास्वारस्यात्प्रकारान्तरेण श्रुतेः सावकाशतामाह **दर्शनेति**। अनेनानुव्याख्याने उक्तिपदस्य





निरवकाशोक्तिपरत्वमभिप्रेत्य विशेषोक्त्येत्युक्तविशेषपदसूचितं श्रुत्यन्तरस्य सावकाशत्वमुपपादितं भवति । एवं च विशेषोक्त्येत्यत्र विशेषपदस्य सामान्यप्रतियोगिविशेषपरत्वं निरवकाशपरत्वं चाभिप्रेतमिति द्रष्टव्यम् । यद्वाऽवधारणस्यान्यथासिद्धिसंपादकदृष्ट्वैवेति श्रुतेरप्यज्ञानामितिश्रुत्यपेक्षया सामान्यत्वमेवेत्यभिप्रायः ।

**वा०र०— ननु दर्शनजन्येति** । दर्शनाद्बन्धनिवृत्तिः सूचिता । तत्सूत्रस्य दर्शनजन्यप्रसादाद्बन्धनिवृत्तिरिति व्याख्याने हि लोके तथा दर्शनमेव मूलम् । तच्च दर्शनं साक्षाज्ज्ञानान्निवृत्तिविषयेऽप्यस्ति । सति चैवं नियामकतुल्यत्वे दर्शनजन्यप्रसादपर्यन्तं गमने आग्रहादन्यन्मूलं नेत्यर्थः । यद्युक्तिबलाश्रयणं तर्हि दृष्ट्युपन्यासो व्यर्थ इत्यत उक्तं **दृष्टिस्त्विति** । **यद्येवमिति** । विशेषोक्त्याश्रयण इत्यर्थः । **अभिप्रेत्य पूर्वोक्तस्येति** । अभिप्रेत्य पूर्वोक्तं यद्विशेषोक्त्या निर्णयोपपत्तेरिति वाक्यगतं विशेषपदं तस्य प्रयोजनम् । तद्व्यावर्त्यमुक्तं भवतीत्यर्थः । **अपरेणेत्यस्येति** । अयोग-व्यवच्छेदार्थकत्वे हि दर्शनं मोक्षार्थमपेक्षितमेवेति प्रतिपादनीयं भवति । तथात्वे च नापरेणेत्येतद्वचर्थमायातीति भावः । नापरेणेत्यस्येति वक्तव्ये अपरेणेत्यस्येति वचनमपरेण न मुच्यत इति वाक्यार्थास्वारस्यमत्र विवक्षितमिति सूचयितुम् । **प्रकारान्तरेणेति** । अन्ययोगव्यवच्छेदरूपप्रकारान्तरेणेत्यर्थः । अत्र पक्षेऽवधारणार्थस्पष्टीकरणाय नापरेणेत्येतत्सार्थकम् । अत एव धर्मादिहेतुकादिति मूलमिति भावः । अनुव्याख्यानस्थोक्तिपदस्य सामान्य-प्रतियोगिविशेषपरत्वाश्रयणेन विशेषोक्त्येति मूलोक्तप्रकारेण तरतीतिवाक्यस्येव विशेषवचनत्वेन शङ्कितदृष्ट्वैवे-त्यस्यापि सामान्यवचनत्वादेव अज्ञानामिति विशेषवचनेन बाध इत्येकरूपेणैवाज्ञानामित्यस्य वाक्यद्वयबाधक-त्वोपपादनसंभवे सावकाशत्वनिरवकाशत्वप्रकारस्याप्याश्रयणायोगः । विशेषपदस्यार्थद्वयाश्रयणं च व्यर्थं भवती-त्यपरितोषात्पक्षान्तरमाह **यद्वाऽवधारणस्येति** । अत्रान्यथासिद्धिसंपादनेन दृष्ट्वैवेति टीकापाठः । **संपादकेति** लेखकप्रयुक्तम् । दर्शनं मोक्षार्थमपेक्षितमेवेत्यादिरूपेणार्थकथनाद्दर्शनाव्यवधानेनैव मुच्यत इत्यर्थाभावात् सामान्यत्वमित्यर्थः । **इत्यभिप्राय इति** । दर्शनजन्यादेवेति वाक्यस्येति शेषः । तथा च दृष्ट्वैवेति वाक्येऽपि तरतीत्येतन्न्यायेनैव बोधाश्रयणान्न कश्चिद्दोष इति भावः ।

**स०व्र०—** कथंशब्दार्थं प्रकटयति **नन्विति** । बन्धस्य प्रसादनिवर्त्यत्वनिश्चयान्न मिथ्यात्वमित्याह **विशेषेति** । ननु श्रुत्या ज्ञानमात्रनिवर्त्यत्वं श्रूयते न प्रसादनिवर्त्यत्वमित्यत आह **तरतीति** । नन्वेवकारेण ज्ञानेनेतरनिवर्त्यत्वं निवार्यत इत्यतोऽवधारणस्यायोगव्यवच्छेदपरत्वं वा प्रसादान्तर्भाविनैव अन्ययोगव्यवच्छेद-परत्वं वेत्याह **दृष्ट्वेत्यादिना** । प्रसादैकनिवार्यत्वं बन्धस्य प्रागेवोपपादितम् ।

**वि०ठ०—** ज्ञानमात्रनिवर्त्यत्वस्य श्रुत्युक्तत्वात् तद्विरोध इत्यतः तस्य सामान्यवचनत्वात् अज्ञानां ज्ञानद इति विशेषवचनेन बाधोपपत्तिरित्याह **तरतीति** । **अयोगव्यवच्छेदेति** । तं दृष्ट्वा मुच्यत एवेति मुक्त्ययोगव्यवच्छेद इत्यर्थः ।

**चषकः— कं पक्षमिति** । आद्यं द्वितीयं वेत्यर्थः । **सामान्यवचनं** प्रसादबोधकपदाघटितम् । **विशेषवचनेन** तादृशपदघटितेन । **अन्तरा** ज्ञानमुक्त्योर्मध्ये ।





**गूढ०**— एवशब्देनान्यथैवोपपन्नत्वं सूचितमित्युक्तम् । तदयुक्तमिति शङ्कते **नन्विति** । **विशेषोक्त्येति** । सत्यस्यापि बन्धस्य प्रसादेनैव निवृत्तिरिति विशेषोक्त्येत्यर्थः । ज्ञानिनां मोक्षद इत्युक्त्या प्रसादस्य मोक्षहेतुताया उक्तत्वादिति भावः । ननु प्रसादस्य मोक्षहेतुत्वे तरतीति श्रुतिविरोधः । तत्र ज्ञानस्यैव मोक्षहेतुताया उक्तत्वादित्यत आह **तरतीति** । तद्वाक्यस्य मोक्षहेतुत्वमात्रप्रतिपादकत्वेन सामान्यवचनत्वादज्ञानामिति विशेषवचनानुसारेण योजनीयत्वादिति भावः । **दृष्ट्वैवेति** । एवकारस्य अन्ययोगव्यवच्छेदकत्वेन प्रसादस्य मोक्षहेतुताया निषिद्धत्वादिति भावः । **अयोगेति** । अदृष्ट्वा न मुच्यत इत्ययोगव्यवच्छेदपरत्वोपपत्तेरित्यर्थः । अन्ययोगव्यवच्छेदपरत्वेऽपि न दोष इत्याह **दर्शनेति** । प्रसादस्यैव मुक्तिहेतुत्वमङ्गीकृत्य बन्धमिथ्यात्वं मुक्तिर्नापेक्षत इति व्याख्यातम् ।

**प्रदीपः**— कथंशब्दार्थं प्रकटयति **नन्विति** । बन्धस्य प्रसादनिवर्त्यत्वनिश्चयान्न मिथ्यात्वमित्याह **विशेषेति** । ननु श्रुत्या ज्ञानमात्रनिवर्त्यत्वमवगम्यते न प्रसादनिवर्त्यत्वं इत्यत आह **तरतीति** । नन्वेवकारेण ज्ञानेतरनिवर्त्यत्वं निवार्यत इत्यतोऽवधारणस्यायोगव्यवच्छेदपरत्वं वा प्रसादान्तर्भाविनैव अन्ययोगव्यवच्छेदपरत्वं वेत्याह **दृष्ट्वेत्यादिना** । प्रसादैकनिवर्त्यत्वं श्रुत्यर्थः ।

**२०४ सु०— अस्तु वा ज्ञानाद् बन्धनिवृत्तिः । तथाऽपि बन्धमिथ्यात्वं नैवमुक्तिरपेक्षते । कथम् । न हि दृष्टसामर्थ्याज्ज्ञानाद् बन्धनिवृत्तिः । येन बन्धमिथ्यात्वमपेक्षेत । किंत्वागम एव ज्ञानाद्बन्धनिवृत्तिं श्रावयति । प्रमिते च साध्यसाधनभावे का नामानुपपत्तिर्यच्छमनायोपपादकं मृग्यम् ।**

**परि०**— कथमितिप्रश्नस्योत्तरमाह **न हीति** । प्रबोधादौ स्वाप्ननिगडबन्धस्य मिथ्याभूतस्यैव निवृत्तिर्दृष्टेति प्रबोधादौ दृष्टं मिथ्याभूतबन्धनिवर्तनसामर्थ्यं यस्य तस्माज्ज्ञानाद्बन्धनिवृत्तिर्यदि कल्प्येत तदा परमेवं स्यात् । न हि तथा कल्प्यत इत्यर्थः । **दृष्टसामर्थ्यादिति** । दण्डादेरिवान्वयव्यतिरेकावगतशक्तिकादित्यर्थः । **आगम एवेति** । तरति शोकमात्मविदित्यादिरित्यर्थः । **आग्नेयादीनां षण्णामिति** । विवृतमेतद्यागषट्कं तत्र तारेत्येतदवतारिकाव्याख्यानप्रस्तावे ।

**वं०प०**— **दृष्टसामर्थ्यादिति** । प्रबोधस्य स्वाप्ननिगडबन्धनिवर्तकत्वसामर्थ्यस्य दृष्टत्वात् तद्दृष्टान्तेनैव प्रकृतेऽपि ज्ञानाद्बन्धनिवृत्तिरिति नोच्यते इत्यर्थः । **आगम एव** तरतिशोकमात्मविदित्यादिरित्यर्थः ।

**आनन्दः**— इदानीमस्तु ज्ञानस्यैव मुक्तिहेतुत्वं तथापि न बन्धमिथ्यात्वमपेक्ष्यमित्याशयेनाप्येतद्वाक्यं व्याख्याति **अस्तु वेति** । ननु ज्ञानस्याज्ञानमात्रनिवर्तकत्वेन सत्यत्वे तेन बन्धनिवृत्तिरेव न स्यादिति शङ्कते





**कथमिति । न हि दृष्टसामर्थ्यादिति ।** अत्र हि सामर्थ्यं शक्तिः तथाच दृष्टा या शक्तिः तया ज्ञानं निवर्तकमिति यद्यङ्गीक्रियेत तदा ज्ञानस्य वास्तवनिवर्तकताया अदृष्टत्वादव्यवस्थत्वं स्यादित्यर्थः ।

**श्रीनिधि०— दृष्टसामर्थ्यात्** दर्शनसामर्थ्यात् । शुक्तितत्त्वज्ञानेन तदज्ञाननिवृत्तेर्दर्शनात् तद्दृष्टान्तेन बन्धनिवृत्तिर्नानुमीयत इत्यर्थः ।

**वा०चं०—** एवं ज्ञानस्य साक्षाद्बन्धनिवर्तकत्वानुपपत्तिं बन्धमिथ्यात्वकल्पनेनैव तदुपपत्तिं च पराभिप्रेतामभ्युपेत्य साक्षाज्ज्ञानाद्बन्धनिवृत्तेर्बन्धमिथ्यात्वसापेक्षत्वेऽपि ज्ञानाद्बन्धनिवृत्तिमात्रस्य सूत्रितत्वेन तस्या असूत्रितत्वात् सूत्रितायाश्चोक्तविशेषोक्तिबलेनावश्यकल्पनीयान्तरालिकप्रसादेनैवोपपत्तेर्न बन्धमिथ्यात्वकल्पनेति श्रुतिसूत्ररहस्यं स्वसिद्धान्तभूतमुक्तविशेषोक्तिरूपोपपादकसापेक्षं वस्तुगतिमनुरुध्य प्रसादपक्षमवलम्ब्य परोक्तार्थापत्तेः अन्यथैवोपपन्नतापरतया बन्धमिथ्यात्वमिति भाष्यं व्याख्याय साक्षाज्ज्ञानाद्बन्धनिवृत्त्यङ्गीकारोऽप्यनुपपत्तेरेवाभावेन न तदुपपादकतया बन्धमिथ्यात्वकल्पनेति पराभिमतोन्मूलनेन प्रवृत्तमुक्तविशेषोक्तिरूपोपपादकनिरपेक्षं प्रसाद-निरपेक्षस्य ज्ञानस्य बन्धनिवर्तकत्वरूपाभ्युच्चयपक्षमाश्रित्यार्थापत्तिमूलभूतानुपपद्यमानत्वविघटनपरतया भाष्यं योजयति **अस्तु वेति ।** अनेन सूत्रिता बन्धनिवृत्तिर्न केवलं द्वारत्वेन प्रसादव्याख्यानपक्ष एव बन्धमिथ्यात्वं नापेक्षते प्रत्युत साक्षादिति व्याख्यानेऽपि नापेक्षत इत्यप्येवकाराभिप्राय उक्तो भवति । अत्रैवकार उपपादनप्रकारस्यापि सूचकोऽतस्तं प्रतिपादयितुं पृच्छति **कथमिति ।** ननु दृष्टबलाद्धि ज्ञानाद्बन्धनिवृत्तिः कल्पनीया । न च ज्ञानस्य वस्तुनिवर्तकता दृष्टा । अपि तु मिथ्याभूतनिवर्तकतैवेति कथं न बन्धमिथ्यात्वापेक्षेत्यत आह **न हीति । आगम इति ।** तदा विद्वान्नामरूपाद्विमुक्त इत्यादिरागम इत्यर्थः । प्रतीतेरनुपपत्त्यभावादुपपादकानपेक्षां वदतः किं श्रुतिप्रमितेऽनुपपत्तिप्रसक्तिरेव नेति किंवा सत्यामपि तस्यां तच्छमनायोपपादकापेक्षा नेत्युत श्रुतिप्रमितेऽनुपपत्ते-स्तच्छमनायोपपादकापेक्षायाश्चान्यत्र सत्त्वेऽपि प्रकृतेऽनुपपत्तेरभावान्नोपपादकापेक्षेति वाऽऽशयः ।

**वा०र०—** नन्वस्तु वेति ज्ञाननिवर्त्यत्वपक्षाङ्गीकारः क्रियते स च ज्ञाननिवर्त्यत्वानभ्युपगमेन प्रवृत्त-प्रथमपक्षविरुद्धः । तदङ्गीकारस्यावश्यकत्वे प्रथमत एव कुतस्तदनङ्गीकारः । किञ्चोभयाश्रयणप्रयोजनमित्यतः पक्षद्वये-ऽप्यवान्तरानेकविशेषप्रदर्शनपूर्वकं तदुभयाङ्गीकारप्रयोजनं च दर्शयति **एवं ज्ञानस्य साक्षाद्बन्धेति ।** बन्धस्य सत्यत्व इति पूरणीयम् । यद्वाऽनुपपत्तिमित्यस्यान्यथानुपपत्तिमित्यर्थात्सत्यत्वे साक्षाद्बन्धनिवर्तकत्वानुपपत्तिलाभ इति ज्ञेयम् । **सूत्रितायाश्चेति ।** बन्धनिवृत्तिमात्रस्येत्यनेन सामान्यतो बन्धनिवृत्तेः प्रस्तावस्तस्या विशेष्यतया संबन्ध इति ज्ञेयम् । **वस्तुगतिमनुरुध्येति ।** अनुरुध्य प्रवृत्तमिति शेषः । प्रवृत्तमिति वक्ष्यमाणानुसारात् । वस्तुगतिमनुरुध्य यः प्रसादपक्ष इति योजनायां प्रवृत्तत्वलाभ इति वा । उक्तपक्षावलम्बमूलतयोक्तं श्रुतिसूत्रेत्यादि प्रसादपक्षविशेषणम् । **उक्तविशेषेति ।** उक्ता या विशेषोक्तिरज्ञानां ज्ञानद इत्येवंरूपा तल्लक्षणं यदुपपादकमिति योज्यम् । वक्ष्यमाणा-भ्युच्चयपक्षव्यावृत्तिश्चानेन सिद्धा भवति । बन्धमिथ्यात्वकल्पनेतीत्युभयत्रापि कल्पनेत्यतःपरं युक्तेति पूरणीयम् ।





तत्रत्येतिशब्दयोश्चाद्यस्येति प्रसादपक्षमिति द्वितीयस्येत्यभ्युच्चयपक्षमिति संबन्धः । इतीत्यस्येत्येवंरूपमित्यर्थः । **पराभिमतेति** । मिथ्यात्वाभावेऽपि साक्षाज्ज्ञाननिवृत्त्युपपत्तौ पराभिमतस्य साक्षाज्ज्ञाननिवर्त्यत्वं मिथ्यात्वेनैव उपपद्यत इत्यस्योन्मूलनादित्यर्थः । अभ्युच्चयत्वोक्त्या पूर्वपक्षे सति वृथा पक्षान्तरकथनायोगः । पक्षान्तरस्य सूत्राद्यननुसारित्वेन तत्स्वीकारायोगश्चेति दूषणद्वयमपाकृतं भवति । अन्यथैवोपपन्नतापरतयेत्येवं पूर्वविषयो दर्शितोऽत्र विषयं दर्शयति **अर्थापत्तिमूलेति** । पूर्वयोजनायामिवैतद्योजनायामपि नैवकारस्यान्यथैवोपपत्तिरर्थः । किन्तु प्रसादद्वारेति व्याख्यानपक्षे साक्षादिति व्याख्यानपक्षे वा नापेक्षत इत्येवं सर्वथाऽपेक्षाभाव एव तदर्थ इत्याशयेन तं दर्शयति **अनेन सूत्रितेति** । प्रत्युतेति निपातद्वयस्यापि त्वित्यर्थः । यत्पक्षे बन्धमिथ्यात्वापेक्षा वक्तव्या । तत्पक्षेऽपि नास्तीति प्रतिपादनाय प्रत्युतेति वक्रोक्तिः । **उपपादनप्रकारस्यापीति** । न केवलं सूत्रिता बन्धनिवृत्तिरित्युक्ताभिप्रायक इत्याशयेन अपिपदम् । **आगम इतीति** प्रतीकोपादानपाठः । आगम इत्यर्थ इति वक्ष्यते च । **प्रसक्तिरेव नेतीति** । अस्याशय इत्युत्तरेण संबन्धः । एवमुत्तरत्रापि । इति वा आशय इत्यत्र पूर्वस्योतेत्यस्य संबन्धे उत वेति निपातसमुदायो लभ्यते । स एव पक्षान्तरद्योतकः । आशय इत्यतःपरमिति विकल्पान्मनसि निधायेति तत्रेत्यनन्तरं च तावदिति पूरणीयम् । तेन पक्षान्तरनिरासपरत्वमपि शङ्काग्रन्थ-स्योक्तमिति शङ्काग्रन्थफलकथनरूपत्वलाभादिति शङ्कत इत्युक्तिरुपपन्नेति ज्ञेयम् ।

**स०व्र०**— ज्ञाननिवर्त्यत्वमङ्गीकृत्यापि मिथ्यात्ववर्णनमसङ्गतम् । सत्यस्यैव ज्ञाननिवर्त्यत्वसंभवादित्याह **अस्तु वेति** । ननु ज्ञानस्य वस्तुनिवर्तकत्वं किं दृष्टिबलादुत श्रुतिबलात् । नाद्यः विप्रतिपन्नत्वात् । द्वितीये ह्यनुपपत्त्या श्रुतेरर्थान्तरकल्पनमावश्यकमिति कथंशब्दार्थः । तत्र द्वितीयपक्षमङ्गीकृत्य समाधत्ते **न हीति** । **येनेति** । दृष्टिबलान्निवर्तते बन्ध इति पक्षे ज्ञानस्य वस्तुनिवर्तकताया अदृष्टेरध्यस्तत्वं स्यादित्यर्थः । तत्रोक्तदोषं परिहरति **प्रमिते चेति** ।

**विठ्ठ०**— **दृष्टसामर्थ्यादिति** । दृष्टव्याप्तिकानुमानादित्यर्थः ।

**गूढ०**— इदानीमस्तु ज्ञानस्यैव मुक्तिहेतुत्वम् । तथापि न बन्धमिथ्यात्वमपेक्ष्यमित्याशयेनाप्येतद्वाक्यं व्याख्याति **अस्तु वेति** । ननु ज्ञानस्याज्ञानमात्रनिवर्तकत्वेन सत्यत्वे तेन बन्धनिवृत्तिरेव न स्यादिति शङ्कते **कथमिति** । **न हि दृष्टसामर्थ्यादिति** । अत्र हि सामर्थ्यं शक्तिः तथाच दृष्टा या शक्तिः तया ज्ञानं निवर्तकमिति यद्यङ्गीक्रियेत तदा ज्ञानस्य वास्तवनिवर्तकताया अदृष्टत्वादव्यवस्थत्वं स्यादित्यर्थः ।

**प्रदीपः**— तत्रोक्तं दोषं परिहरति **प्रमिते चेति** । वस्तुसतो ज्ञाननिवर्त्यत्वासंभवान्मायात्मकबन्धस्य ज्ञाननिवर्त्यत्वं श्रुत्यर्थः ।





**२०९ सु०— ननु यथाग्नेयादीनां षण्णां यागानामपूर्वकारणभावे श्रुतेऽपि कालान्तरभाविप्रधानापूर्वसाधनत्वोपपत्त्यर्थं क्रमभावियागजन्यानि मध्यवर्तीन्यवान्तरापूर्वाणि कल्प्यन्ते। यथा वा श्रुतस्यैव यागस्य स्वर्गसाधनत्वस्योपपत्तयेऽपूर्वं कल्प्यते। तथा श्रुतोपपत्त्यर्थमेव बन्धमिथ्यात्वकल्पनमिति। मैवम्। वैषम्यात्। युक्तं हि तत्रापूर्वकल्पनम्। यत्कालान्तरभावि न तत्कारणमिति नियमात्। न चेह तथाऽस्ति।**

**बिन्दुः— आग्नेयादीनां षण्णां यागानामिति**। दर्शत्रिकं पौर्णमासत्रिकमिति षड्यागाः तत्र यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाऽच्युतो भवति इत्याग्नेययागद्वयम्। उपांशु याजमन्तरा यजतीति पौर्णमास्यामुपांशुयागः। अग्नीषोमीयएकादशकपालोऽपि पौर्णमास्यामित्याग्नेयेन सह त्रयः पौर्णमासाः। ऐन्द्रं दध्यमावास्याया ऐन्द्रं पयोऽमावास्यायामिति दधिपयोयागाभ्यां सहिताग्नेयेन सह त्रयः अमावास्याः। ननु यागानां कथं षट्त्वम्। संख्याया द्वित्वादिकाया भिन्नत्वैकार्थसमवेतत्वात्। न चात्र भेदे प्रमाणमस्ति। तथा हि भेदलक्षणे शब्दान्तराभ्याससंख्यागुणप्रकरणनामधेयरूपाणि षट् प्रमाणानि भेदे निरूपितानि। तत्र यथा यजति ददाति जुहोति चोदनाचोदितानां यागाद्वा न होमानां त्रिशब्दान्तरप्रमाणेन भेदः। एवं समिधो यजतीति तनूनपातं यजतीत्यादौ विहितस्य विधानायोगादभ्यासेन प्रयाजानां पञ्चानां भेदः। एवं तिस्र आहुतीर्जुहोतीत्यादौ भेदे कार्यसमवेतया संख्यया भेदः। एवं तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षेति यागात् वाजिभ्यो वाजिनमिति वाजिनयागस्य गुणेन भेदः उत्पत्तिशिष्टरूपगुणावरुद्धे उत्पन्नशिष्टानां वाजिनसमावेशासंभवात्। तथा कुण्डपायिनामयने मासमग्निहोत्रं जुहोतीत्यग्निहोत्रस्य प्रकरणान्तरेण भेदः। तथा अथैष ज्योतिरथैष विश्वज्योतिरित्यादीनां चोदितानां ज्योतिर्यागानां नामधेयेन भेद इति। एवं च गुणन्यायेन उपांशुयाजाग्नीषोमीयदधिपयोयागानां चतुर्णां भेदेऽपि आग्नेयस्य कथं भेदः न हि कार्यप्रभेदेनानुक्तमात्रेणाप्येवं संभवति तथात्वे सायंप्रातरग्निहोत्रादीनामपि भेदः प्रसज्येत। त्रयाणामिति वक्तव्ये कथं षण्णां यागानामित्युक्तम् इति चेत्। नैष दोषः। प्रयोगद्वयाभिप्रायेण आग्नेययागद्वयेत्युक्तत्वात्। राणकस्तु संख्यान्यायेन तत्रापि भेदं मन्यते। न हि संख्यात्वमेव संख्यायाः भेदवत्त्वे प्रयोजकं, किन्तु पृथक्तौ कार्यं निर्वहतः तच्च प्रकृतेऽप्यस्त्येव न हि एकस्य कर्मणः युगपदनेककालसंबन्धिकार्यजनकत्वम्। **अपूर्वकारणभाव इति**। इदं च नवापूर्वीपक्षं वाभिप्रेत्योक्तम्। तथाहि दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति फलवाक्ये कालान्तरभाविस्वर्गसाधनत्वं यागस्यापूर्वं विना न संभवतीति मध्ये एकमपूर्वं सिद्धम्। तदेव च परमापूर्वमित्युच्यते। तदनन्तरं च य एवं विद्वान्पौर्णमासीं यजते य एवं विद्वानमावास्यां यजते इति विद्वद्वाक्याभ्यां समुदायीकृतस्य त्रिकद्वयस्य अमावास्यायाम्





अमावास्यया यजेत पूर्णमास्यां पूर्णमास्या यजेतेति वाक्यद्वयेन भिन्नकाले अनुष्ठीयमानैकैकत्रिक-साध्यमेकैकापूर्वमिति समुदायद्वयापूर्वद्वयपरमापूर्वसाधनमिति त्रीण्यपूर्वाणि लब्धानि तच्चैकैकं समुदायापूर्वं त्रिभिस्त्रिभिः समुदायिभिः साध्यमिति षडपूर्वाणि इति प्रागुक्तैस्त्रिभिः सह नवापूर्वाणीति । केचित्तु मध्ये समुदायापूर्वद्वयं नाभ्युपगच्छन्ति, षड्भिरेवापूर्वैः परमापूर्वसिद्धिरेवास्त्वित्याहुः । तदेतन्मतद्वयमभिप्रेत्य उक्तं यागानामपूर्वकरणभावे, अपूर्वं प्रति अपूर्वाणि वा प्रतीतिपक्षद्वयेऽपि योज्यम् । ये तु यानि षडपूर्वाणि तान्येव स्वर्गसाधनानीति षडपूर्वपक्षवादिनस्तेषामपूर्वकथाऽनभिज्ञत्वात् अनभिज्ञानात् उपजीव्य-विरोधापत्तेश्च मतमप्रामाणिकमित्यनभ्युपगमेनैव परास्तम् । श्रुतेऽपि श्रुतार्थापत्तिर्लभ्येत्यर्थः । यद्वा प्राभाकररीत्या अपूर्वस्य लिङ्वाच्यत्वात् तन्मताभिप्रायेण श्रुतेऽपीति यथास्थितमेव । यत्प्रधाना-पूर्वसिद्ध्यर्थं षडपूर्वाणि कल्प्यन्ते तत्कल्पनप्रकारं दर्शयन्नर्थापत्त्यन्तरमाह **यथा वेति** ।

**परि०**— प्राभाकरमतेनाह **अपूर्वेति** । अपूर्वं प्रति करणभावे श्रुतेऽपीत्यर्थः । तन्मतेऽपूर्वस्यैव लिङर्थत्वात्, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादौ विधिप्रत्ययबोध्यस्वर्गापूर्वं प्रति यागकरणता-ऽवगमादिति भावः । **प्रधानापूर्वेत्यादेरयमर्थः** । अमावास्यायां क्रियमाणदर्शत्रिकेण पौर्णमास्यां क्रियमाणेन पूर्णमासत्रिकेण च मिलित्वा एकं स्वर्गजनकं प्रधानापूर्वं जायते । तत्र त्रिकद्वयस्य व्यवहित-त्वात् । एकैकेन प्रधानापूर्वानुदयात् । आग्नेयादिषड्भिर्यागैः षडपूर्वाणि यागानुष्ठानक्रमेण जायन्ते । तैश्चापूर्वैः पश्चात्प्रधानापूर्वमिति । अयं सप्तापूर्वीपक्षः प्रभाकरस्य । भट्टरीत्या नवापूर्वीपक्षस्तु दर्शापूर्वत्रयेण किञ्चिदपूर्वमवान्तरं जायते । पूर्णमासापूर्वत्रयेणाप्येकमपूर्वम् । ताभ्यां च प्रधानापूर्वमिति । भट्टमतेनाह **यथा वेति** । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र कालान्तरभाविस्वर्गं प्रति श्रुतस्य यागनिष्ठस्य साधनत्वस्योपपत्तयेऽपूर्वं कल्प्यत इत्यर्थः । व्यक्तमेतत्सर्वं षष्ठाद्ये स्वर्गकामाधिकरणे द्वितीयाद्ये च भावार्थाधिकरणापूर्वाधिकरणयोश्च । **तथा श्रुतेति** । 'तरति शोकमात्मविदि'ति श्रुतेत्यर्थः । **न चेहेति** । ज्ञानोदयादेवाज्ञाननिवृत्तेरिति भावः ।

**गु०दी०**— **यथा आग्नेयादीनाम्** इत्यत्र दर्शत्रिकपौर्णमासीत्रिकाख्यानामाग्नेयादीनां षड्यागानां "दर्श-पूर्णमासाभ्यां स्वर्गकामो यजेत" इति वाक्येनापूर्वकरणभावे श्रुतेऽपि क्रियाषट्कस्य क्रमिकतया परमापूर्वोत्पत्ति-काले अभावेन कालान्तरभाविप्रधानापूर्वजननायैकैकक्रियाजन्यान्यवान्तरापूर्वाणि कल्प्यन्त इत्यर्थः । **यत्काला-न्तरभावि** इत्यत्र व्यवहितपूर्वकाल एव भावीत्यर्थः । **न चेह तथाऽस्ति** इत्यस्य कालान्तरभाविज्ञानकारणत्वस्य प्रमितभक्तिद्वारेणान्यथैवोपपादितत्वेन मिथ्यात्वाक्षेपकाभावात् कल्प्यमानमिथ्यात्वस्य उक्तदोषापरिहारकतया उप-पादकत्वाभावाच्चेत्यर्थः ।





**यादु०**— येन बन्धेत्यस्यायमर्थः। दृष्टबलाज्ज्ञानान्निवर्तते बन्ध इति पक्षे ज्ञानस्यापि वस्तु निवर्तकताया अदृष्टेरध्यस्तत्वं स्यादिति। श्रुतेऽप्युपपत्त्यपेक्षां दृष्टान्तेनाह **यथेति**। आग्नेयोऽष्टाकपाल उपांशु याजमन्तरा यजति अग्नीषोमीयमेकादशकपालमिति पूर्णमासत्रयम्। आग्नेयोऽष्टाकपाल ऐन्द्रं दधि ऐन्द्रं पय इति दर्शत्रयमित्येतेषां षण्णां यागानामपूर्वसाधनत्वोपपत्त्यर्थमपूर्वाणि कल्प्यन्त इति संबन्धः। अयं भावः। स्वर्गकामो यजेतेत्यत्र लिङा लौकिककार्यव्युत्पत्त्यविरोधेन नियोगस्तावदुपलभ्यते। नियोगशब्दवाच्यं च वेदे प्राभाकरमते चापूर्वमेव। तच्च साक्षात्कृत्यसाध्यत्वात्स्वस्य साक्षात्कृतिसाध्यत्वनिर्वाहार्थं प्रकृत्यर्थभूतानां यागानां करणत्वमाक्षिपतीति। तदेतदाह **अपूर्वकरणेति**। नियोगनिष्पत्त्यनुबन्धित्वं करणशब्दार्थः। यागानामेव प्रधानापूर्वकरणत्वात् किमवान्तरापूर्वैरित्याशङ्क्य किमेकैकयागनिष्पत्त्यनन्तरमपूर्वजनिरुत सर्वनिष्पत्त्यनन्तरमिति विकल्प्याद्यं दूषयति **कालान्तरेति**। दर्शपूर्णमासाभ्यामिति तृतीयया समुच्चितानां करणताप्रतीतेर्नायं पक्षः साधुरित्यर्थः। द्वितीयं दूषयति **क्रमभावीति**। देवतोद्देशेन द्रव्यत्यागलक्षणानां यागानां सकृदनुष्ठानं न संभवतीत्यर्थः। क्रमेणोत्पन्नास्त एव मिलिताः कार्यहेतव इत्याशङ्क्य क्षणिकत्वान्मेलनमेवानुपपन्नमित्यभिसन्धिनोक्तं **क्रमेति**। अपूर्वाणामपि यागवत् क्रमभावित्वात् संभूय हेतुत्वमनुपपन्नमित्याशङ्क्योक्तं **मध्यवर्तीनीति**। यागप्रधानापूर्वयोर्मध्ये स्थितानीत्यर्थः। न चैतावता यागकरणताभङ्गः। तेषामेव सूक्ष्मरूपत्वादपूर्वाणामित्याह **अवान्तरेति**। परमापूर्वमपेक्ष्यावान्तरेति विशेषणम्। नन्ववान्तरापूर्वैः फलसिद्धेः किमन्तर्गडुना परमापूर्वेण। न च तत्प्रत्ययबलात्तत्प्रत्ययान्न तन्निराकरणमिति शङ्क्यम्। तस्य प्रत्ययार्थत्वासिद्धेरिति मन्वानं प्रति दृष्टान्तान्तरमाह **यथेति**। एषा भाट्टप्रक्रिया। यजेतेत्युक्ते शब्दव्यापारभावनाभाव्यत्वेनैव पुंप्रवृत्तिलक्षणार्थभावना प्रतीयते। सा च भाव्यकरणेतिकर्तव्यतारूपमंशत्रयमपेक्षते। तत्र यद्यप्येकपदोपात्तत्वेन यागस्य भाव्यत्वं प्रतीयते। तथाऽपि क्लेशात्मकत्वेन तस्य भाव्यत्वासंभवाद्भिन्नपदोपात्तः स्वर्गो भाव्यत्वेन संबद्ध्यते। यागः करणत्वेन। तत्र यागस्य क्षणभङ्गुरस्य समयान्तरभाविफलसाधकताऽनुपपत्तेः श्रुतकरणत्वनिर्वाहार्थमपूर्वं कल्प्यत इति। अपूर्वकल्पनमिति भाट्टमते स्वर्गसिद्ध्यर्थमपूर्वकल्पनं गुरुमते परमापूर्व-सिद्ध्यर्थमिति विभागः। **यत्कालान्तरभावीति**। चिरातीतत्वेन यागस्यापि स्वर्गापेक्षया कालान्तरभावित्वा-दित्याशयः।

**कं०रा०**— **आग्नेयादीनामिति**। यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति। अग्नी-षोमीयमेकादशकपालं पौर्णमासे प्रायच्छत्। उपांशुयाजमन्तरा यजत्यजामित्वाय। ऐंद्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायामिति वाक्यैर्विहितानामाग्नेयादीनामित्यर्थः। **अपूर्वकारणभावे श्रुत इति**। मतान्तराभिप्रायेणैतत्।

**श्रीनिधि०**— **अपूर्वकरणभावे** अपूर्वं प्रति करणत्वे। **षड् यागाः** यदाग्नेयोऽष्टाकपालो अमावास्यायां च पूर्णमास्यां चाच्युतो भवति। उपांशुयाजमन्तरा यजति। अजामित्वाय। ऐन्द्राग्नमेकादशकपालं पौर्णमासे प्रायच्छत्। ऐन्द्रं दध्यमावास्यायां ऐन्द्रं पयोऽमावास्यायामिति विहिता ज्ञेयाः। **अवान्तरापूर्वाणीति**। प्राभाकरमते तेषां परमा-पूर्वबललभ्यत्वेन लिङादिवाच्यत्वाभावेन कल्प्यत इत्युक्तम्। **यथा वेति**। इदं तु भट्टमतानुसारेण। तन्मते भावनैव लिङादिवाच्या। न प्राभाकरमत इव परमापूर्वं तद्वाच्यम्। अतः कल्प्यत इत्युक्तम्। **यत्कालान्तरभावीति**। व्यवहित-पूर्वक्षणवृत्तीत्यर्थः।

**वा०चं०**— तत्र नाद्य इत्याशयेन शङ्कते **ननु यथेति** । आग्नेयोऽष्टाकपाल उपांशुयाजमन्तरा यजति अग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छदिति वाक्यविहितं पौर्णमासत्रिकम् । आग्नेयोऽष्टाकपाल ऐन्द्रं दधि अमावास्यायाम् ऐन्द्रं पयः अमावास्यायामिति वाक्यविहितं दर्शत्रिकम् । एतेषां च षण्णां यागानामपूर्वसाधनतोपपत्त्यर्थमपूर्वाणि कल्प्यन्त इति संबन्धः । नन्वपूर्वसाधनत्वस्यैवाभावान्नात्रोपपत्त्यपेक्षेत्यत उक्तम् **अपूर्वेति** । स्वर्गकामो यजेतेत्यत्र लिङो लौकिककार्यव्युत्पत्त्यनुरोधेन स्वात्मनि पुरुषनियोक्तृत्वान्नियोगशब्दवाच्यापूर्वोपलब्धेस्तस्य च विषयमन्तरेणानुपपद्यमानतया कुत्र नियोग इति विषयाकाङ्क्षायां यागस्यैव नियोगं प्रत्यनुबन्धित्वरूपविषयत्वेन संबन्धाद्यागविषयनियोगश्च साध्यतया प्रतीयमानः साक्षात्कृत्यसाध्यत्वात्स्वस्य कृतिसाध्यत्वनिर्वाहाय विषयतयाऽन्वितयागस्यैव नियोगनिष्पत्त्यनुबन्धित्वरूपकरणत्वमाक्षिपतीति भावः । तदुक्तं 'शालिकायाम् कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः । कार्ये सङ्घटिताकारे करणत्वेन संमत' इति । यागानामेव परमापूर्वकरणत्वात्किमवान्तरापूर्वैरित्यतः किमेकैकनिष्पत्त्यनन्तरमपूर्वस्य जनिरुत सर्वनिष्पत्त्यनन्तरमिति विकल्पं मनसि निधायाद्यं दूषयति **कालान्तरेति** । एकैकस्यैवापूर्वनिष्पादकत्वे यागान्तरवैयर्थ्यापत्त्याऽपूर्वस्य निरंशत्वेनापि अंशतोऽप्युत्पादनासंभवाद्दर्शपूर्णमासाभ्यामिति तृतीयया समुच्चितानामेव करणत्वप्रतीतेर्नायं पक्षः साधुरित्यर्थः । अत्रोपपत्त्यर्थमित्यनेनानुपपत्तौ सत्यामपि नोपपादकापेक्षेति द्वितीयो निरस्तः । द्वितीयं दूषयति **क्रमभावीति** । देवतोद्देशेन द्रव्यत्यागलक्षणानां यागानां सकृदनुष्ठानासंभवादिति भावः । क्रमेणोत्पन्नास्त एव मिलिताः सन्तु कार्यहेतव इत्यतः क्षणिकत्वान्मेलनानुपपत्तिं सूचयितुं कर्मवाचकयागशब्दप्रयोगः । अपूर्वाणामपि यागवत्क्रमभावित्वाभावात्संभूय हेतुत्वमनुपपन्नमित्यत उक्तं **मध्यवर्तीनीति** । यागोत्तरं प्रधानापूर्वपर्यन्तं स्थायीनीत्यर्थः । न चैतावता यागकरणताभङ्गः । तेषामेव सूक्ष्मरूपत्वादपूर्वाणामित्याह **अवान्तरेति** । परमापूर्वापेक्षया अवान्तरेति विशेषणम् । नन्ववान्तरापूर्वैः फलसिद्धेः किमन्तर्गडुना परमापूर्वेण । न च प्रत्ययबलात् तत्प्रत्ययान्न तन्निराकरणमिति वाच्यम् । तस्य लिङादिपदवाच्यत्वासिद्धेरिति प्राभाकरमतेऽनुपपत्तिं मन्वानं प्रति भाट्टमतेन दृष्टान्तान्तरमाह **यथा वेति** । यजेतेत्युक्ते शाब्दीभावनाभाव्यत्वेन पुंप्रवृत्तिलक्षणार्थभावनाप्रतीतेस्तस्याश्च भाव्यकरणेतिकर्तव्यतारूपांशत्रयसापेक्षत्वात्समानपदोपात्तस्यापि यागस्य स्वयं क्लेशात्मकत्वेन भाव्यत्वेन संबन्धासंभवाद्भिन्नपदोपात्तस्यापि स्वर्गस्य भाव्यत्वेन यागस्य करणत्वेन प्रयाजादेरितिकर्तव्यतात्वेन संबन्धस्य वक्तव्यत्वात् क्षणभङ्गुरस्य यागस्य कालान्तरभाविफलसाधनताऽनुपपत्तेः श्रुतकरणत्वोपपत्त्यर्थमपूर्वकल्पनेति भाट्टाशयः । तत्र गुरुमते प्रधानापूर्वसाधनत्वेन भट्टमते स्वर्गसाधनत्वेनापूर्वकल्पनमिति विभागो द्रष्टव्यः । तृतीयं निरस्यति **तथेति** । अनुपपत्त्याद्याविष्कारः परिहारदशायां भविष्यतीत्याशयः । न वयं श्रुतिप्रतीतेऽनुपपत्तिशमनायोपपादकानपेक्षां सर्वत्र ब्रूमः । किन्तु प्रकृत एव । एवं च त्वदुदाहृते यागेऽनुपपत्तिसद्भावेनापूर्वकल्पनायामपि प्रकृते तदभावेन न बन्धमिथ्यात्वापेक्षेतिभावेनाद्यद्वितीयावनङ्गीकारेणैव पराकृत्य तृतीयमङ्गीकरोति **वैषम्यादिति** ।

**वा०र०**— तत्त्वदीपनानुसारेण षड्यागस्वरूपनिरूपणपूर्वकं तत्रापूर्वकल्पनाप्रकारं च प्राभाकररीत्या दर्शयति **आग्नेयोऽष्टाकपाल इत्यादिना** । यदाग्नेयोऽष्टाकपालो भवत्यमावास्यायां पूर्णमास्यां चाच्युतो भवतीति





वाक्यमाग्नेयोऽष्टाकपाल इत्येकदेशेन गृह्यते । एवमुत्तरत्रापि । **वाक्यविहितं** वाक्यैर्विहितम् । अपूर्वसाधनतेत्यत्र परमापूर्वेति योज्यम् । अपूर्वकरणभावे श्रुतेऽपीत्यादिविशेषणानि तत्तदाकाङ्क्षाक्रमेण योजयति **नन्वपूर्वेत्यादिना** । अत्रापि परमेति योज्यम् । विवरणे परमापूर्वापरपर्यायस्याधिकारापूर्वस्येत्युक्तः । वक्ष्यति च **परमापूर्वेति** । उपपत्त्यपेक्षा । अवान्तरापूर्वकल्पनया यदुपपादनं तदपेक्षेत्यर्थः । यजेतेत्यादिलिङोऽपूर्वार्थत्वमेव कुतः । तदर्थकत्वे वा यागानां तद्विषयत्वात्करणत्वाभावः । ततश्च तत्करणत्वस्य श्रवणमसिद्धमित्यतो लिङादेरपूर्वार्थकत्वमुपपादयन् विषयत्वेन यागानां संबन्धं चोपपादयन् तेषां करणत्वप्राप्तिप्रकारं चोपपादयति **स्वर्गकामो यजेतेत्यत्रेति** । कार्यतावादेऽपि किञ्चिदुपयुक्तं वक्ष्यते **लौकिकेति** । गामानयेति प्रयोजकवृद्धोदीरितवाक्यश्रवणसमनन्तरं प्रयोज्यवृद्धस्य गवानयनप्रवृत्तिं दृष्ट्वा पार्श्वस्थबालस्य यद्वदयं कार्यज्ञानादेव प्रवृत्तस्तत्कार्यं चानयेत्यनेन बोधितमित्यादि वक्ष्यमाणप्रकारेण लिङो व्युत्पत्तिर्ज्ञेया । नियोगो लिङर्थत्वेन व्यवह्रियमाणोऽप्यपूर्वात्मैवेति न विरोध इत्याशयेन अपूर्वनियोगशब्दव्युत्पत्तिं दर्शयति **स्वात्मनीति** । उपलक्षणं चैतत् । मानान्तराप्राप्ततयाऽपूर्वशब्दवाच्येत्यपि ज्ञेयम् । लिङ इत्यावृत्तस्य लिङः सकाशादुपलब्धेरिति पञ्चम्याख्यानं द्रष्टव्यम् । कामी हि काम्यादन्यत्काम्याव्यवहितसाधनमेव कार्यतया अवैतीति प्राभाकरप्रक्रियानुसारेण स्वर्गव्यवहितपूर्ववृत्तियागस्य स्वर्गकामनाकार्यतयाऽवगन्तुमशक्यत्वात् यागस्वर्गमध्यवर्त्यन्यदेव लिङ्वाच्यं कार्यतया प्राप्तमिति भावः । नियोगमुखेन विषयतापेक्षत्वादिकं वक्तुं प्राक्नियोगशब्दवाच्यत्वमपूर्वस्योक्तम् । तद्विषयसापेक्षत्वादिकं दर्शयति **तस्य चेति** । नियोगस्येत्यर्थः । अधिकारिविषयावन्तरेणानुपपद्यमान इति तत्त्वदीपने अधिकारिणोऽप्युक्तावपि अत्र विषयमात्रग्रहणं विषयस्यैव करणताया उपपाद्यतया प्राप्तत्वात् तदुपयोगित्वेनेत्यदोषः । अनुपपद्यमानत्वं चानुपपद्यमानप्रतीतिकत्वम् । एकस्यैव यागस्य विषयत्वं करणत्वं चात्रोच्यते । तदुभयस्य भेदेन स्वरूपनिरूपणार्थमुक्तं **प्रतीत्यनुबन्धित्वरूपेति** । **निष्पत्त्यनुबन्धित्वरूपेति** च । यद्विना यत्प्रतिपत्तुमशक्यं तत्तस्य प्रतीतिसंबन्धिरूपं तदनुबन्धीत्युच्यते । यथा घटं विना प्रतिपत्तुमशक्यस्य घटज्ञानस्य घटः प्रतीतिसंबन्धितया विषयः । नियोगश्च यागे नियोग इति यागनिरूपित एव प्रतीयते न तु स्वातन्त्र्येणेति नियोगं प्रति यागो नियोगप्रतीत्यनुबन्धी विषयः । एवं यद्विना यन्न निष्पद्यते तस्य निष्पद्यमानस्य तन्निष्पत्तिसंबन्धि करणं भवति । यथा घटकारणं मृत्पिण्डो घटस्य निष्पत्त्यनुबन्धि करणम् । एवं यागोऽपि नियोगनिष्पत्तिहेतुत्वान्निष्पत्त्यनुबन्धि करणं तस्येति विवेकः । अत्र नियोगप्रतीत्यनुबन्धित्वरूपविषयत्वमाक्षिपतीति वक्तव्ये विषयत्वेन संबन्धादित्युक्तिर्यागस्य करणत्वाक्षेपको नियोग इत्येतत्सिद्धिं प्रति मूलत्वं विषयत्वेन संबन्धस्यास्तीति वस्तुस्थितिदर्शनायेति न दोषः । **साध्यतयेति** । लिङा कार्यस्य कृतिसाध्यरूपस्योक्तेर्नियोगस्य साध्यतया प्रतीतिः । निर्वाहायेत्यनेन यागान्यस्य नियोगनिष्पादकत्वाभाव इति सूचितम् । **शालिकायामिति** । शालिकानाथकृतप्राभाकरमतानुवर्णनपरकारिकाग्रन्थनामेदम् । अनेन अपूर्वकरणेतराभावे श्रुते इत्यस्य मूलस्य स्वर्गाव्यवहितसाधनपरमापूर्वसाधनत्वे आक्षेपाल्लब्ध इत्यर्थः सूचितः । **अपूर्वस्येति** । परमापूर्वस्येत्यर्थः । एवमुत्तरत्रापि । दर्शपूर्णमासाभ्यामपि तृतीययेत्यादेरेव तत्त्वदीपने उक्तत्वेऽपि स्वयमधिकं दूषणं वदन् दर्शेत्याद्युक्तदूषणं चाह **एकैकस्यैवेत्यादिना** । षण्णां यागानां तत्तदपूर्वांशोत्पादकत्वाभ्युपगमान्न यागान्तरवैयर्थ्यमित्यत आह **अपूर्वस्येति** । एकैकस्यापूर्वनिष्पादकत्वपक्षे दूषणान्तरमाह **दर्शेति** । **द्वितीयोऽपीति** । किं श्रुतिप्रमितेऽनुपपत्तिरेव





नेतीत्यादिपूर्वविकल्पितपक्षत्रये किंवा सत्यामपि तस्यां तच्छमनायोपपादकापेक्षा नेत्यनेनोक्तो द्वितीय इत्यर्थः । तस्यायमर्थानुवादोऽनुपपत्तौ सत्यामपीत्यादिः । उपपत्त्यर्थमित्यनेन प्रथमपक्षनिरासायोपपादकापेक्षाऽस्तीति प्रतिपादनेनैव निरस्त इत्यर्थः । **द्वितीयमिति** । उत सर्वनिष्पत्त्यनन्तरमपूर्वजनिरिति प्रकृतविकल्पीयद्वितीयमित्यर्थः । **त एवेति** । षड्यागा एवेत्यर्थः । **कार्यं** नियोगाख्यम् । **क्षणिकत्वादिति** । क्षणिकत्वात्तेषां मेलनस्यैवानुपपत्तिरिति सूचयितुमित्यर्थः । विवरणे यागकर्मेति कर्मपदप्रयोगात् क्षणिकत्वसूचनसंभववदिहापि कर्मवाचियागशब्दप्रयोगात् यागपदेन कर्मत्वप्रतिपादनमुखेन तत्सूचनसंभवः । मूले तु यागस्य कर्मतायाः स्पष्टत्वाशयेन कर्मेति नोक्तमिति भावः । **क्रमभावि-त्वादिति** । यागानां क्रमभावित्वे तज्जन्यापूर्वाणामपि क्रमभावित्वप्राप्तेरिति भावः । **संभूय** मिलित्वा । मध्यवर्तिनीत्यस्योक्तशङ्कानिरासकत्वप्रकारं दर्शयति **यागोत्तरमिति** । **एतावतेति** । यागजन्यापूर्वाणामेव परमापूर्वकरणत्वाभ्युपगमेनेत्यर्थः । **तेषामेवेति** । यागीयसूक्ष्मरूपत्वादित्यर्थः । **फलसिद्धेरिति** । यागजन्यपरमा-पूर्वेणापि साध्यं यत्स्वर्गाख्यं फलमभिमतं तत्सिद्धेरित्यर्थः । **प्रत्ययेति** । लिङादिप्रत्ययेत्यर्थः । **असिद्धेरिति** । भावनाया एव लिङादिवाच्यत्वाङ्गीकारेण कार्ये व्युत्पत्त्यनङ्गीकारेण चासिद्धेरित्यर्थः । अनुपपत्तिमित्यनेन प्राभाकर-मतमुक्तानुपपत्त्या दुष्टमिति सूचितम् । एषा भाट्टप्रक्रिया— स्वर्गकामो यजेतेत्यादिषु स्वर्गाद्युद्देशेन यागादिविधा-यकवाक्येषु यजेतेत्यादिविधायकशब्दाः सन्ति । तत्र तावद्यजेतेत्यत्रास्त्यंशद्वयम् । यजिधातुः प्रत्ययश्च प्रत्यये-ऽप्यस्त्यंशद्वयम् । लिङ्त्वमाख्यातत्वं च । तदुभयरूपेण प्रत्ययेन भावनोच्यते । भावना नाम भाव्यनिष्ठो भवितु-र्भवनानुकूलो व्यापारविशेषः । सा च भावना द्विविधा । शाब्दी आर्थी चेति । तत्र पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः शाब्दी भावना । लिङादिश्रवणे ह्ययं मां प्रवर्तयतीति नियमेन प्रतीतेः । स च व्यापारो लोके आज्ञादिरूपवक्त्रभिप्रायस्य संभवात्तद्रूप एव भवति । वेदे तु पुरुषाभावेनाज्ञादिरूपव्यापारानुपपत्तेः शब्दनिष्ठ एव प्रेरणापरपर्यायः शक्तिविशेषो व्यापारः । सा चांशत्रयवती । तत्र लिङादिनिष्ठशाब्दभावनां प्रति लिङादिज्ञानं करणत्वेनान्वेति । करणत्वं च नोत्पादकत्वम् । रूपादिज्ञानोत्पादकेन्द्रियसन्निकर्षात्प्राक् रूपादिज्ञानस्याभाववल्लिङादिज्ञानात्प्राक्शब्दधर्मभावनाया अभावप्रसङ्गात् । किन्तु शाब्दभावनाया यद्भाव्यं तन्निर्वर्तकत्वम् । भाव्यं तु वक्ष्यमाणांशत्रयोपेता आर्थीभावनैव । इतिकर्तव्यता तु वायुर्वा इत्याद्यर्थवादानां प्राशस्त्यार्पकत्वादर्थवादसमर्पितप्राशस्त्यज्ञानम् । एवमंशत्रयवती शाब्दी भावना लिङंशेनोच्यते । पुरुषप्रवृत्तिरूपो अन्यो व्यापारः आर्थी भावना । साप्यंशत्रयवती । तत्र धात्वर्थो यागादिः करणत्वेन संबद्ध्यते । स्वर्गादिर्भाव्यत्वेन । न तु समानपदोपात्तोऽपि यागः । तस्य क्लेशात्मकत्वात् । प्रयाजादिकमिति-कर्तव्यतात्वेन संबद्ध्यते । उक्तविधा चेयमार्थी भावना आख्यातांशेनोच्यते । तथाच यागकरणिकार्थभावनांशे यागस्य यत्करणत्वं प्राप्तं तदनुपपन्नम् । क्षणभङ्गुरस्य तस्य समयान्तरभाविफलसाधनतानुपपत्तेरित्यतः श्रुतकरणत्व-निर्वाहार्थं मध्ये अपूर्वं कल्प्यते । तेन यागः स्वजन्यापूर्वद्वारा स्वर्गसाधनं भवतीति ।

**स०व्र०**— ननु श्रुतिप्रमितत्वेऽपि श्रुतिप्रामाण्यसिद्ध्यर्थमज्ञानात्मकत्वं बन्धस्य कल्पनीयमिति दृष्टान्ताश्रयणेन शङ्कते **ननु यथेति** । आग्नेयोऽष्टाकपालः उपांशुयाजमन्तरा यजति अग्नीषोमीयमेकादशकपाल-मिति पूर्णमासत्रयं आग्नेयोऽष्टाकपालः ऐन्द्रं दधि ऐन्द्रं पय इति दर्शत्रयमित्येषां षण्णां यागानामपूर्वसाधन-त्वोपपत्त्यर्थमवान्तरापूर्वाणि कल्प्यन्त इति संबन्धः । यागानामेव प्रधानापूर्वकरणत्वात् किमवान्तरापूर्वैरित्याशङ्क्य





किमेकैकनिष्पत्त्यनन्तरमपूर्वं निष्पद्यते । उत सर्वनिष्पत्त्यनन्तरमिति विकल्प्याद्यं दूषयति **कालान्तरेति** । दर्शपूर्णमासाभ्यामिति तृतीयया समुच्चितानां यागानां करणताप्रतीतेर्नायं पक्षः साधुरित्यर्थः । द्वितीयं दूषयति **क्रमभावीति** । देवतोद्देशेन द्रव्यत्यागलक्षणानां यागानां सकृदनुष्ठानमसंभवीत्यर्थः । अपूर्वाणामपि यागवत् क्रमभावित्वात् संभूय हेतुत्वमनुपपन्नमित्याशङ्क्योक्तं **मध्यवर्तीनीति** । यागप्रधानापूर्वयोर्मध्यस्थितानीत्यर्थः । न चैतावता यागकरणताभङ्गः तेषामेव सूक्ष्मरूपत्वादपूर्वाणामित्याह **अवान्तरेति** । परमापूर्वमपेक्ष्यावान्तरेति विशेषणम् । नन्ववान्तरापूर्वैः फलसिद्धेः किमन्तर्वर्तिना तेन परमापूर्वेणेति मन्यमानं प्रति दृष्टान्तान्तरमाह **यथा वेति** । एषा भाट्टप्रक्रिया । यजेतेत्युक्ते पुरुषप्रवृत्तिहेतुभूतशब्दव्यापारलक्षणशब्दभावनाभाव्यत्वेन पुरुषप्रवृत्तिलक्षणार्थभावना प्रतीयते । सा च भाव्यकरणेतिकर्तव्यतारूपमंशत्रयमपेक्षते । तत्र यद्यप्येकपदोपात्तत्वेन यागाख्यं भाव्यं प्रतीयते तथापि क्लेशात्मकत्वेन भाव्यत्वासंभवाद्भिन्नपदोपात्तः स्वर्गो भाव्यत्वेन संबद्ध्यते यागः करणत्वेन, प्रयाजादिरितिकर्तव्यतात्वेन । तत्र यागस्य क्षणभङ्गुरस्य समयान्तरभाविफलसाधनत्वानुपपत्तेः श्रुतकरणत्वनिर्वाहार्थमपूर्वं कल्प्यत इति भावः । भाट्टमते स्वर्गसिद्ध्यर्थमपूर्वकल्पनं गुरुमते परमापूर्वसिद्ध्यर्थमिति भेदः । दृष्टान्तवैषम्यं दर्शयति **युक्तं हीति**।

**विठ्ठ०**— ननु दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्रोक्तानां यदाग्नेयोऽष्टाकपालः ऐन्द्रं दधि ऐन्द्रं पय इति दर्शत्रिकत्वेन यदाग्नेयोऽष्टाकपालो भवति उपांशु याजमन्तरा यजति अजामित्वाय अग्नीषोमीयमेकादशकपालमिति पौर्णमासत्रिकत्वेनोक्तानामाग्नेयादि षण्णां यागानां प्रधानापूर्वकारणत्वे श्रुतेऽपि यागषट्कस्य क्रमिकत्वात् आशुतरविनाशित्वाच्च प्रधानापूर्वोत्पत्त्यव्यवहितपूर्वकाले अभावेन तत्साधनत्वानुपपत्त्या कालान्तरभाविप्रधानापूर्वसाधनत्वोपपत्त्यर्थं क्रमभावियागजन्यानि यागषट्कप्रधानापूर्वयोर्मध्यवर्तीनि षडवान्तरापूर्वाणि कल्प्यन्ते यथा वा दर्शपौर्णमासादियागस्य स्वर्गसाधनत्वे श्रुतेऽपि यागक्रियायाः क्षणिकत्वेन कालान्तरभाविस्वर्गादिपूर्वक्षणवृत्तित्वाभावात् साधनत्वस्योपपत्तये यागादिजन्यप्रधानापूर्वाख्यं कार्यं कल्प्यते तथा सूत्रे श्रुतप्रयोजनाद्युपपत्त्यर्थं बन्धमिथ्यात्वं कल्पनीयमिति शङ्कते **ननु यथाग्नेयादीनामिति** । **यत्कालान्तरभावीति** । नियतपूर्वक्षणवर्तिनि एव कारणत्व नियमादिति भावः । न चेह तथा कल्पकमस्तीत्यर्थः ।

**चषकः**— श्रुतिप्रमितेऽर्थेऽनुपपत्तिप्रसक्तिरेव नेति सत्यामपि तस्यां तच्छमनौपयिकोपपादकापेक्षा नेति श्रुतिप्रमितेऽप्यर्थेऽनुपपत्तेस्तदपवारकोपपादकापेक्षायाश्च स्थलान्तरे सत्त्वेऽपि प्रकृते न तदुभयमिति वेति कल्पत्रयीमनुसन्दधानस्तद्घटकाद्यकल्पप्रत्याचिख्यासया तमाशङ्कते **ननु यथेति** । आग्नेयोऽष्टाकपालः उपांशुयाजमन्तरा यजति अग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छदितिवाक्यविहितं पौर्णमासत्रिकम् । आग्नेयोऽष्टाकपाल ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायामितिवाक्यविहितं दर्शत्रिकम् । एवं तेषां षण्णां यागानामपूर्वसाधनतोपपत्त्यर्थमपूर्वाणि कल्प्यन्त इति संबन्धः । स्वर्गकामो यजेतेत्यत्र लिङो लौकिककार्यव्युत्पत्त्यनुरोधेन स्वात्मनि पुरुषनियोक्तृत्वान्नियोगपदाभिधेयापूर्वोपलब्धेस्तस्य च विषयमन्तरेणानुपपद्यमानतया क्व विनियोग इति विनियोगाकाङ्क्षायां यागस्यैव विनियोगं प्रत्यनुबन्धित्वरूपविषयत्वेन संबन्धात् यागविषयनियोगस्तत्र साध्यतया





प्रतीयमानः साक्षात्कृत्यसाध्यत्वात्स्वस्य कृतिसाध्यतानिर्वाहाय विषयतयान्वितयागस्यैव विनियोगनिष्पत्त्यनुबन्धित्वरूपकरणत्वमाक्षिपतीति भावः । **कालान्तरभावीति** । एकैकस्यापूर्वनिष्पादकत्वे यागान्तरवैयर्थ्यापत्त्या मिलितानां च हेतुत्वोपगतेः क्षणिकत्वान्मेलनस्यैवायोगेन अयुक्तत्वादिति भावः। द्वितीयं प्रत्याख्याति **क्रमभावीति**। देवतोद्देश्यकद्रव्यत्यागरूपयागानां युगपदनुष्ठानासंभवादिति भावः । **मध्यवर्तीनीति** । यागोत्तरं प्रधानापूर्वपर्यन्तं स्थायीनीत्यर्थः । प्राभाकरानुमतसप्तापूर्वीकल्पं प्रदर्श्य दर्शापूर्वत्रयेण किञ्चिदपूर्वमवान्तरं जायते पूर्णमासापूर्वत्रिकेणाप्येकं ताभ्यां च प्रधानापूर्वमिति भट्टदिशा नवापूर्वीमतमभिप्रेत्याह **यथा वेति** । क्रियारूपयागस्यापूर्वमन्तरेण कालान्तरभाविस्वर्गसाधनत्वासंभवादिति भावः । तृतीयं प्रतिविधत्ते **तथेति** ।

**प्रदीपः**— अन्यथा दृष्टविरोधात् श्रुतिप्रामाण्यं न स्यादिति दृष्टान्ताश्रयेण शङ्कते **ननु यथेति** । आग्नेयोऽष्टाकपाल उपांशु याजमन्तरा यजति अग्नीषोमीयमेकादशकपालमिति पूर्णमासत्रयमाग्नेयोऽष्टाकपाल ऐन्द्रं दधि ऐन्द्रं पय इति दर्शत्रयमित्येव तेषां षण्णां यागानाम् अपूर्वसाधनत्वोपपत्त्यर्थम् अपूर्वाः कल्प्यन्त इति संबन्धः। नन्वपूर्वसाधनस्यैवाभावात् नोपपत्त्यपेक्षेत्यत्राह **अधिकारेति** । परमापूर्वविषयतयेत्यक्षरार्थः । अयं भावः स्वर्गकामो यजेतेत्यत्र लिङादौ किं कार्यव्युत्पत्त्यनुरोधेन नियोगस्तावदुपलभ्यतेनियोगश्चाधिकारिविषयावन्तरेणानुपपद्यमानोऽधिकारिविषयावाक्षिपति । तत्र कुत्र नियोग इति विषयाकाङ्क्षायां यागे विषयत्वेन संबद्ध्यते यागो नियोग इति तदिदमुक्तमधिकारिपूर्वेति नियोगप्रतीत्युपयोगित्वं विषयशब्दार्थः । यागविषयो नियोगः साध्यतया प्रतीयमानः साक्षात्कृत्यसाध्यत्वात् तस्य तृतीयसाध्यत्वनिर्वाहार्थं विषयतयान्वितानां तेषामेव करणत्वमाक्षिपति । तदेतदुक्तं **अपूर्वकारणेति** । नियोगनिष्पत्त्यनुसंबन्धित्वं करणशब्दार्थस्तदुक्तं शालिकायाम्— 'कृतितत्साध्यमध्यस्थो यागादिविषयो मतः । कार्ये सङ्घटिताकारे करणत्वेन संमतः ॥' इति यागानामेव प्रधानापूर्वकरणत्वात् किमवान्तरापूर्वैरित्याशङ्क्य किमेकैकनिष्पत्त्यनन्तरमपूर्वं निष्पद्यते उत सर्वनिष्पत्त्यनन्तरमिति विकल्प्याद्यं दूषयति **कालान्तरेति** । दर्शपूर्णमासाभ्यामिति तृतीयया समुच्चितानां यागानां करणता प्रतीयते नायं पक्षः साधुरित्यर्थः । द्वितीयं दूषयति **क्रमभावीति** । देवतोद्देशेन द्रव्यत्यागलक्षणानां यागानां सकृदनुष्ठानमसंभवीत्यर्थः । क्रमेणोत्पन्नास्त एव मिलिताः कार्यहेतव इत्याशङ्क्य क्षणिकत्वान्मेलनमेवानुपपन्नमित्यभिसन्धिनोक्तम् **कर्मेति** । अपूर्वाणामपि यागवत्क्रमभावित्वात् संभूय हेतुत्वमनुपपन्नमित्याशङ्क्योक्तम् **मध्यवर्तीनीति** । यागप्रधानापूर्वयोः मध्ये स्थितानीत्यर्थः । न चैतावता यागकरणताभङ्गः तेषामेव सूक्ष्मरूपत्वादपूर्वाणामित्याह **अवान्तरेति** । परमापेक्षया अवान्तरेति विशेषणम् । नन्ववान्तरापूर्वैरेव फलसिद्धेः किमन्तर्गडुना परमापूर्वेण न च प्रत्ययबलान्न तन्निराकरणमिति शङ्क्यम् । तस्य प्रत्ययार्थत्वासिद्धेरिति इदं मन्यमानं प्रति दृष्टान्तान्तरमाह **यथा चेति** । एषा भाट्टप्रक्रिया । यजेतेत्युक्ते पुरुषप्रवृत्तिहेतुभूतशब्दव्यापारलक्षणशाब्दभावनाभाव्यत्वेन पुरुषप्रवृत्तिलक्षणार्थभावना प्रतीयते । सा च भाव्यकारणेतिकर्तव्यतारूपमंशत्रयमपेक्षते । तत्र यद्यप्येकपदोपात्तत्वेन यागस्य भाव्यत्वं प्रतीयते तथापि क्लेशात्मकत्वेन तस्य भाव्यत्वासंभवात् भिन्नपदोपात्तस्वर्ग एव भाव्यत्वेन संबद्ध्यते। यागः करणत्वेन प्रयाजादीतिकर्तव्यतात्वेन। तत्र यागस्य क्षणभङ्गुरस्य समयान्तरभाविफलसाधनत्वानुपपत्तेः श्रुतकरणत्वनिर्वाहार्थमपूर्वं कल्प्यते । दृष्टान्तवैषम्यं दर्शयति **युक्तं हीति** ।

# श्रीमन्न्यायसुधा-परिमळ-प्रशंसनम्

प्रतिवाक्यं प्रतिपदमनेकाकूतगर्भिता ।
प्रतिभाति सुधाऽथापि ग्रन्थाल्पत्वाय नोच्यते ॥

ये तु न्यायसुधापानकामुका रसिका बुधाः ।
आघ्रायेमं परिमळं सेवन्तां ते सुधामिमाम् ॥

— श्रीराघवेन्द्रतीर्थाः

**श्रीकरोऽयं ग्रन्थः । तत्र वयमेव साक्षिणः ॥**

— श्रीवादिराजतीर्थाः

यदुतापसलभ्यमनन्तभवैः तदुतोपरतत्त्वमिहैकपदात् ।
जयतीर्थकृतौ प्रवणो न पुनर्भवभाग् भवतीति मतिर्हि मम ॥

— श्रीविष्णुतीर्थाः

**सुधा वा पठनीया । वसुधा वा पालनीया ॥**

धीर श्रीराघवेन्द्र त्वदतुलरसनारङ्गनृत्यत्स्वयंभू-
योषाधम्मिल्लभारश्लथकुसुमततीस्त्वद्गिरस्सङ्गिरामः ।
याभिस्सम्मिश्रिताभिर्निरवधिवसुधा विश्रुता सा सुधाऽपि
क्षोणीगीर्वाणगम्यं परिमलमतुलं साम्प्रतं संप्रपेदे ।

— श्रीवादीन्द्रतीर्थाः

Printed At : Sudha Mudrana, Bangalore - 4 ©: 667 6942